पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता
सैव
हिन्दीभाषामन्त्रानुवादसमन्विता

अनुवादक
पण्डित रामगोविन्द त्रिवेदी

।।श्रीः।।

विद्याभवन प्राच्यविद्या ग्रन्थमाला

३५

पदपाठसहिता

# ऋग्वेद-संहिता

सायणाचार्यकृत-भाष्यसंवलिता

सैव

हिन्दीभाषामन्त्रानुवादसमन्विता

द्वितीयो ऽष्टकः



चौखम्बा विद्याभवन

वाराणसी

प्रकाशक
**चौखम्बा विद्याभवन**
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक
चौक ( बैंक ऑफ बड़ोदा भवन के पीछे )
पो. बा. नं. 1069, वाराणसी 221001
दूरभाष : 2420404
ई-मेल : cvbhawan@yahoo.co.in

पुर्नमुद्रित संस्करण २००७
१-९ भाग (सम्पूर्ण)
मूल्य : ३५००.००

अन्य प्राप्तिस्थान
**चौखम्बा पब्लिशिंग हाउस**
4697/2, भू-तल ( ग्राउण्ड फ्लोर )
गली नं. 21-ए, अंसारी रोड
दरियागंज, नई दिल्ली 110002
दूरभाष : 23286537



**चौखम्बा संस्कृत प्रतिष्ठान**
38 यू. ए. बंगलो रोड, जवाहर नगर
पो. बा. नं. 2113
दिल्ली 110007
दूरभाष : 23856391



**चौखम्बा सुरभारती प्रकाशन**
के. 37/117 गोपालमन्दिर लेन
पो. बा. नं. 1129, वाराणसी 221001
दूरभाष : 2335263

THE

VIDYABHAWAN PRACHYAVIDYA GRANTHAMALA

35

# ṚG-VEDA-SAṀHITĀ

Together with

## PADAPĀṬHA

## &

## SĀYAṆABHĀṢYA

## SECOND AṢṬAKA



**CHOWKHAMBA VIDYABHAWAN**

**VARANASI**

*Publishers :*
**CHOWKHAMBA VIDYABHAWAN**
*(Oriental Publishers & Distributors)*
Chowk (Behind Bank of Baroda Building)
Post Box No. 1069
Varanasi 221001
Tel. : 2420404
E-mail : cvbhawan@yahoo.co.in


Edition : 2007
Price : 3500.00

*Also can be had from :*
**CHAUKHAMBA PUBLISHING HOUSE**
4697/2, Ground Floor
Gali No. 21-A, Ansari Road
Daryaganj, New Delhi 110002
Tel. : 23286537

**CHAUKHAMBA SANSKRIT PRATISHTHAN**
38 U.A. Bungalow Road. Jawahar Nagar
Post Box No. 2113
Delhi 110007
Tel. : 23856391

**CHAUKHAMBA SURBHARATI PRAKASHAN**
K. 37/117, Gopal Mandir Lane
Post Box No. 1129
Varanasi 221001
Tel. · 2335263

## ॥श्रीगणेशायनमः॥



वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे ॥ यंनत्वाकृतकृत्याःस्युस्तंनमामिगजाननम् ॥१॥
यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥२॥
प्रक्रियाप्रथमेकाण्डेसाकल्येनोपवर्णिता । अतऊर्ध्वंतनीज्ञेयास्मर्यंतेचक्वचित्क्वचित् ॥३॥

अथद्वितीयाष्टकेप्रथमोऽध्यायआरभ्यते शतर्चिनामाद्येमण्डलेचतुर्विंशत्यनुवाकाः तेषुकदित्थेत्यष्टादशानुवाकेषट्सूक्तानि तत्र प्रवःपान्तमितिद्वितीयंसूक्तम् पंचोनेत्यनुवर्तमानात्पञ्चदशर्चम् ऋषिश्चान्यस्मादृषेरितिपरिभाषयाकक्षीवानृषिः अनादेशपरिभाषयात्रिष्टुप् विश्वेदेवादेवता प्रवोवैश्वदेवमित्यनुक्रमणिका अस्यविशेषविनियोगोलैङ्गिकः ।

ॐम् प्रवःपान्तंरघुमन्यवोन्धोयज्ञंरुद्रायमीळ्हुषेभरध्वम् ।
दिवोअस्तोष्यसुरस्यवीरैरिषुध्येवमरुतोरोदस्योः ॥ १ ॥
प्र । वः । पान्तम् । रघुऽमन्यवः । अन्धः । यज्ञम् । रुद्राय ।
मीळ्हुषे । भरध्वम् । दिवः । अस्तोषि । असुरस्य । वीरैः । इषुध्याऽईव ।
मरुतः । रोदस्योः ॥ १ ॥

हेरघुमन्यवः लघुक्रोधाः अक्रोधिनःऋत्विजोवोयुष्माकंपान्तंपालनशीलंपातव्यंवायज्ञंयागसाधनमन्धोन्नंआज्यसोमादिलक्षणं रुद्राय रुदुःखंतद्धेतुभूतंदुरितंवा तस्यद्रावयित्रेएतन्नामकायदेवायमीळ्हुषे फलस्यवर्षित्रेतदर्थंप्रभरध्वम् प्रकर्षेणसंपादयत अहंचइषुध्येवइषुध्यान्शत्रून्यथानिरस्यति तथावीरैरमित्राणांविविधमीरकैर्वीर्योपेतैर्वा तदनुचरैर्मरुदादिभिःसह दिवोद्युलोकसकाशात् उपलक्षणमेतत् लोकत्रयादपिअसुरस्यनिरसितव्यानामसुराणांनिरसितुः कर्मणिषष्ठी निरसितारंतमेवदेवं रोदस्योः निरोधनवत्योर्द्यावापृथिव्योर्मध्येवर्तमानान्मरुतश्चअस्तोषिस्तौमि॥ पान्तं पान्तमित्यत्र पातेःशतृ पिबतेर्वाऔणादिकोझः।मीळ्हुषे दाश्वान्साह्वानितिक्वसुप्रत्ययान्तोनिपातितः चतुर्थ्येकवचने वसोःसंप्रसारणमितिसंप्रसारणम् शासिवसीत्यादिनाषत्वम्। दिवः ऊडिदमित्यादिनाविभक्तेरुदात्तत्वम् । अस्तोषि स्तौतेश्छान्दसोलुङ् । इषुध्येव इषवोधीयन्तेनेतीषुधीः कर्मण्यधिकरणेचेतिदधातेःकिः कृत्स्वरेणान्तोदात्तः उदात्तयणोहल्पूर्वादितिविभक्तेरुदात्तत्वम्॥१॥

१. क्रोध-विरहित ऋत्विको, तुम लोग कर्म-फलदाता रुद्रदेव को पालनशील और यज्ञ-साधन अग्नि अर्पण करो। मैं भी उन द्युलोक के असुर (देव) और उनके अनुचर एवं स्वर्ग और पृथिवी के मध्यस्थ-वासी मरुद्गण की स्तुति करता हूँ। जैसे तूणीर-द्वारा शत्रुओं को निरस्त किया जाता है, वैसे ही रुद्र भी वीर मरुतों के द्वारा शत्रुओं को निरस्त करते हैं।

पत्नी॑व पू॒र्वहू॑तिं वावृ॒धध्या॑ उ॒षासा॒नक्ता॑ पुरु॒धा विदा॑ने ।
स्त॒रीर्नात्कं॒ व्यु॑तं॒ वसा॑ना॒ सूर्य॑स्य श्रि॒या सु॒दृशी॒ हिर॑ण्यैः ॥ २ ॥

पत्नीः॑ऽइव । पू॒र्वऽहू॑तिम् । व॒वृ॒धध्यै॑ । उ॒षसा॒नक्ता॑ । पु॒रु॒धा ।
वि॒दाने॒ इति॑ । स्त॒रीः । न । अत्क॑म् । विऽउ॑तम् । वसा॑ना ।
सूर्य॑स्य । श्रि॒या । सु॒ऽदृशी॑ । हिर॑ण्यैः ॥ २ ॥

पत्नीव पत्नीयथापूर्वहूतिंपत्युःपूर्वाह्वानंववृधध्यै वर्धयितुंशीघ्रगतिर्भवतितद्वत् उषासानक्ता अहोरात्रदेवतेअपि पुरुधा बहुप्रकारंबहुविधैःस्तोत्रैःविदानेज्ञायमाने सत्यौ पूर्वहूतिं ववृधध्यै अस्मदीयंपूर्वाह्वानंवर्धयितुंशीघ्रमागच्छतमितिशेषः यद्वा ववृधध्यै अस्मद्वर्धनायपुरुधाबहुप्रकारंविदाने वर्धनोपायान्जानत्यौभवतमितिशेषः उषासानक्ता उषासोषसइतिपूर्वपदस्योषासादेशः देवताद्वन्द्वेचेत्युभयपदप्रकृतिस्वरत्वम् अथकेवलोषाउच्यते—स्तरीः शत्रूणांहिंसकस्तेजसाच्छन्नोवाआदित्यः सइवहिरण्यैर्हिरण्यवर्णैरश्मिभिः व्युतंविततंविशेषेणसंबद्धं अत्कंअक्कं सन्ततंवारूपंवसानाआच्छादयन्तीधारयन्ती सूर्यस्यश्रियाशोभयासुदृशी शोभनंदृश्यमाना सूर्यस्यपुरोगामिनीरश्मिभिःखल्वेषाजगद्भासयति तादृश्युषा अस्मत्पूर्वहूतिंपालयत्वित्यर्थः यद्वा हिरण्यैर्हितरमणीयैःप्रकाशैर्धनविशेषैर्वासहागच्छतु ॥ व्युतं व्येञोनिष्ठायां वचिस्वपीत्यादिनासंप्रसारणम् । स्तरीः अवितृस्तृतन्त्रिभ्यईः इतीकारप्रत्ययः ॥ २ ॥

२. जैसे स्वामी के प्रथम आह्वान पर पत्नी शीघ्र आती है, वैसे ही अहोरात्र-देवता नानाविध स्तुतियों-द्वारा स्तुत होकर हमारे प्रथम आह्वान पर शीघ्र आवें। अरि-मर्दन सूर्य की तरह उषादेवी हिरण्यवर्ण किरणों से युक्त होकर और विशाल रूप धारण कर सूर्य की शोभा से शोभन हों ।

अथतृतीया—

म॒मत्तु॑ नः॒ परि॑ज्मा वस॒र्हा म॒मत्तु॒ वातो॑ अ॒पां वृष॑ण्वान् ।
शि॒शी॒तमि॑न्द्रापर्वता यु॒वं न॒स्तन्नो॒ विश्वे॑ वरिवस्यन्तु दे॒वाः ॥ ३ ॥

म॒मत्तु॑ । नः॒ । परि॑ऽज्मा । व॒स॒र्हा । म॒मत्तु॑ । वात॑ः । अ॒पाम् । वृष॑ण्ऽवान् ।
शि॒शी॒तम् । इ॒न्द्रा॒प॒र्व॒ता॒ । यु॒वम् । नः॒ । तत् । नः॒ । विश्वे॑ ।
व॒रि॒व॒स्य॒न्तु॒ । दे॒वाः ॥ ३ ॥

नोऽस्मान्वसर्हा वसनार्होगार्हपत्यादिरूपेण यद्वा वासकानामाच्छादकानांवृक्षादीनांहन्ताग्निः अथवा वसर्हांवासार्होवासरस्यगमयिता परिज्मा परितोगन्ता आदित्योममत्तुमादयतु तथाअपां वृष्ट्युदकानां वृषण्वान्वर्षणवान् वृष्ट्युत्पादकोवातोवायुः अस्मान्ममत्तु किञ्च हे इन्द्रापर्वता इन्द्रःप्रसिद्धः पर्वतः पर्ववान्वृष्ट्यादिपूरणवान्पर्जन्यस्तौयुवंयुवांनोऽस्मानस्मद्बुद्धिंवाशिशीतं तीक्ष्णीकुरुतं शोधयतमित्यर्थः तत्तस्मात् यस्मादहंसर्वान्देवान्स्तौमि तस्माद्विश्वेसर्वेऽपिदेवाःनोऽस्माकंवरिवस्यन्तु प्रभूतमन्नंदातुमिच्छन्तु सम्यद्धान्नप्रदानेनप्रीणयन्त्वित्यर्थः ॥ ममत्तु मदीहर्षे अन्तर्भावितण्यर्थाच्लोटिच्छान्दसोविकरणस्यश्लुः द्विर्वचनम् । शिशीतं ईहल्यघोरितीत्वम् बहुलंछन्दसीत्यभ्यासस्येत्वम् । इन्द्रापर्वतेत्यत्र देवताद्वन्द्वेचेतिपूर्वपदस्यानङादेशः॥३॥

**३. वसनयोग्य और सर्वतोगामी सूर्य हमारी प्रसन्नता बढ़ायें। वारि-वर्षक वायु हमारा आनन्द बढ़ायें। इन्द्र और पर्वत (मेघ) हमारी बुद्धि को बढ़ायें। विश्वेदेवगण, हमें यथेष्ट अन्न देने की चेष्टा करें।**

उतत्यामेयशसाश्वेतनायैव्यन्तापान्तौशिजोहुवध्यै ।
प्रवोनपातमपांकृणुध्वंप्रमातरारास्पिनस्यायोः ॥ ४ ॥

उत । त्या । मे । यशसा । श्वेतनायै । व्यन्ता । पान्ता । औशिजः । हुवध्यै । प्र । वः । नपातम् । अपाम् । कृणुध्वम् । प्र । मातरा । रास्पिनस्य । आयोः ॥ ४ ॥

औशिजःउशिजःपुत्रःकक्षीवान् अहं मे तादर्थ्येचतुर्थी मदर्थंयशसा यश इत्यन्नंबलंकीर्तिर्वोच्यते तद्वन्तौ व्यन्ता भक्षयन्तौ चरुपुरोडाशादिकं पान्तापिबन्तावाज्यसोमादिकं त्या तच्छब्दसमानार्थः त्यच्छब्दः यौस्तुत्यत्वेनप्रसिद्धौतावश्विनौ अत्रमद्यपिविशेषोनश्रुतः तथापिसूक्तस्यवैश्वदेवत्वादुषःसंबन्धाद्द्विवचनलिङ्गाच्चाश्विनाविविगम्यते तादृशावश्विनौ श्वेतनायै इतिषष्ठयर्थेचतुर्थी विश्वंजगच्छ्वेतयन्त्याउषसःतत्संबन्धिनिकाले उषःकालीनाह्वानाय यजेयमितिशेषः हेऋत्विजः वोयूयंप्रथमार्थेद्वितीया अपामुदकानां नपातंनपातयितारं तासांनप्तारंवाग्निं अद्भ्यः ओषधिवनस्पतयः ताभ्योऽग्निरित्यपांनप्तृत्वमग्नेः तंदेवंप्रकृणुध्वम् करोतिरत्रक्रियासामान्यवाचीक्रियाविशेषेस्तोत्रेपर्यवस्यति प्रकर्षेणस्तुध्वमित्यर्थः किञ्च रास्पिनस्य रपतेरसतेर्वाशब्दनार्थस्यप्रन्नन्तस्य कृतसकारपकारोपजनस्यरास्पइतिभवति तदस्यास्तीतिरास्पिस्तोत्रं तद्वान्रास्पिनःस्तोता तस्य आयोः तादृशस्यमनुष्यस्यमम मह्यंमातरामातृवद्धितकारिण्यावहोरात्रदेवतेअपिप्रकृणुध्वं अथवा रास्पिनस्य एकोमत्वर्थेप्रत्ययश्छान्दसः प्रवर्षणध्वनियुक्तस्यवृष्ट्युदकस्यगमनशीलस्य निर्मात्र्यावहोरात्रेप्रकृणुध्वम् ॥ व्यन्ता पान्ता उभयत्र सुपांसुलुगित्याकारः ॥ ४ ॥

**४. मैं उशिज का पुत्र हूँ। ऋत्विको, मेरे लिए अन्न-भक्षक और स्तुति-भाजन अश्विनीकुमारों को, संसार को प्रकाशित करनेवाली**

उषा के समय, बुलाओ। जल के नप्ता अग्नि की स्तुति करो तथा मेरे सदृश स्तोता मनुष्यों के मातृ-स्थानीय अहोरात्र-देवताओं की भी स्तुति करो।

आवोरुवण्युमौशिजोहुवध्यैघोषेवशंसमर्जुनस्यनंशे।
प्रवःपूष्णेदावनआँअच्छावोचेयवसुतातिमग्नेः ॥ ५ ॥ १ ॥

आ। वः। रुवण्युम्। औशिजः। हुवध्यै। घोषाऽइव। शंसम्। अर्जुनस्य। नंशे। प्र। वः। पूष्णे। दावने। आ। अच्छ। वोचेय। वसुऽतातिम्। अग्नेः ॥ ५ ॥ १ ॥

हेदेवाः औशिजःकक्षीवानहंवोयुष्माकंसंबन्धिनंरुवण्युं रवणीयंशब्दनीयं शंसंस्तोत्रंआहुवध्यै युष्मदाह्वानाय अच्छावोचेय आभिमुख्येनब्रवीमि यद्वा अत्राप्यश्विनावेदोच्येते तस्मिन्पक्षेबहुवचनंपूजार्थं हेअश्विनौ वोयुष्मान्घोषेव एतन्नामिकाब्रह्मवादिनीव सायथा अर्जुनस्यश्वेतवर्णस्य स्वशरीरगतत्वग्रोगस्यनंशेनाशनाय यथाश्विनोःशंसमकार्षीत् तद्वदहमपीत्यर्थः हेदेवाः युष्मत्संबन्धिने दावने आ आभिमुख्येनफलस्यदात्रेपूष्णे पोषकाय एतन्नामकाय देवायापि आकारस्याङोनुनासिकश्छन्दसीतिप्रकृतिभावः अच्छ आभिमुख्यगमनेनवोचेयस्तौमि वचपरिभाषणे लिङ्याशिष्यङ् वचउमित्युम् किञ्च अग्नेर्वसुतातिं तत्संबन्धिधनमपिवोचेय स्तौमि तमेवाग्निम् ॥ ५ ॥

५. देवगण, मैं उशिज का पुत्र कक्षीवान् हूँ। मैं तुम्हारे सम्बन्ध में कहने योग्य स्तोत्र का, आह्वान के लिए, पाठ करता हूँ। अश्विद्वय, जैसे अपने शरीरगत श्वेतवर्ण त्वचा-रोग के विनाश के लिए घोषा नामक ब्रह्मवादिनी महिला ने तुम्हारी स्तुति की, वैसे ही मैं भी स्तुति करता हूँ। देवो, फलदाता पूषा देव की भी स्तुति करता हूँ और अग्नि-सम्बन्धी धन की भी स्तुति करता हूँ।

श्रुतंमेमित्रावरुणाहवेमोतश्रुतंसदनेविश्वतःसीम्।
श्रोतुनःश्रोतुरातिःसुश्रोतुःसुक्षेत्रासिन्धुरद्भिः ॥ ६ ॥

श्रुतम्। मे। मित्रावरुणा। हवा। इमा। उत। श्रुतम्। सदने। विश्वतः। सीम्। श्रोतु। नः। श्रोतुऽरातिः। सुऽश्रोतुः। सुऽक्षेत्रा। सिन्धुः। अत्ऽभिः ॥ ६ ॥

हेमित्रावरुणा एतन्नामानावहोरात्राभिमानिदेवौ युवांइमाइमानि हवा अस्मदाह्वानानि श्रुतंश्रृणुतं नकेवलंअस्मदाह्वानं उतअपिचसदने यागगृहेविश्वतः उद्गात्रादिभिः सर्वतःक्रियमाणंसींएतत्स्तोत्रमपिश्रुतं किंच श्रोतुरातिः सर्वत्रश्रूयमाणधनः तादृशदानोवासुश्रोतुरस्मदाह्वानस्य सम्यक्श्रोतासिन्धुर्जलाभिमानीदेवः सुक्षेत्रा सुक्षेत्राणिअद्भिर्वृष्टिजलैः क्लेदयन्नितिशेषः यद्वा अस्मत्क्षेत्राण्यद्भिः सुक्षेत्राणिसस्यादिसमृद्धानिकुर्वन्नोहवंश्रोतुश्रृणोतु सुक्षेत्रत्वलाभायश्रृणोत्वित्यर्थः ॥ हवा इमा उभयत्रविभक्त्याआकारः । श्रुतमित्यत्रबहुलंछन्दसीतिविकरणस्य लुक् ॥ ६ ॥

६. मित्र और वरुण, मेरा आह्वान सुनो। यज्ञ-गृह में समस्त आह्वान सुनो। प्रसिद्ध धनशाली जलाभिमानी देव खेतों में जल बरसाकर हमारा आह्वान सुनें।

स्तुषेसावांवरुणमित्ररातिर्गवांशतापृक्षयामेषुपज्रे ।
श्रुतरथेप्रियरथेदधानाःसद्यःपुष्टिंनिरुन्धानासोअग्मन् ॥ ७ ॥

स्तुषे । सा । वाम् । वरुण । मित्र । रातिः । गवाम् । शता । पृक्षऽयामेषु । पज्रे । श्रुतऽरथे । प्रियऽरथे । दधानाः । सद्यः । पुष्टिम् । निऽरुन्धानासः । अग्मन् ॥ ७ ॥

हेमित्र हेवरुणदेव वांयुवामहंस्तुषे स्तुवे व्यत्ययेनमध्यमः युवयोःसंबन्धिनीसाप्रसिद्धारातिर्दानंशताशतानां शतसंख्यानामपरिमितानां गवांसंबन्धिनीअसंख्यातगोविषयारातिः पज्रेकक्षीवतिमयि पृक्षयामेषु पृक्षइत्यकारान्तोऽप्यस्ति पृक्षाणामन्नानांनियमनंयेषुस्तोत्रेषुयज्ञेषुवातेषुनिमित्तभूतेषु भवत्वितिशेषः किंच मित्रादयोदेवाः श्रुतरथे सर्वत्रप्रसिद्धरथोपेतेप्रियरथेप्रीयमाणरथयुक्तेसर्वदा रथप्रियेपज्रेमय्येवदधानाः प्रीतिंधारयन्तः सद्यः आगमनानन्तरमेवपुष्टिंगवादिपोषंनिरुन्धानासः अवरुन्धानाः अस्मास्वेवस्थापयन्तः यद्वा मयिपुष्टिंदधानाः कुर्वाणाः निरुन्धानासः कृतामेवपुष्टिंमयिस्थिरांकुर्वन्तः अग्मन् आगच्छन्तु ॥ रातिः रादाने भावेक्तिन् मन्त्रेवृषेत्यादिनाक्तिनउदात्तत्वम् । शता सुपांसुलुगितिषष्ठ्याःपूर्वसवर्णदीर्घत्वम् । दधानाः जुहोत्यादित्वाच्छपःश्लुः अभ्यस्तानामादिरित्याद्युदात्तत्वम् । अग्मन् गमेश्छान्दसेलुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् गमहनेत्युपधालोपः ॥ ७ ॥

७. मित्र और वरुण, मैं तुम्हारी स्तुति करता हूँ। जिस स्तोत्र से अन्न का नियमन होता है, वही स्तोत्र पढ़ा जाता है; इसलिए कक्षीवान् (ऋषि) को अपनी प्रसिद्ध गौ दो। कक्षीवान् के प्रति प्रसन्न होकर प्रसिद्ध और सुन्दर रथ से युक्त तुम लोग आओ तथा आकर मुझे पोषण करो।

अथाष्टमी-

अस्यस्तुषेमहिमघस्यराधःसचासनेमनहुषःसुवीराः।
जनोयःपज्रेभ्योवाजिनीवानश्वावतोरथिनोमह्यंसूरिः ॥ ८ ॥

अस्य। स्तुषे। महिऽमघस्य। राधः। सचा। सनेम। नहुषः।
सुऽवीराः। जनः। यः। पज्रेभ्यः। वाजिनीऽवान्। अश्वऽवतः।
रथिनः। मह्यम्। सूरिः॥ ८॥

महिमघस्य महिमहत्पूज्यंमघोधनंअन्नंवायस्यदेवसंघस्यसतथोक्तः तादृशस्यास्यराधोधनंस्तुषेस्तुवे व्यत्ययेनमध्यमः धनलाभायप्रभूतधनंदेवसंघंस्तौमीत्यर्थः किंच नहुषः मनुष्यनामैतत् परस्परस्नेहबन्धोपेताःमनुष्यावयंकक्षीवन्तः सुवीराः शोभनपुत्राद्युपेताःसन्तः सचासह परस्परैकमत्येन सनेम त्वद्दत्तंधनंसंभजेमलभेमहि देवसंघोविशेष्यते योजनोदेवजनः यश्च देवसंघः पज्रेभ्यः अङ्गिरोगोत्रोत्पन्नेभ्यः कक्षीवद्भ्यः पज्रावाअङ्गिरसइतिश्रुतेः। तेभ्योवाजिनीवान् वाजोऽन्नंतद्वतीक्रियावाजिनीतयातद्वान्भवतियद्वैकोमत्वर्थीयप्रत्ययश्छान्दसः अस्मभ्यंमदेयेनदत्तेनवान्नेनतद्वान्भवतीत्यर्थः यश्चदेवसंघोश्वावतः बहुभिरस्तद्दत्तैरश्वैस्तद्वतोरथिनोरथवतोमह्यंमेसूरिः प्रेरकोभवति अश्वानांरथानांप्रेरयितारं देवसंघंस्तुषेइत्यर्थः॥सुवीराः वीरवीर्यौचेत्युत्तरपदाद्युदात्तत्वम्।अश्वावतः अश्वशब्दस्यमन्त्रेसोमाश्वेत्यादिनामतुपिदीर्घत्वम्॥ ८ ॥

८. मैं महान् धनवाले देवों के धन की स्तुति करता हूँ। हम मनुष्य हैं; इसलिए शोभन पुत्र-पौत्र आदि से संयुक्त होकर हम इस धन का संभोग करें। जो देव अङ्गिरा गोत्र में उत्पन्न कक्षीवान् के लिए अन्न प्रदान करते हैं, अश्व और रथ देते हैं, उनकी स्तुति करता हूँ।

अथनवमी-

जनोयोमित्रावरुणावभिध्रुगपोनवांसुनोत्यक्ष्णयाध्रुक्।
स्वयंसयक्ष्मंहृदयेनिधत्तआपयदींहोत्राभिर्ऋतावा ॥ ९ ॥

जनः। यः। मित्रावरुणौ। अभिऽध्रुक्। अपः। न। वाम्।
सुनोति। अक्ष्णयाऽध्रुक्। स्वयम्। सः। यक्ष्मम्। हृदये। नि।
धत्ते। आप। यत्। ईम्। होत्राभिः। ऋतऽवा॥ ९॥

हेमित्रावरुणौ युष्माकंयोजनोअभिध्रुक् अभितोद्रोग्धाभवति अयष्टाभवतीत्यर्थः यश्चअक्षणयाध्रुक् चक्रेणमार्गेणद्रुह्यति अन्यथाप्रकारेणद्रुह्यति द्रोहप्रकारउच्यते वांयुवांअपः सोमरसान्नसुनोति अभिषवंनकरोति युवामतिक्रम्यअन्यदेवतार्थंसुनोतीत्यभिप्रायः अयमेवअक्षणयाद्रोहः समूढोद्विविधोजनः स्वयंयक्ष्मंव्याधिंहृदयेस्वचित्तेनिधत्तेस्थापयति अनुष्ठातॄणांभोगान्पश्यन्व्यथितोभवतीत्यर्थः यत्र लिङ्गव्यत्ययः यउक्तविलक्षणःपुमान् ऋतावा यज्ञवान् परिगृहीतयज्ञः होत्राभिः वाङ्नामैतत् स्तुतिवाग्भिः ईमेनंसोमरसंआपव्याप्नोति स्तुवन्सोममभिषुणोतीति यावत्सनरःपृत्सुयातीतिवक्ष्यमाणेनसहसंबन्धः॥ अभिध्रुक् द्रुहेःसत्सूद्विषेतिक्विप् संहितायांभषूभावश्छान्दसः। ऋतावेत्यत्रछन्दसीवनिपाविितिमत्वर्थीयोवनिप् अन्येषामपिदृश्यतइतिसंहितायांदीर्घत्वम्॥ ९ ॥

९. हे मित्र और वरुण, जो तुम्हारा द्रोही है, जो किसी तरह भी तुम्हारा द्रोह करता है, जो तुम्हारे लिए सोमरस का अभिषव नहीं करता, वह अपने हृदय में यक्ष्मा रोग धारण करता है। जो व्यक्ति यज्ञ करता और स्तुति-वचनों से सोमरस तैयार करता है—

सव्राधंतोनहुंषोदंसुंजूतःशर्धस्तरोनरांगूर्तश्रंवाः।
विसृंष्टरातिर्यातिबाळ्हसृत्वाविश्वांसुपृत्सुसदमिच्छूरः॥ १०॥२ ॥
सः। व्राधंतः। नहुंषः। दमऽसुंजूतः। शर्धःऽतरः। नराम्। गूर्तऽश्रंवाः।
विसृंष्टऽरातिः। याति। बाळ्हऽसृत्वां। विश्वांसु। पृतऽसु। सदंम्।
इत्। शूरः॥ १०॥ २॥

हेमित्रावरुणौ युवांगतमन्त्रावसानोक्तलक्षणोयुष्मत्पूजकोजनोदंसुजूतः दान्तैरश्वैःसुष्ठुप्रेरितः अतएवनरांनराणांशर्धस्तरः अतिशयेनाभिभविता अथवाअतिशयेनबलवान् नराणांस्वसमानानांमध्येगूर्तश्रवाः उद्गूर्णदीप्तिः प्रख्यातान्नोवाविसृष्टरातिः अर्थिभ्यः प्रदत्तधनः एवंमहानुभावः शूरःसन् विश्वासुपृत्सुसर्वेषुजन्येषुसंग्रामेषुव्राधतः महन्नामैतत् हिंसकान्महतोऽपिनहुषोमनुष्यनामैतत् मनुष्यान्शत्रून्प्रतिबाळ्हसृत्वाभृशंसर्ता अशंकितगमनःसन् सदमित् सदैवयातिगच्छति ॥ दंसुजूतः दासेर्विच् तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वम्। गूर्तश्रवाः गुरीउद्यमने नसत्तनिषत्तेत्यादौनिपातनान्निष्ठानत्वाभावः। विसृष्टरातिः विपूर्वात्सृजतेःकर्मणिनिष्ठा गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वेनसएवशिष्यते। पृत्सु पदादिषुमांस्पृत्स्नूनामुपसंख्यानमितिपृतनाशब्दस्यपृदादेशः सावेकाचइतिविभक्तेरुदात्तत्वम्। बाळ्हसृत्वा सर्तेरन्येभ्योऽपिदृश्यन्तइतिक्वनिप्॥ १०॥

१०. वह व्यक्ति शान्त अश्व प्राप्त करता, मनुष्यों को परास्त करता और समान मनुष्यों में अन्न के लिए प्रसिद्ध होता है। अतिथियों को धन देता है और सारे युद्धों में हिंसक मनुष्यों की ओर निःशङ्क होकर सदा जाता है।

॥ इतिद्वितीयस्यप्रथमेद्वितीयोवर्गः ॥२॥

अथैकादशी—

अधग्मन्तानहुंषोहवंसूरेःश्रोतांराजानोअमृतस्यमन्द्राः ।
नभोजुवोयन्निरवस्यराधःप्रशस्तयेमहिनारथवते ॥ ११ ॥

अधं । ग्मन्तं । नहुंषः । हवंम् । सूरेः । श्रोतं । राजानः । अमृतस्य ।
मन्द्राः । नभःऽजुवंः । यत् । निरवस्यं । राधः । प्रऽशंस्तये । महिना ।
रथंऽवते ॥ ११ ॥

हेराजानोराजमानाः सर्वस्येश्वरावा हेमन्द्राः मादयितारोविश्वेदेवाः यूयंअमृतस्यअमरणस्यसूरेः स्तोत्रादिभिरकस्यनहुषोमनुष्यस्यममहवमाह्वानंश्रोतश्रृणुत बहुलंछन्दसीतिशपोलुक् अमृतस्येत्यत्रबहुव्रीहौ नञोजरमरमित्रमृताइत्युत्तरपदाद्युदात्तत्वं अध अथश्रवणानन्तरं ग्मन्त आगच्छत गमेश्छान्दसोलङ् मध्यमबहुवचनस्यव्यत्ययेनतः बहुलंछन्दसीतिशपोलुक् गमहने-त्युपधालोपः किमर्थमागमनं उच्यते—नभोजुवोनभसिव्याप्तायूयंयद्यस्मान्निरवस्यनिर्गतरक्षकस्ययुष्मद्व्यतिरेकेणरक्षकान्तररहितस्य अथवानिर्गतोमुखादुच्चरितोरवःशब्दः स्तोत्ररूपोयस्यतादृशस्यरथवतेरथवतोयजमानस्यषष्ठ्यर्थेचतुर्थी महिना महिम्नामाहात्म्येन मकारलोपश्छान्दसः तेनयुक्तंराधःसमृद्धिसाधनंहविर्लक्षणंधनं संराधकंस्तोत्रंवाप्रशस्तयेप्रशंसितुंकामयध्वे तस्मादाह्वानंश्रृणुत आगच्छतचेति ॥ ११ ॥

११. सर्वाधिपति, आनन्द-वर्द्धक, तुम मरण-रहित स्तोत्रकारी मनुष्य के (अर्थात् मेरे) आह्वान को सुनो और आओ। तुम आकाशव्यापी हो। तुम अन्य-रक्षक-रहित रथ से संयुक्त यजमान की समृद्धि के साधन हव्य की प्रशंसा करना पसन्द करते हो।

एतंशर्धंधामयस्यसूरेरित्यवोचन्दशतयस्यनंशे ।
द्युम्नानियेषुवसुतातीरारन्विश्वेसन्वन्तुप्रभृथेषुवाजम् ॥ १२ ॥

एतम् । शर्धम् । धाम । यस्यं । सूरेः । इति । अवोचन् ।
दशंऽतयस्य । नंशे । द्युम्नानि । येषुं । वसुऽतातिः । ररन् । विश्वें ।
सन्वन्तु । प्रऽभृथेषु । वाजम् ॥ १२ ॥

यस्यसूरेः हविरादिप्रेरकस्ययजमानस्य संबन्धिनोदशतयस्य दशेन्द्रियसंवर्धकत्वेन दशावयवस्यान्नस्यनंशेप्राप्तयेवयमाहूताःस्म तस्मैयजमानायैतमिदानींदातव्यत्वेनवर्तमानं शर्धंपरेषामभिभावकमन्नंतत्प्राप्तिहेतुंबलंवा धामविदधामकरवाम इत्यवोचन्देवाः धाम दधातेर्लुङि गातिस्थेतिसिचोलुक् वचेरकारस्यउम् अस्यतिवक्तीत्यादिनाच्लेरङ् येषुदेवेषु द्युम्नानि द्योतमानानिअन्नानि वसुतातिः वसूनांधनानांतातिर्विस्तारश्च वसून्येववा रारन् रमन्तेभृशं तातिः तनोतेःक्तिनिव्यत्ययेनात्वं मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वं यद्वा स्वार्थिकस्तातिल् रारन्निविरमतेर्यङ्लुगन्तस्य लुङिरूपं तेविश्वेसर्वेदेवाः प्रभृथेषुप्रकृष्टभरणेषु यागेषुवाजमन्नं सन्वन्तुददतुप्रयच्छन्तु षणुदाने यद्वा यस्यसूरेःस्वभूतस्यच दशतयस्य दशचमसेष्ववस्थितस्यसोमस्यप्राप्तयेवयमाहूताःस्म तस्मै एतंशर्धं धामेत्यवोचन् यस्मादेवंतस्मात् प्रभृथेषु यागेषुवाजं तादृशंसोमलक्षणमन्नंविश्वेदेवाः सन्वन्तु संभजन्तां वनषणसंभक्ताविव्यस्यव्यत्ययेनउप्रत्ययः कीदृशेषु यज्ञेषु येषु वसुतातिः वसूनांहविर्लक्षणानां धनानांवाविस्तारयितारऋत्विजोवचनव्यत्ययः द्युम्नानिद्योतमानानिहवींषिरारन् ददति रादाने लोटि छान्दसःशपःश्लुः छन्दस्युभयथेत्यार्धधातुकत्वादातोलोपइटिचेत्याकारलोपः अतएवाभ्यस्तानामादिरित्याद्युदात्तत्वाभावश्च ॥ १२ ॥

१२. जिस यजमान के दसों इन्द्रियों के बलदायक अन्न की प्राप्ति के लिए हम आये हैं, उसे हमने मनुष्यों को विजय करनेवाला बल दिया—देवों ने ऐसा कहा। इन देवों का प्रकाशमान अन्न और धन अत्यन्त शोभा पाता है। उत्तम यज्ञ में देवता लोग अन्न दान करें।

अथत्रयोदशी—

मन्दा॑महे॒दश॑तयस्यधा॒सेर्द्विर्यत्पञ्च॒बिभ्र॑तो॒यन्त्यन्ना॑ ।
किमि॒ष्टाश्व॑इ॒ष्टर॑श्मिरे॒तईशा॒ना॒स॒स्तरु॑षऋञ्जते॒नॄन् ॥ १३ ॥

मन्दा॑महे । दश॑ऽतयस्य । धा॒सेः । द्विः । यत् । पञ्च॑ । बिभ्र॑तः । यन्ति॑ । अन्ना॑ । किम् । इ॒ष्टऽअ॑श्वः । इ॒ष्टऽर॑श्मिः । ए॒ते । ईशा॒नास॑ः । तरु॑षः । ऋ॒ञ्ज॒ते । नॄन् ॥ १३ ॥

मन्दामहेस्तुमोवयंदेवान् मदिस्तुतौ इदित्त्वान्नुम् किमर्थं दशतयस्यधासेः दशेन्द्रियतृप्तिसाधनत्वेनदशावयवस्यान्नस्यपुष्ट्यर्थंयद्यस्मात् द्विःपंच दशविधान्यन्नान्नानिदशचमसगृहीतत्वादन्नस्यदशविधत्वं एवंविधमन्नंबिभ्रतोधारयन्तोदशचमसाध्वर्यवोयन्तिहोमायगच्छन्त्याहवनीयंप्रति यद्वाश्वमेधिकानिदशान्नानिजुहोतीत्याम्नातान्याज्यमध्वादीनिदशविधान्यन्नानिविश्वेभ्योदेवेभ्योहोतुंधारयन्तोयन्तियदा तदामन्दामहइति नचेष्टाश्वप्रभृतीन्नयष्टॄन्विहाय क-

२

स्मादस्मात्मत्यागमिष्यन्तीतिवाच्यम् तरुषः शत्रूणांतारकान् तरतेरौणादिकःउसिः नृन्नेतृन्कर्मणां एवंमहानुभावान् वरुणादीनिष्टाश्वःएतन्नामकोराजाकिमृञ्जतेकिंप्रसाधयति तथेष्टरश्मिश्चकिमृञ्जते एतेइदानींवर्तमानाईशानासः पृथिव्याईश्वराराजानश्चनप्रसाधयन्ति यद्वा येषांस्तोतॄणां अस्माकमेतेस्तुतादेवाः ईशानासः स्वामिनःकिल तादृशान् तरुषःशत्रूणां तारकान् नॄन् कर्मनिर्वाहकान् अस्मानिष्टाश्वादयःकिंसाधयन्ति किमुपद्रवन्ति नप्रभवन्तीत्यर्थः॥ १३

१३. इन्द्रियाँ दस प्रकार की हैं; इसलिए ऋत्विक् लोग, दस अवयवों से युक्त अन्न धारण करके गमन करते हैं। हम विश्वदेवों की स्तुति करते हैं। इष्टाश्व और इष्टरश्मि नाम के राजा शत्रुतारक नेताओं (वरुणादि) का क्या कर सकते हैं।

हिरण्यकर्णंमणिग्रीवमर्णस्तन्नोविश्वेवरिवस्यन्तुदेवाः ।
अर्योगिरःसद्यआजग्मुषीरोस्राश्चाकन्तूभयेष्वस्मे ॥ १४ ॥

हिरण्यऽकर्णम् । मणिऽग्रीवम् । अर्णः । तत् । नः । विश्वे । वरिवस्यन्तु । देवाः । अर्यः । गिरः । सद्यः । आ । जग्मुषीः । आ । उस्राः । चाकन्तु । उभयेषु । अस्मे इति ॥ १४ ॥

हिरण्यकर्णं हिरण्यविकारकुण्डलाद्युपेतकर्णं मणिग्रीवंरत्नाद्युपेतकंठं एतद्वयंसर्वावयवस्याप्युपलक्षणमेवंसर्वांगाभरणयुक्तं तत्प्रसिद्धंअर्णः अरणीयंरूपं तद्वन्तंपुत्रादिकमित्यर्थः उक्तलक्षणंअस्मदीयंरूपंवानोऽस्माकं विश्वेसर्वेदेवावरिवस्यन्तु परिचरन्तु प्रयच्छन्त्वित्यर्थः अर्यः अरणीयः विश्वेषांदेवानां सद्योजग्मुषीस्तोतुर्मुखान्निर्गच्छन्तीर्गिरःस्तुतीःउस्राः विकारेप्रकृतिशब्दः क्षीराज्यादीनि हवींषिच सद्यः अस्मदागमनानन्तरमेवचाकन्तुकामयन्तां छान्दसःशपःश्लुः परस्मैपदंच । यद्वा यङ्लुकिनुगभावः आचकन्त्वितिवायोज्यं पर्याप्तं कामयन्तामित्यर्थः केष्वितितदुच्यते—अस्मेअस्माकंसंबन्धिषूभयेषुस्तोतृषुयष्टृषुच यद्वा अस्माकंउभयेषुऐहिकामुष्मिकविषयेषूभयविधेषुफलेषु ॥ १४ ॥

१४. विश्वदेव हमें कर्णों में स्वर्ण, ग्रीवा में मणि पहननेवाले रूपवान् पुत्र प्रदान करें। श्रेष्ठ विश्वदेवगण सद्योनिर्गत स्तुति और हव्य की आकांक्षा करें।

अथपञ्चदशी—

चत्वारोंमामशर्शारस्यशिश्वस्त्रयोराज्ञआयवसस्यजिष्णोः ।
रथोंवांमित्रावरुणादीर्घाप्साःस्यूमगभस्तिःसूरोनाद्यौत् ॥ १५ ॥ ३ ॥

चत्वारः । मा । मशशार्रस्य । शिश्वः । त्रयः । राज्ञः । आयवसस्य ।
जिष्णोः । रथः । वाम् । मित्रावरुणा । दीर्घऽअप्साः ।
स्यूमऽगभस्तिः । सूरः । न । अद्यौत् ॥ १५ ॥ ३ ॥

मामांकक्षीवन्तं मशर्शारस्यमशकीकृत्यभृशंशृणातिशारयतिवामित्रानितिमशर्शारः एतन्नामकस्यराज्ञः शिश्वः शिशवः शिशुवदप्रबुद्धाःचत्वारःपुत्राःबाधन्तइतिशेषः शिशुशब्दस्य जसादिषुछन्दसिवावचनमितिगुणाभावः तथा आयवसस्यसर्वतःप्राप्तान्नस्यएतन्नाम्नोराज्ञोजिष्णोर्जयशीलस्यपुत्रास्त्रयस्तेऽपिबाधन्तइतिशेषः हेमित्रावरुणाएतन्नामानौदेवौ वांयुवयोःसंबन्धी रथोदीर्घाप्साः अप्सइतिरूपनाम अतिविस्तृतरूपः स्यूमगभस्तिः स्यूममितिसुखनाम सुखकरदीप्तिःसन् सूरोन सूर्यइव अद्यौत् द्योततांयुक्तानामस्मद्विरोधिनांपुरतःस्फुरन्भयजनकोभवत्वित्यर्थः द्युतेश्छन्दसिलुङ्लङ्लिटइतिलुङ् द्युद्भ्योलुङीतिपरस्मैपदम् सिचिवृद्धिःपरस्मैपदेष्विति वृद्धिः बहुलंछन्दसीतीडभावः हल्ङ्याद्दिसंयोगान्तलोपौ यद्वा द्युअभिगमने आदादिकः छान्दसेलङि उतोवृद्धिर्लुकिहलीतिवृद्धिः ॥ १५ ॥

१५. मशर्शार राजा के चार पुत्र और विजयी अयवस राजा के तीन पुत्र मुझे बाधा देते हैं। मित्रावरुण, तुम्हारा अति विस्तृत और शोभन दीप्तिशाली रथ सूर्य की तरह कान्ति प्राप्त किये हुए है।

॥ इतिद्वितीयस्यप्रथमेतृतीयोवर्गः ॥ ३ ॥

कदित्थेत्यस्मिन्नष्टादशानुवाकेषट्सूक्तानि तत्रपृथूरथइतितृतीयंसूक्तंत्रयोदशर्चं अत्रानुक्रमणिका—पृथुःसप्तोनोषस्यंत्विति दीर्घतमसःपुत्रःकक्षीवानृषिः ऋषिश्चान्यस्मादृषेरितिपरिभाषितत्वात् अनादेशपरिभाषयात्रिष्टुप्छन्दः तुशब्दप्रयोगादिदमादिकेसूक्तेउषोदेवताके प्रातरनुवाकेउषस्येक्रतावस्यचोत्तरस्यचविनियोगः अथोषस्यइतिसूत्रितम् पृथूरथइतिसूक्तेप्रत्यर्चिरित्यष्टाविति तथाश्विनशस्त्रेइदमादिसूक्तद्वयस्यविनियोगः प्रातरनुवाकन्यायेनेत्यतिदिष्टत्वात् ।

तत्रप्रथमा—

पृथूरथोदक्षिणायाअयोज्यैनंदेवासोअमृतासोअस्थुः।
कृष्णादुदस्थादर्याऽविहायाश्चिकित्सन्तीमानुषायक्षयाय ॥ १ ॥

पृथुः । रथः । दक्षिणायाः । अयोजि । आ । एनम् । देवासः ।
अमृतासः । अस्थुः । कृष्णात् । उत् । अस्थात् । अर्या ।
विऽहायाः । चिकित्सन्ती । मानुषाय । क्षयाय ॥ १ ॥

दक्षिणायाः प्रवृद्धायाः स्वव्यापारकुशलायाः उषोदेवतायाः पृथुर्विस्तीर्णोरथः अयोजि अश्वैर्युक्तःसन्नद्धोभूत् अत्रयद्यपिदेवताविशेषोनश्रुतः तथाप्युषस्यत्वादुषसइतिगम्यते एनंसन्नद्धं रथं अमृतासःअमरणधर्माणोदेवासोदेवनशीलाहविर्भाजोदेवाः आस्थुः आस्थितवन्तः देवयजनंगन्तुंआरूढाइत्यर्थः अनन्तरंसोषाः कृष्णात् निकृष्टवर्णान्नैशात्तमसःसकाशात् उदस्थात् उत्थिताभूत् कृष्णंकृष्यतेर्निकृष्टोवर्णइतियास्कः । कीदृशीसा अर्याअरणीयापूजनीया विहायाः विविधगमनयुक्तामहतीवा विहायाइतिमहन्नाम विहायाःयह्वइतितन्नामसुपाठात् मानुषायक्षयाय मनुष्याणांनिवासायचिकित्सन्ती अन्धकारनिवारणरूपांचिकित्सांकुर्वतीतमोनिवारयन्तीत्यर्थः ॥ १ ॥

१. दक्षिणा या उषा का रथ अश्व-संयुक्त हुआ। अमर देव लोग उस रथ पर सवार हुए। कृष्णवर्ण अन्धकार से उत्थित, पूजनीय, विचित्र-गतिमती और मनुष्य के निवासस्थानों का रोग दूर करनेवाली उषा उदित हुई।

पूर्वा॒विश्व॑स्मा॒द्भुव॑नादबो॒धि॒जय॑न्ती॒वाजं॑बृह॒तीसनु॑त्री ।
उ॒च्चाव्य॑ख्यद्युव॒तिःपु॒न॒र्भूरोषाअ॑गन्प्रथ॒मापू॒र्वहू॑तौ ॥ २ ॥

पूर्वा । विश्व॑स्मात् । भुव॑नात् । अ॒बो॒धि॒ । जय॑न्ती । वाज॑म् । बृ॒ह॒ती । सनु॑त्री । उ॒च्चा । वि । अ॒ख्य॒त् । यु॒व॒तिः । पु॒नः॒ऽभूः । आ । उ॒षाः । अ॒ग॒न् । प्र॒थ॒मा । पू॒र्वऽहू॑तौ ॥ २ ॥

विश्वस्माद्भुवनात्सर्वस्मात्सुप्ताद्भूतजातात्पूर्वाप्रथमासतीयमुषाः अबोधि बुद्धाभूत्उषःकालमवगत्यहिपश्चात्सर्वेप्राणिनःप्रतिबुध्यन्ते कीदृशीसा वाजंगमनशीलं प्रकाशंनिरवर्त्यधकारंजयन्तीपराभवंकुर्वती यद्वा वाजशब्दोऽन्ननामसुपठितत्वादन्ननाम अन्नंवैवाजइतिश्रुतेश्च । यजमानार्थंअन्नंसंपादयन्तीबृहती महती सनुत्री सर्वंजगत्संभजन्ती दात्रीवाप्रकाशस्य किंच सोषाउच्चाउच्चैःउन्नतासतीव्यख्यत् विचष्टेसर्वंजगत्पश्यतीत्यर्थः कीदृशीसायुवतिः मिश्रणशीला नित्ययौवनावा पुनर्भूः पुनःपुनर्भवनशीलाप्रतिदिनंवर्तमानत्वात् सोषाः पूर्वहूतौसत्यांप्रथमामुख्याप्रकृष्टासती आगन् देवयजनदेशंप्रत्यागच्छति प्रथमइतिमुख्यनाम प्रतमोभवतीतियास्कः । इतरदेवेभ्यःपूर्वमाहूतासती शीघ्रमेवागच्छतीत्यर्थः ॥ २ ॥

२. सब जीवों के पहले ही उषा जागी। उषा अन्नदायिनी, महती और संसार को सुख देनेवाली हैं। वह युवती है; बार-बार आविर्भूत होती है। ऊर्द्ध्वस्थिता उषा देवी हमारे बुलाने पर पहले ही आती हैं।

---

१ नि० २. २०. । २ तै० ब्रा० १. ३. ६. । ३ नि० २. २२. ।

अथतृतीया–

यद्द्यभागंविभजासिनृभ्यउषोदेविमर्त्यत्रासुजाते ।
देवोनोअत्रसवितादमूनाअनागसोवोचतिसूर्याय ॥ ३ ॥

यत् । अद्य । भागम् । विऽभजासि । नृऽभ्यः । उषः । देवि ।
मर्त्यऽत्रा । सुऽजाते । देवः । नः । अत्र । सविता । दमूनाः ।
अनागसः । वोचति । सूर्याय ॥ ३ ॥

सुजाते शोभनजनने देविदेवनशीले हेउषः उषःकालाभिमानिदेवते मर्त्यत्रा मनुष्याणां पालयित्री त्वंअद्यास्मिन्काले नृभ्योमनुष्येभ्योयत् यंभागंभजनीयं स्वकीयप्रकाशस्यांशं विभजासि विभज्यददासि यद्वा मर्त्यत्रा मर्त्येषुमध्ये नृभ्योनेतृभ्योमनुष्येभ्योयजमानेभ्यो-देवानांभागंविभज्यददासि उषसिप्रवृत्तायांहविषोदीयमानत्वादुषसोदातृत्वमुपचर्यते अत्रास्मि-न्भागविषयेदमूनाः यजमानेभ्योऽभिमतफलदानमनाः दमूनादममनावादानमनावादान्तमनावे-तिनिरुक्तवचनम् । तादृशः सवितापेरकोदेवः नोऽस्माननागसोवोचति अपापान् यागयोग्यान् ब्रवीतु अनुगृह्णात्वित्यर्थः किमर्थंसूर्याय अस्मद्यागदेशंप्रतिसूर्यस्यागमनार्थम् ॥ ३ ॥

३. सुजाता उषा देवी, तुम मनुष्यों की पालिका हो। तुम अभी मनुष्यों को जो प्रकाशांश प्रदान करती हो, उसी को प्रदान कर दानशील सविता या प्रेरक देव, सूर्य के आगमन के लिए, हमें पाप-रहित कहकर स्वीकार करें।

अथचतुर्थी–

गृहंगृहमहनायात्यच्छादिवेदिवेअधिनामादधाना ।
सिषासन्तीद्योतनाशश्वदागादग्रमग्रमिद्भजतेवसूनाम् ॥ ४ ॥

गृहम्ऽगृहम् । अहना । याति । अच्छ । दिवेऽदिवे । अधि । नाम ।
दधाना । सिसासन्ती । द्योतना । शश्वत् । आ । अगात् ।
अग्रम्ऽअग्रम् । इत् । भजते । वसूनाम् ॥ ४ ॥

अहनाउषोनामैतत् अहनाद्योतनेतितन्नामसुपाठात् सादेवी दिवेदिवे प्रत्यहं दिवेदिवेद्य-विद्यवीत्यहर्नामसुपाठात् गृहंगृहंतद्यज्ञगृहं अच्छआभिमुख्येनयातिगच्छति कीदृशी अधिअधि-कंनामनमनं प्रह्वत्वं प्रतिहतमुद्योगंप्रकाशनरूपंदधाना धारयन्ती यद्वा अधिदधाना अधिकंधार-

---

१ नि० ४.४.

यन्ती किञ्च सिषासन्ती संभक्तुमिच्छन्ती द्योतना कृत्स्नंजगत् द्योतनशीला शश्वत् प्रतिदिनंआ-गादागच्छति पूर्वयातीत्युक्त्वातपुनरागादितिवचनमावश्यकत्वद्योतनार्थम् आगत्यचवसूनांध-नानां हविर्लक्षणानां अग्रमग्रमिव् तत्तच्छ्रेष्ठभागंभजते सेवते स्वीकरोतीत्यर्थः ॥ ४ ॥

४. अहना या उषा प्रतिदिन नम्र भाव से हर एक घर की ओर जाती है। भोगेच्छाशालिनी और द्युतिमती प्रतिदिन आगमन करती और हव्यरूप धन का श्रेष्ठ भाग ग्रहण करती है।

भगस्यस्वसावरुणस्यजामिरुषःसूनृतेप्रथमाजरस्व ।
पश्चासदध्यायोअघस्यधाताजयेमतंदक्षिणयारथेन ॥ ५ ॥ ४ ॥

भगस्य । स्वसा । वरुणस्य । जामिः । उषः । सूनृते । प्रथमा । जरस्व । पश्चा । सः । दध्याः । यः । अघस्य । धाता । जयेम । तम् । दक्षिणया । रथेन ॥ ५ ॥ ४ ॥

सूनृते सुष्ठुमनुष्याणांनेत्रिउषः हेउषोदेवते भगस्य सर्वैर्भजनीयस्यादित्यस्य स्वसासि स्वसृस्थानीयासि तेनसहोत्पद्यमानत्वात् तद्वत्पूज्येत्यर्थः तथावरुणस्य तमोवारकस्य सवितुर्देवस्यजामिरसि भगिनीस्थानीयासि एकस्मिन्नेवस्थानेउत्पद्यमानत्वात् जनयन्त्युत्पादयन्त्य-स्यामपत्यमन्येइतिजामिः यद्वा जमतिगच्छति स्वोत्पत्तिस्थानादन्यत्रेतिउक्तनिर्वचनद्वयमभिप्रे-त्ययास्कआह—नजामयेभगिन्यैजामिरन्येऽस्यांजनयन्तिजामपत्यंजमतेर्वास्याद्गतिकर्मणोनिर्गम-नमायाभवतीति । तादृशीत्वं प्रथमाइतरदेवेभ्यः पूर्वाउत्कृष्टावासती जरस्वस्तुताभव जरतिःस्तु-त्यर्थः जरास्तुतिर्जरतेःस्तुतिकर्मणइतियास्कः । पश्चा पश्चात्त्वमीत्यनन्तरं योअघस्यधाता यः कश्चिद्दुःखस्यतदुत्पादकपापस्यवाधारयितास्ति सदध्याः गच्छतु वचनव्यत्ययः दध्यतिर्ग-त्यर्थः दध्यतिर्दभ्नोतीतिगत्यर्थेषुपाठात् यदिसपापीवलीयान्तंदक्षिणयाप्रवृद्धयासहायभूतयात्व-या रथेनअस्मदीयरथादिसाधनेनचजयेम ॥ ५ ॥

५. सूनृता उषा, तुम भग या सूर्य की भगिनी और वरुण या प्रकाश देव की सहजाता हो। तुम श्रेष्ठ हो। सब देवता तुम्हारी स्तुति करें। इसके अनन्तर जो दुःख का उत्पादक है, वह आवे। तुम्हारी सहायता पाकर उसे रथ-द्वारा हम जीतेंगे।

अथषष्ठी—

उदीरतांसूनृताउत्पुरन्धीरुदग्नयःशुशुचानासोअस्थुः ।
स्पार्हावसूनितमसापगूळ्हाविष्कृण्वन्त्युषसोविभातीः ॥ ६ ॥

---

१ नि० ३. ६. । २ नि० १०. ८. ।

उत् । ईरताम् । सूनृताः । उत् । पुरम्ऽधीः । उत् । अग्नयः ।
शुशुचानासः । अस्थुः । स्पार्हा । वसूनि । तमसा । अपऽगूळ्हा ।
आविः । कृण्वन्ति । उषसः । विऽभातीः ॥ ६ ॥

सूनृताः प्रियसत्यात्मिकावाचः उदीरतां उद्गच्छन्तु हेऋत्विजः उत्कृष्टंयथाभवतितथा स्तोत्रं प्रवर्तयध्वं तथापुरन्धीः पुरन्धयः पुरंशरीरंयाम्रुधीयतेयाभिर्वाताःपुरन्धयःप्रज्ञाः प्रयोगविषयाः ताअप्युन्मिषन्तु प्रज्ञोपलक्षितानिकर्माणिप्रवर्तन्तामित्यर्थः यद्यपिप्राणवायुनाशरीरंधार्यते तथापि योवैप्राणःसाप्रज्ञायावाप्रज्ञासप्राणइतिश्रुतेः । प्राणप्रज्ञयोरेकत्वात्प्रज्ञायाःशरीरधारणमविरुद्धम् तथा अग्नयः आहवनीयाद्याःशुशुचानासः अत्यन्तंदीप्यमानाःउदस्थुःउत्तिष्ठन्तु प्रज्वलयन्त्वित्यर्थः किमर्थमेवमितितदुच्यते यतोविभातीः विविधंभासनानाः उषसः उषोदेवतास्तमसापगूळ्हाअन्धकारेणात्यन्तंगोपितानि स्पार्हा स्पृहणीयानि वस्तूनिवासयोग्यानि यज्ञसाधनभूतहविरादीनि आविष्कृण्वन्ति यथावस्तुप्रकटीकुर्वन्ति तस्मात्स्तोत्रादिकंकुर्वन्त्वित्यर्थः॥६॥

६. सच्ची बातें कही जायँ, प्रज्ञा प्रबुद्ध हो। अत्यन्त प्रकाशमान आग प्रज्वलित हों, इससे विचित्र प्रभावती उषा अन्धकारावृत स्पृहणीय धन का आविष्कार करती है।

अथसप्तमी—

अपान्यदेत्यभ्य१न्यदेतिविषुरूपेअहनीसञ्चरेते ।
परिक्षितोस्तमोअन्यागुहाकरद्यौदुषाःशोशुचतारथेन ॥ ७ ॥

अप । अन्यत् । एति । अभि । अन्यत् । एति । विषुरूपे इति विषुऽरूपे । अहनी इति । सम् । चरेते इति । परिऽक्षितोः । तमः । अन्या । गुहा । अकः । अद्यौत् । उषाः । शोशुचता । रथेन ॥ ७ ॥

इदानीमहोरात्रस्तुतिद्वारा उषाःस्तूयते विषुरूपे वक्ष्यमाणप्रकारेणनानारूपे अहनी अहश्चरात्रिश्चोभेसंचरेते समित्येकीभावे सहैवाव्यवधानेनचरतः अत्राहुःसाहचर्यात्तत्प्रतियोगित्वाच्चरात्रिरप्यहरित्युच्यते उत्तरत्रमन्त्रान्तरे अयमेवार्थःस्पष्टआम्नातः—अहश्चकृष्णमहरर्जुनंचविवर्तेतेरजसीवेद्याभिरिति[1] । तयोर्मध्येअन्यद्रात्रिरूपमहरपैति अपगच्छति प्रतिलोमंगच्छतिवा अपेत्येतस्यप्रातिलोम्यमितियास्कः[2] ।अन्यच्चदिवसाख्यमहः अभ्येति आभिमुख्येनगच्छति अभीत्याभिमुख्यमितियास्कः[3] ।रात्र्यांप्रतिनिवृत्तायां अहरभिमुखमागच्छतीत्यर्थः विषुरूपेसंचरेते

---

१ ऋ० सं० ४. ५. ११. । २ नि० १. ३. । ३ नि० १. ३. ।

इतियदुक्तं तदेवस्पष्टीक्रियते—परिक्षितोः पर्यायेणनिवसतोः परिक्षपयतोर्वाप्राणिनां अहःस्वतीतेषु आयुषःक्षयात्परिक्षपणंप्रसिद्धम् तयोर्मध्येअन्यारात्रिस्तमस्तमोरूपा गुहा पदार्थानां गूहनंअकः करोति अन्याअहरेकदेशभूतावोषाः शोशुचताभृशंदीप्तेनरथेनअद्यौत् द्योततेप्रकाशते प्रकाशयतिवासर्वैरात्रिस्तमोरूपत्वात्सर्वंजगदावृणोति उषास्तु सर्वान्भावान्प्रकाशयतीत्युषसःस्तुतिः॥ ७॥

७. विलक्षण रूपवान् दोनों 'अहोरात्र-देवता व्यवधान-रहित होकर चलते हैं। एक जाते हैं, एक आते हैं। पर्यायगामी दोनों देवताओं में एक पदार्थों को छिपाते हैं, दूसरे (उषा) अतीव दीप्तिमान् रथ-द्वारा उसे प्रकाशित करते हैं। अथाष्टमी—

स॒दृशी॑र॒द्यस॒दृशी॒रिदु॒श्वोदी॒र्घंस॑चन्ते॒वरु॑णस्य॒धाम॑।
अ॒न॒व॒द्यास्त्रिं॒शतं॒योज॑ना॒न्येकै॑का॒क्रतुं॒परि॑यन्तिस॒द्यः॥ ८॥

स॒ऽदृशीः॑। अ॒द्य। स॒ऽदृशीः॑। इत्। ऊ॒म् इति॑। श्वः। दी॒र्घम्। स॒च॒न्ते॒। वरु॑णस्य। धाम॑। अ॒न॒व॒द्याः। त्रिं॒शत॑म्। योज॑नानि। एका॑ऽएका। क्रतु॑म्। परि॑। य॒न्ति॒। स॒द्यः॥ ८॥

अद्यास्मिन्नहनिसदृशीरिव् परस्परंसदृश्यएव तथाश्वउइव परस्मिन्नप्यहनिसदृशीः परस्परंसदृश्यएवउशब्दोऽपिशब्दार्थः इच्छब्दएवार्थः अद्यतन्योपिश्वस्तनीभिःसदृश्यः श्वस्तन्यश्चाद्यतनीभिः एवमहरन्तरेणसादृश्यम् कथंसादृश्यमितितदुपपाद्यते—यदा नक्षत्राणिनदृश्यन्ते सूर्यश्चनोदेति सउषसःकालः सचैकविंशतिघटिकाभिः षड्विंशतिपराभिश्चसंमितः सूर्योहिप्रतिदिनं एकोनषष्ट्यधिकपञ्चसहस्रयोजनानिमेरुंप्रादक्षिण्येनपरिभ्रमति तथासतियत्रयत्रलङ्कादिभूप्रदेशेसूर्योगच्छतितस्यतस्यपुरस्तात्त्रिंशद्योजनंउषाअपिगच्छति सूर्योयस्मिन्देशेगच्छतितत्रत्रिंशद्योजनंपुरस्ताद्देशस्थितानांउदितोदृश्यते एवंसर्वप्रदेशेष्वपि तथोषाअपियत्रगच्छतिततःपुरस्तात्त्रिंशद्योजनभूभागवर्तिनांउदितादृश्यते एवंलंकादिसर्वप्रदेशस्थितानामपिउषसःउदयोऽवगन्तव्यः एवंचसतिएकस्मिन्भूभागेयावत्कालंयथोषाःप्रकाशयति तथाभूभागान्तरेऽपितावन्तंकालंप्रकाशयति एवमुक्तरीत्याएकस्मिन्नेवाहनिसर्वप्रदेशवर्तिनामप्युषसःसदृश्यः प्रदेशबाहुल्यमपेक्ष्यउषसांबहुत्वाद्बहुवचनं एवमेकरूपाउषसःअनवद्याः शुद्धाः यासामुदयात्सर्वेभावाअनवद्याभविष्यन्ति किमुवक्तव्यंतासामनवद्यत्वं दीर्घंउक्तरीत्यात्यन्तमायतं वरुणस्यतमोनिवारकस्य सूर्यस्यधामस्थानंमेरुवलयंसचन्तेप्रतिदिनंसेवन्तेकियद्दूरमितितदुच्यते—त्रिंशतंयोजनानित्रिंशद्योजनानिपुरतःसूर्योयत्रयत्रोदेति ततस्ततस्त्रिंशद्योजनंपुरस्तादुद्यन्तीत्यर्थः किंच आसांमध्येएकैकोषाः लंकाद्येकैकभूभागवर्तिनांक्रतुंगमनागमनादिरूपंकर्मतद्विषयांप्रज्ञांवा तथाच निरुक्तम्-

ऋतुंदधिक्राःकर्मवाप्रज्ञावेति । सद्यस्तदानीमेवस्वोदयकालएवपरियन्ति परितोगच्छन्ति निर्वहन्तीत्यर्थः तत्तद्भूभागविशेषेणसूर्यस्योदयोज्योतिःशास्त्रेप्रदर्शितः—उदयोयोलङ्कायांसोस्तमयःसवितुरेवसिद्धपुरे । मध्याह्नोयमकोट्यांरोमकविषयेऽर्धरात्रःस्यादिति ॥ ८॥

८. उषा देवी जैसी आज है, वैसी ही कल भी विशुद्ध है। प्रतिदिन वह वरुण या सूर्य के अवस्थित-स्थान से तीस योजन आगे अवस्थित होती है। एक-एक उषा उदय-काल में ही गमन-आगमनरूप कार्य सम्पादित करती है।

जा॒न॒त्यह्नः॑प्रथ॒मस्य॒नाम॑शु॒क्राकृ॒ष्णाद॑जनिष्टश्वि॒ती॒ची ।
ऋ॒तस्य॒योषा॒नमि॑नाति॒धामाह॑रह॒र्निष्कृ॒तमा॒चर॑न्ती ॥ ९ ॥

जा॒न॒ती । अह्नः॑ । प्र॒थ॒मस्य॑ । नाम॑ । शु॒क्रा । कृ॒ष्णात् । अ॒ज॒नि॒ष्ट । श्वि॒ती॒ची । ऋ॒तस्य॑ । योषा॑ । न । मि॒ना॒ति॒ । धाम॑ । अहः॑ऽअहः । निः॒ऽकृ॒तम् । आ॒ऽचर॑न्ती ॥ ९ ॥

उषाः प्रथमस्यमुख्यस्यप्रथमानस्य वाह्नोदिवसस्यनामनमनमागमनंजानतीअवगच्छन्तीप्राणिनांप्रज्ञापयन्तीत्यर्थः सोषाः शुक्रास्वतोदीप्ता अतएव श्वितीचीश्वैत्यंगच्छन्ती प्रकाशं प्राप्नुवन्ती कृष्णान्निकृष्टात्तमसःसकाशादजनिष्ट प्रादुर्भवति यद्यपितमसःसकाशान्नोत्पद्यते तथापि तदनन्तरभावित्वात्ततउत्पद्यतेइत्युपचर्यते उत्पन्नासा ऋतस्य सत्यभूतस्यादित्यस्यधाम तेजोयुक्तंस्थानं योषामिश्रयन्तीनमिनातिनहिनस्ति तदीयंतेजोनपराभवति अपितुअहरहःसर्वेष्वहःसुनिष्कृतमाचरन्तीअलंकारशोभांकुर्वती यद्वा ऋतस्य सत्यभूतस्ययज्ञस्यधामदेवयजनाख्यं स्थानं योषामिश्रणशीलासती नमिनाति नहिनस्ति किंतु अहरहःसर्वेषु यागदिवसेषुनिष्कृतं हविरादीनांप्रकाशनरूपमलंकारं आचरन्तीकुर्वती तादृश्युषा अजनिष्टेतिपूर्वत्रान्वयः ॥ ९ ॥

९. उषा दिन के प्रथमांश के आगमन का काल जानती है। वह स्वयं ही दीप्त और श्वेतवर्ण है। कृष्णवर्ण से उसकी उत्पत्ति हुई है। वह सूर्य-लोक में मिश्रित होती है; किन्तु उसको हानि नहीं पहुँचाती; प्रत्युत उसकी शोभा बढ़ाती है।

क॒न्ये॑व॒त॒न्वा॒३॒॑शाश॑दानाँ॒एषि॑देवि॒देव॒मिय॑क्षमाणम् ।
सं॒स्मय॑माना॒यु॒व॒तिः॒पु॒रस्ता॑दा॒विर्वक्षां॑सिकृणुषेवि॒भा॒ती ॥१०॥७॥

---

१ नि० २. २८. ।

२ ३

कन्याऽइव । तन्वा । शाशदाना । एषि । देवि । देवम् । इयक्षमाणम् । सम्ऽस्मयमाना । युवतिः । पुरस्तात् । आविः । वक्षांसि । कृणुषे । विऽभाती ॥ १० ॥ ५ ॥

तन्वाशरीरेणशाशदाना शाशाद्यमानास्पष्टतांप्राप्नुवती शाशदानःशाशाद्यमानइतियास्कः[1] । कन्येवकमनीयाकन्यकेव कन्याकमनीयाभवतिक्केयंनेतव्येतिवेतियास्कः[2] । सायथाजनान्तिकेविवसनासंचरति तथा हेउषः त्वं कन्याकमनीयाप्रगल्भासतीतन्वाशरीरेणशाशदानास्पष्टतांगच्छन्ती दृश्यसे पश्चात्प्रगल्भासती हेदेविदेवनशीले इयक्षमाणं यष्टुमिच्छन्तं अभिमतंदातुमिच्छन्तं वा-देवंद्योतनस्वभावंसूर्यरूपंप्रियंएषिगच्छसि ततःपश्चाद्युवतिर्यौवनोपेतासतीपुरस्तात्पत्युःसूर्यस्य पुरतः संस्मयमानासमीषद्धसन्ती हास्यंकुर्वतीविभातीअत्यन्तंभासमाना वक्षांसिवक्षसोपलक्षितानवयवानाविष्कृणुषेप्रकटीकरोषि यद्वा युवतिरितिलुप्तोपमा यथालोकेप्रगल्भायोषित् पुरस्तात्प्रियतमस्यपुरतः संस्मयमानादन्तप्रदर्शनाय ईषद्धसनंकुर्वती वक्षांसिवक्षसोपलक्षितानिगोप्यानिबाहुमूलस्तनादीनि आविष्करोति तथात्वमपीत्यर्थः यद्वा पुरस्तात्पूर्वस्यांदिशि संस्मयमाना स्मितोपमप्रकाशंकुर्वती युवतिः सर्वेषुभावेषुमिश्रणशीलावक्षांसिवक्षइतिरूपनाम दन्तस्थानीयानिनीलपीतादीनिरूपाण्याविष्करोषि ॥ १० ॥

१०. देवि, कन्या की तरह अपने अंगों को विकसित करके तुम दानपरायण और दीप्तिमान् सूर्य के निकट जाओ। अनन्तर युवती की तरह अतीव प्रकाश-सम्पन्न होकर, कुछ हँसती हुई, सूर्य के सामने अपना हृदय-देश उघारो।

॥ इतिद्वितीयस्यप्रथमेपञ्चमोवर्गः ॥ ५ ॥

अथैकादशी—

सुसंकाशामातृमृष्टेवयोषाविस्तन्वंकृणुषेदृशेकम् ।
भद्रात्वमुषोवितरंव्युच्छनतत्तेअन्याउषसोनशन्त ॥ ११ ॥

सुऽसंकाशा । मातृमृष्टाऽइव । योषा । आविः । तन्वम् । कृणुषे । दृशे । कम् । भद्रा । त्वम् । उषः । विऽतरम् । वि । उच्छ । न । तत् । ते । अन्याः । उषसः । नशन्त ॥ ११ ॥

हेउषोदेवि मातृमृष्टामातृभिर्जननीभिःशुद्धीकृतायोषेव सुसंकाशाअत्यर्थं प्रकाशमानात्वं तन्वंस्वकीयांतनुं दृशेसर्वेषांदर्शनायआविष्कृणुषे प्रकटयसि यथालोकेमात्रादिना स्वलंकृता

१ नि० ६. १६. । २ नि० ४. १५. ।

शोभनासती स्वकीयंलावण्योपेतं सर्वशरीरंदर्शनायाविष्करोतितद्वत्त्वमपीत्यर्थः अत्रकमितिपादपूरणः अत्रविशेषस्याभावात् शिशिरंजीवनायकमितिंवत् तथाचयास्काचार्यः—मिताक्षरेष्वनर्थकाःकमीमिद्विति्तिं।यद्वा कमितिसुखवचनः सुखंयथाभवतितथा आविष्कृणुषेइत्यर्थः हेउषः यतएवंकरोषि अतोभद्राकल्याणशीला स्तुत्यावितरंव्युच्छ आवरकमन्धकारंविप्रकृष्टंयथाभवतितथाविवासय अत्रयद्यपिविशेषोनश्रुतः तथापिप्रकाशनिवर्त्यत्वात् परिहरणीयत्वाच्च व्युदसनीयंतमएवेतिगम्यते किंचतेतव तद्व्युदसनं अन्याउषसःअतीताआगामिन्यश्च ननशंत नव्यामुवंन्ति तथाव्युच्छेतिभावः नशिर्व्याप्तिकर्मा इन्वति नशतिइतिव्याप्तिकर्मसुपाठात् ॥ ११ ॥

११. जैसे माता-द्वारा देह के धो दिये जाने पर कन्या का रूप उज्ज्वल हो जाता है, वैसे ही तुम भी होकर दर्शन के लिए अपने शरीर को प्रकाशित करो। तुम कल्याणशीला हो। अन्धकार को दूर कर दो। अन्य उषायें तुम्हारे कार्य को नहीं व्याप्त करेंगी।

अश्वा॑वती॒र्गोम॑तीर्वि॒श्ववा॑रा॒ यत॑माना र॒श्मिभि॒ः सूर्य॑स्य ।
परा॑ च॒ यन्ति॒ पुन॒रा च॑ यन्ति भ॒द्रा नाम॒ वह॑माना उ॒षास॑ः ॥ १२ ॥

अश्व॑ऽवतीः । गोऽम॑तीः । वि॒श्वऽवा॑राः । यत॑मानाः । र॒श्मिऽभिः॑ ।
सूर्य॑स्य । परा॑ । च॒ । यन्ति॑ । पुन॑ः । आ । च॒ । य॒न्ति॒ । भ॒द्रा ।
नाम॑ । वह॑मानाः । उ॒षस॑ः ॥ १२ ॥

अश्वावतीः अश्ववत्यः बहुभिरश्वैस्तद्वत्यः तथागोमतीर्बहुभिर्गोभिस्तद्वत्यः विश्ववाराः विश्वेवारावरणीयाः कालायासां तास्तथोक्ताः सार्वकालीनाइत्यर्थः यद्वा विश्वेवरितारोयासुताः विश्ववाराःभवन्ति विश्वैर्वरणीयाइत्यर्थः सूर्यस्यरश्मिभिर्यतमानाः सूर्यरश्मिभिःसाकंतमोनिवारणायप्रयत्नंकुर्वाणाः यद्यपिसूर्यरश्मयएवजगत्प्रकाशनायप्रभवन्ति तथापिसूर्योदयात्पूर्वं तमोनिवारणस्यापेक्षितत्वात्तासामपिप्रयत्नमविरुद्धम् रश्मिदेवताअपि प्रकाशिकाइत्यर्थः किंच भद्रा भद्रंकल्याणंस्तुत्यंवानामनमनं सर्वजनानुकूल्यंवहमानाः धारयमाणाः उषासः उषोदेवताः पराचयन्ति परायन्तिच तथा पुनराचयन्तिपुनरायन्तिच परस्परापेक्षयोभयत्रचशब्दः याएवातीतेषु दिनेषुगतास्ताएवपुनःपुनर्दिनान्तरेष्वप्यायन्तिजगन्निर्वाहाय प्रतिदिनंगतागतंकुर्वन्तीत्यर्थः ॥ १२॥

१२. अश्व और गौ से सम्पन्न, सर्वकालीन और सूर्यरश्मियों के साथ तमोनिवारण के लिए चेष्टा-विशिष्ट उषा-देवियाँ कल्याणकर नाम धारण करके जाती और आती हैं।

ऋ॒तस्य॑ र॒श्मिम॑नु॒यच्छ॑माना भ॒द्रंभ॑द्रं॒ क्रतु॑म॒स्मासु॑ धेहि ।
उषो॑ नो अ॒द्य सु॒हवा॒ व्यु॑च्छा॒स्मासु॒ रायो॑ म॒घव॑त्सु च स्युः ॥ १३ ॥६॥

---

१ नि० १.१०. । २ नि० १.९. ।

ऋतस्य । रश्मिम् । अनुऽयच्छमाना । भद्रम्ऽभद्रम् । क्रतुम् । अस्मासु । धेहि । उषः । नः । अद्य । सुऽहवा । वि । उच्छ ।
अस्मासु । रायः । मघवत्ऽसु । च । स्युरिति स्युः ॥ १३ ॥ ६ ॥

हेउषः ऋतस्य सत्यभूतस्यादित्यस्य रश्मिंरश्मीनअनुयच्छमाना आनुकूल्येनप्रवर्तमानात्वं भद्रंभद्रं क्रतुं तत्तत्कल्याणंस्तुत्यंवा लौकिकंवैदिकंकर्म तद्विषयांप्रज्ञांवा धेहि स्थापय हेउषः अद्येदानीं नोऽस्मदर्थं सुहवासुष्ठुआहुतासती व्युच्छ तमोविवासय प्रकाशंकुर्वित्यर्थः किंपर्थमितितदुच्यते—मघवत्सु मघमितिधननाम हविर्लक्षणधनयुक्तेष्वस्मासुयजमानेषु रायश्चस्युः बहुविधानिधनानिसंभवन्त्वितिपूर्वोक्तेनक्रतुनासहसमुच्चयार्थश्चशब्दः ॥ १३ ॥

१३. उषा, ऋतु या सूर्य की रश्मि का अनुधावन करती हुई हमें कल्याणकारिणी प्रज्ञा प्रदान करो। हम तुम्हें बुलाते हैं। अन्धकार दूर करो। हम हविर्लक्षण धन से युक्त हैं। हमारे पास धन हो।

॥ इतिद्वितीयस्यप्रथमेषष्ठोवर्गः ॥ ६ ॥

उषाउच्छन्तीतित्रयोदशर्चंचतुर्थंसूक्तंदैवतमसःकक्षीवतआर्षम् त्रैष्टुभमुषस्यं उषाउच्छन्तीत्यनुक्रान्तं विनियोगस्तु पूर्वसूक्तेएवोक्तः ।

तत्रप्रथमा—

उषाउच्छन्तीसमिधानेअग्नाउद्यन्सूर्यउर्वियाज्योतिरश्रेत् ।
देवोनोअत्रसवितान्वर्थंप्रासावीद्द्विपत्प्रचतुष्पादित्यै ॥ १ ॥

उषाः । उच्छन्ती । समऽइधाने । अग्नौ । उत्ऽयन् । सूर्यः । उर्विया । ज्योतिः । अश्रेत् । देवः । नः । अत्र । सविता । नु । अर्थम् । प्र । असावीत् । द्विऽपत् । प्र । चतुःऽपत् । इत्यै ॥ १ ॥

एषोषाःसमिधाने अग्नौ अग्नित्वसामान्येनैकवचनं अग्निषुसमिध्यमानेषुसत्सुकर्मार्थंकर्तृप्रयोगः उषःकालेह्याहवनीयादयः प्रज्वाल्यन्ते उच्छन्तीतमोविवासयन्तीउर्वियाउरुबहुलं ज्योतिः प्रकाशं अश्रेत् सेवते प्रकाशते प्रकाशयतिवासर्वं किमिव उद्यन्सूर्यःउपमाप्रधाननिर्देशः उदितः सूर्यइव सूर्योयथाप्रकाशयतितथेत्यर्थः अत्रत्वदुदयानन्तरं अस्मिन्कर्मणिवासवितादेवः सर्वस्य प्रेरकः सूर्योनोऽस्मदर्थंनुक्षिप्रं अर्थंअर्थशब्दोत्रविशेषणवाची नपुंसकलिंगः अयंनर्थानिरूणव-

---

१ ऋ० सं० ५.५.५.।

न्नपांसीत्यादौतथादृष्टत्वात् । अरणीयंद्विपत् पादद्वयोपेतं मनुष्यादिरूपंधनंप्रासावीत्अनुजाना-तुददात्वित्यर्थः तथा चतुष्पत् पादचतुष्टयोपेतंगवादिरूपंधनंप्रासावीत् किमर्थं इत्यै द्विपदांच-तुष्पदांचगमनाय यद्वा नइत्याइतिसंबन्धः अस्मद्गमनागमनादिव्यापारायेत्यर्थः ॥ १ ॥

१. अग्नि के समिद्धमान होने पर उषा, अन्धकार का निवारण करती हुई, सूर्योदय की तरह प्रभूत ज्योति फैलाती है। हमारे व्यवहार के लिए सविता द्विपद और चतुष्पद से संयुक्त धन देते हैं।

अमिनतीदैव्यानिव्रतानिप्रमिनतीमनुष्यायुगानि ।
ईयुषीणामुपमाशश्वतीनामायतीनांप्रथमोषाव्यद्यौत् ॥ २ ॥

अमिनती । दैव्यानि । व्रतानि । प्रऽमिनती । मनुष्या । युगानि ।
इयुषीणाम् । उपऽमा । शश्वतीनाम् । आऽयतीनाम् । प्रथमा ।
उषाः । वि । अद्यौत् ॥ २ ॥

दैव्यानिव्रतानि देवसंबन्धीन्यग्निहोत्रादीनिकर्माणि व्रतमितिकर्मनाम व्रतंकर्वरमितितन्नामसु पाठात् तानिकर्माणिअमिनती अहिंसतीमानप्रदानेनानुकूलंकुर्वती तथा मनुष्याणां युगानियुगो-पलक्षितान्निमेषादिकालावयवान् प्रमिनती प्रकर्षेणहिंसन्तीआयुःक्षपयन्तीत्यर्थः यद्वा युगानि युग्मानिपरस्परसंयोगंप्रमिनतीहिंसन्तीवियोगंकुर्वतीत्यर्थः उषःकालेसर्वेयथायथंस्वस्वव्यापारा-यगच्छन्तीतिप्रसिद्धं किंच ईयुषीणांगच्छन्तीनां अतीतानांशश्वतीनांनित्यानामुषसां उपमा ताभिः सदृशीत्यर्थः सादृश्यंच सदृशीरिदुश्वइत्यत्रोक्तं । तथा आयतीनांप्रथमा आगामिनीनामुषसांप्र-थमभाविनीसतीव्यद्यौत् विशेषेणप्रकाशते यद्वा ईयुषीणां गमनशीलानांपश्वादीनां शश्वतीनां संततिप्रवाहरूपेणनित्यानांउपमा तद्वन्नित्येत्यर्थः तथाआयतीनां रात्र्यवसानसमयेउत्पद्यमानानां प्रज्ञावागादीनांप्रथमभाविनीउषस्यागतायांवाचोबुद्धयश्चस्फुरन्तीतिप्रसिद्धम् तादृशीदेवीव्यद्यौ-त् प्राणिनामनुग्रहायद्योतते ॥ २ ॥

२. उषा देव-सम्बन्धी व्रतों में विघ्न नहीं करती, मनुष्यों की आयु का ह्रास करती, अतीत और नित्य उषाओं के समान है और आगामिनी उषाओं की प्रथमा है। उषा द्युति फैलाती है।

एषादिवोदुहिताप्रत्यदर्शिज्योतिर्वसानासमनापुरस्तात् ।
ऋतस्यपन्थामन्वेतिसाधुप्रजानतीवनदिशोमिनाति ॥ ३ ॥

---

१ ऋ० सं० २. १. ५.

एषा । दिवः । दुहिता । प्रति । अदर्शि । ज्योतिः । वसाना ।
समना । पुरस्तात् । ऋतस्य । पन्थाम् । अनु । एति । साधु ।
प्रजानतीऽइव । न । दिशः । मिनाति ॥ ३ ॥

एषोषाः दिवोद्योतमानात्मकस्यद्युलोकस्यदुहिता दुहितृस्थानीयावततउत्पद्यमानत्वाद्दुहितेत्युपचर्यते पुरस्तात्पूर्वस्यांदिशिप्रतिप्रत्येकं अदर्शिदृश्यते सर्वेषामपिप्राणिनामाभिमुख्येनप्रकाशतइत्यर्थः कीदृशीसाज्योतिर्वसाना तेजोरूपंवस्त्रमाच्छादयन्ती तेजसाप्रकाशयन्ती समना सम्यङ्नयित्रीचेष्टयित्री अन्तर्भावितण्यर्थोऽयं यद्वा सहयुगपदेव मन्यतेवबुध्यते प्राणिभिरितिसमनाः व्युत्पत्त्यनवधारणादनवग्रहः सातादृशी ऋतस्यादित्यस्यपन्थां पन्थानंमेरोःप्रान्तप्रदेशं अनुक्रमेणसाधुसम्यगेतिगच्छति सूर्योयत्रयत्रगच्छति तत्रतत्रपुरस्तादुषाअपिगच्छतीत्यर्थः सैव विशेष्यते—प्रजानतीव प्रियभूतस्यसूर्यस्यमार्गोमयापिगन्तव्यइतिचेतयन्तीव यथालोकेप्रियतमेऽनुरागयुक्ताकाचिद्भर्तारं सर्वास्ववस्थासुनविमुञ्चति तथेयमपीत्यर्थः किंच दिशःप्रागादिकानमिनाति नहिनस्ति किंतूषायत्रगच्छतिसाप्राचीत्येवंप्रागादिव्यवहारंकरोतीत्यर्थः ॥ ३ ॥

३. उषा स्वर्ग-पुत्री है। वह प्रकाश-द्वारा आच्छादित होकर धीरे-धीरे पूर्व दिशा की ओर दिखाई देती है। उषा मानो सूर्य का अभिप्राय जानकर ही उनके मार्ग पर अच्छी तरह भ्रमण करती है। वह कभी दिशाओं को नहीं मारती।

अथचतुर्थी—

उपोअदर्शिशुन्ध्युवोनवक्षोनोधाइवाविरकृतप्रियाणि ।
अद्मसन्नससतोबोधयन्तीशश्वत्तमागात्पुनरेयुषीणाम् ॥ ४ ॥

उपो इति । अदर्शि । शुन्ध्युवः । न । वक्षः । नोधाःऽइव । आविः ।
अकृत । प्रियाणि । अद्मऽसत् । न । ससतः । बोधयन्ती ।
शश्वत्ऽतमा । आ । अगात् । पुनः । आऽईयुषीणाम् ॥ ४ ॥

एषोषाः उपोइतिनिपातद्वयसमुदायात्मकएकोनिपातः सर्वैःसमीपएव अदर्शिदृश्यते तत्रदृष्टान्तः-शुंध्युवोनवक्षः अत्रनकारउपमार्थीयः उपरिष्टात्प्रयुज्यमानत्वात् यत्रतुप्रतिषेधोविवक्षितः तत्रपुरस्तान्नकारःप्रयुज्यते तथाचयास्कः—पुरस्तादुपाचारस्तस्ययत्प्रतिषेधतीति[1] तस्योदाहरणंनेन्द्रंदेवममंसतेति[2] उपरिष्टादुपाचारस्तस्ययेनोपमिमीतेइति तस्योदाहरणंदुर्मदासोनसुरायामिति[3] शुंध्युरादित्यः सर्वेषांशोधकत्वात् तस्यवक्षोवक्षःस्थानीयोरश्मिसमूहः सयथाप्रकाशमानोदृश्यते तथेत्यर्थः

१ नि० १. ४. । २ ऋ० सं० ८. ४. १. । ३ ऋ० सं० ५. ७. १९. ।

यद्वा शुन्ध्युरितिजलचरःश्वेतवर्णःपक्षिविशेषः सयथास्वकीयंवक्षःप्रकाशयन्दृश्यतेतद्वदित्यर्थः किंच नोधाइवप्रियाण्याविरकृत नवनंस्तोत्रंधारयतीतिनोधाःएतन्नामामहर्षिः देवतास्तुतिव्याजेन नानाविधैर्मन्त्रैःप्रियाणिस्वमनीषितान्याविष्कृतवान् तथैषापि स्वकीयानिसर्वलोकप्रियाणितेजांस्याविरकरोत् किंच अद्मसन्न अत्राप्युपमार्थीयोनकारः अद्यतइत्यद्मान्नं तस्यपाकायगृहेसीदतीत्यद्मसत्पाचिकायोषित् ससतोबोधयन्ती सायथास्वपतःपुत्रादीन्भोजनाय बोधयतितद्वत् यद्वा अद्मेतिगृहनाम वरूथंअद्मेतितन्नामसुपाठात् तत्रसीदतीत्यद्मसत्जननी सायथास्वपतःपुत्रादीन् उषः कालेप्रबोधयति तथाभुवनाख्येगृहेसीदन्ती तत्रत्यान्प्राणिनःप्रबोधयन्तीयमुषाः आईयुषीणां आगमनशीलानांस्त्रीणांमध्येशश्वत्तमा आगात्पुनःपुनरागच्छति प्रातर्नियतमागच्छन्तीनां वारयोषितांमध्येस्वयमेकासती नियतमागच्छतीत्यभिप्रायः अत्रनिरुक्तम्—उपादर्शिशुन्ध्युवःशुन्ध्युरादित्योभवतिशोधनात्तस्यैववक्षोभासोध्यूढमिदमपीतरद्वक्षएतस्मादेवाध्यूढंकायेशकुनिरपिशुंध्युरुच्यतेशोधनादेवोदकचरोभवत्यापोऽपिशुन्ध्युवउच्यन्तेशोधनादेवनोधाऋषिर्भवतिनवनंदधातिसयथास्तुत्याकामानाविष्कुरुतएवमुषारूपाण्याविष्कुरुतेऽद्मसदद्मान्नंभवत्यद्मसादिनीतिवान्नसानिनीतिवाससतोबोधयन्तीशश्वत्तमागात्पुनरेयुषोणांस्वपतोबोधयन्तीशाश्वतिकतमागात्पुनरागामिनीनामिति[1] ॥ ४ ॥

४. जैसे सूर्य अपना वक्षःस्थल प्रकटित करते हैं और नोधा ऋषि ने जैसे अपनी प्रिय वस्तु का आविष्कार किया है, उसी प्रकार उषा ने भी अपने को आविष्कृत किया है। जैसे गृहिणी जागकर सबको जगाती है, वैसे ही उषा भी मनुष्यों को जगाती है। अभिसारिकाओं के बीच उषा सबसे अधिक आती है।

पूर्वे अर्धे रजसो अप्त्यस्य गवां जनित्र्यकृत प्र केतुम् ।
व्युं प्रथते वितरं वरीय ओभा पृणन्ती पित्रोरुपस्था ॥ ५ ॥ ७ ॥

पूर्वे । अर्धे । रजसः । अप्त्यस्य । गवाम् । जनित्री । अकृत ।
प्र । केतुम् । वि । ऊम् इति । प्रथते । विऽतरम् । वरीयः । आ ।
उभा । पृणन्ती । पित्रोः । उपऽस्था ॥ ५ ॥ ७ ॥

अप्त्यस्यव्यापनशीलस्य विस्तृतस्यरजसोरञ्जकस्यान्तरिक्षलोकस्य रजःशब्दोऽन्तरिक्षलोकवाची लोकारजांस्युच्यन्तेइतियास्केनोक्तत्वात्[2]। तस्यपूर्वेअर्धेपूर्वस्मिन्भागेजनित्री उत्पन्नासती गवांदिशांरश्मीनांवाकेतुंप्रज्ञानंप्राकृतंप्रकर्षेणकरोति यद्वा रजसोरंजकस्याह्नः रजःशब्दोहर्वाची असृगहनीरजसीउच्येते इतियास्केनोक्तत्वात्[3]। तस्यपूर्वेर्धेपूर्वस्मिन्भागेउषःकालेगवांवा-

१ नि० ४. १६. । २ नि० ४. १९. । ३ नि० ४. १९ ।

चांजनित्रीजनयित्रीउत्पादयित्री उषःकालेसर्वेषांप्राणिनांवाचःस्फुरन्तीतिप्रसिद्धम् यद्वा अस्यस्य कर्मसुस्थितस्यजन्तोःकेतुंगमनागमनादिरूपंकर्म । केतुरितिकर्मनाम केतःकेतुरितितन्नामसुपाठात् प्राकृतप्रकर्षेणकरोति किंच पित्रोःपालयित्र्योर्द्यावापृथिव्योःउपस्थाउपस्थेउत्सङ्गेअन्तरालप्रदेशेस्थित्वाउभाउभेद्यावापृथिव्यौ पृणन्तीस्वतेजसापूरयन्ती यद्वा उभाउभयोः पित्रोरितिसंबन्धः वितरंविशिष्टतरं वरीयःउरुतरंअतिविस्तीर्णंयथाभवतितथाव्युप्रथतेविशेषेणैवप्रख्याताभवति प्रकाशतइत्यर्थः उशब्दोवधारणार्थःपादपूरणोवा मिताक्षरेष्वनर्थकाःकमीमिद्विवितीति यास्केनोक्तत्वात् ॥ ५ ॥

५. विस्तृत आकाश के पूर्व भाग में उत्पन्न होकर उषा दिशाओं को चेतना-युक्त करती है। उषा पितृ-स्थानीय स्वर्ग और पृथिवी के अन्तराल में रहकर अपने तेज से देवों को परिपूर्ण करके विस्तृत और विशिष्ट रूप से प्रख्यात हुई है।

एवेदेषापुरुतमादृशेकंनाजामिंनपरिवृणक्तिजामिम् ।
अरेपसातन्वाशाशदानानार्भादीषतेनमहोविभाती ॥ ६ ॥

एव । इत् । एषा । पुरुऽतमा । दृशे । कम् । न । अजामिम् ।
न । परि । वृणक्ति । जामिम् । अरेपसा । तन्वा । शाशदाना ।
न । अर्भात् । ईषते । न । महः । विऽभाती ॥ ६ ॥

एषोषा एवेत् इच्छब्दएवकारार्थः एवमेवइदानीं भासमानप्रकारेणैवपुरुतमाविपुलतमा अत्यन्तविस्तृतासती अजामिं विजातीयंमनुष्यादिजातिंनपरिवृणक्ति परितःसर्वतोनवर्जयति तथा जामिंसजातीयंदेवजातिंनपरिवृणक्ति नपरिवर्जयति मनुष्यादिकंदेवादिकंचतदुपलक्षितं लोकद्वयंवाकात्स्न्र्येनप्रकाशयतीत्यर्थः किमर्थमितितदुच्यते—दृशेकं सुखेनसर्वेषांदर्शनायसुखंयथा भवतितथासर्वान्दर्शयितुंवा किंच अरेपसा अपापया निर्मलयातन्वाशरीरेण शाशदाना शाशाद्यमाना शाशदानःशाशाद्यमानइतियास्कः । स्पष्टतांगच्छन्तीत्यर्थः विभातीविशेषेणप्रकाशयन्ती साअर्भादल्पात् पुत्रिकादेःसकाशान्नेषतेनगच्छति तमपिप्रकाशयति तथा महोमहतोमेर्वादेः सकाशान्नेषते नगच्छति तमपिप्रकाशयति पूर्वंलोकद्वयंप्रकाशयति इत्युक्तं इदानीमस्मिंल्लोके परमाण्वादिपर्वतपर्यन्तंकृत्स्नंप्रकाशयतीत्यर्थः ॥ ६ ॥

६. इस तरह अत्यन्त विस्तृत होकर उषा सरलता से दर्शन-निमित्त मनुष्यादि और देवादि में से किसी को भी नहीं छोड़ती। प्रकाशशालिनी उषा विमल शरीर में क्रमशः स्पष्ट होकर छोटे या बड़े किसी से भी नहीं हटती।

१ नि० १. ९. । २ नि० ६. १६. ।

अथसप्तमी–

अभ्रातेवपुंसएतिप्रतीचीगर्तारुगिवसनयेधनानाम् ।
जायेवपत्यउशतीसुवासाउषाहस्रेवनिरिणीतेअप्सः ॥ ७ ॥

अभ्राताऽइंव । पुंसः । एति । प्रतीची । गर्तऽआरुगिव । सनये । धनानाम् । जायाऽइंव । पत्ये । उशती । सुऽवासाः । उषाः । हस्राऽइंव । नि । रिणीते । अप्सः ॥ ७ ॥

अभ्रातेवभ्रातृरहितेवपुंसः पित्रादीन् प्रतीचीस्वकीयस्थानात्प्रतिनिवृत्तमुखीसतीएतिगच्छति यथालोकेभ्रातृरहितायोषित्स्वोचितवासोलङ्कारादिलाभायपितॄनेति सतिभ्रातरिसएवोचितप्रदानादिनासम्यक्तोषयति तदभावात्पितरमेवप्राप्नोति यद्वा सतिस्वभ्रातरिसएवपितुः पिंडदानादिकंसन्तानकृत्यंकरोति तस्याभावात्स्वयमेवतत्कर्तुंपित्रादीन्गच्छति तद्वदियमुषाअपिस्वोचितप्रकाशादिलाभायस्वप्रकाशदानायवा पितृभूतंसूर्यमाभिमुख्येनगच्छति अयमेकोदृष्टान्तः तथा धनानांसनये गर्तारुगिव गर्तारोहिणीवेत्यपरोदृष्टान्तः गर्तइतिगृहनाम रुदरोगर्तइतितन्नामसुपाठाव अत्रौचित्येनराजपुरुषैः न्यायनिर्णेतृभिश्चाधिष्ठितंस्थानमुच्यते तदारोहतीतिगर्तारुक् यथा लोकेकाचिद्गतभर्तृकायोषिद्धनानांस्वकीयरिक्थानां सनयेलाभाय गर्तमागच्छति तांतुसभ्याविचार्येयदीयंरिक्थंलभतेचेदक्षैःसन्ताड्य तदीयंधनंवितरन्ति तथेयमपिधनानांप्रीणनसाधनानांप्रकाशानांसनये लाभाय गर्तमाकाशं सूर्यनिवासस्थानं आरोहति देशविशेषाचारमपेक्ष्यैवंदृष्टान्तितं किंच पत्येउशतीकामयमानासुवासादुकूलादिशोभनवसनास्वलंकृतापूर्वंरजोदर्शनसमये मलिनवस्त्रासती स्नानानन्तरंशोभनवस्त्राभरणैः शोभमानाविशेषेणपतिंभोगायकांक्षतीतेनसहसंक्रीडते तथेयमुषाःअपिनैशेनान्धकारेणावृतत्वात् मलिनवसनापिप्रभाते स्वतेजसावृतत्वात् सुवसनासती पतिस्थानीयेनसूर्येणसाकंसंक्रीडमाना हस्रेवहसनेव अप्सःदन्तस्थानीयानिरूपाणि नीलपीतादीनि यद्वा निरूप्यमाणानिपदार्थजातानि निरिणीते नितरांरिणीते गमयतिप्रकाशयतीत्यर्थः यथालोकेकाचिद्रमणीयायोषित्स्मितव्याजेनदन्तान्विवृणुते तथेयमपिसर्वाणि रूपाणिप्रकाशयतीत्यर्थः अयंमन्त्रोनिरुक्तेस्पष्टंव्याख्यातः–अभ्रातृकेवपुंसःपितॄनेत्यभिमुखीसन्तानकर्मणेपिण्डदानायनपतिंगर्तारोहिणीवधनलाभायदाक्षिणाजीगर्तःसभास्थाणुर्गृणातेःसत्य-

संगरोभवतितंतत्रयापुत्रायापतिकासारोहतितांतत्राक्षैराघ्नन्तिसारिक्थंलभतइति । जायेवपत्येकामयमानासुवासाऋतुकालेषूषाहसनेवदन्तान्विवृणुतइति ॥ ७ ॥

७. भ्रातृ-हीना स्त्री जैसे पित्रादि के अभिमुख गमन करती है, गतभर्तृका जैसे धन-प्राप्ति के लिए घर आती है, उषा भी वैसा ही करती है। जैसे पत्नी पति की अभिलाषिणी होकर सुन्दर वस्त्र पहनती हुई हास्य-द्वारा अपनी दन्त-राजि प्रकाशित करती है, उसी प्रकार उषा भी करती है।

स्वसास्वस्रेज्यायस्यैयोनिमारैगपैत्यस्याःप्रतिचक्ष्येव ।
व्युच्छन्तीरश्मभिःसूर्यस्याञ्ज्यंक्तेसमनगाइवव्राः ॥ ८ ॥

स्वसा । स्वस्रे । ज्यायस्यै । योनिम् । अरैक् । अप । एति ।
अस्याः । प्रतिचक्ष्यऽइव । विऽउच्छन्ती । रश्मिऽभिः । सूर्यस्य ।
अञ्जि । अङ्क्ते । समनगाःऽइव । व्राः ॥ ८ ॥

स्वसा भगिनीरूपारात्रिः स्वस्रेभगिन्यैउषसे कीदृश्यैज्यायस्यै यद्यपि एकस्मादेवान्तरिक्षादुत्पन्नत्वाद परस्परंस्वसृभावः तथाप्यह्नःप्राथम्यात्तेजस्विन्याउषसोज्यायस्त्वं स्वयमेवसरतीति वास्वसारात्रिः स्वस्रेज्यायस्यै उक्तरीत्याज्येष्ठायै योनिंउत्पत्तिस्थानं अपररात्ररूपं आरैक् अरिचत् मादात् रेचयतीत्यर्थः तथाच पूर्वत्राम्नातं—रात्र्युषसेयोनिमारैगिति। दत्त्वाचअस्याउत्पन्नायाउषसः प्रतिचक्ष्येव ज्ञापयित्वैव स्वयमपसृत्यैतिगच्छति ज्यायस्यामागतायां तस्यैस्वस्थानं दत्त्वा स्वयं तत्सन्निधौस्थातुमनुचितमितिविज्ञायैवापगच्छतीतिभावः एवमुत्पन्नोषाः सूर्यस्यरश्मिभिर्व्युच्छन्ती तमोविवासयन्ती अंजिव्यंजकंजगत् अङ्क्ते अनक्तिप्रकाशयति किमिव समनगाइव सम्यग्गमनहेतवः आपः समनाः ताः गच्छन्तीतिसमनगाःविद्युतः व्राः व्राताः विद्युत्संघाइव यद्वा सम्यग्गमनायगच्छन्तीतिसमनगाः सूर्यरश्मयः तेइवव्राः व्राताः संघीभूताः तेयथा अंजन्ते जगत्प्रकाशयन्ति तथेत्यर्थः व्रातइत्यत्रतकारलोपश्छान्दसः ॥ ८ ॥

८. भगिनी-रूपिणी रात्रि ने बड़ी बहन (उषा) को अपर रात्रि-रूप उत्पत्ति-स्थान प्रदान किया है एवं उषा को जनाकर स्वयं चली जाती है। सूर्य-किरणों से अन्धकार हटाकर उषा विद्युद्राशि की तरह जगत् को प्रकाशित करती है।

आसांपूर्वासामहसुस्वसॄणामपरापूर्वामभ्यैतिपश्चात् ।
ताःप्रत्नवन्नव्यसीर्नूनमस्मेरेवदुच्छन्तुसुदिनाउषासः ॥ ९ ॥

---

१ नि० ३. ५. । २ ऋ० सं० १. ८. ९. ।

आसाम् । पूर्वासाम् । अहऽसु । स्वसॄणाम् । अपरा । पूर्वाम् ।
अभि । एति । पश्चात् । ताः । प्रत्नऽवत् । नव्यसीः । नूनम् ।
अस्मे इति । रेवत् । उच्छन्तु । सुऽदिनाः । उषसः ॥ ९ ॥

स्वसॄणांपरस्परंस्वसृभावमापन्नानां स्वयंसरन्तीनांवापूर्वासांपुरातनीनां आसामुषसांमध्ये अहस्सु अहःसु प्रतिदिनंअपराअन्या अद्यतन्युषाः पूर्वांअतीतदिवससंबन्धिनीमुषसंपश्चात् अनुसृत्यअभ्येति अभिमुखंगच्छति अव्यवधानेनगच्छतीत्यर्थः सर्वेष्वहःसुएवमेवाभ्येति नव्यसीः नवीयस्यः नवतराआगामिन्यः ताउषासः उषसोऽपिनूनंनिश्चयं प्रत्नवत् पुरातन्यइव सुदिनाः शोभनकर्मानुष्ठानसाधनदिवसाः शोभनदिनमुखावासत्यः अस्मेअस्माकंरेवत् बहुधनविशिष्टंयथाभवतितथाउच्छन्तु प्रकाशयन्तु पूर्वतन्योयथौच्छन्तथा आगामिन्योऽपिउच्छन्त्वित्यर्थः ॥ ९ ॥

९. इन सब भगिनीभावापन्न प्राचीन उषाओं में पहली दूसरी के पीछे प्रतिदिन गमन करती हैं। प्राचीम उषाओं की तरह नई उषा सुदिन पैदा करती हुई हमें प्रभूत-धन-विशिष्ट करके प्रकाशित करे।

अथदशमी—

प्रबोधयोषःपृणतोमघोन्यबुध्यमानाःपणयःससन्तु ।
रेवदुच्छमघवद्भ्योमघोनिरेवत्स्तोत्रेसूनृतेजारयन्ती ॥ १० ॥ ८ ॥

प्र । बोधय । उषः । पृणतः । मघोनि । अबुध्यमानाः । पणयः ।
ससन्तु । रेवत् । उच्छ । मघवत्ऽभ्यः । मघोनि । रेवत् । स्तोत्रे ।
सूनृते । जरयन्ती ॥ १० ॥ ८ ॥

हेमघोनि मघवति अस्मभ्यंदातव्यैर्बहुभिर्धनैस्तद्वति उषःहेउषोदेवि पृणतः हविःप्रदानस्मान्यजमानान्प्रबोधयप्रज्ञापय प्रतिबुद्धान्कुरु किंच पणयः व्ययासहिष्णवोवणिजः पणिर्वणिग्भवतीतियास्कः[१] । पणयइतिलुब्धकाअबुद्ध्यमानाः यागादीनकुर्वाणाः अदानशीलाः अस्मच्छत्रवः ससन्तुस्वपन्तु दीर्घनिद्राभवन्तु म्रियन्तामित्यर्थः तथाचमन्त्रान्तरं—ससन्तुत्याअरातयोबोधन्तुशूररातयइति[२] । किंच हेमघोनि अस्मद्दत्तहर्विर्भिस्तद्वति हेउषः मघवद्भ्यः हविर्लक्षणान्नवद्भ्योयजमानेभ्यः तेषामर्थं रेवत् धनवत् समृद्धिमत् उच्छविभाहि किंच हेसूनृते सुष्टुमनुष्या-

१ नि० २.१७. । २ ऋ० सं० १.२.२७. ।

णां नेत्रि देवि जरयन्तीसर्वप्राणिनःक्षपयन्तीत्वंस्तोत्रे स्तुतिकर्त्रेयजमानाय तदर्थंरेवद्धनवत् स-मृद्ध्यर्थंउच्छेतिशेषः॥ १०॥

१०. धनवती उषा, हविर्दाताओं को जगाओ। पणिलोग न जागकर निद्रा में पड़ें। धनशालिनी, धनी यजमानों को समृद्धि दो। सूनृते, तुम सारे प्राणियों को क्षीण करती हुई यजमान को समृद्धि दो।

अवे॒यम॑श्वैद्युव॒तिः पु॒रस्ता॑द्यु॒ङ्क्ते गवा॑मरु॒णाना॒मनी॑कम्।
वि नू॒नमु॑च्छा॒दस॑ति॒ प्र के॒तुर्गृ॒हंगृ॑ह॒मुप॑ तिष्ठाते अ॒ग्निः॥ ११॥

अव॑। इ॒यम्। अ॒श्वै॒त्। यु॒व॒तिः। पु॒रस्ता॑त्। यु॒ङ्क्ते। गवा॑म्।
अ॒रु॒णाना॑म्। अनी॑कम्। वि। नू॒नम्। उ॒च्छा॒त्। अस॑ति। प्र।
के॒तुः। गृ॒हम्ऽगृ॑हम्। उप॑। ति॒ष्ठा॒ते। अ॒ग्निः॥ ११॥

इयमुषाः युवतिः यौवनोपेता योषित्स्थानीया यद्वा सर्वेषुभावेषुमिश्रयन्तीपुरस्तात्पूर्वस्यां दिशिअवाश्वैत् अत्यर्थमागच्छति वर्धतेवा अत्रावशब्दोविनिग्रहार्थीयः न्यवेतिविनिग्रहार्थीयावितियास्केनोक्तत्वात्। तत्कथमवगम्यतइतितत्राह—इयंअरुणानां अरुणवर्णानांगवांप्रसिद्धानामेतन्नामकानामश्वानांवा अनीकंसमूहं युंक्तेरथेयोजयति अरुण्योगावउषसांश्यावाः सवितुरिति यथालोकेवाहनसन्नाहंदृष्ट्वा प्रयाणमनुमीयते तथात्राप्यरुणरश्मीनामश्वानांदर्शनादुषाआगच्छतीत्यध्यवसीयते यद्वा अरुणानांरश्मीनां समूहंयुंक्ते तथानूनं निश्चयं एषाव्युच्छात् तमोविवर्जयिष्यति यतइयंगायुनक्ति अतएवकारणात् यथालोकेस्वसन्नाहंदृष्ट्वोदयोनुमीयते तथात्रापीत्यर्थः तादृशीसाअसति असत्प्रायेनीरूपेअन्तरिक्षेअतिरोधायकत्वादशोभनेतमसिवाकेतुः केतुस्थानीयाज्ञापयित्रीप्रकर्षेणविविधंभासतइतिशेषः उपसर्गवशाद्योग्यक्रियाध्याहारः यद्वा असति तमोरूपेन्धकारेप्रकेतुःप्रकर्षेणज्ञापयित्रीसतीनूनंव्युच्छादितिपूर्वत्रान्वयः तस्मिन्कालेअग्निः आहवनीयादिरूपोगृहंगृहं सर्वयजमानगृहं अग्निहोत्राद्यर्थमुपतिष्ठाते उपतिष्ठते दीप्यतइत्यर्थः॥ ११॥

११. युवती उषा पूर्व दिशा से आती है। उसके रथ में सात अश्व जुते हैं। वह दिन की सूचना करके रूप-रहित अन्तरिक्ष में अन्धकार का निवारण करती है। उसका आगमन होने पर घर-घर में आग जलती है।

१ नि० १. ३.।

अथद्वादशी–

उत्तेवयश्चिद्वसतेरपप्तन्नरश्चयेपितुभाजोव्युष्टौ ।
अमासतेवहसिभूरिवाममुषोदेविदाशुषेमर्त्याय ॥ १२ ॥

उत् । ते । वयः । चित् । वसतेः । अपप्तन् । नरः । च । ये ।
पितुऽभाजः । विऽउष्टौ । अमा । सते । वहसि । भूरि । वामम् ।
उषः । देवि । दाशुषे । मर्त्याय ॥ १२ ॥

तेतवव्युष्टौसत्यां वयश्चित् गमनवन्तःपक्षिणोऽपि चिदित्येषोऽपिशब्दार्थः निपातानामनेकार्थत्वात् उच्चावचेष्वर्थेषुनिपतन्तीतियास्केनोक्तत्वात् वसतेर्निवासस्थानान्नीडादेरुत् ऊर्ध्वं अपप्तन् पतन्ति पूर्ववाक्येगृहंगृहमुपतिष्ठतेअग्निरित्युक्तत्वात्तदपेक्षयापिशब्दः किंच नरश्चमनुष्याश्च पितुभाजःअन्नवन्तः अन्नार्थिनः कृषिवाणिज्यादिकर्तारः स्वस्वव्यापारार्थमुत् उन्मुखाः अपप्तन् गच्छन्ति तथाचमन्त्रान्तरं–पद्वदीयतउत्पातयतिपक्षिणइति । एवंव्युष्टौसत्यां हेदेवि देवनशीलेउषोदेवते अमागृहे देवयजनाख्ये सते तिष्ठते यजमानायतदर्थं अमेतिगृहनाम अमादमइतितन्नामसुपठितत्वात् यद्वा अमासहहूयमानेनाग्निनासह निवसतेयजमानाय अमावसेतामित्यादौ सहार्थेप्रयोगात् मर्त्यायमनुष्यायदाशुषेहविर्दत्तवतेयजमानाय भूरिवामं बहुशोभनं धनं वहसिप्रापयसि ॥१२॥

१२. उषा, तुम्हारा उदय होने पर चिड़ियां अपने घोंसले से ऊपर उड़ती हैं। अन्न-प्राप्ति में आसक्त होकर मनुष्य ऊपर मुंह करके जाते हैं । देवि, देव-पूजन-गृह में अवस्थित हव्य-दाता मनुष्य के लिए प्रभूत धन ले आओ।

अथत्रयोदशी–

अस्तोढ्वंस्तोम्याब्रह्मणामेवीवृधध्वमुशतीरुषासः ।
युष्माकंदेवीरवसासनेमसहस्रिणंचशतिनंचवाजम् ॥ १३ ॥ ९ ॥

अस्तोढ्वम् । स्तोम्याः । ब्रह्मणा । मे । अवीवृधध्वम् । उशतीः ।
उषसः । युष्माकम् । देवीः । अवसा । सनेम । सहस्रिणम् ।
च । शतिनम् । च । वाजम् ॥ १३ ॥ ९ ॥

---

१ नि० ९.११. । २ ऋ०सं० १.४.३. ।

एवंसूक्तद्वयोक्तरीत्याबहुधास्तुत्वा तांचस्तुतिं अनयानिवेदयित्वास्वाभीष्टंप्रार्थयते हेस्तोम्याः स्तोमस्तोत्रंतदर्हन्तीतिस्तोम्याःस्तुत्यर्हाःउषसः यतोयूयंतादृश्यः अतोमेमत्स्वभूतेन ब्रह्मणासूक्तद्वयगतमन्त्ररूपेणस्तोत्रेणास्तोढ्वंस्तुताभवत किंच हेउषासः उषसः उशतीस्तोतॄनस्मान् अस्मत्समृद्धिंवा कामयमानायूयंअवीवृधध्वं अस्मान्प्रवर्धयत किंच हेदेवीः देव्योदेवनशीलाः युष्माकंअवसायुष्मत्संबन्धिनारक्षणेनवयं सहस्रिणं सहस्रसंख्याकं अभीष्टंधनंसनेमलभेमहि तथाशतिनंचवाजं शतसंख्याकं अपरिमितंधनं सनेम युष्मत्कृतेनशतसहस्रपरिमितधनादिरूपरक्षणेनवयमपि अर्थिभ्यःसहस्रपरिमितस्यधनस्यसनितारोभवेमेत्यर्थः ॥१३॥

१३. स्तुति-पात्र उषाओ, मेरे मन्त्र-द्वारा तुम स्तुत हो। मेरी समृद्धि की इच्छा करके हमें वर्द्धित करो। देवियो, तुम्हारी रक्षा प्राप्त करके हम सहस्रसंख्यक और शतसंख्यक धन प्राप्त करें।

॥ इतिद्वितीयस्यप्रथमेनवमोवर्गः ॥ ९ ॥

प्रातारत्नमितिसप्तर्चंपञ्चमंसूक्तंकाक्षीवतं दानस्यस्तूयमानत्वाद्दानदेवत्यं यातेनोच्यतेसादेवतेतिपरिभाषितत्वात् त्रैष्टुभं उपइत्यादिकेद्वेजगत्यौ प्रातारत्नंसप्तस्वनयस्यदानस्तुतिरुपजगत्यावित्यनुक्रमणिका।

तत्रप्रथमा—

प्रा॒ता र॒त्नं प्रा॑त॒रित्वा॑ दधाति॒ तं चि॑कि॒त्वान्प्र॑ति॒गृह्या॒ नि ध॑त्ते।
तेन॑ प्र॒जां व॒र्धय॑मान॒ आयू॑ रा॒यस्पोषे॑ण सचते सु॒वीरः॑ ॥ १ ॥

प्रा॒तः । रत्न॑म् । प्रा॒तः॒ऽइत्वा॑ । द॒धा॒ति॒ । तम् । चि॒कि॒त्वान् । प्र॒ति॒ऽगृह्य॑ । नि । ध॒त्ते॒ । तेन॑ । प्र॒ऽजाम् । व॒र्धय॑मानः । आयुः॑ । रा॒यः । पोषे॑ण । स॒च॒ते॒ । सु॒ऽवीरः॑ ॥ १ ॥

अत्रेतिहासमाचक्षते—दैर्घतमसःकक्षीवान्नामऋषिः ब्रह्मचर्यंचरिष्यन् वेदाभ्यासायगुरुकुलेचिरकालमुषित्वावेदान्सम्यगधीत्यव्रतानिचचरित्वातेनानुज्ञातः पुनःस्वगृहंप्रतिप्रयास्यन्मध्येमार्गेरात्रौविश्रान्तः प्रभातेभावयव्यस्यपुत्रःस्वनयोनामराजा अनुचरैःसहक्रीडमानोऽकस्मात्कक्षीवतोऽन्तिकमाससाद सचरभसाप्रतिबुद्धःसहसोत्तस्थौ तंचराजापाणिंगृहीत्वा स्वकीयमासनमुपवेश्यास्यसौन्दर्यमवगत्यस्वकन्याप्रदानमनाःपप्रच्छ भगवन् कस्यपुत्रःकिंनामात्वमिति सचपृष्टोमातरंपितरंचस्ववृत्तान्तं आचचक्ष सचराजा संभाव्यइत्यवगत्यमुदितमनाः स्वगृहंप्राप्यास्मैमधुपर्कमारचय्यवस्त्रमाल्यादिभिःपूजयित्वा सरथादशकन्याःशतंनिष्कानश्वशतंपुंगवानां

शतंगवांषष्ट्युत्तरसहस्रंपुनरेकादशरथांश्वप्रादात् सचसर्वमनुक्रमेणप्रतिगृह्यदीर्घतमसोन्तिकमा-गत्यतस्मैप्रादर्शयत् ननुकक्ष्यानामाश्वबन्धनीरज्जुस्तद्वान्कक्षीवान् अश्वबन्धनंचराज्ञएवोचितं अतोऽस्यराजन्यत्वात्प्रतिग्रहोनोपपद्यते याजनाध्यापनेचैवविशुद्धाच्चप्रतिग्रहइतिस्मरणात् तस्मा-द्ब्राह्मणस्यैवाधिकारोनतुक्षत्रियस्येति नैषदोषः यद्यप्यसौकलिंगाख्यस्यराज्ञःपुत्रः तथापितेनक-लिंगेन स्वयंवृद्धत्वादपत्योत्पादनायसामर्थ्यमलभमानेनतदुत्पादनाययाचितोदीर्घतमाऋषिः उशि-ङ्नामिकां अपत्योत्पादनायप्रेषितयाराजमहिष्यातिजरठेनमहर्षिणासहरन्तुंलज्जमानयास्ववस्त्राभ-रणैरलंकृत्यस्वप्रतिनिधित्वेनप्रेषितामुशिङ्नामिकांयोषितं दासीमित्यवगत्यमन्त्रपूतेनजलेनाभिषि-च्यऋषिपुत्रींकृत्वातयासहरेमे तदुत्पन्नःकक्षीवान्नामऋषिः एतत्सर्वमस्माभिःपूर्वाध्याये नासत्या-भ्यामित्यत्रसूक्तेविस्तरेणप्रतिपादितम् अतोस्यक्षत्रियसंबन्धात्कक्षीवानितिनामोपपन्नं दीर्घतमसः परमर्षेरुत्पन्नत्वेनब्राह्मणत्वात्प्रतिग्रहोप्युपपन्नएव इदमादिसूक्तद्वयं स्वनयस्यराज्ञोदानप्रशंसाख्या-नप्रतिपादकम् नन्वनुक्रमण्यांस्वनयस्यदानस्तुतिरितिदानतुष्टोभावयव्यंतुष्टावेतिचोभयत्रस्तो-तव्यंभिन्नमेवानुगम्यतइति उच्यते—उत्तरसूक्तस्यप्रथमायामृचि अधिक्षियतोभाव्यस्येतिदातुर्भा-वयव्यस्यश्रूयमाणत्वात् तत्प्राथम्यमुपजीव्य पृथगुपात्तं वस्तुतस्तुपितुर्नाम्ना पुत्रस्यव्यवहर्तव्यत्वात् तथाआरुंद्रासइत्यादौबहुशःप्रयोगदर्शनात् स्वनयेनदत्ताइति तत्रैवसूक्ते स्वनयस्यापिश्रूयमाण-त्वाच्चोभयत्रापिदातृप्रतिग्रहीत्रोरेकत्वेनैकमेवदानप्रशंसारूपंआख्यानमितिप्रसिद्धं सचकक्षीवा-नानीतंसर्वंपितुर्निवेदयन्परोक्षेणैवदानप्रकारंप्रशंसति स्वनयोनामराजाप्रातरित्वा प्रातरेवात्मनः सकाशमागतःसन् रत्नं रमणीयं निष्कादिकं प्रातःप्रभातकाले दधाति अस्मत्सन्निधौस्था-पयतिददाति तंस्थापितंसर्वंचिकित्वान् चेतनावान्अदुष्टमित्यवगतवान्प्रतिगृह्यस्वीकृत्यनिधत्ते पितुःसमीपेस्थापयति अनन्तरं तेनदत्तेननिष्कादिना प्रजांपुत्रभृत्यादिरूपांवर्धयमानः पोषयन् आयुर्जीवितंचवर्धयन्सुवीरः शोभनैःवीरैःपुत्रभृत्यादिभिरुपेतःसन् रायस्पोषेणधनानां पुनः पुनःवर्धनेनसचतेसौराजासंगच्छतामितितवदातुराशिषंप्रार्थयते ॥ १ ॥

१. स्वनय राजा ने, प्रातःकाल आकर, रत्नादि रख दिये। कक्षीवान् ने उठकर उन्हें ग्रहण किया। उस रत्नराजि-द्वारा प्रजा और आयु की वृद्धि करके धन लाभ किया।

अथद्वितीया—

सुगुरंसत्सुहिरण्यःस्वश्वोबृहदस्मैवयइन्द्रोदधाति ।
यस्त्वायन्तंवसुनाप्रातरित्वोमुक्षीजयेवपदिमुत्सिनाति ॥ २ ॥

---

१ ऋ० सं० १. ८. ८. । २ ऋ० स० ४. ३. २१. ।

सुऽगुः । असत् । सुऽहिरण्यः । सुऽअश्वः । बृहत् । अस्मै । वयः ।
इन्द्रः । दधाति । यः । त्वा । आऽयन्तम् । वसुना । प्रातःऽइत्वः ।
मुक्षीजयाऽइव । पदिम् । उत्ऽसिनाति ॥ २ ॥

अत्रकक्षीवतःपिता आनीतेनधनेनसंतुष्टोराजानंबहुप्रकारेणाशास्ते असौस्वनयोराजा सुगुरसव् शोभनैर्बहुभिर्गोभिः तद्वान्भवतु तथा सुहिरण्यः सुष्टुतहितरमणीयैर्धनैस्तद्वान्भवतु तथा स्वश्वः शोभनैरश्वैस्तद्वान्सन्अस्मैप्रदात्रे राज्ञेबृहत्प्रभूतंवयः अन्नमिन्द्रः परमेश्वरोधर्मदेवता दधातिदधातु ददातु यतोऽयंराजा अस्मैगोहिरण्याश्वान्नानिबहुसंख्याकानिदत्तवान् अतस्तेषामभिवृद्धिप्रार्थनोचितैव कस्येयमाशीरिति सउच्यते यः योराजा हेप्रातरित्वः प्रातरागामिन्नतिथेपुत्र आयन्तंगुरुकुलादागतंपदिं पथिकंयदृच्छयागन्तारंत्वात्वां वसुना अन्नसाधनेन गवादिधनेनोत्सिनाति गमनतः उत्कृष्टंबध्नाति गतिंनिरुणद्धीत्यर्थः प्रतिबन्धेदृष्टान्तउच्यते—मुक्षीजयेवपदिं मुच्यमाना सतिबन्धनंजयतीतिमुक्षीजा मृगपक्ष्यादिबन्धनीरज्जुः तया पाशकोयथापदिं गंतारं मृगपक्ष्यादिकं उत्सिनातिबध्नाति तथामयाअननुज्ञातमपित्वां गमनंप्रतिबुध्य गवादीष्टदानादिनायोराजातोषयतिसएवंभवत्विति पदिरितिपदंव्याचक्षाणेनयास्केनतदुदाहरणायायंमन्त्रोव्याख्यातः—सुगुर्भवतिसुहिरण्यःस्वश्वोमहच्चास्मैवयइन्द्रोदधातियस्त्वायन्तमन्नेनप्रातरागामिन्नतिथेमुक्षीजयेवपदिमुत्सिनाति कुमारोमुक्षीजामोचनाच्चसयनाच्चततनाच्चेति[1] ॥ २ ॥

२. उन राजा के पास बहुत गो-धन हो। उनके पास बहुत सुवर्ण और बहुत घोड़े हों। उन्हें इन्द्र बहुत अन्न दें। जैसे लोग रस्सी से पशु, पक्षी आदि को बाँध देते हैं, उसी तरह उन्होंने भी प्रातःकाल पैदल ही आकर आगमनकारी को धन-द्वारा आबद्ध किया।

अथतृतीया—

आयमद्यसुकृतंप्रातरिच्छन्निष्टेःपुत्रंवसुमतारथेन ।
अंशोःसुतंपाययमत्सरस्यक्षयद्वीरंवर्धयसूनृताभिः ॥ ३ ॥

आयम् । अद्य । सुऽकृतम् । प्रातः । इच्छन् । इष्टेः । पुत्रम् ।
वसुऽमता । रथेन । अंशोः । सुतम् । पायय । मत्सरस्य ।
क्षयत्ऽवीरम् । वर्धय । सूनृताभिः ॥ ३ ॥

---

1 नि ५. १९.।

प्रातःपूर्वेद्युःप्रभातकालेऽयंधनंदत्तवान् तस्मिन्नेवकाले सुकृतंशोभनस्यकर्तारंत्वांइच्छन्प्राप्तुमिच्छन् कदाद्रक्ष्यामीतिकामयमानोऽहं अद्यास्मिन्दिने इदानींआयं प्राप्तोस्मि अत्रयद्यपि केवलंप्रातरित्येवश्रुतं नपूर्वेद्युरिति तथापि अद्यायमित्युक्तत्वादर्थात्पूर्वेद्युःप्रातरितिगम्यते कीदृशं इष्टेःइष्टस्येष्टसाधनस्य यागस्यवापुत्रं पुरुत्रातारं पुत्रःपुरुत्रायतइतियास्कः । कर्तारमित्यर्थः केनसाधनेनेतितदुच्यते—वसुमतारथेन समृद्धधनवतारथेनसाधनेन यद्वा तेनसहेतिसहार्थेतृतीया किंच तदानींतेनसमृद्धेन धनेनांशोःअंशुमतःवल्लीरूपस्यमत्सरस्य मादनसाधनस्यसोमस्य मत्सरःसोमोमन्दतेस्तृप्तिकर्मणइतिनिरुक्तम् । तस्यसुतं अभिषुतं रसंपायय आत्मानंपायय इष्टसाधनंसोमयागंकुर्वित्यर्थः कृत्वाच क्षयद्वीरं क्षियन्तोनिवसन्तोवीराःपुत्रभृत्यादयोयस्य तंतादृशंत्वदिष्टसाधनबहुधनप्रदातारंसूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः वर्धयसमृद्धंकुरु पुत्रभृत्यादिवीरैः यथाप्रवृद्धोभवतितथाकामयस्वेत्यर्थः ॥ ३ ॥

३. मैं यज्ञ के त्राता शोभनकर्मा को देखने की इच्छा करके, सुसज्जित रथ पर चढ़कर, आज उपस्थित हुआ हूं। दीप्तिशाली मादक सोम के अभिषुत रस का पान करो। प्रभूत-वीर-पुत्रादि-विशिष्ट को प्रिय और सत्य वाक्य-द्वारा समृद्ध करो।

अथचतुर्थी—

उपक्षरन्तिसिन्धवोमयोभुवईजानंचयक्ष्यमाणंचधेनवः ।
पृणन्तंचपपुरिंचश्रवस्यवोघृतस्यधाराउपयन्तिविश्वतः ॥ ४ ॥

उप । क्षरन्ति । सिन्धवः । मयःऽभुवः । ईजानम् । च ।
यक्ष्यमाणम् । च । धेनवः । पृणन्तम् । च । पपुरिम् । च ।
श्रवस्यवः । घृतस्य । धाराः । उप । यन्ति । विश्वतः ॥ ४ ॥

पूर्वस्यामृच्यानीतेनधनेनसोमयागंकुर्वित्युक्तम् तमेवसोमयागंफलप्रदर्शनेनस्तौति सिन्धवः स्यन्दनशीलाः प्रस्नुतपयोधराः सिन्धुःस्यन्दनादितियास्कः । मयोभुवः सुखस्यभावयित्र्यः मयइतिसुखनाम मयःशुग्म्यमितितन्नामसुपाठात् धेनवः प्रीणयित्र्योगावः ईजानं सोमयागंअनुतिष्ठन्तं तथा यक्ष्यमाणं यक्ष्यइतिप्रणीतंकुर्वन्तंच नकेवलमीजानंअपितुयक्ष्यइत्यध्यवसितवन्तमपिउपउपेत्य क्षरन्तिस्रवन्तिप्रीणयन्तीत्यर्थः नचपूर्वस्यामृचिसोमंपिबेत्युक्तत्वात्सर्वेषांसोमयागानांअग्निष्टोमात्मकज्योतिष्टोमस्यप्रकृतस्य ज्योतिष्टोमेनस्वर्गकामोयजेतेतिस्वर्गएवफलत्वेनश्रुतः नगवादिकमितिवाच्यम् स्वर्गवद्गवादिकामनयापि सोमयागस्यकर्तुंशक्यत्वान्नके-

---

२ १ नि० २. ११. । २ नि० २. ५. । ३ नि० ९. २६. ।
५

वलंसोमयागमनुतिष्ठतामेवमहत्फलं अपितुसुकृतसाधनानिकर्मान्तराणि अधितिष्ठतामपिमहत्फलमस्त्येवेतिदर्शयति पृणन्तंपितॄन्प्रीणयन्तं पपुरिं प्रीणनशीलं इष्टदातारं प्राणिनः सर्वदाप्रीणयन्तंचपुरुषं श्रवस्यवोऽन्नमिच्छन्त्यः अन्नसमृद्धिहेतवोघृतस्यधाराः यद्वा घृतकुल्याविश्वतः सर्वतः उपउपेत्ययन्तिप्राप्नुवन्ति प्रीणयन्तीत्यर्थः ॥ ४ ॥

४. दुग्धवती और कल्याणदायिनी गायें, यजमान और यज्ञ-संकल्पकारी के पास जाकर, दुग्ध प्रदान करती हैं। समृद्धि के कारणभूत घृतधारा, तर्पणकारी और हितकारी पुरुषों के पास, चारों ओर से उपस्थित होती हैं।

नाकस्यपृष्ठेअधितिष्ठतिश्रितोयःपृणातिसहदेवेषुगच्छति।
तस्माआपोघृतमर्षन्तिसिन्धवस्तस्माइयंदक्षिणापिन्वतेसदा॥५॥

नाकस्य। पृष्ठे। अधि। तिष्ठति। श्रितः। यः। पृणाति। सः। ह। देवेषु। गच्छति। तस्मै। आपः। घृतम्। अर्षन्ति। सिन्धवः। तस्मै। इयम्। दक्षिणा। पिन्वते। सदा ॥ ५ ॥

सोमयागप्रशंसाप्रसंगेनसामान्यतोदानमेतदादिभिस्त्रिभिःप्रशंसति यद्वा सोमस्यैवस्तुतत्वाद्दक्षिणाशब्दस्ययागएवप्रसिद्धत्वाच्च सूक्तपरिसमाप्तेःसोमयागएवप्रस्तूयते यः योमर्त्यः पृणाति हविरादिदानेनदेवादीन्प्रीणाति सनाकस्य कमितिसुखनाम तद्विरुद्धमकं नविद्यते अकंदुःखंतत्साधनंपापंचेति नाकोद्युलोकः तथाश्रूयते—नवाअमुंलोकंजग्मुषेकिंचनाकमिति[1]। तस्यपृष्ठेउन्नते उपरिदेशेश्रितंसन्नधिअधिकं आकल्पान्तंतिष्ठति यद्वा अधितिष्ठति अधिष्ठायप्रमुखोभूत्वातिष्ठति नकेवलंस्वर्गाश्रयणं किंतु देवेषुमध्येगच्छतिवर्तते स्वयमेवदेवोभवतीत्यर्थः हेतिप्रसिद्धौ तस्मैप्रीणयित्रे पुरुषायसिन्धवः स्यन्दनशीलाः आपः घृतंतेजोवत्सारं अर्षन्ति गच्छन्ति रसवत्योभवन्तीत्यर्थः किंचेयंभूमिरपि दक्षिणासस्यादिफलसंपादनदक्षासती सदा सर्वकालं पिन्वते सेचयति तोषयतीत्यर्थः दातुः जीवनसाधनान्नोदकानि रुचिराणिसमृद्धानिभवन्तीत्यर्थः ॥ ५ ॥

५. जो व्यक्ति देवों को प्रसन्न करता है, वह स्वर्ग के पृष्ठदेश में अवस्थान करता तथा देवों के बीच गमन करता है। प्रवहमान जल, उसके पास, तेजोविशिष्ट सार प्रदान करता है। पृथिवी शस्य आदि से सफल होकर उसे सन्तोष प्रदान करती है।

दक्षिणावतामिदिमानिचित्रादक्षिणावतांदिविसूर्यासः।
दक्षिणावन्तोअमृतंभजन्तेदक्षिणावन्तःप्रतिरन्तआयुः॥६॥

---

1 नि० २. १४.

दक्षिणाऽवताम् । इत् । इमानि । चित्रा । दक्षिणाऽवताम् । दिवि ।
सूर्यासः । दक्षिणाऽवन्तः । अमृतम् । भजन्ते । दक्षिणाऽवन्तः ।
प्र । तिरन्ते । आयुः ॥ ६ ॥

दक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातॄणांइच्छब्दएवकारार्थः तेषामेवार्थे इमानिभूमौदृश्यमानानिचित्राणिचायनीयानिस्रक्चंदनमणिमुक्तादिरूपाणिद्रव्याणि समृद्धानि भवन्तीतिशेषः किंच दक्षिणावतामेवदिविद्युलोकेसूर्यासः सूर्यसंबन्धिनोलोकाः तदनुगृहीताभोगावा समृद्धाभवन्ति किंच दक्षिणावन्तएवअमृतंजरामरणरहितंस्थानं भजन्तेसेवन्ते यद्वा दानेनापहतपाप्मानआत्मानंविदित्वा अमृतमविनाशंमोक्षं भजन्ते प्राप्नुवन्ति यज्ञेनदानेनेतिश्रुतेः । किंच दक्षिणावन्तएवआयुःप्रतिरन्ते अतिदीर्घमायुष्यंलभंते वर्धयन्ति प्रपूर्वस्तिरतिर्वर्धनार्थः इदितिसर्वत्रसंबध्यते ॥ ६ ॥

६. जो व्यक्ति दान देता है, उसी को ये सारी मणि-मुक्तादि वस्तुएँ प्राप्त होती हैं। दानदाता के लिए द्युलोक में सूर्य रहते हैं। दानदाता ही जरा-मरण-शून्य स्थान प्राप्त करते हैं। दान देनेवाले दीर्घ आयु प्राप्त करते हैं।

अथसप्तमी—

मापृणन्तोदुरितमेनआरन्माजारिषुःसूरयःसुव्रतासः ।
अन्यस्तेषांपरिधिरस्तुकश्चिदपृणन्तमभिसंयन्तुशोकाः ॥७॥१०॥

मा । पृणन्तः । दुःऽइतम् । एनः । आ । अरन् । मा । जारिषुः ।
सूरयः । सुऽव्रतासः । अन्यः । तेषाम् । परिऽधिः । अस्तु । कः ।
चित् । अपृणन्तम् । अभि । सम् । यन्तु । शोकाः ॥ ७ ॥ १० ॥

अन्वयव्यतिरेकाभ्यांदानंप्रशंसितुमाह—पृणन्तोदेवादीन्हविरादिनाप्रीणयन्तःसन्तः दुरितं दुष्टंयथाभवति तथाप्राप्तंदुःखंएनःतत्साधनंपापंचमारन् माप्राप्नुवन् नकेवलंदातारएव अपितु सूरयः देवानांस्तोतारोविद्वांसोमाजारिषुः जरयानजीर्णाभवेयुः तथासुव्रतासः शोभनकृच्छ्रचान्द्रायणादिनियमवन्तोऽपिमाजारिषुः तर्ह्येषामन्योजनःकइतिसउच्यते तेषांदातॄणांस्तोतॄणांवान्यः तेभ्योऽन्योयःकोऽपिपुरुषः परिधिः पापस्य परितोधारकोऽस्तु यद्वा अन्योऽन्यः कश्चनपापदेवः तेषांपरिधिःपरिधिस्थानीयोव्यवधायकोऽस्तु यथाग्नेः परिधिःस्वयंरक्षःप्रभृतिभिर्बाध्यमानःस्वान्तर्हितमग्निंरक्षति तद्वद् अथवा अन्योधर्मविशेषस्तेषांपरिधिः परिधानमस्तु कवचस्थानीयोऽस्तु तर्हिकिंप्राप्नुयुरिति उच्यते अपृणन्तंदेवादीनप्रीणयन्तं अदातारंशोकाः चित्तपीडाःतत्साधनाः

पाप्मानः अभिअभिमुखंसंयन्तुसम्यक्प्राप्नुवन्तु वयंसुखिनोभवेमेत्यर्थः अत्रयद्यपिसामान्येन दानमात्रंस्तूयते तथाप्यस्यसूक्तस्य स्वनयदानस्तुतिरूपत्वाद्दुःखानिमायंत्वित्यर्थः॥ ७॥

७. जो देवों को प्रसन्न रखता है, उसे दुःख और पाप नहीं मिलते; शोभन-व्रतशाली स्तोता भी जराग्रस्त नहीं होते। देवों के प्रीति-प्रदाता और स्तुतिकर्त्ता से भिन्न पुरुषों को पाप आश्रित करता है। जो देवों को प्रसन्न नहीं करते, उन्हें शोक प्राप्त होता है।

॥ इतिद्वितीयस्यप्रथमेदशमोवर्गः ॥ १० ॥

अमन्दानितिषष्ठंसूक्तम् सप्तेत्यनुवर्तनात्सप्तर्चं आदितःपंचानांकक्षीवानृषिः षष्ठ्याभावयव्यः सप्तम्यारोमशानामब्रह्मवादिनी आदितःपंचानांभावयव्यस्यस्तुतिरूपत्वात्सएवदेवता यातेनोच्यतइतिन्यायात् अन्त्ययोःषष्ठीसप्तम्योस्तुभावयव्यरोमशयोःसंवादः षष्ठ्याभावयव्यः सप्तम्यारोमशा यद्यपिस्वनयेनदत्ताइतिश्रूयमाणत्वात्तस्यैवस्तुत्याभाव्यं तथापिपितृपुत्रयोरभेदात् आरुंद्रासइतिवत् पितृनाम्नाव्यवहर्तुंशक्यत्वात्प्रथमायामृचिभावयव्यस्येत्युक्तत्वाच्च भावयव्यं तुष्टावेत्येतदविरुद्धमित्युक्तंपूर्वसूक्तएव आदितःपंचत्रिष्टुभः अन्त्येअनुष्टुभौ तथाचानुक्रान्तं—अमन्दानितिकक्षीवान्दानतुष्टः पञ्चभिर्भावयव्यंतुष्टावांत्येअनुष्टुभौ भावयव्यरोमशयोर्दंपत्योःसंवादइति उक्तोविनियोगः।

तत्रप्रथमा—

अमन्दान्स्तोमान्प्रभरेमनीषासिन्धावधिक्षियतोभाव्यस्य।
योमेसहस्रममिमीतसवानतूर्तोराजाश्रवइच्छमानः॥ १॥

अमन्दान्। स्तोमान्। प्र। भरे। मनीषा। सिन्धौ। अधि। क्षियतः। भाव्यस्य। यः। मे। सहस्रम्। अमिमीत। सवान्। अतूर्तः। राजा। श्रवः। इच्छमानः॥ १॥

सिन्धौ सिन्धुदेशे यद्वा लक्षणयासिन्धुतीरे समुद्रतीरे अधिक्षियतः अधिनिवसतोभाव्यस्यभावयव्यस्य तत्पुत्रस्यस्वनयस्येत्यर्थः तस्यअमन्दान् अनल्पान् स्तोमान् स्तोत्राणितन्निष्ठबहुविधदानादीनांकीर्तनानि मनीषा मनीषयाप्रियातिशयबुद्ध्या प्रभरे विशेषेणसंपादयामि कस्तस्यविशेषइतितत्राह—अतूर्तःकेनाप्यहिंसितोयोराजाममदर्थं सहस्रंतत्संख्याकान्सवान्सूयन्तेसोमाएष्विति सवाःसोमयागाः तान्अमिमीत संपूर्णधनप्रदानेन निर्मितवान् किमिच्छन् श्र-

१ ऋ० सं० ४. ३. २१.।

वः सर्वैःश्रूयमाणांकीर्तिमात्मनेइच्छमानः कामयमानः यतोयंआर्त्विज्याद्युपाधिनाविनाकी-
र्त्यर्थमेवबहुधनं प्रादाद् अतस्तंस्तौमीत्यर्थः ॥ १ ॥

१. सिन्धुनिवासी भावयव्य-पुत्र स्वनय के लिए, अपने बुद्धि-बल से, बहुसंख्यक स्तोत्र सम्पादन (प्रणयन) करता हूँ। हिंसा-विरहित राजा ने कीर्त्ति-प्राप्ति की इच्छा से मेरे लिए हज़ार सोम-यज्ञों का अनुष्ठान किया है।

शतंराज्ञोनाधमानस्यनिष्काञ्छतमश्वान्प्रयतान्त्सद्यआदम् ।
शतंकक्षीवाँअसुरस्यगोनांदिविश्रवोजरमाततान ॥ २ ॥

शतम् । राज्ञः । नाधमानस्य । निष्कान् । शतम् । अश्वान् ।
प्रऽयतान् । सद्यः । आदम् । शतम् । कक्षीवान् । असुरस्य । गोनाम् ।
दिवि । श्रवः । अजरम् । आ । ततान ॥ २ ॥

नाधमानस्य स्वीकर्तव्यमित्युच्चैर्याचमानस्य असुरस्य धनानां निरसितुः दानशीलस्य राज्ञः स्वतेजसा दीप्यमानस्य स्वनयस्य निष्कान्आभरणविशेषान् इयत्ताविशेषविशिष्टानि वासुवर्णानि शतं शतसंख्याकानि शतंसहस्रमित्यपरिमितवचनः अपरिमितान् सद्यः प्रार्थनानन्तरमेव कक्षीवानहंआदं आत्तवानस्मि स्वीकृतवानस्मीत्यर्थः तथाप्रयतान्शुद्धान् लक्षणोपेतानश्वानध्वगमनसमर्थान्हयान् शतं शतसंख्याकान् आदं आत्तवान् तथा गोनां पुंगवानां बलीवर्दानामित्यर्थः उत्तरमन्त्रेस्त्रीगवीनामभिधानाद् तेषांशतंआदं एवंमदाताराजा दिवि द्युलोके श्रवः कीर्तिं अजरंशाश्वतींआततान विस्तारितवान् गवादिप्रतिग्रहीताहं स्वर्गेकीर्तिमकरवमित्यर्थः ॥ २ ॥

२. असुर-राजा के ग्रहण के लिए मुझसे याचना करने पर मैं (कक्षीवान्) ने उनसे १०० निष्क (आभरण या स्वर्णमाप), १०० घोड़े और १०० बैल ले लिये। स्वर्ग-लोक में राजा नित्य कीर्त्ति-विस्तार करेंगे।

उपमाश्यावाःस्वनयेनदत्तावधूमन्तोदशरथासोअस्थुः ।
षष्टिःसहस्रमनुगव्यमागात्सनत्कक्षीवाँअभिपित्वेअह्नाम् ॥ ३ ॥

उप । मा । श्यावाः । स्वनयेन । दत्ताः । वधूऽमन्तः । दश ।
रथासः । अस्थुः । षष्टिः । सहस्रम् । अनु । गव्यम् । आ । अगात् ।
सनत् । कक्षीवान् । अभिऽपित्वे । अह्नाम् ॥ ३ ॥

स्वनयेनदत्ताःश्यावाः तद्वर्णाश्वैर्युक्तत्वात् श्यावाः वधूमन्तः आरूढाभिर्वधूभिःतद्वन्तः दश एतत्संख्याकाःरथासोरथाः मामांउपास्थुः उपस्थिताः गव्यशब्दोगोसमूहवाची षष्टिः सहस्रमनुगव्यं षष्ट्यधिकंगवांसमूहःअन्वगात् अनुक्रमेणआगतः ततःआत्मानं परोक्षेणब्रवीति तत्सर्वंप्रतिगृह्यायंकक्षीवान् अह्नांदिवसानां मध्येअभिपित्वे संनिहितेऽहनि सनत् स्वीकृतं रथवध्वादिकंस्वपित्रे समर्पयति स्वयंवास्वीकरोति अभिपित्वशब्दआसन्नकालवाची प्रपित्वशब्दवत् सच प्रपित्वेअभीकइत्यासन्नस्येतियास्केनोक्तत्वादासन्नवचनः उपसर्गभेदेऽप्यर्थाभेदः ॥ ३ ॥

३. स्वनय द्वारा भूरे रंग के अश्ववाले दस रथ मेरे पास आये, जिन पर वधुएँ आरूढ़ थीं। १०६० गायें भी पीछे से आईं। मैं (कक्षीवान्) ने ग्रहण करने के पश्चात् ही सब अपने पिता को दे दिया ।

चत्वारिंशद्दशरथस्यशोणाःसहस्रस्याग्रेश्रेणिंनयन्ति ।
मदच्युतःकृशनावतोअत्यान्कक्षीवन्तउदमृक्षन्तपज्राः ॥ ४॥

चत्वारिंशत् । दशऽरथस्य । शोणाः । सहस्रस्य । अग्रे । श्रेणिम् । नयन्ति । मदऽच्युतः । कृशनऽवतः । अत्यान् । कक्षीवन्तः । उत् । अमृक्षन्त । पज्राः ॥ ४ ॥

दशरथस्य दशसंख्याकरथवतः सहस्रस्य सहस्रसंख्याकानुचरोपेतस्य कक्षीवतोगोयूथसहस्रस्यवाग्रेपुरस्तात् शोणाः शोणवर्णोपेताः अश्वाः चत्वारिंशत् एकैकस्यरथस्यचतुष्टयेसतिदशरथानां मिलित्वाचत्वारिंशदश्वाभवन्ति तेपिश्रेणिं पङ्क्तिंआश्रित्यनयन्ति रथानभिमतदेशंप्रापयन्ति युक्ताश्वनियुक्तान्रथान् श्रेणिं श्रेणीभावंनयन्ति प्रापयन्ति एकैकंरथंचत्वारश्चत्वारः पंक्त्याकारेणवहन्तीत्यर्थः अथतान् कक्षीवन्तः कक्ष्याश्वसंबंधिनीरज्जुः कक्ष्यारज्जुरश्वस्येतियास्केनोक्तत्वात् । ताभिस्तद्वन्तः यद्वा अंगिरसःपुत्राः सर्वेपिकक्षीवन्तः अथवा कक्षीवदनुचराःसर्वेपि छत्रिन्यायेनकक्षीवन्तः पज्राघासाद्यन्नवन्तःसन्तोमदच्युतोमदस्राविणः उद्धतान् शत्रूणांमदस्यच्यावयितॄन्वा कृशनावतः सुवर्णमयनानाभरणयुक्तान् कृशनमितिहिरण्यनाम कृशनंलोहमितितन्नामसुपाठात् सुवर्णाभरणोपेतान् अत्यान् सन्ततगमनशीलानश्वान् उदमृक्षन्त अध्वश्रमजनितस्वेदापनयनाय उत्कृष्टं मार्जयन्ति ॥ ४ ॥

४. हजार गायों के सामने, दसों रथों में चालीस (१-१ में ४-४) लोहितवर्ण अश्व पंक्ति-बद्ध होकर चलने लगे। कक्षीवान् के अनुचर उनके लिए घास आदि जुटाकर मदमत्त और स्वर्णाभरण-विशिष्ट एवं सतत गमनशील अश्वों को मलने लगे।

---

१नि०३.२०। २नि०२.२.।

अथपञ्चमी—

पूर्वामनुप्रयंतिमाददेवस्त्रीन्युक्ताँअष्टावरिधायसोगाः ।
सुबन्धवोयेविश्याइवव्राअनस्वन्तःश्रवऐषन्तपज्राः ॥ ५ ॥

पूर्वाम् । अनु । प्रऽयंतिम् । आ । ददे । वः । त्रीन् । युक्तान् । अष्टौ ।
अरिऽधायसः । गाः । सुऽबन्धवः । ये । विश्याःऽइव । व्राः ।
अनस्वन्तः । श्रवः । ऐषन्त । पज्राः ॥ ५ ॥

इदानीं आनीतंधनंबन्धुभ्योनिवेदयन्नाह हेसुबन्धवः पूर्वांप्रयतिं पूर्वंप्रदानंअनु तमनुसृत्य वक्ष्यमाणानि रथादीनि युष्मदर्थं आददे स्वीकृतवानस्मि यद्वा पूर्वां प्रयतिं प्रदेयंरथादिकं अनु दानक्रमेणैव आददे प्रतिगृहीतवानस्मि कानितानीति त्रीनष्टौचयुक्तान् चतुर्भिश्चतुर्भिरश्वैर्धनैर्वा-युक्तान्रथानितिशेषः अत्रसंख्यापृथक्निर्देशोनविवक्षितः तथा अरिधायसः अरिभिरीश्वरैर्धा-रणीयाः बहुमूल्याअसंख्यातागाश्चाददे अत्रवक्ष्यमाणानि पूर्वं प्रतिगृहीतादधिकानीतियुक्तं पूर्व-मेवपित्रेनिवेदितानां पुनर्बन्धुभ्योनिवेदनासंभवात् वधूमन्तोदशरथासोअस्थुरिति दशानां र-थानामुक्तत्वादत्रचत्रीनष्टावित्येकादशानांवक्ष्यमाणत्वाद्वधूविशिष्टानामन्येभ्योदातुमनुचितत्वाच्चा-न्यानीतियुक्तम् उक्तानामेवानुवदनपक्षेदशवधूयुक्तारथाः एकोधनपूर्णइतिविवेकः उक्ता-नामेवरथादीनांपुनरभिधानं प्रकृष्टत्वज्ञापनार्थं सर्वेब्राह्मणाआगताः वसिष्ठश्चागतइतिवत् इदानीं परोक्षेणाह सुबन्धवः शोभनाविद्यायोनिसंबन्धिनोयेषांतेतथोक्ताः यद्वा शोभनबान्धवोपेताः परस्परमनुरागयुक्ताइत्यर्थः विशः प्रजाः तत्रभवाविश्याः व्रियन्तइतिव्राः व्राताः तकारलोप-श्छान्दसः विशांव्रातायथापरस्परमनुरागवन्तः तथैवैतेअपीत्यर्थः पज्राः अन्नवन्तः अङ्गिरसः सन्तानप्रभवायेसन्ति ते सर्वेसुबन्धवः अनस्वन्तः शकटवन्तः हविर्धानशकटोपलक्षितसोमयाग-वन्तःसन्तः श्रवः सर्वत्रश्रूयमाणांकीर्तिं ऐषन्त इच्छन्ति इच्छन्तु वा तदर्थमाददइतिशेषः॥५॥

५. बन्धुगण, पहले के दान का स्मरण करके तुम्हारे लिए तीन और आठ—सब ग्यारह रथ मैंने ग्रहण किये हैं। बहुमूल्य गायों को लिया है। प्रजाओं की तरह परस्पर-अनुराग-सम्पन्न होकर संकटा-पन्न अङ्गिरा लोग कीर्त्ति प्राप्त करने की चेष्टा करें।

अथषष्ठी—

आगधितापरिगधितायाकशीकेवजङ्गहे ।
ददातिमह्यंयादुरीयाशूनांभोज्याशता ॥ ६ ॥

आऽगधिता । परिऽगधिता । या । कशीकाऽइव । जङ्गहे । ददाति ।
मह्यम् । यादुरी । याशूनाम् । भोज्या । शता ॥ ६ ॥

संभोगायप्रार्थितोभावयव्यः स्वभार्यांरोमशामप्रौढेतिबुद्ध्यापरिहसन्नाह—भोज्या भोगयोग्यैषा आगधिताआसमन्ताद्गृहीता स्वीकृता तथा परिगधिता परितोगृहीताआदरातिशयाय पुनर्वचनं गध्यंगृह्णातेरितियास्कः। यद्वा आगधिता आसमन्तान्मिश्रयन्ती आन्तरंप्रजननेन बाह्यंभुजादिभिरित्यर्थः गध्यतिर्मिश्रीभावकर्मेतियास्कः। पूर्वस्मिन्पक्षेपुरुषस्यप्राधान्यं उत्तरस्मिंस्तुयोषितइतिभेदः कीदृशीसा या जंगहे अत्यर्थंगृह्णाति कदापिनमुंचति अत्यागेदृष्टान्तः—कशीकेव कशीकानामसूतवत्सानकुली सायथा पत्यासहचिरकालंक्रीडति नकदाचिदपिविमुंचति तथैषाअपि किंच भोज्यैषा यादुरीया दुरित्युदकनाम रेतोलक्षणमुदकं प्रभूतंरातिददातीति यादुरी बहुरेतोयुक्तेत्यर्थः तादृशीसती याशूनां संभोगानां यशइतिप्रजनननाम तत्संबन्धीनिकर्माणि याशूनिभोगाः तेषांशताशतान्यसंख्यातानि मह्यंददाति ॥ ६ ॥

६. यह सम्भोग-योग्य रमणी (रोमशा) अच्छी तरह आलिङ्गित होकर, सूतवत्सा नकुली की तरह, चिरकाल तक रमण करती है। यह बहुरेतोयुक्ता रमणी मुझे (स्वनय राजा को) बहु बार भोग प्रदान करती है।

उपोपमेपरांमृशमामेंदभ्राणिमन्यथाः।
सर्वाहमस्मिरोमशागन्धारीणामिवाविका ॥ ७ ॥ ११ ॥

उपऽउप। मे। परा। मृश। मा। मे। दभ्राणि। मन्यथाः।
सर्वा। अहम्। अस्मि। रोमशा। गन्धारीणाम्ऽइव। अविका ॥७॥११॥

रोमशानामबृहस्पतेःपुत्रीब्रह्मवादिनीपरिहसन्तंस्वपतिंप्रत्याह—भोःपते मेमां द्वितीयार्थे चतुर्थी उपोप द्वितीयउपशब्दःपादपूरणः उपेत्य परामृश सम्यक्स्पृश भोगयोग्यामवगच्छेत्यर्थः यद्वा मेमम गोपनीयमंगंउपोपपरामृश अत्यन्तमान्तरंस्पृश परामर्शाभावशङ्कांनिवारयति मेमदङ्गानि रोमाणिदभ्राणि मामन्यथाः अल्पानि माबुध्यस्व दभ्रमर्भकमित्यल्पस्येतिदभ्रंदभ्नोतेरितियास्कः। अदभ्रत्वमेवविशदयति अहंरोमशाबहुरोमयुक्तास्मि यतोऽहमीदृशीअतः सर्वा संपूर्णावयवास्मि रोमशत्वेदृष्टान्तः—गन्धारीणामविकेव गंधारादेशाः तेषांसंबन्धिन्यविजातिरिव तद्देशस्थाअवयोमेषायथारोमशाः तथाहमस्मि यद्वा गन्धारीणां गर्भधारिणीनां स्त्रीणांअविका अत्यर्थंतर्पयन्तीयोनिरिव तासां आप्रसवंरोमादिविकर्तनस्यशास्त्रनिषिद्धत्वात् योनिः रोमशाभवति अतः सोपमीयते यतोऽहमीदृशीअतोमांअप्रौढांमावबुध्यस्वेत्यर्थः ॥ ७ ॥

७. पत्नी पति से कहती है—मेरे पास आकर मुझे अच्छी तरह स्पर्श करो। यह न जानना कि मैं कम रोमवाली अतः भोग के योग्य नहीं हूँ। मैं गान्धारी मेषी की तरह लोमपूर्णा और पूर्णावयवा हूँ।

॥ इतिद्वितीयस्यप्रथमे एकादशोवर्गः ॥ ११ ॥

॥ इतिप्रथमेमण्डलेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

नि० ५. १५। २ नि० ५. १५। ३ नि० ३. २०।

एकोनविंशेनुवाकेसप्तसूक्तानि तत्र अग्निंहोतारमितिप्रथमंसूक्तमेकादशर्चं दिवोदासपुत्रस्य परुच्छेपस्यार्षं आग्नेयं आत्यष्टं सहिशर्धइत्यस्याः षट्सप्तत्यक्षरातिधृतिः उत्कृत्यभिकृतिसंकृति-विकृत्याकृतिप्रकृतिकृत्यतिधृतिधृत्यत्यष्टिषुचतुरुत्तरशताक्षरमारभ्यचतुर्णांचतुर्णांपरित्यागेनैकैक-मुक्तंछन्दोजायते तथासत्यत्यष्ट्यतिधृतीउक्तसंख्योपेतेस्यातां एतत्सर्वंछंदोग्रन्थे चतुःशतमु-त्कृतिरित्यादिसूत्रैःप्रतिपादितं तथाचानुक्रान्तं—अग्निमेकादशपरुच्छेपोदैवोदासिराग्नेयंतुपारु-च्छेपंसर्वमात्यष्टंतत्रातिधृतिःषष्ठीति । सूक्तस्यविशेषविनियोगोलैंगिकः दशरात्रस्यषष्ठेहनिप्रा-तःसवनेप्रस्थितयाज्यानां पुरस्तादन्याऋचःकृत्वा प्राकृताभिश्चसहयष्टव्यं तत्राग्नीध्रस्यैषाप्रथमा षष्ठस्यप्रातःसवनइतिखण्डेसूत्रितम्—अग्निंहोतारंमन्येदास्वन्तंदध्यङ्हमेजनुषंपूर्वोअङ्गिराइति ।

अ॒ग्निं होता॑रं मन्ये॒ दास्व॑न्तं॒ वसुं॑ सू॒नुं सह॑सो जा॒तवे॑दसं॒ विप्रं॒ न जा॒तवे॑दसम् ।
य ऊ॒र्ध्वया॑ स्वध्व॒रो दे॒वो दे॒वाच्या॑ कृ॒पा ।
घृ॒तस्य॒ विभ्रा॑ष्टि॒मनु॑ वष्टि शो॒चिषा॒जुह्वा॑नस्य स॒र्पिषः॑ ॥ १॥

अ॒ग्निम् । होता॑रम् । म॒न्ये॒ । दास्व॑न्तम् । वसु॑म् । सू॒नुम् । सह॑सः ।
जा॒तऽवे॑दसम् । विप्र॑म् । न । जा॒तऽवे॑दसम् । यः । ऊ॒र्ध्वया॑ ।
सु॒ऽअ॒ध्व॒रः । दे॒वः । दे॒वाच्या॑ । कृ॒पा । घृ॒तस्य॑ । विऽभ्रा॑ष्टिम् । अनु॑ ।
व॒ष्टि॒ । शो॒चिषा॑ । आ॒ऽजुह्वा॑नस्य । स॒र्पिषः॑ ॥ १ ॥

अग्निं सर्वासांदेवसेनानांअग्रण्यं यज्ञेष्वग्रंनीयमानंवाहोतारं अस्मद्यागंप्रतिदेवानामा-ह्वातारं यद्वा होमनिष्पादकंहोतारंजुहोतेर्होतेत्यौर्णवाभइतियास्कः[1] । अग्निमद्यहोतारमवृणीते-तिश्रुतेः[2] । अग्निमग्नआवहेतिच[3] अग्नेराह्वातृत्वंप्रसिद्धं अग्निंहोतारंमन्येएवंप्रतिविशेषणंमन्यइतिसं-बन्धः यद्वा यागनिष्पत्तेरेवापेक्षितत्वादेतदेवविधेयविशेषणम् इतराणिवक्ष्यमाणविशेषणानि स्तुतिपराणि दास्वन्तं अतिशयेनदानवन्तं वसुं सर्वेषां निवासहेतुं सहसःसूनुं बलस्यपुत्रं अग्निः मन्थनकालेबलेन मथ्यमानउत्पद्यतेइतिपुत्रत्वमुपचर्यते जातवेदसं जातानांवेदितारं जातप्रज्ञं जा-तबलंवा जातवेदश्शब्दोयास्केनबहुधानिरुक्तःअग्नेर्जातवेदस्त्वेदृष्टान्तः—विप्रंनजातवेदसं जात-विद्यंमेधाविनंब्राह्मणमिव तंयथाबहुमन्यते तथात्वामपिमन्ये स्तौमीत्यर्थः उक्तगुणविशिष्टोयो-देवः स्वध्वरः शोभनयज्ञवान् यज्ञंसम्यङ्निर्वहन् ऊर्ध्वयाउन्नतयाउत्कृष्टयादेवाच्या देवान्पू-जयन्त्यादेवान्प्रत्यक्तयावा कृपाकृपया सामर्थ्यलक्षणया देवान्प्रत्यक्तयाकृपेतियास्कः । तेभ्यो-हविर्वहनबुद्ध्यायुक्तःसन् आजुह्वानस्यआसमन्ताद्धूयमानस्यसर्पिषः सरणशीलस्यघृतस्यविले-पनेनदीप्तस्याज्यस्यविभ्राष्टिं विशेषेणभ्राजमानं अनुस्वयमपितदाज्यं शोचिषाज्वालयावष्टिकाम-यतेस्वीकरोतीत्यर्थः ॥ १ ॥

१. विद्वान् विप्र या ब्राह्मण की तरह प्रज्ञावान्, बल के पुत्र-स्वरूप सबके निवास-भूमि-रूप और अत्यन्त दानशील अग्नि को मैं होता कहकर

१ नि० ७. १५. । २ तै० ब्रा० ३. ६. १५. । ३ तै० ब्रा० ४. ५. ३. ।

सम्मान-युक्त करता हूँ। यज्ञ-निर्वाहकारी अग्नि उत्कृष्ट-देव-पूजा-समर्थ होकर चारों ओर फैली हुई घृत की दीप्ति का अनुसरण करके अपनी शिखा-द्वारा उस घृत को स्वीकृत करते हैं।

यजिष्ठंत्वायजमानाहुवेमज्येष्ठमङ्गिरसांविप्रमन्मभिर्विप्रेभिःशुक्रमन्मभिः।
परिज्मानमिवद्यांहोतारंचर्षणीनाम्।
शोचिष्केशंवृषणंयमिमाविशःप्रावन्तुजूतयेविशः ॥ २ ॥

यजिष्ठम्। त्वा। यजमानाः। हुवेम। ज्येष्ठम्। अङ्गिरसाम्। विप्र। मन्मऽभिः। विप्रेभिः। शुक्र। मन्मऽभिः। परिज्मानम्ऽइव। द्याम्। होतारम्। चर्षणीनाम्। शोचिःऽकेशम्। वृषणम्। यम्। इमाः। विशः। प्र। अवन्तु। जूतये। विशः ॥ २ ॥

हेविप्रमेधाविन् शुक्र दीप्तज्वालाग्ने यजिष्ठंअतिशयेनयष्टृतमं त्वात्वांयजमानाः वयं यष्टारः हुवेमआह्वयामः यतोवयंयजमानाः यतश्चत्वंयजिष्ठः अतोहुवेमेत्यभिप्रायः कीदृशंत्वां अंगिरसांअंगिरोगोत्रोत्पन्नानांमध्येज्येष्ठंज्यायांसं यद्वा अङ्गिरसां अङ्गाराणांमध्येज्येष्ठंज्वालायुक्तत्वात् अङ्गिराअङ्गाराइतियास्कः। येङ्गाराआसंस्तेंगिरसोभवन्नितिश्रुतेः। केनसाधनेनेति तदुच्यते—मन्मभिः मननसाधनैः विप्रेभिःविशेषेणप्रीणयितृभिः मन्मभिर्मंत्रैः यद्वा विप्रेभिर्मेधाविभिर्ऋत्विग्भिः मन्मभिर्मंत्रैश्चसहितावयमितिसंबन्धः त्वदाह्वानानन्तरंपरिज्मानं परितोगच्छन्तं द्यामिवसूर्यमिव होतारंदेवानामाह्वातारं केषामर्थे चर्षणीनां मनुष्यनामैतत् मनुष्याणांयजमानानामर्थे यद्वा चर्षणीनांपूर्वंमनुष्याणामेवसतां पश्चाद्यागादिसाधनेनदेवत्वमापन्नानांदेवानामाह्वातारं तथा शोचिष्केशं केशवदत्यन्तायतज्वालोपेतं वृषणं वर्षितारंकामानां एवंरूपंत्वांविशः त्वामेवनिविशमानाः इमाविशः यजमानरूपाःप्रजाः जूतयेस्वर्गाद्यभिमतफलप्राप्तयेप्रावन्तु प्रकर्षेणप्रीणयन्तु तादृशंत्वांहुवेमेतिसंबन्धः ॥ २ ॥

२. मेधावी शुभ्रदीप्ति अग्निदेव, हम यजमान हैं। हम मनुष्यों के उपकार के लिए मननशील और अत्यन्त प्रसन्नता-दायक मन्त्र-द्वारा अङ्गिरा लोगों में महान् तुम्हें बुलाते हैं। सर्वतोगामी सूर्य की तरह तुम यजमानों के लिए देवों को बुलाते हो। केश की तरह विस्तृत ज्वाला-विशिष्ट और अभीष्टवर्षी हो। यजमान लोग अभिमत फल पाने के लिए तुम्हें प्रसन्न करें।

१ नि० ६.८। २ नि० ३.१७। ऐ० ब्रा० ३.३४।

अथतृतीया–

सहिपुरूचिदोजंसाविरुक्मंतादीद्यानोभवंतिद्रुहन्तरःपरशुर्नद्रुहन्तरः।
वीळुचिद्यस्यसमृंतौश्रुवद्वनेवयत्स्थिरम्।
निष्षहंमाणोयमतेनायंतेधन्वासहानायंते ॥ ३ ॥

सः। हि। पुरु। चित्। ओजंसा। विरुक्मंता। दीद्यांनः। भवंति।
द्रुहम्ऽतरः। परशुः। न। द्रुहम्ऽतरः। वीळु। चित्। यस्य। सम्ऽऋतौ।
श्रुवंत्। वनाऽइव। यत्। स्थिरम्। निःऽसहंमानः। यमते। न।
अयते। धन्वऽसहां। न। अयते ॥ ३ ॥

सहिसएवपूर्वैस्तुतएवाग्निः विरुक्मताविशेषेणरोचनवताओजसाज्वालारूपेणबलेनपुरुचित् अत्यधिकमेवदीद्यानः दीप्यमानः द्रुहंतरः द्रोग्धॄणांतरिता निस्तारयिताभवति अस्मासु द्रोहंकुर्वतांशत्रूणांहिंसकोभवतीत्यर्थः तत्रदृष्टान्तः–द्रुहंतरः द्रोग्धॄणां छेदनायप्रयुक्तः परशुर्न परशुरिव सयथाअमोघंहिनस्तितथायमपि किंच यस्याग्नेः समृतौ संगतौसंयोगेवीळुचित् दृढम-पिपाषाणादिकं श्रुवत् गच्छेत् शीर्येत तथा यत्स्थिरं यच्चपर्वतादिस्थिरमचलितंतदपिश्रुवत् वी-ळुइतिदृढनाम वीळु च्यौत्नमितितन्नामसुपाठात् तत्रदृष्टान्तः–वनेव उदकमिव उदकंयथाग्निसंयो-गेशुष्यतितथेत्यर्थः अत्यन्तदृढंस्थिरमपिहिनस्ति अस्मद्रोग्धारंशत्रुंहिनस्तीतिकिमुवक्तव्यमित्य-भिप्रायः किंचायमग्निः निष्षहमाणः शत्रून्निःशेषेणाभिभवन् यमतेउपरमते शत्रुषुमध्येक्रीडति तानेवनाशयति तथाकुर्वन्नायतेनगच्छति शत्रोःसकाशान्नपलायते तत्रदृष्टान्तः–धन्वसहान धनुषा शत्रूनभिभवतीतिधन्वसहाधानुष्कः सहतेरसुन् छान्दसोऽन्त्यलोपः सयथाशत्रोरभिमुखंविध्य-तिनपलायतेतद्वदित्यर्थः यद्वा दृढधनुर्वहनक्षमोधन्वसहः अस्मिन्पक्षेपचाद्यच् सुपांसुलुगित्या-कारः दृढधन्वासन्नायते नचलति ॥ ३ ॥

३. अग्निदेव अतीव दीप्ति से संयुक्त ज्वाला-द्वारा भली भाँति दीप्यमान हैं। वे विद्रोहियों के छेदनार्थ परशु की तरह विनाश में अमूल्य हैं। उनके साथ मिलने पर दृढ़ और स्थिर वस्तु भी जल की तरह शीर्ण हो जाती है। शत्रुओं का विनाश करनेवाला धनुर्धर जैसे नहीं भागता, वैसे ही अग्नि भी शत्रुओं को परास्त किये बिना नहीं मानते।

दृह्लाचिदस्मा अनुंदुर्यथाविदेतेजिष्ठाभिरुरणिभिर्दाष्ट्यवंसेऽग्नयेदाष्ट्यवंसे।
प्रयःपुरूणिगाहंतेतक्षद्वनेवशोचिषा।
स्थिराचिदन्नानिरिणात्योजंसानिस्थिराणिचिदोजंसा ॥ ४ ॥

दृह्ला । चित् । अस्मै । अनु । दुः । यथा । विदे । तेजिष्ठाभिः । अरणिऽभिः । दाष्टि । अवसे । अग्नये । दाष्टि । अवसे । प्र । यः । पुरूणि । गाहते । तक्षत् । वनाऽइव । शोचिषा । स्थिरा । चित् । अन्ना । नि । रिणाति । ओजसा । नि । स्थिराणि । चित् । ओजसा ॥ ४ ॥

अस्मैअग्नये दृह्लाचित् दृढान्येवसारवन्तिहवींषि अनु अनुक्रमेण प्रतिमन्त्रंदुःददति ददातेर्लुङि गातिस्थेतिसिचोलुक् आतइतिझेर्जुस् यजमानाःददति दानेदृष्टान्तः—यथाविदे विदुषे परमार्थदर्शिनेयथाउत्कृष्टानिधनानिवितरन्तिदानशीलाः यद्वा अयमग्निर्यथाविदेविन्दते स्वातिरिक्तंहविर्देवेभ्योदातुंलभते स्वीकरोति तथादुरिति विन्दतेश्छान्दसःशपोलुक् लोपस्तआत्मनेपदेष्वितितलोपः किंच सोऽग्निस्तेजिष्ठाभिररणिभिः अत्यन्ततेजोयुक्तैर्भोगैःयज्ञादिरूपैः दाष्टि पूजितःसन् स्वर्गादिकंददाति दाश्दाने शपोलुक् किमर्थं अवसे तद्रक्षणाय यद्वा तेजिष्ठाभिः अतिशयेनतेजोवद्भिः अरणिभिर्गमनैः इतरदेवानुद्दिश्य यजमानेनदत्तंहविः अवसे तेषां स्वीकारायदाष्टिअयमग्निर्ददाति नयति किंच अग्नये इतरदेवताप्रदानसमयेऽपियजमानः अग्नये अग्निप्रीतयेदाष्टिप्रथमंददाति किमर्थं अवसेरक्षणार्थं यद्ययमतृप्तःस्यात्तदितरेभ्योदत्तमपि स्वयंस्वीकुर्यात् तस्मादग्नयेप्रयाजादिरूपेणददातीत्यर्थः किंच योग्निः पुरूणिबहूनि सामर्थ्यात् यजमानधनादीनिप्रगाहते प्रविशति प्रविश्यचवाश्यादिरूपयाज्वालया तक्षत् तनूकरोति नाशयतीत्यर्थः तत्रदृष्टान्तः—वनेव वृक्षादिसमूहानिव वनानियथाप्रविश्यतक्षति दहतितथेत्यर्थः किंचायमग्निः स्थिरास्थिराणिकठिनानिअन्नान्नानिव्रीह्यादीनि ओजसातेजोरूपयाज्वालया निनितरांऋणाति गच्छतिपचतीत्यर्थः रीगतिरेषणयोः क्रैयादिकः प्वादीनांह्रस्वइतिह्रस्वः तथा ओजसास्वकीयेनतेजसास्थिराणि अपरिहरणीयानिपापानिअमित्राणिवा निरिणाति निःशेषेणगच्छति नाशयतीत्यर्थः ॥ ४ ॥

४. जैसे विद्वान् पुरुष को द्रव्य दान किया जाता है, उसी प्रकार अग्नि को सारवान् हव्य मन्त्रानुक्रम से प्रदान किया जाता है। तेजोविशिष्ट यज्ञादि-द्वारा अग्नि हमारी रक्षा के लिए स्वर्गादि प्रदान करते हैं। यजमान भी रक्षार्थ, अग्नि को हव्य देते हैं। यजमान के द्वारा प्रदत्त हव्य में प्रवेश करके अग्नि, अपनी ज्योतिःशिखा-द्वारा, उसे वन की तरह जला डालते हैं। अग्निदेव अपनी ज्योति-द्वारा अन्नादि का परिपाक करते और तेज के द्वारा दृढ़ द्रव्य को विनष्ट करते हैं।

तमस्य पृक्षमुपरासु धीमहि नक्तं यः सुदर्शतरो दिवातरादप्रायुषे दिवातरात् ।
आदस्यायुर्ग्रभणवद्वीळु शर्म न सूनवे ।
भक्तमभक्तमवो व्यन्तो अजरा अग्नयो व्यन्तो अजराः ॥ ५ ॥ १२ ॥

तम् । अस्य । पृक्षम् । उपरासु । धीमहि । नक्तम् । यः ।सुदर्शऽतरः । दिवाऽतरात् । अप्रऽआयुषे । दिवाऽतरात् । आत् । अस्य । आयुः । ग्रभणऽवत् । वीळु । शर्म । न । सूनवे । भक्तम् । अभक्तम् ॥ अवः । व्यन्तः । अजराः । अग्नयः । व्यन्तः । अजराः ॥ ५ ॥ १२ ॥

अस्यअस्मै तंपृक्षं हविर्लक्षणमन्नं उपरासुउपरमन्ते आसु हवींषीति उपराः वेदिसमीपभूमयः तासुधीमहिधारयामः अस्येत्युक्तंकस्येत्याह—योग्निःनक्तंरात्रौ दिवातरात् अह्नोपि सुदर्शतरः अत्यर्थंसर्वैर्दर्शनीयोभवति यतोयंरात्रौसर्वेषुभावेषुतमसावृतत्वाददृश्यमानेष्वपि स्वयं अत्यर्थंप्रकाशते अतोस्मैधीमहि पुनःकीदृशाय दिवातरात् अह्नःसकाशादेव अप्रायुषे प्रगतमायुर्यस्यासौप्रायुः नप्रायुःअप्रायुः तस्मै असौयोऽस्तमेतिससर्वेषांभूतानांप्राणानादायास्तमेतीतिश्रुतेः । रात्रौसर्वेभावानिद्रयावृतत्वात्प्रायुषइवभवन्ति अयमग्निस्तुसर्वप्राणिप्राणापहर्तुःसूर्यस्य रात्रौस्वस्मिन्नेवप्रवेशात्प्रकृष्टायुर्भवति अतोपिधीमहि किंच आत् अतएव कारणात् यतोयंसुदर्शतरः यतश्चायमप्रायुः अतःकारणात्अस्यअस्मैतदर्थं आयुर्हविर्लक्षणमन्नं ग्रभणवत् ग्रहणयुक्तमभूत् ग्रहणेदृष्टान्तः—सूनवेपुत्राय पित्रोर्वीळुशर्मदृढं सुखसाधनंगृहंयथा ग्रहणवद्भवतितथेत्यर्थः शर्मेतिगृहनाम शर्मवर्मेतितन्नामसुपाठात् इदानींआहवनीयादिरूपेणाग्नेर्बहुत्वमपेक्ष्याह अजराः नित्यतरुणाः एतेअग्नयःभक्तं सेवमानंअभक्तं असेवमानंचव्यन्तः एतेप्राणिनःअनुग्राह्याइतिबुद्ध्यमानाः अवः रक्षन्ति यद्यपिविशेषेणप्राणिनः दाहपाकादिद्वारारक्षन्ति तथाप्यस्तियजमानेष्वतिशयइत्याह—व्यन्तः तैःप्रत्तंहविरश्नन्तः अजराभवन्ति स्वयंहविषाअजराःसन्तोयजमानानप्यजरान्कुर्वन्तीत्यर्थः ॥ ५ ॥

५. रात में अग्निदेव दिन से भी अधिक दर्शनीय हो जाते हैं। दिन में अग्नि पूरी आयु या तेजस्विता से शून्य रहते हैं। हम अग्नि के उद्देश्य से वेदी के पास हव्य दान करते हैं। जैसे पिता के पास पुत्र दृढ़ और सुखकर गृह प्राप्त करता है, उसी प्रकार अग्नि भी अन्न ग्रहण करता है। भक्त और अभक्त को समझकर भी अग्नि दोनों की रक्षा करते हैं। हव्य-भक्षण करके अग्नि अजर हो जाते हैं।

सहिशर्धोनमारुतंतुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः । आदद्धव्यान्याददिर्यज्ञस्यकेतुरर्हणा ।
अधस्मास्यहर्षतोहृषीवतोविश्वेजुषन्तपन्थांनरःशुभेनपन्थाम् ॥ ६ ॥

---

१ तै० आ० प्रथमप्रपाठके. ।

सः । हि । शर्धः । न । मारुतम् । तुविऽस्वनिः । अप्नस्वतीषु ।
उर्वरासु । इष्टनिः । आर्तनासु । इष्टनिः । आदत् । हव्यानि ।
आऽददिः । यज्ञस्य । केतुः । अर्हणा । अध । स्म । अस्य । हर्षतः ।
हृषीवतः । विश्वे । जुषन्त । पन्थाम् । नरः । शुभे । न । पन्थाम् ॥६॥

सहि सएव स्तुत्यतयाप्रसिद्धएवाग्निः तुविष्वणिः तुवीतिबहुनाम उरु तुवीतितन्नामसु पाठात् बहुस्वनिः प्रभूतध्वनियुक्तोवर्तते अत्यन्तज्वलितेग्नौवायुसंपर्कात् भुगभुगितिध्वनिरुत्पद्यते प्रज्वलतीत्यर्थः ध्वननेदृष्टान्तः—मारुतंशर्धोन मरुत्संबन्धिबलमिव मरुतांसमूहोयथा ध्वनति तथेत्यर्थः कुत्रेतितदुच्यते—अप्नस्वतीषु खननप्रोक्षणादिकर्मोपेतासु अप्नइतिकर्मनाम अपोदंसइतितन्नामसुपाठात् उर्वरासुउरुवरणयुक्तासुश्रेष्ठासु वेदिभूमिषु कीदृशोयं इष्टनिः यष्टव्यः औणादिकोनिक् तुगागमश्च किंच आर्तनासु आर्तान्करोति आर्तयति आर्तयन्तीत्यार्तनाः पृतनाः तासु ण्यासश्रन्थोयुच् वृषादित्वादाद्युदात्तत्वं तासांजयायइष्टनिः इष्टव्यः यष्टव्योवा किंच एवंस्वनयन्नग्निःहव्यानि आज्यपुरोडाशादीनिआदत् अत्ति भक्षयति छान्दसोलुक् यद्वा आङ्पूर्वाद्ददातेराङोयमहनइतिव्यत्ययेनात्मनेपदाभावः गातिस्थेतिसिचोलुक् छान्दसोह्रस्वः केवलादेववाछन्दस्यपिदृश्यतइत्यनजादेरप्याडागमः अतएवानवग्रहः सएवविशेष्यते आददिः सर्वत्रहविरादानशीलः तथा यज्ञस्यकेतुः प्रज्ञापकः केतुस्थानीयोवा अर्हणापूजनीयः सुपांसुलुगितिसोराकारः प्रत्ययाद्युदात्तत्वंछान्दसं किंच अधानन्तरं हर्षतः हविर्भक्षणादत्यन्तहर्षयुक्तस्य यद्वा अभिमतफलदानेनयजमानान्हर्षयतः हृषीवतः आज्यस्वीकारेणहर्षयुक्तस्याग्नेः पन्थां पन्थानंमार्गंविश्वेसर्वेमनुष्याः जुषन्तअप्रीणयन् असेवन्तवा किमर्थं शुभेशुभाय शोभनायऐहिकामुष्मिकफलदस्याग्नेरेवमार्गंसर्वेअनुगच्छन्ति अग्निमेवप्रीणयित्वासाधयन्ति मार्गाश्रयणेदृष्टान्तः—यथालोकेनरोमनुष्याः शुभेशोभनायसुखप्राप्तये पन्थानंसर्वैर्गन्तव्यंनिर्भयं प्रौढमार्गमिव॥ ६ ॥

६. मरुत् के बल की तरह स्तवनीय अग्नि यथेष्ट ध्वनि से युक्त हैं। कर्मकारिणी उर्वरा अर्थात् श्रेष्ठ भूमि पर अग्नि का यज्ञ करना उचित है। सेना-विजय करने के लिए अग्नि का याग करना उचित है। अग्नि हव्य भक्षण करते हैं। वे सर्वत्र दानशील और यज्ञ की पताका हैं। वे सर्वत्र पूजनीय हैं। यजमानों के लिए हर्षदाता और प्रसन्न अग्नि के मार्ग की, निर्भय राजपथ की तरह, सुख-लाभ के लिए, सब लोग सेवा करते हैं।

द्विताचदींकीरितासोअभिद्यवोनमस्यन्तउपवोचन्तभृगवोमथ्नन्तोदाशाभृगवः। अग्निरीशेवसूनांशुचिर्योधर्णिरेषाम् ।
प्रियाँअपिधीँर्वनिषीष्टमेधिरआवनिषीष्टमेधिरः ॥ ७ ॥

द्विता । यत् । ईम् । कीस्तासः । अभिऽद्यवः । नमस्यन्तः । उपवोचन्त । भृगवः । मथ्नन्तः । दाशा । भृगवः । अग्निः । ईशे । वसूनाम् । शुचिः । यः । धर्णिः । एषाम् । प्रियान् । अपिऽधीन् । वनिषीष्ट । मेधिरः । आ । वनिषीष्ट । मेधिरः ॥ ७ ॥

यत् यं द्विता द्विप्रकारंश्रौतस्मार्तभेदेनद्वित्वमापन्नं यद्वा उपलक्षणमेतत् आहवनीयादिरूपेणनानाविधं यद्वा द्विता द्विविधायऐहिकामुष्मिकफलाय उभयाय विभक्तेराजादेशः ईं इममग्निं कीस्तासः कीर्तनंकुर्वन्तःस्तोतारः पचाद्यचिछान्दसंसत्वं अभिद्यवः अभितोद्योतमानाः नमस्यन्तः नमस्कारोपलक्षितमुपस्थानंकुर्वन्तोभृगवः भृगुगोत्रोत्पन्नामहर्षयः उपवोचन्त उपेत्यब्रुवन्ति किंकुर्वन्तः दाशादानेननिमित्तभूतेनहविर्दानार्थंमथ्नन्तः अरणीभ्यामग्निमन्थनंकुर्वन्तः तथा भृगवः भ्रष्टारोहविर्षांपापानांवा किंचाग्निः शुचिर्दीप्तः धर्णिः धारणकुशलोऽयमग्निः एषांदीयमानानांवसूनांहविर्लक्षणानांईशेईष्टेसमर्थोभवति लोपस्तआत्मनेपदेष्वितितलोपः यद्वा एषांदृश्यमानानां मणिमुक्तादीनांवसूनांईशेप्रदातुमितिशेषः किंचायमग्निः मेधिरःमेधोयज्ञः तद्वान् स्वयंयष्टव्यत्वेनप्रधानभूतःसन् प्रियान्स्वप्रीतिहेतून् आज्यादीन् अपिधीन्पर्याप्तिपर्यन्तंदत्तान् वनिषीष्टसंभक्तवान् संभजतांवा तथा मेधिरः मेधावान् असौआवनिषीष्ट अन्यदेवताकेष्वपियज्ञेषुस्वयमाज्यभागप्रयाजादिरूपंहविःसंभजते॥ ७ ॥

७. श्रौत और स्मार्त्त—उभय प्रकार के अग्नि का गुण कहनेवाले, दीप्तिशाली, नमस्कार-प्रवीण और हव्यदाता भृगुगोत्रज महर्षि लोग, हवि देने के लिए, अरणि-द्वारा अग्नि का मन्थन करके स्तुति करते हैं। प्रदीप्त अग्नि सारे धनों के अधीश्वर हैं। अग्नि यज्ञवाले हैं और भलीभाँति प्रिय हव्य भोगनेवाले हैं। अग्नि मेधावी हैं और वे अन्य देवताओं को भी भाग देते हैं।

विश्वांसांत्वाविशांपतिंहवामहेसर्वांसांसमानंदम्पतिंभुजेसत्यगिर्वाहसंभुजे।
अतिथिंमानुषाणांपितुर्नयस्यासया।
अमीचविश्वेअमृतासआवयोहव्यादेवेष्वावयः ॥ ८ ॥

विश्वासाम् । त्वा । विशाम् । पतिम् । हवामहे । सर्वासाम् । समानम् । दम्ऽपतिम् । भुजे । सत्यऽगिर्वाहसम् । भुजे । अतिथिम् । मानुषाणाम् । पितुः । न । यस्य । आसया । अमी इति । च । विश्वे । अमृतासः । आ । वयः । हव्या । देवेषु । आ । वयः ॥ ८ ॥

विश्वासां सर्वासांविशां प्रजानांयजमानानां पतिंअभिमतफलदानेन पालकंहवामहे आह्वयामः नकेवलंयजमानानां किंतुसर्वासांप्रजानां समानं एकरूपं दहनपचनाद्युपकारस्यसर्वेषां समत्वात् तथा दंपतिंगार्हपत्यरूपेण गृहस्यपालकं दमइतिगृहनाम दमेक्तिरितितन्नामसुपाठात् अकारलोपश्छान्दसः किमर्थं भुजे भोगायहवामहे आह्वयामः पुनः सएवविशेष्यते सत्यगिर्वाहसं यथार्थभूतानांअविसंवादिफलानांस्तुतिरूपाणांगिरांवोढारं यद्वा गिरोमन्त्ररूपावहन्तीतिगिर्वाहसःऋत्विजः सत्याअविसंवादिफलागिर्वाहसोयस्यतं तादृशंहवामहइतिशेषः वहिहाधाञ्भ्यइत्यसुन् णिदित्यनुवृत्तेरुपधावृद्धिः पुनःकीदृशं मानुषाणां मनुष्याणांअतिथिं अतिथिवत्पूज्यं दर्शादितिथिमपेक्ष्यागन्तारंवा किंचास्याग्नेः आसयासमीपे आसेत्यन्तिकनाम आसाअम्बरमिति तन्नामसुपाठात् तत्समीपे अमीचविश्वे अमृतासः हविर्भोक्तृत्वेन प्रसिद्धाः सर्वे देवाअपि आच आगच्छन्ति उपसर्गवशाद्योग्यक्रियाध्याहारः किमर्थं वयः हविर्लक्षणान्नमुद्दिश्यअग्निमुखाद्देवेतरेभ्योदीयमानत्वात् तत्रदृष्टान्तः—पितुर्न पितुरन्तिकेपुत्रादयोयथान्नाद्यर्थं आगच्छन्ति तद्वत् किंच वयः नेतारऋत्विजोपि देवेषुइतरेष्विज्यमानेषुमध्ये हव्या हवींषि आददत्यग्नये वेतेरौणादिकोडिः विचिवागुणः ॥८॥

८. सारे यजमानों के रक्षक, सारे मनुष्यों के एक से गृह-पालक, सर्व-सम्मत-फल-विशिष्ट, स्तुति-वाहक और मनुष्य आदि के लिए अतिथि की तरह पूज्य अग्नि को, भोग के लिए, हम बुलाते हैं। जैसे पुत्र लोग पिता के पास जाते हैं, वैसे ही हव्य के लिए ये सारे देवता अग्नि के पास आते हैं। ऋत्विक् लोग भी देवों के यज्ञ-काल में अग्नि को हव्य प्रदान करते हैं।

त्वमग्ने सहसा सहन्तमः शुष्मिन्तमो जायसे देवतातये रयिर्न देवतातये ।
शुष्मिन्तमो हि ते मदो द्युम्निन्तम उत क्रतुः ।
अध स्मा ते परि चरन्त्यजर श्रुष्टीवानो नाजर ॥ ९ ॥

त्वम् । अग्ने । सहसा । सहन्ऽतमः । शुष्मिन्ऽतमः । जायसे ।
देवऽतातये । रयिः । न । देवऽतातये । शुष्मिन्ऽतमः । हि । ते । मदः ।
द्युम्निन्ऽतमः । उत । क्रतुः । अध । स्म । ते । परि । चरन्ति । अजर ।
श्रुष्टीऽवानः । न । अजर ॥ ९ ॥

हेअग्ने त्वंसहसाबलेन सहन्तमः अतिशयेनशत्रूणामभिभविता तथा शुष्मिन्तमः अतिशयेन तेजस्वीजायसे सहेरौणादिकःकनिन् नाद्धस्येतिनुट् किमर्थं देवतातये देवानांविस्तारयुक्ताययागाय तदर्थंयज्ञनामैतत् यद्वा उक्तगुणविशिष्टःसन्जायसे अरण्योरुत्पद्यसे यज्ञार्थत्वेद-

ष्टान्तः—रयिर्नदेवतातये धनं यथायज्ञार्थमुत्पद्यते तथाचोक्तं यज्ञार्थंद्रव्यमुत्पन्नमिति किंच ते तवमदः आज्यस्वीकारजनितोहर्षःशुष्मिन्तमःअतिशयेनबलवान् हिशब्दःप्रसिद्धौ आज्येनाग्ने-र्मदोभवतीतिप्रसिद्धं उत अपिच तेक्रतुः कर्मविशेषोऽपि द्युम्निन्तमःयशोयुक्तःअन्नयुक्तोवाखलु द्युम्नंद्योततेर्यशोवान्नंवेतियास्कः। अध अतःकारणात् अजर हेजरारहिताग्ने तेत्वांपरिचरन्ति यजमानाः तत्रदृष्टान्तः—श्रुष्टीवानोन दूताइव तेयथावार्ताविशेषप्रदानेनराजानंसेवन्ते तद्वत् छन्दसीवनिपावितिवनिप् छान्दसंप्रत्ययाद्युदात्तत्वम् अजरभक्तानामजरयितुः अन्तर्भावितण्यर्थात्पचाद्यच् यद्वा अजर अस्तोतः जरास्तुतिः असौनकस्यापिस्तोताभवति किंतु सर्वैःस्वयंस्तूयते तादृशंत्वांपरिचरन्तीत्यर्थः॥ ९॥

९. जैसे देवों के यजन के लिए धन पैदा होता है, उसी प्रकार हे अग्नि, तुम भी देवों के यज्ञार्थ उत्पन्न होते हो। अपने बल से तुम शत्रुओं के अभिभवकर्त्ता और अतीव तेजस्वी हो। तुम्हारा आनन्द अत्यन्त बल-दाता है। तुम्हारा यज्ञ अत्यन्त फल-प्रद है। हे अजर और हे भक्तों के जरा-निवारक अग्नि, इसी लिए यजमान लोग, दूतों की तरह, तुम्हारी पूजा करते हैं।

प्रवोमहेसहसासहस्वतउषर्बुधेपशुषेनाग्नयेस्तोमोबभूत्वग्नये।
प्रतियदींहविष्मान्विश्वासुक्षासुजोगुवे।
अग्रेरेभोनजरतऋषूणांजूर्णिर्होतऋषूणाम्॥ १०॥

प्र। वः। महे। सहसा। सहस्वते। उषःऽबुधे। पशुऽसे। न।
अग्नये। स्तोमः। बभूतु। अग्नये। प्रति। यत्। ईम्। हविष्मान्।
विश्वासु। क्षासु। जोगुवे। अग्रे। रेभः। न। जरते। ऋषूणाम्।
जूर्णिः। होता। ऋषूणाम्॥ १०॥

हेउद्गात्रादयःस्तोतारः वोयुष्माकंसंबन्धिस्तोमः स्तोत्रंअग्नयेप्रबभूतु प्रीणयितुंसमर्थंभवतु छान्दसःशपःश्लुः अत्वंचाभ्यासस्य भूसुवोस्तिङीतिगुणाभावःकीदृशायाग्नये महेमहतेपूज्याय सहसा पराभिभवसामर्थ्येन सहस्वते तद्वते उषर्बुधे उषःकालेप्रबुध्यमानाय अहरादीनांपत्यादिषूपसंख्यानमितिरुत्वं पशुषेपशुफलदाय नशब्दोऽत्रापिशब्दार्थः यद्वा पशुषेपशुप्रदात्रेप्रभवेयथास्तुतिःक्रियतेतद्वत् किमर्थमितितदुच्यते—ईंएनमग्निंप्रति लक्षीकृत्यहविष्मान् घृ-

---

२ १ निं० ५. ५।
७

तादिमवृद्धहविर्युक्तोयजमानःविश्वासुक्षासु सर्वासुनिवासभूतासुवेदिभूमिषु जोगुवे अत्यर्थंगच्छति गुवतेर्यङ्लुगन्ताच्छान्दसोलिट् व्यत्ययेनात्मनेपदं अमन्त्रेइतिपर्युदासादामभावः क्षेतिभूनाम क्षाक्षामेति तन्नामसुपाठात् ऋषूणां आगन्तॄणां देवानांमध्येश्रेष्ठमग्निं जूर्णिः स्तुतिकुशलोहोता अग्रे इतरदेवेभ्यःपूर्वंजरतेस्तौति तत्रदृष्टान्तः—ऋषूणांमहतांधनवतां अग्रेरेभोन बन्दीव ऋषीगतौ औणादिकःकुप्रत्ययः नामन्यतरस्यामितिनामउदात्तत्वम् यद्वा ऋषूणामित्येतद्धोतृविशेषणं ऋषूणांज्ञानवतांमध्येश्रेष्ठोयंहोतेत्यर्थः ॥ १० ॥

१०. हे स्तोता लोगो हविवाले यजमान इन अग्नि के लिए सारी वेदी-भूमि पर बार-बार गमन करते हैं; इसलिए तुम्हारा स्तोत्र उस पूज्य, शत्रु-पराभवकारी, प्रातःकाल में जागरणशील और पशु-दाता अग्नि की प्रीति उत्पन्न करने में समर्थ हो। धनवान् के पास जैसे बन्दी स्तव करता है, वैसे ही होता लोग पहले, देवों में श्रेष्ठ, अग्नि की स्तुति करते हैं।

अथैकादशी—

सनोनेदिष्ठंददृशानआभराग्नेदेवेभिःसचनाःसुचेतुनामहोरायःसुचेतुना।
महिशविष्ठनस्कृधिसंचक्षेभुजेअस्यै।
महिस्तोतृभ्योमघवन्त्सुवीर्यमर्थीरुग्रोनशवसा ॥ ११ ॥ १२ ॥

सः। नः। नेदिष्ठम्। ददृशानः। आ। भर। अग्ने। देवेभिः।
सऽचनाः। सुऽचेतुना। महः। रायः। सुऽचेतुना। महि। शविष्ठ।
नः। कृधि। सम्ऽचक्षे। भुजे। अस्यै। महि। स्तोतृऽभ्यः।
मघऽवन्। सुऽवीर्यम्। मथीः। उग्रः। न। शवसा ॥ ११ ॥ १२ ॥

हेअग्ने सत्वंनोनेदिष्ठं अत्यन्तसमीपेददृशानः वेद्यांदीप्तत्वेनदृश्यमानः देवेभिः सचनाः इतरैर्देवैः समानान्नः अग्निमुखेनैवइतरेषांहविःस्वीकारात्समानान्नत्वं सुचेतुनाशोभनेनचेतनेनचेतसा वापुनस्तदेवविशेष्यते सुचेतुना शोभनचेतोवतामया औणादिकउः बहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् युक्तेन त्वदायत्तेमय्यनुग्रहयुक्तेनेत्यर्थः तादृशस्त्वंमहः पूजनीयानि रायोधनानि आभर अस्माकमाहर हेअग्ने शविष्ठबलवन् नः अस्मभ्यं महिमहत्अन्नं महतींकीर्तिं वा कृधि कुरु संपादय शविष्ठेतिसंबोधितत्वात्तदेवसामर्थ्यंतइतिगम्यते किमर्थंसंचक्षे सम्यग्दर्शनीयत्वाय अस्यै अस्याः पृथिव्याः संबन्धिनेभुजे भोगाय यद्वा संचक्षे भुजइतिसामानाधिकरण्यं सम्यग्दर्शनीयायभोगायेत्यर्थः नकेवलंयजमानेभ्योऽस्मभ्यमेव अपितुस्तोतृभ्यः स्तोत्रकर्तृभ्योऽपि हेमघवन्नन्नवन्नग्ने महिमहत् सुवीर्यंशोभनपुत्रभृत्याद्युपेतंधनंशोभनसामर्थ्यंवा कृधिकुरु

किंच शवसाबलेनयुक्तःसन् मथीः अस्मद्विरोधिनोनाशय लुङि ह्म्यंतक्षणेतिवृद्धिप्रतिषेधः कारकपक्षे औणादिकईकारः आद्युदात्तश्छान्दसः यद्वा मथीर्मथनवांस्त्वं अस्मदर्थंशवसाबलेन युक्तोभवेतिशेषः तत्रदृष्टान्तः—उग्रोनशवसा यथाकश्चित्क्रूरः शवसाबलेनमथीर्भवति तद्वत्॥ ११ ॥ ११. हे अग्नि, यद्यपि तुम्हें पास में ही हम प्रदीप्त देखते हैं. तथापि तुम देवों के साथ आहार करते हो। तुम अपने शोभन अन्तःकरण से अपने अधीन के लिए अनुग्रह करके पूजनीय धन लाते हो। बलवान् अग्निदेव, हमारे लिए यथेष्ठ अश्व प्रदान करो, जिससे हम पृथिवी को देख और भोग सकें। मघवन् अग्नि, स्तोताओं के लिए वीर्यशाली धन प्रदान करो। यथेष्ट बल-सम्पन्न होकर क्रूर व्यक्ति जैसे शत्रु-विनाश करता है, वैसे ही हमारे शत्रु का विनाश करो।

अयंजायतेत्यष्टर्चंद्वितीयंसूक्तम् अयंजायताष्टावित्यनुक्रमणिका परुच्छेपऋषिः सर्वंमात्यष्टमित्युक्तत्वादत्यष्टिश्छन्दः आग्नेयंत्वितितुशब्दस्योक्तत्वात् इदमादिमंचाग्नेयं पृष्ठ्यस्यषष्ठेहनिएतत्सूक्तमाज्यशस्त्रत्वेनविनियुक्तं सूत्रितंच षष्ठस्येतिखण्डे—अयंजायतमनुषोधरीमणीत्याज्यमिति।

तत्रेयंप्रथमा—

अयंजायतमनुषोधरीमणिहोतायजिष्ठउशिजामनुव्रतमग्निःस्वमनुव्रतम्।
विश्वश्रुष्टिःसखीयतेरयिरिवश्रवस्यते।
अदब्धोहोतानिषददिळस्पदेपरिवीतइळस्पदे॥ १॥

अयम्। जायत। मनुषः। धरीमणि। होता। यजिष्ठः। उशिजाम्।
अनु। व्रतम्। अग्निः। स्वम्। अनु। व्रतम्। विश्वऽश्रुष्टिः।
सखिऽयते। रयिःऽइव। श्रवस्यते। अदब्धः। होता। नि।
सदत्। इळः। पदे। परिऽवीतः। इळः। पदे॥ १॥

अयमग्निर्मनुषोमनुष्यस्य अध्वर्योःसकाशात् धरीमणि अतिशयेनधारके अरणिद्वये जायत अरणिमन्थनेनोत्पन्नः कीदृशोयंहोता देवानामाह्वाता यजिष्ठः अतिशयेनयष्टृतमः किमर्थमुत्पन्नइतिचेत् उशिजांफलस्यकामयितॄणां यजमानानां व्रतंसोमयागादिरूपंकर्मअनुलक्षीकृत्य नकेवलंपरार्थमेवअपितुस्वार्थमपि स्वंव्रतमनु स्वकीयंहविःस्वीकारादिरूपंकर्मानुलक्ष्य पुनः सएवविशेष्यते विश्वश्रुष्टिः विश्वविषयकर्मवान् कस्मैसखीयते सखित्वमात्मनइच्छते तथा

श्रवस्यते अतिप्रसिद्धान्नमात्मनइच्छते यजमानाय रयिरिवधनस्थानीयोभवति धनंयथास-ख्यं अन्नसमृद्धिंचसाधयति तद्वद्वयमग्निरपितस्मैद्वयंसाधयतीत्यर्थः किंचायमग्निः इळस्पदे इडायाभूम्याः पदे अन्त्यलोपश्छान्दसः धरीमणि सारभूतेस्थानेवेदिरूपे वेदिमाहुःपरम-न्तंपृथिव्याइतिश्रुतेः। एतावतीवैपृथिवीयावतीवेदिरितिच। पुनस्तदेवविशेष्यते इडस्पदे इडा-देवतायामनोःपुत्र्यागोरूपायाःइडोपह्वानमन्त्रप्रतिपादितायाः पदेपादन्यासप्रदेशे इडावैमान-वीयज्ञानूकाशिन्यासीदितीडायाः पदेघृतवतिस्वाहेतिचश्रुतेः। निषदत् निषीदति कीदृशोय-मग्निः अदब्धः केनाप्यहिंसितः होता होमनिष्पादकः परिवीतः ऋत्विग्भिः परिधिभिर्वापरितो-वेष्टितः एवंभूतःसन् निषदत्॥ १॥

१. देवों को बुलानेवाले और अतीव यज्ञशील ये अग्नि फल-प्रार्थियों के और अपने व्रत या हविर्भोजन के उद्देश्य से मनुष्य से ही उत्पन्न होते हैं। सारे विषयों के कर्त्ता अग्निदेव बन्धुकामी और अन्नाभिलाषी यजमान के धन-स्थानीय हैं। पृथिवी में सार-भूत वेदी पर, यज्ञ-स्थान में, अहिंसित, होम-निष्पादक तथा ऋत्विग्वेष्टित अग्नि बैठे हैं।

तंयज्ञसाधमपिवातयामस्यृतस्यपथानमसाहविष्मतादेवतानाहविष्मता।
सनंऊर्जामुपाभृत्ययाकृपानजूर्यति।
यंमातरिश्वामनवेपरावतोदेवंभाःपरावतः॥ २॥

तम्। यज्ञऽसाधम्। अपि। वातयामसि। ऋतस्य। पथा।
नमसा। हविष्मता। देवऽताता। हविष्मता। सः। नः।
ऊर्जाम्। उपऽआभृति। अया। कृपा। न। जूर्यति। यम्।
मातरिश्वा। मनवे। पराऽवतः। देवम्। भारिति भाः। पराऽवतः॥२॥

यज्ञसाधंयज्ञस्यसाधकं साध्नोतेःक्विपि कृदुत्तरपदप्रकृतिस्वरत्वं तमग्निंवेद्यांस्थापितं अपि वा-तयामसि अपिःसंभावनार्थः आपरितोषंसेवामहे वातगतिसुखसेवनयोः चौरादिकः इदन्तोमसिः केनोपायेनेतितदुच्यते–ऋतस्यपथायागस्यमार्गेण यागानुष्ठानेन यज्ञेनदेवेभ्यइतिश्रुतेः। यज्ञे-नदेवस्यमहतीप्रीतिर्भवति यद्वा ऋतस्ययज्ञस्य पंथामार्गस्तीर्थाख्यः पूर्वेणोत्करमपरेणप्रणीता-इत्यादिसूत्रोक्तः तेनमार्गेणगत्वापुनः केन हविष्मता आज्यादिप्रदेयद्रव्यवता नमसा नमस्का-रोपलक्षणेन स्तोत्रेणोपस्थानेनवातदुभयेनेत्यर्थः कुत्रेतितदुच्यते हविष्मताहविष्मति आज्यपु-

---

१ तै० सं० ७.४.१८.। २ तै० सं० २.६.४.। ३ तै० सं० ६.१.८.।
४ तै० सं० ६.३.१०.।

रोडाशादिबहुहविर्युक्तेदेवतातादेवानांविस्तारयुक्तेयज्ञे किंच सोऽग्निः नोऽस्मत्संबन्धिनां ऊर्जा-मन्नानांहविर्लक्षणानांउपाभृति उपाहरणेतत्स्वीकारविषयेउपाङ्गुपसृष्टाद्धरतेःकिन् इग्रहोर्भइ-तिभत्वं सुपांसुलुगितिसप्तम्यालुक् तादौचेत्यनन्तरस्यगतेःप्रकृतिस्वरत्वम् अयाक्रपा अनया सामर्थ्यलक्षणयाकल्पनया हविःस्वीकरणरूपया नजूर्यति यज्ञसमाप्तिपर्यन्तंननश्यति अजरो-वर्ततइत्यर्थः सइत्युक्तंकइत्याह—यमग्निंदेवंद्योतनशीलंमातरिश्वाअन्तरिक्षसंचारी वायुः पूर्वं मनवेमनोरर्थायपरावतः अतिदूरंगतवतः आदित्याद भाः अभासीत् औचित्येनभूमौस्थापित-वानित्यर्थः तद्वत्परावतः दूराद्देवंअग्निं अस्मद्देवयजनंप्रतिस्थापयत्वित्यर्थः॥ २॥

२. हम लोग यज्ञानुष्ठान और घृत आदि से युक्त तथा नम्रता से सम्पन्न स्तोत्र-द्वारा बहु हव्यवाले और देव-यज्ञ में साधक अग्नि की, परितोष के साथ, सेवा करते हैं। वे अग्नि हमारे हव्यरूप अन्न को लेने में समर्थ होकर नाश को नहीं प्राप्त होंगे। मनु के लिए मातरिश्वा ने अग्नि को, दूर से लाकर, प्रदीप्त किया था। इसी प्रकार, दूर से, हमारी यज्ञशाला में अग्नि आवें।

एवेनसद्यःपर्येतिपार्थिवंमुहुर्गीरेतोवृषभःकनिक्रदद्दधद्रेतःकनिक्रदत्।
शतंचक्षाणोअक्षभिर्देवोवनेषुतुर्वणिः।
सदोदधानउपरेषुसानुष्वग्निःपरेषुसानुषु॥ ३॥

एवेन। सद्यः। परि। एति। पार्थिवम्। मुहुःऽगीः। रेतः। वृषभः। कनिक्रदत्। दधत्। रेतः। कनिक्रदत्। शतम्। चक्षाणः। अक्षऽभिः। देवः। वनेषु। तुर्वणिः। सदः। दधानः। उपरेषु। सानुषु। अग्निः। परेषु। सानुषु॥ ३॥

अयमग्निः एवेनगमनसाधनेनगमनेनवासद्यः अस्मदाह्वानानन्तरंपार्थिवंपृथिवीसंबन्धि-स्थानं वेदिलक्षणमेवपरिपरितः यद्वा आभिमुख्यार्थोवापर्येति गच्छति कीदृशोऽग्निः मुहुर्गीः सर्वदागीयमानः रेतः रेतःशब्देन तत्कार्यं हवीरूपमन्नमुच्यते तद्वान् मत्वर्थीयोलुप्यते वृषभः कामा-नांवर्षिता कनिक्रदत् शब्दयन्पर्येति पुनःसएवविशेष्यते रेतोदधत् आज्यादिस्वीकारेणअत्य-धिकंसामर्थ्यंदधानः कनिक्रदच्छब्दयन्पर्येतीतिशेषः पुनः सएवविशेष्यते अयमग्निर्देवः वने-षुसंभजनेषु स्तोत्रेषु निमित्तभूतेषु अक्षभिः अक्षस्थानीयाभिर्ज्वालाभिः शतंचक्षाणः सर्वतः प्रकाशमानः यद्वा ज्वालोत्कर्षेण यजमानेनकृतं शतगुणितंप्रख्यापयन् तथातुर्वणिः शीघ्रग-न्ताशत्रूणांहिंसकोवा तुर्वणिस्तूर्णवनिरितियास्कः। किंच सानुषुसमुच्छ्रितेषु सानुसमुच्छ्रि-

१ नि० ६. १४.।

तंभवतीतियास्कः । तेषुउपरेषु उपरमन्तेएष्वग्नयइतिउपराधिष्ण्याःयजमानगृहावा तेषुसदोदधानःस्थानंधारयमाणोऽग्निः सद्यःपर्येतीतिपूर्वत्रान्वयः किमर्थं परेषूत्कृष्टेषुसानुषुसमुच्छ्रितेषुकर्मसुहविष्वुवानिमित्तभूतेषु॥ ३ ॥

३. सदा गाये या स्तुति किये जानेवाले, हविःसम्पन्न, अभीष्ट-फलदाता और सामर्थ्यशाली अग्नि शब्द करके जाते हुए तुरत पार्थिव वेदी के चारों ओर शब्द करके आते हैं। अग्निदेव स्तोत्र ग्रहण करके अग्रस्थानीय शिखा-द्वारा चारों ओर प्रकाशित हो रहे हैं। उच्चस्थानीय अग्नि उत्तम यज्ञ में तुरत आते हैं।

ससुक्रतुंःपुरोहितोदमेंदमेग्निर्यज्ञस्याध्वरस्यंचेततिक्रत्वायज्ञस्यंचेतति ।
क्रत्वांवेधाइंषूयतेविश्वाजातानिंपस्पशे ।
यतोंघृतश्रीरतिथिरजायतवह्निर्वेधाअजायत ॥ ४ ॥

सः । सुऽक्रतुंः । पुरःऽहिंतः । दमेंऽदमे । अग्निः । यज्ञस्यं । अध्वरस्यं । चेतति । क्रत्वां । यज्ञस्यं । चेतति । क्रत्वां । वेधाः । इषुऽयते । विश्वां । जातानिं । पस्पशे । यतः । घृतऽश्रीः । अतिथिः । अजायत । वह्निः । वेधाः । अजायत ॥ ४ ॥

सोऽग्निः सुक्रतुः शोभनकर्मा पुरोहितः पुरोधार्यमाणः यद्वा पुरोहितवद्यागनिर्वाहकः सन् दमेदमे तत्तद्यजमानगृहेसर्वेषुदेवयजनेषुवाअध्वरस्यनाशरहितस्यफलप्रदस्ययज्ञस्य तदर्थं चेततिजानातिप्रबुध्यतइत्यर्थः किंचायंयजमानोऽपि क्रत्वाशोभनेनकर्मणा यज्ञस्यचेतति कर्तव्यतामेवजानाति किंचायमग्निरपि क्रत्वाप्रकृष्टेनकर्मणा वेधाः विविधानांफलानांकर्तासन् इषूयते इष्यतइतीषुरन्नमागमनंवा तदिच्छते यजमानायतदर्थं विश्वाजातानिसर्वाणि संपादितानिहविरादीनिपस्पशे अत्यर्थंस्पृशति स्वीकरोति यतोयं घृतश्रीः घृतंसेवमानः अतिथिः अतिथिवत्पूज्यश्च अजायत उत्पन्नः यतःकारणाद्धृतमत्यर्थंसेवमानःप्रवृद्धोभवत् अतः स्पशइत्यर्थः एवमग्नौप्रवृद्धेसति यजमानोपि वह्निः हविषांवोढा वेधाः विविधस्यफलस्यकर्ताउत्पादयिता अजायत समर्थोऽभवत् ॥ ४ ॥

४. शोभनकर्मा और पुरोहित अग्नि हर एक यजमान के घर में नाश-रहित यज्ञ को जान सकते हैं। अग्नि कर्म-द्वारा यज्ञ जान सकते हैं। वे कर्मों के विविध फलदाता बनकर यजमान के लिए अन्न की इच्छा करते हैं। अग्नि हव्य आदि को ग्रहण करते हैं; क्योंकि वे घृत-भक्षी अतिथि के रूप में उत्पन्न हुए हैं। अग्नि के प्रवृद्ध होने पर हव्यदाता विविध फल प्राप्त करते हैं।

---

२ नि० २. २४.।

अथपञ्चमी—

क्रत्वायदंस्यतविषीषुपृञ्चतेऽग्नेरवेणमरुतांनभोज्येषिरायनभोज्यां।
सहिष्मादानमिन्वंतिवसूनांचमज्मनां।
सनंस्त्रासतेदुरितादंभिहुतःशंसादघादंभिहुतः॥ ५॥ १४॥

क्रत्वां। यत्। अस्य। तविषीषु। पृञ्चतें। अग्नेः। अवेन।
मरुताम्। न। भोज्यां। इषिरायं। न। भोज्यां। सः। हि। स्म।
दानम्। इन्वंति। वसूनाम्। च। मज्मनां। सः। नः। त्रासते।
दुःऽइतात्। अभिऽहुतः। शंसात्। अघात्। अभिऽहुतः॥ ५॥१४॥

यद्यस्मात्कारणात्सर्वेयजमानाः क्रत्वाप्रकृष्टेनकर्मणा हविःप्रदानादिरूपेण अस्याग्नेः तविषीषु प्रबलासु ज्वालासु अवेन तृप्तिनिमित्तेनभोज्या भक्ष्याणि पुरोडाशादीनि पृञ्चते मिश्रयन्ति तविषीतिबलनाम तविषीशुष्ममिति तन्नामसुपाठात् तत्रदृष्टान्तः—मरुतांनभोज्या वायूनांसंबन्धीनिव्रीह्याद्यन्नानीव वायुषुमेघंनिर्भिद्यवृष्टिंजनयत्सुसत्सुसस्यादिद्वाराव्रीह्यादिभोज्यानियथापृंचतेतथेत्यर्थः दानेदृष्टान्तः—इषिरायनभोज्या एषणयुक्तायययाचमानायार्थिनेभोज्या भोग्यानिभक्ष्यादीनियथादीयन्ते तद्वत् इषिरूशब्दोयास्केनैवंनिरुक्तः—ईषणेनवैषणेनवार्षणेनवेति[1] । अतःकारणात् सहिस्म सखलुयजमानः दानमिन्वति हविःप्रदानं तस्मैव्याप्नोति यद्वा स्वयमभिमतंदानमिन्वति इन्वतिर्व्याप्तिकर्मा इन्वतिनक्षति इतितत्कर्मसुपाठात् केनसामर्थ्येनेति वसूनांचमज्मना निवासयोग्यानांधनानां अग्निनालब्धानां बलेनैव यद्वा सोऽग्निः वसूनां हविर्निवासयोग्यानां ज्वालारूपाणां धनानां मज्मनाबलेन दानमिन्वतीतिशेषः किंच सोऽग्निः अभिहुतः आभिमुख्येनपापैर्ह्रियमाणात् नोऽस्मान्दुरितात् पापात् त्रासते त्रायतेतथाशंसात् अतिप्रभूतत्वेनशंसनीयात् यद्वा हिंसकात् अभिहुतः अभितोह्रियमाणात् अघात् दुःखात्तत्कारणात् पापाद्वा त्रासते त्रायते॥ ५॥

५. जैसे मरुत् लोग भक्षणीय द्रव्य को एक में मिलाते हैं, इन अग्नि को जैसे भक्ष्य द्रव्य दिया जाता है, वैसे ही यजमान लोग कर्म-द्वारा अग्नि की प्रबल शिखा में, तृप्ति के लिए, भक्षणीय द्रव्य मिलाते हैं। अपने धन के अनुसार यजमान हव्य दान करता है। जो पाप हमारा हरण करता है, उस हरणकारी दुःख और हिंसक पाप से अग्नि हमें बचायें।

॥ इतिद्वितीयस्यप्रथमेचतुर्दशोवर्गः॥ १४॥

---

१ नि० ४. १६.।

अथषष्ठी–

विश्वोविहायाअरतिर्वसुर्दधेहस्तेदक्षिणेतरणिर्न
शिश्रथच्छ्रवस्ययानशिश्रथत्।
विश्वस्माइदिषुध्यतेदेवत्राहव्यमोहिषे।
विश्वस्माइत्सुकृतेवारमृण्वत्यग्निर्द्वाराव्यृण्वति ॥ ६ ॥

विश्वः। विऽहायाः। अरतिः। वसुः। दधे। हस्ते। दक्षिणे। तरणिः। न। शिश्रथत्। श्रवस्यया। न। शिश्रथत्। विश्वस्मै। इत्। इषुध्यते। देवऽत्रा। हव्यम्। आ। ऊहिषे। विश्वस्मै। इत्। सुऽकृते। वारम्। ऋण्वति। अग्निः। द्वारा। वि। ऋण्वति ॥ ६ ॥

अयमग्निर्दक्षिणे अभिमतं प्रदातुमुत्साहयुक्तेहस्तेवामेतरेकरे यजमानायदातव्यंवसुः धनंदधे धारयति कीदृशोऽयं विश्वैःसर्वैर्गन्तव्यः यद्वा विश्वात्मकः विहायाः महान् विहायाइतिमहन्नाम विहायाः यह्वइति तन्नामसुपाठात् अरतिः ईश्वरः अरमणोवा अप्रीतिः अ-त्रवहिवस्यर्तिभ्यश्चिदित्यतिप्रत्ययः चिद्वद्भावादन्तोदात्तः धृत्वाचशिश्रथत् हस्तधृतंयजमानार्थंश्रथयतिददाति श्लथयतेर्लुङिचङिरूपं तत्रदृष्टान्तः–तरणिर्न तरणिरिव तारकःसूर्यइव सयथास्वोपासकाय अभिमतं हस्तेधृत्वावितरति तद्वत् यद्वा तरणिः सर्वस्यतारकः न-शिश्रथत् यजमानं नश्रथयति नमुंचति किंच श्रवस्ययानशिश्रथत् हवीरूपान्नेच्छयैवम शिश्रथत् नविमुंचति अयमनुग्रहेणैवपालयते हविःस्वीकारस्तु व्यपदेशमात्रेणेतिभावः इदानीं प्रत्यक्षकृतः हेअग्नेदेवत्रा देवेषुमध्येअतिशयेनत्वं विश्वस्मै इत् सर्वस्मै एव इषुध्यते हविरात्मनइच्छते इन्द्रादये इषुध्यतिःकंड्वादिः हव्यं तत्तद्देवतामुद्दिश्यप्रत्तं पुरोडाशादिकं ओहिषे सर्वतोवहसि वहेर्लेटियजादित्वात्संप्रसारणम् किंचायमग्निर्विश्वस्मैसर्वस्मैसुकृते शोभनयज्ञकर्त्रे यजमानायवारं सर्वैर्वरणीयं क्षुदादिनिवारकंवाअन्नादिकं ऋण्वति गच्छति करोतीत्यर्थः किंचायमग्निः द्वारास्वर्गाद्यभिमतद्वाराणिव्यृण्वति विवृणोति प्रतिबंधकपापापनयनंद्वारा अभिमतानिसाधयतीत्यर्थः ऋण्वतिर्गतिकर्मा यद्वा रविर्गत्यर्थः इदित्त्वान्नुम् छान्दसंरेफस्यसंप्रसारणम् ॥६॥

६. विश्वात्मक, महान् और विरामरहित अग्नि सूर्य की तरह दक्षिण हाथ में धन रखते हैं। उनका वह हाथ यज्ञकारी के लिए श्लथ होता है, खुला रहता है। केवल हवि पाने की आशा से अग्नि उसे नहीं छोड़ते। अग्निदेव, सारे हविः-कामी देवों के लिए तुम हवि वहन करते हो। सब सुकृत पुरुषों के लिए अग्नि वरणीय धन प्रदान करते और स्वर्ग का द्वार उन्मुक्त करते हैं।

अथसप्तमी–

समानुषेवृजनेशंतमोहितो३ग्निर्यज्ञेषुजेन्योनविश्पतिःप्रियोयज्ञेषुविश्पतिः।
सहव्यामानुषाणामिळाकृतानिपत्यते।
सनस्त्रासतेवरुणस्यधूर्तेर्महोदेवस्यधूर्तेः ॥ ७ ॥

सः। मानुषे। वृजने। शम्ऽतमः। हितः। अग्निः। यज्ञेषु। जेन्यः।
न। विश्पतिः। प्रियः। यज्ञेषु। विश्पतिः। सः। हव्या।
मानुषाणाम्। इळा। कृतानि। पत्यते। सः। नः। त्रासते।
वरुणस्य। धूर्तेः। महः। देवस्य। धूर्तेः॥ ७॥

सोऽग्निर्मानुषे मनुष्यस्ययजमानस्यसंवन्धिनि वृजने वर्जनीयेपापे निमित्तभूतेसति यज्ञेषु निमित्तेषु शंतमः अत्यन्तंसुखतमः अनिष्टस्यनिवारकत्वात् अतएवहितः स्वर्गाद्यभिमत-साधकत्वात् किंचायं यज्ञेषु विश्पतिः ऋत्विग्रूपाणां प्रजानां अतिशयेनपालकः पत्यावैश्वर्ये इतिपूर्वपदप्रकृतिस्वरेप्राप्ते परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् अतएवप्रियश्चभवति तत्र दृष्टान्तः—जेन्योनविश्पतिः जयशीलोराजेव सयथा परसेनाद्युपद्रवपरिहारेणसम्यक्परिपा-लनेनच प्रजानांप्रियोभवति किंच सोयमग्निः मानुषाणांमनुष्याणां यजमानानां संबन्धीनि ह-व्याहवींषि इळाकृतानि इळायांवेद्यां कृतानि संपादितानिउद्दिश्य पत्यतेपतति आगच्छति किं-च सोऽग्निर्नोऽस्मान्यजमानान्वरुणस्य वारकस्य धूर्तेर्हिंसकस्य भयात् त्रासते त्रायते यद्वा धूर्ते-रितिपञ्चमी वरुणस्यपापदेवस्यधूर्तेर्हिंसकात् किंच महोमहतोदेवस्यधूर्तेर्हिंसातःत्रासतेपालय-ते अयष्टारमग्निर्हिनस्तीतिप्रसिद्धं यद्वा एकमेववाक्यंधूर्तेर्हिंसकस्य महोमहतोवरुणस्यदेवस्य वरुणाख्यायाः पापदेवतायाः धूर्तेर्हिंसातोनोऽस्मान्सोग्निस्त्रासते त्रायते ॥ ७ ॥

७. मनुष्य के पाप-निमित्तक यज्ञ में अग्नि विशेष हितकारी हैं। विजयी राजा की तरह यज्ञ-स्थल में अग्नि मनुष्य के पालक और प्रिय हैं। यजमानों की यज्ञवेदी में रखे हव्य के लिए अग्नि आते हैं। हिंसक यज्ञ-बाधक के भय से और उन महान् पापदेव की हिंसा से अग्निदेव हमारा उद्धार करें।

अथाष्टमी–

अग्निंहोतारमीळतेवसुधितिंप्रियंचेतिष्ठमरतिंन्येरिरेहव्यवाहंन्येरिरे।
विश्वायुंविश्ववेदसंहोतारंयजतंकविम्।
देवासोरण्वमवसेवसूयवोगीर्भीरण्वंवसूयवः॥ ८॥ १५॥

अग्निम् । होतारम् । ईळते । वसुऽधितिम् । प्रियम् । चेतिष्ठम् ।
अरतिम् । नि । एरिरे । हव्यऽवाहम् । नि । एरिरे । विश्वऽआयुम् ।
विश्वऽवेदसम् । होतारम् । यजतम् । कविम् । देवासः । रण्वम् ।
अवसे । वसुऽयवः । गीःऽभिः । रण्वम् । वसुऽयवः ॥ ८ ॥ १५ ॥

अमुमग्निं होतारं आह्वातारं होमनिष्पादकंवा ईळते ऋत्विजःस्तुवन्ति तथा वसुधितिं धनस्यधारयितारंवा अतएवप्रियंसर्वेषां प्रियतमं चेतिष्ठं अतिशयेनयजमानानांचेतयितारं यद्वा प्रकृष्टचेतनवन्तं चेतृशब्दात्तुश्छन्दसीतीष्ठन् तुरिष्ठेमेयःस्वितितृलोपः अरतिंईश्वरं तादृशंदेवं न्येरिरे नितरांप्राप्ताः प्राप्तिरेवविशेष्यते हव्यवाहंन्येरिरे निःशेषेणप्राप्ताः इतरदेवेभ्योहव्यंवोढुंयथाप्रभवतितथानितरांप्राप्ताः पुनःकीदृशं विश्वायुं सर्वत्रप्राणिजीवनं विश्ववेदसंसर्वप्रज्ञं होतारंदेवानामाह्वातारं यजतं यजनीयंकविंसर्वज्ञं इरप्रेरणे इरगतावित्यन्यतमस्यलिटिरूपं किंच देवासोदेवनशीलाः ऋत्विजः रण्वं अतिप्रध्वानंशब्दयन्तं अवसेस्यरक्षणाय वसूयवः वसुकामाःसन्तः पुनःकीदृशाः गीर्भिःस्तुतिभिः रण्वं रणयन्तं रमणीयंवा वसूयवः वसुहवीरूपमन्नं अग्नयेप्रदातुमात्मनइच्छन्तः न्येरिरे प्रीतोयथाधनंप्रयच्छति तथाहविरादिनाप्राप्ताइत्यर्थः ॥ ८ ॥

८. धनधारक, सर्व-प्रिय, सुबुद्धिदाता और विरामरहित अग्नि की, ऋत्विक् लोग स्तुति करते और उन्हें भली भाँति प्राप्त किये हुए हैं। हव्यवाही, प्राणियों के प्राण-रूप, सर्वप्रज्ञा-समन्वित, देवों के बुलानेवाले, यजनीय और मेधावी अग्नि को ऋत्विकों ने अच्छी तरह प्राप्त कर लिया है। अर्थाभिलाषी होकर ऋत्विक् लोग, अग्नि को हव्य-रूप अन्न देने की इच्छा करते हुए, आश्रय-प्राप्ति के लिए, रमणीय और शब्दकारी अग्नि को प्राप्त हुए हैं।

यंत्वंरथमित्येकादशर्चंतृतीयंसूक्तम् पारुच्छेपंसर्वमात्यष्टमित्युक्तत्वादत्यष्टीछन्दस्कं अनुक्तत्वादैन्द्रं प्रमावोअस्मइत्यादिकेद्वे अतिशक्कर्यौ षष्ट्यक्षरोपेतत्वात् पाहिनइत्यन्त्याष्टिः चतुःषष्ट्यक्षरोपेतत्वात् प्रतद्वोचेयमितिषष्ठीइन्दुदेवत्या तथानुक्रमणिका—यंत्वमेकादशषष्ठचैन्दवीप्रमावोतिशक्कर्यावष्टिरन्त्येति । दशरात्रस्यषष्ठेहनिमरुत्वतीयशस्त्रेएतत्सूक्तं षष्ठस्येतिखण्डेसूत्रितम्—यंत्वंरथमिन्द्रसयोवृषेति ।

यंत्वंरथमिन्द्रमेधसातयेपाकासन्तमिषिरप्रणयसिप्रानवद्यनयसि ।
सद्यश्चित्तमभिष्टयेकरोवशश्चवाजिनम् ।
सास्माकमनवद्यतूतुजानवेधसामिमांवाचंनवेधसाम् ॥ १ ॥

यम् । त्वम् । रथम् । इन्द्र । मेधऽसातये । अपाका । सन्तम् ।
इषिर । प्रऽनयसि । प्र । अनवद्य । नयसि । सद्यः । चित् । तम् ।
अभिष्टये । करः । वशः । च । वाजिनम् । सः । अस्माकम् ।
अनवद्य । तूतुजान । वेधसाम् । इमाम् । वाचम् । न । वेधसाम् ॥१॥

हेइन्द्र इषिर यज्ञगमनशील त्वंमेधसातये यज्ञस्यदानाय लाभायवा यं यजमानं प्रतिरथं प्रणयसि प्रापयसि द्विकर्मकोयं कीदृशं यजमानं अपाका अपाकं अनल्पमज्ञयाधिकारवन्तं पाकःपक्तव्योभवतीतियास्कः । अतएव सन्तं पण्डितंसन्तं किंच हेअनवद्य अनिन्दित यं यजमानं धनविद्यादिनाप्रणयसि प्रकृष्टंनयसि तं यजमानं सद्यश्चित् तदानीमेव तदनुग्रहकालएव अभिष्टये आभिमुख्येनयागाय अभिमतप्राप्तयेवा अभिपूर्वादिषेःकिन् शकंध्वादित्वात्पररूपत्वं गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं करः समर्थंकरोषि लेटिव्यत्ययेनशप् एवंकृत्वाच वाजिनं हविर्लक्षणमन्नंतद्वन्तं वावशः कामयसेच वष्टेर्लेटचडागमः तिङःपरत्वादनिघातः यजमानेनआहूतःसन् शीघ्रमेवागत्य हविःस्वीकृत्य यागंसाधुनिर्वर्त्य तंचाभिमतफलेनसंयोज्य पुनर्हविः स्वीकरोषीत्यर्थः हेइन्द्र अनवद्यअनिन्दित सर्वैःस्तूयमान तूतुजान अस्माननुग्रहीतुं त्वरमाण तुजेःप्रेरणार्थाल्लिटःकानच् तुजादीनांदीर्घोभ्यासस्येत्यभ्यासस्यदीर्घत्वम् सत्वं सोचिलोपेचेदितिसंहितायांसोर्लोपः सत्वं वेधसां विविधफलकर्तॄणांमध्येश्रेष्ठतया वेधसां मेधाविनां अस्माकं संबन्धिहविः स्वीकुर्वित्यर्थः तत्रदृष्टान्तः—इमांवाचंन अस्मदीयांस्तुतिरूपांवाचमिव स्तुतिंयथास्वीकरोषितथाहविरपीत्यर्थः ॥ १ ॥

१. हर्ष-सम्पन्न यज्ञगामी इन्द्र, यज्ञ-लाभ के लिए रथ पर चढ़कर जिस प्रभूत ज्ञान-युक्त यजमान के पास जाते हो और जिसे धन और विद्या में उन्नत करते हो, उसे तुरत सफल-मनोरथ और हव्यशाली कर दो। हर्ष-युक्त इन्द्र, हम पुरोहितों में भी पुरोहित हैं। हमारे स्तव करने पर तुम शीघ्रता से हमारी स्तुति और हव्य ग्रहण करते हो। अथद्वितीया—

सःश्रुधियःस्मापृतनासुकासुचिद्दक्षाय्यंइन्द्रभरहूतयेनृभिरसि
प्रतूर्तयेनृभिः । यःशूरैःस्व१ःसनितायोविप्रैर्वाजंतरुता ।
तमीशानासइरधन्तवाजिनंपृक्षमत्यंनवाजिनम् ॥ २ ॥

---

१ नि० ३,१२.

सः । श्रुधि । यः । स्म । पृतनासु । कासु । चित् । दक्षाय्यः ।
इन्द्र । भरऽहूतये । नृऽभिः । असि । प्रऽतूर्तये । नृऽभिः । यः ।
शूरैः । स्वरिति स्वः । सनिता । यः । विप्रैः । वाजम् । तरुता । तम् ।
ईशानासः । इरधन्त । वाजिनम् । पृक्षम् । अत्यम् । न । वाजिनम् ॥ २ ॥

हेइन्द्र सवक्ष्यमाणगुणविशिष्टस्त्वं श्रुधि अस्मदाह्वानं स्तोत्रंवाशृणु हेर्धिभावः यःस्म यःखलुत्वं नृभिः मनुष्यैरेवसद्भिः पश्चाद्देवत्वमापन्नैर्मरुद्भिः पुनस्तएवविशेष्यन्ते नृभिः संग्रामनयनशीलैः इन्द्रस्यमरुतांसाहाय्यं इन्द्रोमरुद्भिर्मरुतोहैनंनाजहुरित्यादिषुप्रसिद्धं । तैःसहितःसन् कासुचिव् पृतनासु सर्वेषु प्रौढेष्वपि संग्रामेषुभरहूतयेभरणविशिष्टाह्वानयुक्ताय प्रतूर्तयेप्रकृष्टहिंसनाय यद्वा भरहूतयेशूरोभवप्रहरेत्येवमादिभरणयुक्ताह्वानाय प्रतूर्तयेचशूराणां प्रकृष्टवधायच दक्षाय्योसि प्रवर्धनशीलोसि यद्वा नृभिर्नेतृभिर्यजमानैः प्रार्थितःसन्प्रतूर्तये शत्रूणां पापानांवाप्रकृष्टहिंसनाय दक्षाय्यः असिसमर्थोसि किंच यस्त्वंशूरैः शौर्योपेतैर्मरुद्भिरन्यैर्भटैर्वा सहितःसन् स्वः स्वयमेवसनिता संग्राममयस्य अन्यस्यवामनीषितस्य सनितासंभक्तासिसत्यपितेषांसाहित्येअन्यनैरपेक्ष्येणैवतरुतासीत्यर्थः तरतेस्त्रिनि ग्रसितस्कभितेत्यादौनिपात्यते यश्चत्वं विप्रैर्मेधाविभिर्ऋत्विग्भिःस्तुतःसन् वाजं तरुता तेभ्योऽन्नस्यदातासि विप्रैर्मरुद्भिःसहितइतिवासंबन्धः तंतादृशंवाजिनं गमनवन्तंपृक्षंहविर्लक्षणान्नवन्तंइन्द्रं ईशानासः सम्यगभ्यर्थयितुं समर्थाऋत्विजः इरधन्तसंराधयन्ति सेवन्ते तत्रदृष्टान्तः—वाजिनं वेजनवन्तं गमनवन्तं पृक्षं घासाद्यन्नवन्तंअत्यंन अश्वमिव तंयथासमर्थाः स्वादुघासंप्रदानादिनापोषयन्ति तद्वव् अत्यइत्यश्वनाम अत्योहयइति तन्नामसुपठितत्वाव् ॥ २ ॥

२. इन्द्र, तुम युद्ध के नेता हो। तुम मरुतों के साथ प्रधान-प्रधान युद्धों में स्पर्द्धा के साथ शत्रु-संहार में समर्थ हो। वीरों के साथ तुम स्वयं संग्राम-सुख अनुभव करते हो। ऋत्विकों की स्तुति करने पर तुम उन्हें अन्न दो। हमारी स्तुति सुनो। प्रार्थनापरायण ऋत्विक् लोग गमनशील अन्नवान् इन्द्र की, अश्व की तरह, सेवा करते हैं।

अथतृतीया—

दस्मोहिष्माृषणंपिन्वसित्वचंकंचिद्यावीररुंशूरमर्त्यंपरिवृणक्षिमर्त्यम् ।
इन्द्रोततुभ्यंतद्दिवेतद्रुद्रायस्वयशसे ।
मित्रायवोचंवरुणायसप्रथःसुमृळीकायसप्रथः ॥ ३ ॥

---

१ ऐ० ब्रा० ३.२० ।

दुस्मः । हि । स्म । वृषणम् । पिन्वसि । त्वचम् । कम् । चित् । यावीः ।
अररुम् । शूर । मर्त्यम् । परिऽवृणक्षि । मर्त्यम् । इन्द्र । उत । तुभ्यम् ।
तत् । दिवे । तत् । रुद्राय । स्वऽयशसे । मित्राय । वोचम् । वरुणाय ।
सऽप्रथः । सुऽमृळीकाय । सऽप्रथः ॥ ३ ॥

हेइन्द्र त्वं दस्मोहि शत्रूणामुपक्षपणकर्ताखलु अतएवकारणात् वृषणं स्वतोवर्षणशीलं त्वचं संवरणवन्तं पुटबन्धनवत् उदकवेष्टनवन्तं कंचिज्जलधारिणंमेघंपिन्वसि निर्भिद्यसेचयसि किंच मर्त्यं मर्त्यवत् अररुं अरणशीलं गमनस्वभावं कंचिन्मेघं हेशूर विक्रान्त यावीः मिश्रयसि यौतेश्छान्दसेलुङि छान्दसोऽडभावः अवर्षणेनगच्छन्तंबलान्निगृह्यवर्षयसीत्यर्थः यथाशूरःकश्चिद्बलवन्तंगच्छन्तंवैरिणंनिगृह्यस्वीकरोति तद्वदित्यर्थः तथा मर्त्यंमरणशीलं शीर्यमाणस्वभावं निरुदकं कंचिन्मेघं परिवृणक्षि सर्वतोवर्जयसि औदासीन्यंकरोषीत्यर्थः हे इन्द्र तत्तादृशंकर्म वर्षणरूपं सप्रथः सर्वतः पृथुयथाभवतितथा तुभ्यं वोचं ब्रवीमि इन्द्रएव विशेष्यते स्वयशसेस्वकीययशोयुक्ताय तथा दिवेउत त्वदाश्रयभूतायैद्युलोकदेवतायैअपितत्तादृशंकर्मवोचंब्रवीमि उतशब्दोऽपिशब्दार्थः वर्षणकर्मणः द्युदेवतायाः आनुकूल्यात्तस्याअपि वचनंयुक्तं तथा रुद्रायजगतांदुःखद्रावयित्रेरोदनशीलायवाग्नयेतद्वोचं रुद्रोवैक्रूरोयदयमग्निरितिश्रुतेः । अग्नेरुद्रत्वं सोरोदीद्यदरोदीत्तद्रुद्रस्यरुद्रत्वमितिश्रुतेः । रोदनस्वभावत्वंप्रसिद्धं तस्य चाहुतिद्वारावृष्ट्यनुकूलत्वात्तस्यापिकथनंयुक्तं स्वयशसइत्यस्यरुद्रायेत्यनेनवासंबन्धः सन्निहितत्वाद्योग्यत्वाच्च स्वकीययशोयुक्तायाग्नयेइत्यर्थः तथामित्रायअहरभिमानिदेवतायैतद्वोचं वरुणायरात्र्यभिमानिदेवतायै अहोरात्रेवैमित्रावरुणौ अहोरात्राभ्यांखलुवैपर्जन्योवर्षतीति तथा मैत्रंवाअहर्वारुणीरात्रिरित्यादिश्रुतिभ्यः मित्रावरुणयोरहोरात्राभिमानिदेवत्वं अतएवश्रुतेः वृष्टिप्रदातृत्वात् ताभ्यामपिप्रथनंयुक्तम् सुमृळीकाय शोभनसुखयित्रे प्रजानां एतत्सर्वत्रसंबध्यते उक्तेभ्योदेवेभ्यः सप्रथः सर्वतः पृथुअतिविस्तीर्णंयथाभवतितथा तद्वर्षणकर्मब्रवीमि॥३॥

३. इन्द्र, तुम शत्रुओं का नाश करनेवाले हो। वृष्टिपूर्ण त्वचारूप मेघ का भेदन करके जल गिराते हो और मर्त्य की तरह गमनशील मेघ को पकड़कर और उसे वृष्टि-रहित करके छोड़ देते हो। इन्द्र, तुम्हारे इस कार्य को हम तुमसे और द्यु, यशोयुक्त रुद्र, प्रजाओं के सुखदात्री मित्र तथा वरुण से कहेंगे।

अस्माकंवइन्द्रमुश्मसीष्टयेसखायंविश्वायुंप्रासहंयुजंवाजेषुप्रासहंयुजम् ।
अस्माकंब्रह्मोतयेवापृत्सुषुकासुचित् ।
नहित्वाशत्रुःस्तरतेस्तृणोषियंविश्वंशत्रुंस्तृणोषियम् ॥ ४ ॥

१ तै० सं ६. २. ३. । २ तै० सं० १. ५. १. ।

अस्माकम् । वः । इन्द्रम् । उश्मसि । इष्टये । सखायम् ।
विश्वऽआयुम् । प्रऽसहम् । युजम् । वाजेषु । प्रऽसहम् । युजम् ।
अस्माकम् । ब्रह्म । ऊतये । अव । पृत्सुषु । कासु । चित् ।
नहि । त्वा । शत्रुः । स्तरते । स्तृणोषि । यम् । विश्वम् । शत्रुम् ।
स्तृणोषि । यम् ॥ ४ ॥

हे ऋत्विजः अस्माकमस्मदर्थं वः युष्मदर्थंचइष्टये यागाय अभिमतैषणायवा इन्द्रमुश्मसि अभिमतंकामयामहे वशकान्तौ आदादिकः इदन्तोमसिः ग्रहिज्येत्यादिनासंप्रसारणं यद्वा अस्माकं सखायमितिसंबन्धः कीदृशमिन्द्रं सखायं सखिवदत्यन्तहितकारिणं समानख्यानंवा विश्वायुं विश्वेषां यागानांगन्तारं प्रासहं प्रकर्षेणशत्रूणांमर्षयितारं सहेःक्विप् नहिवृतीत्यादिनोपसर्गस्यदीर्घः युजं सर्वदायुक्तं सहायभूतमित्यर्थः पुनःसएवविशेष्यते वाजेषु हवीरूपान्नेषु तद्वत्सु यज्ञेषुवा निमित्तभूतेषु प्रासहं यज्ञविघातिनः सहमानं युजं अभिमतफलैर्युक्तं मरुद्भिर्वा किंच हेइन्द्र अस्माकमूतये रक्षणायब्रह्मपरिवृढंकर्म अव रक्ष कस्तत्रविशेषइतितत्राह—कासुचित्पृत्सु संग्रामेषु पृत्सु समत्स्विति संग्रामनामसुपाठात्तन्नामत्वं तेषु त्वा त्वांनहिस्तरते न हिनस्ति नविरोधमाचरति यंस्तृणोषि यंविश्वंशत्रुंस्तृणोषिवारयसि सकश्चिदपिशत्रुर्नहिनस्ति तवमहत्त्वेनसर्वेभीताःविधेयाभवन्ति शत्रुभावंनकोप्याचरति अजातशत्रुत्वादित्यर्थः ॥ ४ ॥

४. ऋत्विको, अपने यज्ञ में हम इन्द्र को चाहते हैं। इन्द्र हमारे सखा, सर्व-यज्ञगामी, शत्रुओं के अभिभवकारी और हमारे सहायक हैं। वे यज्ञ-विघ्नकारियों को पराभूत करते और मरुतों में सम्मिलित हैं। इन्द्र, तुम हमारे पालन के लिए हमारी रक्षा करो। लड़ाई के क्षेत्र में तुम्हारे विरुद्ध शत्रु नहीं खड़ा हो सकता। तुम्हीं सारे शत्रुओं का निवारण करते हो।

निषूनमातिमतिंकयस्यचित्तेजिष्ठाभिररणिभिर्नोतिभिरुग्राभिरुग्रोतिभिः।
नेषिणोयथापुरानेनाःशूरमन्यसे।
विश्वानिपूरोरपपर्षिवह्निरासावह्निर्नोअच्छ ॥ ५ ॥

नि । सु । नम । अतिऽमतिम् । कयस्य । चित् । तेजिष्ठाभिः ।
अरणिऽभिः । न । ऊतिऽभिः । उग्राभिः । उग्र । ऊतिऽभिः । नेषि ।
नः । यथा । पुरा । अनेनाः । शूर । मन्यसे । विश्वानि । पूरोः ।
अप । पर्षि । वह्निः । आसा । वह्निः । नः । अच्छ ॥ ५ ॥

हेइन्द्र कयस्य कस्यचित् त्वद्भक्तस्ययजमानस्य अतिमर्तिं अतिक्रान्तमननंविरुद्धमन-स्कंशत्रुंनिषूनम नितरांसुष्ठुनामय अस्मत्प्रणतंकुरु अन्तर्भावितण्यर्थोऽयं हेउग्रउद्गूर्णबलः ऊति-भिः रक्षणैः प्रीतिभिर्वायुक्तःसन् तेजिष्ठाभिररणिभिर्नअतिशयेनतेजस्विभिर्युद्धादिरूपैर्मार्गैरि-व तेजस्वच्छन्दादातिशायनिकइष्ठन् विन्मतोर्लुक् टेरितिटिलोपः अतिमार्तिंवृत्रादिंयथानामितवा-न् तथास्मद्विरोधिनमपीत्यर्थः यद्वा उत्तरत्रान्वयः तेजिष्ठाभिररणिभिर्न तेजोयुक्तैर्गमनसाधनैर्य-ज्ञादिमार्गैर्यथास्मान्योजितवानसि तथाउग्राभिः प्रकाशकाभिः ऊतिभीरक्षणैः यागफलभूतैर्नो-स्मान्नेषिनयसि अभिमतस्वर्गादिफलंप्रापयसीत्यर्थः नयतेश्छान्दसःशपोलुक् तत्रदृष्टान्तः—पुरा-पूर्वस्मिन्काले नः अस्मत्पित्रादीन्यथोतिभिर्नीतवानसि तथानेषीत्यर्थः हेशूर विक्रान्त त्वं अनेनाः मन्यसे सर्वैरपापत्वेनअवबुध्यसे स्वर्गाद्यभिमतसाधकत्वादितिभावः यद्वा अनेनास्त्वं अस्मा-नप्यनेनसोमन्यसे किंच हेइन्द्र वह्निः वृष्ट्यादिप्रदानेनजगतांनिर्वाहकःसन् पूरोर्मनुष्यस्ययज-मानस्यपूरुरितिमनुष्यनाम पूरवःजगतइतितन्नामसुपाठात् तस्यविश्वानिसर्वाण्येनांसि अपपर्षि अपकृत्यपालयसि पृणातेश्छान्दसःशपोलुक् अतोनः अस्माकमपि आसाअन्तिकेदेवयजनदेशे अच्छआभिमुख्येनागत्यवह्निरभिमतानांवोढासन् अप अनभिमतमपकृत्य पर्षि अभिमतफलंपूर-यसि॥ ५॥

५. उग्र इन्द्र, अपने भक्त यजमान के विरुद्धाचारी को, उग्र-रक्षणकार्य-रूप तेजोमय उपायों से, अवनत कर देते हो। जैसे तुम पहले हमारे पूर्वजों को मार्ग दिखाकर ले गये थे, वैसे ही हमें भी ले जाओ। संसार तुम्हें निष्पाप जानता है। इन्द्र, तुम जगत्पालक होकर मनुष्य के सारे पापों को दूर करते हो। हमारे सामने यज्ञ-फल लाकर अनिष्टों का विनाश करो।

अथषष्ठी—

प्रतद्वोचेयंभव्यायेन्दवेहव्योनयइषवान्मन्मरेजतिरक्षोहामन्मरेजति।
स्वयंसोअस्मदानिदोवधैरजेतदुर्मतिम्।
अवंस्रवेदघशंसोवतरमवंक्षुद्रमिवस्रवेत्॥ ६॥

प्र। तत्। वोचेयम्। भव्याय। इन्दवे। हव्यः। न। यः।
इषऽवान्। मन्म। रेजति। रक्षःऽहा। मन्म। रेजति। स्वयम्। सः।
अस्मत्। आ। निदः। वधैः। अजेत। दुःऽमतिम्। अव। स्रवेत्।
अघऽशंसः। अवऽतरम्। अव। क्षुद्रम्ऽइव। स्रवेत्॥ ६॥

भव्याय भवनशीलायप्रतिदिनंकलाभिवृद्ध्यावर्धनशीलायइन्दवेअमृतेनसर्वस्यक्लेदयित्रे त-दर्थंतद्वक्ष्यमाणंकर्मस्तोत्रंवा प्रवोचेयं मकर्षेणवक्तुंशक्तोभूयासं स्तुतेरतिमहत्त्वादितिभावः वचेर्लिङ्याशिष्यङ् वचउम् कस्यतदिति यइन्दुःइषवान् एषणवान् मन्ममननीयं स्तोत्रंकर्मवाउद्दिश्य रेजति गच्छति रेजतिर्गत्यर्थः रेजतिदध्यतीतितन्नामसुपाठात् आगमनेदृष्टान्तः—हव्योन होतव्यआह्वातव्योवाहव्यःइन्द्रइव प्रायेणेन्द्रआगच्छेत्यादिनाइन्द्रएवाहूयते सइवसएवविशेष्यते र-क्षोहायज्ञविघातकानांरक्षसांहन्ता मन्म तेषामेवकर्महननादिरूपंरेजतिगच्छति चालयति ना-शयतीत्यर्थः सएवेन्दुः स्वयंनिदः णिदिकुत्सायांक्विप् सावेकाचइतिविभक्तेरुदात्तता अस्मन्नि-न्दितुर्वैरिणः वधैः हननोपायैः हनश्चवधइतिभावेअप् तत्सन्नियोगेनवधादेशः सचादन्तोऽ-न्तोदात्तः दुर्मतिंदुर्बुद्धिं अस्मत् अस्मत्तः अजेतआक्षिपेत् अवनयेत् किंच अघशंसः अघानां पापानांहिंसादीनांशंसिता स्तेनः अवतरं अत्यन्तनिकृष्टं अवस्वस्थानादवाङ्मुखोभूत्वास्रवेव ग-च्छतुअधःपतत्वित्यर्थः अघशंसःस्तेनः अघशंसः वृकइतितन्नामसुपाठात् अवस्रवणमेवमाथ्य-ते क्षुद्रमिव क्षेप्तुंशक्यमुदकादिकमिव उदकंयथातिष्ठति अवस्रवेन्नश्यतितथासावपीत्यर्थः॥ ६॥

६. भव्य चन्द्र के लिए हम इस स्तोत्र को पढ़ते हैं। चन्द्र, आग्रह के साथ, हमारे कर्म के उद्देश्य से, राक्षस-विनाशी और बुलाने योग्य इन्द्र की तरह आते हैं। वे स्वयं हमारे निन्दक दुर्बुद्धि के वध का उपाय उद्भूत करके उसे दूर कर देंगे। चोर क्षुद्र जल की तरह अतीव निकृष्टता से अधःपतित हो।

वनेमतद्धोत्रयाचितन्त्यावनेमरयिंरयिवःसुवीर्यंरण्वंसन्तंसुवीर्यम्।
दुर्मन्मानंसुमन्तुभिरेमिषापृचीमहि।
आसत्याभिरिन्द्रंद्युम्नहूतिभिर्यजत्रंद्युम्नहूतिभिः॥ ७॥

वनेम। तत्। होत्रया। चितन्त्या। वनेम। रयिम्। रयिऽवः।
सुऽवीर्यम्। रण्वम्। सन्तम्। सुऽवीर्यम्। दुःऽमन्मानम्।
सुमन्तुऽभिः। आ। ईम्। इषा। पृचीमहि। आ। सत्याभिः।
इन्द्रम्। द्युम्नहूतिऽभिः। यजत्रम्। द्युम्नहूतिऽभिः॥ ७॥

हेइन्द्र वयंयजमानाःतत्तादृशंस्तुत्यंतवरूपं यद्वा तत्तेवयंचितंत्यातवगुणान्ज्ञापयन्त्या चितीसंज्ञाने अस्माण्यन्ताच्छतरिव्यत्ययेनशः होत्रया होमसाधनभूतया स्तुतिरूपयावाचा वनेमसंभजेम यद्वा शब्दयेमस्तुतिंकरवामेत्यर्थः होत्रेतिवाङ्नाम होत्रागीरितितन्नामसुपाठात् किंच एवंस्तोतारोव-यमपि हेरयिवः विशिष्टधनवन्निन्द्र रयिंधनं वनेमसंभजेम कीदृशंरयिं सुवीर्यंशोभनसामर्थ्योपे-तं रण्वंरमणीयं गन्तव्यंवार्थिभिः सन्तंसर्वदावर्तमानं यज्ञादिद्वाराबहुशोदीयमानमपिमवर्धमा-

नं पुनस्तदेवविशेष्यते सुवीर्यं शोभनपुत्रभृत्याद्युपेतं धनेनतेषांसंपादयितुंशक्यत्वात् वीरवीर्यौंच-त्युत्तरपदाद्युदात्तत्वं किंच हेइन्द्र दुर्मन्मानंदुःखेनमंतुंशक्यं ईमेनंत्वां तवमहिम्नोऽतिमहत्त्वात् सुमन्तुभिः शोभनैर्मननैः तत्साधनैःस्तोत्रैर्वा ईषाहवीरूपेणान्नेनच आपृचोमहि सर्वतःसंपृक्ताभूयास्म यद्वा इषाअन्नेननिमित्तेन पूर्वंधनस्यप्रार्थितत्वात् इदानीमन्नंप्रार्थ्यते पृचीसंपर्के लिङि छान्दसोविकरणस्यलुक् किंच यजत्रंयागनिष्पादकमिन्द्रं सत्याभिः अविसंवादिनीभिः यथाभिलाषमुपजायमानफलाभिः द्युम्नहूतिभिः हरिवआगच्छ मेधातिथेर्मेषेत्याह्वानैरित्यर्थः पुनस्ताएवविशेष्यन्ते द्युम्नहूतिभिः हविर्लक्षणान्ननिमित्तैराह्वानैरापृचीमहीतिशेषः द्युम्नंद्योतते-र्यशोवान्नंवेतियास्कः ॥ ७ ॥

७. इन्द्र, हम स्तोत्र-द्वारा तुम्हारा गुण-कीर्त्तन करके तुम्हें भजते हैं। धनवान् इन्द्र, हम सामर्थ्यवान्, रमणीय, सदा वर्त्तमान और पुत्र-भृत्यादि-विशिष्ट धन का उपभोग करें। इन्द्र, तुम्हारी महिमा अज्ञेय है। हम उत्तम स्तोत्र और अन्न प्राप्त करें। हम यज्ञ-निष्पादक इन्द्र को यज्ञाभिलाप फल देनेवाले और यशोवर्द्धक आह्वान-द्वारा प्राप्त हों।

अथाष्टमी—

प्रप्रावोअस्मेस्वयशोभिरूतीपरिवर्गइन्द्रोदुर्मतीनांदरीमन्दुर्मतीनाम् ।
स्वयंसारिषयध्यैयानउपेषेअत्रैः ।
हतेमसन्नवक्षतिक्षिप्ताजूर्णिर्नवक्षति ॥ ८ ॥

प्रऽप्र । वः । अस्मे इति । स्वयशःऽभिः । ऊती । परिऽवर्गे । इन्द्रः । दुःऽमतीनाम् । दरीमन् । दुःऽमतीनाम् । स्वयम् । सा । रिषयध्यै । या । नः । उपऽईषे । अत्रैः । हता । ईम् । असत् । न । वक्षति । क्षिप्ता । जूर्णिः । न । वक्षति ॥ ८ ॥

हेऋत्विजः वोयुष्मदर्थं अस्मेअस्मदर्थंचअयमिन्द्रः स्वयशोभिः स्वकीययशोयुक्तैः ऊती ऊतिभिःरक्षणैः दुर्मतीनां दुर्मननयुक्तानांविरोधिनांपरिवर्गेपरितोवर्जनेनिमित्तभूतेसति प्रप्र प्रकृष्टोभवति समर्थोभवतीत्यर्थः द्विर्भावःपादपूरणः यद्वा हेऋत्विजः वोयुष्मदर्थं अस्मे अस्माकं संबन्धिभिः स्वयशोभिः स्वयमेवान्यनैरपेक्ष्येण स्तोतुंसमर्थैःस्तोत्रैस्तुष्टःसन् ऊती ऊतौरक्षणे प्रप्र प्रकृष्टोभवति उपसर्गश्रुतेर्योग्यक्रियाध्याहारः कुत्रेतितदुच्यते—दुर्मतीनांदुष्टानां परिवर्गेपरितोवर्जनवतिसंग्रामेयागेवा पुनःसएवविशेष्यते दुर्मतीनांदुष्टबहुमानव-

---

१ नि० ५.५.।

तां हननबुद्धीनांदरीमन् दरीमणि अतिशयेनदारयितरि एवमिन्द्रे सम्यक् पालयतिसति अत्रैर्भ-क्षकैरस्मद्विरोधिभिर्याजूर्णिः जववतीसेनाजूर्णिर्जवतेर्वाद्रवतेर्वादूनोतेर्वेतियास्कः। नोऽस्मान्प्रति रिषयध्यै हिंसितुं रिषेर्ण्यन्ताचुमर्थेशध्यैप्रत्ययः उपेषेउपगन्तुंअस्मान्प्राप्तुं ईङ्गतौतुमर्थेक्सेप्रत्ययः क्षिप्ताप्रेरितासासेनास्वयंहतेमसत् हिंसितैवासीत् अतःनवक्षति अस्मान्नवहेत्नप्राप्नोति तथास्मद्धिंसकान्शत्रूनपि पुनर्नवक्षतिनवहति वहतेर्लेट्यडागमः सिब्बहुलमितिसिप् इन्द्रसामर्थ्येनतत्रैवनष्टाभूदित्यर्थः ॥ ८ ॥

८. ऋत्विको, तुम्हारे और हमारे लिए इन्द्र यशस्कर आश्रयदान-द्वारा दुर्बुद्धि लोगों के विनाशक संग्राम में प्रवृद्ध हों और उन्हें विदीर्ण करें। हमारे भक्षक शत्रुओं ने हमारे विरुद्ध, हमारे नाश के लिए, जो वेगवती सेना भेजी थी, वह सेना स्वयं हत हो गई है; हमारे पास पहुँची भी नहीं; शत्रुओं के पास भी नहीं लौटी।

अथनवमी—

त्वंनइन्द्ररायापरीणसायाहिपथाँअनेहसापुरोयाह्यरक्षसा।
सचस्वनःपराकआसचस्वास्तमीकआ।
पाहिनोदूरादारादभिष्टिभिःसदापाह्यभिष्टिभिः ॥ ९ ॥

त्वम्। नः। इन्द्र। राया। परीणसा। याहि। पथा। अनेहसा। पुरः। याहि। अरक्षसा। सचस्व। नः। पराके। आ। सचस्व। अस्तम्ऽईके। आ। पाहि। नः। दूरात्। आरात्। अभिष्टिऽभिः। सदा। पाहि। अभिष्टिऽभिः ॥ ९ ॥

हेइन्द्र त्वंनः पथास्मत्संबन्धिनामार्गेण पुरायाहिआगच्छ भस्यटेर्लोपः उदात्तनिवृत्तिस्वरेणतृतीयायाउदात्तत्वं कीदृशेनमार्गेणअनेहसा अपापेन यज्ञगमनमार्गस्यश्रुतिचोदितत्वादनेहस्त्वं यद्वा नोऽस्मानुद्दिश्ययाहि किंविशिष्टइति परीणसा परितोनद्धेन रायाअस्मभ्यंदातव्येनबहुविधधनेनयुक्तःसन् हेइन्द्र नोऽस्मान् पराके अत्यन्तदूरदेशात् स्वर्गलक्षणात् आसचस्वसमवेतोभव पराकइतिदूरनाम पराकेपराचैरितितन्नामसुपाठात् तथा अस्तमीके अत्यन्तान्तिकेदेवयजनदेशे सचस्व अस्मत्प्रत्तंहविः सेवस्व संगच्छस्ववा किंच नोऽस्मान्दूरात् दूरदेशात्स्वर्गादेः सकाशात्पाहि रक्ष आरात्संनिहितादिहलोकात् पाहिपालय यद्वा दूरात् अयागकालेस्वर्गेएवोषितवास्मान्पाहि पालयआरात् यागकाले संनिहितेदेवयजनदेशे पाहि केनेतितदुच्यते—अभिष्टि

१ नि० ६, ४.।

भिः अभिमुखैर्यागैः तन्निर्वाहैः यद्वा अभ्यागमनैः किंवहुना सदासर्वकालं यागकालेअयागकालेदूरे अन्तिकेचअभिष्टिभिः अभितएषणैः पाहि सम्यक्परिपालय ॥ ९ ॥

९. इन्द्र, राक्षस-शून्य और पाप-रहित मार्ग से प्रचुर धन लेकर हमारे पास आओ। इन्द्र, तुम दूर देश और निकट से आकर हमारे साथ मिलो। तुम दूर और निकट प्रवेश से, यज्ञ-निर्वाह के लिए हमारी रक्षा करो। यज्ञ-निर्वाह करके सदा हमें पालित करो।

त्वनइन्द्ररायातरूषसाग्रंचित्त्वामहिमासक्षदवसेमहेमित्रंनावसे ।
ओजिष्ठत्रातरवितारथंकंचिदमर्त्य ।
अन्यमस्मद्रिरिषेःकंचिदद्रिवोरिरिक्षन्तंचिदद्रिवः ॥ १० ॥

त्वम् । नः । इन्द्र । राया । तरूषसा । उग्रम् । चित् । त्वा । महिमा । सक्षत् । अवसे । महे । मित्रम् । न । अवसे । ओजिष्ठ । त्रातः । अवितरिति । रथम् । कम् । चित् । अमर्त्य । अन्यम् । अस्मत् । रिरिषेः । कम् । चित् । अद्रिऽवः । रिरिक्षन्तम् । चित् । अद्रिऽवः ॥ १० ॥

हेइन्द्र त्वंनः अस्मान्तरूषसा तरुणकुशलेनअस्मानापद्भ्यः उत्तरीतुंशकेनरायाधनेनउद्धर्ताभवेतिशेषः हेइन्द्र त्वात्वां उग्रंचित् उद्गूर्णबलंसन्तं त्वामेवमहिमा महत्त्वं अस्मत्स्तोत्रजनितः कश्चिदतिशयः सक्षत् सेवते संभजते उत्कर्षयतीत्यर्थः किमर्थंअवसेत्वत्प्रीतये तत्रदृष्टान्तः—महेमहते अवसेरक्षणायप्रकाशारोग्यादिरूपायमित्रंन सर्वजनमित्रंसूर्यमिव तंयथामहत्त्वेनसंयोजयन्ति तथेत्यर्थः यद्वा मित्रंन प्रियहितरूपंसखायमिवतंयथामहत्यैप्रीतयेसंभजन्तेतद्वत् किंच हेओजिष्ठओजस्विवम अतिशयेनबलवन् त्रातः रक्षितः अस्मान्पालयितः वा अमर्त्यअमरणधर्मन् इन्द्र अवितः अस्मान् धनेनतर्पयितस्त्वं कंचिद्रथं वेगवन्तमारुह्यअस्मद्देवयजनंशीघ्रमागच्छेतिशेषः तथा हेअद्रिवः शत्रूणामतिशयेनभक्षकेन्द्र अस्मदन्यं रिरिक्षन्तं चित् अल्पंमहान्तंवाशत्रुमितिशेषः रिरिषेः बाधस्व तथा हेअद्रिवः अद्रेरादर्तः भक्षकवाशत्रूणां अद्रिवच्चद्रिरादृणात्यनेनापिवात्तेःस्यादितिनिरुक्तम् । रिरिक्षंतंचित् अत्यन्तकुत्सितं हिंसन्तमपिशत्रुंरिरिषेः बाधस्व रिषहिंसायां छान्दसःशपःश्लुः पुनर्व्यत्ययेनशः रिरिक्षन्तं अस्मादेव सनि हलन्ताच्चेति सनःकित्त्वाद्गुणाभावः चिदित्यवकुत्सितः कुल्माषांश्चिदाहरेत्यवकुत्सितइतियास्केनोक्तत्वात् । यद्वा समुच्चयार्थः कंचिदित्यनेनसहसमुच्चीयते ॥ १० ॥

१०. इन्द्र, जिस धन से हमारी आपदा का उद्धार हो सकता है, उसी धन से हमारा उद्धार करो। तुम उग्ररूप हो। जैसी मित्र की महिमा है, हमारी रक्षा के लिए तुम्हारी भी वैसी ही महिमा हो। हे

---

१ नि० ४. ४. । २ नि० १.४. ।

बलवत्तम, हमारे रक्षक, त्राता और अमर इन्द्र, किसी भी रथ पर चढ़कर आओ। शत्रुनाशक इन्द्र, हमें छोड़कर सबको बाधा दो। शत्रुभक्षक, अतीव कुकर्मी शत्रु को बाधा दो।

पाहिनंइन्द्रसुष्टुतास्रिधोंवयातासदमिद्दुर्मतीनांदेवःसन्दुर्मतीनाम्।
हन्तापापस्यरक्षसंस्त्राताविप्रस्यमावतः।
अधाहित्वांजनिताजीजनद्वसोरक्षोहणंत्वाजीजनद्वसो ॥११॥१७॥

पाहि। नः। इन्द्र। सुऽस्तुत। स्रिधः। अवऽयाता। सदम्। इत्। दुःऽमतीनाम्। देवः। सन्। दुःऽमतीनाम्। हन्ता। पापस्य। रक्षसः। त्राता। विप्रस्य। माऽवतः। अध। हि। त्वा। जनिता। जीजनत्। वसो इति। रक्षःऽहनम्। त्वा। जीजनत्। वसो इति॥ ११ ॥ १७ ॥

हेइन्द्र सुष्टुत शोभनस्तुत त्वंस्रिधः दुःखाद् तदुत्पादकात्पापाद्वा नोऽस्मान्पाहिरक्ष यतस्त्वं दुर्मतीनां दुर्मनस्कानां रक्षःप्रभृतीनां नामन्यतरस्यामितिनामउदात्तत्वं सदमित् सर्वदैवअवयाता अधोयापयिता मापयितासि अतःपाहि अतएवहेइन्द्र देवोऽस्मत्स्तुत्याहृष्टःसन् दुर्मतीनां दुष्टमननवतां यागविघातकानां अवयातासि तथारक्षसोरक्षणनिमित्तभूतस्य रक्षोरक्षितव्यमस्मादितियास्कः। तादृशस्यपापस्य फलप्रतिबन्धरूपस्य हन्ताघातकोसि यद्वा पापस्य पापिनोरक्षसोराक्षसादेर्हन्तासि तथामावतोमत्सदृशस्यविप्रस्य मेधाविनोयजमानस्य त्राता रक्षितासि अध अतोहेतोः हेइन्द्र वसो सर्वेषां निवासभूत त्वात्वांजनिता सर्वस्यजनयिता आदिकर्तापरमेश्वरोजीजनत् अजनयत् उत्पादितवान् तथा हेवसो वासयितः त्वा त्वां रक्षोहणं जीजनत् रक्षोहननायोत्पादितवान् जनयतेर्लुङिचङिरूपं यज्ञादिविघातिनांरक्षःप्रभृतीनां विघातायहीन्द्रस्यावतारः तमिन्द्रं देवानव्यसृज्यन्तेत्यादिप्रसिद्धिद्योतनार्थोहिशब्दः ॥ ११॥

११. शोभन स्तुति से युक्त इन्द्र, दुःख से हमें बचाओ; क्योंकि तुम सदा दुष्टों को नीचा दिखाते हो। हमारी स्तुति से प्रसन्न होकर यज्ञ-विघ्नकारियों को दमन करो। तुम पाप-राक्षस के हन्ता और हमारे समान बुद्धिमानों के रक्षक हो। जगन्निवास इन्द्र, इसी लिए परमेश्वर ने तुम्हें उत्पन्न किया है। निवास-प्रद इन्द्र, राक्षसों के विनाश के लिए तुम्हारी उत्पत्ति हुई है।

एन्द्रयाहीुपनइतिदशर्चंचतुर्थंसूक्तम् पारुच्छेपमैन्द्रं अन्त्यासनोनव्येभिरित्येषात्रिष्टुप् शिष्टाअत्यष्टयः अत्रत्रिष्टुबन्तपरिभाषानाश्रीयते सर्वमात्यष्टमितिविशेषेणप्रतिज्ञातत्वाद् एन्द्रयाहिदशान्त्यात्रिष्टुबित्यनुक्रमणिका पृष्ठ्यषडहस्यषष्ठेहनिनिष्केवल्यमेतत्सूक्तं षष्ठस्येतिखण्डेसू-

१ नि० ४. १८.।

त्रितम्—एन्द्रयाह्युपनःप्रघान्वस्येति महाव्रतेमाध्यन्दिनसवने ब्राह्मणाच्छंसिनोऽनुरूपतृचे प्रथमाएन्द्रयाहीत्येषा महाव्रतस्यपञ्चविंशतिमितिखण्डेशौनकेनसूत्रितम्—एन्द्रयाह्युपनःपरावतइन्द्रायहिद्यौरसुरोअनम्रतेति ।

सैषासूक्तेप्रथमा—

एन्द्र॑याह्युप॑नःपरा॒वतो॒नायमच्छा॑वि॒दथा॑नीव॒सत्प॑ति॒रस्त॒ंराजे॑व॒सत्प॑तिः ।
हवा॑महे॒त्वाव॒यंप्रय॑स्वन्तःसु॒तेसचा॑ ।
पु॒त्रासो॒नपि॒तरं॒वाज॑सातये॒मंहि॑ष्ठं॒वाज॑सातये १ ॥

आ । इन्द्र॒ । या॒हि॒ । उप॑ । नः॒ । प॒रा॒ऽवतः॑ । न । अ॒यम् । अच्छ॑ ।
वि॒दथा॑निऽइव । सत्ऽप॑तिः । अस्त॑म् । राजा॑ऽइव । सत्ऽप॑तिः ।
हवा॑महे । त्वा॒ । व॒यम् । प्रय॑स्वन्तः । सु॒ते । सचा॑ । पु॒त्रास॑ः । न ।
पि॒तर॑म् । वाज॑ऽसातये । मंहि॑ष्ठम् । वाज॑ऽसातये ॥ १ ॥

हेइन्द्र परावतः दूरदेशात्स्वर्गलक्षणान्नोऽस्मानुपयाहि अस्मत्समीपंप्रत्यागच्छ तत्रदृष्टान्तः—अयंनपुरोवर्ती अग्निरभिषुतः सोमोवाप्रस्तुतत्वान्निर्दिश्यते सइवयद्यपि पुरस्तादुपचारान्निषेधार्थीयोनकारःसर्वत्र तथाप्यत्रौचित्येनोपमार्थीयोगृह्यते यद्वा परावतोन दूरदेशादिव यद्यपि यज्ञेसर्वदासंनिहितस्तथापि ,स्वर्गाख्याद्दूरदेशादिव अस्मिन्यज्ञे अयमिति विभक्तिव्यत्ययः अमुंदेवयजनदेशं अच्छअभिप्राप्तुं आयाहीतिशेषः तत्रदृष्टान्तः—सत्पतिः सतांसर्वदा वर्तमानानामृत्विजां पालकोयजमानइव पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वं सयथा विदथानि वेदनानि अनुष्ठेयज्ञानानि यद्वा सतां विद्यमानानां फलानां पालकोऽग्निः सयथा विदथानि यज्ञगृहाण्यागच्छति तद्वत् त्वमपि यज्ञगृहाण्यागच्छ यद्वा सतां नक्षत्राणां पतिश्चन्द्रमाः राजा राजमानःसन्अस्तमिव सयथा स्वधामस्थानमागच्छति तद्वत् किंच प्रयस्वन्तोहविर्लक्षणान्नवन्तोवयं यजमानाः त्वा त्वां हवामहे आह्वयामः किमर्थं सुते अभिषुतेसोमेनिमित्तभूतेसति कीदृशावयं सचा ऋत्विग्भिःसहिताः सचासहेत्यर्थंइतियास्कः । आह्वाने दृष्टान्तः—पुत्रासः पुत्राः पितरं

१ नि ५. ५. ।

न पालकंजनकमिव तंयथावाजसातयेअन्नस्यसंभजनाय आह्वयन्तितथा वयमपित्वांतदर्थ-माह्वयामः किंच मंहिष्ठं मंहनीयं त्वां वाजसातये संग्राममप्राप्तये तज्जयाय हविःस्वीकारायवा-आह्वयामः ॥ १ ॥

१. जैसे यज्ञशाला में ऋत्विकों के पति यजमान हैं और जैसे नक्षत्रों के पति चन्द्र अस्ताचल जाते हैं, वैसे ही तुम भी, पुरोवर्त्ती सोम की तरह, स्वर्ग से हमारे पास आओ। जैसे पुत्र लोग अन्न-भक्षण के लिए पिता को बुलाते हैं, वैसे ही तुम्हें हम सोमाभिषव में बुलाते हैं। ऋत्विकों के साथ हव्य ग्रहण के लिए महान् इन्द्र को हम बुलाते हैं।

षष्ठेहनिमाध्यंदिनसवनेप्रस्थितयाज्यानांपुरस्तादन्याऋचःप्रक्षेपणीयाः तत्रहोतुःपुरस्ता-त्पिबासोममिन्द्रेत्येषा षष्ठस्यप्रातःसवनइतिखण्डेसूत्रितम्—पिबासोममिन्द्रसुवानमद्रिभिरिन्द्राय-हिद्यौरसुरोअनम्नतेति। सैषासूक्तेद्वितीया—

पिबासोममिन्द्रसुवानमद्रिभिःकोशेनसिक्तमवतंनवंसगस्तातृषाणोनवंसगः।
मदायहर्यतायतेतुविष्टमायधायसे।
आत्वायच्छन्तुहरितोनसूर्यमहाविश्वेवसूर्यम् ॥ २ ॥

पिब। सोमम्। इन्द्र। सुवानम्। अद्रिऽभिः। कोशेन। सिक्तम्। अवतम्। न। वंसगः। ततृषाणः। न। वंसगः। मदाय। हर्यताय। ते तुविःऽतमाय। धायसे। आ। त्वा। यच्छन्तु। हरितः। न। सूर्यम्। अहा। विश्वाऽइव। सूर्यम् ॥ २ ॥

हेइन्द्र वंसगः वननीयगमनस्त्वं सोमंपिब द्व्यचोतस्तिङइतिदीर्घः कीदृशं तं अद्रिभिर-भिषवसाधनैर्ग्रावभिः सुवानं सूयमानं कर्मणिकर्तृप्रत्ययः कोशेनसिक्तं कोशस्थानीयेन द-शापवित्रेणशोधितं यद्वा अवतमित्यनेन सहसंबन्धः कोशेन इतिमेघलक्षणोदकेनसिक्तं स्वो-चितजलेनपूरितंअवतंन आहावलक्षणमवटमिव तं यथा वंसगोवननीयगमनः वृषा शीघ्रगा-मीवृषभःपिबतितद्वत् किंच ततृषाणोनवंसगः यथा अत्यन्तं तृषितोवंसगोवननीयगमनः शी-घ्रगामीपुरुषः आहावादिकमागत्यपिबति तद्वत् किमर्थंपानमितितत्राह—तेतव मदाय तृप्तये ह-र्यताय विक्रान्तिहेतवे कान्त्यर्थेवा हर्यगतिकान्त्योः भृमृदृशीत्यादिनातच् तुविष्टमाय महत्त्वाय प्रवृद्धत्वाय धायसे यदर्थं मदउपजायते तदर्थाय धाञोवहिहाधाञ्भ्यइत्यसुनि णिदित्यनुवृत्ते-रातोयुगितियुक् यद्वा तेतव तुविष्टमाय धायसे अतिप्रभूतायपानायत्वा त्वांआयच्छन्तु आ-

भिमुख्येनगमयन्तु अश्वाइतिशेषः तत्रदृष्टान्तः—हरितोनसूर्यं हरितवर्णविशिष्टाएतन्नामकाअ-श्वाःसूर्यमिव तंयथा अतित्वरया अभिमतदेशे अभिप्रेरितावहन्ति तद्वत् किंच अहाविश्वा स-र्वाण्यहानिसूर्यमिव तंयथातएवप्रतिदिनंवहन्ति तथा अस्मद्यागदिवसेषुप्रतिदिनमावहन्तु॥ २ ॥

२. जैसे शोभनगति वृषभ पिपासित होकर कूप-जल का पान करता है, हे रमणीयगति इन्द्र, वैसे ही तृप्ति, पराक्रम, महत्त्व और आनन्दोत्पत्ति के लिए प्रस्तर-द्वारा अभिषुत और जल-सिक्त अथवा दशापवित्र-द्वारा शोधित सोमरस पान करो। जैसे हरि नामक अश्व सूर्य को लाते हैं, वैसे ही तुम्हारे अश्वगण प्रतिदिन तुम्हें लायें।

अविन्दद्दिवोनिहितंगुहानिधिंवेर्नगर्भंपरिवीतमश्मन्यनन्तेअन्तरश्मनि।
व्रजंवज्रीगवामिवसिषासन्नङ्गिरस्तमः।
अपावृणोदिषइन्द्रःपरीवृताद्वारइषःपरीवृताः॥ ३ ॥

अविन्दत्। दिवः। निऽहितम्। गुहा। निऽधिम्। वेः। न। गर्भम्। परिऽवीतम्। अश्मनि। अनन्ते। अन्तः। अश्मनि। व्रजम्। वज्री। गवाम्ऽइव। सिसासन्। अङ्गिरःऽतमः। अप। अवृणोत्। इषः। इन्द्रः। परिऽवृताः। द्वारः। इषः। परिऽवृताः॥ ३ ॥

अयमिन्द्रः दिवोद्युलोकात् आनीतं सोमं अविन्दत् अलभत लब्धवान् द्युलोकाद्गाय-त्र्या पक्षिरूपयापहृतं भूमावानीतं स्वीकृतवानित्यर्थः द्युलोकादानयनंतैत्तिरीये—तृतीयस्यामि-तोदिविसोमआसीत्तंगायत्र्याहरदित्यादिषुप्रसिद्धं सएवविशेष्यते गुहानिहितं अतिगोप्येप्र-देशे पर्वतादौ स्थापितं अतएव निधिंनिधिस्थानीयंअनाशमित्यर्थः आनयनेदृष्टान्तः—वेः पक्षिणोगर्भंन शिशुमिव यथा कपोतादिस्त्रीपक्षी स्वशिशुं व्याधादिभयात् कस्मिंश्चिद्दुर्गमे स्थापयित्वा तत्स्थानमजानती परिभ्रम्यविन्दते तद्वदित्यर्थः पुनःकीदृशं अश्मनि पाषाणे अतिमहति विस्तृते अनन्ते अश्मनि अपरिमितपाषाणे पर्वतादौ अन्तर्मध्ये परिवीतं लताकंट-कादिनापरितोवेष्टितं सत्स्वपीतरेषु देवेषु कोऽस्यातिशयइति तत्राह—अयमिन्द्रोवज्री वज्रवान् अंगिरस्तमः अतिशयेनांगारवद्दीप्यमानः गवांव्रजमिव पणिनासुरेणापहृतं भूमौ खनित्वा पाषाणे-नपिहितद्वारं गवांव्रजं यथा तमसुरं जित्वा द्वारमुद्घाट्यलब्धवान् तद्वत्सोमं सिषासन्संभक्तुमिच्छन् सनीवन्तर्धेतिविकल्पनादिड्भावे जनसनखनेत्यात्वं अविन्दत् अयमर्थः पणिनेवगावइत्यादिश्रु-तिषुप्रसिद्धः। तथायमिन्द्रः परीवृताःपरितोमेघेनावृताः इषः अन्नहेतुभूतस्योदकस्यद्वारः द्वा-

---

१ तै० ब्रा० ३.२.१.। २ ऋ०सं० २.२४.।

राणि अपावृणोत् अपवृतान्यकरोत् उद्घाटितवानित्यर्थः तथाकृत्वा इषःइष्यमाणानि व्रीह्या-द्यन्नानि परिवृताः भूमौपरितोव्याप्तान्यकरोत् वज्रेणमेघंभित्त्वाजलवर्षणेनसस्यादिसमृद्धिंकृत्वा व्रीह्यादिकंभूमौव्याप्तमकरोदित्यर्थः यतोयमेवंकृतवान् अतोऽस्यसोमस्वीकारोयुक्तः ॥ ३ ॥

३. जैसे चिड़ियाँ दुर्गम स्थान में अपने बच्चों की रक्षा करके उन्हें प्राप्त करती या बच्चोंवाली होती है, वैसे ही इन्द्र ने भी अत्यन्त गोपनीय स्थान में स्थापित और अनन्त तथा महान् प्रस्तर-राशि में परिवेष्टित सोमरस को स्वर्ग से प्राप्त किया। अङ्गिरा लोगों में अग्रगण्य वज्रधारी इन्द्र ने जैसे पहले, सोमपान की इच्छा से, गोशाला को प्राप्त किया था, वैसे ही सोमरस को भी पाया। इन्द्र ने चारों ओर मेघावृत और अन्न के कारण जल के द्वारों को खोलते हुए पृथिवी में चारों ओर अन्न विस्तार किया।

दादृहाणोवज्रमिन्द्रोगभस्त्योःक्षद्मेवतिग्ममसनायसंश्यदहिहत्यायसंश्यत्।
संविव्यानओजसाशवोभिरिन्द्रमज्मना।
तष्टेवदृक्षंवनिनोनिदृश्चसिपरश्वेवनिदृश्चसि ॥ ४॥

दादृहाणः। वज्रम्। इन्द्रः। गभस्त्योः। क्षद्मऽइव। तिग्मम्।
असनाय। सम्। श्यत्। अहिऽहत्याय। सम्। श्यत्।
सम्ऽविव्यानः। ओजसा। शवःऽभिः। इन्द्र। मज्मना। तष्टाऽइव।
वृक्षम्। वनिनः। नि। वृश्चसि। परश्वाऽइव। नि। वृश्चसि॥ ४ ॥

अयमिन्द्रः गभस्त्योर्बाह्वोः वज्रंदादृहाणः दृढंगृह्णन् दृहदृहिवृद्धौ लिटःकानच् गभस्ती-इतिबाहुनाम गभस्तीबाहूइतितन्नामसुपाठात् किमर्थंअसनायशत्रोरुपरिक्षेपणाय तिग्मंअ-त्यन्ततीक्ष्णंवज्रंसंश्यत् सम्यक्तीक्ष्णीकरोति शोतनूकरणे ओतःश्यनीत्योकारलोपः छान्दसो-ऽभावः यद्वा लेटीतश्चलोपइतीकारलोपः तत्रदृष्टान्तः—क्षद्मेव उदकमिव उदकंयथाशत्रूणां निर-सनाय अभिमन्त्रणादिसंस्कारेणतीक्ष्णीक्रियते तद्वत् क्षद्मेत्युदकनाम क्षद्मनभइतितन्नामसुपाठा-त् पुनरपितदेवविशेष्यते अहिहत्याय अहेर्वृत्रस्यमेघस्यवाहननाय हन्तेर्हनस्तचेतिक्यप् तका-रान्तादेशश्च संश्यत् पूर्वमेवतीक्ष्णंसत् पुनरपिवधायतीक्ष्णयति हेइन्द्र ओजसा बलेन पराभि-भवनसामर्थ्येन शवोभिः सेनालक्षणैर्बलैः मज्मना शारीरेणचबलेन संविव्यानः सम्यग्युक्तः सन् विव्यानइतिलिटःकानच् ग्रहिज्यावयीतिसंप्रसारणं तष्टावृक्षमिव यथाकश्चित्तष्टावृक्षाणां तक्षणस्य साधुकर्ता वनिनोवनसंबन्धिनोवृक्षं निवृश्चति स्वोपयोगायनितरांछिनत्ति तक्षणे-नतनूकरोति तथात्वमप्यस्मासुवक्रमाचरंतं शत्रुं निवृश्चसि किंच परश्वेवनिवृश्चसि यथापरशुना कश्चिच्छिनत्तिवृक्षं तथा त्वमप्युक्तैस्त्रिविधैर्बलैः नितरामस्मद्द्वेषिणं वृश्चसि ॥ ४ ॥

४. इन्द्र दोनों हाथों में अच्छी तरह वज्र धारण करके, जैसे मंत्रों-द्वारा जल को तीक्ष्ण किया जाता है, वैसे ही शत्रु के प्रति फेंकने के लिए वज्र के तीक्ष्ण होने पर भी, उसे और भी तीक्ष्ण करते हैं; वृत्र-विनाश के लिए और भी तीक्ष्ण करते हैं। इन्द्र, जैसे वृक्ष काटने-वाले वृक्ष को काटते हैं, वैसे ही तुम अपनी शक्ति, तेज और शरीर-बल से वर्द्धित होकर हमारे शत्रुओं का छेदन करते हो, मानों उन्हें कुठार से काटते हो।

त्वंवृथानद्यइन्द्रसर्तवेच्छासमुद्रमसृजोरथाँइववाजयतोरथाँइव।
इतऊतीरयुञ्जतसमानमर्थमक्षितम्।
धेनूरिवमनवेविश्वदोहसोजनायविश्वदोहसः॥ ५॥ १८॥

त्वम्। वृथा। नद्यः। इन्द्र। सर्तवे। अच्छ। समुद्रम्। असृजः। रथान्ऽइव। वाजऽयतः। रथान्ऽइव। इतः। ऊतीः। अयुञ्जत। समानम्। अर्थम्। अक्षितम्। धेनूःऽइव। मनवे। विश्वऽदोहसः। जनाय। विश्वऽदोहसः॥ ५॥ १८॥

हेइन्द्र त्वंवृथाअप्रयत्नेनैवनद्यः नदीः समुद्रमच्छाभिमुख्येन सर्तवेप्राप्तुंअसृजः मेघंनिर्भिद्योत्पादितवानसि तत्रदृष्टान्तः—रथानिव यथात्वंरथानस्मद्यागंप्रतिअच्छसर्तवे आभिमुख्येन प्राप्तुंअसृजः सृष्टवानसितद्वत् किंच वाजयतोरथानिव संग्राममन्नंवाइच्छन्तोराजादयः रथानिव तेयथासंग्रामंप्रत्योषध्यादिकंवाभिसर्तुंरथान्सृजन्ति तद्वत् क्यजन्ताच्छतुरनुमइतिविभक्तेरुदात्तत्वं किंच इतः अस्मत्संनिधिदेशं द्वितीयार्थेतसिल् अस्मान्प्रतिऊतीः ऊत्यः गमनवत्योरक्षणवत्योवानद्यः समानमर्थं समानप्रयोजनवदक्षितमुदकं अयुंजतयोजितवत्यः त्वत्प्रसादादिति भावः अर्थशब्दउदकविशेषणःसन् नपुंसकलिंगः अक्षितमित्युदकनाम अक्षितंबर्हिरितितन्नामसुपाठात् तत्रदृष्टान्तः—मनवेमनोरर्थायधेनूरिवधेनवोयथाविश्वदोहसः सर्वार्थदोग्ध्योभवन् यथा वा जनाय यस्मैकस्मैचित् समर्थाय तदर्थंविश्वदोहसोभवन्ति सर्वक्षीरप्रदाभवन्ति यद्वा जनाय सर्वजनार्थं सस्यादीनभिलक्ष्यनद्यः विश्वदोहसः संपूर्णदोग्ध्योभवन्ति सर्वत्रप्रवहन्ति अत्रनद्यः प्रीणनात् दोहसइतिउपचर्यते ईदृग्जगदुपकारिवृष्टिप्रदइतीन्द्रस्यैवस्तुतिः॥ ५॥

५. इन्द्र, तुमने, समुद्र की ओर गमन करने के लिए, रथ की तरह, नदियों को अनायास बनाया है। जैसे योद्धा रथ को बनाते हैं, वैसे ही तुमने भी बनाया है। जैसे मनु के लिये गायें सर्वार्थदाता हैं और जैसे समर्थ मनुष्य के लिये गायें सर्वदुग्धप्रद हैं, वैसे ही हमारी अभि-मुखिनी नदियाँ एक ही प्रयोजन से जल-संग्रह करती हैं।

इमांतेवाचंवसूयन्तंआयवोरथंनधीरःस्वपांअतक्षिषुःसुम्नायत्वामंतक्षिषुः ।
शुम्भन्तोजेन्यंयथावाजेषुविप्रवाजिनम् ।
अत्यंमिवशवसेसातयेधनाविश्वाधनानिसातये ॥ ६ ॥

इमाम् । ते । वाचम् । वसुऽयन्तः । आयवः । रथम् । न । धीरः ।
सुऽअपाः । अतक्षिषुः । सुम्नाय । त्वाम् । अतक्षिषुः ।
शुम्भन्तः । जेन्यम् । यथा । वाजेषु । विप्र । वाजिनम् ।
अत्यम्ऽइव । शवसे । सातये । धना । विश्वा । धनानि । सातये॥६॥

हेइन्द्र तेत्वदर्थं वसूयन्तोधनमात्मनइच्छन्तः आयवः दातव्यहवीरूपान्नवन्तऋत्विजः आयवइतिमनुष्यनाम आयवः अनवइतितन्नामसुपाठात् तेइमांक्रियमाणांस्तुतिरूपांवाचं अतक्षिषुः संपादितवन्तः तत्रदृष्टान्तः—स्वपाः शोभनकर्मवान् कुशलीवा बहुव्रीहौसोर्मनसीइत्युत्तरपदाद्युदात्तत्वम् धीरः धीमान् रथंन रथमिव तंयथाप्रयत्नेनसाधुकरोति तद्वत् एवंकृत्वात्वांसुम्नायसुखायअतक्षिषुः अनुकूलमुत्पादयन्ति सुम्नमितिसुखनाम सुम्नंसुग्म्यमितितन्नामसुपाठात् किंच हेविप्रमेधाविन्निन्द्र वाजेषुसंग्रामेषु वाजिनं वेगवन्तंत्वांशुंभंतः गुणैर्दीपयन्तः अतक्षिषुःस्तुत्याप्रीणयन्ति तत्रदृष्टान्तः—जेन्यंयथा जयशीलंशूरंयथाभटाःस्तुवन्ति तद्वत् यद्वा जेन्यंजयशीलं वाजिनंवेगवन्तमश्वं वाजेषुसंग्रामेषुयथोत्साहयन्ति तद्वत् किंच शवसेबलाय धनां धनानांसातयेलाभायचस्तुमइतिशेषः ऊतियूतिजूतिसातीत्यादिनाक्तिनउदात्तत्वं नकेवलंधनमात्रं किंतु विश्वाधनानिसातयेकृत्स्नानिप्रीणनसाधनानिगवादिधनानि षष्ठ्यर्थेद्वितीया तेषांलाभाय तत्रदृष्टान्तः—धना धने संग्रामेशवसेवैरिजयसाधनबलाय सातयेतेषामेवधनानांप्राप्तयेचअत्यमिवसततगामिनमश्वमिव तंयथास्तुवन्तितद्वत् ॥ ६ ॥

६. जैसे कर्म-कुशल और धीर मनुष्य रथ बनाता है, वैसे ही धनाभिलाषी मनुष्यों ने तुम्हारी यह स्तुति की है। उन्होंने अपने कल्याण के लिए तुम्हें प्रसन्न किया है। जैसे संसार में दिग्विजयी की प्रशंसा की जाती है, वैसे ही हे मेधावी और दुर्द्धर्ष इन्द्र, उन्होंने तुम्हारी प्रशंसा की है। जैसे संग्राम में अश्व की प्रशंसा होती है, वैसे ही बल, धनरक्षण और सारे मंगलों की प्राप्ति के लिए तुम्हारी प्रशंसा होती है।

भिनत्पुरोनवतिमिन्द्रपूरवेदिवोदासायमहिदाशुषेनृतोवज्रेणदाशुषेनृतो ।
अतिथिग्वायशंबरंगिरेरुग्रोअवाभरत् ।
महोधनानिदयमानओजसाविश्वाधनान्योजसा ॥ ७ ॥

भिनत् । पुरः । नवतिम् । इन्द्र । पूरवे । दिवःऽदासाय । महि ।
दाशुषे । नृतो इति । वज्रेण । दाशुषे । नृतो इति ।
अतिथिऽग्वाय । शम्बरम् । गिरेः । उग्रः । अव । अभरत् । महः ।
धनानि । दयमानः । ओजसा । विश्वा । धनानि । ओजसा ॥ ७ ॥

हेइन्द्र नृतो रणेनर्तनशील त्वं दाशुषे हविर्दत्तवते पूरवे अभिमतपूरकायमनुष्याय मनुष्यनमैतद् महि महते दिवोदासायएतन्नामकायराज्ञे दिवोदासे षष्ठ्याअलुगित्यलुक् दिवोदासादीनांछन्दसीतिपूर्वपदाद्युदात्तत्वं नवतिं एतत्संख्याकानि पुरः शत्रूणांपुराणिभिनत् भिन्नवानसि तथा हेनृतो गात्रविक्षेपणकुशल हस्तपादादिप्रक्षेपेणशत्रूणांहिंसक वज्रेणक्षेपणसमर्थेनायुधेमदाशुषेहविर्दत्तवते दिवोदासायान्यस्मै वाभिनत् तमपिशत्रुंभिन्नवानसि इदानींपरोक्षेणाह—अतिथिग्वायपूजार्थमतिथिंगच्छते दिवोदासायतदर्थं गमेरौणादिकोड्वप्रत्ययः उग्रः उद्गूर्णबलइन्द्रः पूर्वंपुरभेदनसमये विद्धमपि अम्रियमाणं गिरिमारूढंशंबरं एतन्नामानमसुरं गिरेः दुर्गमात्पर्वतादेःसकाशात् ओजसास्वकीयेनबलेनअवाभरत् अवाङ्मुखमवकृष्य माणंहतवान् किंकुर्वन् महः महांतिधनानि तदीयगवाश्वादीनि दयमानः दिवोदासायराज्ञेसाधयन् दयदानगतिहिंसादानेषु शपःपित्त्वादनुदात्तत्वेशानचोलसार्वधातुकस्वरेणधातुस्वरः नकेवलमल्पंधनं किंतु विश्वाधनानि सर्वाण्यपितेषां मणिमक्तादीनि ओजसास्वकीयेनबलेन दयमानः साधयन्अवाभरत् ॥ ७ ॥

७. संग्राम-काल में नृत्यकर्त्ता इन्द्र, तुमने हविःप्रद और अभीष्टदाता दिवोदास राजा के लिए नब्बे नगरों को नष्ट किया था। नृत्यशील इन्द्र, तुमने वज्र द्वारा नष्ट किया था। उग्र इन्द्र, तुमने अतिथि-सेवक दिवोदास राजा के लिए पर्वत से शम्बर असुर को नीचे पटका था और दिवोदास राजा के लिए अपनी शक्ति से अगाध धन दिया था—और क्या, समस्त धन दिया था।

इन्द्रःसमत्सुयजमानमार्यंप्रावद्विश्वेषुशतमूतिराजिषुस्वर्मीळ्हेष्वाजिषु ।
मनवेशासदव्रतान्त्वचंकृष्णामरन्धयत् ।
दक्षन्नविश्वंततृषाणमोषतिन्यर्शसानमोषति ॥ ८ ॥
इन्द्रः । समत्ऽसु । यजमानम् । आर्यम् । प्र । आवत् । विश्वेषु ।
शतम्ऽऊतिः । आजिषु । स्वःऽमीळ्हेषु । आजिषु । मनवे । शासत् ।
अव्रतान् । त्वचम् । कृष्णाम् । अरन्धयत् । धक्षत् । न । विश्वम् ।
ततृषाणम् । ओषति । नि । अर्शसानम् । ओषति ॥ ८ ॥

अयमिन्द्रः समत्सुसमरणेषु प्रहारनिमित्तेषुयजमानंयष्टारंआर्यंअरणीयं सर्वैर्गन्तव्यंप्रावत् प्रकर्षेणरक्षति समत्स्वितिसंग्रामनाम समत्सुसमरणइतितन्नामसुपाठात् किंच शतमूतिः स्वभक्तेष्वपरिमितरक्षणइन्द्रः विश्वेषु लिंगव्यत्ययः सर्वेषुआजिषु स्पर्धानिमित्तेषुसंग्रामेषुयजमानं प्राव-

व तथा स्वर्मीळ्हेषुस्वर्गदेशेषु सुखस्य सेचयत्सुवा आजिषु महासंग्रामेषु प्रावत् स्वर्गप्रदानेनरक्षति रणेआभिमुख्येनहतानांवीराणांरविमार्गः पराशरेणस्मर्यते—द्वाविमौपुरुषौलोकेसूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्चरणेयोऽभिमुखोहतइति। अत्रेतिहासमाचक्षते—अंशुमतीनामनदी तस्यास्तीरे कृष्णनामासुरः वर्णतश्चकृष्णोदशसहस्रैरनुचरैरुपेतः तद्देशवर्तिनःप्राणिनःपीडयन्नास्ते तत्रेन्द्रोबृहस्पतिनाप्रेरितःसन् मरुद्भिःसहितः कृष्णांतदीयत्वचमुत्कृत्यसानुचरमवधीत् अयमर्थः अवद्रप्सोअंशुमतीमतिष्ठदित्यादिनोपरिष्टाद्वक्ष्यते तदत्रोच्यते अयमिन्द्रोमनवे मनुष्याय विभक्तिव्यत्ययः मनुष्याणामर्थाय अव्रतान् व्रतमितिकर्मनाम तद्रहितान्यागविद्वेषिणः शासवशिक्षितवान् हिंसितवान् शासेर्लेट्यडागमः तथा कृष्णांत्वचं कृष्णनाम्नोसुरस्य कृष्णवर्णां त्वचं उत्कृत्यारन्धयत् हिंसितवान् रधहिंसायां रधिजभोरचीतिनुम् केनप्रकारेणेतितदुच्यते—धक्षत् भस्मीकरोतिइव लेट्यडागमः सिब्बहुलमितिसिप् तथा विश्वंततृषाणमोषति सर्वमपिहिंसकं तदनुचरसंघंदहति यत्किंचिदवशिष्टमिति नेत्याह—अर्शसानं हिंसारुचिं हतावशिष्टं सर्वमपिन्योषति निःशेषेणदहति ॥ ८ ॥

८. युद्ध में इन्द्र आर्य यजमान की रक्षा करते हैं। असंख्य बार रक्षा करनेवाले इन्द्र सारे युद्धों में उसकी रक्षा करते हैं। सुखकारी युद्ध में उसकी रक्षा करते हैं। इन्द्र मनुष्य के लिए व्रत-शून्य व्यक्तियों का शासन करते हैं। इन्द्र ने कृष्ण नाम के असुर की काली त्वचा उखाड़कर उसका (अंशुमती नदी के तट पर) वध किया। इन्द्र ने उसे जला डाला। इन्द्र ने सारे हिंसकों को जला डाला। उन्होंने समस्त निष्ठुर व्यक्तियों को भस्मसात् किया।

सूरश्चक्रंप्रवृहज्जातओजसाप्रपित्वेवाचमरुणोमुषायतीशानआमुषायति।
उशनायत्परावतोजगन्नूतयेकवे।
सुम्नानिविश्वामनुषेवतुर्वणिरहाविश्वेवतुर्वणिः॥ ९ ॥
सूरः। चक्रम्। प्र। वृहत्। जातः। ओजसा। प्रऽपित्वे। वाचम्। अरुणः। मुषायति। ईशानः। आ। मुषायति। उशना। यत्। पराऽवतः। अजगन्। ऊतये। कवे। सुम्नानि। विश्वा। मनुषाऽइव। तुर्वणिः। अहा। विश्वाऽइव। तुर्वणिः॥ ९ ॥

अत्रापीतिहासमाचक्षते—केचनासुराः पूर्वंइन्द्रवज्रेणवधोमाभूदितिब्रह्मणोवरंलब्ध्वा इन्द्रमगणयित्वोद्धृताआसन् तान्हन्तुमिन्द्रःसूर्यरथस्यचक्रमादाय अवधीदिति तदिदमुच्यते—अयमिन्द्रः सूरः सूर्यस्यषष्ठ्यर्थेप्रथमा चक्रंरथस्यचक्रमादाय ओजसाशारीरेणबलेनजातः समृद्धः सन् प्रवृहत् प्रक्षिप्तवान् वृहूउद्यमने तौदादिकः किंच अरुणः अरुणवर्णः अत्यन्ततेजोयुक्तःसन् यद्वा गमनशीलःसन् प्रपित्वे तेषांसमीपेतत्समीपमागत्यवाचं वागुपलक्षितं प्राणंमुषायति मु-

मोष मुष्णातिवा प्रपित्वइत्यासन्ननाम यद्वा वाचंतेषांप्रहारध्वनिं मुषायति तेषुहतेषुध्वनिःस्वय-मेवविश्रांतोभवति अवधीदित्यर्थः अथवा इन्द्रएव द्युस्थानःसन् आदित्यात्मनास्तूयते सूरः सूर्यः जातउदितःसन् ओजसास्वकीयेनतेजसायुक्तः चक्रंप्रवृहत् तमोनिवारणार्थं असुरजया-यवाचक्रोपलक्षितंरथं प्रकर्षेणोद्यतंकरोति पूर्वंअरुणः तद्रथयन्ता प्रपित्वेमेदेहाद्यसुराणांसमीपे वाचंतेषांजहिहिंधीत्यादिध्वनिंमुषायति मुष्णाति मुषेरुत्तरस्यश्नः अहावपिछन्दसिशायजपीति शायजादेशः तदनन्तरंसूर्यः ईशानः सर्वाणितमांस्यसुरान्वानिराकर्तुंसमर्थःसन् आमुषायति समन्तान्मुष्णाति अथप्रत्यक्षकृतः हेकवेक्रान्तदर्शिन् यत्यस्त्वंउशनाउशनसः एतन्नाम्नोमहर्षे-रूतयेरक्षणाय परावतोदूरात् स्वर्गस्थानात् अजगन् गतवानसि प्राप्तवानसि गमेःसिपि छान्दसः शपःश्लुः हल्ङ्याबादिलोपेमोनोधातोरितिनत्वं यद्वा उशना उशनसायुक्तःसन् अजगन् आ-गच्छ आगत्यचविश्वाविश्वानिसुम्नानिसुखसाधनानि धनान्यादायास्माकं तुर्वणिस्तूर्णवनिः क्षिप्रंसंभवेतिशेषः तुर्वणिस्तूर्णवनिरितिनिरुक्तं। तत्रदृष्टान्तः—मनुषेव मनुष्येणेव यथाचतेनपरि-वृढाय देशान्तरादभिमतंधनमानीयते तद्वत् यद्वा मनुषेवमनुष्याणामिव इतरेषामृत्विजां विश्वा-सुम्नानि सर्वाणिधनान्यादाय तुर्वणिर्भवसि तद्वदस्माकमपि नकेवलमेकस्मिन्नेवयागदिनेकि-न्तु अहाविश्वेव विश्वान्यप्यहानि सर्वेष्वप्यहःसुतुर्वणिर्भव यद्वा तुर्वणिस्त्वं अहाविश्वेव वि-श्वान्यहान्यतिदीर्घमायुष्यंयथाददासि तथासुम्नान्यपि उभयमपिदेहीत्यर्थः॥ ९॥

९. सूर्य का रथ-चक्र ग्रहण करने पर इन्द्र के शरीर में बल की वृद्धि हुई। इन्द्र ने उस चक्र को फेंका और अरुणवर्ण-रूप धारण करके, शत्रुओं के पास जाते हुए, उनके वाक्य का हरण कर लिया। तमोनिवारक इन्द्र ने उनके वाक्य का हरण कर लिया। वीरकर्मा इन्द्र, उशना की रक्षा के लिए, जैसे तुम दूरस्थित स्वर्ग से आये थे, वैसे ही हमारे समस्त सुख-साधन धन के साथ हमारे पास शीघ्र आओ। दूसरों के पास भी तुम इसी प्रकार आते हो। हमारे पास प्रतिदिन आते हो।

सनो॒ नव्ये॑भिर्वृषकर्मन्नु॒क्थैः पुरां॑ दर्तः पा॒युभिः॑ पाहि श॒ग्मैः।
दि॒वो॒दा॒सेभि॑रिन्द्र॒ स्तवा॑नो वावृधी॒था अहो॑भिरिव॒ द्यौः ॥१०॥१९॥

सः। नः॒। नव्ये॑भिः। वृ॒ष॒ऽक॒र्म॒न्। उ॒क्थैः। पुरा॑म्। द॒र्तः॒रिति॑ दर्तः। पा॒यु॒ऽभिः॑। पा॒हि॒। श॒ग्मैः। दिवः॒ऽदा॒सेभिः॑। इ॒न्द्र॒। स्तवा॑नः। व॒वृ॒धी॒थाः। अहो॑भिःऽइव। द्यौः॥ १० ॥ १९ ॥

हेइन्द्र वृषकर्मन् अभिमतवर्षणव्यापारवन् पुरांदर्तः असुरपुराणांदारयितः सुबामन्त्रि-तेइतिषष्ठ्याःपराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य पादादित्वादाष्टमिकमाद्युदात्तत्वं सतादृ-शोमहानुभावस्त्वं नोऽस्मत्संबन्धिभिः नव्येभिः नूतनैः उक्थैः इदानींप्रतिपादितप्रकारैः

---

१ नि० ६. १४.।

स्तोत्रैस्तुष्टःसन् पायुभिः पालनप्रकारैः शर्मैः सुखैरैहिकामुष्मिकरूपैः पाहिपालय किंच हेइन्द्र दिवोदासेभिः दिवोदासगोत्रोत्पन्नैः अर्शआदित्वादच् अस्माभिःपरुच्छेपैः यद्वा पूजार्थंबहुवचनं स्तवानः स्तूयमानः कर्मणिकर्तृप्रत्ययः ववृधीथाः प्रवृद्धोभव वृधेर्लिङि छान्दसःशपःश्लुः किमिव अहोभिरिव द्यौः द्योतनशीलआदित्यः अहोभिः प्रसिद्धैर्यथा प्रवृद्धोभवति तथास्मत्स्तुत्या अत्यन्तं प्रवृद्धोभवेत्यर्थः ॥ १० ॥

१०. जल-वर्षक और नगर-विदारक इन्द्र, हमारे नये मन्त्र से संतुष्ट होकर विविध प्रकार की रक्षा और सुख देते हुए हमें प्रतिपालित करो। हम दिवोदास के गोत्रज हैं; तुम्हारी स्तुति करते हैं। तुम दिन में सूर्य की तरह, हमारी स्तुति से प्रवृद्ध हो जाओ।

इन्द्रायहीतिसप्तर्चंपंचमंसूक्तम् इन्द्रायसप्तेत्यनुक्रमणिका परुच्छेपऋषिः अत्यष्टिछन्दः इन्द्रोदेवता पृष्ठ्यस्यषष्ठेहनि माध्यन्दिनसवनेहोत्रकाः स्वस्वशस्त्रेएतत्सूक्तं तृचत्रयंकृत्वा आरंभणीयाभ्यऊर्ध्वमावपेयुः अत्रायंविभागः—आद्यास्तिस्रोमैत्रावरुणस्य तृतीयाद्यास्तिस्रोब्राह्मणाच्छंसिनः पंचम्याद्यास्तिस्रोच्छावाकस्य एतच्चतुर्थेहनीतिखण्डेसूत्रितम्—षष्ठेहनीन्द्रायहिद्यौरसुरोअनम्नतेत्येवमेवेति तत्रैवाहनि तस्मिन्नेवसवनेप्रशास्त्रादीनां प्रस्थितयाज्याभ्यःपुरस्तादादितः षळृचः एकैकशःप्रक्षेपणीयाः षष्ठस्येतिखण्डेसूत्रितं—इन्द्रायहिद्यौरसुरोअनम्नतेतिषळिति महाव्रतेनिष्केवल्ये इन्द्रायहीतितृचोवैकल्पिकानुरूपद्वितीयः महाव्रतस्येतिखण्डेसूत्रितं—एन्द्रयाह्युपनःपरावतइन्द्रायहिद्यौरसुरोअनम्नतेति।

तत्रेयंप्रथमा—

इन्द्रा॑य॒हिद्यौरसु॑रो॒अन॑म्न॒तेन्द्रा॑यम॒हीपृ॑थि॒वीवरी॑मभि॒र्द्यु॒म्नसा॑ता॒वरी॑मभिः।
इन्द्रं॒विश्वे॑स॒जोष॑सोदे॒वासो॑दधिरेपु॒रः।
इन्द्रा॑य॒विश्वा॒सव॑नानि॒मानु॑षारा॒तानि॑सन्तु॒मानु॑षा ॥ १ ॥

इन्द्रा॑य। हि। द्यौः। असु॑रः। अन॑म्नत। इन्द्रा॑य। म॒ही। पृ॒थि॒वी। वरी॑मऽभिः। द्यु॒म्नऽसा॑ता। वरी॑मऽभिः। इन्द्र॑म्। विश्वे॑। स॒ऽजोष॑सः। दे॒वास॑ः। द॒धि॒रे॒। पु॒रः। इन्द्रा॑य। विश्वा॑। सव॑नानि। मानु॑षा। रा॒तानि॑। स॒न्तु॒। मानु॑षा ॥ १ ॥

द्यौः द्योतनशीलोद्युलोकः तन्निवासीदेवसंघोवा सचासुरोनिरसनशीलः शत्रूणामपुण्यकृतामेव तन्निवासात् इन्द्रायहि इन्द्रायैव अनम्नतस्वयमेवप्रह्वोभवति नमेश्छान्दसेलङि कर्मकर्तर्यात्मनेपदं नदुहस्नुनमामितियगभावः छान्दसःशपःश्लुःहलादिशेषाभावश्च अनुनासिकलोपः हिशब्दःप्रसिद्ध्यर्थोवा तथा इन्द्रायेन्द्रार्थं महीमहतीपृथिवीभूमिः तत्रत्यः सर्वोजनोवा अनम्नतउभयत्राश्रयवाचिशब्देनाश्रयीलक्ष्यते ग्रामआगच्छति इतिवत् केनसाधनेनेतितदुच्यते—वरीमभिर्वरणीयैःस्तोत्रैर्हविर्भिर्वा किंच द्युम्नसातायुम्नसातौ अन्नस्ययशसोवा लाभनिमित्ते सति वरीमभिःवरणीयैर्हविर्भिर्युक्तायजमानाः प्रह्वाभवन्ति किंच इन्द्रमेवविश्वे सर्वेदेवासोदेवाः सजोषसः समानप्रीतियुक्ताः ऐकमत्यभाजः पूर्वंअसुरजयार्थं पुरोदधिरे पुरतःस्थापितवन्तः इन्द्रमुखेनैवासुराञ्जितवन्तइत्यर्थः तथा विश्वा विश्वानिसर्वाणिमनुषा सवनानिमनुष्याणां संबन्धीन्यभिषवयुक्तानिप्रातरादिसवनानि इन्द्राय सन्तु इन्द्रायैवभवन्तु तथा मानुषा मनुष्याणां ऋत्विजां संबन्धीनि रातानि दातव्यानिपुरोडाशादीनि इन्द्रायहि इन्द्रायैव सन्तु इन्द्रं प्रीणयितुंसमर्थानिभवन्त्वित्यर्थः ॥ १ ॥

१. विशाल द्युलोक स्वयं इन्द्र के पास नत हुआ है। विस्तृता पृथिवी वरणीय या स्वीकरणीय स्तुति-द्वारा इन्द्र के पास नत हुई है। अन्न के लिए यजमान लोग वरणीय हव्य-द्वारा नत हुए हैं। सारे देवों ने एक मत से इन्द्र को अग्रणी किया है। मनुष्यों के सारे यज्ञ और मनुष्यों के सारे दान आदि इन्द्र के सुख के निमित्त हों।

विश्वेषु हि त्वा सवनेषु तुञ्जते समानमेकं वृषमण्यवः पृथक्स्वः सनिष्यवः पृथक् ।
तं त्वा नावं न पर्षणिं शूषस्य धुरि धीमहि ।
इन्द्रं न यज्ञैश्चितयन्त आयवः स्तोमेभिरिन्द्रमायवः ॥ २ ॥

विश्वेषु । हि । त्वा । सवनेषु । तुञ्जते । समानम् । एकम् ।
वृषऽमन्यवः । पृथक् । स्वरिति स्वः । सनिष्यवः । पृथक् । तम् ।
त्वा । नावम् । न । पर्षणिम् । शूषस्य । धुरि । धीमहि । इन्द्रम् ।
न । यज्ञैः । चितयन्तः । आयवः । स्तोमेभिः । इन्द्रम् । आयवः ॥२॥

हे इन्द्र त्वा त्वां एकं एकमेवसन्तं विश्वेषु सर्वेषुसवनेषु तद्वत्सु एकाहाहीनसत्ररूपेषुसर्वेषु सोमयागेषु यजमानाः तुञ्जते त्वरयन्ति हविरादीनिददते कीदृशं त्वां समानं सर्वेषामेकरूपं कीदृशायजमानाः वृषमण्यवः अभिमतवर्षणाय त्वामेवमन्यमानाः पृथग्विविच्यस्वस्वयागे किमिच्छन्तः स्वः स्वर्गसुखविशेषंवा सनिष्यवः संभक्तुकामाः पृथक् तुञ्जते पृथगेवत्वरयन्ति तु-

अतिदानार्थः शिक्षति तुञ्जते इति तन्नामसुपाठात् तंतादृशं त्वा त्वां शूषस्य सेनारूपस्य बल-स्यधुरिवहनेतज्जयाय धीमहि स्थापयामः यद्वा शूषस्य अस्मदीयशारीरबलस्य धुरिधीमहि शूषमितिबलनाम शूषं सहइतितन्नामसुपाठात् तत्रदृष्टान्तः—पर्षणि नावंन पारस्यसंभक्त्रीं पूरयि-त्रींवाफलस्य नावमिव तांयथाभारवहने स्थापयन्तितद्वत् पारतीरकर्मसमाप्तौ छन्दसि वनसने-तिसनेरिन्प्रत्ययः पृषोदरादिः पिपर्तेरौणादिकःसनिप्रत्ययोवा कीदृशावयं आयवोमनुष्याः यजमानाः यज्ञैःसाधनैः इन्द्रंनचितयन्तः परमेश्वरमिवत्वांचेतयन्तः परमेश्वरबुद्ध्याभावयन्तइत्यर्थः यद्वा नशब्दः एवकारार्थः इन्द्रमेवत्वां जानन्तः तथा स्तोमेभिः स्तोत्रैः इन्द्रं इन्द्रमेव आयवोग-च्छन्तोवयंधीमहि दधातेर्लिङिछान्दसःशपोलुक् ॥ २ ॥

२. इन्द्र, तुम्हारे पास अभिमत फल की प्राप्ति की आशा में प्रत्येक सवन में यजमान लोग तुम्हें हव्य प्रदान करते हैं। तुम सबके लिए समान हो। स्वर्ग-प्राप्ति के लिए केवल तुम्हें ही हव्य दिया जाता है। जैसे नदी पार होने के समय नौका खड़ी की जाती है, वैसे ही हम सेना के आगे तुम्हें खड़ा करते हैं। यज्ञ-द्वारा मनुष्य इन्द्र की ही चिन्ता करते हैं। मनुष्य स्तुति-द्वारा इन्द्र की चिन्ता करता है

वित्वाततस्रेमिथुनाअवस्यवोव्रजस्यसातागव्यस्यनिःसृजःसक्षन्तइन्द्रनिः
सृजः। यद्गव्यन्ताद्वाजनास्व१र्यन्तासमूहसि।
आविष्करिक्रद्वृषणंसचाभुवंवज्रमिन्द्रसचाभुवम् ॥ ३ ॥

वि। त्वा। ततस्रे। मिथुनाः। अवस्यवः। व्रजस्य। साता। गव्यस्य। निःऽसृजः। सक्षन्तः। इन्द्र। निःऽसृजः। यत्। गव्यन्ता। द्वा। जना। स्वः। यन्ता। समऽऊहसि। आविः। करिक्रत्। वृषणम्। सचाऽभुवम्। वज्रम्। इन्द्र। सचाऽभुवम् ॥ ३ ॥

हेइन्द्र त्वात्वामुद्दिश्य मिथुनाः पत्नीसहितायजमानाः विततस्रे यज्ञंवितन्वते यद्वा यज्ञेपयो-व्रतादिनात्मानमुपक्षयन्ति तसुउपक्षये छान्दसेलिटि इरयोरेइतिरेभावः किमर्थंगव्यस्यव्रजस्य साता गवांसंबन्धिनःयूथस्यलाभेनिमित्तभूतेसति नचसर्वत्राग्निहोत्रादिनित्यवाक्येषु कारीरीचि-त्रादिकाम्यवाक्येषु यस्योदयंयस्यगृहानित्यादिनैमित्तिकवाक्येषु पुरुषस्यैवार्थित्वादेःसद्भावा-त्तस्यैवाधिकारः स्त्रियास्तु सत्यप्यर्थित्वेऽध्ययनाभावेन विद्वत्तायाअभावात् अतएवसामर्थ्याभा-वाचनास्त्यधिकारइतिवाच्यम् यद्यपिस्त्रियानास्तिपृथगधिकारः तथापिपूर्वमीमांसायांषष्ठेअधि-काराध्याये तृतीयचतुर्थाभ्यामधिकरणाभ्यांअस्त्येवस्त्रियाअधिकारः सचपत्यासहेतिप्रपंचित-त्वात् जायापतीअग्निमादधीयातामित्याधानविधानात् स्मृतिषुचनास्तिस्त्रीणांपृथग्यज्ञोनव्रतमि-

तिपृथगधिकारस्यैवनिवारितत्वात् अस्त्येवस्त्रियाःपत्यासहाधिकारः अध्ययनाभावेऽपिवेदंप-त्न्यैप्रदायवाचयेदितिसूत्रकारवचनात् पत्न्यन्वास्तेइत्यादिविधिषु सुप्रजसस्त्वावयमित्यादिमन्त्र-विधानाच्च यत्रवचनमस्तितत्रास्त्येवमन्त्रेधिकारः किंहिवचनेनकुर्यान्नास्तिवचनस्यातिभारइति न्यायात् तस्मान्मिथुनायज्ञंततस्त्रइत्येतद्युक्तम् कीदृशास्तेअवस्यवः इन्द्रायात्मनेतृप्तिमिच्छन्तः निःसृजः निःशेषेणहविस्त्यजन्तः सक्षन्तः सक्षतिर्गत्यर्थः त्वांसंभजमानाः पुनस्तएवविशेष्यन्ते निःसृजः फलप्रतिबन्धकंपापंनिर्गमयन्तः कस्तत्रविशेषइतितदुच्यते यद्यस्मात्कारणात् गव्यन्ता गामात्मनइच्छन्तौ गोशब्दात्सुपआत्मनःक्यच् वान्तोयिप्रत्ययेइत्यवादेशः स्वर्यन्ता स्वर्गंयन्तौ गन्तुमुद्युक्तौ द्वाजना द्वौजायापतिरूपौजनौसमूहसि संयुक्तयोरेवाभिमतंस्वर्गादिकंप्रापयसि यद्वा सम्यगनुष्ठितवन्तावित्यूहसिनिश्चिनोषिअतः पत्नीसहिताअनुतिष्ठन्तीत्यर्थः किंच हेइन्द्र त्वंवृष-णंवर्षकंकामानांसचाभुवं सहैवोत्पन्नं त्वयाविनाभूतं तथा सचाभुवं शत्रुवधादिव्यापारसामर्थ्ये-नसहैवोत्पन्नं वज्रं आविष्करिक्रत् आविष्कुर्वन्प्रकटयन्वर्तसइतिशेषः ॥ ३ ॥

३. इन्द्र, तुम्हारे सेवक और निष्पाप यजमान सस्त्रीक तुम्हारी तृप्ति की इच्छा से, बहुसंख्यक गोधन की प्राप्ति के लिए, बहुत हव्य दान करते हुए तुम्हारे उद्देश्य से यज्ञ-विस्तार करते हैं। वे गोधन चाहते हैं और स्वर्ग-गमन के लिए उत्सुक हैं। तुम उनको अभीष्ट प्रदान करो। इन्द्र, तुम अभीष्ट-वर्धक हो। तुमने अपने सहजन्मा और चिर-सहचर वज्र का आविष्कार किया है।

विदुष्टेअस्यवीर्यस्यपूरवःपुरोयदिन्द्रशारदीरवातिरःसासहानोअवातिरः।
शासस्तमिन्द्रमर्त्यमयज्युंशवसस्पते।
महीममुष्णाःपृथिवीमिमाअपोमन्दसानइमाअपः॥ ४ ॥

विदुः। ते। अस्य। वीर्यस्य। पूरवः। पुरः। यत्। इन्द्र। शारदीः। अवऽअतिरः। ससहानः। अवऽअतिरः। शासः। तम्। इन्द्र। मर्त्यम्। अयज्युम्। शवसः। पते। महीम्। अमुष्णाः। पृथिवीम्। इमाः। अपः। मन्दसानः। इमाः। अपः॥ ४ ॥

हेइन्द्र तेवीर्यस्य तवसंबन्धिनःअस्यवीर्यस्य कर्मणिषष्ठी वक्ष्यमाणमेतद्वीर्यंविदुः येपूर-वोमनुष्याः यजमानास्तवमहत्त्वंजानानास्त्वामेवयजन्ति तेविदुः यद्वा अस्यवीर्यस्य मा-हात्म्यमितिशेषः विदुष्टइत्यत्रयुष्मत्तत्ततक्षुष्ष्वितिविसर्जनीयस्यसत्वं वीर्यमेवविशेष्यते हेइन्द्र यद्यस्मात्कारणात् शारदीः संवत्सरसंबन्धिनीः वत्सरपर्यंतंप्राकारपरिखादिभिःदृढीकृताःपुरः शत्रूणांपुरीः अवातिरोऽनाशयः अवपूर्वस्तिरतिर्नाशनार्थः किंकुर्वन् ससहानः तत्रत्यानभि-
२ भवन् धनाद्यपहारेणपीडयन् सहतेर्यङ्लुगन्तात्ताच्छीलिकश्चानश् अवातिरः किंच हेइन्द्र

तंमर्त्यमरणधर्माणंअयज्युं अयष्टारंयज्ञविघातिनं राक्षसादि शासः निगृहीतवानसि हेशवसस्पते बलस्यपालकेन्द्र त्वं महीं महतीं पृथिवीं इमाअपश्च समुद्रनद्यात्मकान्युदकानिच अमुष्णाः बलादपहृतवानसि असुरैरन्यैर्वा यज्ञविद्वेषिभिराक्रान्तांभूमिं तत्संबन्धिनीरपश्च तेषांपुराणि भित्त्वा अपहृतवानसीत्यर्थः किंदुःखेननेत्याह—मन्दसानः हृष्यन्नेव इमाःअपःइमानिअपूकार्याणिव्रीह्याद्यन्नानिअमुष्णाः लब्धवानसि ॥ ४ ॥

४. इन्द्र, मनुष्य तुम्हारी महिमा जानते हैं। तुमने जिन शत्रुओं की संवत्सर पर्यन्त खाई या परिखा आदि से दृढ़ीकृत नगरियों को नष्ट किया था, उन्हें पराजित कर विनष्ट किया था—वह कथा मनुष्य जानते हैं। बलपति इन्द्र, तुमने यज्ञ-विघातक मनुष्य का शासन किया था। तुमने असुरों की विशाल पृथ्वी और जलराशि को सरलता से जीता था। और अन्नादि को प्राप्त किया था।

आदित्तेअस्यवीर्यस्यचर्किरन्मदेषुवृषन्नुशिजोयदाविथसखीयतोयदाविथ।
चकर्थकारमेभ्यःपृतनासुप्रवन्तवे ।
तेअन्यामन्यांनद्यंसनिष्णतःश्रवस्यन्तःसनिष्णत ॥ ५ ॥

आत् । इत् । ते । अस्य । वीर्यस्य । चर्किरन् । मदेषु । वृषन् ।
उशिजः । यत् । आविथ । सखिऽयतः । यत् । आविथ । चकर्थ ।
कारम् । एभ्यः । पृतनासु । प्रऽवन्तवे । ते । अन्याम्ऽअन्याम् ।
नद्यम् । सनिष्णत । श्रवस्यन्तः । सनिष्णत ॥ ५ ॥

हेइन्द्र आदित् अतएव हेतोस्तेवीर्यस्य तवसंबन्धिनेवीर्याय तदभिवृद्धयेचर्किरन् पुनः पुनः सोमंविकिरन्ति किरतेर्यङ्लुगन्ताद्व्यत्ययेनशः सर्वेषु सवनेषु वितरन्ति यजमानाः अतइत्युक्तं कुतइत्याह—मदेषु वृषन् सोमजनितमदेषुसत्सु हेकामानां वर्षितः उशिजस्त्वां कामयमानान्यजमानान् यद्यतःकारणात् आविथ रक्षसि किंच सखीयतस्तव सखित्वमात्मनइच्छतोऽस्मान् यद्यस्मादाविथ तर्पयसि अभिमतेनप्रीणयसि अतश्चर्किरन् किंच हेइन्द्र एभ्योयजमानेभ्यः कारंशब्दंसिंहनादलक्षणं चकर्थ करोषि करोतेःकर्मणिघञ् कर्षात्वतइत्यन्तोदात्तत्वम् कुत्रेतितदुच्यते—पृतनासु संग्रामेषु किमर्थं प्रवंतवे प्रकर्षेणवनितुं संभक्तुं युद्धायहिधीराःसंभजन्ते वनतेस्तुमर्थेतवेन्प्रत्ययः तादौचेतिगतेःप्रकृतिस्वरत्वम् किंच तेतव संग्रामवासिनः त्वय्यन्यामन्यां अन्यांश्चान्यांश्च अन्यमन्यंमति कर्मव्यतिहारेसर्वनाम्नोद्विर्वचनम् नद्यंनादं संतोषसमृद्धिं टुनदिसमृद्धौ पूर्वरूपत्वंबाधित्वाछान्दसोयणादेशः सनिष्णत संभजन्ते सनेर्लेटि सिब्बहुलमितिसिप् इट् व्यत्ययेनपुनःश्नाप्रत्ययः आत्मनेपदेष्वनतइत्यादेशे श्नाभ्यस्तयोरातइत्याकारलोपश्छान्दसः टेरेत्वाभावः तथाश्रवस्यन्तोऽन्नमिच्छन्तः जयाल्लब्धमन्नंकाक्षन्तः सनिष्णत संभजन्ते ॥ ५ ॥

५. इन्द्र, सोमपान कर प्रसन्न होने पर मनोरथ-दाता बनो। तुम यजमानों की रक्षा किया करते हो; अपने बन्धुताकामी यजमानों की रक्षा किया करते हो; इसलिए वे, तुम्हारी वृद्धि के निमित्त अपने यज्ञों में बार-बार सोम प्रदान करते हैं। युद्ध-सुख के भोग के लिए तुमने सिंहनाद किया था। यजमान लोग तुमसे नाना प्रकार की भोग्य वस्तु पाते हैं; विजय-द्वारा प्राप्त अन्न की इच्छा करते हुए तुम्हारे पास आते हैं।

उतोनोअस्याउषसोजुषेतह्यर्कस्यबोधिहविषोहवीमभिःस्वर्षाताहवीमभिः। यदिन्द्रहन्तवेमृधोवृषावज्रिञ्चिकेतसि।
आमेअस्यवेधसोनवीयसोमन्मश्रुधिनवीयसः ॥ ६ ॥

उतो इति। नः। अस्याः। उषसः। जुषेत। हि। अर्कस्य। बोधि। हविषः। हवीमऽभिः। स्वःऽसाता। हवीमऽभिः। यत्। इन्द्र। हन्तवे। मृधः। वृषा। वज्रिन्। चिकेतसि। आ। मे। अस्य। वेधसः। नवीयसः। मन्म। श्रुधि। नवीयसः ॥ ६ ॥

अयमिन्द्रोनोऽस्माकंसंबन्धिनीं अस्याउषसः कर्मणिषष्ठी एतामुषसंस्तुत्याहःसंबन्धिनमुषःकालंउतोजुषेत अपिनामसेवेत उषस्येवास्माकंअयमिन्द्रोयज्ञंगच्छेदित्यर्थः हिःपूरणार्थः गत्वाचअर्कस्यहविषः पूर्ववत्कर्मणिषष्ठी अर्चनसाधनंहविः हवीमभिः हवनप्रकारविशेषैः दत्तं हविःउतोबोधि अपिनामजानीहि किंच स्वर्षाता स्वर्गस्यान्यस्यसुखविशेषस्यवासंभजनस्थानेयज्ञेहवीमभिराह्वानैराहूतोभवेतिशेषः अस्माभिराहूतःसन्उषस्येवागत्यहविःस्वीकरोतीत्यर्थः कस्मादिदमुच्यते यद्यस्मात्कारणात् हेवज्रिन् वज्रयुक्तेन्द्र मृधःहिंसकान्शत्रून् हन्तवेहन्तुं वृषा वर्षितासन्कामानांचिकेतसि अवबुध्यसे कितज्ञाने जौहोत्यादिकः लेटचडागमः नाभ्यस्तस्याचिपितीत्यत्रछन्दसिबहुलमितिवचनाल्लघूपधगुणप्रतिषेधाभावः अभ्यस्तानामादिरित्याद्युदात्तत्वम् तस्माद्ब्रूमः हेइन्द्र मेमम मन्म मननीयंस्तोत्रंआश्रुधिसर्वतःश्रृणु कीदृशस्यमे वेधसः मेधाविनःनवीयसोनवतरस्यदीक्षितसंस्कारैःसंस्कृतत्वान्नवीयस्त्वं पुनर्विशेष्यते नवीयसःअतिशयेननवनवतः अत्यन्तमभिनवस्तुतिमतः अत्रयजमानविशेषणैस्तत्कर्तृकंस्तोत्रमेवविशिष्टंभवति ॥ ६ ॥

६. इन्द्र, तुम हमारे प्रातःकालीन यज्ञ को आश्रित करोगे क्या? इन्द्र, आह्वान-मंत्र-द्वारा प्रदत्त, पूजा के लिए, हव्य को जानो। आह्वान मंत्र-द्वारा आहूत होकर सुख-भोग के स्थान पर उपस्थित हो जाओ। वज्रयुक्त इन्द्र, निन्दकों के विनाश के लिए अभीष्टवर्षी होकर जागो। इन्द्र, मैं मेधावी और नया मनुष्य हूँ; मैं असाधारण स्तुतिवाला हूँ; मेरा मनोहर स्तोत्र सुनो।

त्वंतमिन्द्रवावृधानोअस्मयुरमित्रयन्तंतुविजातमर्त्यंवज्रेणशूरमर्त्यम् ।
जहियोनोअघायतिशृणुष्वसुश्रवस्तमः ।
रिष्टंनयामन्नपभूतुदुर्मतिर्विश्वापभूतुदुर्मतिः ॥ ७ ॥ २० ॥
त्वम् । तम् । इन्द्र । वृवृधानः । अस्मऽयुः । अमित्रऽयन्तम् ।
तुविऽजात । मर्त्यम् । वज्रेण । शूर । मर्त्यम् । जहि । यः । नः ।
अघऽयति । शृणुष्व । सुश्रवःऽतमः । रिष्टम् । न । यामन् । अप ।
भूतु । दुःऽमतिः । विश्वा । अप । भूतु । दुःऽमतिः ॥ ७ ॥ २० ॥

हेइन्द्र तुविजात अस्मत्स्तुत्यावहुभावमापन्न शूरविक्रान्त त्वंववृधानःअत्यर्थंवर्धमानः अस्मयुः अस्मान्त्वद्भक्तान्कामयमानः तं अमित्रयन्तं अस्मासुशत्रुत्वमाचरन्तं मर्त्यमरणस्वभावं वज्रेणजहि हन्तेर्जइतिजादेशः तस्यअसिद्धवदत्राभादित्यसिद्धत्वाद्धेर्लुगभावः तमित्युक्तंकमित्याह—योमर्त्यमर्त्योनोऽस्माकं अघायतिअघंपापंदुःखंवाइच्छति तंजहि अश्वाघस्यादित्यात्वम्. किंच हेसुश्रवस्तम अतिशयेनशोभनश्रवणस्त्वं शृणुष्वश्रावयास्मद्वाक्यम् कीदृशंतदिति तदुच्यते—हेइन्द्र त्वत्प्रसादाद्दुर्मतिः अस्मज्जिघांसाविषयादुष्टाबुद्धिःअपभूतु अपगताभवतु छान्दसः शपोलुक् भूसुवोस्तिङीतिगुणप्रतिषेधः नकेवलंहिंसारूपा अपितुविश्वासर्वापिक्रोधपरिवादादिरूपाअपभूतु तत्रदृष्टान्तः—यामन् यामनिअध्वनि रिष्टंनअध्वनःश्रमेणहिंसितंपरिश्रान्तं यथादुर्मतिःचौरादिविषयाबाधते तद्वदस्मान्बाधमानादुर्मतिःअपगच्छतु यद्वा यामनि मार्गेयक्षादिरूपेरिष्टं असुरकृतहिंसादिरूपंविघ्नं परिहरसितद्वत् दुर्मतिःपरिहर्तव्येत्यर्थः ॥ ७ ॥

७. अनेक गुण-विशिष्ट इन्द्र, हे शूर, तुमने हमारी स्तुति से वृद्धि पाई है और हमारे प्रति संतुष्ट हो। जो व्यक्ति हमारे प्रति शत्रुता का आचरण करता है और जो हमें दुःख पहुँचाना चाहता है, उसे वज्र-द्वारा विनष्ट करो। हे सुनने के लिए उत्कण्ठित इन्द्र, सुनो। मार्ग में थके-माँदे व्यक्ति को जो दुर्बुद्धि मनुष्य पीड़ा पहुँचाते हैं, उस प्रकार के सारे दुर्मति मनुष्य हमारे पास से दूर हो जायँ।

कस्मादिदमुच्यते यद्यस्मात्कारणात् हेवज्रिन् वज्रयुक्तेन्द्र मृधःहिंसकान्शत्रून् हन्तवेहन्तुं वृषा वर्षितासन्कामानांचिकेतसि अवबुध्यसे कितज्ञाने जौहोत्यादिकः लेटयडागमः नाभ्यस्तस्याचि-

त्वयावयंमघवन्पूर्व्येधनइन्द्रत्वोताःसासह्यामपृतन्यतोवनुयामवनुष्यतः ।
नेदिष्ठेअस्मिन्नहन्यधिवोचानुसुन्वते ।
अस्मिन्यज्ञेविचयेमाभरेकृतंवाजयन्तोभरेकृतम् ॥ १ ॥
त्वया । वयम् । मघऽवन् । पूर्व्ये । धने । इन्द्रत्वाऽऊताः । ससह्याम ।
पृतन्यतः । वनुयाम । वनुष्यतः । नेदिष्ठे । अस्मिन् । अहनि ।

अधि । वोच । नु । सुन्वते । अस्मिन् । यज्ञे । वि । चयेम ।
भरे । कृतम् । वाजऽयन्तः । भरे । कृतम् ॥ १ ॥

हेमघवन् मघःसौख्यंतद्वन्निन्द्र त्वया साधनेनयुक्तावयं अतएवेन्द्रत्वोता अतिप्रबलेनेन्द्रेण त्वयारक्षिताःसन्तः प्रत्ययोत्तरपदयोश्चेतित्वादेशः छान्दसमात्वं पृतन्यतः पृतनामात्मनइच्छतः प्रबलसेनायुक्तान्शत्रून् ससह्याम अभिभवेम तथा वनुष्यतः अस्मत्प्रहारायागच्छतः शत्रून्वनुयाम तेषामागमनात्पूर्वमेववयंसंभजेम किंच पूर्व्येधनेऽस्मिन्यज्ञे नेदिष्ठे अत्यन्तसंनिहिते अस्मिन्नहनिअभिषवयुक्ते अद्यतनेहनिसुन्वते यजमानाय तदर्थं अधिवोचतं हविःप्रदंयजमानंयज्ञंवा नुक्षिप्रं अधिकंब्रूहि लोटिव्यत्ययेनाङ् वचउम् किंच हेइन्द्र वयं यजमानाः भरे संग्रामे कृतं जयस्यकर्तारंत्वामुद्दिश्य तज्जयार्थं वाजयन्तः हविर्लक्षणान्नमुपाचरन्तः विचयेम स्तोत्रादिकं हविरादिकंवा विचिनुयाम चिनोतेर्व्यत्ययेनशप् पुनःकीदृशंत्वां भरे देवानां संग्रामे असुरजये देवानां सम्यग्भरणेवा कृतंकर्तारं भरइतिसंग्रामनाम भरतेर्वाहरतेर्वेतियास्कः[1] ॥ १ ॥

१. हे सुख-संयुक्त इन्द्र, तुम्हारे द्वारा रक्षित होकर हम प्रबल वाहिनी से सम्पन्न शत्रुओं को परास्त करेंगे। प्रहार के लिए प्रस्तुत शत्रु पर प्रहार करेंगे। इन्द्र, पूर्व-धन-संयुक्त यह यज्ञ निकटवर्त्ती है; इसलिए आज हविर्दाता यजमान के उत्साह के लिए कथा कहो। इन्द्र, तुम युद्ध-जयी हो। तुम्हारे उद्देश्य से हम हव्य लाते हैं। तुम युद्ध-विजेता हो।

स्वर्जेषेभरआप्रस्यवक्मन्युषर्बुधःस्वस्मिन्नञ्जसिक्राणस्यस्वस्मिन्नञ्जसि ।
अहन्निन्द्रोयथाविदेशीर्ष्णाशीर्ष्णोपवाच्यः ।
अस्मत्रातेसध्र्यक्सन्तुरातयोभद्राभद्रस्यरातयः ॥ २ ॥

स्वःऽजेषे । भरे । आप्रस्य । वक्मनि । उषःऽबुधः । स्वस्मिन् । अञ्जसि ।
क्राणस्य । स्वस्मिन् । अञ्जसि । अहन् । इन्द्रः । यथा । विदे ।
शीर्ष्णाऽशीर्ष्णा । उपऽवाच्यः । अस्मऽत्रा । ते । सध्र्यक् । सन्तु ।
रातयः । भद्राः । भद्रस्य । रातयः ॥ २ ॥

अयमिन्द्रः स्वर्जेषेस्वर्गगमनसाधने भरे संग्रामे युद्धे आभिमुख्येनहतस्यस्वर्गः द्वाविमौपुरुषौलोकेसूर्यमण्डलभेदिनावित्यादिस्मृतिषुप्रसिद्धः आप्रस्य आपनशीलस्य शत्रुवधाय इतस्ततोव्याप्तस्य औणादिकोरः शूरस्य वक्मनि मार्गभूते स्वस्मिन् स्वभूते अञ्जसि अभिव्यक्तिमति कपटादिरहिते पुनःसएवविशेष्यते स्वस्मिन्नंजसि स्वकीये अञ्जसि मुखे महतिसंग्रामे यद्वा स्वस्मिन्नञ्जसि शत्रौ स्वयमेव अप्रच्छन्नत्वेन आगतेसति अहन् शत्रून्हिनस्ति कस्यसंग्रामइतितदुच्यते—आप्रस्य आपनशीलस्य आसमन्तादिन्द्रस्य प्रीणयितुर्वा उषर्बुधः उषःकाले अनुष्ठानाय प्रबुध्यमानस्य क्राणस्ययागंकुर्वाणस्य करोतेःशतरि छान्दसःशपोलुक्

---

१ नि० ४. २४.

अस्ययजमानस्य शत्रूनहन् हिनस्ति अतःकारणात् अयमिन्द्रःशीर्ष्णा शीर्ष्णोपवाच्यः सर्वेषांशिरसाप्रणम्यः स्तुत्यः शीर्षंश्छन्दसीतिउदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वं नित्यवीप्सयोरितिद्विर्भावः तत्रदृष्टान्तः—यथाविदे सर्वज्ञाय शिरसाप्रणामादिक्रियतेस्तूयतेच तथैनमित्यर्थः यद्वा यथाविदे येनप्रकारेणहन्तव्यंशत्रुंजानासि तंतंप्रहंसि वेत्तेर्व्यत्ययेनात्मनेपदं पुरुषव्यत्ययः लोपस्तआत्मनेपदेष्वितितल्लोपः अथवा यथाविदे यंयंविन्दसेलभसेशत्रुं तंतंमारयसि अतःकारणात्स्तुत्यइत्यर्थः अस्मिन्पक्षे छान्दसोविकरणस्यलुक् पूर्ववत्तल्लोपः किंच हेइन्द्र तेरातयः तवसंबन्धीनिधनानि दानानि अस्मत्रा अस्मास्वेव सध्र्यक्सह एकोद्योगेनसन्तु भवन्तु सहपूर्वादञ्चतेर्ऋत्विगित्यादिनाक्विन् सहस्यसध्रिरितिसध्र्यादेशः अद्रिसध्र्योरन्तोदात्तनिपातनंकृत्स्वरनिवृत्त्यर्थमिति सचान्तोदात्तःउदात्तस्वरितयोर्यणइतिस्वरितः किंच भद्रस्यस्तुत्यस्य तवरातयः अस्मासुदत्तानि दानानि भद्राअतिस्थिराणिसन्तु ॥ २ ॥

२. शत्रु वध के लिए इधर-उधर दौड़नेवाले वीर पुरुषों के स्वर्ग-साधन तथा कपटादि-रहित मार्ग-स्वरूप संग्राम के आगे इन्द्र, प्रातःकाल में जागे हुए याज्ञिकों के, शत्रुओं का नाश करते हैं। सर्वज्ञ की तरह इन्द्र की अवनत-मस्तक होकर स्तुति करना सबका कर्त्तव्य है। इन्द्र, तुम्हारा दिया धन केवल हमारे ही लिए हो। तुम भद्र हो, तुम्हारा दिया धन स्थिर हो।

तत्तुप्रयःप्रत्नथातेशुशुक्वनंयस्मिन्यज्ञेवारमकृण्वतक्षयमृतस्यवारसिक्षयम्।
वितद्वोचेरधद्वितान्तःपश्यन्तिरश्मिभिः।
सघाविदेअन्विन्द्रोगवेषणोबन्धुक्षिद्भ्योगवेषणः ॥ ३ ॥

तत्। तु। प्रयः। प्रत्नऽथा। ते। शुशुक्वनम्। यस्मिन्। यज्ञे। वारम्। अकृण्वत। क्षयम्। ऋतस्य। वाः। असि। क्षयम्। वि। तत्। वोचेः। अध। द्विता। अन्तरिति। पश्यन्ति। रश्मिऽभिः। सः। घ। विदे। अनु। इन्द्रः। गोऽएषणः। बन्धुक्षित्ऽभ्यः। गोऽएषणः ॥ ३ ॥

हेइन्द्र तत्तुखलु प्रसिद्धंप्रयः हविर्लक्षणमन्नं शुशुक्वनं आज्यादिसंयोगेनभृशंदीप्तं शुचेर्दीप्तिकर्मणएतद्रूपं तेतवस्वभूतं प्रत्नथा पुरातनंयथा तेतवस्वंभवति तथाद्यतनमपि सर्वदात्वामेवयजन्तइतिभावः प्रत्नपूर्वविश्वेत्यादिनाइवार्थेथाल् लित्स्वरः कीदृशंतदितिउच्यते यज्ञेयागे यस्मिन्हविषि दातव्येसतिवारंवरणीयं क्षयंस्थानंवेदिलक्षणं अकृण्वत कुर्वन्ति ऋत्विजः कस्तवविशेषइतिचेदुच्यते—ऋतस्यसत्यफलस्य यज्ञस्यवारसि क्षयं निवासस्थानं संभक्तोऽसि यद्वा

ऋतमित्युदकनाम तस्यक्षयं स्थानंप्राप्तोसि वृष्टिप्रदोसीत्यर्थः अथवाऋतस्यादित्यस्य क्षयं स्थानंद्युलोकाख्यं वारसि यजमानं गमयितासि तत्तादृशंवक्ष्यमाणंकर्मविवांचेर्विब्रूमहे अध अतःकारणात्द्विदितान्तः द्वित्वोपेतयोर्द्यावापृथिव्योर्मध्ये अन्तरिक्षे रश्मिभिरादित्यकिरणैः पश्यन्ति मेघंनिर्भिद्य रश्मिद्वाराप्रवर्षणरूपंकर्म सर्वेजनाःप्रत्यक्षतःपश्यन्ति अस्मद्दत्तंहविरादित्यंप्रापयित्वा तद्रश्मिद्वारावृष्टिंजनयसीत्येतत्सर्वैर्दृश्यतइत्यर्थः इदानींपरोक्षतयास्तौति सघ सखल्विन्द्रः गवेषणः उदकस्यान्वेषणशीलः तथावन्धुक्षिद्भ्यः हविःप्रदानादिनाबन्धुभावंप्राप्तवद्भ्योयजमानेभ्यः गवेषणः गवांप्रसिद्धानांएषणकर्ता इषेर्बाहुलकात्कर्तरिल्युट् यद्वा गवेषमार्गणे पूर्ववल्ल्युट् यजमानफलस्यमृगयितेत्यर्थः अनु उक्तक्रमेणैवकर्तासन् विदेविन्दते उदकप्राप्तिप्रकारं जानाति॥ ३ ॥

३. इन्द्र, पूर्व की तरह इस समय भी अतीव दीप्त और प्रसिद्ध हव्य-रूप अन्न तुम्हारा ही है। तुम यज्ञ के निवास-स्थान-स्वरूप हो। जिस अन्न द्वारा ऋत्विक् लोग स्थान सुशोभित करते हैं, वह अन्न तुम्हारा ही है। तुम जल की वृष्टि करते हो जिसे संसार आकाश और पृथ्वी के बीच सूर्य-किरण-द्वारा देख सकता है। इन्द्र जल की गवेषणा में तत्पर हैं। वे अपने बन्धु यजमानों के लिए फल देते हैं। वे जलवर्षण के प्रकार को जानते हैं।

नूइत्थातेपूर्वथांचप्रवाच्यंयदङ्गिरोभ्योवृणोरपव्रजमिन्द्रशिक्षन्नपव्रजम्।
ऐभ्यःसमान्यादिशास्मभ्यंजेषियोत्सिंच।
सुन्वद्भ्योरन्धयाकंचिदव्रतंहृणायन्तंचिदव्रतम्॥ ४॥

नु। इत्था। ते। पूर्वऽथा। च। प्रऽवाच्यम्। यत्। अङ्गिरःऽभ्यः।
अवृणोः। अप। व्रजम्। इन्द्र। शिक्षन्। अप। व्रजम्। आ।
एभ्यः। समान्या। दिशा। अस्मभ्यम्। जेषि। योत्सि। च।
सुन्वत्ऽभ्यः। रन्धय। कम्। चित्। अव्रतम्। हृणायन्तम्।
चित्। अव्रतम्॥ ४॥

हेइन्द्र तेतवसंबन्धिकर्म इत्थाइत्थंउक्तप्रकारं वक्ष्यमाणरूपंवा पूर्वथापूर्वमिव पूर्वथानुक्षिप्रं प्रवाच्यंसर्वैःस्तोतव्यंतद्वदिदानींतनमपिस्तुत्यं नूइत्थेत्यत्रईषाअक्षादित्वात्प्रकृतिभावः कीदृशंतदितितदुच्यते—यदत्वमंगिरोभ्यः एतद्गोत्रोत्पन्नेभ्योमहर्षिभ्यः तेषामर्थाय व्रजं अन्तरिक्षेगच्छन्तंमेघंअपावृणोः अपवृतवानसि मेघमुद्घाट्यवृष्टिमुत्पादितवानसि व्रजइतिमेघनाम व्रजः वराहइतितन्नामसुपाठात् किंच हेइन्द्र व्रजंगवांसमूहं अप अयष्टृभ्योऽपहृत्यतेभ्यएवांगिरोभ्यः शिक्षन्वितरन्रक्षितवानसि यद्वा पणिभिरपहृतं बिलेस्थितंगवांव्रजमपहर्तुमपावृणोः

अपवृतद्वारमकरोः किंच हेइन्द्र एभ्यउक्तेभ्यऋषिभ्यः समान्यादिशासमानयारीत्यातेभ्योय-थाआनीयददासि तद्वत् अस्मभ्यमपिजेषिधनंसंग्राममंवाजय तदर्थंयोत्सियुद्ध्यस्वच छान्दसो-विकरणस्यलुक् व्यत्ययेनपरस्मैपदम् किंच त्वंसुन्वद्भ्यः त्वदर्थमभिषवंकुर्वद्भ्योऽस्मभ्यं कंचि-दव्रतं सर्वमपिअयज्वानं यागविरोधिनंरन्धयबाधय मदधीनंकुर्वित्यर्थः नकेवलमयज्वा-नं किंतु हणायन्तंचिदव्रतं चिदित्यवकुत्सिते अस्मासुरोषंकुर्वन्तं तमेवायष्टारं स्वयंरोषवन्तंवा यद्वा हणायन्तं चित् रोषंकुर्वन्तमपि अव्रतंअकर्माणं पुनर्हननासमर्थंकुर्वन्नरन्धय हणीङ्रोषे क-ण्ड्वादिः व्यत्ययेनाकारः ॥ ४ ॥

४. इन्द्र, पूर्व काल की तरह तुम्हारा कर्म इस समय भी सबकी प्रशंसा के योग्य है। तुमने अङ्गिरा लोगों के लिए वृष्टि की थी। तुमने अपहृत गो-धन का उद्धार करके उन लोगों को दिया था। इन्द्र, तुम उक्त ऋषियों की तरह आर्यों के लिए युद्ध करते और विजयी बनते हो। जो अभिषव करते हैं, उनके लिए यज्ञ-विघ्नकारियों को अवनत करते हो। जो यज्ञ-विघ्नकारी रोष प्रकाशित करते हैं, उन्हें अवनत करो।

संयज्जनान्क्रतुभिःशूरईक्षयद्धनेहितेतरुषन्तश्रवस्यवःप्रयक्षन्तश्रवस्यवः।
तस्माआयुःप्रजावदिद्बाधेअर्चन्त्योजसा।
इन्द्रओक्यंदिधिषन्तधीतयोदेवाँअच्छानधीतयः ॥ ५ ॥
सम्। यत्। जनान्। क्रतुऽभिः। शूरः। ईक्षयत्। धने। हिते। तरुषन्त। श्रवस्यवः। प्र। यक्षन्त। श्रवस्यवः। तस्मै। आयुः। प्रजाऽवत्। इत्। बाधे। अर्चन्ति। ओजसा। इन्द्रे। ओक्यम्। दिधिषन्त। धीतयः। देवान्। अच्छ। न। धीतयः ॥ ५ ॥

यत् यइन्द्रः शूरः विक्रान्तःसन् जनान्सर्वान्प्राणिनः क्रतुभिः प्रज्ञाभिः समीक्षयत् स-म्यगीक्षयति तत्तद्विषयान् अन्तर्यामिरूपेण सर्वेषांबुद्धिषुस्थित्वा तैर्विषयानुल्लेखयतीत्यर्थः य-द्वा क्रतुभिः कर्मभिः सुकृतदुष्कृतरूपैर्निमित्तभूतैस्तत्तत्फलैर्योजयति एवंप्रेरयतिसति श्रवस्य-वोन्नमिच्छन्तोयजमानाः धनेगवादिरूपेहिते अभिमतेसति यद्वा हिते धने अभिप्रेतेसति तरुष-न्ताहिंसन्तिशत्रून् तरुष्यतिर्वधकर्मा छान्दसेलुङिव्यत्ययेनच्लेरङ् तरतेर्वालङिउकारशिपृशपस्त्र-योविकरणाः तरन्तीत्यर्थः अतःकारणात् श्रवस्यवोन्नंहविर्लक्षणं इन्द्रायात्मनेवा इच्छन्तःस-न्तः प्रयक्षन्त प्रकर्षेणयजन्ते छान्दसेलुङिव्यत्ययेनक्सः किंच तस्माइत् तस्मै प्रसिद्धायेन्द्रायै-व आयुर्हविर्लक्षणमन्नं प्रजावत् पुत्रादिसहितंभवति तैःसहितैर्दीयतेइत्यर्थः किंच यजमानाः ओजसा स्वकीयेनबलेनयुक्ताःबाधे शत्रूणांबाधनेनिमित्तभूतेसति बाधितुंवा कृत्यार्थेतवैकेन्के-न्यत्वनइतिकेन्प्रत्ययः अर्चन्ति पूजयन्ति यद्वा तस्माइत्यजमानायैव बाधेबलेनिमित्तभूतेसति

बाधइतिबलनाम बाधःतविषीतितन्नामसुपाठाव् प्रजावव् पुत्राद्युपेतमायुः अन्नं लब्धुं ओजसा बलेनयुक्ताः अर्चन्ति इन्द्रंपूजयन्ति ऋत्विजइतिशेषः किंच धीतयः कर्मवन्तोयजमानाःइन्द्रे इन्द्रसमीपे गंगायांघोषइतिवव तत्सामीप्यंलक्ष्यते इन्द्रलोकेइत्यर्थः तत्रओक्यं ओकः निवासस्थानं स्वार्थेयत् दिधिषन्त धारयन्ति धिषशब्दे अत्रधारणार्थः जौहोत्यादिकः व्यत्ययेनान्तादेशः तएवपुनर्विशेष्यन्ते धीतयः स्वर्गसाधनकर्मवन्तःसन्तोदेवाँअच्छान देवानाभिमुख्येनप्राप्तुमिवओक्यंदिधिषन्तेत्यन्वयः ॥ ५ ॥

५. शूर इन्द्र, कर्म-द्वारा मनुष्यों के विषय में यथार्थ विचार करते हैं; इसलिए अन्नाभिलाषी यजमानगण अभिमत धन प्राप्त करके शत्रुओं का विनाश करते हैं। वे अन्नाभिलाषी होकर विशेष रूप से यज्ञ करते हैं। इन्द्र के उद्देश्य से प्रदत्त अन्न पुत्रादि प्राप्ति का कारण है। अपनी शक्ति से शत्रु के निवारण के लिए ल ग इन्द्र की पूजा करते हैं। यज्ञकारी लोग इन्द्र के पास वास-स्थान प्राप्त करते हैं, मानों याज्ञिक लोग देवों के पास ही रहते हैं।

अविवाक्येहनि मानसग्रहभक्षणानन्तरं नक्षत्रेषुदृश्यमानेषु अध्वर्युप्रमुखाःसर्वेयुवन्तमित्येतांजपेयुः गार्हपत्येजुह्वतीतिखण्डेसूत्रितम्—युवन्तमिन्द्रापर्वतापुरोयुधेतिजपन्तइति ।

युवंतमिन्द्रापर्वतापुरोयुधायोनःपृतन्यादपतन्तमिद्धंतंवज्रेणतंतमिद्धंतम् ।
दूरेचत्तायच्छन्त्सद्गहनंयदिनंक्षत् ।
अस्माकंशत्रून्परिशूरविश्वतोदर्मादर्षीष्टविश्वतः ॥ ६ ॥ २१ ॥

युवम् । तम् । इन्द्रापर्वता । पुरःऽयुधा । यः । नः । पृतन्यात् ।
अप । तम्ऽतम् । इत् । हतम् । वज्रेण । तम्ऽतम् । इत् । हतम् ।
दूरे । चत्ताय । छन्त्सत् । गहनम् । यत् । इनक्षत् । अस्माकम् ।
शत्रून् । परि । शूर । विश्वतः । दर्मा । दर्षीष्ट । विश्वतः ॥ ६ ॥ २१ ॥

हेइन्द्रापर्वता इन्द्रः प्रसिद्धः पर्वतः पर्ववान्मेघः तदभिमानीदेवः तौयुवां पुरोयुधा संग्रामेपुरतोयोद्धारौ नोऽस्माकं यःशत्रुः पृतन्याव् अस्मान्हन्तुं पृतनामात्मनइच्छति तंतमिव् सर्वमपिशत्रुंअपहतं नाशयतं हन्तेर्लेटचनुदात्तोपदेशेत्यनुनासिकलोपः केनसाधनेनेतितदुच्यते—तंतमिव् सर्वमपि शत्रुं हन्तुं वज्रेणसाधनेनप्राप्तुतं ईदृक्सामर्थ्यमस्तीतिदर्शयति यव् योवज्रः लिङ्व्यत्ययः दूरेचत्ताय अत्यन्तदूरदेशेगतायचातयतेर्वानाशकर्मणः नष्टायादर्शनमापन्नायेत्यर्थः ग्रसितस्कभितेत्यादौनिपातनादिडभावः तादृशंशत्रुंछन्त्सव् छन्दयति कामयतेहन्तुं छन्दतेः कान्तिकर्मणइदंरूपं किंच गहनं दुरवगाहं स्थानं अतिकठिनं हृदयं शत्रुसमीपंवाइनक्षव् व्या-

मोति नक्षगतौ छान्दसइकारोपजनः इनक्षतिर्वाप्रकृत्यन्तरं इदानीमिन्द्रएवस्तूयते हेशूर शौर्योपेतेन्द्र अस्माकं विरोधिनःशत्रून् विश्वतोविश्वान् सार्वविभक्तिकस्तसिल् परि परितः विश्वतोविश्वैरुपायैर्दर्षीष्ट दारयसि किंच दर्मा शत्रूणांदारकः दारयतेरन्येभ्योऽपिदृश्यन्तइति मनिन् णिलोपेउदात्तनिवृत्तिस्वरेणमनिनउदात्तत्वम् ह्रस्वश्छान्दसः यद्वा दृभये घटादित्वान्मितांह्रस्वइतिह्रस्वत्वं तवपूर्वोक्तोवज्रः विश्वतःसर्वान्शत्रून्सर्वैरुपायैर्वा दर्षीष्ट दारयति यद्वा दर्मा शत्रूणांदारकः इन्द्रोदर्षीष्ट कात्स्न्र्येनदारयतिशत्रून् ॥ ६ ॥

६. हे इन्द्र और पर्वत या मेघ के अभिमानी देव, तुम दोनों अग्रगामी होकर, जो शत्रु हमारे विरोध में सेना-संग्रह करते हैं, उन सबको विनष्ट करो। वज्र-प्रहार-द्वारा उन सबको विनष्ट करो। यह वज्र अत्यन्त दूरगामी शत्रु का भी विनाश करने की इच्छा करता और अति गहन-स्थान पर भी व्याप्त होता है। शूर इन्द्र, तुम हमारे सारे शत्रुओं को त्रिविध उपायों-द्वारा विदीर्ण करते हो। शत्रु-विदारक वज्र विविध उपायों से शत्रुओं को विदीर्ण करता है।

उभेपुनामीतिसप्तर्चंसप्तमंसूक्तम् पारुच्छेपमैन्द्रं आद्यात्रिष्टुप् अभिवुग्येत्याद्यास्तिस्रोनुष्टुभः पिशंगभृष्टिमित्येषागायत्री अवर्महइत्येषाधृतिः वनोतिहीत्यनभिधानादत्यष्टिः अत्रानुक्रमणिका—उभेसप्ताद्यौत्रिष्टुप्त्रिस्रोऽनुष्टुभोगायत्रीधृतिरिति। अस्यसूक्तस्यविनियोगमाहशौनकः—उभेपुनामीतिपुरारिपुध्न्यस्तुमकीर्तिताः। ताजपन्प्रयतोनित्यमिष्टान्कामान्समश्नुते। ताजपन्हन्तिरक्षांसिसपत्नांश्चनिकृन्तति।

उ॒भेपु॑नामि॒रोद॑सीऋ॒तेन॒द्रुहो॑दहामि॒संम॒हीर॑नि॒न्द्राः।
अ॒भि॒व्लग्य॒यत्र॑ह॒ताअ॒मित्रा॑वैल॒स्थानं॒परि॑तृ॒ळ्हाअशे॑रन् ॥ १ ॥

उ॒भे इति॑। पु॒ना॒मि॒। रोद॑सी॒ इति॑। ऋ॒तेन॑। द्रुहः॑। द॒हा॒मि॒।
सम्। म॒हीः। अ॒नि॒न्द्राः। अ॒भि॒ऽव्लग्य॑। यत्र॑। ह॒ताः। अ॒मित्राः॑।
वै॒ल॒ऽस्था॒नम्। परि॑। तृ॒ळ्हाः। अशे॑रन् ॥ १ ॥

हेइन्द्र ऋतेनत्वदुद्देश्येनयज्ञेन बलेनोभेरोदसीद्यावापृथिव्यौपुनामिलोकद्वयं हिंसकानांतवायष्टॄणांवा अपगमनेन पावयामि किंच भूलोके अनिन्द्राः इन्द्रविरहितानामाश्रयभूतामहीः उर्वीः अतएवद्रुहः द्रोहिणामाधारभूतत्वात् स्वयमपिद्रोग्ध्रीः संदहामिसंभूयैकहेलयादहामि पुनस्ताएवविशेष्यन्ते यत्रयासुभूमिषु अमित्राः शत्रवः अभिव्लग्य अभितोगत्वा हताः सर्वतःप्राप्ताः अस्माभिर्घातितावा व्लुगतिर्गतिकर्मा छान्दसोधातुः तेसर्वेपरितृळ्हाः हिंसिताः तृहूहिंसार्थः ऊदित्त्वाद्यस्यविभाषेतीट्प्रतिषेधः हिंसिताःसन्तः अशेरन् शयनंप्राप्ताः शेतेर्व्यत्ययेनपरस्मैपदं शीङोरुट् शीङःसार्वधातुकेगुणः वैलस्थानं विलशब्दोगर्तसमानार्थः सचगर्तः श्मशानवचनः

अतोऽयमपिश्मशानवाची अथवाबिलसंबन्धिस्थानंनागलोकः तत्रवाअशेरन् यद्वा बिलक्षेपेइति धातुः घञर्थेकः स्वार्थिकोण् तत्रशवाःक्षिप्यन्तेइतिवैलस्थानंश्मशानं तत्रत्वयाहताः भूमिं श्मशानवत्कृत्वासर्वत्रशेरते तान्दहामीत्यर्थः ॥ १ ॥

१. मैं आकाश और पृथिवी, दोनों को, यज्ञ-द्वारा पवित्र करता हूँ। मैं इन्द्र के विरोधियों की पृथिवी को अच्छी तरह दग्ध करता हूँ। जिस-किसी स्थान पर शत्रुगण एकत्र हुए, वहीं मारे गये। अच्छी तरह विनष्ट होकर वे श्मशान में चारों ओर पड़ गये।

अभिव्लग्याचिदद्रिवःशीर्षायातुमतीनाम्।
छिन्धिवटूरिणापदामहावटूरिणापदा ॥ २ ॥

अभिऽव्लग्य । चित् । अद्रिऽवः । शीर्षा । यातुऽमतीनाम् । छिन्धि ।
वटूरिणा । पदा । महाऽवटूरिणा । पदा ॥ २ ॥

अद्रिवः वैरिणांभक्षक यद्वा अद्रेर्मेघस्यादर्तरिन्द्र त्वंयातुमतीनां हिंसावतीनांसेनानां यद्वा यातनासाधनान्यायुधानियातूनितद्वतीनां अथवा यातवोरक्षांसितद्वतीनांसेनानां कर्मणि षष्ठी शत्रूणांसेनाः तासांशीर्षा शीर्षाणिअभिव्लग्याचिवअभितःप्राप्यैव छिन्धिचूर्णय यद्वा तासांसंबन्धीनिरथादीनिछिन्धि केनसाधनेनेतितदुच्यते—वटूरिणापदा वेष्टनशीलेनसर्वव्याप्तेनत्वदीयपादेनअतिविस्तृतेनेत्यर्थः यद्वा वटूरिणापदा वेष्टनशीलेनहस्तिनःसंबन्धिनापादेनऐरावतपादेनेत्यर्थः नकेवलेनयेनकेनपादेनेत्याह—महावटूरिणापदा महावेष्टनवता स्वीयेनैरावतसंबन्धिनावापादेनछिन्धि चूर्णय वटवेष्टने खर्जिपिञ्ज्यादिभ्यऊरोलचावित्यूरच्प्रत्ययः अतइनिठनावितीनिः ॥ २ ॥

२. शत्रु-भक्षक इन्द्र, शत्रुओं की सेना के सिर ऐरावत के पैरों से कुचल दो। उसके पद महा विस्तीर्ण हैं।

अथतृतीया—

अवासांमघवञ्जहिशर्धोयातुमतीनाम्।
वैलस्थानकेअर्मकेमहावैलस्थेअर्मके ॥ ३ ॥

अव । आसाम् । मघऽवन् । जहि । शर्धः । यातुऽमतीनाम् ।
वैलऽस्थानके । अर्मके । महाऽवैलस्थे । अर्मके ॥ ३ ॥

हेइन्द्र मघवन् धनवन् आसांयातुमतीनांयातनासाधनान्यायुधानियातूनि तद्वतीनां यातुधानवतांवासेनानां शर्धोबलंअवजहिचूर्णय तथाकृत्वाच अर्मके कुत्सितेशवैररणीये वैलस्था-

नकेकुत्सितेपूर्वोक्तलक्षणेश्मशानेक्षपयेतिशेषः यद्वा वैलस्थानके बिलसंबन्धिनिकुत्सितेस्थाने अन्धकारावृतेअधोलोकेस्थापयेतिशेषः ननुयत्रक्वचित्क्षुद्रे नेत्याह महावैलस्थे सर्वैर्गन्तव्येम-हाश्मशानेनागलोकेवा पुनःकीदृशे अर्मके कुत्सिते गतासुभिररणीये ॥ ३ ॥

३. मघवन् इन्द्र, इस हिंसावती सेना का बल चूर्ण कर दो और उसे कुत्सित अथवा महान् श्मशान में फेंक दो।

**यासांतिस्रःपंञ्चाशतोभिव्लुङ्गैरपावंपः। तत्सुतेमनायतितकत्सुतेमनायति॥४**

यासाम्। तिस्रः। पञ्चाशतः। अभिऽव्लङ्गैः। अपऽअवपः। तत्।
सु। ते। मनायति। तकत्। सु। ते। मनायति ॥ ४ ॥

हेइन्द्र यासां पूर्वमत्रोक्तलक्षणानां सेनानांतिस्रःपंचाशतः त्रिगुणितपंचाशत्संख्यांसार्धं-शतं अभिव्लंगैः अभिगमनैः व्लुगतिर्गतिकर्मैत्युक्तम् अभिगम्य अपावपः नाशितवानसि हेइन्द्र तत्तादृशंसेनावधादिरूपंकर्मसुमनायति सुष्ठुसंभावयतीत्यर्थः किंच हेइन्द्र तेतव अध्यर्धशतशत्रु-सेनाजयरूपंमहदपि तकदिति सुमनायति अत्यल्पमिदमितिसुष्ठुमन्यते॥ ४ ॥

४. इन्द्र, इस तरह तुमने त्रिगुणित पचास सेनाओं का नाश किया है। तुम्हारे इस कार्य को लोग बहुत पसन्द करते हैं। तुम्हारे लिए यह कार्य सामान्य है।

**पिशङ्गंभृष्टिमंभृणंपिशाचिमिन्द्रसंमृण। सर्वंरक्षोनिबर्हय ॥ ५ ॥**

पिशङ्गऽभृष्टिम्। अंभृणम्। पिशाचिम्। इन्द्र। सम्।
मृण। सर्वम्। रक्षः। नि। बर्हय ॥ ५ ॥

हेइन्द्र पिशंगभृष्टिं ईषद्रक्तवर्णं अंभृणं अतिभयंकरं शब्दायमानं भ्रणशब्दे यङ्लुगन्ता-त्पचाद्यचिछान्दसोमलोपश्च यद्वा महान्तं अतिप्रवृद्धमित्यर्थःअंभृणइतिमहन्नाम अंभृणःमाहिन-इतितत्रपाठात् उक्तविधिंपिशाचिं पिशाचविशेषंजरामित्येके संमृण सम्यक्हिंसय नकेवलंतमे-कं किंतु सर्वंरक्षः रक्षणनिमित्तभूतं राक्षसादिकं निबर्हय निषूदय बृहहिंसायां चौरादिकः ना-मय वधकर्मैतत् नितोशयति निबर्हयतीतितत्रोक्तत्वात् ॥ ५ ॥

५. इन्द्र, कुछ रक्तवर्ण, अति भयंकर और शब्दकारी पिशाचों या अनार्यों का विनाश करो और समस्त राक्षसों या अनार्यों को समाप्त करो।

दशरात्रस्यषष्ठेहनि प्रउगशस्त्रे ऐन्द्रतृचस्यावर्महइन्द्रेत्यादिके प्रथमाद्द्वितीये षष्ठस्येतिख-ण्डेसूत्रितम्—अवर्महइन्द्रवृषन्निन्द्रेति।

अवर्महइन्द्रदादृहिश्रुधीनःशुशोचहिद्यौःक्षानभीषाँअद्रिवोघृणान्नभीषाँ
अद्रिवः । शुष्मिन्तमोहिशुष्मिभिर्वधैरुग्रेभिरीयसे ।
अपूरुषघ्नोअप्रतीतशूरसत्वभिस्त्रिसप्तैःशूरसत्वभिः ॥ ६ ॥

अवः । महः । इन्द्र । ददृहि । श्रुधि । नः । शुशोच । हि । द्यौः ।
क्षाः । न । भीषा । अद्रिऽवः । घृणात् । न । भीषा । अद्रिऽवः ।
शुष्मिन्ऽतमः । हि । शुष्मिऽभिः । वधैः । उग्रेभिः । ईयसे ।
अपुरुषऽघ्नः । अप्रतिऽइत । शूर । सत्वऽभिः । त्रिऽसप्तैः ।
शूर । सत्वऽभिः ॥ ६ ॥

हेइन्द्र महःमहतोमेघस्य कर्मणिषष्ठी महान्तंजलधारिणं मेघं महान्तं वृत्रंवा अवः अवस्तात् अवाङ्मुखं पूर्वाधरेत्यादिनाअसिप्रत्ययोवादेशश्च अन्नरूधरवरित्युभयथा छन्दसीतिरेफः ददृहिविदारय किंच नः अस्मद्वाक्यं श्रुधि शृणु हे अद्रिवः अद्रिर्मेघः तद्वन्निन्द्र हियस्मात्कारणात् द्यौः द्युलोकआश्रयभूतः शुशोचशोचतिवृष्ट्यभावेनहविराद्यभावादितिभावः किंवत् क्षान क्षेतिभूनाम क्षायन्ति निवसन्त्यस्यामितिक्षाः क्षिनिवासे अधिकरणेक्विप् क्षान सर्वनिवासाश्रयभूमिरिव सायथाभीषावृष्ट्यभावात् सस्यादिशोषभीत्याशोचति तद्वल्लोकद्वयमपिवृष्ट्यभावेनशोचतइत्यर्थः असुरपक्षं लोकद्वयमावर्त्यमवर्धमानं धर्तुमसहमानेद्यावापृथिव्यौशोचतइत्यर्थः तस्मात् श्रुधीतिपूर्वत्रान्वयः भीतौदृष्टान्तः—हेअद्रिवः शत्रूणांभक्षक यद्वा अद्रिर्वज्रः तेनतद्वन् हेइन्द्र घृणात् भीषान दीप्तात्अग्नेर्मूर्तितराच्त्वष्टुर्भीत्येव त्वष्टुर्भीत्या पूर्वयथा द्यावापृथिव्यौ शोचतस्तद्वत् अत्रेतिहासमाहुः—पूर्वंजगतिमहान्धकारेणावृतेसति देवाविचिन्त्याग्निंप्रार्थितवन्तः सचत्वष्टृरूपेणद्यावापृथिवीभ्यांसकाशात्तमोविदस्यचुदपद्यत तंदृष्ट्वाद्यावापृथिव्यौ बिभ्यतुरिति सचोभेत्वष्टुर्बिभ्यतुरित्यादिश्रुतितोवगन्तव्यः यद्वा घृणः केवलोग्निः तस्माद्यथाविभीतस्तद्वत् साचभीतिररेजेतांरोदसीइत्यादिश्रुतितोवगन्तव्या तादृशभीतिं वृष्टिप्रदानेनपरिहरेत्यर्थः हेइन्द्र त्वंशुष्मिभिर्बलैः शुष्मिन्तमोहि अतिशयेनबलवान्खलु अतःकारणात्उग्रेभिः उद्गूर्णैःअतिक्रूरैःवधैस्तदुपायैः सहितस्त्वं ईयसे शत्रून्मेघान्वागच्छसि ईङ्गतौ दैवादिकत्वात्श्यन् यद्वा शुष्मिभिर्वधैरितिसंबन्धः हेशूरविक्रान्त सत्वभिरप्रतीत अवसन्नैरक्षःप्रभृतिभिरप्रतिगत युद्धेशत्रुभिरनाक्रान्त यद्वा सत्वभिः प्राणिभिरसंस्कृतमनस्कैरनधिगत अपुरुषघ्नः पौरुषोपेतानां यजनसमर्थानामहननस्त्वं त्रिसप्तैःसत्वभिः त्रिभिःसप्तभिर्वा सत्वभिरनुचरैरुपेतःसन् ईयसइत्यन्वयः ॥ ६ ॥

६. इन्द्र, तुम विशाल मेघ को, निम्न मुख करके, विदीर्ण करो। हमारी बात सुनो ! मेघ-युक्त इन्द्र, जैसे धान्य न होने से डर के मारे

---

१ ऋ० सं० १. ७. १. । २ ऋ०.सं० १. २..३२..।

पृथिवी शोक करती है, वैसे ही स्वर्ग भी शोक करता है। मेघ-संपन्न इन्द्र, पृथिवी और स्वर्ग का भय दीप्त अग्नि की मूर्त्ति की तरह है। इन्द्र, तुम महाबली हो; इसलिए तुम अत्यन्त क्रूर वधोपाय का आश्रय करते आ रहे हो। यजमानों का विनाश नहीं कर सकते। तुम शूर हो। जीवगण तुम्हारे ऊपर आक्रमण नहीं कर सकते। तुम इक्कीस अनुचरों से युक्त हो।

प्रातःसवनेब्राह्मणाच्छंसिनःप्रस्थितयाज्यायाःपुरस्ताद्वनोतिहीत्येषाप्रक्षेपणीया तत्रैव-खण्डेसूत्रितम्—वनोतिहिसुन्वन्क्षयंपरीणसोमोषवोअस्मदभितानिपौंस्येति।

वनोतिहिसुन्वन्क्षयंपरीणसःसुन्वानोहिष्मायजत्यवद्विषोदेवानामवद्विषः।
सुन्वानइत्सिषासतिसहस्रावाज्यवृतः।
सुन्वानायेन्द्रोददात्याभुवंरयिंददात्याभुवम् ॥ ७ ॥ २२ ॥

वनोति। हि। सुन्वन्। क्षयम्। परीणसः। सुन्वानः। हि। स्म। यजति। अव। द्विषः। देवानाम्। अव। द्विषः। सुन्वानः। इत्। सिसासति। सहस्रा। वाजी। अवृतः। सुन्वानाय। इन्द्रः। ददाति। आऽभुवम्। रयिम्। ददाति। आऽभुवम् ॥ ७॥ २२ ॥

हेइन्द्र सुन्वन् त्वामुद्दिश्याभिषवंकुर्वन्यजमानः क्षयंसर्वैर्वस्तव्यं गन्तव्यंवा गृहंवनोति हि त्वत्प्रसादात्संभजते हिःप्रसिद्ध्यर्थः किंच सुन्वानोहि सोमयागंकुर्वाणएव परीणसः परितो-नद्धान् संबद्धान्द्विषोद्वेष्टॄनवयजति नाशयति नकेवलंयागद्वेषिणः देवानांद्विषोप्यवयजति किं-च सुन्वानइत् अभिषवोपलक्षितंयागंकुर्वाणः हेइन्द्रत्वत्प्रसादात्वाजी वाजवान् अन्नवान् अवृतः परैरनाक्रान्तःसन् सहस्रा सहस्राण्यपरिमितानि गवादिधनानि सिषासति साधयितुं संभक्तुं इ-च्छति सनेःसनि सनीवन्तर्धेतिविकल्पनादिड्भावेजनसनखनेत्यात्वं केनेदंलभ्यतइतितत्राह—सु-न्वानाय इन्द्रमुद्दिश्यसोमयागंकुर्वाणाययजमानायवा अयमिन्द्रः आभुवंसमन्ताद्भवनशीलं त-था आभुवं पुनर्भवनशीलं अतिसमृद्धंरयिंगवादिरूपंधनंददातिप्रयच्छति तस्मात्सुन्वानः सि-षासतीत्यर्थः ॥ ७ ॥

७. इन्द्र, अभिषव करनेवाला यजमान गृह प्राप्त करता है। सोम-यज्ञ करनेवाला चारों ओर के शत्रुओं का विनाश करता है। देव-शत्रुओं का भी विनाश करता है। अन्नवाला और शत्रु के आक्रमण से शून्य अभिषवकर्त्ता अपरिमित धन प्राप्त करता है। इन्द्र, सोमयाजक यजमान चतुर्दिक् उत्पन्न और अति समृद्ध धन प्रदान करता है।

॥ इतिद्वितीयस्यप्रथमेद्वाविंशोवर्गः ॥ २२ ॥

॥ इतिप्रथमेमण्डलेएकोनविंशोनुवाकः ॥ १९ ॥

विंशेनुवाकेषट्सूक्तानि तत्रात्वाजुवइतिषळृचंप्रथमंसूक्तम् पारुच्छेपमात्यष्टं त्वन्नोवाय-वित्यन्त्याष्टिःचतुःषष्टचक्षरा वायव्यंत्वित्युच्यमानत्वादिदमुत्तरंचवायुदेवत्यं अत्रानुक्रमणिका आत्वाषड्वायव्यंत्वंत्याष्टिरिति विनियोगोलैंगिकः।

आत्वाजुवोरारहाणाअभिप्रयोवायोवहंन्त्विहपूर्वपीतयेसोमस्यपूर्वपीतये।
ऊर्ध्वातेअनुसूनृतामनस्तिष्ठतुजानती।
नियुत्वंतारथेनायाहिदावनेवायोमखस्यंदावने ॥ १ ॥

आ। त्वा। जुवः। ररहाणाः। अभि। प्रयः। वायो इति।
वहंन्तु। इह। पूर्वऽपीतये। सोमस्य। पूर्वऽपीतये। ऊर्ध्वा।
ते। अनु। सूनृता। मनः। तिष्ठतु। जानती। नियुत्वता। रथेन।
आ। याहि। दावने। वायो इति। मखस्य। दावने ॥ १ ॥

हेवायो त्वात्वांजुवः गमनशीलाः ररहाणाः शीघ्रगामिनः बलवन्तोवा सामर्थ्यान्नियुत्संज्ञ-काअश्वाः रहिगतौ लिटःकानच् छान्दसोऽनुनासिकलोपः इहअस्मिन्यज्ञेमयः हविर्लक्षणमन्नं अभिअभिलक्ष्यआवहन्तु प्रापयन्तु किमर्थं सोमस्य पूर्वपीतये पूर्ववत्पानाय पुनःकिमर्थं पूर्वपी-तये इतरदेवेभ्यःपुरापानाय मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वं किंच हेवायो तेतवसंबन्धिमनः अनुसूनृता प्रियसत्यात्मिकास्तुतिरूपा अस्मदीयावाक्तिष्ठतु आश्रित्यसर्वदावर्ततां हर्षयत्वि-त्यर्थः सूनृतेतिवाङ्नाम सूनृताब्रह्मेतितन्नामसूक्तत्वात् ऊर्ध्वाउन्नता तथा जानतीत्वंगुणान् विशे-षेणअवगच्छंती सोमपानार्थंस्तुत्यर्थंच हेवायो मखस्ययज्ञस्य दावने दातव्यायहविषेतत्स्वीका-राय पुनःकिमर्थं दावनेअस्मभ्यंअभिमतदानाय उभयत्रददातेःकर्मणिभावेचक्रमेणौणा-दिकोवनिः छान्दसउपधालोपः नियुत्वतारथेननियुद्भिर्युक्तेनरथेनायाहिआगच्छ॥ १ ॥

१. वायुदेव, शीघ्रगामी और बलवान् अश्व तुम्हें, अन्न के उद्देश्य से और देवों के बीच प्रथम, सोमपान के लिए, इस यज्ञ में ले आयें। हमारी प्रिय, सत्य और उच्च स्तुति अच्छी तरह तुम्हारे गुण की व्याख्या करती है। वह तुम्हें अभिमत हो। यज्ञ के हव्य की स्वीकृति और हमें अभीष्ट देने के लिए नियुत नामक अश्वों से युक्त रथ पर आओ।

मन्दन्तुत्वामन्दिनोवायविन्दवोस्मत्क्राणासःसुकृताअभिद्यवोगोभिःक्रा
णाअभिद्यवः। यद्धक्राणाइरध्यैदक्षंसचन्तऊतयः।
सध्रीचीनानियुतोदावनेधियउपब्रुवतईंधियः ॥ २ ॥

मन्दन्तु । त्वा । मन्दिनः । वायो इति । इन्दवः । अस्मत् । क्राणासः ।
सुऽकृताः । अभिऽद्यवः । गोभिः । क्राणाः । अभिऽद्यवः । यत् ।
ह । क्राणाः । इरध्यै । दक्षम् । सचन्ते । ऊतयः । सध्रीचीनाः ।
निऽयुतः । दावने । धियः । उप । ब्रुवते । ईम् । धियः ॥ २॥

हेवायो त्वात्वां अस्मत् अस्माकंसंबन्धिनः इन्दवः क्लेदयितारःसोमाः मन्दन्तुमादयन्तु व्यत्ययेनपरस्मैपदं कीदृशाः सोमाः मन्दिनोमादयितारः क्राणासः कुर्वाणाः स्वकार्यं हर्षादिकं सुकृताअभिषवः दशापवित्रशोधनग्रहणादिभिःसुष्ठुकृताः अभिद्यवः अभितोद्योतयन्तः गोभिर्वाग्भिर्मन्त्ररूपाभिः क्राणाः क्रियमाणाः हूयमानाः यद्वा गोभिर्गन्तृभिः आहवनीयं प्रत्यानेतृभिः क्राणाः हूयमानाः करोतेःशानच् छान्दसःशपोलुक् तथा अभिद्यवः अभिगन्तारः हेवायो यद्यस्मात्कारणात् हशब्दःप्रसिद्धौ दक्षं अस्मद्यागदेशं प्रतिगन्तुमुत्साहवन्तं समर्धयितारंवा ईत्वां नियुतः एतत्संज्ञकास्तवाश्वाः दावने दानाय हविःस्वीकारनिमित्तं धियःकर्माण्युद्दिश्य सचन्ते त्वां संगच्छन्ते यागदेशंवा किमर्थं इरध्यै प्रापयितुं परिचरितुं वा ईरगतौ तुमर्थेकध्यैप्रत्ययः ह्रस्वश्छान्दसः इरध्यतिःपरिचरणकर्मा इरध्यति विधेमेति तत्नामसूक्तत्वात् कीदृशास्ताः क्राणाः स्वव्यापारं रथवाहनादिकं कुर्वाणाः क्राणाःकुर्वाणाइतियास्कः । ऊतयः रक्षणवन्तः प्रीतियुक्तावासध्रीचीनाः त्वयासहांचन्तः गच्छन्तः सहस्य सध्रिः विभाषांचेरितिस्वार्थेखः व्यत्ययेनान्तोदात्तः किंच धियः कर्मवन्तः बुद्धिमन्तोवाऋत्विजोयजमानावा उपब्रुवते उपेत्य ब्रुवन्ति स्तुवन्ति स्वाभिमतंविज्ञापयन्तिवा ॥ २ ॥

२. वायु, मादकतोत्पादक, हर्षजनक, सम्यक् प्रस्तुत, उज्ज्वल और मन्त्र-द्वारा हूयमान सोमबिन्दु तुम्हारे सामने जाकर हर्ष उत्पन्न करें; क्योंकि कर्म-कुशल, प्रीति-युक्त, निरन्तर सहगामी नियुत, तुम्हारा उत्साह देखकर, हव्य ग्रहण के लिए, तुम्हें यज्ञभूमि में लाने के लिए मिलते हैं। बुद्धिमान् यजमान लोग तुम्हारे पास आकर मनोगत भाव व्यक्त करते हैं।

वायुर्युङ्क्ते रोहिता वायुररुणा वायू रथे अजिरा धुरि वोळ्हवे वहिष्ठा धुरि वोळ्हवे ।
प्रबोधया पुरन्धिं जार आ ससतीमिव ।
प्र चक्षय रोदसी वासयोषसः श्रवसे वासयोषसः ॥ ३ ॥

---

१ नि ५. ५.।

वायुः । युंक्ते । रोहिता । वायुः । अरुणा । वायुः । रथे । अजिरा । धुरि । वोळ्हवे । वहिष्ठा । धुरि । वोळ्हवे । प्र । बोधय । पुरम्ऽधिम् । जारः । आ । ससतीम्ऽइव । प्र । चक्षय । रोदसी इति । वासय । उषसः । श्रवसे । वासय । उषसः ॥ ३ ॥

अयंवायुः रोहितारोहितवर्णावश्वौ धुरिधारणप्रदेशे रथस्याग्रभागे यद्वा भारवहने युंक्ते क्वचिद्योजयति तथा क्वचिदरुणाअरुणवर्णौ धुरियुंक्ते तथा अजिरा अजिरौगमनशीलौ वर्णविशेषयुक्तौवा कदाचिद्युंक्ते यद्वैतदुभयत्रसंबध्यते किमर्थंयुंक्तइतितदाह—वोळ्हवेधुरंवोढुंभारवहनाय किंच वहिष्ठा वहिष्ठौ अतिशयेनवोढारावश्वौ वोढृशब्दादिष्ठनि तुरिष्ठेमेयः स्वितितृल्लोपः ढत्वादिकमसिद्धत्वान्निवर्तते द्विवचनस्याकारः धुरिवोळ्हवेमहद्भारंवोढुं महति भारेवोढव्येसति पुनःपुनर्वायुग्रहणं अतोयोजनवचनंच अतिशीघ्रमागच्छतीतिज्ञापनार्थं इदानींप्रत्यक्षेणाह—हेवायो पुरंधिं बहुप्रज्ञं सामर्थ्याद्यजमानमितिगम्यते पुरंधिर्बहुधीरितियास्कः तंप्रबोधयरथेनशीघ्रमागत्य प्रज्ञापय हविःस्वीकारायेतिभावः तत्रदृष्टान्तः—जारःपारदारिकः आससतीं उपपत्त्या गमनध्यानेन ईषत्स्वपन्तीं पुरन्धिमिव प्रकृष्टशरीरधारिणींयोषितमिव तां यथा स्वसंकेतेन सम्प्रबोधयति तद्वत् त्वमपि कर्मव्यग्रेण ईषत्स्वपन्तं यजमानं प्रबोधय किंच तदर्थं रोदसी द्यावापृथिव्यौ प्रचक्षय प्रकर्षेणप्रख्यापय प्रकाशयेत्यर्थः तत्प्रकाशार्थं उषसोवासयउषःकालानपि यथावत्स्थापय प्रभातंकुर्वित्यर्थः पुनस्तदेवप्रार्थ्यते श्रवसे श्रवइत्यन्ननाम तवहवीरूपान्नस्वीकारायउषसोवासय ॥ ३ ॥

३. भारवहन के लिए वायु लोहितवर्ण अश्व योजित करते हैं। वायु अरुणवर्ण अश्व योजित करते हैं। वायु अजिरवर्ण या गमनशील अश्व योजित करते हैं; क्योंकि, ये भारवहन में अत्यन्त समर्थ हैं। जैसे थोड़ी निद्रा में आई स्त्री को उसका प्रेमी जगा देता है, उसी तरह तुम भी बहुयज्ञ-प्रबोधित यजमान को जगाते हो। तुम आकाश और पृथ्वी को प्रकाशित करते हो। उषा को स्थापित करते हो। हव्य ग्रहण के लिए उषा को स्थापित करते हो।

तुभ्यमुषासःशुचयःपरावतिभद्रावस्त्रातन्वतेदंसुरश्मिषुचित्रानव्येषु रश्मिषु । तुभ्यंधेनुःसबर्दुघाविश्वावसूनिदोहते । अजनयोमरुतोवक्षणाभ्योदिवआवक्षणाभ्यः ॥ ४ ॥

तुभ्यम् । उषसः । शुचयः । पराऽवति । भद्रा । वस्त्रा । तन्वते । दम्ऽसु । रश्मिषु । चित्रा । नव्येषु । रश्मिषु । तुभ्यम् । धेनुः । सबःऽदुघा । विश्वा । वसूनि । दोहते । अजनयः । मरुतः । वक्षणाभ्यः । दिवः । आ । वक्षणाभ्यः ॥ ४ ॥

हेवायो तुभ्यंत्वदर्थं उषासःउषसः पूर्वोक्तरीत्यात्वयाप्रकाशिताः शुचयः शुद्धादीप्तावा परावति अत्यन्तदूरदेशे अन्तरिक्षे दंसुदंसेषु कर्मवत्सु यद्वा गृहनामैतत् अन्त्यलोपश्छान्दसः गृहवदाच्छादकेषु रश्मिषु स्वकीयेषु तैःभद्राभंदनीयानि कल्याणानि वस्त्राआच्छादनयोग्यानि वस्त्राणितन्वते विस्तारयन्ति यद्वा उषसः दंसुयागगृहेषु देवयजनेषु रश्मिषु होमायप्रदीप्ताग्निज्वालावत्सु आगतायतुभ्यंभद्रावस्त्रातन्वते अग्निज्वालाएव वस्त्राणि विस्तारयन्तीत्यर्थः उषःकाले अग्नीनांप्रज्वाल्यमानत्वात् ताएववस्त्राणीत्युपचर्यते ननुकेवलंसाधारणानिवस्त्राणि नेत्याह—नव्येषुनूतनेषु स्तूयमानेषु णुस्तुतौ अचोयत् वान्तोयिप्रत्ययेइत्यवादेशः यतोनावइत्याद्युदात्तत्वम् रश्मिषुचित्राचित्राणि नानावर्णयुक्तानि आश्चर्यभूतानितन्वते उषःकाले रश्मीनां नानावर्णत्वादिति भावः अग्निज्वालेतिपक्षे ज्वालानांकालीकरालीत्यादिरूपेणनानावर्णत्वाच्चित्रत्वं किंच हेवायो तुभ्यंत्वदर्थं त्वद्यागार्थमेवधेनुः घृतादिनाप्रीणयित्रीगौःजातावेकवचनं सबर्दुघा सबरित्यमृतनाम तस्यदोग्ध्री दुहःकब्घश्चेतिकप् सती विश्वावसूनि सर्वाणिधनान्याज्यादिरूपाणि दोहतेस्वयमेवदुग्धे प्रीणयतीत्यर्थः कर्मकर्तरि नदुहस्नुनमामितियगभावश्छान्दसः शपोलुगभावः कस्तत्रविशेषइतिचेत् उच्यते—हेवायो दिवः दीप्तादन्तरिक्षात् मरुतः एतन्नामकान् मेघंविशीर्य वृष्ट्युत्पादकान् त्वदंशभूतान्देवान् आ आभिमुख्येन अजनयः जनयसि उत्पादयसि किमर्थमितितदुच्यते वक्षणाभ्यः प्रवहणशीलाभ्योऽद्भ्यः वृष्टिलक्षणाभ्यः तथा वक्षणाभ्यः नदीनामैतत् वक्षणाः रुजानाइतितन्नामसुपाठात् तासामर्थाय ॥ ४ ॥

४. दीप्तियुक्त उषायें, दूर देश में, तुम्हारे ही लिए, घरों को ढकनेवाली किरणों से कल्याणकर वस्त्र का विस्तार करती हैं; नई किरणों से विचित्र वस्त्र का विस्तार करती हैं। अमृत बरसानेवाली गायें तुम्हारे ही लिए समस्त धन-दान करती हैं। तुमने वर्षा और नदियों के उत्पादन के लिए अन्तरिक्ष से मरुतों को उत्पादित किया है।

तुभ्यंशुक्रासःशुचयस्तुरण्यवोमदेषूग्राइषणन्तभुर्वण्यपामिषन्त
भुर्वणि। त्वांत्सारीदसमानोभगमीट्टेतक्ववीये।
त्वंविश्वस्माद्भुवनात्पासिधर्मणासुर्यात्पासिधर्मणा ॥ ५ ॥

तुभ्यम्। शुक्रासः। शुचयः। तुरण्यवः। मदेषु। उग्राः। इषणन्त। भुर्वणि। अपाम्। इषन्त। भुर्वणि। त्वाम्। त्सारी। दसमानः। भगम्। ईट्टे। तक्वऽवीये। त्वम्। विश्वस्मात्। भुवनात्। पासि। धर्मणा। असुर्यात्। पासि। धर्मणा ॥ ५ ॥

हेवायो तुभ्यंत्वदर्थं शुक्रासोदीप्ताः शुचयः शुद्धाःसोमस्यपातारोत्यन्तंशुद्धाभवन्ति किमुवक्तव्यं तेषांशुद्धत्वे तुरण्यवः त्वरणयुक्ताः त्वांप्राप्तुं उग्राः उद्गूर्णतेजसःसोमाः मदेषु तवमदेषुनिमित्तभूतेषु भुर्वणिभरणवति यागे इषणन्त आहवनीयंप्रतिगच्छन्ति इच्छन्तिवा व्यत्ययेनात्मनेपदं शश्नमौद्वौविकरणौ किंचापांभुर्वणि मेघे इषन्त उदकंइच्छन्त्युत्पादयितुं अग्नौहूयमानस्याहुतेरादित्यद्वारावृष्ट्युत्पादकत्वात् यद्वा यजमानास्त्वामुद्दिश्याजुह्वानाः अपांवर्षणमिषन्त इच्छन्ति किंच हेवायो भगंभजनीयं त्वां त्सारी त्सरणवान् अत्यन्तभीतः दसमानउपक्षीणोयज्ञविघातकैःपयोव्रतादिनियमैर्वा यजमानः तक्वीये तस्कराणांयज्ञविघातिनां अन्यत्रगमनाय ईट्टे स्तौति ईडस्तुतौ अदादित्वाच्छपोलुक् यतस्त्वं विश्वस्माद्भुवनात्सर्वस्मात्लोकाद्भूतजाताद्वा लोकत्रयसंबन्धिनोभयात् धर्मणा अस्मदीयहविषांधारणेन पासि पालयसि किंच असुर्यात् असुरसंबन्धिनोभयात् विशेषेणपासि धर्मणा अस्मद्धारणेन पोषणेनवायुक्तःसन् यतएवंकरोषि अतः स्तौमीत्यर्थः ॥ ५ ॥

५. दीप्त, शुद्ध, उग्र और प्रवाहशाली सोम, तुम्हारे आनन्द के लिए आहवनीय अग्नि के पास जाता है और जलभारवाहक मेघ की आकांक्षा करता है। वायु, यजमान लोग, अत्यन्त भीत और क्षीणकाय होकर चोरों के हटाने के लिए तुम्हारी पूजा करते हैं। हमारे धार्मिक होने से हमारी सारे महाभूतों से रक्षा करो। हमारी, धर्म-संयुक्त होने के कारण, असुरों से रक्षा करो।

त्वंनोवायवेषामपूर्व्यःसोमानांप्रथमःपीतिमर्हसिसुतानांपीतिमर्हसि। उतोविहुत्मतीनांविशांववर्जुषीणाम्।
विश्वाइत्तेधेनवोदुह्रआशिरंघृतंदुह्रतआशिरम् ॥ ६ ॥ २३ ॥

त्वम्। नः। वायो इति। एषाम्। अपूर्व्यः। सोमानाम्। प्रथमः। पीतिम्। अर्हसि। सुतानाम्। पीतिम्। अर्हसि। उतो इति। विहुत्मतीनाम्। विशाम्। ववर्जुषीणाम्। विश्वाः। इत्। ते। धेनवः। दुह्रे। आऽशिरम्। घृतम्। दुह्रते। आऽशिरम् ॥ ६ ॥ २३ ॥

हेवायो त्वं अपूर्व्यः नविद्यते पूर्वंयस्मात्तत्पानमपूर्वं तदर्हतीत्यपूर्व्यः तादृशः अतएवप्रथमः इतरदेवेभ्यः पूर्वभूतःसन् सोमानांपीतिंपानमर्हसि प्राप्नोषि सुतानामभिषवकृतानांसोमानां पीतिंपानमर्हसि यत्र यत्राभिषवोऽस्ति तत्रसर्वत्रनियमेनपिबसीत्यर्थः पूर्वंप्राथम्याभिप्रायेण इदानींतुसर्वत्रसोमवतियागे अस्यपानमस्तीतिज्ञापयितुंपृथगभिधानं नकेवलं सोमपानमात्रं उतोअपितु विहुत्मतीनां विशेषेण होमवतीनां आह्वानवतीनांवा जुहोतेःसंपदादिलक्षणोभावेक्विप् ततोमतुब्ङीपौ ववर्जुषीणां अनभिमतपापंवर्जयन्तीनां वर्जयतेर्लिटः क्वसुकीम्सं-

प्रसारणत्वानि विशांऋत्विग्यजमानरूपाणां प्रजानांसंबन्धिहविः स्वीकरोषीतिशेषः किंच तेषांयष्ट्रणां विश्वाइन्धेनवः सर्वाअपिगावः तेत्वदर्थंआशिरं आश्रयणद्रव्यं क्षीरं दुह्रे दुहन्ति स्वयमेव कर्तरि नदुहस्नुनमामिनियगभावः लोपस्तआत्मनेपदेष्वितितलोपः बहुलंछन्दसीतिरुट् तथा आशिरं घृतं उपस्तरणाभिवारणाद्याश्रयणाय योग्यंकरणंद्रव्यंदुह्रते ॥ ६ ॥

६. वायु, तुमसे पहले किसी ने सोमपान नहीं किया है। तुम्हीं पहले हमारे इस सोमपान को करने के योग्य हो; अभिषुत सोमपान करने योग्य हो। तुम हवनकर्त्ता और निष्पाप लोगों का हव्य स्वीकार करते हो। सारी गायें तुम्हारे लिए दूध देती हैं और तुम्हारे लिए घी भी देती हैं। ॥इतिद्वितीयस्यप्रथमेत्रयोविंशोवर्गः॥ २३ ॥

स्तीर्णंबर्हिरितिनवर्चंद्वितीयंसूक्तम पारुच्छेपमात्यष्टं पूर्ववत्तुशब्दाद्वायुदेवत्यं आवांरथइत्यादिकमृक्पंचकमैन्द्रं सप्तम्यष्टम्यावष्टी अत्रानुक्रमणिका—स्तीर्णंनवचतुर्थ्याद्याःपंचैन्द्र्यश्चोपान्त्येअष्टीइति। सूक्तस्यविशेषविनियोगोलैंगिकः दशरात्रस्यपष्ठेहनिप्रउगशस्त्रे आद्योतृचौ प्राकृतयोर्वायव्यैन्द्रवायव्ययोःस्थानेविनियुक्तौ पष्ठस्यप्रातःसवनइतिखण्डेसूत्रितम—स्तीर्णंबर्हिरितितृचाविति।

तत्रप्रथमा—

**स्तीर्णंबर्हिरुपनोयाहिवीतयेसहस्रेणनियुतानियुत्वतेशतिनीभिर्नियुत्वते।**
**तुभ्यंहिपूर्वपीतयेदेवादेवाययेमिरे।**
**प्रतेसुतासोमधुमन्तोअस्थिरन्मदायक्रत्वेअस्थिरन् ॥ १ ॥**

स्तीर्णम्। बर्हिः। उप। नः। याहि। वीतये। सहस्रेण। निऽयुता।
नियुत्वते। शतिनीभिः। नियुत्वते। तुभ्यम्। हि। पूर्वऽपीतये।
देवाः। देवाय। येमिरे। प्र। ते। सुतासः। मधुऽमन्तः।
अस्थिरन्। मदाय। क्रत्वे। अस्थिरन् ॥ १ ॥

हेवायो नोऽस्मद्यज्ञार्थं स्तीर्णंआस्तृतंबर्हिरभिलक्ष्यउपयाहि आगच्छ किमर्थं वीतयेहविषांभक्षणाय केनसाधनेनेतितदुच्यते—सहस्रेणसहस्रसंख्याकेननियुता जातावेकवचनम् नियुतइतिवायोरश्वानांनामधेयं नियुतोवायोरितिनिरुक्तत्वात् तथाशतिनीभिः शतसंख्योपेताभिर्नियुद्भिःआगच्छेतिशेषः यद्वा सहस्रेणनियुताशतिनीभिश्च नियुद्भिर्नियुत्वते तद्वतेदेवायहविर्दीयतेइतिशेषः यद्वा तुभ्यमित्यनेनसंबन्धः उक्तसंख्याकाभिर्नियुद्भिस्तद्वतेदेवायद्योतमानाय तुभ्यं ङयिचेत्याद्युदात्तत्वम् पूर्वपीतये इतरदेवेभ्यःपूर्वपानाय देवाःयेमिरेयमितवन्तः यद्वा देवाः स्तोतारऋत्विजःदेवायतुभ्यंयेमिरे आहवनीयंप्रतिसोमंनियमितवन्तः अग्रंपिबामधूनांसुतंवायो-

इत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थोहिशब्दः किंच एतेत्वदर्थंसुताः अभिषुताःमधुमन्तोमाधुर्योपेताः सोमाः मदायतवमोदाय प्र प्रकर्षेणास्थिरन् तिष्ठन्ति किंच क्रत्वेकर्मणेतत्सिद्ध्यर्थं अस्थिरन् ऋत्विग्भिर्धृतास्तिष्ठन्ति अतस्त्वंपिबेतिशेषः तिष्ठतेश्छान्दसेलुङिव्यत्ययेनझस्यरन् स्थाघ्वोरिच्चेतिसिचःकित्त्वं धातोरित्वंच ह्रस्वादङ्गादितिसिलोपः ॥ १ ॥

१. नियुत अश्ववाले वायु, तुम कितने ही नियुतों पर चढ़कर, अपने लिए प्रस्तुत हव्य के भक्षण के लिए, हमारे बिछाये कुशों पर आओ। असंख्य नियुतों पर चढ़कर आओ। तुम नियुतवाले हो। तुम्हारे पहले पान करने के लिये अन्य देवता चुप हैं। अभिषुत मधुर सोम तुम्हारे आनन्द के लिए है, यज्ञ-सिद्धि के लिए है।

तुभ्यायंसोमःपरिपूतोअद्रिभिःस्पार्हावसानःपरिकोशमर्षतिशुक्रावसानो अर्षति। तवायंभागआयुषुसोमोदेवेषुहूयते। वहवायोनियुतोयाह्यस्मयुर्जुषाणोयाह्यस्मयुः ॥ २ ॥

तुभ्यं। अयम्। सोमः। परिऽपूतः। अद्रिऽभिः। स्पार्हा। वसानः। परि। कोशम्। अर्षति। शुक्रा। वसानः। अर्षति। तव। अयम्। भागः। आयुषु। सोमः। देवेषु। हूयते। वह। वायो इति। निऽयुतः। याहि। अस्मऽयुः। जुषाणः। याहि। अस्मऽयुः ॥ २ ॥

हेवायो तुभ्यतुभ्यंत्वदर्थं सुपांसुलुगितिचतुर्थ्यालुक् अयंसोमः हूयमानः कोशंकोशस्थानीयंगृहंअर्षति गच्छति प्राप्नोति कीदृशःसोमःअद्रिभिःपरिपूतः अभिषवसाधनैःअपगतऋजीषत्वेनशोधितः यद्वा अद्रिभिरभिषुतः दशापवित्रशोधनेनग्रहणेनवाशोधितः तथास्पार्हास्पृहणीयानितेजांसिवसानः पिधानः किंच शुक्रा निर्मलानिदीप्तानिवा तेजांसिवसानःसोमःअर्षति त्वां प्राप्नोति ऋषीगतौ व्यत्ययेनशप् हेवायोआयुषुमनुष्येषु यष्टव्यत्वेनस्थितोभागोभजनीयःअयंसोमः तवत्वदर्थंदेवेषुमध्येहूयते सत्स्वपीतरेषुदेवेषुयतस्तवभागःअतःप्रथमंतुभ्यंहूयतइत्यर्थः किंच हेवायो एवंतंसोमंअस्मयुः अस्माभिस्तद्वान् मत्वर्थीयोयुः त्वंनियुतोवह नियुत्संज्ञकानश्वान् वहनायप्रापय ततःपरंयाहि दिवंप्रतिगच्छ तथाकुर्वन्अस्मयुः अस्माभिर्युक्तःसन्नस्माननुगृह्णन् अस्मान्कामयमानोवा क्यचिछांदसेन्त्यलोपेक्याच्छन्दसीत्युः जुषाणाः प्रीयमाणोयाहि गच्छ ॥ २ ॥

२. वायु, तुम्हारे लिए, पत्थर से परिशोधित और आकांक्षणीय तथा तेजः-सम्पन्न सोम अपने पात्र में जाता है; शुक्र तेज से संयुक्त होकर तुम्हारे पास जाता है। मनुष्य लोग देवों के मध्य तुम्हारे लिए यही सुन्दर सोम प्रदान करते हैं। वायु, तुम हमारे लिए नियुत अश्वों को जोतो और प्रस्थान करो। हमारे ऊपर अनुग्रह कर और प्रसन्न होकर प्रस्थान करो।

अथतृतीया–

आनोनियुद्भिःशतिनीभिरध्वरंसहस्रिणीभिरुपयाहिवीतयेवायोहव्यानिवीतये। तवायंभागऋत्वियःसरश्मिःसूर्येसचा। अध्वर्युभिर्भरमाणाअयंसतवायोशुक्राअयंसत ॥ ३ ॥

आ। नः। नियुत्ऽभिः। शतिनीभिः। अध्वरम्। सहस्रिणीभिः। उप। याहि। वीतये। वायो इति। हव्यानि। वीतये। तव। अयम्। भागः। ऋत्वियः। सऽरश्मिः। सूर्ये। सचा। अध्वर्युऽभिः। भरमाणाः। अयंसत। वायो इति। शुक्राः। अयंसत ॥ ३ ॥

हेवायो त्वंनःअध्वरं अस्मत्संबन्धिनंयज्ञं शतिनीभिर्नियुद्भिः सहस्रिणीभिश्चताभिः त्वदीयैरश्वैर्नोस्मद्यज्ञमुपयाहि उपागच्छ किमर्थं वीतये त्वदभिमतकामाय तत्पूर्तयेआगत्यच हव्यानिवीतये सोमादिहविर्लक्षणाय अध्वरंहव्यानिचोपलक्ष्यतेषामेव भक्षणाय शतसहस्रै-रश्वैरतिशीघ्रमागच्छेत्यर्थः किंचायंतवभागः भजनीयः सोमः ऋत्वियः प्राप्तकालः प्रदानावसरं प्राप्तः ऋतुशब्देनप्रदानकालोलक्ष्यते छन्दसिघस् सितिचेतिपदसंज्ञयाभसंज्ञायाबाधात् ओर्गुणाभावे यण् किंच सोमः सूर्येउदितेसतितस्य रश्मिभिः सचासहसरश्मिर्भवति समानदीप्तिर्भवति यद्वा तैः सहितोभवति यतः सूर्येउदितेसति रश्मिर्भवति अतः प्राप्तकालइत्यर्थः किंच सोमाः अध्वर्युभिः चमसाध्वर्युभिः तेषांदशत्वाद्बहुवचनं तैर्भरमाणाः भ्रियमाणाः अयंसत नियताअभवन् किं-च हेवायो तेसोमाः शुक्राः अयंसत अत्यन्तदीप्ताउद्यताः अतस्तेषांभक्षणायायाहीत्यर्थः ॥ ३ ॥

३. वायु, तुम सैकड़ों और हज़ारों नियुतों पर सवार होकर अभिमत-सिद्धि और हव्य भक्षण के लिए हमारे यज्ञ में उपस्थित हो। यही तुम्हारा भाग है; यह सूर्य के तेज से तेजस्वी है। ऋत्विक् के हाथ का सोम तैयार है। वायु, पवित्र सोम तैयार है।

अथचतुर्थी–

आवांरथोनियुत्वान्वक्षदवसेभिप्रयांसिसुधितानिवीतयेवायोहव्यानिवीतये। पिबतंमध्वोअन्धसःपूर्वपेयंहिवांहितम्। वायवाचन्द्रेणराधसागतमिन्द्रश्चराधसागतम् ॥ ४ ॥

आ । वाम् । रथः । नियुत्वान् । वक्षत् । अवसे । अभि । प्रयांसि । सुऽधितानि । वीतये । वायो इति । हव्यानि । वीतये । पिबतम् । मध्वः । अन्धसः । पूर्वऽपेयम् । हि । वाम् । हितम् । वायो इति । आ । चन्द्रेण । राधसा । आ । गतम् । इन्द्रः । च । राधसा । आ । गतम् ॥ ४ ॥

केवलंवायुंस्तुत्वा व्यासक्ततयेन्द्रवायूस्तौति हेवायोत्वांइन्द्रंच वांयुवांअभि अभिलक्ष्य रथः युवयोःसंवन्धीरथः नियुत्वान् नियुद्भिरश्वैस्तद्वान्सन् आवक्षत् देवयजनं प्रतियुष्मानावहतु वहेर्लेटचडागमः सिब्बहुलमितिसिप् यद्यपिनियुतोवायोरेवरथस्योचिताः तथापि व्यासक्तदेवतात्वात् सहैवागमनादिन्द्रार्थमपिवहन्ति किमर्थं अवसे गमनाय रक्षणायवा पुनश्च किमर्थं प्रयांसि अन्नानि सोमलक्षणानि सुधितानिसुष्ठुगृहीतानि वीतये तेषांभक्षणाय तथाहव्यानिवीतये इतरेषांसवनीयपुरोडाशादीनां खादनाय वेतेःक्तिन् मन्त्रेवृषेत्यादिनातस्योदात्तत्वं किंच मध्वःमधुररसस्यअन्धसः अन्नस्यसोमरूपस्य कर्मणिषष्ठी मधुरंसोमंपिबतं हि यतः पूर्वपेयं इतरदेवेभ्यःपूर्वपानं वांयुवयोर्हितं पातेरचोयत् इतियत् ईद्यतीतीकारः अभिमतं अतःप्रथमंपिबतमित्यर्थः यद्यपीन्द्रादपिवायोःपूर्वपानं त्वंहिपूर्वपाअसि[1] देवदधिषेपूर्वपेयमित्यादिषुसर्वत्रप्रसिद्धं तथापीन्द्रस्येतरदेवेभ्यः पूर्वंवायुनासहपानंचइन्द्रतुरीयार्थवादनब्राह्मणे—देवावैसोमस्यराज्ञोग्रपेयेनसमपादयन्नित्यत्रप्रतिपादितं । किंचागमनसमये हेवायो त्वमिन्द्रश्च चन्द्रेणअस्मदाह्लादकेन हिरण्येनराधसागवादिरूपेणधनेनच सहागतमागच्छतं राधसा रत्नेनधनेनसहागतम् गमेर्लोटि छान्दसःशपोलुक् अनुदात्तोपदेशेत्यनुनासिकलोपः लुङ्चि मन्त्रेघसेतिच्लेर्लुक् ॥ ४ ॥

४. हमारी रक्षा के लिए, हमारे सुगृहीत अन्न-भक्षण के निमित्त और हमारे हव्य की सेवा के लिए, हे वायु, नियुत से युक्त रथ तुम दोनों (इन्द्र और वायु) को ले आये। तुम दोनों मधुर सोमरस पान करो। पहले पान करना ही तुम लोगों के लिए ठीक है। वायु, मनोहर धन के साथ आओ। इन्द्र भी धन के साथ आयें।

अथपञ्चमी—

आवांधियोववृत्युरध्वराँउपेममिन्दुंमर्मृजन्तवाजिनमाशुमत्यंनवाजिनम्
तेषांपिबतमस्मयूआनोगन्तमिहोत्या।
इन्द्रवायूसुतानामद्रिभिर्युवंमदायवाजदायुवम् ॥ ५ ॥ २४ ॥

---

१ ऋ०सं० ३. ७. २२. । २ ऐ० ब्रा० २. २५. ।

आ । वाम् । धियः । ववृत्युः । अध्वरान् । उप । इमम् । इन्दुम् ।
मर्मृजन्त । वाजिनम् । आशुम् । अत्यम् । न । वाजिनम् ।
तेषाम् । पिबतम् । अस्मयू इत्यस्मऽयू । आ । नः । गन्तम् । इह ।
ऊत्या । इन्द्रवायू इति । सुतानाम् । अद्रिऽभिः । युवम् । मदाय ।
वाजऽदा । युवम् ॥ ५ ॥ २४ ॥

हेइन्द्रवायू वांयुवांधियः कर्माणिस्तोत्रादिलक्षणानि अध्वरानउप अस्मदीयान्यज्ञान् लक्षीकृत्य ववृत्युः अतिशयेनवर्तयन्ति प्रवर्तयन्ति किंच युष्मदर्थं वाजिनं ग्रहणाय द्रोण-कलशाद्गृहान् प्रतिगमनवन्तं आमिक्षावन्तं वाइमंइन्दुं पुरतोवर्तमानंसोमं मर्मृजन्त अध्वर्यवो-दशापवित्रेणसंमार्जयन्ति मार्जनेदृष्टान्तः—आशुंअतिशीघ्रगामिनं अत्यंन सततंगन्तारंवाजिनं वेजनवन्तमश्वमिव यथा स्वेदाद्यपनयनेनसंमार्जयन्तितद्वत् किंच हेइन्द्रवायू तेषामध्वर्यूणांसंब-न्धिनः शोधितान्सोमान्पिबतं पानंकुरुतंतदर्थंनोऽस्माकंयज्ञंप्रतिइहइदानींऊत्यास्मद्रक्षणेन सहआगतं आगच्छतं किंच हेइन्द्रवायू अस्मयू अस्मद्यज्ञमिच्छन्तौ युवंयुवांअद्रिभिर्ग्रावभिः सुतानामभिषुतानां पूर्ववत्कर्मणिषष्ठी तान्पिबतमितिशेषःकिमर्थं मदायतृप्तये मोदायवा यतोयु-वंयुवां वाजदावाजस्यान्नस्य दातारौ अतःपिबतमित्यन्वयः ॥ ५ ॥

५. हे इन्द्र और वायु, हमारे स्तोत्र आदि तुम लोगों के यज्ञ में आने के लिए प्रेरित करते हैं। जैसे शीघ्रगामी अश्व को परिमार्जित किया जाता है, वैसे ही कलस से लाये हुए सोम को ऋत्विक् लोग परिमार्जित करते हैं। अध्वर्युओं का सोमपान करो। हमारी रक्षा के लिए यज्ञ में आओ। तुम दोनों अन्नदाता हो; इसलिए हमारे प्रति प्रसन्न होकर, आनन्द के लिए, पत्थर के टुकड़े से अभिषुत सोमपान करो।

इमेवांसोमाअप्स्वासुताइहाध्वर्युभिर्भरमाणाअयंसतवायोशुक्राअयंसत ।
एतेवामभ्यसृक्षततिरःपवित्रमाशवः ।
युवायवोतिरोमाण्यव्ययासोमासोअत्यव्यया ॥ ६ ॥

इमे । वाम् । सोमाः । अप्ऽसु । आ । सुताः । इह । अध्वर्युऽभिः ।
भरमाणाः । अयंसत । वायो इति । शुक्राः । अयंसत । एते । वाम् ।
अभि । असृक्षत । तिरः । पवित्रम् । आशवः । युवाऽयवः ।
अति । रोमाणि । अव्यया । सोमासः । अति । अव्यया ॥ ६ ॥

हेवायो वांयुवयोः तवचेन्द्रस्यचस्वभूताः इमेसोमाः अप्सुअस्मदीयेषुकर्मसु ऊडिद-मित्यादिनाविभक्तेरुदात्तत्वं इहअस्मिन्नभिषवस्थाने सुताःअभिषुताः अध्वर्युभिः भरमाणा-

स्तैर्भ्रियमाणागृहीताहोतुंवाह्रियमाणाः कर्मणिकर्तृप्रत्ययः सन्तः आयंसतआगच्छन्त युवयोर्नियताभवन्ति किंच तएवसोमाः शुक्राः शुभ्राः दीप्ताःअयंसत नियताभवन्ति किंच एतेआशवः व्यापकाः सोमाः वांयुवांप्रीणयितुमितिशेषः तिरःपवित्रंतिर्यग्भूतंसोमान्तर्धायकंवा ऊर्णामयंपवित्रंअभ्यसृक्षत अभिलक्ष्यासृज्यन्त सृष्टाभवन्ति सृजेःकर्मणिलुङि लिङ्सिचावात्मनेपदेष्वितिसिचःकित्त्वाद्गुणाभावः अमागमाभावश्च किंच युवायवः युवांकामयमानाः सोमासः सोमाः अव्ययाअव्ययान्यच्छिन्नानिरोमाणि पवित्रसंबंधीन्यविरोमाणि यद्वा अव्यया अविमयानि मकारोलुप्यते तादृशानिरोमाणि अतिअतिक्रम्यपात्राद्गच्छन्तीतिशेषः पुनस्तएव विशेष्यन्ते अतिअतिशयेन अव्यया व्ययरहिताः सोमासः सोमाअसृक्षतेतिशेषः॥ ६ ॥

६. हमारे इस यज्ञ-कार्य में अभिषुत और अध्वर्युओं-द्वारा गृहीत सोम निश्चय ही तुम्हीं दोनों का है। यह दीप्त सोम निश्चय ही तुम लोगों का है। यह यथेष्ट सोम निश्चय ही तुम्हारे लिए टेढ़े सोमाधार कुश में परिष्कृत हुआ है। तुम्हारा सोम अछिन्न लोगों को लांघकर प्रचुर परिमाण में जाता है।

अतिवायोससतोयाहिशश्वतोयत्रग्रावावदतितत्रगच्छतंगृहमिन्द्रश्चग च्छतम्। विसूनृतादद्दृशेरीयतेघृतमापूर्णयानियुतायाथोअध्वर मिन्द्रश्चयाथोअध्वरम् ॥ ७ ॥

अति। वायो इति। ससतः। याहि। शश्वतः। यत्र। ग्रावा। वदति। तत्र। गच्छतम्। गृहम्। इन्द्रः। च। गच्छतम्। वि। सूनृता। ददृशे। रीयते। घृतम्। आ। पूर्णया। निऽयुता। याथः। अध्वरम्। इन्द्रः। च। याथः। अध्वरम्॥ ७ ॥

हेवायो त्वंससतः आलस्यादिनानिद्रांकुर्वतः शश्वतः बहून्यजमानान् शश्वदितिबहुनाम शश्वत् विश्वमितितन्नामसुपाठात् अतिअतिक्रम्य उपेक्ष्यअस्मद्यज्ञंयाहिगच्छ इन्द्रश्चतथाकरोतु कंदेशमितितमाह—यत्रग्रावावदति यस्मिन्देशेअभिषवार्थः पाषाणध्वनिःश्रूयते तत्रगच्छतं तंदेशंप्रत्यागच्छतं गृहंयज्ञगृहंगच्छतं पुनःस्थानमेवविशेष्यते सूनृता प्रियतथ्यात्मिका स्तुतिरूपावाक् यत्रविददृशे विशेषेणदृश्यतेइत्यर्थः तत्रगच्छतं यत्रचघृतंअत्यन्तं दीप्तमाज्यं होमार्थं गृहीतं रीयतेगच्छति आहवनीयंप्रतिनीयते रीङ्श्रवणे दिवादित्वाच्श्यन् तत्रगच्छतं गमनप्रकारएवविशेष्यते पूर्णयासं पूर्णयापुष्टांगया नियुता जातावेकवचनं नियुज्जात्याअध्वरं अस्मदीयंयज्ञं आयाथः आभिमुख्येनप्रयाथः किंच हेवायो त्वंइन्द्रश्च युवांअध्वरं अस्मदीयं यागं याथः आयाथः सहैवागच्छतं तथास्माभिरपिसहैवगच्छतमित्यर्थः॥ ७ ॥

७. वायु, तुम निद्रालु यजमानों को अतिक्रम करके उस गृह में जाओ, जिस गृह में प्रस्तर का शब्द होता है। इन्द्र भी उसी गृह में जायें।

जिस गृह में प्रिय और सत्य स्तुति का उच्चारण होता है, जिस घर में घृत जाता है, उसी यज्ञस्थान में मोटे नियुत घोड़ों के साथ जाओ। इन्द्र, वहीं जाओ।

अत्राहतद्वहेथेमध्वआहुतिंयमश्वत्थमुपतिष्ठन्तजायवोस्मेतेसन्तुजायवः।
साकंगावःसुवतेपच्यतेयवोनतेवायउपदस्यन्तिधेनवोना
पदस्यन्तिधेनवः ॥ ८॥

अत्र । अह । तत् । वहेथे इति । मध्वः । आऽहुतिम् । यम् ।
अश्वत्थम् । उपऽतिष्ठन्त । जायवः । अस्मे इति । ते । सन्तु । जायवः ।
साकम् । गावः । सुवते । पच्यते । यवः । न । ते । वायो इति ।
उप । दस्यन्ति । धेनवः । न । अप । दस्यन्ति । धेनवः ॥ ८ ॥

हेइन्द्रवायू अत्राह अस्मिन्नेवयज्ञे अहेतिविनिग्रहार्थीयः मध्वोमधुरस्यमधुसदृशस्यवा तत् तस्य आहुतिं प्रदेयद्रव्यं वहेथेधारयतं यंसोमंअश्वत्थं पर्वतादिव्याप्तिप्रदेशेस्थितं जायवो-जेतारोयजमानाः उपतिष्ठन्ति उपेत्यतिष्ठन्तिक्रयाद्यर्थं किंच अस्मे अस्माकं संबंधिनोजायवः जेतारः कर्मनिर्वहितारस्तेऋत्विजःसन्तु समर्थाभवन्तु यज्ञंनिर्वहन्त्वित्यर्थः यद्वा तेप्रसिद्धाः प्रयो-गकुशलाजायवःजेतारऋत्विजः अस्मेसन्तुनान्यस्य अत्रवहेथेइत्युक्तं कोत्रविशेषइतितत्राह—हे-इन्द्रवायूअस्मिन्यज्ञेगावः धेनवः साकंसहैवसुवते युष्मदर्थमेव क्षीरमुत्पादयन्ति दोग्ध्योभवन्ती-त्यर्थः यद्वा गावः साकं सहैव सुवते अपत्यमुत्पादयन्ति त्वद्दोहनार्थं आदादिकः ङित्त्वात्ता-स्यनुदात्तेदितिलसार्वधातुकानुदात्तत्वेधातुस्वरः किंच यवः जातावेकवचनंउपलक्षणमेतत् यवा-दिभिःपुरोडाशादिकंपच्यतेइत्यर्थः किंच हेवायो इन्द्रच यतोगावएवंसुवते अतस्तेत्वदर्थाधेनवः नोपदस्यन्तिनोपक्षीणाभवन्ति रोगादिनाक्लशानभवन्ति नकेवलमनुपक्षीणाः किंतु धेनवः युष्म-त्प्रीणयित्र्योगावः नापदस्यन्ति चौराद्युपहारैरुपक्षीणानष्टानभवन्ति ॥ ८॥

८. हे इन्द्र और वायु, तुम इस यज्ञ में मधु के समान उस आहुति को धारण करो, जिसके लिए विजेता यजमान पर्वत आदि प्रदेशों में जाते हैं। हमारे विजेता लोग यज्ञ के निर्वाह के लिए समर्थ हों। इन्द्र और वायु, गायें एक साथ दूध देती हैं और यव से बनाया हव्य तैयार होता है। ये गायें न तो कम हों, न नष्ट हों।

इमेयेतेसुवायोबाह्वोजसोन्तर्नदीतेपतयन्त्युक्षणोमहिव्राधन्त
उक्षणः। धन्वञ्चिद्येअनाशवोजीराश्चिदगिरौकसः।
सूर्यस्येवरश्मयोदुर्नियन्तवोहस्तयोदुर्नियन्तवः ॥ ९ ॥ २५ ॥

इमे। ये। ते। सु। वायो इति। बाहुऽओजसः। अन्तः। नदी इति। ते। पतयन्ति। उक्षणः। महि। व्राधन्तः। उक्षणः। धन्वन्। चित्। ये। अनाशवः। जीराः। चित्। अगिराऽओकसः। सूर्यस्यऽइव। रश्मयः। दुःऽनियन्तवः। हस्तयोः। दुःऽनियन्तवः॥ ९॥ २५॥

हेसुवायो शोभनफलप्रदवायुदेवते तवस्वभूताइमेपुरतो दृश्यमानायेश्वाः सन्तितेनदी नंदने द्यावापृथिव्यौअन्तः तयोरन्तराळे त्वांपतयन्ति पातयन्ति गमयन्ति यद्वा तेतवसंबन्धिनोऽश्वाः पतयंति पतन्ति यज्ञदेशंगच्छन्ति पतगतौ चौरादिरदन्तः कीदृशास्तेबाह्वोजसः बाहुषुप्रकृष्टवलवन्तः उपलक्षणमेतत् सर्वांगवलाइत्यर्थः किंचउक्षणः सेक्तारः युवानइत्यर्थः महिमहत् अतिप्रभूतं व्राधन्तः वर्धमानाः तथा उक्षणः उक्षाणः तत्सदृशाइत्यर्थः वाषपूर्वस्यनिगमेइतिदीर्घाभावः किंच धन्वन् चित् धन्वनिउदकनिर्गमनापादानभूते अन्तरिक्षेपि निरालंबे अनाशवः नाशरहिताः अव्याप्तावाआकाशेविलंबमकुर्वाणाइत्यर्थः अतएवजीराश्चित् चिच्छब्दःपूजायां अत्यन्तं क्षिप्रगतयः यद्वा अनाशवइत्यनेनसहसमुच्चयार्थश्चिच्छब्दः आकाशमार्गेअक्षीणाः शीघ्रगतयश्चेत्यर्थः किंच अगिरौकसः गिरा ओकः स्थानंयेषांनास्तितेतादृशाः भर्त्सनादिनास्थितिमलभमानाइत्यर्थः छान्दसस्तृतीयायाअलुक् तदेवस्पष्टयति—सूर्यस्यरश्मयइवदुर्नियन्तवः दुःखेननियन्तव्याः तेयथाक्षणेन दशदिशोव्याप्नुवन्ति बहवश्चतद्वदेतेअपीत्यर्थः पूर्वंगिरा अनिग्राह्यत्वमुक्तं इदानींहस्तेनाप्यनिग्राह्यत्वमाह—हस्तयोर्दुर्नियन्तवः उभाभ्यामपिहस्ताभ्यांदुःखेननियन्तव्याः देवयजनगमनायशीघ्रगामिनइत्यर्थः॥ ९॥

**९. वायु, ये जो तुम्हारे बलशाली, जवान बैलों के समान और अत्यन्त हृष्ट-पुष्ट घोड़े हैं, वे तुम्हें स्वर्ग और पृथ्वी में ले जाते हैं; ये अन्तरिक्ष में भी देर नहीं करते; ये बहुत शीघ्रगामी हैं; इनकी गति नहीं रुकती। सूर्य-किरणों की तरह इनकी गति का रोकना कठिन है।**

प्रसुज्येष्ठमितिसप्तर्चंतृतीयंसूक्तं ऋषिश्चान्यस्मादितिपरिभाषया परुच्छेपऋषिः अत्यष्टिश्छन्दः ऊतीदेवानामित्यन्त्यात्रिष्टुप् अत्रत्रिष्टुबन्तपरिभाषानाश्रीयते सर्वमात्यष्टमितिविशेषपरिभाषयाबाधितत्वात् मित्रावरुणौदेवता अन्त्ययोस्तुतन्मन्त्रलिंगोक्तदेवता तथाचानुक्रान्तं—प्रसुसप्तमैत्रावरुणंत्वंत्योलिंगोक्तदेवतेअन्त्यात्रिष्टुप् तुशब्दप्रयोगांदिदमादिकेद्वेसूक्तेमैत्रावरुणदेवताकेविनियोगोलैंगिकः।

तत्रप्रथमा—

प्रसुज्येष्ठंनिचिराभ्यांबृहन्नमोहव्यंमतिंभरतामृळयभ्द्यांस्वादिष्ठंमृळयद्भ्याम्। तासम्राजाघृतासुतीयज्ञेयज्ञउपस्तुता। अथैनोःक्षत्रंनकुतश्चनाधृषेदेवत्वंनूचिदाधृषे॥ १॥

प्र । सु । ज्येष्ठम् । निचिराभ्याम् । बृहत् । नमः । हव्यम् ।
मतिम् । भरत । मृळयत्ऽभ्याम् । स्वादिष्ठम् । मृळयत्ऽभ्याम् ।
ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । यज्ञेऽयज्ञे ।
उपऽस्तुता । अथ । एनोः । क्षत्रम् । न । कुतः । चन । आऽधृषे ।
देवऽत्वम् । नु । चित् । आऽधृषे ॥ १ ॥

हेऋत्विजः मित्रावरुणाभ्यां ज्येष्ठंप्रशस्यं बृहत्महत् अतिप्रवृद्धंनमः नमस्कारोपलक्षितंस्तोत्रंतदुपलक्षितंहविर्लक्षणमन्नंवा प्रभरतसंपादयत नमइत्यन्ननाम नमःआयुरितितन्नामसुपाठात् किंच हव्यंहव्यांमतिंतत्प्रदानविषयांबुद्धिं भरत यद्वा मतिंपूज्यं हव्यंहविर्भरत पूर्वत्रपुरोडाशाद्यदनीयमन्नं इदानींतु सोमाज्यादिरूपं निपेयंहविरितिविवेकः कीदृशाभ्यांताभ्यां निचिराभ्यांनितरांचिरकालाभ्यां नित्याभ्यामित्यर्थः प्रवाहरूपेणेतिभावः किंच मृळयद्भ्यां स्तुत्याहविःस्वीकारेणस्वयं मृडितवायजमानमपिसुखयद्भ्यां तथास्वादिष्ठंस्वादुतरंमृडयद्भ्यांहविःसुखयद्भ्यांभक्षयद्भ्यामित्यर्थः कस्तयोर्विशेषइतितत्राह—ता तौमित्रावरुणौसम्राजा सम्यग्राजमानौ राजतेःक्विप् मोराजिसमःक्वाविति समोमकारस्यमकारः घृतासुतीघृतमासूयते आदीयतेयाभ्यां तौ तादृशौ यद्वा घृतमुदकंवृष्टिलक्षणं प्रसूयते सर्वत्रानुज्ञायते याभ्यांतौ एतयोरहोरात्राभिमानिदेवत्वादहोरात्रिद्वारावृष्ट्युत्पादकत्वात् अहोरात्रेवैमित्रावरुणावहोरात्राभ्यांखलुवैपर्जन्योवर्षतीतिश्रुतेः । वृष्ट्यनुज्ञाप्रदत्वंप्रसिद्धं किंच एतौयज्ञेयज्ञे सर्वेष्वपियज्ञेषुउपस्तुता सर्वैर्ऋत्विग्भिःस्तूयमानौ गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वं अथ अपिच एनोः एनयोः संज्ञापूर्वकस्यविधेरनित्यत्वादोसिचेतिगुणाभावे अतोगुणेइतिपररूपत्वं क्षत्रं बलं कुतश्चन कस्मादपिचशत्रोः राक्षसादेः सकाशात् कस्मादप्युपायाद्वा नाधृषे आधर्षितुंनामशक्यंनभवति कृत्यार्थेतवैकेनितिकेन्प्रत्ययः किंच तयोर्देवत्वं नूचित् देवभावोऽपिनाधृषेआधर्षणायोग्यः यद्वा पूर्वमिवेदानीमपि नूचिदिति निपातः पुराणनवयोरितियास्केनोक्तत्वात् आधृषे नकेनाप्यधर्षणीयोभवति एतयोर्बलंनाधृष्यं किमुतद्देवत्वमितिभावः ॥ १ ॥

१. ऋत्विक्गण, चिरन्तन मित्रावरुण को लक्ष्य कर प्रशंसनीय और प्रवृद्ध सेवा करो। उन्हें हव्य देने में कृत-निश्चय बनो। मित्रावरुण यजमानों को सुख देने में कारण हैं। वे स्वादिष्ठ हव्य का भक्षण करते हैं। वे सम्राट् हैं। उनके लिए घृत गृहीत होता है। प्रतियज्ञ में उनकी स्तुति होती है। उनकी शक्ति का कोई उल्लंघन नहीं कर सकता। उनके देवत्व में किसी को सन्देह नहीं होता।

अदर्शिगातुरुरवेवरीयसीपन्थाऋतस्यसमयंस्तरश्मिभिश्चक्षुर्भगस्यरश्मिभिः । द्युक्षंमित्रस्यसादनमर्यम्णोवरुणस्यच ।
अथादधातेबृहदुक्थ्यं वयउपस्तुत्यंबृहद्वयः ॥ २ ॥

अदर्शि । गातुः । उरवे । वरीयसी । पन्थाः । ऋतस्य । सम् ।
अयंस्त । रश्मिऽभिः । चक्षुः । भगस्य । रश्मिऽभिः । द्युक्षम् ।
मित्रस्य । सदनम् । अर्यम्णः । वरुणस्य । च । अथ । दधाते
इति । बृहत् । उक्थ्यम् । वयः । उपऽस्तुत्यम् । बृहत् । वयः ॥ २ ॥

गातुर्गमनशीला वरीयसीउरुतरा उषाः उरवेविस्तीर्णाययागायगमनादिव्यापाराय अदर्शिसर्वैर्दृष्टाभूत् तथा ऋतस्यगमनशीलस्यादित्यस्यपंथामार्गः आकाशलक्षणः रश्मिभिः समयंस्त प्रकाशैःसंगतोऽभूत् भगस्य सर्वैर्भजनीयस्यएतन्नामकस्यदेवस्य रश्मिभिः चक्षुः सर्वप्राणिनांलोचनं समयंस्त संगतमभूत् सर्वेस्वस्वद्रव्यदर्शनायसमर्थाअभवन्नित्यर्थः तदेवस्पष्टीक्रियते—मित्रस्य प्रकाशकारित्वात्सर्वजनमित्रस्यसदनंगृहं अंतरिक्षं द्युक्षं दीप्तानांनिवासस्थानं अंतरिक्षंरश्मिभिः समयंस्त संगतमभूत् तथार्यम्णः एतन्नामकस्यदेवस्य उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं द्युक्षं सदनंरश्मिभिः समयंस्त किंच वरुणस्यतमोनिवारकस्य एतन्नामकस्य देवस्यसदनं तथाभूत् यद्यपिसूर्यस्यैकत्वंतथापि उपाधिभेदेनभेदावपृथक्स्तुतिः तथा यद्यपि त्रिभिरपिप्रकाश्यमप्यन्तरिक्षमेकं तथापि प्रकाशकानांभेदात् त्रिधास्तूयते उदयानन्तरंकर्मानुष्ठानायप्रकाशोभवदित्यर्थः अथअतःकारणात् उदितत्वादेवउक्थ्यंस्तुत्यंबृहत्प्रभूतंवयः हविर्लक्षणमन्नंदधाते धारयतः किंच उपस्तुत्यंउपेत्यस्तोतव्यंएतिस्तुशास्वित्यादिनाक्यप् बृहत्स्तोमादिनामहत्स्तोत्रंवयः हविर्लक्षणमन्नंचदधाते ॥ २ ॥

२. श्रेष्ठ उषा विस्तृत यज्ञ की ओर जाती है—ऐसा देखा गया। शीघ्रगामी सूर्य का पंथ व्याप्त हुआ। सूर्य-किरणों में मनुष्य की आँखें खुलीं। मित्र, अर्यमा और वरुण के उज्ज्वल गृह प्रकाश से परिपूर्ण हुए; इसलिए तुम दोनों प्रशंसनीय और बहुत अन्न धारण करो। प्रशंसनीय और प्रभूत अन्न धारण करो।

ज्योतिष्मतीमदितिंधारयत्क्षितिंस्वर्वतीमासचेतेदिवेदिवेजागृवांसा
दिवेदिवे। ज्योतिष्मत्क्षत्रमाशातेआदित्यादानुनस्पती ।
मित्रस्तयोर्वरुणोयातयज्जनोर्यमायातयज्जनः ॥ ३ ॥

ज्योतिष्मतीम् । अदितिम् । धारयत्ऽक्षितिम् । स्वःऽवतीम् । आ ।
सचेते इति । दिवेऽदिवे । जागृऽवांसा । दिवेऽदिवे । ज्योतिष्मत् ।
क्षत्रम् । आशाते इति । आदित्या । दानुनः । पती इति । मित्रः ।
तयोः । वरुणः । यातयत्ऽजनः । अर्यमा । यातयत्ऽजनः ॥ ३ ॥

अयंयजमानः ज्योतिष्मतीं आहवनीयाग्नेस्तेजोयुक्तां अदितिं अदीनांसंपूर्णलक्षणां क्षितिं अग्नेर्निवासयोग्यांभूमिंउत्तरवेदिलक्षणांधारयत् धारयति स्वयंकृतवानित्यर्थः एताव-

तीवैपृथिवीयावतीवेदिरितिश्रुतेः। तथास्वर्वतीं यज्ञनिष्पत्तिद्वारास्वर्गवतीं ईदृशींतांआसचेते मित्रावरुणौसंगतौभवतः नकेवलमेतस्मिन्नेवाहनि किंतु दिवेदिवेसर्वेष्वप्यहस्सु कीदृशौतौदिवेदिवे प्रतिदिनं जागृवांसा प्रबोधंकुर्वाणौ यज्ञंगंतुंअनलसावित्यर्थः किंच वेदिमागत्यज्योतिष्मत् आज्यादिस्वीकारेणातिशयेनतेजोयुक्तंक्षत्रंबलं आशाते अश्नुवाते प्राप्नुतः अश्नोतेश्छान्दसे लिटि अनित्यमागमशासनमितिवचनान्नुडभावः लटिवाछान्दसःशपःश्लुः कीदृशावितितावाह—अदित्याअदितेःपुत्रौदानुनस्पती दानस्यआज्यादिप्रदानस्य स्वामिनौअभिमतदानस्यपालयितारौवा षष्ठ्याःपतिपुत्रेतिसंहितायांसत्वं मित्रश्चवरुणश्चतावुभौदेवौअर्यमाख्यस्तु देवस्तयोः मित्रावरुणयोः यातयज्जनःतयोरेवसंबन्धात् उभयोर्मध्येस्थितः यातयज्जनः स्वस्वव्यापारनियोजितसर्वजनःमित्रावरुणौ अहोरात्रदेवौ अर्यमातुतयोरेवसामर्थ्यात् सर्वप्राणिनःप्रेरयतीत्यर्थः किंच यातयज्जनःयातयन्तिलोकंयदीयाजनाः प्रेष्याःसतादृशः यद्वा यात्यमानानरकेनिपात्यमानाजनाः प्राणिनः अयष्टारोयेन सतादृशः कर्मसाक्षित्वात्स्वस्वकर्मानुरोधेन प्राणिनः सुकृतेयातयतीत्यर्थः तादृशः अर्यमा मित्रावरुणयोरधीनोवर्ततइतिशेषः॥ ३॥

३. यजमान ने ज्योतिष्मती, सम्पूर्ण-लक्षणा और स्वर्ग-प्रदायिनी वेदी तैयार की। तुम लोग सदा जागरूक रहकर और प्रतिदिन वहाँ उपस्थित होकर तेज और बल प्राप्त करो। तुम लोग अदिति के पुत्र और सर्व-प्रकार दान के कर्त्ता हो। मित्र और वरुण लोगों को अच्छे व्यापार में लगाते हैं। अर्यमा भी ऐसा करते हैं।

अयंमित्रायवरुणायशंतमःसोमोभूत्ववपानेष्वाभगोदेवोदेवेष्वाभगः। तंदेवासोजुषेरतविश्वेअद्यसजोषसः।
तथाराजानाकरथोयदीमहऋतावानायदीमहे॥ ४॥

अयम्। मित्राय। वरुणाय। शम्ऽतमः। सोमः। भूतु। अवऽपानेषु। आऽभगः। देवः। देवेषु। आऽभगः। तम्। देवासः। जुषेरत। विश्वे। अद्य। सऽजोषसः। तथा। राजाना। करथः। यत्। ईमहे। ऋतऽवाना। यत्। ईमहे॥ ४॥

अयमस्माभिर्हूयमानः सोमः मित्रायवरुणायच शंतमःपीयमानःसन् सुखतमोभूतुभवतु छान्दसःशपोलुक् भूसुवोस्तिङीतिगुणाभावः अवपानेषु अवाङ्मुखचमसपानेषु विषयेषु आसर्वतः भगोभजनीयः ताभ्यां किंच देवः दीप्यमानः देवेषु मित्रावरुणानुचरेष्वितरदेवेषु तैःआभगः आभजनीयः यद्वा देवेषुस्तोतृषु यजमानेषु मध्येदेवः दीप्यमानः तथा आभगः तैरेवासर्वतोभजनीयः किंच तंसोमं विश्वेसर्वे देवासोदेवाः अद्यास्मिन्नहनि जुषेरतसेवन्ते छान्दसोझस्य रत्रादेशाभावः बहुलंछन्दसीतिरुडागमः कीदृशास्ते सजोषसः समानप्रीतियुक्ताः तथाहेराजाना राजमानामित्रावरुणौ युवांकरथःकुरुतं सेवेथइत्यर्थः व्यत्ययेनशप् यद्यस्मात्कारणात् यदीमहे

४ तै० सं० २. ६. ४.।

यत्प्रामुमस्तद्देवान्याचामहे ईङ्गतौ देवादिकः छान्दसोविकरणस्यलुक् तस्माज्जुषेरत तथाऋतावाना ऋतवन्तौ सत्यवन्तौ यज्ञवन्तौ वा मित्रावरुणौ ईमहे अभिमतफलंतयोः पानंवायाचामहे ॥४॥

४. मित्र और वरुण के लिए यह सोम प्रसन्नता-दायक हो। वे दोनों नीचे मुंह करके इसे पान करें। दीप्यमान सोम देवों की सेवा के उपयुक्त हैं। सारे देवगण अतीव प्रसन्न होकर इसे पियें। प्रकाशशाली मित्र और वरुण, हम जैसी प्रार्थना करते हैं, वैसा ही करो। तुम लोग सत्यवादी हो; हम जिसके लिए प्रार्थना करते हैं, उसेकरो।

योमित्रायवरुणायाविधज्जनोनर्वाणंतंपरिपातोअंहसोदाश्वांसंमर्तमंहसः।

तमर्यमाभिरक्षत्यृजूयन्तमनुव्रतम् ।

उक्थैर्यएनोःपरिभूषतिव्रतंस्तोमैराभूषतिव्रतम् ॥ ५ ॥

यः । मित्राय । वरुणाय । अविधत् । जनः । अनर्वाणम् । तम् । परि । पातः । अंहसः । दाश्वांसम् । मर्तम् । अंहसः । तम् । अर्यमा । अभि । रक्षति । ऋजुऽयन्तम् । अनु । व्रतम् । उक्थैः । यः । एनोः । परिऽभूषति । व्रतम् । स्तोमैः । आऽभूषति । व्रतम् ॥५॥

योजनः यजमानोमित्रायवरुणायच कर्मणःसंप्रदानत्वाच्चतुर्थी मित्रंवरुणंच अविधत् परिचरति तंजनंयुष्मत्परिचारकं अनर्वाणं अद्वेषिणं भ्रातृव्योवाअर्वेतिश्रुतेः।अनल्पंवा अनन्यसेवितं परिपाथः परितोरक्षतं कस्मादितितदुच्यते—अंहसः न्यूनातिरिक्तजनितात्पापात् नकेवलं सामान्यं जनं अपितुदाश्वांसं हविर्दत्तवन्तं मर्तंमरणधर्माणं अंहसःसर्वस्मादपिपापात् नकेवलं भवंतावेवअपितु अर्यमासर्वेषांनियन्तादेवः ऋजूयन्तं देवेष्वार्जवमाचरन्तं यजमानं व्रतमनु तदीयंकर्मानुलक्ष्य अभिरक्षति अभितोरक्षति कोस्यजनस्यविशेषइतितत्राह—योयजमानः उक्थैः शस्त्रैःएनोएनयोर्मित्रावरुणयोर्व्रतंकर्मपरिभूषति परिगृह्णाति तथायजमानः युष्मदीयंव्रतंकर्म स्तोमैःस्तोत्रैर्गानयुक्तमन्त्रसाध्यैः आभूषति सर्वतः अलंकरोति भूषअलङ्कारे भौवादिकः तमभिरक्षन्तीत्यन्वयः॥५॥

५. जो व्यक्ति मित्र और वरुण की सेवा करता है, उसे तुम पाप से बचाओ। द्वेष-शून्य और हव्यदाता मनुष्य को सारे पापों से बचाओ। उस सरल-स्वभाव व्यक्ति की, उसके व्रत को लक्ष्यकर, अर्यमा रक्षा करते हैं। वह यजमान मंत्र-द्वारा मित्रावरुण का व्रत ग्रहण करता और स्तोत्र-द्वारा उसकी रक्षा करता है।

नमोदिवेबृहतेरोदसीभ्यांमित्रायवोचंवरुणायमीळ्हुषेसुमृळीकायमीळ्हुषे ।

इन्द्रमग्निमुपस्तुहिद्युक्षमर्यमणंभगम् ।

ज्योग्जीवन्तःप्रजयासचेमहिसोमस्योतीसचेमहि ॥ ६ ॥

नमः । दिवे । बृहते । रोदसीभ्याम् । मित्राय । वोचम् । वरुणाय । मीळ्हुषे । सुऽमृळीकाय । मीळ्हुषे । इन्द्रम् । अग्निम् । उप । स्तुहि ।

---

१ तै०सं० ६. ३. ८.।

द्युक्षम् । अर्यमणम् । भगम् । ज्योक् । जीवन्तः । प्रऽजया । सचेमहि । सोमस्य । ऊती । सचेमहि ॥ ६ ॥

दिवे द्योतमानाय सूर्यायनमोवोचं नमस्कारोपलक्षितं स्तोत्रंवोचंब्रवीमि स्तौमीत्यर्थः कीदृशायतस्मै बृहतेमहते बृहन्महतोरुपसंख्यानमितिविभक्तिरुदात्ता स्तुत्याय तथारोदसीभ्यां द्यावापृथिवीभ्यां तदभिमानिदेवाभ्यांनमोवोचं तथामित्रायसर्वजनहिताय अहरभिमानिदेवाय नमोवोचं तद्वद्वरुणाय आवरकाय रात्र्यभिमानिदेवाय तथामीळ्हुषे अभिमतफलस्य सेक्त्रेरुद्राय कीदृशायतस्मै सुमृळीकायशोभनसुखयित्रे पुनःसएवविशेष्यते मीळ्हुषे सुमृडीकायेतिद्वेप्रत्येकविशेषणभूते इदानीं यजमानः ऋत्विजं स्वात्मानंवामंत्रिब्रवीति हेहोतः हेआत्मन्वा इन्द्रमग्निं द्युक्षंदीप्तिमन्तमर्यमणं भगंच उपउपेत्य बुद्ध्याप्राप्यस्तुहि स्तुतिंकुरु अस्मदनुग्रहात्ज्योक् चिरकालंजीवन्तोजीवनोपेतावयं प्रजयापुत्रभृत्यादिना सचेमहि संगताभूयास्म किंच सोमस्यइन्दोरूतीऊत्यासचेमहि तमपिस्तुत्वा तत्कारितेनरक्षणेन सहिताभूयास्मेत्यर्थः ॥ ६ ॥

६. मैं प्रकाशशाली और महान् सूर्य को नमस्कार करता हूँ। पृथ्वी, आकाश, मित्र, वरुण और रुद्र को भी नमस्कार करता हूँ। ये सब अभीष्ट फल और सुख के दाता हैं। इन्द्र, अग्नि, दीप्तिमान् अर्यमा और भग की स्तुति करो। हम बहुत दिनों जीकर निश्चयात्मिका बुद्धि से घिरे रहेंगे। इसी प्रकार सोम-द्वारा हम रक्षित होंगे।

ऊतीदेवानांवयमिन्द्रंवन्तोमंसीमहिस्वयंशसोमरुद्भिः ।
अग्निर्मित्रोवरुणःशर्मयंसन्तदश्याममघवानोवयंच ॥७॥ २६ ॥

ऊती । देवानाम् । वयम् । इन्द्रऽवन्तः । मंसीमहि । स्वऽयशसः । मरुत्ऽभिः । अग्निः । मित्रः । वरुणः । शर्म । यंसन् । तत् । अश्याम । मघऽवानः । वयम् । च ॥ ७ ॥ २६ ॥

इन्द्रवन्तःप्रीतेनेन्द्रेणतद्वन्तोवयंदेवानां देवान्कर्मणिषष्ठी ऊती ऊत्या तर्पणेनहविरादिना मंसीमहि मन्येमहि कीदृशावयं स्वयशसः स्वायत्तकीर्तयः मरुद्भिः स्तुत्याहृष्टैर्मरुद्देवैः अनुगृहीताः यद्वा देवानामूत्या रक्षणेन रक्षितामंसीमहिमन्तारोभवेम सामर्थ्यात्तेषामेवमहत्त्वस्य किंचाग्निमित्रवरुणादेवाः शर्मयंसन्अस्माकंसुखंप्रायच्छन् तंतंवरंमघवानोवयंचतैर्दत्तान्नवन्तःसन्तस्तत्सुखंअश्याम व्याप्नुयाम अश्नोतेराशिषिलिङि छन्दस्युभयथेति सार्वधातुकत्वात्सलोपः॥ ७ ॥

७. हमने इन्द्र को प्राप्त किया है। हमारे ऊपर मरुद्गण कृपा करते हैं। देवता लोग हमें बचायें। इन्द्र, अग्नि, मित्र और वरुण हमारे लिए सुखदाता हों। हम अन्न से संयुक्त होकर उसी सुख का भोग करें।

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणामात्येनविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेप्रथमोऽध्यायः ॥ १ ॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १॥

अथद्वितीयाध्यायआरभ्यते सुषुमायातमितितृचात्मकंचतुर्थंसूक्तम् पारुच्छेपमतिशाक्करं षष्ट्यक्षरोपेतत्वात् पूर्ववत्तुशब्दप्रयोगान्मैत्रावरुणं अत्रात्यष्टिपरिभाषानाश्रीयते अतिशाक्करमितिविशेषितत्वात् अत्रानुक्रमणिका—सुषुमत्तृचमतिशाक्करमिति। दशरात्रस्यषष्ठेहनिप्रातःसवने प्रउगशस्त्रेइदंसूक्तंमित्रावरुणदेवत्यंतृतीयंतृचम् सूत्रितंच—स्तीर्णंबर्हिरितितृचौसुषुमायातमद्रिभिरिति तथास्मिन्नेव मैत्रावरुणस्य प्रस्थितयाज्यायाःपुरस्तादाद्यामक्षेपणीया षष्ठस्यप्रातःसवनइतिखण्डेसूत्रितम्—सुषुमायातमद्रिभिरिति।

सैषासूक्तेप्रथमा—

ॐम् सुषुमायातमद्रिभिर्गोश्रीतामत्सराइमेसोमासोमत्सराइमे।
आराजानादिविस्पृशास्मत्रागन्तमुपनः।
इमेवांमित्रावरुणागवाशिरःसोमाःशुक्रागवाशिरः ॥ १ ॥

सुसुम । आ । यातम् । अद्रिऽभिः । गोऽश्रीताः । मत्सराः ।
इमे । सोमासः । मत्सराः । इमे । आ । राजाना । दिविऽस्पृशा ।
अस्मऽत्रा । गन्तम् । उप । नः । इमे । वाम् । मित्रावरुणा ।
गोऽआशिरः । सोमाः । शुक्राः । गोऽआशिरः ॥ १॥

हेमित्रावरुणौ आयातं अस्मद्यज्ञंमत्यागच्छतं आगमनायकिमस्तीतिचेत्तत्राह—अद्रिभिः अभिषवसाधनैर्ग्रावभिः सुषुम सोमंसुतवन्तोवयं सुनोतेर्लिटिरूपं अतोगोश्रीताः विकारेप्रकृतिशब्दः पयोभिर्मिश्रिताः तस्मान्मैत्रावरुणंपयसाश्रीणातीतिहिब्राह्मणं। मत्सराः तृप्तिहेतवः सोमाः मत्सरःसोमोमन्दतेस्तृप्तिकर्मणइतियास्कः। इमेपुरतोगृहीतावर्तंते अतआयातं पुनस्तएवविशेष्यन्ते इमेसोमासोमत्सराः मदहेतवः मादनेमात्सर्यवन्तोवा इतरयज्ञगतसो-

१ नि० २.५.।

मेभ्यः सोमाः कीदृशौयुवां राजानाराजनशीलौ दिविस्पृशाद्युलोकवासिनौ हृद्युभ्यांङरुपसंख्यानमित्यलुक् ईदृशौ युवां अस्मत्राअस्मासुमध्ये अस्मत्पालकौवा युवांनोऽस्मत्संबन्धिनं यज्ञं उपागतं समीपे आगच्छतं किंच हेमित्रावरुणा एतन्नामानौदेवौ वांयुवयोरर्थाय इमे सोमाः गवाशिरः पूर्ववद्विकारेप्रकृतिशब्दः गोभिः क्षीरैः आशिरोमिश्रिताःसंजाताः किंच गवाशिरः गोभिःउदकैर्मिश्रिताःसंजाताः यद्वा गोभिः स्तुतिलक्षणैर्मन्त्रैर्मिश्रिताः अतएवशुक्रादीप्ताःसंजाताः आशिरमवनयतिशुक्रत्वायेतिश्रुतेः ॥ १ ॥

१. हम पत्थर के टुकड़े से सोम चुआते हैं। मित्रावरुण, आओ। दूध-मिला और तृप्ति करनेवाला सोम तैयार है। यह सोम तृप्ति देनेवाला है। तुम राजा, स्वर्गवासी और हमारे रक्षक हो। हमारे यज्ञ में आओ। तुम्हारे ही लिए यह सोम दूध के साथ मिलाया गया है। दूध-मिलाया सोम विशुद्ध होता है।

इमआयातमिन्दवःसोमासोदध्याशिरःसुतासोदध्याशिरः।
उतवामुषसोबुधिसाकंसूर्यस्यरश्मिभिः।
सुतोमित्रायवरुणायपीतयेचारुर्ऋतायपीतये ॥ २ ॥

इमे। आ। यातम्। इन्दवः। सोमासः। दधिऽआशिरः। सुतासः। दधिऽआशिरः। उत। वाम्। उषसः। बुधि। साकम्। सूर्यस्य। रश्मिऽभिः। सुतः। मित्राय। वरुणाय। पीतये। चारुः। ऋताय। पीतये ॥ २ ॥

हेमित्रावरुणौ आयातंआगच्छतं यतोयुष्मदर्थंइन्दवः क्लेदनसमर्थाः सोमासःसोमाःदध्याशिरः दध्नाश्रयणवन्तःसन्तःइमेपुरतोग्रहेणगृहीतावर्तन्ते अतआयातं किंच दध्याशिरः धीयमानाशिरःसोमाःसुतासः मन्त्रेणग्रावभिरभिषुताःसंपन्नाःअतआयातमितिशेषः आदित्यग्रहेदध्यवनयसद्भावाद् तदपेक्षयादध्याशिरइत्युक्तं उतअपिच वांयुवयोःप्रीतयेपालनाय उषसोबुधि उषसःसंबंधिनिबोधेसति संपदादिलक्षणोभावेक्विप् सावेकाचइतिविभक्तेरुदात्तत्वं प्रकाशेसंजातेसति नकेवलमुषसएवबोधः अपितुसूर्यस्यरश्मिभिःसाकं सूर्यकिरणैःसहप्रकाशेहविःप्रदानायसंजातेसति सुतः सोमोअभिषुतः इदानींवियुज्योच्यते मित्रायसर्वहितायएतन्नामकायअहरभिमानिदेवाय तथावरुणायआवरकाय रात्र्यभिमानिदेवायच तदर्थंसोमःसुतइतिशेषः किंच ऋतायज्ञायतन्निर्वाहकायतदर्थंपीतयेपानाययज्ञसिद्ध्यर्थंहिदेवानांसोमपानं यद्वा क-

तैरिक्किच् पीतयेपानेक्रत्विगादयेक्रतायज्ञायतन्निर्वाहकायवा चारुःचरणीयः भक्षणीयः सोमः सुतःअभिषुतः ॥ २ ॥

२. मित्रावरुण, आओ। यह तरल सोमरस दही के साथ मिलाया हुआ है। अभिषुत सोमरस दही के साथ मिलाया गया है। उषा के उदय-काल में ही हो अथवा सूर्य-किरणों के साथ ही हो—तुम्हारे लिए सोम अभिषुत है। यह सुन्दर सोमरस मित्र और वरुण के पान के लिए है—यज्ञ-स्थल में उनके पीने के लिए है।

तांवांधेनुंनवासरीमंशुंदुंहन्त्यद्रिभिःसोमंदुहन्त्यद्रिभिः।
अस्मत्रागन्तमुपनोर्वाञ्चासोमपीतये।
अयंवांमित्रावरुणानृभिःसुतःसोमआपीतयेसुतः ॥ ३ ॥ १ ॥

ताम्। वाम्। धेनुम्। न। वासरीम्। अंशुम्। दुहन्ति। अद्रिऽभिः। सोमम्। दुहन्ति। अद्रिऽभिः। अस्मऽत्रा। गन्तम्। उप। नः। अर्वाञ्चा। सोमऽपीतये। अयम्। वाम्। मित्रावरुणा। नृऽभिः। सुतः। सोमः। आ। पीतये। सुतः ॥ ३ ॥ १ ॥

मित्रावरुणा हेमित्रावरुणौ वांयुवयोःसंबन्धिनमंशुंवल्लीरूपंसोमंदुहन्ति संपादयन्ति अध्वर्यवः किमिव तांमसिद्धांअग्निहोत्राद्यर्थांवासरीं सर्वांगाच्छादितपयस्कांबहुक्षीरामित्यर्थः यद्वा पयआदिनाआच्छादयित्रीं वसआच्छादने औणादिकअरिमत्ययः कृदिकारादक्तिनइतिङीष् यद्वा केवलऔणादिकःअरप्रत्ययः स्वार्थिकोऽण् धेनुंन प्रीणयित्रींगामिव केनसाधनेनेतितदाह—अद्रिभिः अभिषवसाधनैर्ग्रावभिः किंच अद्रिभिः तैरेवसाधनैः सोमंयुष्मदर्थमेवदुहन्ति वल्लीरूपंसोमंयुष्मदर्थमेवोदकेनाप्लाव्यरसंदुहन्ति किंच अर्वाञ्चा अस्मदभिमुखौसन्तौ सोमपीतयेसोमपानाय अस्मत्राअस्मत्रातारौ युवांनोऽस्मदीयंयज्ञंउपगन्तं उपागच्छतं किंच वांयुष्मदर्थं अयंसोमःनृभिर्नेतृभिर्यज्ञनिर्वाहकैःऋत्विग्भिःसुतःअभिषुतः किंच आपीतयेसंपूर्णपानाय सुतः अतआगच्छतमित्यर्थः ॥ ३ ॥

३. तुम्हारे लिए बहुत रसवाले सोम को, दुग्धवती गाय की तरह, पत्थर के टुकड़ों से वे दुहते हैं। वे प्रस्तर-खण्ड-द्वारा सोम को दुहते हैं। तुम हमारे रक्षक हो। सोम-पान के लिए हमारे सामने हमारे पास तुम आओ। मित्र और वरुण, नेताओं ने तुम्हारे लिए सोम चुआया है—अच्छी तरह पीने के लिए अभिषव किया है।

प्रप्रपूष्णइतिचतुर्ऋचंपंचमंसूक्तं पारुच्छेपमात्यष्टं पूषदेवताकं प्रप्रचतुष्कंपौष्णमित्यनुक्रान्तं विनियोगोलैङ्गिकः।

तत्रप्रथमा—

प्रप्रंपूष्णस्तुंविजातस्यंशस्यतेमहित्वमंस्यतवसोनतंन्दतेस्तोत्रमंस्य
नतंन्दते। अर्चांमिसुम्नयन्नहमन्त्यूतिंमयोभुवंम्।
विश्वंस्ययोमनंआयुयुवेमखोदेवआंयुयुवेमखः ॥ १ ॥

प्रऽप्रं। पूष्णः। तुविऽजातस्यं। शस्यते। महिऽत्वम्। अस्य।
तवसंः। न। तन्दते। स्तोत्रम्। अस्य। न। तन्दते। अर्चांमि।
सुम्नऽयन्। अहम्। अन्तिंऽऊतिम्। मयःऽभुवंम। विश्वंस्य।
यः। मनंः। आऽयुयुवे। मखः। देवः। आऽयुयुवे। मखः ॥ १ ॥

तुविजातस्यबहुयजमानार्थमुत्पन्नस्यास्यपूष्णः पोषकस्यैतन्नामकस्यदेवस्य तवसोमहित्वं बलस्यमहत्त्वंप्रशस्यते प्रस्तूयतेसर्वैः वीप्सापादपूरणे नतंदते नहिनस्तिकश्चित् तदपि किंचास्यपूष्णः स्तोत्रंनतन्दते नहिनस्तिनविरमति सर्वोपिजनः एनंस्तौतीत्यर्थः जगत्पोषकत्वादितिभावः अतःकारणात् अहं अहमपि यजमानः सुम्नयत् सुखमिच्छन् अर्चामिस्तौमि कीदृशंतं अंत्यूतिं आसन्नरक्षणं कादिलोपोबहुलमितिकलोपः स्तुत्यनन्तरमेववरप्रदमित्यर्थः मयोभुवंसुखस्योत्पादकं भावयितारंवा यःपूषा मखःयज्ञवान् मत्वर्थोलुप्यते विश्वस्यसर्वस्य स्तोतुः ऋत्विजोमनः आयुयुवे समन्तात्मिश्रयति शीघ्रवरप्रदानादितिभावः किंच देवोदीप्यमानः पूषाइतिशेषः मखः मखंयज्ञंआयुयुवेसंपूर्तिपर्यंतंमिश्रयति यद्वा विश्वस्यमनोमिश्रयणेयजमाने किमायातमितिचेत् उच्यते—मखः यज्ञनिर्वाहकोयंपूषादेवः यजमानस्यमनः आयुयुवे समन्तान्मिश्रयति सामर्थ्याद्यजमानस्यमनइतिलभ्यते यौतेश्छान्दसोलिट् ॥ १ ॥

१. अनेक मनुष्यों-द्वारा पूजित पूषा (सूर्य) देव की शक्ति की महिमा सर्वत्र प्रशंसा प्राप्त करती है। कोई उसे मारना नहीं चाहता। पूषा के स्तोत्र की विश्रान्ति नहीं है। मैं सुख पाने की इच्छा से पूषा की पूजा करता हूँ। वह तुरन्त सहारा देते और उत्पन्न करते हैं। पूषा यज्ञवाले हैं। वे सारे मनुष्यों के मन के साथ मिल जाते हैं।

प्रहित्वांपूषन्नजिरंनयामंनिस्तोमेंभिःकृण्वऋणवोयथामृधउष्ट्रोनपीपरोमृधः। हुवेयत्त्वांमयोभुवंदेवंसख्यायमर्त्यः।
अस्माकंमांगूषान्द्युम्निनंस्कृधिवाजेंषुद्युम्निनंस्कृधि ॥ २ ॥

प्र । हि । त्वा । पूषन् । अजिरम् । न । यामनि । स्तोमेभिः ।
कृण्वे । ऋणवः । यथा । मृधः । उष्ट्रः । न । पीपरः । मृधः ।
हुवे । यत् । त्वा । मयःऽभुवम् । देवम् । सख्याय । मर्त्यः ॥
अस्माकम् । आंगूषान् । द्युम्निनः । कृधि । वाजेषु । द्युम्निनः ।
कृधि ॥ २ ॥

हेपूषन् अजिरं यज्ञदेशंप्रति गमनवन्तं त्वात्वांयामनि गमने निमित्तभूतेसति स्तोमेभिः स्तोत्रैः प्रकृण्वे प्रकृष्टंकरोमि तत्रदृष्टान्तः—यामनिशीघ्रगमने अजिरंन शीघ्रगामिनमश्वमिव स-यथा प्रस्तूयते तद्वत् किंच यथामृधः संग्रामान् उद्दिश्यऋणवःगच्छेः तथा प्रकृण्वे यद्वा यथा ऋणवः अस्मद्यज्ञंप्रतिगच्छेः ऋणुगतौ तानादिकः लेटचडागमः तथात्वांकृण्वे किंच मृधो हिंस-कान्योद्धॄन् संग्रामे पीपरः पारंनयसि पारयतेर्लुङिचङिरूपं तत्रदृष्टान्तः—उष्ट्रोन उष्ट्रोयथाभारं वोढ्वापारयति तद्वत् मृधः संग्रामात् पीपरः पारंनयसि यत् यतः अतःकारणात् त्वात्वांमयोभु-वं सुखस्यभावयितारंदेवं देवनशीलंपूषणं मर्त्योमरणधर्मामनुष्योहं हुवेआह्वयामि किमर्थं स-ख्यायसमानख्यानाय प्रियकरणायएवमाहूतःसन्नस्माकं आंगूषान् आघोषान्स्तोमान् आंगू-षस्तोमआघोषइतियास्कः । द्युम्निनस्कृधि द्योतनवतः कुरु यद्वा स्तोमान् यशोवतः अन्नवतो-वा कृधिअस्मत्स्तुत्याप्रीतः त्वमेवंकुर्वित्यर्थः किंच वाजेषु संग्रामेषुद्युम्निनः अन्नवतः कृधि अ-स्मद्वैरिणोजित्वातेषामन्नंकृधिकुर्वित्यर्थः ॥ २ ॥

२. जैसे शीघ्रगामी घोड़े की प्रशंसा होती है, वैसे ही, हे पूषन्, मंत्रों-द्वारा मैं तुम्हारी प्रशंसा करता हूँ। युद्ध में जाने के लिए तुम्हारी प्रशंसा करता हूँ। ऊँट की तरह तुम हमें युद्ध में पार करते हो। तुम सुख उत्पन्न करनेवाले देवता हो और मैं मनुष्य हूँ; मैत्री पाने के लिए मैं तुम्हें बुलाता हूँ। मेरे बुलावे को शक्तिमान् करो और संग्राम में मुझे विजयी बनाओ।

यस्यतेपूषन्त्सख्येविपन्यवःक्रत्वाचित्सन्तोवसाबुभुज्रिरइतिक्रत्वा
बुभुज्रिरे । तामनुत्वानवीयसींनियुतंरायईमहे ।
अहेळमानउरुशंससरीभववाजेवाजेसरीभव ॥ ३ ॥

यस्य । ते । पूषन् । सख्ये । विपन्यवः । क्रत्वा । चित् । सन्तः ।
अवसा । बुभुज्रिरे । इति । क्रत्वा । बुभुज्रिरे । ताम् । अनु । त्वा ।
नवीयसीम् । निःऽयुतम् । रायः । ईमहे । अहेळमानः । उरुऽशंस ।
सरी । भव । वाजेऽवाजे । सरी । भव ॥ ३ ॥

१ नि० ५. ११.

हेपूषन्देव यस्यते रक्षकत्वेनप्रसिद्धस्यतवसख्ये सखित्वेहितकरणेसति क्त्वाचित् क्रतुनाप्रकृतेनकर्मणैव जसादिषुछन्दसिवावचनमितिनाभावाभावः संतः भवन्तंप्रीणयितारःसन्तः विपन्यवः विशेषेणस्तोत्रशीलाः यद्वा मेधाविनामैतत् मेधाविनोयजमानाः अवसा त्वत्कृतेनरक्षणेनरक्षिताःसन्तः बुभुज्रिरेभुञ्जते भोगान्इति एवमेवसर्वदाकृत्वाकर्मणाबुभुज्रिरे भुंजते सर्वेपाल्यन्तइतिवा भुजेश्छन्दसिलिटिबहुलंछन्दसीतिरुट् तांतादृशीं नवीयसीं नवतरां स्तुत्यांवारक्षां अनुअनुसृत्य रक्षायाअनन्तरंत्वांनियुतं रायः एतत्संख्याकान् धनानि ईमहे याचामहे किंच हे उरुशंस बहुधास्तुत्य त्वं अहेळमानः अक्रुध्यन् अस्मासुसुमनाःसन् सरीभव अस्माभिर्गंतव्योभव सर्तेरौणादिकइनिप्रत्ययः आद्युदात्तत्वं किंच त्वंवाजेवाजे सर्वेष्वपिसंग्रामेषु सरीभवगमनशीलोभव पुरतोगन्ताभवेत्यर्थः ॥ ३॥

३. पूषन्, तुम्हारी मित्रता प्राप्त करके विशेष यज्ञ-द्वारा तुम्हें प्रसन्न करते हुए स्तोत्र-परायण यजमान तुम्हारे द्वारा रक्षित होकर नाना प्रकार के भोग भोगते हैं। नया सहारा पाकर तुम्हारे पास असंख्य धन चाहते हैं। बहुतों के द्वारा स्तवनीय पूषा, हमारा अनादर न करके हमारे सामने आओ और युद्ध-काल में हमारे अग्रगामी बनो।

अस्याऊषुणउपसातयेंभुवोहेळमानोररिवाँअजाश्वश्रवस्यतामजाश्व।
ओषुत्वांववृतीमहिस्तोमेभिर्दस्मसाधुभिः।
नहित्वांपूषन्नतिमन्यआघृणेनतेसख्यमपह्नुवे ॥ ४ ॥ २ ॥

अस्याः । ऊम् इति । सु । नः । उप । सातये । भुवः । अहेळमानः । ररिऽवान् । अजऽअश्व । श्रवस्यताम् । अजऽअश्व । ओ इति । सु । त्वा । ववृतीमहि । स्तोमेभिः । दस्म । साधुऽभिः । नहि । त्वा । पूषन् । अतिऽमन्ये । आघृणे । न । ते । सख्यम् । अपह्नुवे ॥४॥२॥

हे अजाश्व पूषन् अजाश्वेतिपूषणमाहेतियास्कः[1]। नोऽस्माकं अस्याः अस्यैचतुर्थ्यर्थेषष्ठी सातयेलाभाय अहेळमानः अक्रुध्यन् अनादरमकुर्वन् ररिवान् दाताचसन् सुसुष्ठुउपभुवः समीपस्थोभव रातेश्छान्दसस्यलिटःक्वसुः पदसंज्ञायाअभावेपिपपिवांसंतस्थिवांसमित्यादौ छान्दसोवग्रहोदृश्यते उइतिपादपूरणः किंच श्रवस्यतां अन्नमिच्छतामस्माकं हेअजाश्व अजाएवाश्वस्थानीयायस्यतादृशत्वं पूषन्नामेदं ररिवांश्चसन् उपभुवः ओइति निपातद्वयसमुदायात्मकएकोनिपातः हेदस्म शत्रूणां उपक्षपयितः पूषन् त्वात्वां ओषु ववृतीमहि सर्वतएवसुतरांवर्तयेमहि वृतेरन्तर्भावितण्यर्थाल्लिङिबहुलंछन्दसीतिशपःश्लुः यज्ञान्तरगमनान्निवर्तयामः

१ नि० ४. २५.।

इत्यर्थः केनसाधनेनेतितदुच्यते—साधुभिःस्तोमेभिः त्वांप्रीणयितुंसमर्थैःस्तोत्रैः किंच हे पूषन् आघृणे सर्वतोवृष्टेःक्षारयितः यद्वा आघृणे हविषामाहर्तः स्वीकर्तः त्वां नह्यतिमन्ये अवमतिंनैवकरोमि नकेवलमनतिक्रममात्रं किंतु ते सख्यं तवसखित्वंहितकर्तृत्वं नह्यपह्नुवे नैवापनयामि नत्यजामि सर्वतःप्रख्यापयामीत्यर्थः ॥ ४ ॥

४. अज वाहनवाले पूषन्, हमारे लाभ के सम्बन्ध में अनादर न कर और दानशील होकर हमारे पास आओ। अजाश्व पूषन्, हम अन्न चाहते हैं। हमारे पास आओ। शत्रु-हन्ता पूषा, मंत्र-पाठ करते हुए हम तुम्हारे चारों ओर रहें। वृष्टिदाता पूषा, हम कभी न तो तुम्हारा अपमान करते और न तुम्हारी मित्रता का कभी अपलाप करते हैं।

अस्तुश्रौषळित्येकादशर्चंपष्ठंसूक्तम् अत्रानुक्रमणिका अस्तुश्रौषळेकादशवैश्वदेवीमैत्रावरुण्याश्विन्यस्तिस्रऐन्द्र्याग्नेयीमारुत्यैन्द्राग्नीबार्हस्पत्यावैश्वदेव्यंत्यात्रिष्टुप् पंचमीबृहती वैश्वदेवमेतदेवमन्यासामपिसूक्तप्रयोगेवैश्वदेवत्वं सूक्तभेदप्रयोगेयल्लिंगंसादेवतेति परुच्छेपऋषिः अन्त्यात्रिष्टुप् पंचमीबृहती अन्याअत्यष्टयः विशेषाभावात्कृत्स्नंसूक्तंवैश्वदेवं तत्रआद्यायाविश्वेदेवादेवता द्वितीयायामित्रावरुणौ अथतिस्रोऽश्विदेवताकाः ऐन्द्रीषष्ठी सप्तम्याग्नेयी अष्टमीमारुतीनवमीऐन्द्राग्नीदशमीबार्हस्पत्या एकादशीवैश्वदेवी सूक्तविनियोगोलैङ्गिकः दशरात्रस्यषष्ठेहनिप्रउगशस्त्रेआद्या वैश्वदेवतृचेप्रथमा षष्ठस्येतिखण्डेसूत्रितम्—अस्तुश्रौषळोपूणोअग्नइति।

सैषासूक्तेप्रथमा—

अस्तु॒श्रौष॑ट्पु॒रोअ॒ग्निंधि॒याद॑ध॒आनु॒तच्छर्धो॑दि॒व्यं॑वृणीमह

इन्द्रवा॒यूवृ॑णीमहे। यद्ध॑क्रा॒णावि॒वस्व॑ति॒नाभा॑सं॒दायि॒नव्य॑सी।

अध॒प्रसून॒उप॑यन्तुधी॒तयो॑दे॒वाँअच्छा॒नधी॒तयः॑॥ १ ॥

अस्तु॑। श्रौष॑ट्। पु॒रः। अ॒ग्निम्। धि॒या। द॒धे। आ। नु। तत्।

शर्धः॑। दि॒व्यम्। वृ॒णी॒म॒हे॒। इ॒न्द्र॒वा॒यू इति॑। वृ॒णी॒म॒हे॒। यत्। ह॒।

क्रा॒णा। वि॒वस्व॑ति। नाभा॑। स॒म्ऽदायि॑। नव्य॑सी। अध॑। प्र।

सु। नः॒। उप॑। य॒न्तु॒। धी॒तयः॑। दे॒वान्। अच्छ॑। न। धी॒तयः॑॥१॥

अहं पुरः पुरतः उत्तरवेद्यां अग्निं आहवनीयाख्यं धिया प्रज्ञयाप्रणयनादिकर्मणादधे धारितवानस्मि तच्छर्धः तादृशंबलवंतंवायुं यद्वा तच्छर्धः तादृशं मरुतां स्वरूपं बलंदिव्यं दिविभवं

नु क्षिप्रं आवृणीमहे आभिमुख्येन संभजामहे किंच इन्द्रवायू वृणीमहे यद्यस्मात्कारणात् विवस्वति दीप्तिमति नाभानाभौ भूम्यानाभिस्थाने देवयजनेवेदिरूपे यद्वा नाभौ सर्वफलस्यसंबन्धके यज्ञे यज्ञमाहुर्भुवनस्यनाभिमितिश्रुतेः। ऋाणा कुर्वाणा स्वार्थप्रकाशनं नव्यसीनवतरा स्तुतिरूपावाक्संदायि संबध्यते छान्दसःकर्मणिलुङ् अस्माभिःप्रयुज्यतइत्यर्थः यस्मात्स्तुतिःक्रियते तस्मात् अस्तुश्रौषट् अस्याः स्तुतेःश्रवणंभवतु श्रोताभवतुवामरुतांगणोग्निर्वा इन्द्रवायुपक्षे प्रत्येकापेक्षयैकवचनं अधअनन्तरंनोधीतयः अस्मदीयानिकर्माणिस्तुत्यादिरूपाणि प्रसूयन्तु प्रकर्षेणसुष्ठु युष्मानुपगच्छन्तु किंच देवाँअच्छान अग्न्यादिदेवान् आभिमुख्येन प्राप्तुमिवधीतयः अस्मदीयानि कर्माणि उपयन्तु तेषांसमीपंप्राप्नुवन्तु ॥ १ ॥

१. मैंने भक्ति के साथ, सामने अग्नि की स्थापना की है। अग्नि की स्वर्गीय शक्ति की मैं प्रशंसा करता हूँ। इन्द्र और वायु की प्रशंसा करता हूँ। चूँकि पृथिवी की दीप्तिमान् नाभि या यज्ञ-स्थान को लक्ष्य कर नई अर्थकरी स्तुति बनाई गई है, इसलिए अग्नि उसे सुनें। पश्चात् जैसे हमारे क्रिया-कर्म अन्यान्य देवों के पास जाते हैं, वैसे ही इन्द्र और वायु के पास भी जायँ।

यद्ध त्यन्मित्रावरुणावृतादध्याददाथे अनृतं स्वेन मन्युना दक्षस्य स्वेन मन्युना।
युवोरित्थाधि सद्मस्वपश्याम हिरण्ययम्।
धीभिश्चन मनसा स्वेभिरक्षभिः सोमस्य स्वेभिरक्षभिः ॥२॥

यत्। ह। त्यत्। मित्रावरुणौ। ऋतात्। अधि। आददाथे इत्याऽददाथे। अनृतम्। स्वेन। मन्युना। दक्षस्य। स्वेन। मन्युना। युवोः। इत्था। अधि। सद्मऽसु। अपश्याम। हिरण्ययम्। धीभिः। चन। मनसा। स्वेभिः। अक्षऽभिः। सोमस्य। स्वेभिः। अक्षऽभिः ॥ २ ॥

हेमित्रावरुणौऋताव् आदित्याव् त्यव् तदुदकंयद्यस्मात्कारणाव् अधिअधिकंआददाथे सर्वतोददथः हमसिद्धं कीदृशमुदकंअनृतंनश्वरंशोषणस्वभावं केनसाधनेनस्वेनमन्युना स्वकीयेनतेजसा अहोरात्राभिमानिदेवौमित्रावरुणौखलुवृष्टिं मोचयतः अहोरात्रेवाइत्यादिश्रुतिःपूर्वमेवोदाहृता मन्युर्विशेष्यते दक्षस्यसमर्थस्य स्वेनमन्युनाआत्मभूतेन मननीयेनसामर्थ्येन किंच हेमित्रावरुणौ युवोः अन्त्यलोपश्छान्दसः युवयोः संबन्धिनं हिरण्ययंहिरण्मयंरूपं ऋत्व्यवास्त्व्यवास्त्वेत्यादौमयटोमशब्दलोपोनिपात्यते इत्था इत्थंवक्ष्यमाणप्रकारेण सद्मसुयज्ञसदनेषु अधि अपश्याम पश्येम केनसाधनेनेतितदुच्यते—धीभिः तदुद्देश्यैःकर्मभिर्यज्ञादिरूपैर्मनसाचनत्व-

दासक्तेनचेतसाच स्वेभिरक्षभिः आत्मीयैरनन्यैश्चक्षुरादीन्द्रियैः किंच सोमस्यसोमंस्वेभिरक्षभिः अस्मदीयैरिन्द्रियैः पश्येमेतिशेषः नासाद्यपेक्षयाबहुवचनम् ॥ २ ॥

२. कर्म-कुशल मित्र और वरुण, अपनी शक्ति-द्वारा सूर्य के पास से जो विनाशी जल पाते हो, वह हमें यथेष्ट परिमाण में देते हो; इसलिए हम क्रिया, कर्म, ज्ञान और सोमरस में आसक्त इन्द्रियों की सहायता से, यज्ञशाला में, तुम लोगों का ज्योतिर्मय रूप देखें।

पृष्ठ्यस्यषष्ठेहनिप्रउगशस्त्रे युवांस्तोमेभिरित्याश्विनस्तृचः षष्ठस्येतिखण्डेसूत्रितम्—युवांस्तोमेभिर्देवयन्तोअश्विनावर्महइन्द्रेति ।

सैषातृतीया—

युवांस्तोमेभिर्देवयन्तोअश्विनाश्रावयन्तइवश्लोकमायवोयुवां हव्याभ्यइयवः । युवोर्विश्वाअधिश्रियःपृक्षश्चविश्ववेदसा । प्रुषायन्तेवांपवयोहिरण्ययेरथेदस्राहिरण्यये ॥ ३ ॥

युवाम् । स्तोमेभिः । देवयन्तः । अश्विना । आश्रवयन्तःऽइव । श्लोकम् । आयवः । युवाम् । हव्या । अभि । आयवः । युवोः । विश्वाः । अधि । श्रियः । पृक्षः । च । विश्वऽवेदसा । प्रुषायन्ते । वाम् । पवयः । हिरण्यये । रथे । दस्रा । हिरण्यये ॥ ३ ॥

हेअश्विना अश्विदेवौ युवांस्तोमेभिःस्तोत्रैः देवयन्तः युवामात्मनइच्छन्तः आयवः मनुष्यनामैतत् यजमानाः श्लोकंयुष्मदीयस्तुतिरूपांवाचं आश्रावयन्तइव सर्वतःश्रवणविषयांकुर्वन्तइव स्तुवन्ति श्लोकइतिवाङ्नाम श्लोकः धाराइतितन्नामसूक्तत्वात् कीदृशास्ते युवांहव्याहविषाआज्यादिना अभ्यायवः आभिमुख्येनगंतारः प्रीणयितुमितिशेषः हवींषि आभिमुख्येनमापयन्तोवा किंच हेविश्ववेदसा सर्वधनौ युवोर्युवयोः संबन्धिन्योविश्वाःश्रियः सेवनीयाः सर्वालक्ष्मीः धनकनकादिरूपाः अधिअधिकंभजन्तइतिशेषः किंच पृक्षश्च अन्नमपि युष्मत्प्रसादादधि अधिकंलभन्ते किंच हेदस्रा शत्रूणामुपक्षपयितारौ वां हिरण्ययेरथेहिरण्मयेमधुपूर्णे रथे पवयस्तन्नेमयः प्रुषायन्ते क्षरन्ति स्रवन्ति प्रुषप्लुषस्नेहनसेचनपूरणेषु छन्दसिशायजपीत्यहावपिश्नःशायजादेशः मधुपूर्णपात्रोपेतत्वाच्छीघ्रगमनेनचक्रेषु मधूनिस्रवन्तीतिभावः पवीरथनेमिर्भवतियद्विपुनातिभूमिमितिनिरुक्तं । अश्विनोरथस्यमधुपूर्णत्वं त्रयःपवयोमधुवाहनेर-

---

१ नि ५. ५. ।

थइत्यादिषुप्रसिद्धम् किंच तादृशे हिरण्ययेंहिरण्मयेहृदयरमणेरथेंमधुरं हविर्वहतमितिशेषः ॥ ३ ॥ ३. अश्विनीकुमारो, स्तुति-द्वारा तुम्हें अपना देवता बनाने की इच्छा से यजमान लोग श्लोक सुनाते तथा हव्य लेकर तुम्हारे सामने जाते हैं। सर्वधन-सम्पन्न अश्विद्वय, वे लोग तुम्हारी कृपा से सब तरह के धनधान्य और अन्न प्राप्त करते हैं। तुम्हारे सोने के रथ की नेमियां मधु गिराती हैं। उसी रथ पर हव्य ग्रहण करो।

अचेतिदस्राव्यू१नाकमृण्वथोयुञ्जतेवांरथयुजोदिविष्टिष्वध्व स्मानोदिविष्टिषु। अधिवांस्थामवन्धुरेरथेदस्राहिरण्यये। पथेवयन्तावनुशासतारजोञ्जसाशासतारजः ॥ ४ ॥

अचेति। दस्रा। वि। ऊम् इति। नाकम्। ऋण्वथः। युञ्जते। वाम्। रथऽयुजः। दिविष्टिषु। अध्वस्मानः। दिविष्टिषु। अधि। वाम्। स्थाम। वन्धुरे। रथे। दस्रा। हिरण्यये। पथाऽइव। यन्तौ। अनुऽशासता। रजः। अञ्जसा। शासता। रजः ॥ ४ ॥

हेदस्रादस्रौअश्विनौ अचेति वक्ष्यमाणंयुष्मच्चेष्टितंज्ञायतेसर्वैः किंतदितितदुच्यते—नाकं स्वर्गं व्यृण्वथोविशेषेणगच्छथः ऋणुगतौ तानादिकः लेटचडागमः यज्ञसंपूर्त्यनन्तरमितियावत् उशब्दोवधारणे यद्वा नाकं अकंदुःखंतद्रहितंयज्ञमृण्वथः विशेषेणगच्छथएव तदर्थंवां रथयुजः युष्मत्संबन्धिनोरथस्ययोजयितारः सारथयः दिविष्टिषु स्वर्गस्यएषणेषु द्योतनात्मकस्य यज्ञस्यैषणेषु गमनेषुवा निमित्तभूतेषुयुंजते अश्वान्योजयन्ति रथे युक्तेरथेवायुष्मान्तएवविशेष्यन्ते दिविष्टिषु दिवोगमनेषुनिरालंबआकाशगमनेषु अध्वस्मानः रथस्य तदाश्रितस्यचध्वंसमकुर्वाणाः किंच हेदस्राअश्विनौ वांयुवयोः वंधुरे वंधुरत्रययुक्ते युगबन्धनाधारःकाष्ठविशेषोबन्धुरंतादृशत्रययुक्तत्वं रथोयोवांत्रिवंधुरइत्यादिषुप्रसिद्धं। हिरण्ययेहिरण्मयेरथे अधि तादृशस्यरथस्योपरि स्थामअस्थापयाम छान्दसेलङि बहुलंछन्दसीत्यडभावः आद्युदात्तश्छान्दसः कीदृशौ पथेवसुपथेनेवमार्गेण निरालंबआकाशे रजः रंजनात्मकं स्वर्गंप्रतियंतौगच्छन्तौ लोकारजांस्युच्यन्तइत्युक्तत्वात्। अनुशासता अननुकूलान्शत्रून् अनुशासतौ विधेयीकुर्वन्तौ शासेः शतरिजक्षित्यादयइत्यभ्यस्तत्वादभ्यस्तानामादिरित्याद्युदात्तत्वं किंच अंजसामुख्यत्वेन प्रकृष्टंरजः उदकं वृष्टिलक्षणंशासता शासतौ बलाद्विधेयीकुर्वन्तौ ॥ ४ ॥

४. दस्रद्वय, तुम्हारे मन की बात सब जानते हैं। तुम स्वर्ग में जाना चाहते हो। तुम्हारे सारथि लोग स्वर्ग-पथ में रथ योजित करते हैं। निरालम्ब होते हुए भी अश्वगण रथ को नष्ट नहीं करते। अश्विद्वय, बन्धुर या बन्धनाधारभूत वस्तु से युक्त हिरण्मय रथ पर हम तुम्हें बैठाते हैं। तुम लोग सरल मार्ग से स्वर्ग को जाते हो। तुम लोग शत्रुओं को परास्त करते और विशेषरूप से वृष्टि की व्यवस्था करते हो।

अथपंचमी–

शचींभिर्नःशचीवसूदिवानक्तंदशस्यतम् ।
मावांरातिरुपदसत्कदाचनास्मद्रातिःकदाचन ॥ ५ ॥ ३ ॥

शचींभिः । नः । शचीवसू इति शचीऽवसू । दिवा । नक्तम् ।
दशस्यतम् । मा । वाम् । रातिः । उप । दसत् । कदा ।
चन । अस्मत् । रातिः । कदा । चन ॥ ५ ॥ ३ ॥

हेशचीवसू शचीतिकर्मनामअस्मदनुष्ठितज्योतिष्टोमादिकर्मधनौ युवांशचीभिः अस्मदीयैः कर्मभिर्यागादिभिर्निमित्तभूतैः दिवानक्तं अहनिरात्रौच दशस्यतं अभिमतंददेथां दाशृदाने इत्यस्येदंछान्दसंरूपं यद्वा दशस्यतिर्दानार्थः कंड्वादिषुद्रष्टव्यः वांयुवयोः रातिर्दानंकदाचन सर्वदायागकालेअयागकालेपि मोपदसत् मोपक्षीणंभूत् दसुउपक्षये लुङिपुषादिद्युतादीतिच्लेरङ् नकेवलंयुष्मदीयं अपितु अस्मत् अस्माकमपि रातिर्दानं हविरादिप्रदानंसर्वविषयंदानं वार्थिभ्यः कदाचन सर्वावस्थायामपि मोपदसत् उपक्षीणंमाभूत् सर्वदावर्ततां अहमपिसर्वदायुष्मानुद्दिश्यदद्यां युवामपि मदभिमतंसर्वदादत्तमित्यर्थः ॥ ५ ॥

५. हमारे क्रिया-कर्म ही तुम्हारा धन हैं। हमारे क्रिया-कर्म के लिए दिन-रात अभीष्ट प्रदान करो। न तो तुम्हारा दान बन्द हो और न हमारा।

॥ इतिद्वितीयस्यद्वितीयेतृतीयोवर्गः ॥ ३ ॥

पृष्ठ्यस्यषष्ठेहनिप्रउगशस्त्रस्यैन्द्रेतृचे तृतीयावृषन्निन्द्रेत्येषा सूत्रितंच–वृषन्निन्द्रवृषपाणासइन्दवःसुषुमायातमद्रिभिरिति तत्रैवसवनेप्रस्थितयाज्यानांपुरस्तात् अन्याऋचः प्रक्षिप्योभयीभिर्यष्टव्यं तत्रहोतुःप्रस्थितयाज्यायाःपुरस्तात् एषाप्रक्षेपणीया सूत्रितंच–षष्ठस्यप्रातःसवने प्रस्थितयाज्यानांपुरस्तादन्याःकृत्वोभाभ्यामनवानन्तोयजन्तीति ।

सैषासूक्तेषष्ठी–

वृषन्निन्द्रवृषपाणासइन्दवइमेसुताअद्रिषुतासउद्भिदस्तुभ्यंसुतासउद्भिदः । तेत्वांमन्दन्तुदावनेमहेचित्रायराधसे ।
गीर्भिर्गिर्वाहःस्तवमानआगहिसुमृळीकोनआगहि ॥ ६ ॥

वृषन् । इन्द्र । वृषऽपानासः । इन्दवः । इमे । सुताः । अद्रिऽसुतासः ।
उत्ऽभिदः । तुभ्यम् । सुतासः । उत्ऽभिदः । ते । त्वा । मन्दन्तु ।
दावने । महे । चित्राय । राधसे । गीःऽभिः । गिर्वाहः । स्तवमानः ।
आ । गहि । सुऽमृळीकः । नः । आ । गहि ॥ ६ ॥

हेइन्द्र वृषन् वर्षितःकामानां इमेपुरतोदृश्यमानाइन्दवःसोमाः सुताः त्वदर्थमभिषुताः कीदृशास्तेवृषपानासः अभिमतवर्षकेणत्वयापातव्याः अद्रिसुतासः अद्रिभिर्दृढैः पाषाणैः अभिषवसाधनैः सुताः उद्भिदः उद्भेदकाः वर्षस्य तएवपुनर्विशेष्यन्ते उद्भिदः बलस्योद्भेदकाः उद्भिन्नावापर्वतादौ तादृशाः सोमाः तुभ्यंसुतासः त्वदर्थमेवाभिषुताः किंच तेतादृशाः सोमाः त्वा-त्वांमन्दन्तु तर्पयन्तु कुत्रेतितदुच्यते—दावनेदानवतियागे अभिमतदानायवा तथामहे महते चित्रायचायमानाय विचित्रायनानाविधायवा राधसे धनाय किंच हेगिर्वाहः गिरांस्तुतीनांअस्मदीयानांवोढः वहिहाधाञ्भ्यइत्यसुन् गीर्भिः अस्मत्स्तुतिभिः स्तवमानःसन् आगहि आगच्छ नोस्मान्सुमृळीकः सुष्ठुमृडयितासन् आगहिआगच्छ ॥ ६ ॥

६. अभीष्ट-वर्षक इन्द्र, अभीष्ट-वर्षी के पान के लिए यह सोम अभिषुत हुआ है। यह प्रस्तर-खण्ड द्वारा अभिषुत हुआ है। सोम पर्वत पर उत्पन्न हुआ है। वह तुम्हारे लिए अभिषुत हुआ है। विविध विचित्र लाभों के लिए यथास्थान प्रवृत्त सोम तुम्हारी तृप्ति का साधन करे। स्तुति-योग्य, हम तुम्हारी स्तुति करते हैं। आओ, हमारे ऊपर प्रसन्न होकर आओ।

दशरात्रस्यषष्ठेहनिप्रातःसवनेनेष्टुःप्रस्थितयाज्यायाःपुरस्तादोषूणोअग्नइत्येषावपनीयाएकीकृत्योभाभ्यांयागः षष्ठस्येतिखण्डेसूत्रितं—ओषूणोअग्नेश्रृणुहित्वमीळितोग्निंहोतारमिति तस्मिन्नेवसवने प्रउगशस्त्रेद्वितीया सूत्रितंच—अस्तुश्रौषळोषूणोअग्नइति।

**ओषूणोअग्नेश्रृणुहित्वमीळितोदेवेभ्योब्रवसियज्ञियेभ्यो राजभ्योयज्ञियेभ्यः। यद्धत्यामङ्गिरोभ्योधेनुंदेवाअदत्तन। वितांदुह्रेअर्यमाकर्तरीसचाँएषतांवेदमेसचा ॥ ७ ॥**

ओ इति । सु । नः । अग्ने । श्रृणुहि । त्वम् । ईळितः । देवेभ्यः ।
ब्रवसि । यज्ञियेभ्यः । राजऽभ्यः । यज्ञियेभ्यः । यत् । ह । त्याम् ।
अङ्गिरःऽभ्यः । धेनुम् । देवाः । अदत्तन । वि । ताम् । दुह्रे ।
अर्यमा । कर्तरि । सचा । एषः । ताम् । वेद । मे । सचा ॥ ७ ॥

हेअग्ने त्वंनोऽस्मदीयं आवाहनं स्तुतिंवा ईळितः अस्माभिः स्तुतःसन् ओषुश्रृणुहि ओइति निपातद्वयसमुदायात्मकएकोनिपातःआभिमुख्येनैवसुष्ठुश्रृणु उतश्चप्रत्ययादितिछन्दसिवावचन-मितिहेर्लुगभावः श्रुत्वाचदेवेभ्योदेवनशीलेभ्योयज्ञियेभ्योयज्ञार्हेभ्यः हविर्भाग्भ्यः स्तुतिभाग्भ्य-श्चेत्यर्थः यज्ञार्त्विग्भ्यामितिघः तेभ्यः यज्ञियेभ्योयज्ञार्हेभ्योयजमानेभ्यः संबन्धिकर्मब्रवसब्रूहि ब्रवीतेर्लेटघ्यडागमः कीदृशेभ्यः राजभ्योराजमानेभ्यः इदानींदेवाः प्रत्यक्षेणोच्यन्ते अत्रेतिहा-समाहुः—अङ्गिरसोनाममहर्षयः पूर्वंयज्ञार्थंदेवान् स्तुत्याप्रीणयित्वागाः अयाचन्त तेप्रीताः कामदु-घांप्रादुः लब्ध्वाचतांधेनुंक्षीरंदोग्धुमशक्नुवानाः अर्यमणंदेवंप्रार्थयन् सचप्रार्थितोऽग्निहोत्राद्यर्थं क्षीरंदुदोहेति तदिदमत्रोच्यते—यत् यां त्यां तां हप्रसिद्धां धेनुंक्षीरादिनाप्रीणयित्रींगांहेदेवाः अं-गिरोभ्यः तदर्थंअदत्तन दत्तवन्तः तप्तनप्तनथनाश्चेतितनादेशः तांधेनुंअर्यमासर्वस्यनियमितादेवः कर्तरिसर्वस्योत्पादकेत्वय्यग्नौसचाइतरदेवेभ्यःसाकं विदुह्रे विविधंदुग्धवान् दुहेर्लिटिबहुलंछ-न्दसीतिरुट् छन्दसिवेतिवचनाद्द्विर्वचनाभावः लटचेववालोपस्तइतितलोपः एषः एषवार्य-मा तांधेनुंमेसचामत्समवायेनवेदजानाति अर्यमाहमपिजानामीत्यर्थः ईदृशीधेनुस्त्वदर्थमेवदुग्ध-तइत्यग्नेःस्तुतिः ॥ ७ ॥

७. अग्नि, हम तुम्हारी स्तुति करते हैं। हमारी स्तुति सुनो। दीप्यमान और यज्ञ-योग्य देवों के पास यजमान की बात कहना; क्योंकि देवों ने अङ्गिरा लोगों को प्रसिद्ध धेनु दी थी। अर्यमा देवों के साथ, सर्वोत्पादक अग्नि के लिए, उस धेनु का दोहन करते हैं और वह जानते हैं कि, वह धेनु हमारे साथ सम्वेत है।

मोषुवोअस्मदितिप्रस्थितयाज्या सूत्रितंच—मोषुवोअस्मदभितानिपौंस्यौषूणोअग्नइति।

मोषुवो॑अ॒स्मद॒भितानि॒पौंस्या॒सना॑भूवंद्यु॒म्नानि॒मोतजा॑रिषु॒रस्म
त्पु॒रोतजा॑रिषुः। यद्व॑श्चि॒त्रंयु॒गेयु॑गे॒नव्यं॒घोषा॒दम॑र्त्यम्।
अ॒स्मासु॒तन्म॑रुतो॒यच्च॑दु॒ष्टरं॑दिधृ॒तायच्च॑दु॒ष्टर॑म् ॥ ८ ॥

मो इति। सु। वः॒। अ॒स्मत्। अ॒भि। तानि॑। पौंस्या॑। सना॑। भू॒व॒न्। द्यु॒म्नानि॑। मा। उ॒त। जा॒रि॒षुः॒। अ॒स्मत्। पु॒रा। उ॒त। जा॒रि॒षुः॒। यत्। वः॒। चि॒त्रम्। यु॒गेऽयु॑गे। नव्य॑म्। घोषा॑त्। अम॑र्त्यम्। अ॒स्मासु॑। तत्। म॒रु॒तः॒। यत्। च॒। दु॒स्तर॑म्। दि॒धृ॒त। यत्। च॒। दु॒स्तर॑म् ॥ ८ ॥

हेमरुतःवः युष्मत्संबन्धीनितानि प्रसिद्धानि पौंस्यापौंस्यानिबलानि सनासदातनानि नित्यानि द्युम्नानि प्रकाशयुक्तानि यद्वा सना संभजनीयानि द्युम्नानि धनवन्ति यशोवन्तिवा मत्वर्थीयोलु-

प्यते मोइति निपातद्वयसमुदायः उशब्दोवधारणे अस्मत् अस्मात् मोष्वभिभूवन् सुष्ठुमैवाभिभवन् यद्वा अस्मत्तोपगतानि माभूवन् उत अपिच यद्वा द्युम्नानीत्येतदुत्तरत्रसंबध्यते द्युम्नानि धनानि यशांसिवाअस्मदीयानि माजारिषुः क्षीणानिमाभूवन् उत अपिचअस्मत्पुरापुराणिलक्षणयातत्रस्थाप्राणिनोमाजारिषुः जीर्णानष्टामाभूवन् किंच वोयुष्मत्संबन्धि चित्रं चायनीयंनानाविधंनव्यं नूतनं स्तोतव्यंवा अमर्त्यं अमरणधर्मकं मर्त्येषुदुर्लभं वा यदस्तिघोषात् घोषाः व्यत्ययेनपंचमी शब्दोपेतागवादयः घोषोपलक्षिताग्रामनगरादयोवायेसन्ति तत्सर्वं युगेयुगे युगशब्दोपलक्षिते तत्तत्काले अस्मासु अस्मास्वेवभवत्विविशेषः नान्यस्य किंच हेमरुतः यच्चदुस्तरं दुःखेनतरणीयं संपादनीयं धनं दिधृत धारयत तदस्मासु किंच दुस्तरं शत्रुभिराहिंसितं तत्सर्वमपि विशेषेणास्मासु स्थापयत ॥ ८॥

८. हे मरुतो, तुम्हारा नित्य और प्रसिद्ध बल हमें पराभूत न करे। हमारा धन कम न हो। हमारा नगर क्षीण न हो। तुम्हारा जो कुछ नूतन, विचित्र, मनुष्य-दुर्लभ और शब्द करनेवाला है, वह युग-युग में हमारा हो। जो धन शत्रु लोग नष्ट नहीं कर सकते, वह हमारा हो। तुम जो दुर्लभ धन को धारण करते हो, वह हमारा हो। जिस धन को शत्रु नहीं नष्ट कर पाते, वह हमारा ही हो।

पृष्ठ्यस्यषष्ठेहनि अच्छावाकस्यप्रस्थितयाज्यायाः पुरस्ताद्दध्यङ्हमइत्येषा सूत्रितंच—दध्यङ्हमेजनुषंपूर्वोअङ्गिराएवमेवमाध्यन्दिनइति।

सैषानवमी—

दध्यङ्हमेजनुषंपूर्वोअङ्गिराःप्रियमेधःकण्वोअत्रिर्मनुर्विदुस्तेमेपूर्वेमनुर्विदुः। तेषांदेवेष्वायतिरस्माकंतेषुनाभयः। तेषांपदेनमह्यानमेगिरेन्द्राग्नीआनमेगिरा ॥ ९ ॥

दध्यङ्। ह। मे। जनुषम्। पूर्वः। अङ्गिराः। प्रियऽमेधः। कण्वः। अत्रिः। मनुः। विदुः। ते। मे। पूर्वे। मनुः। विदुः। तेषाम्। देवेषु। आऽयतिः। अस्माकम्। तेषु। नाभयः। तेषाम्। पदेन। महि। आ। नमे। गिरा। इन्द्राग्नी इति। आ नमे। गिरा ॥९॥

दध्यङ्अथर्वगोत्रोत्पन्नएतन्नामकोमहर्षिः सचपूर्वःपूरकः सर्वस्यपुरातनोवाअङ्गिराः अङ्गारः तद्वत्तेजस्वीइत्यर्थः यद्वा अंगाराएवांगिरसोभवन् येऽङ्गाराआसंस्तेऽङ्गिरसोभवन्निति[1]श्रुतेः। अङ्गिराअङ्गाराअङ्कनाअञ्चनाइतिनिरुक्तम्[2]। एतन्नामामहर्षिश्चप्रियमेधः मेधाप्रियः प्रियमेधः

१ ऐ० ब्रा० ३. ३४.। २ नि० ३. १७.।

प्रियाअस्यमेधाइतियास्कः। कण्वःमेधावी सच अत्रिः दुःखत्रयरहितः अत्रिर्नत्रयइतिनिरुक्तम्। मनुः मननवान् एतन्नामामहर्षिः एतेसर्वेमहात्मानोमहर्षयःमेजनुषं दिवोदासपुत्रस्यपरुच्छेपस्य जन्मविदुःजानन्ति वेत्तेर्विदोल्टोवेतिझेरुसादेशः किंच तेपूर्वोक्ताः पूर्वेपूर्वकालीनाः मेअस्मत्पित्रादीन्जानन्तइत्यर्थः मनुःमनवःज्ञानवन्तः यतस्तेपूर्वेमनवश्च अतोविदुरितिभावः सुपांसुलुगितिजसोलुक् तेषांज्ञानेउपपत्तिमाह—तेषांदध्यङ्ङादीनांदेवेषुइतरेषुदेवनशीलेषुमहर्षिषु मध्ये आयतिः दीर्घकालसंबन्धोस्तिअतोविदुरित्यर्थः ततश्चकिमित्याह—अस्माकंनाभयःजीवेनसहसंबन्धवन्तःप्राणाः फलेनसहसंबद्धायागावः तेषुतेष्वेववर्तन्ते असौविशिष्टजन्मा वोयज्ञयोग्यइति तैर्वक्तव्यत्वेनतदधीनत्वं तेषांदध्यङ्ङादीनांपदेनआस्पदेनमहत्त्वेननिमित्तेनगिरास्तुतिरूपयावाचामहिमहत्अत्यधिकंआनमे नमामि सर्वोजनः किंच तेषामनुग्रहात् यज्ञयोग्यःसन् इन्द्राग्नी गिरास्तुतिरूपयावाचायुक्तःसन्नानमे आभिमुख्येननमामिस्तौमिनमामिचेत्यर्थः नमेर्व्यत्ययेनात्मनेपदं यद्वा कर्मकर्तरिनदुहस्नुनमामितियक्प्रतिषेधः स्वयमेवनतोऽस्मि हपूरणः ॥ ९ ॥

९. प्राचीन दधीचि, अङ्गिरा, प्रियमेध कण्व, अत्रि और मनु मेरे जन्म की बात जानते हैं। ये पूर्व काल के ऋषि और मनु मेरे पूर्व-पुरुषों को जानते हैं; क्योंकि, महर्षियों में वे दीर्घायु हैं और मेरे जीवन के साथ उनका सम्बन्ध है। वे महान् हैं; इसलिए उनकी स्तुति तथा नमस्कार करता हूँ।

होतायक्षद्वनिनोवन्तवार्यंबृहस्पतिर्यजतिवेनउक्षभिःपुरुवारेभिरुक्षभिः।
जगृभ्माद्रूरआदिशंश्लोकमद्रेरधत्मना।
अधारयदररिन्दानिसुक्रतुःपुरूसद्मानिसुक्रतुः ॥ १० ॥

होता। यक्षत्। वनिनः। वन्त। वार्यम्। बृहस्पतिः। यजति।
वेनः। उक्षऽभिः। पुरुऽवारेभिः। उक्षऽभिः। जगृभ्म।
दूरेऽआदिशम्। श्लोकम्। अद्रेः। अध। त्मना। अधारयत्।
अररिन्दानि। सुऽक्रतुः। पुरु। सद्मानि। सुऽक्रतुः ॥ १० ॥

अयंहोतादैव्योग्निर्मानुषोवादेवानामाह्वातायक्षत् याज्यांपठतु यजेर्लेट्यडागमः सिब्बहुलमितिसिप् वनिनोवननवन्तः हविःकामयमानावा देवावार्यंवरणीयंसोमं वन्त भजन्तां वनतेश्छान्दसेलङिव्यत्ययेनात्मनेपदं बहुलंछन्दसीतिशपोलुक् छान्दसोऽत्यलोपः तदर्थंबृहस्पतिः बृहतोमन्त्रस्यहविषोवापालकोऽध्वर्युः दैव्योबृहस्पतिर्वास्वयमेवयजति यागंकरोति कीदृशःसःवेनः

१ नि०३.१७। २ नि० ३.१७।

कामयमानः केनसाधनेनेतितदुच्यते—उक्षभिः सेचकैः सोमैः पुरुवारेभिः बहुभिर्वरणीयैः तथा-उक्षभिः सेचनसमर्थैरुदकैः तन्निमित्तभूतैर्हूयमानैराहुतिभिरादित्यद्वारा वृष्ट्युत्पन्नैः वयं यजमानाः दूरे आदिशं दूरदेशे आदिगादेशोयस्य तादृशं हलदन्तात्सप्तम्याइत्यलुक् अद्रेः जातावेकवचनं अभिषवसाधनस्यग्राव्णः श्लोकंवाचं ध्वनिंजगृम्भ गृह्णीमःश्रोत्राभ्यां पूजार्थंबहुवचनं इदानींपरोक्षकृतः सुक्रतुः शोभनकर्माअयं यजमानः अधअथयागसंपूर्त्यनन्तरं अररिंदानि उदकनामैतत् अररिंदानिध्वस्मन्वदितितन्नामसुपाठात् वृष्टिलक्षणान्युदकानि त्मनाआत्मनाअधारयत् धारयति ररिंदाता नास्तिअन्योररिरस्यपिपासोपशमनस्य तादृशंपिपासोपशमनं ददतीत्यररिन्दानि यद्वा अररिः इतश्चेतश्चगमनं औणादिकोअरिप्रत्ययः आतोनुपसर्गेकः पृषोदरादित्वादभिमतरूपस्वरसिद्धिः तद्ददतीतिअररिन्दान्युदकानि चेष्टाप्रदानीत्यर्थः आपोमयःप्राणइतिश्रुतेः । यद्वा ररिंदानं नविद्यते तादृशंदानमितरभूतेषुतदररि तद्ददतीत्यररिन्दानि अन्यैरदेयंलोकोपकारिभोगंददतीत्यर्थः तादृशान्युदकानि यागेनोत्पादितवानित्यर्थः किंच सुक्रतुः शोभनकर्मायंपुरुपुरूणि बहूनि सद्मानि सदनानिसुखनिवासयोग्यानिगृहाणिअधारयत् यद्वा बृहस्पतिः सुक्रतुश्चायमध्वर्युः अररिंदान्युक्तलक्षणानिअभिषवसाधनान्युदकानि अधारयत् धारितवान् तथा सुक्रतुः शोभनप्रज्ञः पुरुसद्मानि सदनानि हविरासादनान्यधारयत्॥१०॥

१०. होता लोग यज्ञ करें, हव्य की इच्छा करनेवाले देवता रमणीय सोम ग्रहण करें। स्वयं इच्छा करके बृहस्पति प्रभूत और रमणीय सोम-द्वारा योग करते हैं। हमने सुदूर देश में प्रस्तर-खण्ड की ध्वनि सुनी। सुक्रतु यजमान स्वयं जल धारण करते हैं। वह बहु निवास-योग्य घर धारण करते हैं।

दशरात्रेषष्ठेहनिप्रउगशस्त्रेवैश्वदेवतृचस्यद्वितीया येदेवासइत्येषा सूत्रितंच—येदेवासोदिव्येकादशस्थेयमददा[illegible]मिति। सैषैकादशी—

येदे॑वासो॒ दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ ।
अ॒प्सु॒क्षितो॑ मह॒िनैका॑दश॒ स्थ ते दे॑वासो य॒ज्ञमि॒मं जु॑षध्वम् ॥११॥४॥

ये । दे॒वा॒सः॒ । दि॒वि । एका॑दश । स्थ । पृ॒थि॒व्याम् । अधि॑ ।
एका॑दश । स्थ । अ॒प्सु॒ऽक्षितः॑ । म॒हि॒ना । एका॑दश । स्थ ।
ते । दे॒वा॒सः॒ । य॒ज्ञम् । इ॒मम् । जु॒ष॒ध्व॒म् ॥ ११ ॥ ४॥

हेदेवासोदेवाः द्योतनशीलायेयूयंदिविद्युलोकेएकादशस्थ एकंचदशचेत्येतत्संख्याकाः भवथ तथापृथिव्यामधि उपरिएकादशस्थ एतत्संख्याकाभवथ किंच अप्सुक्षितः तद्धेतुत्वाचाच्छब्द्यं अप्स्वंतरिक्षेक्षियन्तिनिवसन्तीत्यप्सुक्षितः क्षियतेःक्विप् तत्पुरुषेकृतीत्यलुक् अन्तरि-

क्षवासिनोदेवाः एकादशस्थत तत्संख्याकाभवथ यद्वा अन्तरिक्षस्येयंसंज्ञा आपः पृथिवीइत्यंतरिक्षनामसुपाठाद् यद्यपितिस्रएवदेवताइत्युक्तत्वात क्षित्याद्यभिमानिन्योदेवतास्तिस्रएव तथापि महिनामहत्त्वेन स्वस्वविभूत्या त्रयस्त्रिंशत्संख्याकाभवन्ति तत्तत्स्थानेअन्यास्तद्विभूतयइत्युक्तत्वाद् महिनादेवासः इत्येतेसर्वत्रसंबध्यन्ते तेयूयं हेदेवासः मिलित्वोक्तसंख्याकादेवाः इममस्मदीयंयज्ञंजुषध्वंसंभजध्वं तत्संबधिहविर्वासेवित्वाप्रीणयध्वं एकंचदशचएकादशप्रागेकादशभ्यइतिनिपातनाद्दीर्घः संख्येतिपूर्वपदप्रकृतिस्वरत्वं ॥ ११ ॥

११. जो देवता स्वर्ग में ११ हैं, पृथिवी के ऊपर ११ हैं---जब अन्तरिक्ष में रहते हैं, तब भी ११ रहते हैं, वे अपनी महिमा से, यज्ञ की सेवा करते हैं ।

॥ इतिद्वितीयस्यद्वितीयेचतुर्थोवर्गः ॥ ४ ॥

॥ इतिप्रथमेमण्डलेविंशोऽनुवाकः ॥ २० ॥

एकविंशेनुवाकेसप्तसूक्तानि तत्रवेदिषदइतिप्रथमंसूक्तंत्रयोदशर्चं उचथ्यपुत्रस्यदीर्घतमसआर्षंआग्नेयं अन्त्येत्रिष्टुभौ शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः दशमीत्रिष्टुप्जगतीवा अत्यष्टिपरिभाषानिवृत्ता अत्रानुक्रमणिका—वेदिषदेसप्तोनादीर्घतमाऔचथ्यआग्नेयंतुद्वित्रिष्टुबन्तंतु त्रिष्टुप्दशमीवेति प्रातरनुवाकस्याग्नेयेक्रतौजागतेछन्दसीदमादीनितृतीयवर्जितानिषट्सूक्तानि विनियुक्तानि तथाआश्विनशस्त्रेषण्णांतृतीयवर्जितानांसूक्तानांविनियोगः सूत्रितंच—वेदिषदइतिषण्णांतृतीयमुद्धरेदिति ।

तत्रेयंप्रथमा—

वे॒दि॒षदे॑प्रि॒यधा॑मायसु॒द्युते॑धा॒सिमि॑व॒प्रभ॑रा॒योनि॑म॒ग्नये॑ ।
वस्त्रे॑णेववासया॒मन्म॑ना॒शुचिं॑ज्यो॒तीर॑थंशु॒क्रव॑र्णंतमो॒हन॑म् ॥ १ ॥

वे॒दि॒ऽसदे॑ । प्रि॒यऽधा॑माय । सु॒ऽद्युते॑ । धा॒सिम्ऽइ॑व । प्र । भ॒र ।
योनि॑म् । अ॒ग्नये॑ । वस्त्रे॑णऽइव । वा॒स॒य॒ । मन्म॑ना । शुचि॑म् ।
ज्यो॒तिःऽर॑थम् । शु॒क्रऽव॑र्णम् । त॒मः॒ऽहन॑म् ॥ १ ॥

हेअध्वर्योवेदिषदे वेद्यांसीदतेनित्यं प्रियधामायप्रियधाम्ने प्रियस्थानाय उत्तरवेदिलक्षणप्रियस्थानाय सुद्युते शोभनद्योतनाय अग्नये अग्रनयनादिगुणविशिष्टाय योनिंस्थानं
२ वेद्याख्यं धासिमिव हवीरूपमन्नमिव प्रभर प्रहर प्रकर्षेणसंपादयेत्यर्थः तच्च स्थानंवस्त्रेणेव

तेनयथामार्दवायास्तृणाति तद्वत् मन्मनामननीयेनसंभारेण बर्हिषावा वेदिस्थानं वासय आच्छा-दय कीदृशंतत्स्थानमितितदुच्ये—शुचिंउत्पवनप्रोक्षणादिना अमेध्यासुरादीनामपगतत्वाच्छुद्ध-म् ज्योतीरथंज्योतिषआज्यादेरग्नेर्वारथस्थानीयं आधारभूतत्वात् शुक्रवर्णंअभ्युपेतत्वात् दीप्तवर्णं अतएव तमोहनं तमसोऽन्धकारस्यहन्तारं अज्ञानस्यवा अग्निसाध्ययज्ञादिद्वाराज्ञानविचारकत्वादितिभावः यद्वा तस्यांयोनौ स्थाने वस्त्रेण यथागोपनीयंवस्तुगोपयन्ति तद्वत् तमग्निं वासय निवासय स्थापय मन्मना मननीयेन हृद्येन वस्त्रसदृशेन मृदुकाष्ठादिना आच्छादयवा कीदृशं ज्योतीरथं दीप्तरथोपेतं शेषंपूर्ववत् ॥ १ ॥

१. अध्वर्यु, वेदी पर बैठे हुए, अपने प्रिय धाम उत्तर वेदी पर, प्रीति-सम्पन्न और प्रकाशशील अग्नि के लिए तुम अन्नवान् स्थान या वेदी तैयार करो। उस पवित्र ज्योति से संयुक्त, दीप्त-वर्ण और अन्धकार-विनाशी स्थान के ऊपर, वस्त्र की तरह, मनोहर कुश को बिछाओ।

अ॒भि द्वि॒जन्मा॑ त्रि॒वृदन्न॑मृज्यते संवत्स॒रे वा॑वृधे ज॒ग्धमी॒ पुनः॑।
अ॒न्यस्या॒सा जि॒ह्वया॒ जेन्यो॒ वृषा॒न्य१॒॑न्येन॑ व॒निनो॑ मृष्ट वार॒णः ॥२॥

अ॒भि। द्वि॒ऽजन्मा॑। त्रि॒ऽवृत्। अन्न॑म्। ऋ॒ज्य॒ते॒। सं॒व॒त्स॒रे।
व॒वृ॒धे॒। ज॒ग्धम्। ई॒मिति॑। पुन॒रिति॑ अ॒न्यस्य॑। आ॒सा। जि॒ह्वया॑।
जेन्यः॑। वृषा॑। नि। अ॒न्येन॑। व॒निनः॑। मृ॒ष्ट॒। वा॒र॒णः ॥ २ ॥

द्विजन्मा द्वाभ्यामरणीभ्यांजायमानत्वात् यद्वा मथनेनाधानसंस्कारेणचोत्पन्नत्वात् द्विजन्मत्वं अन्येभ्योऽपिदृश्यन्तइतिमनिन् अयमग्निः त्रिवृदन्नं आज्यपुरोडाशसोमरूपेण त्रिप्रकारमन्नं अदनीयं अभिऋज्यते प्राप्नोति अभितआभिमुख्येननयति भक्षयति ऋजगतिस्थानार्जनोपार्जनेषु व्यत्ययेनश्यन् यद्वा भृज्यते भ्रस्जपाके पक्कंकरोतिवा किंच ईं इदं ईमित्यत्र सांहितिकोमलोपश्छान्दसः जग्धं भक्षितं संवत्सरेपूर्णे पुनर्ववृधे अग्निर्वर्धयति जीर्णस्यपुनर्वृध्यभावात् यजमानं हविर्वृध्याप्रतिसंवत्सरं यागसमर्थं करोतीत्यर्थः यद्वा एकवारं भक्षितं हविः पुनःसंवत्सरेपूर्णेसंवत्सरउदरस्थंवर्धतेवर्धयतिवाभक्षितारं किंचायमग्निर्वृषावर्षकःसन् अन्यस्यहविषः आसा आस्येन जिह्वयागृह्णन् जेन्यःप्रभूतोभवतीतिशेषः यद्वा वर्षितासन् एकेनरूपेण अन्यस्ययज्ञे होत्रादेः जिह्वयातदुपलक्षितयास्रुचाजेन्यःप्रवृद्धोभवति तथाअन्येन दावाग्निरूपेणवारणः सर्वेषांवारकःसन् वनिनोवनसंबन्धिनोवृक्षान् निमृष्ट निमार्ष्टि दहतीत्यर्थः मृजेश्छान्दसेलङिव्यत्ययेनात्मनेपदम् ॥ २ ॥

२. द्विजन्मा या दो काष्ठों के मन्थन-द्वारा उत्पन्न अग्नि आज्य, पुरोडाश और सोम नाम के तीन अन्नों को सम्मुख लाकर खाते हैं। अग्नि के द्वारा भक्षित धन-धान्यादि, संवत्सर के बीच, फिर बढ़

जाते हैं। अभीष्टवर्षी अग्नि, एक ही रूप धारण कर, मुख और जिह्वा की सहायता से बढ़ते हैं। अग्नि दूसरे प्रकार का रूप धारण करके, सबको दूर करके, वन-वृक्षों को जलाते हैं।

कृष्णप्रुतौवेविजेअस्यसक्षिताउभातरेतेअभिमातराशिशुम्।
प्राचाजिह्वंध्वसयन्तंतृषुच्युतमासाच्यंकुपयंवर्धनंपितुः॥ ३॥

कृष्णऽप्रुतौ। वेविजे इति। अस्य। सऽक्षितौ। उभा। तरेते इति। अभि। मातरा। शिशुम्। प्राचाऽजिह्वम्। ध्वसयन्तम्। तृषुऽच्युतम्। आ। साच्यम्। कुपयम्। वर्धनम्। पितुः॥ ३॥

अस्याग्नेः मातरा मातृस्थानीये उत्पादयित्र्यौ उभा उभे अरण्याख्येमातरौ वेविजेचलतः ओविजीभयचलनयोः अस्माद्यङ्लुगन्ताद्व्यत्ययेनात्मनेपदं एकवचनंच लोपस्तआत्मनेपदेष्वि- तितलोपः चादिलोपेविभाषेतिनिघाताभावः कीदृशेमातरौ मथनोपक्रमेकृष्णप्रुतौ अग्निसंपर्का- त्कृष्णवर्णतांप्राप्नुवत्यौ प्रापयन्त्यौवाभूमिं तथासक्षितौ समानकार्यमग्न्युत्पादनंगच्छन्त्यौ एवंभू- तेमातरौ शिशुं शिशुवदुत्पत्तिसमये अत्यल्पमग्निं अभितरेते आभिमुख्येनप्राप्नुतश्च कीदृशंशि- शुं प्राचाजिह्वं प्राग्देशस्थितजिह्वास्थानीयज्वालं ध्वसयन्तं तमोनाशयन्तं तृषुच्युतं अरणीभ्यां क्षिप्रंनिर्गच्छन्तंअक्लेशेनयोनेःसकाशाच्छीघ्रमुत्पद्यमानं आईषत् साच्यं समवेतव्यं मृदुकाष्ठ- चूर्णादिना कुपयंगोपनीयं पितुःपालकस्य यजमानस्य वर्धनं प्रवर्धनं प्रवर्धयितारं उक्तप्र- कारैर्लौकिकशिशुसाधारणैरुपेतंशिशुमग्निं मातरावुत्पादयतइत्यर्थः॥ ३॥

३. अग्नि के दोनों काष्ठ चलते हैं। कृष्णवर्ण होकर दोनों ही एक ही कार्य करते हैं और शिशु अग्नि को प्राप्त होते हैं। शिशु की शिखारूपिणी जिह्वा पूर्वाभिमुखिनी है। यह अन्धकार को दूर करते हैं। शीघ्र उत्पन्न होते हैं। धीरे-धीरे काष्ठ-चूर्णों में मिलते हैं। बहुत प्रयत्न से इनकी रक्षा करनी होती है। यह रक्षक को समृद्धि देते हैं।

मुमुक्ष्वोउमनवेमानवस्यतेरघुद्रुवःकृष्णसीतासऊजुवः।
असमनाअजिरासोरघुष्यदोवातजूताउपयुज्यन्तआशवः॥ ४॥

मुमुक्ष्वः। मनवे। मानवस्यते। रघुऽद्रुवः। कृष्णऽसीतासः। ऊम् इति। जुवः। असमनाः। अजिरासः। रघुऽस्यदः। वातऽजूताः। उप। युज्यन्ते। आशवः॥ ४॥

मनवे मननवते मानवस्यते मानवानृत्विजः कर्मार्थं इच्छते यजमानाय तदर्थमध्वर्य्वादि- भिरग्नेर्ज्वालाः उपयुज्यन्ते प्रकटीक्रियन्ते यज्ञेषु सूक्तस्याग्नेयत्वादौचित्याद्वज्वालाइतिगम्यते की- दृश्यस्ताः मुमुक्ष्वः मुमुक्षवः आहुतिद्वारायजमानंमोक्तुमिच्छन्त्यःब्रह्मलोकंप्रापयन्त्यः जरादिषु-

छन्दसिवावचनमितिगुणाभावः ज्वालानामाहुतिद्वाराब्रह्मलोकप्राप्तिसाधनत्वं कालीकरालीत्युपक्रम्यश्रूयते—एतेषुयश्चरतेभ्राजमानेषुयथाकालंचाहुतयोह्याददायन् । तन्नयन्त्येताःसूर्यस्यरश्मयोयत्रदेवानांपतिरेकोऽधिवासइति। रघुद्रुवः क्षिप्रंगच्छन्त्यः कृष्णसीतासः कृष्णमार्गाः उकारः समुच्चयार्थः जुवः जवनशीलाः शीघ्रकारिण्यः स्वव्यापारेषुअसमनाःअसमानमनस्काः काश्चन प्राङ्मुख्योगच्छन्ति काश्चनप्रत्यङ्मुख्यइति विविधमनस्काः व्यत्ययेनैकवचनं यद्वा असमनाः भिन्नवर्णाः भिन्नवर्णत्वंचतत्रैवश्रूयते—कालीकरालीचमनोजवाचसुलोहितायाचसुधूम्रवर्णा। स्फुलिंगिनीविश्वभुवीचदेवीलेलायमानाइतिसप्तजिह्वाइति। अजिरासः गमनशीलाः रघुस्यदः शीघ्रं स्यन्दमानाः वातजूताः वातप्रेरिताः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वं आशवः व्यापनशीलाः॥४॥

४. अग्नि की शिखाएँ लघुगति, कृष्णमार्गी या शीघ्रकारिणी, अस्थिर-चित्ता, गमनशीला, कम्पन-शीला, वायुचालिता, व्याप्ति-संयुक्ता, मोक्षप्रदा और मनस्वी यजमान की उपयोगिनी हैं।

आदस्यतेध्वसयन्तोवृथेरतेकृष्णमभ्वंमहिवर्पःकरिक्रतः ।
यत्सींमहीमवनिंप्राभिमर्मृशदभिश्वसन्त्स्तनयन्नेतिनानदत् ॥५॥५॥

आत् । अस्य । ते । ध्वसयन्तः । वृथा । ईरते । कृष्णम् । अभ्वम् ।
महि । वर्पः । करिक्रतः । यत् । सीम् । महीम् । अवनिम् । प्र ।
अभि । मर्मृशत् । अभिऽश्वसन् । स्तनयन् । एति । नानदत् ॥ ५॥५॥

आदनन्तरं अस्यस्तूयमानस्याग्नेस्तेप्रसिद्धाः विस्फुलिंगाः वृथासहैवईरते सर्वतोगच्छन्ति कीदृशास्तेध्वसयन्तः तमांसिध्वसयन्तः तथाकृष्णंकृष्णवर्णं अभ्वंमहान्तं अभिभवद्गमनमार्गं महिमहत् वर्पः रूपं प्रकाशंकरिक्रतः अत्यर्थंकुर्वन्तः कस्मिन्कालइतितदुच्यते—यत्यदामहीं महतीं अवनिंभूमिंसींसर्वतोमर्मृशत् पुनःपुनरामृशत् मृशेर्यङ्लुगन्ताच्छतरि अभ्यस्तानामादिरित्याद्युदात्तत्वं अभिश्वसन् सर्वतश्चेष्टमानः स्तनयन् शब्दंकुर्वन् नानदत् अत्यर्थंशब्दयत् पूर्ववत्प्रत्ययस्वरौअभिप्र अभितः प्रकर्षेणैतिगच्छति यदा इतस्ततोजिह्वाभिर्लेलिहानोभुगुभुगुध्वनिंकुर्वन्ज्वलति तदैवविस्फुलिंगाउद्भवन्तीत्यर्थः ॥ ५ ॥

५. जिस समय अग्नि गर्जन करके श्वास फेंककर बार-बार विस्तीर्ण, पृथिवी को छूकर, शब्द करते हैं, उस समय अग्नि के सारे स्फुल्लिंग, एक साथ, चारों ओर जाते हैं। वे अन्धकार का विनाश कर चारों ओर जाते और कृष्णवर्ण मार्ग में उज्ज्वल रूप प्रकाशित करते हैं।

अथषष्ठी—

भूषन्नयोधिबभ्रूषुनम्नतेवृषेवपत्नीरभ्येतिरोरुवत् ।
ओजायमानस्तन्वश्चशुंभतेभीमोनशृङ्गादविधावदुर्गृभिः ॥ ६ ॥

भूषन् । न । यः । अधि । बभ्रूषु । नम्नते । वृषाऽइव । पत्नीः ।
अभि । एति । रोरुवत् । ओजायमानः । तन्वः । च । शुम्भते ।
भीमः । न । शृङ्गा । दविधाव । दुःऽगृभिः ॥ ६ ॥

योऽग्निर्बभ्रूषुबभ्रुवर्णास्वोषधीषुभरणकुशलासुवाजगतांअधि अधिकंनम्नते नमति काष्ठानिप्रविशति नमतेर्लेटचडागमः व्यत्ययेनश्ना यद्वा लङिछान्दसःशपःश्लुः व्यत्ययेनहलादिशेषाभावः भूषन्नभूतान्येवस्वतेजसाभूषयन्निव किंच अयंप्रविशन् वृषेवसेक्तावृषभइवपत्नीः तमेवपालयित्रीः समर्धयित्रीरोषधीः रोरुवत् रौतेर्यङ्लुगन्ताच्छतरिअभ्यस्तानामादिरित्याद्युदात्तत्वं अत्यर्थंशब्दयन्नभ्येति अभितोगच्छति प्रथममोषधीःप्रविश्यपश्चात्प्रबुद्धःसन् तानेवदहतीत्यर्थः किंच एवंकृत्वा ओजायमानः ओजइतिबलनाम स्वयंबलमिवाचरन् कर्तुःक्यङ्सलोपश्चेतिक्यङ्सलोपौ धूमादिभिर्विनाकेवलंतेजोरूपएवसन् तन्वश्चशुंभते स्वशरीरभूताज्वाला अपि दीपयति पोषयतीत्यर्थः किंच प्रवृद्धज्वालः दुर्गृभिः केनचिदपिगृहीतुमशक्यःसन् भीमोन भयंकरोमृगइव सयथादुर्ग्रहःसन् शृंगंचालयति तद्वत् अयमपि शृंगाणि शृंगवदुन्नताज्वालादविधावअत्यर्थंचालयति धुनोतेर्यङ्लुगन्ताल्लिटिरूपं अस्यचदाधर्त्योदाविति शब्देन संग्रहोद्रष्टव्यः ॥ ६ ॥

६. अग्नि पीले ओषधों को भूषित करके, उनके बीच, उतरते हैं। जैसे वृषभ गायों की ओर दौड़ता है, वैसे ही, शब्द करते हुए, अग्नि दौड़ते हैं। क्रमशः अधिक तेजस्वी होकर अपने शरीर को प्रकाशित करते हैं। दुर्द्धर्ष रूप धारण करके भयंकर पशु की तरह सींग घुमाते हैं।

ससंस्तिरोविष्टिरःसंगृभायतिजानन्नेवजानतीर्नित्यआशये ।
पुनर्वर्धन्तेअपियन्तिदेव्यमन्यद्वर्पःपित्रोःकृण्वतेसचा ॥ ७ ॥

सः । सम्ऽस्तिरः । विऽस्तिरः । सम् । गृभायति । जानन् । एव ।
जानतीः । नित्यः । आ । शये । पुनः । वर्धन्ते । अपि । यन्ति ।
देव्यम् । अन्यत् । वर्पः । पित्रोः । कृण्वते । सचा ॥ ७ ॥

सोऽग्निः संस्तिरः आच्छन्नः संपूर्वात्स्तृणातेर्मूलविभुजादित्वात्कप्रत्ययः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम तथा विस्तिरः कदाचिद्विस्तीर्णःसन् संगृभायति संगृह्णाति ओषधीः किंच अयंजानन्नेवयजमानार्थं प्रवृद्धेनभवितव्यं अतोज्वालाभिः संयोज्यइत्यधिगच्छन्नेवजानतीः यजमानार्थंप्रवृद्धाभिर्भवितव्यमित्यवगच्छन्तीःज्वालाः नित्यः अविच्छिन्नः

सन् आशये आशेते आश्रयतीत्यर्थः छोपस्तआत्मनेपदेष्विवितिलोपः एवंभूतज्वालाः पुनः पूर्वंप्रवृद्धाएवपुनरपियागयोग्यायथाभवन्ति तथा वर्धंते देव्यं यागादिव्यवहारयोग्यं स्तुत्यंवाग्निंअपियन्ति प्राप्नुवन्ति यद्यप्यग्निज्वालयोरेकत्वं तथापि राहोःशिरइतिवदौपचारिकोगन्तृगन्तव्यभावः किंच एवंप्रवृद्धाज्वालाओषधयोवा सचा अग्निनासह पित्रोर्जगतपालयित्रोः ताभ्यां संभूयद्यावापृथिव्योरन्यत्पूर्वमविद्यमानं तेजोमयंवपुः रूपंकृण्वते कुर्वन्ति लोकद्वयंस्पृशन्तीत्यर्थः ॥ ७ ॥

७. अग्नि कभी छिपकर, कभी विराट् होकर ओषधों को व्याप्त करते हैं; मानों यजमान का अभिप्राय जानकर ही अपनी अभिप्राय जाननेवाली शिखा को आश्रित करते हैं। शिखायें, फिर बढ़कर, याग-योग्य अग्नि को व्याप्त करती हैं एवं सब मिलकर पृथिवी और स्वर्ग का अपूर्व रूप विस्तृत करती हैं।

तमग्रुवंःकेशिनीःसंहिरेभिरऊर्ध्वास्तस्थुर्मम्रुषीःप्रायवेपुनः।
तासांजरांप्रमुञ्चन्नेतिनानंददसुंपरंजनयंजीवमस्तृतम् ॥ ८ ॥

तम्। अग्रुवः। केशिनीः। सम्। हि। रेभिरे। ऊर्ध्वाः। तस्थुः।
मम्रुषीः। प्र। आयवे। पुनरिति। तासाम्। जराम्। प्रऽमुञ्चन्।
एति। नानदत्। असुम्। परम्। जनयन्। जीवम्। अस्तृतम् ॥८॥

तमग्निंअग्रुवः अग्रतःस्थिताः यद्वा अङ्गुलिनामैतत् अंगुलयइवाकुटिलाः केशिनीः केशस्थानीयोर्ध्वभाविकाष्ण्योंपेताज्वालाः संरेभिरेहि परिरंभंकुर्वन्तिखलु आलिंगन्ति किंच एवंकुर्वत्यः मम्रुषीः मृताः अंगारभावमापन्नाअपि म्रियतेः क्वसुप्रत्ययान्तात् ङीपिरूपं आयवे आगच्छते अग्नये भर्त्रे पुनः स्वोपद्रवमजानत्यः ऊर्ध्वाः प्रतस्थुः ऊर्ध्वंमुखाः उन्नताः प्रतस्थिरे मृतमायाअपि प्रत्युत्थानं कृतवत्यइत्यर्थः एवंकृतवतीषु सतीषु सभर्ताग्निः तासां ज्वालानांजरांवयोहानिंप्रमुंचन् प्रकर्षेणमोचयन् नानदत् जरापरिहारायमन्त्रयन्निवात्यर्थंशब्दयन् नकेवलं जराहानिरेव अपितु परंनिरतिशयं असुं प्राणं अस्तृतं काष्ठोदकादिप्रक्षेपेणाप्यहिंसितं जीवं प्राणधारणसामर्थ्यं जनयन्नुत्पादयन्नेति गच्छति तासांज्वालानां सन्निधिं प्राप्नोति यथालोकेकाश्चन रमण्योरमणेनसहनिर्भरंक्रीडित्वापश्चात्प्रोषितेतस्मिन्विरहेणजीर्णाम्रियमाणाः पश्चात्तस्मिन्नागतेसति स्वदौर्बल्यमगणयित्वा संतोषेणपरिष्वंगायचेष्टन्ते सभर्ता मन्त्रोच्चारणेनजरामपनीयोचितप्रदानेन प्राणयन्नक्षतीत्ययंभावोऽत्रानुसंधेयः ॥ ८ ॥

८. शीर्षस्थानीय और आगे स्थित शिखायें अग्नि का आलिङ्गन करती हैं; मृतप्राय होने पर भी अग्नि का आगमन जानकर ऊर्ध्वमुख होकर, ऊपर उठती हैं। अग्नि, शिखाओं का बुढ़ापा छुड़ाकर उन्हें उत्कृष्ट सामर्थ्य और अखण्ड जीवन प्रदान करते हुए गर्जन करते आते हैं।

अथनवमी–

अधीवासंपरिंमातूरिहन्नहंतुविग्रेभिःसत्वंभिर्यातिविज्रयः।
वयोदधत्पद्वतेरेरिहत्सदानुश्येनींसचतेवर्तनीरह ॥ ९ ॥

अधीवासम् । परि । मातुः । रिहन् । अहं । तुविऽग्रेभिः । सत्वंऽभिः । याति । वि । ज्रयः । वयः । दधत् । पत्ऽवते । रेरिहत् । सदा । अनु । श्येनीं । सचते । वर्तनिः । अह ॥ ९ ॥

दावाग्निःस्तूयते अयमग्निः मातुः भूतानांनिर्मातुर्भूमेः अधीवासंउपर्याच्छादनस्थानीयं तृणगुल्मोषध्यादिकंपरिपरितः रिहन् लिहन्अहेतिप्रसिद्धौ यद्वा मातुर्भूमेः अधीवासंउपरिधार्यमाणंवस्त्रं परि परितः रिहन् संपादयन् तुविग्रेभिः प्रभूतंशब्दयद्भिः प्रभूतगमनैर्वासत्वभिः प्राणिभिः सहितः ज्रयःज्रयसा जवेनवियाति विविधंगच्छति किंच पद्वते पादवते द्विपदेचतुष्पदेच वयःअन्नं तत्तदुचितं दधत् ददत् विवनेदावानलेभीत्या पलायमानान्प्राणिनोव्याघ्रादयोभक्षयन्तीतिप्रसिद्धं किंकुर्वन् सदा सर्वदा तृणादिकं रेरिहत् दहन् किंच श्येनी श्यामवर्णोवर्तनिः मार्गः वियान्तंअग्निंअनु अनुक्रमेणसचते सेवतेयत्रयत्राग्निर्गच्छति तत्रतत्रमार्गोऽपिकृष्णोभवति अहेतिप्रसिद्धौ ॥ ९ ॥

९. पृथिवी माता के ऊपर के ढक्कन या तृण-गुल्म आदि को चाटते-चाटते अग्नि प्रभूत शब्द-कर्त्ता प्राणियों के साथ वेग से गमन करते हैं। पाद-विशिष्ट पशुओं को आहार देते हैं। अग्नि सदा चाटते हैं और क्रमशः जिस मार्ग से जाते हैं, उसे काला करते जाते हैं।

अस्माकंमग्नेमघवंत्सुदीदिह्यधश्वसींवान्वृषभोदमूंनाः।
अवास्याशिशुंमतीरदीदेर्वर्मेवयुत्सुपरिजर्भुराणः ॥ १० ॥ ६ ॥

अस्माकंम् । अग्ने । मघवंत्ऽसु । दीदिहि । अध । श्वसींवान् । वृषभः । दमूंनाः । अवऽअस्यं । शिशुंऽमतीः । अदीदेः । वर्मंऽइव । युत्ऽसु । परिऽजर्भुराणः ॥ १० ॥ ६ ॥

हेअग्ने अस्माकं मघवत्सु अस्मत्संबन्धिष्वन्नवत्सु यागेषु गृहेषुवा दीदिहि दीप्यस्व अध अथानन्तरं श्वसीवान्श्वसनवान् ज्वालाभिश्चेष्टावान् अस्मत्प्राणनवान्वा वृषभोवर्षिता अभिमतानां दमूनाः दममनाः दान्तमनावा सर्वत्रभवेतिशेषः सउक्तलक्षणस्त्वंशिशुमतीरवास्य शिशुशब्देनतदवस्थालक्ष्यते शैशवतीर्ज्वालाअपक्षेप्य विहाय अदीदेः भृशं

दीप्यस्व कीदृशस्त्वं युत्सु संग्रामेषु वर्मेवकवचमिव परिजर्भुराणः अस्मद्द्वेष्टॄन्पुनःपुनः परिहरन् यद्वा युत्सु संग्रामेषु वर्मेव परिजर्भुराणोभव हरतेर्यङ्लुगन्ताद्व्यत्ययेनशानच् अभ्यस्ताना-मादिरित्याद्युदात्तत्वं उक्तगुणकोभवान् मघवत्सु यज्ञेषु दीप्यस्व ॥ १० ॥

१०. अग्नि, तुम अभीष्टवर्षी और दानशील होकर श्वास फेंकते हुए हमारे धनाढ्य गृह में दीप्त हो। शिशु-बुद्धि छोड़कर, युद्ध-समय में वर्म की तरह, बार-बार शत्रुओं को दूर करके जल उठो।

इदमग्नेसुधितंदुर्धितादधिप्रियादुचिन्मन्मनःप्रेयोअस्तुते ।
यत्तेशुक्रंतन्वो३रोचतेशुचितेनास्मभ्यंवनसेरत्नमात्वम् ॥११॥

इदम् । अग्ने । सुऽधितम् । दुःऽधितात् । अधि । प्रियात् । ऊम् इति ।
चित् । मन्मनः । प्रेयः । अस्तु । ते । यत् । ते । शुक्रम् । तन्वः । रोचते ।
शुचि । तेन । अस्मभ्यम् । वनसे । रत्नम् । आ । त्वम् ॥ ११ ॥

हे अग्ने इदमस्मदीयं सोमादिरूपं हविः कीदृशंतव दुर्धितात् दुष्टंस्थापितात् कठिनात्का-ष्ठादेरधिउपरि सुधितं सुहितं सुष्ठुदत्तं मन्मनोमननीयात्प्रियादुचित् तवहृद्यादपि उशब्दोव-धारणे चिच्छब्दोऽपिशब्दार्थः ते तव प्रेयः अतिप्रियतमः अस्तु तर्तिक इत्याह हेअग्ने तेतव तन्वः शरीरस्य घृतेनोज्ज्वलितायाः ज्वालायाः शुचिर्निर्मलं शुक्रंदीप्तं यत्तेजोरोचते तेनसह रत्नं रमणीयं मणिमुक्तादिकं वितरन् त्वं अस्मभ्यं आवनसे अस्मान् संभजस्व वनतेर्व्यत्ययेनात्म-नेपदम् ॥ ११ ॥

११. अग्नि, यह जो काठ के ऊपर सावधानी से हव्य रखा गया है, वह तुम्हारी मनोऽनुकूल प्रिय वस्तु से भी प्रिय हो। तुम्हारे शरीर की शिखा से जो निर्मल और दीप्त तेज निकलता है, उसके साथ तुम हमें रत्न प्रदान करो।

अथद्वादशी—

रथायनावमुतनोगृहायनित्यारित्रांपद्वतींरास्यग्ने ।
अस्माकंवीराँउतनोमघोनोजनांश्चयापारयाच्छर्मयाच ॥ १२ ॥

रथाय । नावम् । उत । नः । गृहाय । नित्यऽअरित्राम् ।
पत्ऽवतीम् । रासि । अग्ने । अस्माकम् । वीरान् । उत । नः ।
मघोनः । जनान् । च । या । पारयात् । शर्म । या । च ॥ १२ ॥

हे अग्ने उत अपिच रथाय रंहणाय गृहाय सर्वस्यायतनभूताय नोऽस्माकं यजमानाय नावं संसारोत्तारिकां सोमयागात्मिकांनावं यज्ञोवैसुतर्मानौरित्यादिषुश्रुतिषुनौरूपत्वेनस्तुतत्वात् कीदृशींतां नित्यारित्रां नियतऋत्विग्रूपोदकाकर्षणकाष्ठसाधनोपेतां पद्वतीं ह्रस्वनुड्भ्यामितिमतुपउदात्तत्वं द्रव्यदेवतामन्त्रादिरूपपादोपेतां ईदृशीं यज्ञात्मिकांनावं रासि देहि संपादय रातिर्दानकर्मा दासति रातीतितन्नामसुपाठात् सैवविशेष्यते उतअपिच यानौः अस्माकं वीरान् अस्मत्संबन्धिनः पुत्रादीन् मघोनः हविर्लक्षणान्नवतः करोतिजनांश्च यजमानानस्मानपि यानौः पारयात्पारयेत् उत्तारयेत् पारयतेर्लेटयाडागमः जननमरणादिबहुदुःखात्मकस्यपारंनिरतिशयसुखास्पदंब्रह्मलोकंप्रापयेत् एषवःपुण्यःसुकृतोब्रह्मलोकइतियागाद्यनुष्ठानवतांश्रूयमाणत्वात् एवंप्रापय्यच यानौः शर्म सुखं निरतिशयंब्रह्मप्रापयेत् परस्यान्तेकृतात्मानःप्रविशन्तिपरंपदमित्युक्तत्वात् चित्तशुद्ध्युत्पादनद्वारावा विविदिषन्ति यज्ञेनदानेनेतिश्रुतेः ॥ १२ ॥

१२. अग्नि, हमारे घर या यजमान और रथ के लिए सुदृढ़ डाँड़ या ऋत्विक् और पाद या मंत्र से संयुक्त नौका या यज्ञ प्रदान करो। वह हमारे वीरों, धनवाहकों और अन्य लोगों की रक्षा करेगा और हमें सुख से रखेगा।

अथत्रयोदशी—

अभीनोअग्नउक्थमिज्जुगुर्याद्यावाक्षामासिन्धवश्चस्वगूर्ताः।
गव्यंयव्यंयन्तोदीर्घाहेषंवरमरुण्योवरन्त ॥ १३ ॥ ७ ॥

अभि। नः। अग्ने। उक्थम्। इत्। जुगुर्याः। द्यावाक्षामा।
सिन्धवः। च। स्वऽगूर्ताः। गव्यम्। यव्यम्। यन्तः। दीर्घा।
अहा। इषम्। वरम्। अरुण्यः। वरन्त ॥ १३ ॥ ७ ॥

हेअग्ने नःउक्थंशस्त्रंअभिजुगुर्याः आभिमुख्येनस्तुहि प्रोत्साहय सम्यक्शस्तमित्यंगीकुरु गृशब्दे लिङिबहुलंछन्दसीतिविकरणस्यश्लुः बहुलंछन्दसीत्युत्वं तथाद्यावाक्षामाद्यावापृथिव्यावपियज्ञसाधनसंपादनेन प्रोत्साहयतां तथा सिन्धवः स्यन्दनशीलाः नद्यश्च स्वगूर्ताः स्वयमेवगामिन्यः गव्यंगोसंभवंक्षीरादिकं गवांतृणाद्युत्पादनद्वारा यव्यं उपलक्षणमेतत् यवव्रीह्यादिजन्यं पुरोडाशादिकं यन्तःप्रापयन्तः प्रोत्साहयन्तु तथाअरुण्यः अरुणवर्णगोयुक्ताः मत्वर्थीयोलुप्यते आरुण्यसाधनभूताउषसः तद्धेतुत्वात्ताच्छब्द्यं दीर्घाहा सर्वाण्यहानि सर्वकालं इषंइष्यमाणं अन्नरसादिकं वरं वरणीयंश्रेष्ठं अन्यदपि यागसाधनं वरंत प्रापयन्तु वृङ्संभक्तौ

१ ऐ० ब्रा० १. १३.।

अन्तर्भावितण्यर्थाच्छान्दसोलङ् व्यत्ययेनशप् साधयन्तु एतत्सर्वमग्नेःप्रसादादित्यग्नेरेववस्तु-
त्वादाग्नेयत्वमविरुद्धम् ॥ १३ ॥

१३. अग्नि, हमारे ऋङ्‍्मंत्रों के लिए उत्साह बढ़ाओ। द्यावा-पृथिवी और स्वयंगामिनी नदियाँ हमें गौ और शस्य प्रदान करके उत्साह वर्द्धित करें। अरुणवर्ण उषायें सदा पाने योग्य सुन्दर अन्न आदि दें। ॥ इतिद्वितीयस्यद्वितीयेसप्तमोवर्गः ॥ ७ ॥

बळित्थेतित्रयोदशर्चंद्वितीयंसूक्तं दैर्घतमसंजागतं अन्त्येत्रिष्टुभौ अग्निर्देवताअनुक्रम्य-
तेच—बळित्थेति प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः।

बळित्थातद्वपुषेधायिदर्शतंदेवस्यभर्गःसहसोयतोजनि।
यदीमुपह्वरतेसाधतेमतिर्ऋतस्यधेनाअनयन्तसस्रुतः ॥ १ ॥

बट्। इत्था। तत्। वपुषे। धायि। दर्शतम्। देवस्य। भर्गः। सहसः। यतः। जनि। यत्। ईम्। उप। ह्वरते। साधते। मतिः। ऋतस्य। धेनाः। अनयन्त। सऽस्रुतः ॥ १ ॥

देवस्यद्योतनशीलस्यादित्यस्यदर्शतं सर्वैर्दर्शनीयं तत्प्रसिद्धंभर्गस्तेजः इत्थाइत्थं सर्वैर्दृ-
श्यमानप्रकारेण वपुषेशरीरव्यवहारायदार्ढ्यायधायिधार्यतेसर्वैः बळित्थेत्युभे अपिसत्यनामनी
बट् श्रव सत्रा इत्थेतितन्नामसुपाठात् जाठराग्निनाभुक्तानांजरणेनशरीरधारणंप्रसिद्धम् तत्रो-
पपत्तिमाह—यतःसहसोजनि यतःकारणात् मथनकालेबलेनोत्पन्नः अतोबलायधार्यतइत्यर्थः
यदीं यदेतत्प्रसिद्धम् लोकोपकार्यग्नेस्तेजः मतिर्मदीयाबुद्धिः उपह्वरते उपगच्छति उपगम्य
वर्ततेवा ह्वृकौटिल्ये साधतेच तेनैवतेजसा साधयति स्वाभीष्टं किंच ऋतस्य यज्ञसाधकस्याग्नेस्ते-
जसाधेनाः सर्वप्राणिनांवाचः सस्रुतः समानंगच्छन्त्यः सहैवमवर्तमानाः स्रवतेःकर्तरिक्विप्
अनयन्त नयन्ति निर्वहन्तिजगद्व्यवहारं व्यत्ययेनात्मनेपदम् यद्वा ऋतस्यधेनाः यज्ञस्यसंब-
न्धिन्योमन्त्ररूपावाचः सस्रुतः होत्रादिमुखेनसहैवप्रवर्तमानाः अनयन्त नयन्ति अग्नेःस्तोत्रं
निर्वहन्ति अग्नेस्तेजसावायज्ञंनिर्वहन्ति तेजोमयीवागितिश्रुतेः। अतःकारणान्मतिरुपह्वरतइ-
त्यर्थः धेनेतिवाङ्नाम धेनाग्नाइतितन्नामसुपाठात् ॥ १ ॥

१. प्रकाशमान अग्नि का दर्शनीय तेज, सचमुच, इसी प्रकार लोग शरीर के लिए धारण करते हैं। वह तेज शरीर बल या अरणि-मन्थन से उत्पन्न हुआ है। अग्नि के तेज का आश्रय करके मेरा ज्ञान अपनी अभीष्ट-सिद्धि कर सकता है; इसलिए अग्नि के लिए स्तुति और हव्य अर्पण किया जाता है।

अथद्वितीया—

पृक्षोवपुःपितुमान्नित्यआशयेद्वितीयमासप्तशिवासुमातृषु।
तृतीयमस्यवृषभस्यदोहसेदशप्रमतिंजनयन्तयोषणः॥ २॥

पृक्षः। वपुः। पितुऽमान्। नित्यः। आ। शये। द्वितीयम्।
आ। सप्तऽशिवासु। मातृषु। तृतीयम्। अस्य। वृषभस्य।
दोहसे। दशऽप्रमतिम्। जनयन्त। योषणः॥ २॥

अयमग्निः पृक्षः अन्नसाधकः पाकादिना वपुः वपुष्मान् शरीराभिवृद्धिहेतुः पितुमान् हविर्लक्षणान्नयुक्तः नित्यःशाश्वतः ईदृशःसन्प्रथमं पृथिवीस्थानःसन् आशयेआशेते दाहपाकादिलौकिकंकर्मयज्ञादिवैदिकंकर्मच निवर्तयन् भ्रुवोभूमौवर्ततइत्यर्थः तथा सप्तशिवासुमातृषुसप्तलोकशिवकरीषु मातृस्थानीयासुहितकरीषुवृष्टिषु द्वितीयमाशेते मध्यमस्थानोविद्युद्रूपोवर्तते अस्यवृषभस्य वर्षितुरस्यैववैद्युताग्नेः सहायत्वेनसंबन्धिने दोहसेदोग्ध्रे आदित्यस्योदकस्यवर्षयित्रेआदित्यरश्मये दुहेःकर्तर्यसुप्रत्ययः तत्प्रवृत्तये तृतीयमाशेते द्युस्थानोवर्तते यद्वा अस्यवृषभस्यवर्षितुः प्रसिद्धस्यादित्यस्यसंबन्धिनेदोग्ध्रेरश्मये तत्प्रवृत्त्यर्थं आदित्यरश्मयोघर्मकालेभूमिस्थमुदकमाकृष्यसूर्यमापय्यतत्रचिरकालंधृत्वा पुनरन्तरिक्षंप्राप्यमेघेषुस्थित्वावर्षाकाले प्रवर्षन्तीतिप्रसिद्धं अतोरश्मेर्दोग्धृत्वं ईदृशं त्रिस्थानमग्निंमहाभागं योषणोमिश्रणशीलाः सर्वादिशः जनयन्त उत्पादयन्ति सर्वासुदिक्षुप्रसृतइत्यर्थः कीदृशंतं दशप्रमतिं दशसुदिक्षुप्रकृष्टमननवन्तं पूज्यत्वाय यद्वा मथनकाले दशभिरङ्गुलीभिरुत्पन्नं लोकत्रयेदशदिक्षुचव्याप्तमित्यर्थः॥२॥

२. प्रथम अन्न-साधक शरीरी और नित्य अग्नि रहते हैं, द्वितीय कल्याणवाहिनी सप्त-मातृकाओं में रहते हैं, तृतीय इस अभीष्ट-वर्षी के दोहन के लिए रहते हैं। परस्पर संश्लिष्ट दस दिशायें दसों दिशाओं में पूजनीय अग्नि को उत्पन्न करती हैं।

निर्यदींबुध्नान्महिषस्यवर्पसईशानासःशवसाक्रन्तसूरयः।
यदीमनुप्रदिवोमध्वआधवेगुहासन्तंमातरिश्वामथायति॥ ३॥

निः। यत्। ईम्। बुध्नात्। महिषस्य। वर्पसः। ईशानासः।
शवसा। क्रन्त। सूरयः। यत्। ईम्। अनु। प्रऽदिवः। मध्वः।
आऽधवे। गुहा। सन्तम्। मातरिश्वा। मथायति॥ ३॥

ईंएनमग्निं यद्यस्मात्कारणात् महिषस्य महन्नामैतत् महिषःअश्वःऋभुक्षाइतितन्नामसु पाठात् महतोयज्ञस्यबुध्नात् मूलात् आधानादारभ्यवर्पसःरूपनामैतत् रूपस्यउपक्रमोपसंहारात्मकस्य सिद्धयेईशानासःस्वकीयव्यापारसमर्थाः सूरयोमेधाविनःऋत्विजःशवसाबलेन मन्त्रादिरूपेणशरीरेणवानिष्क्रन्त निष्कुर्वन्तिसाधयन्ति उत्पादयन्ति काष्ठात् यद्वा एनमग्निंबुध्नात् आदितः मथनादारभ्यमहिषस्यवर्पसः महतोरूपस्य आहुतिस्वीकारसमर्थस्यसिद्धये निष्कुर्वन्ति करोतेश्छान्दसेलुङि मन्त्रेघसेतिच्लेर्लुक् व्यत्ययेनान्तादेशः किंच यत् यं ईं एनमेवाग्निंप्रदिवः पुराणात् अनादिकालमारभ्यनकेवलमिदानीमेवेत्यर्थः पूर्ववदिदानींमध्वोमधुनः मधुसदृशस्यहविषः आधवेआधवने प्रक्षेपेनिमित्तेसति गुहासन्तं गुहायांवेद्यांकाष्ठेषुनिगूढंसंतंमातरिश्वाअन्तरिक्षे चेष्टमानोवायुः अनुअनुक्रमेण मथायति चालयति उद्बोधयतीत्यर्थः यद्वा मातरि फलस्यमातरियागेश्वसतिचेष्टतइतिमातरिश्वायजमानोगुहासन्तं अरण्योर्निगूढंसंतं प्रादुर्भावाय अनुक्रमेणमथायति मथ्नाति उत्पादयतीत्यर्थः यस्मादेवंरूपं तस्मात्स्तोतव्यइत्यर्थः ॥ ३ ॥

३. चूंकि महायज्ञ के मूल से सिद्धि करनेवाले ऋत्विक् बल-प्रयोग या अरणि-मन्थन-द्वारा अग्नि को उत्पन्न करते हैं, अनादि काल से अच्छी तरह फैलाने के लिए गुहास्थित अग्नि को वायु चालन करते हैं,--

प्रयत्पितुःपरमान्नीयतेपर्यापृक्षुधोवीरुधोदंसुरोहति ।
उभायदस्यजनुषंयदिन्वतआदिद्यविष्ठोअभवद्घृणाशुचिः ॥४॥

प्र । यत् । पितुः । परमात् । नीयते । परि । आ । पृक्षुधः ।
वीरुधः । दम्ऽसु । रोहति । उभा । यत् । अस्य । जनुषम् ।
यत् । इन्वतः । आत् । इत् । यविष्ठः । अभवत् । घृणा । शुचिः ॥४॥

यद्यस्मात्पितुः अन्नस्य पशुलक्षणस्य षष्ठीस्थानेप्रथमा तस्यपरमात्परमत्वाद्धेतोः उत्कृष्टत्वायेत्यर्थः तदर्थंप्रपरिणीयते प्रकर्षेणपरितोनीयते पर्यग्निक्रियतइत्यर्थः यद्वा पितुः उत्पादकात् परमात् उत्कृष्टात् गार्हपत्यलक्षणस्याग्नेःसकाशादाहवनीयंप्रति प्रपरिणीयते प्रकर्षेणनीयते पर्यनर्थकः किंच पृक्षुधः पशुपुरोडाशादिषुदाहमध्येधीयमानाः यद्वा प्रशब्दस्यसंप्रसारणं क्षुधबुभुक्षायांक्विप् प्रक्षोध्याः प्रकर्षेणबुभुक्षिताः भोक्तुमिष्यमाणावीरुधः दंसुदंतेषु मध्येआरोहति आरोहन्ति प्रविशन्तीत्यर्थः यद्यस्मात्उभाउभौ अध्वर्युयजमानौ उभेअरणीवाअस्याग्नेर्जनुषं जन्मउत्पत्तिंइन्वतः व्याप्नुतः स्वीकुरुतइत्यर्थःइविव्याप्तौ इदित्त्वान्नुम् आदित् अतएवकारणात् शुचिः शुद्धोयमग्निः घृणायजमानेष्वनुग्रहेण यद्वा घृणाघृणःदीप्तिमान् मत्वर्थोलुप्यते दीप्त्यावा यविष्ठोयुवतमोभवत् संपन्नः स्वीकारसमर्थोभवदित्यर्थः ॥ ४ ॥

४. अग्नि की उत्कृष्टता की प्राप्ति के लिए अग्नि का निर्माण किया जाता है, आहार के लिए वाञ्छित लतायें अग्नि की शिखाओं

(दाँतों) पर चढ़ जाती हैं और अध्वर्यु तथा यजमान दोनों ही अग्नि की उत्पत्ति के लिए चेष्टा करते हैं; इसलिए पवित्र अग्निदेव, यजमानों के लिए अनुग्रह करते हुए, युवा हुए।

आदिन्मातॄराविशद्यास्वाशुचिरहिंस्यमानउर्वियाविवावृधे।
अनुयत्पूर्वाअरुहत्सनाजुवोनिनव्यसीष्ववरासुधावते ॥ ५ ॥ ८ ॥

आत्। इत्। मातॄः। आ। अविशत्। यासु। आ।
शुचिः। अहिंस्यमानः। उर्विया। वि। ववृधे। अनु। यत्।
पूर्वाः। अरुहत्। सनाऽजुवः। नि। नव्यसीषु। अवरासु।
धावते ॥ ५ ॥ ८ ॥

अयमग्निः आशुचिर्दीप्तःआदित्पूर्वमन्त्रेयविष्ठोभवदित्युक्त्वात् तदनन्तरमेव मातॄरुत्पादयित्रीः मातृस्थानीयादशदिशः आअविशत् सर्वतःप्रविशति पूर्वन्त्रदशप्रमतिंजनयन्तयोषणइत्युक्त्वात् दिशांमातृत्वं दिक्षुप्रकाशेनव्याप्तइत्यर्थः मातरोविशेष्यन्ते यासुमातृषु अहिंस्यमानः परैरपीड्यमानः उर्वियाउरुअतिप्रभूतंविवावृधे विविधंप्रवृद्धोभवत् तास्वाविशत् यथालोकेकश्चित्तेजस्वी जनन्यास्तनपानपरपीडापरिहारादिभिःसम्यक्पोषितोलोकेप्रकाश्यपुनरागत्यमातरमालिंगति तद्वदितिभावः कस्मिन्कालेइतितत्राह—यत्यदासनाजुवः दीर्घकालवियोगिन्यःस्थापनकालएवप्रक्षिप्ताः अतएवपूर्वाः प्रथमभाविनीरोषधीः अनुक्रमेणअरुहत् आरोहति रुहेश्छान्दसोलुङ् कृमृदृरुहिभ्यश्छन्दसीतिच्लेरङादेशः उपरिप्रज्वलति तथानव्यसीषु नवतरासुअतएवावरासुपूर्वापेक्षयानिकृष्टासु पश्चाद्भाविनीष्वोषधीषु निधावते नितरांनीचैर्वागच्छति अन्तः प्रविशतीत्यर्थः यदाकाष्ठानामधस्तादुपरिष्टाच्चप्रविश्यज्वलति तदादिक्षुप्रकाशितोभवतीत्यर्थः ॥ ५ ॥

५. मातृरूपिणी दिशाओं के बीच अग्नि, हिंसा-रहित होकर, बढ़े हैं; इस समय प्रदीप्त होकर उन्हीं के मध्य बैठते हैं। स्थापन-समय में, पहले, जो सब ओषधं प्रक्षिप्त हुए थे, उनके ऊपर अग्नि चढ़ गये थे। इस समय अभिनव और निकृष्ट ओषधों के प्रति दौड़ते हैं।

अथषष्ठी—

आदिद्धोतारंवृणतेदिविष्टिषुभगमिवपपृचानासऋञ्जते।
देवान्यत्क्रत्वामज्मनापुरुष्टुतोमर्तंशंसंविश्वधावेतिधायसे ॥ ६ ॥

---

१ नि० ६. २१।

आत् । इत् । होतारम् । वृणते । दिविष्टिषु । भगम्ऽइव ।
पपृचानासः । ऋञ्जते । देवान् । यत् । क्रत्वा । मज्मना ।
पुरुऽस्तुतः । मर्तम् । शंसम् । विश्वधा । वेति । धायसे ॥ ६ ॥

होतारं होमनिष्पादकं आह्वातारंवादेवानां ईदृशमग्निंदिविष्टिषु दिवएषणेषुनिमित्तभूतेषु वृणते संभजते आदित् अनन्तरमेव तथा पपृचानासः हविषा स्तुत्याचसंपृचानाऋत्विजोयजमानाः पृचेश्छान्दसस्यलिटःकानच् ऋंजतेप्रसाधयन्ति किमिव भगमिव तंयथाजनाः प्रसाधयन्ति तद्वत् यद्वा महान्तं राजानमिव सूर्यंदीप्तिवत्पूज्यमित्यर्थः ऋंजतिःप्रसाधनकर्मेतियास्कः । यद्यस्मादयमग्निः पुरुष्टुतः बहुभिर्बहुधावास्तूयमानः क्रत्वाक्रतुनाकर्मणायागादिरूपेण मज्मनाशारीरेण बलेनचयुक्तान्देवान्व्यवहर्तॄन् ऋत्विजः यज्ञभुजोदेवान्वाक्रत्वामज्मनाचयोजयितुं तथामर्तं यजमानंशंसं स्तुतिंच स्तुत्यंवातं विश्वधाविश्वधनः यद्वा विश्वात्मकोयंवेति पूर्वोक्तान्कामयते किमर्थं धायसे हविर्लक्षणान्नाय तस्मात् होतारमग्निंवृणते ऋंजतेच ॥ ६ ॥

६. हवि का सम्पर्क करनेवाले यजमान, द्युलोक-निवासियों की प्रसन्नता के लिए, होम-सम्पादक अग्नि का वरण करते और राजा की तरह उनका आराधन करते हैं। अग्नि बहुतों के स्तुति-योग्य और विश्व-रूप हैं। वे यज्ञ-सम्पन्न और बलशाली हैं। वे देवों और स्तुति-योग्य मर्त्य यजमानों—दोनों के लिए अन्न की कामना करते हैं।

वियदस्थाद्यजतोवातचोदितोह्वारोनवक्वाजरणाअनाकृतः ।
तस्यपत्मन्दक्षुषःकृष्णजंहसः शुचिजन्मनोरजआव्यध्वनः ॥७॥

वि । यत् । अस्थात् । यजतः । वातऽचोदितः । ह्वारः । न ।
वक्वा । जरणाः । अनाकृतः । तस्य । पत्मन् । धक्षुषः ।
कृष्णऽजंहसः । शुचिऽजन्मनः । रजः । आ । विऽअध्वनः ॥ ७ ॥

यत् यदायमग्निर्वातचोदितः वायुनाप्रेरितः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरत्वं यजतः सर्वैर्यष्टव्यः यष्टुंयोग्यःसन् व्यस्थात् वितिष्ठते सर्वतोव्याप्तोभवति तत्रदृष्टान्तः—अनाकृतः अनिवारितः अप्रतिहतः प्रसरः वक्वा बहुवक्ता वचेरन्येभ्योपिदृश्यन्तइतिवनिप् दृशिग्रहणात्कुत्वं ह्वारोन कुटिलइव विदूषकादिरिव ह्वरतेण्यंन्तात्पचाद्यच् सयथाजरणाः स्तुतीर्वितिष्ठते विविधंकुर्वन्वर्तते तद्वदयमप्यनाकृतः प्रतिबद्धप्रसरोव्यवस्थितः तदा तस्याग्नेः पत्मन् पतने मार्गेयज्ञरूपे रजोरंजनात्मकोलोकआस्थात् आतिष्ठति सर्वतआश्रयति अग्नौबहुधायजतीत्यर्थः कीदृशस्य

तस्यधक्षुषः दहतः दहेर्लिटःक्वसुः कृष्णजंहसः कृष्णमार्गस्य पुनःपुनर्गम्यतइतिजंहामार्गः हं-तेर्यङ्लुगन्तात्कर्मण्यसुन् कुत्वाभावश्छान्दसः शुचिजन्मनः मन्त्रसहितारण्योरुत्पन्नत्वात् व्यध्वनः विविधज्वालस्य अनियतमार्गस्य ॥ ७ ॥

७. जैसे वकवादी विदूषक आदि बड़ी सरलता से हँसा देते हैं, वैसे ही वायु-द्वारा परिचालित यजनीय अग्नि चारों ओर व्याप्त होते हैं। अग्नि दहन-कर्त्ता हैं, उनका जन्म पवित्र है, उनका मार्ग कृष्णवर्ण है और उनके मार्ग में कुछ भी स्थिरता नहीं है। इसी लिए उनके मार्ग में अन्तरिक्ष स्थित है।

रथोनयातःशिक्वभिःकृतोद्यामङ्गेभिररुषेभिरीयते।
आदस्यतेकृष्णासोदक्षिसूरयःशूरस्येवत्वेषथादीषतेवयः ॥ ८ ॥

रथः। न। यातः। शिक्वऽभिः। कृतः। द्याम्। अङ्गेभिः। अरुषेभिः। ईयते। आत्। अस्य। ते। कृष्णासः। धक्षि। सूरयः। शूरस्यऽइव। त्वेषथात्। ईषते।। वयः ॥ ८ ॥

अयमग्निः शिक्वभीरज्जुभिः कृतः बद्धोरथोन रथइव सयथा स्वीयैश्वकादिभिरङ्गैरी-यते तद्वत् यातःस्थापितःसन् अरुषेभिर्गमनशीलैरंगेभिः ज्वालादिरूपैरवयवैर्द्यामन्तरिक्षं आज्येन हृष्टःसन् ईयते गच्छति ईङ्गतौ आत् प्रवृद्ध्यनन्तरं अस्याग्नेस्तेसूरयः सरणयो मार्गाः कृष्णासः कृष्णवर्णाभवन्ति यतएवंभवन्ति तदर्थं धक्षि दहतिकाष्ठान् पुरुषव्यत्ययः छान्दसः शपोलुक् किंच ज्वलितस्याग्नेः त्वेषथात् दीप्तात्तेजसःसकाशात् वयः गमनवन्तः पक्षिमृगादयः ईषते गच्छन्ति ईषगत्यादौ बहुलंछन्दसीतिशपोलुक् पलायन्ते तत्रदृष्टान्तः—शूरस्यत्वेषथाद्वयइव कस्यचिद्विक्रान्तस्य दीप्तात्तेजसःसकाशात् भीत्यापलायमानाइव एवमन्तरिक्षंस्पृशन् सर्वतोदहतीति सर्वज्ञादावाग्निरूपेणस्तूयते ॥ ८ ॥

८. रस्सी में बंधे रथ की तरह अपने चञ्चल अंग की सहायता से अग्नि स्वर्ग को जाते हैं। उनका मार्ग एक बारगी ही कृष्णवर्ण है, वे काठ जलाते हैं। वीर की तरह अग्नि के उद्दीप्त तेज के सामने से चिड़ियाँ भाग जाती हैं।

त्वयाह्यग्नेवरुणोधृतव्रतोमित्रःशाशद्रेअर्यमासुदानवः।
यत्सीमनुक्रतुनाविश्वथाविभुरराम्ननेमिःपरिभूरजायथाः ॥ ९ ॥

त्वया। हि। अग्ने। वरुणः। धृतऽव्रतः। मित्रः। शाशद्रे। अर्यमा। सुऽदानवः। यत्। सीम्। अनु। क्रतुना। विश्वऽथा। विऽभुः। अराम्। न। नेमिः। परिऽभूः। अजायथाः ॥ ९ ॥

हेअग्ने त्वयाखलु वरुणोरात्र्यभिमानीदेवोधृतव्रतःस्वीकृतवर्षणादिकर्माभवति तथामि-त्रोहरभिमानीदेवः शाशद्रेशातयतितमः शद्लृशातने छान्दसोलिङ् बहुलंछन्दसीतिरुट् तुजादि-त्वादभ्यासदीर्घः तथार्यमाउभयोर्मध्यवर्तीदेवः सुदानवःशोभनदानोभवति व्यत्ययेनबहुवच-नं यद्वा एतेवरुणादयः सुदानवःशोभनदानाः स्वस्वकार्यकर्तारः त्वयाहि शाशद्रे तीक्ष्णीक्रिय-न्ते हिशब्दोमन्त्रान्तरप्रसिद्धिद्योतनार्थः त्वमग्नेवरुणोजायसइतिहिमन्त्रान्तरं । शदेःकर्मणिछान्द-सोलिट् इरयोरेइतिरेभावः हिचेतिनिघाताभावः वरुणादीनामग्न्यायत्तत्वेउपपत्तिमाह—यद्य-स्मात्कारणात् हेअग्ने सीं सर्वतः क्रतुनाकर्मणाविश्वथाविश्वइवविश्वात्मकइवविभुः मित्रार्यमा-त्मनासर्वव्यापीपरिभूःस्वतेजसासर्वतःपरिभावितासन् अनुअनुक्रमेणअजायथाः जायसेप्रा-दुर्भवसि तत्रदृष्टान्तः—अरान् रथस्यचक्रान् नेमिर्न बाह्यवलयइव सयथाव्याप्यतिष्ठति तद्व-दयमग्निर्वरुणादीन्व्याप्यतिष्ठति ॥ ९ ॥

९. अग्निदेव तुम्हारी सहायता से वरुण अपना व्रत धारण करते, मित्र अन्धकार नाश करते और अर्यमा दानशील होते हैं। जैसे रथ का पहिया डाँड़ों को व्याप्त करके रहता है, उसी प्रकार अग्नि ने यज्ञ-कार्य-द्वारा विश्वात्मक, सर्वव्यापी और सबके पराभवकारी होकर जन्म ग्रहण किया है ।

त्वमग्नेशशमानायसुन्वतेरत्नंयविष्ठदेवतातिमिन्वसि ।
तंत्वानुनव्यंसहसोयुवन्वयंभगंनकारेमहिरत्नधीमहि ॥ १० ॥

त्वम् । अग्ने । शशमानाय । सुन्वते । रत्नम् । यविष्ठ । देवऽतातिम् ।
इन्वसि । तम् । त्वा । नु । नव्यम् । सहसः । युवन् । वयम् ।
भर्गम् । न । कारे । महिऽरत्न । धीमहि ॥ १० ॥

हेअग्नेयविष्ठ युवतम त्वं शशमानायत्वां स्तुवते शशमानःशंसमानइतियास्कः । सुन्वते तदर्थमभिषवंकुर्वते यजमानाय तद्यागार्थं रत्नंरमणीयंहविः देवतातिं देवेषुतायमानं विस्तार्य-माणं इन्वसिव्यामोषि अस्मत्प्रत्तंहविः देवान्प्रापयसीत्यर्थः इन्वतिर्व्याप्तिकर्मा इन्वतिनक्षतीति तन्नामसुपाठात् हेसहसोयुवन् युवशब्देनोत्पत्तिर्लक्ष्यते मथनकालेबलेनोत्पन्नबलस्यमिश्रयितः वा यद्वा सहसस्पुत्र युवन् नित्यतरुण महिरत्न अस्मत्प्रदेयमहद्रमणीयधन नव्यं नवतरं स्तु-त्यंवा तंतादृशं हविर्भुजं त्वात्वां वयं यजमानाः कारेशब्देस्तोत्रलक्षणे नुक्षिप्रंधीमहि स्थापया-मः हविःप्रदानसमये क्षिप्रमेवस्तुमइत्यर्थः तत्रदृष्टान्तः—भगंन आदित्यमिव यद्वा महान्तं रा-जानमिव तंयथास्तुवन्तितद्वत् ॥ १० ॥

१०. युवा अग्नि, जो तुम्हारी स्तुति करते और तुम्हारे लिए अभिषव करते हैं, तुम उनका रमणीय हव्य लेकर देवों के पास विस्तार करते हो। हे तरुण, महाधन और बल-पुत्र, तुम स्तवनीय और

हविर्भोक्ता हो। स्तुति-काल में हम राजा को तरह तुम्हें स्थापित करते हैं।

अ॒स्मे र॒यिं न स्व॑र्थं॒ दमू॑नसं॒ भगं॒ दक्षं॒ न प॑पृचासि धर्ण॒सिम्।
र॒श्मीँरि॑व॒ यो यम॑ति॒ जन्म॑नी उ॒भे दे॒वानां॒ शंस॑मृ॒त आ च॑ सु॒क्रतु॑ः॥११॥

अ॒स्मे इति॑। र॒यिम्। न। सु॒ऽअर्थ॑म्। दमू॑नसम्। भग॑म्। दक्ष॑म्। न। प॒पृ॒चा॒सि॒। ध॒र्ण॒सिम्। र॒श्मीन्ऽइ॑व। यः। यम॑ति। जन्म॑नी इति॑। उ॒भे इति॑। दे॒वाना॑म्। शंस॑म्। ऋ॒ते। आ। च॒। सु॒ऽक्रतु॑ः॥११॥

हेअग्ने त्वंअस्मे अस्मासु स्वर्थं सुष्ठुअरणीयं दमूनसं दमनीयं उपास्यं दमेरूनसिरित्यूनसिप्रत्ययः रयिंन पपृचासि धनंयथासंपृणक्षि तथाभगं सर्वैर्भजनीयं दक्षंन उत्साहवन्तं प्रवृद्धंवाधर्णसिं विद्यादिधारणकुशलंपुत्रंयथापपृचासि संपृणक्षि उभयमपिददासीत्यर्थः पृचीसंपर्के लेट्याडागमः बहुलंछन्दसीतिविकरणस्यश्लुः इदानीं परोक्षेणाह—योऽग्निः रश्मींरिव स्वकीयान्रश्मीन्यथायमति नियमयति विस्तारयति तद्वत् सउभेजन्मनी जननाधारभूतावुभौलोकौ यमति नियच्छति तथा सुक्रतुः शोभनकर्मायं ऋते अस्मदीययज्ञे देवानां देवसंबन्धिनंशंसं स्तवंच आयमति आयच्छति सर्वदाददाति यद्वा पूर्वार्धेपपृचासीत्यपिपरोक्षत्वायप्रथमपुरुषतयायोज्यम्॥११॥

११. अग्नि, तुम जैसे हमें अत्यन्त प्रयोजनीय और उपास्य धन देते हो, वैसे ही उत्साही, जन-प्रिय और विद्याध्ययन में चतुर पुत्र दो। जैसे अग्नि अपनी किरणों को विस्तृत करते हैं, वैसे ही अपने जन्माधार (आकाश और पृथिवी) का विस्तार करते हैं। हमारे यज्ञ में यज्ञकर्त्ता अग्नि देवों की स्तुति का विस्तार करते हैं।

अथद्वादशी—

उ॒त नः॑ सु॒द्योत्मा॑ जी॒राश्वो॒ होता॑ म॒न्द्रः शृ॑णवच्च॒न्द्ररथः।
स नो॑ नेष॒न्नेष॑तमै॒रमू॑रो॒ऽग्निर्वा॒मं सु॑वि॒तं वस्यो॒ अच्छ॑॥१२॥

उ॒त। नः॒। सु॒ऽद्योत्मा॑। जी॒रऽअ॑श्वः। होता॑। म॒न्द्रः। शृ॒ण॒व॒त्। च॒न्द्रऽर॑थः। सः। नः॒। ने॒ष॒त्। नेष॑ऽतमैः। अमू॑रः। अ॒ग्निः। वा॒मम्। सु॒वि॒तम्। वस्यः॑। अच्छ॑॥१२॥

उतशब्दोप्यर्थः सचसंभावनायां सोऽग्निः नोऽस्मदीयमाह्वानंउतशृणवत् अपिनामशृणु- यात् यद्वा नोऽस्मान्श्रावयेत् देवेषुमध्येप्रख्यापयेत् शृणोतेर्लेटच्यडागमः कीदृशोऽयं सुद्योत्मा सु- द्योतमानः द्युतदीप्तौ अन्येभ्योऽपिदृश्यन्तइतिमनिन् जीराश्वः शीघ्रगमनाश्वः होतादेवानामाह्वाता मन्द्रः मदनशीलः चन्द्ररथः सुवर्णमयरथोपेतः किंचायं अमूरःअमूढबलः वस्यः वसनीयः सम्प्रसिद्धोऽग्निर्नेषतमैः अत्यर्थंनेतृभिःकर्मभिःस्तोत्रैर्वानोऽस्मान् उतनेषत् अपिनामनयेत् यज्ञस्यपारंप्रापयेत् नयतेर्लेटच्यडागमः सिब्बहुलमितिसिप् किमर्थं वामंवननीयं सुवितं सुष्ठुप्राप्यं सर्वैःकांक्षणीयं स्वर्गंअच्छआभिमुख्येनप्राप्तुंनेषत् ॥ १२ ॥

१२. अग्निदेव प्रकाशशील, द्रुतगामी अश्व से संयुक्त, होता, आनन्द- मय, सोने के रथवाले, अप्रतिहतशक्ति और प्रसन्न-स्वभाव हैं। क्या वे हमारा बुलाना सुनेंगे? वे क्या हमें सिद्धिदाता कर्मद्वारा अनायास लभ्य और अभिवांछित स्वर्ग की ओर ले जायेंगे?

अस्ताव्यग्निःशिमीवद्भिरर्कैःसाम्राज्यायप्रतरंदधानः।

अमीचयेमघवानोवयंचमिहंनसूरोअतिनिष्टतन्युः ॥ १३ ॥ ९ ॥

अस्तावि। अग्निः। शिमीवत्ऽभिः। अर्कैः। साम्ऽराज्याय। प्रऽतरम्। दधानः। अमी इति। च। ये। मघऽवानः। वयम्। च। मिहम्। न। सूरः। अति। निः। ततन्युः ॥ १३ ॥ ९ ॥

अयमग्निः शिमीवद्भिः हविःप्रदानादिकर्मवद्भिरर्कैरर्चनसाधनैर्मंत्रैः अस्तावि स्तुतो- ऽस्माभिर्यजमानैः शिमीतिकर्मनाम शिमीशक्तिरितितन्नामसुपाठात् कीदृशोयं साम्राज्याय साम्राज्यस्येतिकर्मणिषष्ठीस्थानेचतुर्थी सम्यग्राजमानत्वं प्रतरंप्रकृष्टतरं अत्यर्थंदधानः अमुच- च्छन्दसीत्यमुप्रत्ययः किंचेममग्निंअमीचपुरोवर्तमानाऋत्विजः पुत्रादयोवा येवयंचपूर्वैरतोतृत्वेन प्रसिद्धावयमपि अतिअत्यर्थं निष्टतन्युः शब्दयन्तु निष्पूर्वस्तनतिःशब्दकर्मा इतःपरमप्यस्मत् पुत्रपौत्रादयोवयंचाग्निंस्तुमइत्यर्थः तत्रदृष्टान्तः—मिहंनसूरः मिहं मेहनशीलं मेघं यथासूरः सूर्योवृष्ट्यर्थं शब्दयति तद्वत् लिङ्छान्दसोविकरणस्यश्लुः अभिनिसस्तनःशब्दसंज्ञायामि- तिषत्वम् ॥ १३ ॥

१३. हव्य-प्रदान आदि कर्म और पूजा-साधक मन्त्र-द्वारा हमने अग्नि की स्तुति की है। अग्नि अच्छी तरह दीप्ति से युक्त हुए हैं। सारे उपस्थित लोग और हम, जैसे सूर्य मेघ का शब्द उत्पन्न करते हैं। वैसे ही अग्नि को लक्ष्य कर स्तुति करते हैं।

॥ इतिद्वितीयस्यद्वितीयेनवमोवर्गः ॥ ९ ॥

समिद्धइतित्रयोदशर्चंतृतीयंसूक्तम् आनुष्टुभं प्रथमायाःसमिन्नामकोऽग्निर्देवता समिद्धोग्निः द्वितीयादीनांतनूनपान्नराशंसइळोबर्हिर्देवीर्द्वारउषासानक्तादैव्यौहोतारौप्रचेतसौतिस्रोदेव्यःसरस्वतीळाभारत्यःत्वष्टावनस्पतिःस्वाहाकृतिरित्येताःक्रमेणदेवताः अंत्यायाइन्द्रः तिस्रोदेव्यइत्यस्यविवरणंसरस्वतीळाभारत्यइति अत्रानुक्रमणिका—समिद्धआप्रियआनुष्टुभमन्त्यैन्द्रीति अत्रेध्मतनूनपादादिभिर्यज्ञावयववाचिभिर्यज्ञएवोच्यते अतः सएवदेवतेतिकात्थक्यस्यमतं अग्निरेवसमिदादिभिरुच्यते अतःसएवदेवतेतिशाकपूणेर्मतं निरुक्तेकिंदेवताःप्रयाजानुयाजाइति छन्दोदेवताइत्यादिपक्षान्तरंबहुधाप्रदर्श्य तदर्थेब्राह्मणादिचोदाहृत्यइतरेपक्षाअर्थवादाः आग्नेयाएवेतिसिद्धान्दितं। अथकिंदेवताःप्रयाजानुयाजाइत्यादिनापशावंगिरोगोत्रोत्पन्नानांएतदाप्रीसूक्तं एकादशप्रयाजाइतिखण्डेसूत्रितम्—समिद्धोअद्येति सर्वेषांयथर्षिवेत्यत्रयथर्षिग्रहणात्आप्रीसूक्तानित्रिविधानि तत्रवासिष्ठात्रेयवाध्र्यश्वगार्त्समदानिचत्वारिनराशंसवन्ति मैधातिथंदैर्घतमसंप्रैषिकानिनराशंसतनूनपादुभयवन्ति इतराणितनूनपात्वंतीति तत्रैतत्सूक्तंदैर्घतमसत्वात्उभयवत्।

तत्रप्रथमा—

समिद्धोअग्नआवहदेवाँअद्ययतस्रुचे।
तन्तुंतनुष्वपूर्व्यंसुतसोमायदाशुषे॥ १॥

सम्ऽइद्धः। अग्ने। आ। वह। देवान् अद्य। यतऽस्रुचे।
तन्तुम्। तनुष्व। पूर्व्यम्। सुतऽसोमाय। दाशुषे॥ १॥

हेअग्ने समिद्धः सम्यग्दीपितः एतन्नामकस्त्वं अद्यास्मिन्यागदिनेदेवान्हविषांभोक्तृनग्न्यादीनावह अस्मद्यज्ञंप्रतिप्रापय यतस्रुचेयागायोद्यतस्रुचे यजमानायतदर्थं आवाह्यचसुतसोमाययागार्थमभिषुतसोमाय दाशुषेहविर्दत्तवते यद्यपीदानीमेवाहूयन्तेदेवाः तथापि पूर्वानुष्ठानापेक्षयाभाव्यपेक्षयावादाशुषइत्युच्यते हविर्दात्रेवायजमानाय तदर्थंपूर्व्यंपूर्वेभ्योदेवेभ्योहितं पूर्वकालीनंवा तंतुंयज्ञंतनुष्व विस्तारय॥ १॥

**१. हे समिद्ध नाम के अग्नि, जो यजमान स्रुक् ऊंचा किये हुए है, उसके लिए आज तुम देवों को बुलाओ। जिस हव्यदाता यजमान ने होम का अभिषव किया है, उसकी भलाई के लिए पूर्वकालीन यज्ञ विस्तार करो।**

अथद्वितीया—

घृतवन्तमुपमासिमधुमन्तंतनूनपात्।
यज्ञंविप्रस्यमावतःशशमानस्यदाशुषः॥ २॥

---

१ नि०८ २१. २२.। २ नि० ८. २२.।

घृतऽवन्तम् । उप । मासि । मधुऽमन्तम् । तनूऽनपात् ।
यज्ञम् । विप्रस्य । माऽवतः । शशमानस्य । दाशुषः ॥ २ ॥

हेतनूनपात् तनूनपादाज्यमितिकात्थक्यपक्षे तन्वोगावः भोगानांतासुजायमानत्वात्ताभ्यउत्पन्नंक्षीरंक्षीरात्सर्पिरिति आज्यस्यनप्तृत्वं तद्वान्यज्ञः अग्निपक्षे आपस्तन्वउच्यन्ते ताभ्यओषधिवनस्पतयः तेभ्योऽग्निरितिनप्तृत्वं अरणीभ्यामितिभावः एतन्नामक हेअग्ने विप्रस्यमेधाविनः शशमानस्य शंसमानस्य त्वांस्तुवतः दाशुषोहविर्दत्तवतोमावतोमत्सदृशस्य यजमानस्य युष्मदस्मद्भ्यांछन्दसिसादृश्यइतिवतुप् आसर्वनाम्नइत्यात्वं घृतवन्तं क्षरदाज्योपेतं मधुमन्तंमाधुर्योपेतं सोमादिमधुरद्रव्येण तद्वन्तं यज्ञं उपउपेत्य मासि निर्मिमीषे मितोभवसिवा संपूर्तिपर्यन्तं तिष्ठसीत्यर्थः मामानेआदादिकः ॥ २ ॥

२. तनूनपात् नाम के अग्नि, मेरे समान जो हव्यदाता और मेधावी यजमान तुम्हारी स्तुति करता है, उसके घृत और मधु से संयुक्त यज्ञ में आकर यज्ञ-समाप्ति-पर्यन्त रहो।

शुचिःपावकोअद्भुतोमध्वायज्ञंमिमिक्षति ।
नराशंसस्त्रिरादिवोदेवोदेवेषुयज्ञियः ॥ ३ ॥

शुचिः । पावकः । अद्भुतः । मध्वा । यज्ञम् । मिमिक्षति ।
नराशंसः । त्रिः । आ । दिवः । देवः । देवेषु । यज्ञियः ॥ ३ ॥

देवेषुमध्येशुचिः शुद्धोदीप्तोवापावकः अन्नस्यापूतस्यशोधयिता अद्भुतः अभूतइव अद्यक्षणेभविता आश्चर्यभूतइत्यर्थः देवोद्योतनशीलः यज्ञियोयज्ञसंपादनार्हःईदृशोनराशंसः नरैः कर्मनेतृभिःऋत्विग्भिःशंसनीयोऽग्निः दिवोद्युलोकादागत्य मध्वामधुरेणरसेन यज्ञमस्मदीयं त्रिरामिमिक्षतित्रिवारंसमन्तात् सिंचति स्वादयतीत्यर्थःयद्वा मधुरेणफलेन त्रिरामिमिक्षति योजयतीत्यर्थः नराशंसोयज्ञइति कात्थक्यपक्षे यज्ञाभिमानीदेवोद्योतमानः द्युलोकादागत्यानुष्ठीयमानः यज्ञं त्रिरामिमिक्षति अयंनराशंसोदेवः त्रिराउपसर्गवशाद्योग्यक्रियाध्याहारः त्रिवारमागच्छति त्रिराहरतिवाफलं अवशिष्टंपूर्ववन्नेयम् ॥ ३ ॥

३. देवों में स्वच्छ, पवित्र, अद्भुत, द्युतिमान् और यज्ञ-सम्पादक नाराशंस नामक अग्नि द्युलोक से आकर हमारे यज्ञ को मधु से मिश्रित करें।

अथचतुर्थी—

ईळितोअग्नआवहेन्द्रंचित्रमिहप्रियम् ।
इयंहित्वांमतिर्ममाच्छासुजिह्वच्यते ॥ ४ ॥

ईळितः। अग्ने। आ। वह। इन्द्रम्। चित्रम्। इह। प्रियम्।
इयम्। हि। त्वा। मतिः। मम। अच्छ। सुऽजिह्व। वच्यते॥ ४॥

हेअग्ने ईळितः सर्वैःस्तुत्यः इणूनामकस्त्वं इहास्मिन्यज्ञे चित्रं चायनीयं प्रियं प्रीणयितारमस्मान्हविःस्वीकर्तुं वाप्रीतियुक्तमिन्द्रं आवहआह्वय हेसुजिह्व घृतपानेनशोभनज्वाल इयं ममममतिर्मननसाधनास्तुतिरूपावाक् त्वात्वांअच्छआभिमुख्येनप्राप्तुंवच्यते मतिरेवास्मदीयोच्यते हिःपूरणार्थः वचेर्यकि संप्रसारणाच्चेतिपूर्वरूपस्य वाछन्दसीतिविकल्पितत्वादभावेयण् अत्र पुरोडाशादीडभिमानियज्ञपरतयावाव्याख्येयम् एवमुत्तरत्र यज्ञांगैर्यज्ञसंबन्धिदेवताभिश्चयज्ञएवोच्यतइतितत्परत्वेनव्याख्येयम्॥ ४॥

४. अग्नि, तुम्हारा नाम ईलित है। तुम विचित्र और प्रिय इन्द्र को यहाँ ले आओ। सुजिह्व, तुम्हारे लिए मैं स्तोत्र-पाठ करता हूँ।

स्तृणानासोयतस्रुचोबर्हिर्यज्ञेस्वध्वरे।
वृञ्जेदेवव्यचस्तममिन्द्रायशर्मसप्रथः॥ ५॥

स्तृणानासः। यतऽस्रुचः। बर्हिः। यज्ञे। सुऽअध्वरे। वृञ्जे।
देवव्यचःऽतमम्। इन्द्राय। शर्म। सऽप्रथः॥ ५॥

स्वध्वरेशोभनप्रापणीयाद्यवान्तरयागवतियज्ञेसोमयागे बर्हिर्दर्भान्स्तृणानासः आस्तरन्तः यतस्रुचः नियमितजुह्वादिपात्राः ऋत्विजोदेवव्यचस्तमं अतिशयेनदेवगामिनं सप्रथः सर्वतोविस्तीर्णंशर्मसुखसाधनंगृहं इन्द्रायवृंजेविवर्जयन्ति संपादयन्तीत्यर्थः॥ ५॥

५. स्रुक् धारण करनेवाले ऋत्विक् लोग इस यज्ञ में अग्नि-रूप कुश को फैलाते हुए इन्द्र के लिए विस्तीर्ण और सुख-साधक गृह बनाते हैं। इस घर में देवता लोग सदा गमनागमन करेंगे।

अथषष्ठी—

विश्रयन्तामृतावृधःप्रयैदेवेभ्योमहीः।
पावकासःपुरुस्पृहोद्वारोदेवीरसश्चतः॥ ६॥ १०॥

वि। श्रयन्ताम्। ऋतऽवृधः। प्रऽयै। देवेभ्यः। महीः। पावकासः।
पुरुऽस्पृहः। द्वारः। देवीः। असश्चतः॥ ६॥ १०॥

द्वारोदेवीः यज्ञस्यद्वाराभिमानिन्योदेवताविश्रयन्तां विविधंश्रयन्तु विवृताभवन्तु किमर्थंदेवेभ्यः प्रयैप्रयातुं देवानांप्रापणाय प्रयैरोहिष्यैअव्यथिष्यैइतिनिपातितः कीदृश्यस्ताः ऋतावृधः यज्ञस्यवर्धयित्र्यः महीः महत्यः पूज्याः पावकासः शोधयित्र्यः पुरुस्पृहः बहुस्पृहणीयाः असश्चतः असज्यमानाः परस्परविप्रकृष्टाइत्यर्थः ॥ ६ ॥

६. अग्निरूप, यज्ञ का द्वार खोल दो। देवों के आने के लिए यज्ञ-द्वार खोल दो। ये द्वार यज्ञ-वर्द्धक, यज्ञ-शोधक बहुत लोगों के लिए श्लाघ्य और परस्पर असंलग्न हैं।

॥ इतिद्वितीयस्यद्वितीयेदशमोवर्गः ॥ १० ॥

अथसप्तमी—

आभन्दमानेउपाकेनक्तोषासासुपेशसा ।
यह्वीऋतस्यमातरासीदतांबर्हिरासुमत् ॥ ७ ॥

आ । भन्दमाने इति । उपाके इति । नक्तोषसा । सुऽपेशसा ।
यह्वी इति । ऋतस्य । मातरा । सीदताम् । बर्हिः । आ । सुऽमत् ॥ ७ ॥

भन्दमाने सर्वैःस्तूयमाने उपाके परस्परंसंनिहिते सुपेशसा शोभनरूपे पेशइतिरूपनाम यह्वीमहत्यौ अपत्यरूपेवाप्रतिदिनंजायमानत्वात् यह्वुरित्यपत्यनाम यह्वःसूनुरितितन्नामसुपाठात् ऋतस्यमातरायज्ञस्यनिर्मात्र्यौ ताभ्यांआगमनाद्यज्ञस्यसंपूर्तेर्यज्ञमातृत्वमुपचर्यते यद्वा अतिरात्रादीनामहोरात्रसाध्यत्वात् तन्मातृत्वं नक्तोषासा उक्तगुणविशिष्टेअहोरात्रदेवते सुमत् स्वयमेव अस्माभिरप्रार्थिते इत्यर्थः यद्वा सुमत् शोभनमनस्के बर्हिरास्तृतंदर्भं आसमन्तात्सीदतां उपविशतां यद्वा ऋतस्येतिकर्मणिषष्ठी यज्ञमासीदतां आसाद्यचबर्हिरास्तृतंदर्भंस्वयमेवादत्ताम् ॥ ७ ॥

७. सबके स्तुति-पात्र, परस्पर सन्निहित, सुन्दर, महान्, यज्ञ-निर्माता और अग्निरूप रात और उषा स्वयं आकर विस्तृत कुशों के ऊपर बैठें।

अथाष्टमी—

मन्द्रजिह्वाजुगुर्वणीहोतारादैव्याकवी ।
यज्ञंनोयक्षतामिमंसिध्रमद्यदिविस्पृशम् ॥ ८ ॥

मन्द्रऽजिह्वा । जुगुर्वणी इति । होतारा । दैव्या । कवी इति । यज्ञम् ।
नः । यक्षताम् । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् ॥ ८ ॥

मन्द्रजिह्वादेवानां मादनज्वाली जुगुर्वणीभृशंगृणतां स्तुवतां यजमानानां संभक्तारौ यङ्लुगन्तात्किपिच्छान्दसीरूपसिद्धिः तस्मिन्नुपपदे वनतेश्छन्दसिवनसनरक्षिमथामितीन्प्रत्ययः कवी मेधाविनौ क्रान्तदर्शिनौ दैव्याहोतारा देवसंबन्धिनौहोतारौ अयंचमध्यमस्थानश्चेत्युभौ सिध्रंफलसाधनभूतं सिधेःस्फायितंचीत्यादिनारक् दिविस्पृशं द्युलोकवासिदेवान्स्पृशन्तं तैर्हविषः स्वीक्रियमाणत्वादितिभावः ईदृशंनोऽस्मदीयमिमंयज्ञंअद्ययक्षतां अनुतिष्ठतांपूजयतांवा सम्यङ्निर्वाहयतामित्यर्थः ॥ ८ ॥

८. देवों की उन्मादक शिक्षा से युक्त, सदा स्तुतिशील यजमानों के मित्र, अग्निरूप दिव्य दोनों होता हमारे इस सिद्धिप्रद और स्वर्गस्पर्शी यज्ञ का अनुष्ठान करें।

अथनवमी--

शुचिर्देवेष्वर्पिताहोत्रामरुत्सुभारती ।
इळासरस्वतीमहीबर्हिःसीदन्तुयज्ञियाः ॥ ९ ॥

शुचिः । देवेषु । अर्पिता । होत्रा । मरुत्ऽसु । भारती । इळा । सरस्वती । मही । बर्हिः । सीदन्तु । यज्ञियाः ॥ ९ ॥

शुचिः शुद्धा मरुत्सुविरुद्धलक्षणयाअमरणेषुदेवेषु द्योतनशीलेषुस्तोतृषुमरुत्सु ऋत्विक्षुवा अर्पिता नियता होत्राहोमनिष्पादिका भारती भरतस्यादित्यस्य संबन्धिनी द्युस्थानावाक् तथाइलापार्थिवीप्रैषादिरूपामही महती सरस्वती सरइत्युदकनाम तद्वती स्तनितादिरूपामाध्यमिकाचवाक् एतास्तिस्रः त्रिस्थानवागभिमानिदेवताः यज्ञियायज्ञार्हाःसत्यः बर्हिःस्तीर्णंसीदन्तु उपविशन्तु तिस्रइत्यत्रतिसृभ्योजसइतिजसउदात्तत्वम्॥ ९ ॥

९. शुद्ध, देवों की मध्यस्था, होम-सम्पादिका भारती (स्वर्गस्थ वाक्), इला (पृथिवीस्थ वाक्) और सरस्वती (अन्तरिक्षस्थ वाक्)--ये अग्नि की तीनों मूर्तियाँ यज्ञ के उपयुक्त होकर कुशों पर बैठें।

तन्नस्तुरीपमद्भुतंपुरुवारंपुरुत्मना ।
त्वष्टापोषायविष्यंतुरायेनाभानोअस्मयुः ॥ १० ॥

तत् । नः । तुरीपम् । अद्भुतम् । पुरु । वा । अरम् । पुरु । त्मना । त्वष्टा । पोषाय । वि । स्यतु । राये । नाभा । नः । अस्मऽयुः ॥१०॥

नः अस्मदर्थं तव तादृशंतुरीयं तूर्णंव्यापि अद्भुतं सद्यआविर्भवत् अभूतमिवसत् यद्वा महन्नामैतत् सारतो महत् पुरुवारं बहूनांप्राणिनां अर्थायैव अरंअलंसमर्थं यद्वा पुरुवारं बहुप्रभूतंच वाशब्दश्चार्थे अरं अलं त्मना आत्मना पुरुबहु क्रियाविशेषणमेतत् ईदृशमुदकं त्वष्टा वृष्ट्यादेःकर्ता त्वष्टृशब्दोयास्केनैवंव्याख्यातः—त्वष्टातूर्णमश्नुतइतिनैरुक्तास्त्विषेर्वास्याद्दीप्तिकर्मणस्त्वक्षतेर्वास्यात्करोतिकर्मणइति । एतन्नामकोवैद्युतोऽग्निः अस्मयुरस्मान्कामयमानः देवोनःपोषायअस्मत्पुष्ट्यैराये समृद्धयेच नाभानाभौ वृष्टेर्बन्धकेमेघस्यनाभिस्थानेवस्थितंउक्तलक्षणमुदकं विष्यतु विविधंगमयतु षोऽन्तकर्मणि ओतःश्यनीत्योकारलोपः उपसर्गात्सुनोतीतिषत्वं यद्वा नोनाभा अस्मत्संबन्धियज्ञनाभावुत्तरवेद्यांराये षष्ठ्यर्थेचतुर्थी रायोगवादिधनस्य पोषायपुष्ट्ये स्यतिरुपसृष्टोविमोचनार्थः उक्तलक्षणांवृष्टिंमुंचतु ॥ १० ॥

१०. त्वष्टा हमारे मित्र हैं। वे स्वयं, अच्छी तरह, हमारी पुष्टि और समृद्धि के लिए, मेघ के नाभिस्थित, व्याप्त अद्भुत और असंख्य प्राणियों की भलाई करनेवाला जल बरसायें।

अवसृजन्नुपत्मनादेवान्यक्षिवनस्पते ।
अग्निर्हव्यासुषूदतिदेवोदेवेषुमेधिरः ॥ ११ ॥

अवऽसृजन् । उप । त्मना । देवान् । यक्षि । वनस्पते । अग्निः ।
हव्या । सुसूदति । देवः । देवेषु । मेधिरः ॥ ११ ॥

हेवनस्पते वनानांपालक यूपाभिमानिदेवाग्ने अवसृजन् स्वैरंवर्तयन् ऋत्विजः स्वस्वकर्मसुव्यापारयन् त्मनाआत्मनादेवान् हविर्भुजः उपयक्षि उपेत्ययज बहुलंछन्दसीतिशपोलुक् देवोद्योतमानः मेधिरोमेधावान् अग्निराहवनीयोदेवेषूभयेषांमध्येहव्याहवींषि सुसूदति प्रेरयतिस्वीकरोति षूदक्षरणे बहुलंछन्दसीतिशपःश्लुः लेटोडाटावित्यडागमः यद्वा यूपाग्निरेवपरोक्षेणोच्यते सोऽग्निर्हवींषिसुष्ठुस्वीकरोति ॥ ११ ॥

११. हे अग्निरूप वनस्पति, इच्छानुसार ऋत्विकों को भेजकर, स्वयं देवों का यज्ञ करो। द्युतिमान् और मेधावान् अग्नि देवों के बीच हव्य भेजें।

अथद्वादशी—

पूषण्वतेमरुत्वतेविश्वदेवायवायवे ।
स्वाहागायत्रवेपसेहव्यमिन्द्रायकर्तन ॥ १२ ॥

---

१ नि० ८ १३ ।

पू॒ष॒ण्ऽव॑ते । म॒रुत्व॑ते । वि॒श्वऽदे॑वाय । वा॒यवे॑ । स्वाहा॑ ।
गा॒य॒त्रऽवे॑पसे । ह॒व्यम् । इन्द्रा॑य । क॒र्त॒न ॥ १२ ॥

पूषणवते पूष्णातद्वते अनोनुडितिनुट् ह्रस्वनुड्भ्यांमतुबितिमतुपउदात्तत्वं मरुत्वते मरुद्भिस्त-द्वते विश्वदेवाय सर्वदेवसंघाय वायवे गमनशीलाय वायुदेवायच तथा गायत्रवेपसे वेपइतिरू-पनाम गायत्रशब्दइतरसामोपलक्षणः गायत्रं वेपःरूपंयस्य तादृशायेन्द्राय हव्यंहविःप्रदातुं स्वाहाकर्तन स्वाहाकारंकुरुत ऋत्विजः करोतेर्लोटि तप्तनप्तनथनाश्चेतितनबादेशः ॥ १२ ॥

१२. उषा और मरुतों से युक्त विश्वदेवगण, वायु और गायत्री-शरीर इन्द्र को लक्ष्य कर, हव्य देने के लिए, अग्निरूप स्वाहा शब्द का उच्चारण करो।

अथत्रयोदशी—

स्वाहा॑कृता॒न्या ग॒ह्युप॑ ह॒व्यानि॑ वी॒तये॑ ।
इन्द्रा ग॑हि श्रु॒धी हवं॑ त्वां॑ ह॒वन्ते अ॒ध्व॒रे ॥ १३ ॥ ११ ॥

स्वाहा॑ऽकृतानि । आ । ग॒हि॒ । उप॑ । ह॒व्यानि॑ । वी॒तये॑ । इन्द्र॑ ।
आ । ग॒हि॒ । श्रु॒धि । हव॑म् । त्वाम् । ह॒वन्ते॒ । अ॒ध्व॒रे ॥ १३ ॥ ११ ॥

हेइन्द्र स्वाहाकृतानि स्वाहेत्येवंपूर्वाकृतिःकरणमुच्चारणं यक्ष्यमाणदेवतानांताःस्वाहा-कृतयः तद्वन्तिहव्यानि हवींषि अन्नप्रयाजेषुवषट्कारप्रदानात्स्वाहाकृतं हविरित्यर्थः तद्धविः उपउपेत्य वीतयेभक्षणाय आगहि आगच्छ गमेश्छान्दसःशपोलुक् अनुदात्तोपदेशेत्यादि-नानुनासिकलोपः तथा हेइन्द्र आगहि स्तोत्राण्यभिलक्ष्यागच्छ आगत्यहवंअस्मदीयमाह्वानं श्रुधिशृणु यतस्त्वां अध्वरे अहिंसात्मकेयागेहवन्ते आह्वयन्तिऋत्विजः अतः श्रुधि ह्वयतेर्ब-हुलंछन्दसीतिसंप्रसारणम् ॥ १३ ॥

१३. इन्द्र, हमारा स्वाहाकार-युक्त हव्य खाने के लिए आओ। ऋत्विक् लोग यज्ञ में तुम्हें बुलाते हैं।

॥ इतिद्वितीयस्यद्वितीयेएकादशोवर्गः ॥ ११ ॥

प्रतव्यसीमित्यष्टर्चंचतुर्थंसूक्तंदैर्घतमसं तथाचानुक्रान्तम् प्रतव्यसीमष्टावाग्नेयंतुतत्रिष्टुबन्त-मिति तुतदित्युक्तत्वात् इदमादिसूक्ताष्टकस्याग्निर्देवता अन्त्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषयाज-गत्यः प्रातरनुवाकाश्विनशस्त्रयोरुक्तोविनियोगः अग्निष्टोमेआग्निमारुतेशस्त्रे इदंसूक्तंजातवेदस्य निविद्धानीयं अथयथेतमितिखण्डेसूत्रितम्—प्रतव्यसींनव्यसीमापोहिष्ठेतितिस्रइति । दशरात्र-

स्यप्रथमेप्यहनि जातवेदस्यनिविद्धानम् आश्वमेधिकेमध्यमेहनिचनिविद्धानं तथाचाचार्योऽ-तिदेशऐकाहान्युपसंशस्य तेषुनिविदोदध्यादेवमेवाग्निमारुतइति ।

तत्रप्रथमा—

प्रतव्यसींनव्यसींधीतिमग्नयेवाचोमतिंसहसःसूनवेभरे ।
अपांनपाद्योवसुभिःसहप्रियोहोतापृथिव्यांन्यसीददृत्वियः ॥१॥

प्र । तव्यसीम् । नव्यसीम् । धीतिम् । अग्नये । वाचः । मतिम् ।
सहसः । सूनवे । भरे । अपाम् । नपात् । यः । वसुऽभिः । सह ।
प्रियः । होता । पृथिव्याम् । नि । असीदत् । ऋत्वियः ॥ १ ॥

अहंअग्नये प्रतव्यसीं तवीयसीं अतिशयेनवर्धयित्रीं तवतिर्वृद्ध्यर्थःसौत्रोधातुः अ-स्माचृजन्ताच्छन्दसीतीयसुन् तुरिष्ठेमेयःस्वितितृलोपःछान्दसईकारलोपः नव्यसींनवतरांअपू-र्वांधीतिं यागलक्षणांउक्तगुणकंकर्मप्रभरे प्रकर्षेणकरोमि तथोक्तलक्षणांवाचोमतिं स्तुतिरूपंक-र्मभरे कीदृशायाग्नये सहसोबलस्यसूनवे पुत्राय किंच योऽग्निरपांनपात् तासांनप्ता अद्भ्यओष-धयः ओषधीभ्योग्निरित्यग्नेर्नप्तृत्वं अथवा अपांनपातयितावैद्युताग्निरूपेणप्रवर्षकत्वादितिभावः तथा प्रियोयजमानस्यप्रीणयिताप्रियतमोवातस्यहोवाहोमनिष्पादकः सोऽग्निःऋत्वियः प्राप्त-कालः प्राप्तप्रदानसमयःसन् पृथिव्यां वेदिलक्षणायां वसुभिः निवासयोग्यैर्गवादिधनैः सह-सहितोन्यसीदत् नितरांसीदति ॥ १ ॥

१. अग्नि बल के पुत्र, जल के नप्ता, यजमान के प्रियतम और होम के सम्पादक हैं। वे यथासमय, धन के साथ वेदी पर बैठते हैं। उनके लिए मैं यह नया और शुभफलवर्द्धक यज्ञ आरम्भ करता और स्तुति-पाठ करता हूँ।

अथद्वितीया—

सजायमानःपरमेव्योमन्याविरग्निरभवन्मातरिश्वने ।
अस्यक्रत्वासमिधानस्यमज्मनाप्रद्यावाशोचिःपृथिवीअरोचयत्॥२॥

सः । जायमानः । परमे । विऽओमनि । आविः । अग्निः । अभवत् ।
मातरिश्वने । अस्य । क्रत्वा । सम्ऽइधानस्य । मज्मना । प्र ।
द्यावा । शोचिः । पृथिवी इति । अरोचयत् ॥ २ ॥

सपूर्वोक्तोऽग्निः जायमानः अरणीभ्यामुत्पद्यमानः काष्ठेषुवाप्रादुर्भूतःसन् तदानीमेव परमेउत्कृष्टेव्योमनि विविधरक्षणवति वेदिदेशेमातरिश्वनेअंतरिक्षसंचारिणेवायवेप्रथममाविरभवत् प्रत्यक्षोभूत् त्वमग्नेप्रथमोमातरिश्वनआविर्भवेत्यादिश्रुत्यंतरप्रसिद्धेः। वायुसंयोगात्प्रज्वलितइत्यर्थः अथवा मातरिफलस्यनिर्मातरियज्ञेश्वसितिचेष्टतइतिमातरिश्वा यजमानः तदर्थं किंच समिधानस्यइंधनैः सम्यग्वर्धमानस्यास्याग्नेः मज्मनाबलनामैतत् बलवता क्रत्वाक्रतुनाकर्मणाज्वालनादिव्यापारेण शोचिः द्यावापृथिवी द्यांचपृथिवींच प्रारोचयत् प्रकर्षेणादीपयत् मध्येशोचिःशब्दश्छान्दसः मज्मनाक्रत्वासमिधानस्येतिवायोज्यं प्रबलेनसमिन्धनादिव्यापारेणसमिध्यमानस्येत्यर्थः॥ २॥

२. परम आकाश-देश में उत्पन्न होकर अग्नि सबसे पहले मातरिश्वा या वायु के पास प्रकट हुए। अनन्तर इन्धन-द्वारा अग्नि बढ़े और प्रबल कर्म-द्वारा उनकी दीप्ति से द्यावापृथिवी प्रदीप्त हुई।

अस्यत्वेषाअजराअस्यभानवःसुसंदृशःसुप्रतीकस्यसुद्युतः।
भात्वक्षसोअत्यक्तुर्नसिन्धवोअग्नेरेजन्तेअसंसन्तोअजराः॥ ३॥

अस्य। त्वेषाः। अजराः। अस्य। भानवः। सुऽसन्दृशः।
सुऽप्रतीकस्य। सुऽद्युतः। भाऽत्वक्षसः। अति। अक्तुः। न।
सिन्धवः। अग्नेः। रेजन्ते। असंसन्तः। अजराः॥ ३॥

अस्यस्तूयमानस्याग्नेः त्वेषाः दीप्तयः अजराः जरारहिताः अजीर्णाः अविरताइत्यर्थः नञोजरमरेत्यादिनोत्तरपदाद्युदात्तत्वं तथा सुप्रतीकस्यशोभनमुखस्याग्नेर्भानवोरश्मयः दीप्तेरुक्त्वादत्रविस्फुलिङ्गाअवगन्तव्याः तेचसुसंदृशः सुष्ठुसम्यक्द्रष्टारः सर्वतोव्याप्ताइत्यर्थः सुद्युतः सुष्ठुसर्वतोद्योतमानाः तथाअस्याग्नेः भात्वक्षसः त्वक्षइतिबलनाम त्वक्षः शर्धइतिबलनामसुपाठात् भासमानबलाः अक्तुरितिरात्रिनामैतत् अक्तुः ऊर्म्येतितन्नामसूक्तत्वात् द्वितीयार्थेप्रथमा अक्तुंजगदंजकंनैशंतमः अतिअतिक्रम्य सिंधवः स्यन्दमानाः सर्वत्रव्याप्नुवन्तः असंसन्तः स्वव्यापारेष्वस्वपन्तः अविरताः अतएवाजराः रश्मयः नरेजन्ते नकंपन्ते दाहपाकादिषु नचलन्तिनचाल्यन्ते वान्यैः यद्वा नशब्दोदृष्टान्तवचनः भात्वक्षसः भाएवत्वक्षोबलंयस्यतादृशस्यादित्यस्यसिन्धवोन रश्मयइवतेयथास्यन्दनशीलाः व्याप्तिमन्तः अक्तुरिति अंजकंतमः अतिक्रम्य यथाअसंसन्तोरेजन्तेतद्वद्भात्वक्षसोस्याग्नेरुक्तलक्षणादीप्तयोपिसर्वत्ररेजंते कंपंते व्याप्नुवन्तीत्यर्थः॥ ३॥

३. अग्नि की दीप्ति से सबका नाश नहीं होता। सुदृश्य अग्नि के सारे स्फुलिङ्ग चारों ओर प्रकाशमान और विलक्षण बलशाली हैं। रात्रि का अन्धकार नष्ट करके सदा जाग्रत् और अजर, अग्नि-शिखायें कभी नहीं काँपतीं।

अथचतुर्थी–

यमेरिरेभृगवोविश्ववेदसंनाभापृथिव्याभुवनस्यमज्मना ।
अग्निंतंगीर्भिर्हिनुहिस्वआदमेयएकोवस्वोवरुणोनराजति ॥ ४ ॥

यम् । आऽईरिरे । भृगवः । विश्वऽवेदसम् । नाभा । पृथिव्याः । भुवनस्य । मज्मना । अग्निम् । तम् । गीःऽभिः । हिनुहि । स्वे । आ । दमे । यः । एकः । वस्वः । वरुणः । न । राजति ॥ ४ ॥

विश्ववेदसं सर्वधनं वेदइतिधननाम वेदः वरिवइतितन्नामसुपाठाव् तादृशंयमग्निं भृगवः भृगुगोत्रोत्पन्नाः पापस्यभर्जकाः पृथिव्यावेद्याः एकदेशेकृत्स्नशब्दः यद्वा एतावतीवैपृथिवीत्यादिश्रुतेः वेद्याःपृथिवीत्वं तस्यानाभानाभौउत्तरवेद्यांभुवनस्यभूतजातस्य मज्मनाबलेन निमित्तेन आआभिमुख्येन ईरिरेईरितवन्तः स्थापितवन्तः तमग्निंस्वेस्वकीयेदमेगृहेउत्तरवेद्यांगीर्भिः स्तुतिभिः आहिनुहिप्रामुहि हिगतौवृद्धौच उतश्चप्रत्ययाच्छन्दसिवावचनमितिहेर्लुगभावः योऽग्निः एकः मुख्यःसन् एकएववा वस्वोवसुनः गवादिधनस्यराजति ईश्वरोभवति प्रदातुमितिशेषः राजतीत्यैश्वर्यकर्मा क्षियतिराजतीतितन्नामसुपाठाव् तत्रदृष्टान्तः–वरुणोन वारकआदित्यइव सयथा सर्वस्येष्टेतद्वव् ॥ ४॥

४. भृगुवंशोत्पन्न यजमानों ने अपने सामने जीवों के बल के लिए उत्तर वेदी पर जिन संवर्धनशाली अग्नि को स्थापित किया है, अपने घर में ले जाकर उनकी स्तुति करो। अग्नि प्रधान हैं और वरुण की तरह सारे धनों के ईश्वर हैं।

अथपञ्चमी–

नयोवरायमरुतामिवस्वनःसेनेवसृष्टादिव्यायथाशनिः ।
अग्निर्जम्भैस्तिगितैरत्तिभर्वतियोधोनशत्रून्त्सवनान्यृञ्जते ॥ ५ ॥

न । यः । वराय । मरुताम्ऽइव । स्वनः । सेनाऽइव । सृष्टा । दिव्या । यथा । अशनिः । अग्निः । जम्भैः । तिगितैः । अत्ति । भर्वति । योधः । न । शत्रून् । सः । वना । नि । ऋञ्जते ॥ ५ ॥

१ तै० सं० २. ६. ४.

योऽग्निर्वराय वरणायनिग्रहायशक्तोनभवति तत्रदृष्टान्तत्रयमुच्यते—मरुतांस्वनइव स-यथाग्राह्यस्तद्वत् तथासृष्टावैरिक्षयार्थंप्रबलेनाभिसृष्टासेनेवसायथान्यैरनिरोध्यातद्वत् तथा दि-व्यादिविभवाअशनिर्यथा पतत्येवननिवार्यते तद्वत् ईदृक्सामर्थ्यमस्तीतिदर्शयति अयमग्निस्ति गितैर्निशितैः तीक्ष्णीभूतैः अन्त्यविकारश्छान्दसः जंभैःदन्तैः दन्तस्थानीयाभिर्ज्वालाभिः अत्तिअस्मद्विरोधिनोभक्षयति तथाभर्वति हिनस्ति भर्वहिंसायां यास्कस्त्वाह—भर्वतिरत्तिक-र्मेति[1] । यद्यपि अत्तिभर्वत्योरदनमेवार्थः तथापितदवान्तरभेदोवगन्तव्यः तत्रदृष्टान्तः—योधो-न संप्रहर्ताशूरइव सयथा शत्रून् भर्वतिभक्षयति तद्वत् किंच सोऽग्निः वना वनानि वृक्षादिसमू-हान्‌ऋंजते नितरां प्रसाधयति दहतीत्यर्थः ऋंजतिःप्रसाधनकर्मेतियास्कः ॥ ५ ॥

५. जैसे वायु के शब्द, पराक्रमी राजा की सेना और द्युलोक में उत्पन्न वज्र का कोई निवारण नहीं कर सकता, उसी प्रकार जिन अग्नि का कोई निवारण नहीं कर सकता, वे ही अग्नि, वीरों की तरह, तीखे दाँतों से शत्रुओं का भक्षण और विनाश तथा वनों का दहन करते हैं।

कुविन्नो॑अ॒ग्निरु॒चथ॑स्य॒वीर॒सद्वसु॑ष्कु॒विद्वसु॑भिः॒काम॑मा॒वर॑त् ।
चो॒दः कु॒वित्तु॑तु॒ज्यात्सा॒तये॒धिय॒ः शुचि॑प्रतीकं॒तम॒या धि॒या गृ॑णे ॥६॥
कुवित् । नः । अ॒ग्निः । उ॒चथ॑स्य । वीः । अस॑त् । वसुः । कु॒वित् । वसु॑ऽभिः ।
काम॑म् । आ॒ऽवर॑त् । चो॒दः । कु॒वित् । तु॒तु॒ज्यात् । सा॒तये॑ । धिय॑ः ।
शुचि॑ऽप्रतीकम् । तम् । अ॒या । धि॒या । गृ॒णे ॥ ६ ॥

अयमग्निर्नोऽस्माकं उचथस्य उक्थस्य स्तोत्रस्य कुवित् बहुवारंवीः कामयिताअसत् भवतु अस्तेर्लेटचडागमः यद्वा उचथस्य एतन्नामकस्यमहर्षेः गोत्रप्रभवस्यनइतिसंबन्धः तथा वसुर्वासयितासर्वेषांवसुस्थानीयोवा वसुभिर्वासयितृभिः धनैःकामंअत्यर्थंअभिमतंवाकुवित् अतिप्रभूतं आवरत् आवृणोतु अभिमतप्रदानेनकामंनिवर्तयत्वित्यर्थः वृणोतेर्लेटचडागमः छा-न्दसोविकरणस्यलुक् अयमग्निःचोदः अस्माकंकर्मसुप्रेरकःसन् धियःकर्माणिसातयेलाभाय कुवित् बहुतुतुज्यात् त्वरयतु प्रेरयत्वित्यर्थः तुजिःप्रेरणार्थः छान्दसःशपःश्लुः शुचिप्रतीकं शो-भनावयवं शोभनज्वालंतमग्निं अयाधिया अनयास्तुतिरूपयाप्रज्ञयागृणे उच्चारयामि स्तौ-मीत्यर्थः ॥ ६ ॥

६. अग्निदेव बार-बार हमारे उक्त स्तोत्र को सुनने की इच्छा करें। धनशाली अग्नि, धन-द्वारा बार-बार हमारी इच्छा पूरी करें। यज्ञ-प्रवर्त्तक अग्नि, यज्ञ-लाभ के लिए, हमें बार-बार प्रेरित करें—मैं ऐसी स्तुति-द्वारा सुदृश्य अग्नि की स्तुति करता हूँ।

अथसप्तमी—

घृतप्रतीकंवऋतस्यधूर्षदमग्निंमित्रंनसमिधानऋञ्जते ।
इन्धानोअक्रोविदथेषुदीद्यच्छुक्रवर्णामुदुनोयंसतेधियम् ॥ ७ ॥

घृतऽप्रतीकम् । वः । ऋतस्य । धूःऽसदम् । अग्निम् । मित्रम् । न । समऽइधानः । ऋञ्जते । इन्धानः । अक्रः । विदथेषु । दीद्यत् । शुक्रऽवर्णाम् । उत् । ऊम् इति । नः । यंसते । धियम् ॥ ७ ॥

घृतप्रतीकंघृतोपक्रमं प्रयाजादिष्वाज्यैर्हूयमानत्वात् यद्वा प्रतीकमङ्गंदीप्तज्वालमित्यर्थः किंभूतं वोयुष्मत्संबन्धिनःऋतस्ययज्ञस्यधूर्षदंधुरिनिर्वहणेसीदन्तं यज्ञनिर्वाहकमग्निंमित्रंनमित्रमिव समिधानः इध्मैर्दीप्यमानः यजमानःऋञ्जते प्रसाधयति ऋञ्जतिःप्रसाधनकर्मा किंच इन्धानः सम्यक्दीप्यमानः अक्रःज्वालासमिदादिभिराक्रान्तः अन्यैरनुक्रान्तोवा क्रमेश्छान्दसोडः विदथेषु यज्ञेषुवेदयतु स्तोत्रेषु निमित्तभूतेषुदीद्यत् स्वयंदीप्यमानोऽस्मदीयांधियंप्रज्ञांयागादिविषयां शुभ्रवर्णां निर्मलांज्योतिष्टोमादिकर्मवाउदुयंसते उद्योतयत्येव यमेर्लेट्यडागमः सिप् उशब्दोवधारणे धीरितिकर्मनाम धीःशमीतितन्नामसुपाठात् ॥ ७ ॥

७. तुम्हारे यज्ञ-निर्वाहक और प्रदीप्त अग्नि को, मित्र की तरह, जलाकर विभूषित किया जाता है। अच्छी तरह चमकती ज्वालावाले अग्नि यज्ञस्थल में प्रदीप्त होकर हमारी विशुद्ध यज्ञ-विषयक बुद्धि को प्रबुद्ध करते हैं।

अप्रयुच्छन्नप्रयुच्छद्भिरग्नेशिवेभिर्नःपायुभिःपाहिशग्मैः ।
अदब्धेभिरदृपितेभिरिष्टेनिमिषद्भिःपरिपाहिनोजाः ॥ ८ ॥ १२ ॥

अप्रऽयुच्छन् । अप्रयुच्छत्ऽभिः । अग्ने । शिवेभिः । नः । पायुऽभिः । पाहि । शग्मैः । अदब्धेभिः । अदृपितेभिः । इष्टे । अनिमिषत्ऽभिः । परि । पाहि । नः । जाः ॥ ८ ॥ १२ ॥

हेअग्नेअप्रयुच्छन् अस्मास्वप्रमाद्यन् युच्छप्रमादे अविच्छिन्नप्रवृत्तिःसन् अप्रयुच्छद्भिः अप्रमाद्यद्भिःअनवधानरहितैः शिवेभिः मङ्गलकल्याणैःशग्मैः सुखकरैः पायुभीरक्षणप्रकारैर्नोस्मान्पाहिरक्ष किंच हेइष्टेसर्वैःएषणीय अग्ने जाःजायमानः अस्माभिर्दीप्यमानःसन् अदब्धेभिरहिंसितैः अदृपितेभिः केनचिदप्यपरिभूतैः दृपदंपउत्क्लेशे तौदादिकः अनिमिषद्भिः नि

मेषरहितैः अनलसस्वभावैःईदृशैर्लक्षणैर्नोऽस्मान्परि परितः पाहिपालय यद्वा उपर्युपरिजायन्तइतिजाः नोजाःअस्मत्सबंन्धिनीःपुत्रपौत्रादिरूपाः प्रजाः परिपाहि परितोरक्ष नकेवलमस्मान् किंतु अस्मत्पुत्रपौत्रादीनपिरक्ष ॥ ८ ॥

८. अग्निदेव, हमारे ऊपर अनुग्रह करके सदा अवहित, माङ्गलिक और सुखकर आश्रय देकर, हमारी रक्षा करो। सर्वजलवाञ्छनीय अग्नि, उत्पन्न होकर तुम हिंसा-रहित अजेय और एकनिष्ठ भाव से हमारी रक्षा भली भांति करो।

एतिप्रहोतेतिसप्तर्चंपंचमंसूक्तं दैर्घतमसंजागतं पूर्वत्राग्नेयंतुतदित्युक्तत्वाद् इदमप्याग्नेयं तथाचानुक्रमणिका—एतिप्रसप्तजागतमिति प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगउक्तः।

एतिप्रहोताव्रतमस्यमाययोर्ध्वांदधानःशुचिपेशसंधियम् ।
अभिस्रुचःक्रमतेदक्षिणावृतोयाअस्यधामप्रथमंहनिंसते ॥ १ ॥

एति । प्र । होता । व्रतम् । अस्य । मायया । ऊर्ध्वाम् । दधानः । शुचिऽपेशसम् । धियम् । अभि । स्रुचः । क्रमते । दक्षिणाऽआवृतः । याः । अस्य । धाम । प्रथमम् । ह । निंसते ॥ १ ॥

अयं होता होमनिष्पादकोऽध्वर्युरस्याग्नेर्व्रतं हविःप्रदानादिरूपं कर्मकर्तुंमायया कर्तव्यविशेषप्रज्ञयायुक्तःसन्प्रैति प्रकर्षेणगच्छतिहोतुं मायेतिप्रज्ञानाम मायावयुनमितितन्नामसुपाठात् कीदृशोऽयं ऊर्ध्वां उपर्यारूढां शुचिपेशसं शोभनरूपोपेतां पेशइतिरूपनाम धियं प्रज्ञांदधानः धारयमाणः आचतुर्थात्कर्मणोभिसमीक्ष्येतेदंकरिष्यतीत्युक्तत्वात् आगत्यच दक्षिणावृतः प्रादक्षिण्येनवर्तमानाः स्रुचःजुह्वादीः क्रमतेगृह्णाति कीदृश्यःस्रुचः याःप्रथमंपात्रासादनकालेअस्याग्नेर्धामस्थानं निंसते निंसचुंबनेइतिधातुः चुंबन्तिभजन्तइत्यर्थः प्रथममनुष्ठेयकर्म बुध्वाप्रैति पश्चात्स्रुचः क्रमतइत्यर्थः हशब्दःप्रसिद्धौ यद्वा होतादेवानामाह्वातायमग्निःअस्ययजमानस्यव्रतंकर्मज्योतिष्टोमादिप्रज्ञाविशेषेणयुक्तःसन् एति यज्ञदेशंप्रत्यागच्छति कीदृशोऽयंऊर्ध्वां ऊर्ध्ववर्तिंशुचिपेशसं शोभनरूपोपेतांधियंज्वालाचलनादिरूपंकर्मदधानोधारयमाणः आगत्यच दक्षिणावृतः उक्तलक्षणाःस्रुचः घृतपूर्णाः जुहूपभृदादिकाः अभिक्रमतेआक्रमते घृतंस्वीकर्तुंज्वालाःप्रसर्पन्तीत्यर्थः याः स्रुचः प्रथमं पूर्वंहविरासादनकाले अस्याग्नेर्धामस्थानं वेदिलक्षणं[illegible] चुंबन्तिप्राप्ताः हशब्दःप्रसिद्धौ णिसिचुंबने अदादित्वाच्छपोलुक् इदित्वान्नुम् ॥ १ ॥

१. बहुदर्शी होता, अपनी उच्च और शोभन बुद्धि के बल से अग्नि की सेवा करने के लिए जा रहे हैं और प्रदक्षिणा करके स्रुक् धारण कर रहे हैं। ये स्रुक् अग्नि में प्रथम आहुति देते हैं।

अथद्वितीया—

अभीमृतस्यदोहनाअनूषतयोनौदेवस्यसदनेपरीवृताः ।
अपामुपस्थेविभृतोयदावसदधस्वधाअधयद्याभिरीयते ॥ २ ॥

अभि । ईम् । ऋतस्य । दोहनाः । अनूषत । योनौ । देवस्य ।
सदने । परिऽवृताः । अपाम् । उपऽस्थे । विऽभृतः । यत् । आ ।
अवसत् । अध । स्वधाः । अधयत् । याभिः । ईयते ॥ २ ॥

ऋतस्योदकस्यदोहनाः धारायोनौउत्पत्तिस्थाने देवस्यसदने द्योतमानस्यादित्यस्यस्थाने परीवृताः तद्रश्मिभिःपरितोव्याप्ताःसत्यः ईमेनमग्निंअभ्यनूषत अभिनवाभवन्ति आभवन्त्येवस्तुयन्तेवा कदेत्यतआह—यत् यदाअपामुपस्थे उदकानामुत्सङ्गेअन्तः विभृतः विशेषेण ताभिर्धार्यमाणःसन् आवसत् आक्रम्यनिवसति अयमग्निः तदानीमित्यर्थः अधअधुनास्वधाः अमृतोपमाः अपः अधयत् पिबति सर्वोलोकः ताविशेष्यन्ते याभिः सहईयते अयमग्निः संगच्छतेवाभूमिताअधयत् विद्युदात्मनाउदकानि जगत्पाययतइत्यग्नेःस्तुतिः ॥ २ ॥

२. सूर्यकिरणों में चारों ओर फैली जल-धारा, उनकी उत्पत्ति के स्थान सूर्य-लोक में फिर नई होकर उत्पन्न होती है। जिस समय जिसकी गोद में आदर के साथ अग्नि रहते हैं उसी समय लोग अमृतमय जल पीते एवं अग्नि, विद्युत् अग्नि के रूप में, मिलते हैं।

युयूषतःसवयसातदिद्वपुःसमानमर्थंवितरित्रतामिथः ।
आदींभगोनहव्यःसमस्मदावोळ्हुर्नरश्मीन्त्समयंस्तसारथिः ॥ ३ ॥

युयूषतः । सऽवयसा । तत् । इत् । वपुः । समानम् । अर्थम् ।
विऽतरित्रता । मिथः । आत् । ईम् । भगः । न । हव्यः । सम् ।
अस्मत् । आ । वोळ्हुः । न । रश्मीन् । सम् । अयंस्त । सारथिः ॥ ३ ॥

सवयसासमानवयस्कौ वयःशब्देनसामर्थ्यंलक्ष्यते समानसामर्थ्यौ तदित् तदानीमेव यदाप्रवृद्धोभवति तदानीमेव समानमर्थं समानप्रयोजननिष्पत्तिं मिथः प्रत्येकंवितरित्रताभृशं तरन्तौहोत्रध्वर्यू वपुः अग्नेःशरीरं युयूषतः स्वस्वव्यापारेणमिश्रयितुमिच्छतः प्रैषानन्तरंयाज्यादिपाठोहोतुर्व्यापारः वषट्कारानंतरंहोमोध्वर्योरितिविभागः अत्रेदमनुसंधेयं—सवयसा समानवयस्कौ मिथः प्रत्येकंसमानंप्रयोजनं सुखप्राप्तिंवितरित्रता विशेषेणतरितुमिच्छन्तौ तरतेर्यङ्लुगन्ताच्छतरिदाधर्त्यादौनिपात्यते द्विवचनस्याकारः जायापतीतद्वपुः तदेवपरस्परंशरीरं

युयूषतः मिश्रयितुमिच्छतः परस्परमालिङ्गतः तद्वदग्निंसाकं होत्रध्वर्यूयुयूषतः आदींअनन्तरमेवहव्यः आहवनीयोऽग्निः सारथिः सरणशीलः सारथिवद्यज्ञात्मकस्यरथस्यनिर्वाहकोवा सन् अस्मत् अस्माकंसंबन्धिनोरश्मीन् रश्मिवदायताघृतधाराः आसर्वतः समयंस्त सम्यक्स्वीकरोति तत्रदृष्टान्तद्वयमुच्यते—भगोन सर्वैःसेवनीयआदित्यइव सयथा सर्वतः पूजामादत्ते तद्वत् सारथिः रथस्ययन्ता वोढुर्वाहकस्याश्वादेः रश्मोन्न प्रग्रहानिव तान्यथास्वीकरोति तद्वदयमग्निरपि हवींषिसमयंस्त॥ ३ ॥

**३. समान अवस्थावाले होता और अध्वर्यु, एक ही प्रयोजन की सिद्धि के लिए, परस्पर सहायता देकर अग्नि के शरीर में अपना-अपना कार्य सम्पादित करते हैं। अनन्तर जैसे सूर्य अपनी किरणें फैलाते हैं अथवा सारथि लगाम ग्रहण करता है, वैसे ही आहवनीय अग्नि हमारी दी हुई घृत-धारा ग्रहण करते हैं।**

यमींद्वासवंयसासपर्यतंःसमानेयोनामिथुनासमोकसा ।
दिवाननक्तंपलितोयुवाजनिपुरूचरन्नजरोमानुषायुगा ॥ ४ ॥

यम् । ईम् । द्वा । सऽवंयसा । सपर्यतंः । समाने । योना । मिथुना । समऽओकसा । दिवा । न । नक्तम् । पलितः । युवा । अजनि । पुरु । चरन् । अजरः । मानुषा । युगा ॥ ४ ॥

यंईएनमग्निं द्वा द्वौ सवयसा समानवयस्कौ समानसामर्थ्यौ वा समानेयोना योनौ फलस्योत्पत्तिस्थाने यज्ञे वर्तमानौ मिथुनादंपतीइव एककार्योद्युक्तौ समोकसा समाननिवासौ देवयजनस्थानौ ईदृशौ होत्रध्वर्यू सपर्यतः पूजयतः स्तुत्याहविःप्रदानेनचप्रीणयतः कदेत्याह—दिवान अहनीव नक्तंरात्रावपि सर्वदेत्यर्थः एवंपूज्यमानोऽग्निः पलितः पूर्वमंगारावस्थायांजीर्णोऽपि समिन्धनानन्तरं युवातरुणः तेजसासर्वस्य मिश्रयितावा अजनि जायते एवंजातोयं मानुषा युगा मनोःसंबन्धीनियुगानि जायापतिरूपाणि होत्रध्वर्युरूपाणिवोद्दिश्य पुरूचरन् बह्वाज्यादिकंभक्षयन् अजरः अजीर्णः जरारहितोवर्तते ॥ ४ ॥

**४. समान अवस्थावाले, एक यज्ञ में वर्त्तमान और एक कार्य में नियुक्त दोनों मनुष्य जिन अग्नि की, दिन-रात, पूजा करते हैं, वे अग्नि चाहे बूढ़े हों, चाहे युवा, उन दोनों मनुष्यों का हव्य भक्षण करते हुए अजर हुए हैं।**

तमींहिन्वन्तिधीतयोदशव्रिशोदेवंमर्तासऊतयेहवामहे ।
२ धनोरधिप्रवतआसऋण्वत्यभिव्रजद्भिर्वयुनानवाधित ॥ ५ ॥

तम् । ईम् । हिन्वन्ति । धीतयः । दश । व्रिशः । देवम् । मर्तासः ।
ऊतये । हवामहे । धनोः । अधि । प्रऽवतः । आ । सः । ऋण्वति ।
अभिव्रजत्ऽभिः । वयुना । नवा । अधित ॥ ५ ॥

देवं द्योतमानं तमीमेनमग्निं दशधीतयः दशसंख्याकाअंगुलयः व्रिशः विशः परस्परवि-श्लिष्टाः हिन्वन्ति प्रीणयन्तिमथनकाले तथामर्तासोमनुष्यावयं यजमानाः ऊतयेरक्ष-णाय हवामहे आह्वयामः कोऽस्यविशेषइतिउच्यते अयमग्निः धनोर्धनुषःसकाशात् प्र-वतः आ प्रकर्षेणगच्छतोबाणानिव तान्यथाशत्रोरुपरिमुंचंति आइत्युपमार्थे तद्वत् सोऽग्निःध-नुःस्थानीयान्निजशरीरसकाशात् प्रवतः प्रकृष्टवेगवतोरश्मीन् ऋण्वति गमयति रिविर्गत्यर्थः अत्रान्तर्भावितण्यर्थोयं इदित्त्वान्नुम् छान्दसेरेफस्यसंप्रसारणं अधिशब्दोनर्थकोधात्वर्थमा-मात्रानुवादी किंच एवंप्रवृद्धोऽग्निः अभिव्रजद्भिरनुष्ठानार्थं अभितःसंचरद्भिः ज्ञेयमर्थमभि-गच्छद्भिर्वा तदर्थंनवानवानि नूतनानि वयुना वयुनानि प्रज्ञानानि अनुष्ठानविषयाणि अधि-त धारयति ज्ञापयतीत्यर्थः यद्वा अधिव्रजद्भिः आभिमुख्येनगच्छद्भिः होत्रादिभिः क्रियमाणा-नि नवा नवानि वयुनानि प्रज्ञाविशिष्टानिस्तोत्रादीनि अधित धत्ते धात्रश्छान्दसेलुङिस्थाघ्वो-रिच्चेतीत्वं उत्तरस्यसिचःकित्त्वं ह्रस्वादंगादितिसलोपः ॥ ५ ॥

५. दसों अंगुलियाँ, आपस में अलग होकर, उन प्रकाशशाली अग्नि को प्रसन्न करती हैं। हम मनुष्य हैं; अपनी रक्षा के लिए अग्नि को बुलाते हैं। जैसे धनुष से बाण निकलता है, वैसे ही अग्नि भी स्फुलिङ्ग भेजते हैं। चारों ओर अवस्थित यजमानों की नई स्तुति को अग्निदेव धारण करते हैं।

त्वंह्यग्नेदिव्यस्यराजसित्वंपार्थिवस्यपशुपाइवत्मना ।
एनीतएतेबृहतीअभिश्रियाहिरण्ययीवक्करीबर्हिराशाते ॥ ६ ॥

त्वम् । हि । अग्ने । दिव्यस्य । राजसि । त्वम् । पार्थिवस्य । पशुपाःऽइव ।
त्मना । एनी इति । ते । एते इति । बृहती इति । अभिऽश्रिया ।
हिरण्ययी इति । वक्करी इति । बर्हिः । आशाते इति ॥ ६ ॥

हेअग्ने त्वंदिव्यस्यदिविभवस्य देवादेर्विद्युदात्मना वृष्ट्यादेर्वाराजसिईशिषे ऐश्वर्यनामैतत् त-थापार्थिवस्यपृथिवीसंबन्धिनः मनुष्यादेःराजसि ईश्वरोभवसि किमन्यतंत्रत्वेनेत्याह—त्मनाआ-त्मनैव स्वसामर्थ्येनैव तत्रदृष्टान्तः—पशुपाइव पशुपालकोयथास्वसामर्थ्येनैव पशूनांनिरोधनिर्गम-

नादिव्यापारेषुसमर्थोभवति तद्वत् एतद्दृष्टान्तेनअत्यन्तस्वातन्त्र्यमुक्तंभवति किंच यस्मादेवं तस्माचे तवबर्हिर्यज्ञं एतेप्रसिद्धेएनी एतवर्णेशुभ्रे द्यावापृथिव्यौ आशाते अश्नुवातेव्याप्नुतः वर्णादनुदात्ता-दितिङीप् तकारस्यनः कीदृश्यौते बृहती महत्यौअतिविस्तृते अभिश्रियाप्राप्तैश्वर्येअभितः सर्व-तोवा हिरण्ययी हितरमणीये वक्करीअतिकुशलंशब्दयन्त्यौ वचेर्वनिपि वनोरचेतिङीब्रेफौ छा-न्दसंकुत्वं वकिकौटिल्येइत्यस्माच्छान्दसोनुमभावः ईदृश्यौ द्यावापृथिव्यौबर्हिरश्नुवाते ॥ ६ ॥

६. अग्नि, पशु-रक्षकों की तरह, तुम अपनी शक्ति से स्वर्गीय और पृथिवीस्थ लोगों के ईश्वर हो; इसलिए महती ऐश्वर्यवती, हिरण्मयी मंगल-शब्द-कारिणी शुभ्रवर्णा और प्रसन्ना द्यावापृथिवी तुम्हारे यज्ञ में आती हैं।

अग्ने॑ जु॒षस्व॒ प्रति॑ हर्य॒ तद्वचो॒ मन्द्र॒ स्वधा॑व॒ ऋत॑जात॒ सुक्र॑तो ।
यो वि॒श्वत॑: प्र॒त्यङ्ङसि॑ दर्श॒तो र॒ण्वः संदृ॑ष्टौ पितु॒माँ इ॑व॒ क्षय॑: ॥७॥१३॥

अग्ने॑ । जु॒षस्व॑ । प्रति॑ । ह॒र्य॒ । तत् । वच॑: । मन्द्र॑ । स्वधा॑ऽव: ।
ऋत॑ऽजात । सुक्र॑तो॒ इति॒ सुऽक्र॑तो । य: । वि॒श्वत॑: । प्र॒त्यङ् ।
असि॑ । द॒र्श॒त: । र॒ण्व: । सम्ऽदृ॑ष्टौ । पि॒तु॒मान्ऽइ॑व । क्षय॑: ॥७॥१३॥

हेअग्ने जुषस्व सेवस्वहविः प्रीतोभववास्तुत्या किंच तत्तादृशंप्रियकरंवचः वाग्रूपंस्तोत्रं प्रतिहर्यपुनःकामयस्व हेमन्द्र मादनशील स्तुत्यवा हेस्वधावःहविर्लक्षणान्नवन् हेऋतजात यज्ञा-र्थमुत्पन्न हेसुक्रतो शोभनकर्मन्शोभनप्रज्ञवा यईदृशस्त्वं विश्वतः सर्वस्य स्थावरजंगमस्य ज-गतः प्रत्यङ्ङसि अभिमतःअनुकूलोसि नपराङ्मुखइत्यर्थः तथादर्शतः दर्शनीयः सर्वैः किंच संदृ-ष्टौसम्यग्दर्शने रण्वः रमणशीलः रमयितावाभवसिसर्वस्य यद्वा तवसंदृष्टौसत्यांसर्वोजनः क्षयो निवासवान्भवति तत्रदृष्टान्तः—पितुमानिवअतिप्रभूतान्नस्वामी यथासर्वैर्वस्तव्योगन्तव्यश्च भ-वति तद्वत् ॥ ७ ॥

७. अग्नि, तुम हव्य का उपभोग करो; अपना स्तोत्र सुनने की इच्छा करो। हे स्तुत्य, अन्नवान् और यज्ञ के लिए उत्पन्न तथा यज्ञशाली अग्नि, तुम सारे जगत् के अनुकूल, सबके दर्शनीय, आनन्दोत्पादक और यथेष्ट-अन्न-शाली व्यक्ति की भाँति सबके आश्रयस्थान हो।

तंपृच्छतेतिपंचर्चंपंचमंसूक्तम् अत्रानुक्रमणिका—तंपृच्छतपंचांत्यात्रिष्टुबिति दीर्घतमाऋ-षिः पूर्वत्राग्नेयंतुतदित्युक्तत्वादिदमप्याग्नेयं अन्त्यात्रिष्टुप् शिष्टाजगत्यस्त्रिष्टुबन्तपरिभाषयाजगत्यः प्रा-तरनुवाकाश्विनशस्त्रयोरस्यविनियोगउक्तः।

तत्रप्रथमा—

तंपृच्छतासजगामासवेदसचिकित्वाँईयतेसान्वीयते ।
तस्मिन्त्सन्तिप्रशिषस्तस्मिन्निष्टयःसवाजस्यशवसःशुष्मिणस्पतिः॥ १॥

तम् । पृच्छत । सः । जगाम । सः । वेद । सः । चिकित्वान् । ईयते ।
सः । नु । ईयते । तस्मिन् । सन्ति । प्रऽशिषः । तस्मिन् । इष्टयः । सः ।
वाजस्य । शवसः । शुष्मिणः । पतिः ॥ १ ॥

हेयजमानाः तमग्निंपृच्छत यव स्वर्गादिविषयंप्रष्टव्यमस्ति तत्तस्यैवप्रष्टव्यमस्ति तस्यैव प्रष्टव्यत्वेविशयमाह—सजगामससर्वत्रगच्छति अतएवसवेदसचप्रष्टव्यंजानाति किमितरसाधारण्येनेनेत्याह—सचिकित्वान् सएवचेतनावान् सविशेषज्ञइत्यर्थः सएवईयते ज्ञेयसकाशंगच्छति पुनर्गतिरेवविशेष्यते सः सोऽग्निरेव नु क्षिप्रंईयते यद्यजमानस्य ज्ञेयमस्ति तमर्थं ज्ञातुं शीघ्रमेवगच्छतीत्यर्थः यद्वा ज्ञानार्थईयते सेव्यते तथा शीघ्रं अनुसेव्यते यस्मादयमुक्तरूपः तस्मात्तमेव पृच्छतेत्यर्थः तत्रापेक्षिताःकामाःसन्तीत्याह तस्मिन्नग्नौ प्रशिषः प्रशासनानि नियमनसामर्थ्यानिसंति असाध्यंनियम्यापि साधयितुंशक्तइत्यर्थः किंच तस्मिन्नेवाग्नौ इष्टयएष्टव्याभोगाः सर्वफलसाधकायागावा संति किंच सोऽग्निर्वाजस्य अन्नस्य शवसोबलस्यचपतिः पालयिता दाता किंच शुष्मिणोबलवतोराजादेरपि पतिः स्वामी यस्मादयं महानुभावः तस्मात्तमेव पृष्ट्वापुरुषार्थंसाधयतेति ॥ १ ॥

१. अग्नि से पूछो। वे ही ज्ञाता हैं, वे ही गये हैं, उन्हीं को चैतन्य है, वे ही यान हैं, वे ही शीघ्रगन्ता हैं, उन्हीं के पास शासन-योग्यता है, अभीष्ट वस्तु भी उन्हीं के पास है। वे ही अन्न, बल और बलवान् के पालक हैं।

अथद्वितीया—

तमित्पृच्छन्तिनसिमोविपृच्छतिस्वेनेवधीरोमनसायदग्रभीत् ।
नमृष्यतेप्रथमंनापरंवचोस्यक्रत्वासचतेअप्रदृपितः ॥ २॥

तम् । इत् । पृच्छन्ति । न । सिमः । वि । पृच्छति । स्वेनऽइव ।
धीरः । मनसा । यत् । अग्रभीत् । न । मृष्यते । प्रथमम् । न ।
अपरम् । वचः । अस्य । क्रत्वा । सचते । अप्रऽदृपितः ॥ २ ॥

पूर्वमन्त्रेग्निंपृच्छतेत्युक्तं अत्रतुसोनुनयेनप्रष्टव्यइत्याह—तमित् तमेवाग्निंपृच्छंति सतुनान्यंपृच्छति प्रश्नसमयेऽपि सिमः सर्वजनोनविपृच्छति विपरीतंनपृच्छति पृष्टोऽपिधीरोधीमानयं स्वेनैवमनसा इवशब्दएवार्थे स्वकीयथैवबुद्ध्यायद्यत्कार्यं अग्रभीत् वदामीत्यादत्ते तदेवप्रतिब्रूते नतुप्रश्नानुकूलं स्वतंत्रेश्वरइत्युक्तंभवति यद्वा प्रष्टाधीरोधीमान्स्वेनैव स्वेनमनसावाचा वाच्यंविचार्य यदग्रभीत् यद्वाक्यंवक्तव्यत्वेनस्वीकुर्यात् तदेवाग्निंपृच्छति नतुवहुभाषतइत्यर्थः परवाक्यासह्यत्वमाह—अयमग्निः प्रथमंवचः स्ववाक्यात्पूर्वभाविवचनं नमृष्यतेनसहते तथा अपरंवचः स्वोक्त्यनन्तरभाविप्रतिवचनं नमृष्यते यस्मादयमेवंविधः तस्मादप्रदृपितः अप्रदृप्तः यद्वा तेनशिक्षितः अनुद्दण्डः सर्वोलोकः अस्यमहानुभावस्याग्नेः क्रत्वाक्रतुनारक्षणादिकर्मणासहसचते संगच्छतेजीवतीत्यर्थः ॥ २ ॥

९. अग्नि को ही सारा संसार जानना चाहता है; यह जिज्ञासा अन्याय-पूर्ण नहीं है। धीर व्यक्ति अपने मन में जो स्थिर करता है, उसके पूर्व और पर की बात नहीं सह सकता। इसी लिए दम्भ-विहीन मनुष्य अग्नि का आश्रय प्राप्त करता है।

अथतृतीया—

तमिद्गच्छन्तिजुह्व१स्तमर्वतीर्विश्वान्येकःशृणवद्वचांसिमे।
पुरुप्रैषस्ततुरिर्यज्ञसाधनोच्छिद्रोतिःशिशुरादत्तसंरभः॥ ३ ॥

तम्। इत्। गच्छन्ति। जुह्वः। तम्। अर्वतीः। विश्वानि। एकः। शृणवत्। वचांसि। मे। पुरुऽप्रैषः। ततुरिः। यज्ञऽसाधनः। अच्छिद्रऽऊतिः। शिशुः। आ। अदत्त। सम्। रभः॥ ३ ॥

जुह्वः अस्मदीयाजुहूपभृदादयः तमित् तमेवोद्दिश्यआज्यपूर्णाः सत्योगच्छन्ति प्रीणयितुं यद्वा हूयन्तइति जुह्वःआहुतयः सोमादिरूपाः अथवाजुह्वादिषुस्थितान्याज्यान्यपि आश्रयाश्रयिणोरभेदेनजुह्वइत्युच्यन्ते मंचाःक्रोशन्तीतिवत् ताअपितमेवगच्छन्ति अस्यसर्वदेवतात्मकत्वात् अन्नैवेतरदेवतार्थमपिहूयमानंचेतिभावः किंच अर्वतीः प्राप्तिमत्यः स्तुतयः तमित् तमेवाग्निंगच्छन्ति सर्वदेवतात्मकत्वादेव सएवएकोयमग्निः विश्वानि मे मदीयानिवचांसि स्तोत्ररूपाणि शृणवत् शृणोति अग्नेः सर्वदेवतात्मकत्वं तैत्तिरीयाआहुः—तेदेवाबिभ्यतोऽग्निंप्राविशन् तस्मादाहुरग्निःसर्वादेवतेति[1]। तथात्रैवपरस्तादाम्नास्यते—त्वमग्नेवरुणोजायसेयत्त्वंमित्रेइत्यादिको[2]ऽस्यनिशेषइत्युच्यते पुरुप्रैषः बहुप्रैषभाक् यद्वा बहुप्रेषणः सर्वस्याज्ञापयितेत्यर्थः ततुरिःतारयि-

१ तै० सं ६. २. २.। २. ऋ० सं० ३. ८. १६.।

ता तरतेरन्तर्ण्यर्थादाद्दगमहनइतिकिन्प्रत्ययः बहुलंछन्दसीत्युत्वं यज्ञसाधनः यज्ञसाधकः अध्य-धीनत्वाद्यज्ञस्य अच्छिद्रोतिः अविच्छिन्नरक्षणः शिशुः शिशुवत्प्रियकारी शोचयितावाशत्रूणां एवंभूतोऽग्निः संरभः यज्ञादिसंरंभवान्सन् आदत्तआदत्ते हविरादिकंस्वीकरोति ॥ ३ ॥

३. सब जुहू अग्नि को लक्ष्य कर जाते हैं। स्तुतियाँ भी अग्नि के लिए ही हैं। अग्नि मेरी समस्त स्तुतियाँ सुनते हैं। वह बहुतों के प्रवर्त्तक, तारयिता और यज्ञ के साधन हैं। उनकी रक्षा-शक्ति छिद्रशून्य है। वह शिशु की तरह शान्त और यज्ञ के अनुष्ठाता हैं।

उपस्थायंचरतियत्समारंतसद्योजातस्तत्सारयुज्येभिः ।
अभिश्वान्तंमृशतेनान्द्येमुदेयदींगच्छंन्त्युशतीरंपिष्ठितम् ॥ ४ ॥

उपऽस्थायम् । चरति । यत् । सम्ऽआरंत । सद्यः । जातः । तत्सार । युज्येभिः । अभि । श्वान्तम् । मृशते । नान्द्ये । मुदे । यत् । ईम् । गच्छंन्ति । उशतीः । अपिऽस्थितम् ॥ ४ ॥

यद्यदा अध्वर्युरुपस्थायंचरति उपस्थायोपस्थायानुतिष्ठति उत्पत्त्यनुकूलव्यापारंकरोति कदेत्याह यत्समारत समगच्छत मथनेनाविरभवत् समोगम्यृच्छीत्यतेरात्मनेपदम् सद्यस्तदानीमेवजातउत्पन्नःसन् युज्येभिर्योक्तुंसंबद्धुंसमर्थैः फलैर्मिश्रयितुमर्हैस्तेजोभिर्वायुक्तःसन् तत्सार अरण्योर्गूढःसन् चचार यद्वा युज्येभिरश्वैः जातमात्रएव सर्वत्रसंचचार त्सरच्छद्मगतौ लिटिणलिरूपं एवंप्रवृद्धोयंश्वांतंश्रान्तं शान्तंवायजमानं नान्द्येनन्दनीयेकर्मणिनिमित्तभूतेसति मुदे तस्यसंतोषायअभिमृशते अभिमर्शनंकरोति फलप्रदानेनेतिभावः यथालोकेगुर्वादिः श्रान्तं शिष्यादिकंस्पृशति तद्वत् कदेतिचेत् उच्यते यद्यदाअपिष्ठितंव्याप्यवर्तमानंईंएनमग्निंउशतीः कामयमानाः आज्यधाराः स्तुतयोवा गच्छन्ति प्राप्नुवन्ति तदाभिमृशते ॥ ४ ॥

४. जभी यजमान अग्नि को उत्पन्न करने की चेष्टा करता है, तभी अग्नि प्रकट होते हैं। उत्पन्न होकर ही तुरंत योजनीय वस्तु के साथ मिल जाते हैं। अग्नि का आनन्द-वर्द्धक कर्म श्रान्त यजमान के सन्तोष के लिए अभीष्ट फल देता है।

सईंमृगोअप्योंवनर्गुरुपत्वच्युंपमस्यांनिधायि ।
व्यंब्रवीद्वयुनामर्त्येभ्योग्निर्विद्वाँकृतचिद्धिसत्यः ॥ ५ ॥ १४ ॥

सः । ईम् । मृगः । अप्यंः । वनर्गुः । उपं । त्वचि । उपऽमस्याम् । नि । धायि । वि । अब्रवीत् । वयुनां । मर्त्येभ्यः । अग्निः । विद्वान् । कृतऽचित् । हि । सत्यः ॥ ५ ॥ १४ ॥

सईंसएवाग्निः उपमस्यां उपमायां उपमास्पदायांत्वचि ओषध्यादिभिराच्छादितायां वेद्यां उपनिधायि उपस्थाप्यते उत्तरत्रोपभोगाय कीदृशः सम्रृगोमार्जयिता अन्वेषणशीलोवा मृगोमार्ष्टेर्गतिकर्मणइतियास्कः। अप्यः आप्योगन्तव्यः अपः कर्मतत्रसाधुर्वा वनर्गुः वनगामी ऋच्छतेर्गमेश्चेदंरूपं यद्वा गमेरेव उपपदस्यरुडागमश्छान्दसः एवंभूतोऽग्निर्मर्त्येभ्योमरणधर्मेभ्योयजमानादिरूपेभ्योवयुना वयुनानि प्रज्ञानानिअनुष्ठेयज्ञानानिव्यब्रवीव् विशेषेणब्रवीति उपदिशति वयुनमितिप्रज्ञानाम वयुनमभिख्येतितन्नामसुपाठाव् ईदृक्सामर्थ्यमस्तीतिदर्शयति अयमग्निर्विद्वान्सर्वज्ञः ऋतचिव् यज्ञस्योदकस्यवाचेतिताज्ञाता सत्यः सत्क्रियमाणं कर्म तत्रसाधुः सत्सुभवोवा सत्फलं तदर्हतीतिवासम्यक्फलप्रदइत्यर्थः यस्मादयमुक्तसामर्थ्योपेतः तस्मात्प्रज्ञोपदेशोयुक्तः हिशब्दःप्रसिद्धौ ॥ ५ ॥

५. अन्वेषण-परायण और प्राप्तव्य वन के गामी अग्नि त्वचा की तरह इन्धन के बीच स्थापित हुए हैं। विद्वान्, यज्ञ ज्ञाता और यथार्थवादी अग्नि ने मनुष्यों को विशेष करके यज्ञानुष्ठान के समय, ज्ञान प्रदान किया है।

॥ इतिद्वितीयस्यद्वितीयेचतुर्दशोवर्गः॥ १४ ॥

त्रिमूर्धानमितिपंचर्चैषष्ठंसूक्तं दैर्घतमसंआग्नेयं पूर्वत्राग्नेयंतुतदित्युक्तत्वाव् त्रिमूर्धानमित्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोः त्रैष्टुभेछन्दसिइदमादिसूक्तत्रयस्यविनियोगः अथैतस्याइतिखण्डेसूत्रितम्—त्रिमूर्धानमितित्रीणीति।

तत्रप्रथमा—

त्रिमूर्धानंसप्तरश्मिंगृणीषेनूनमग्निंपित्रोरुपस्थे।
निषत्तमस्यचरतोध्रुवस्यविश्वादिवोरोचनापप्रिवांसम् ॥ १ ॥

त्रिऽमूर्धानम्। सप्तऽरश्मिम्। गृणीषे। अनूनम्। अग्निम्। पित्रोः। उपऽस्थे। निऽसत्तम्। अस्य। चरतः। ध्रुवस्य। विश्वा। दिवः। रोचना। आपप्रिऽवांसम् ॥ १ ॥

अनयाग्निर्यज्ञरूपेणस्तूयते त्रिमूर्धानं सवनत्रयरूपमूर्धत्रयोपेतं द्वित्रिभ्यांपाद्दन्मूर्धसुबहुव्रीहावित्युत्तरपदान्तोदात्तत्वम् किंच सप्तरश्मिं नियामकसप्तच्छन्दोयुक्तंअनूनं अविकलं संपूर्णफलं अग्निं अग्निसाध्यं अन्ननादिगुणयुक्तंवा पित्रोरुपस्थे द्यावापृथिव्योरुत्संगे निषत्तं निषण्णं

१ नि० १. २०.

मध्येवर्तमानमित्यर्थः भूमिस्थद्रव्येणद्युलोकस्थदेवताभिश्चसाध्यत्वादितियावत् किंच ध्रुवस्य निश्चलस्यचरतः हविर्भक्षयतोऽस्याग्नेः संबन्धिनं यज्ञं दिवः द्युलोकादागतानि विश्वानि रोचनानि देवविमानानि आपप्रिवांसं सर्वतःपूरयितारं गृणीषे गृणीहि स्तुहि यद्वा अयमग्निरेवोच्यते त्रिमूर्धानं मूर्धवदत्रक्षित्यन्तरिक्षद्युलोकाख्यस्थानत्रयोपेतं लोकत्रयव्याप्तमित्यर्थः गार्हपत्यादिस्थानत्रयवर्तिनंवा सप्तरश्मिं सप्तज्वालं अनूनं अन्यूनं पित्रोर्द्यावापृथिव्योरुपस्थेउत्संगे निषत्तं नसत्तनिषत्तेतिनिपातनान्निष्ठानत्वाभावः निषण्णंआपप्रिवांसं सर्वतः पूरयन्तंकामानां उक्तलक्षणविशिष्टमग्निं गृणीषेगृणीहि स्तुहि किंच चरतः सर्वत्रज्वालाभिर्गच्छतः ध्रुवस्यधृतत्वादविचलितस्यदिवोद्योतमानस्यास्याग्नेर्विश्वासर्वाणि रोचनारोचमानानितेजांसि सर्वत्र व्यामुवन्तीतिशेषः ईदृशमग्निंस्तुहीत्यन्तरात्मनःप्रैषः ॥ १ ॥

१. पिता-माता की गोद में अवस्थित, सवन-त्रय-रूप मस्तक-त्रय से युक्त, सप्त छन्दोरूप सप्त रश्मियों से युक्त और विकलता-शून्य अग्नि की स्तुति करो। सर्वत्रगामी, अविचलित, प्रकाशमान और अभीष्टवर्षक अग्नि का तेज चारों ओर व्याप्त हो रहा है।

उ॒क्षा म॒हाँ अ॒भि व॑वक्ष ए॒ने अ॒जर॑स्तस्थावि॒तऊ॑ति॒रृष्वः॑ ।
उ॒र्व्याः प॒दो नि द॑धाति॒ सानौ॑ रि॒हन्त्यूधो॑ अरु॒षासो॑ अस्य ॥२॥
उ॒क्षा । म॒हान् । अ॒भि । व॒व॒क्षे॒ । ए॒ने इति॑ । अ॒जरः॑ । त॒स्थौ॒ । इ॒तःऽऊ॑तिः । ऋ॒ष्वः । उ॒र्व्याः । प॒दः । नि । द॒धा॒ति॒ । सानौ॑ । रि॒हन्ति॑ । ऊधः॑ । अ॒रु॒षासः॑ । अ॒स्य॒ ॥ २ ॥

उक्षासेक्ता फलप्रदइत्यर्थः अतएवमहान् महिम्ना स्वरूपेणउद्वृत्तवृषभसदृशोयमग्निः एनेद्यावापृथिव्यौ अभिअभिक्रम्यव्याप्यववक्षे वहति व्याप्नोतीत्यर्थः वहतेर्लेटिछान्दसःशपःश्लुः लोपस्त्वआत्मनेपदेष्वितितलोपः सिब्बहुलमितिसिप् वृष्ट्यादिप्रदानेन हविर्वहनेनचलोकद्वयवासिनोदेवान्मनुष्यांश्चरक्षतीत्यर्थः किंचायंअजरः जरारहितः ऋष्वःमहान् पूज्यः महन्नामैतत् ऋष्वःउक्षइतितन्नामसुपाठात् तथाइतऊतिः प्राप्तरक्षणःसन् तस्थौ स्थितःवर्तते यद्वा उक्तगुणोयं इतऊतिः इतएवगमनवान् अस्मद्देवयजनाभिमुखगमनवान्तस्थौ वर्तते तदनन्तरं उर्व्याःविस्तृतायाःभूम्याः सानौसमुच्छ्रितेप्रदेशे वेदिलक्षणे पदोनिदधाति पदानि स्थापयति करोति किंचास्याग्नेः अरुषासः अरुषाआरोचनाज्वालाः ऊधःस्थानीयमन्तरिक्षं रिहन्ति लिहंति यद्वा अस्योधः ऊधःस्थानीयं यज्ञं अरुषासः आरोचनाः ब्रह्मवर्चसेनयजमानाः रिहन्ति अभिमतस्वर्गादीनिलिहन्ति ॥ २ ॥

२. फल-दाता अग्नि, अपनी महिमा से, द्यावा-पृथिवी को व्याप्त किये हुए हैं। अजर और पूज्य अग्निदेव हमारी रक्षा करके अवस्थित हैं। वह व्यापक पृथिवी के सानुप्रदेश या वेदी पर अपने पैर फैलाते हैं। उनकी उज्ज्वल ज्योति अन्तरिक्ष को चाटती है।

अथतृतीया–

समानंवत्समभिसंचरन्तीविष्वग्धेनूविचरतःसुमेके।
अनपवृज्याँअध्वनोमिमानेविश्वान्केताँअधिमहोदधाने ॥ ३ ॥

समानम्। वत्सम्। अभि। सञ्चरन्ती इति सम्ऽचरन्ती। विष्वक्। धेनू इति। वि। चरतः। सुमेके इति सुऽमेके। अनपऽवृज्यान्। अध्वनः। मिमाने इति। विश्वान्। केतान्। अधि। महः। दधाने इति ॥ ३ ॥

समानंएकमेववत्सं वत्सस्थानीयं पुत्रवद्धर्षहेतुमग्निमभि अभिमुखंसंचरन्ती संचरन्त्यौ द्वेधेनू अग्निहितकरणेनप्रीणयित्र्यौ पत्नीयजमानलक्षणेधेनू विष्वग्विचरतः संचरतः स्तनपानादिसदृशेन्धनप्रक्षेपसंमार्जनादिनासम्यक् वर्धयतइत्यर्थः कीदृश्यौते सुमेकेशोभनकर्माणौशोभनमेहनेवा परिचरणकुशलेइत्यर्थः किंच अनपवृज्यान् अपवर्जनीयरहितान् नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् अध्वनः मार्गान् अग्नेःप्रान्तप्रदेशान् केशाद्यमेध्यरहितान् मिमाने संपादयित्र्यौ किंच विश्वान्केतान् सर्वाणिप्रज्ञानानि प्रवर्धनविषयाणि महोमहान्ति अधिअधिकंदधानेधारयन्त्यौ ईदृश्यावध्वर्युयजमानरूपे जायापतिरूपेवाधेनू विष्वग्विचरतः ॥ ३ ॥

३. सेवा-कार्य में चतुर दो (यजमान और उसकी पत्नी के स्वरूप) गायें एक बछड़े (अग्नि) के सामने जाती हैं। वह निन्दनीय विषय से शून्य मार्ग का निर्माण और सब तरह की बुद्धि या प्रज्ञा, अधिक मात्रा में, धारण करती हैं।

अथचतुर्थी–

धीरासःपदंकवयोनयन्तिनानाहृदारक्षमाणाअजुर्यम्।
सिषासन्तःपर्यपश्यन्तसिन्धुमाविरेभ्योअभवत्सूर्योनॄन् ॥ ४ ॥

धीरासः। पदम्। कवयः। नयन्ति। नाना। हृदा। रक्षमाणाः। अजुर्यम्। सिसासन्तः। परि। अपश्यन्त। सिन्धुम्। आविः। एभ्यः। अभवत्। सूर्यः। नॄन् ॥ ४ ॥

धीरासोधीराः धीमन्तः प्रयोगज्ञाः अध्वर्य्वादयः अजुर्यं अजर्यं अजीर्णं एनमग्निं पदं स्थानंवेदिलक्षणंनयन्तिप्रापयन्ति मथनदेशाद्गार्हपत्याद्वा अथवा वक्ष्यमाणलक्षणायजमानादयः पदंआस्पदं सर्वकामानामास्पदमेनंगमयन्ति कीदृशाः ते कवयः क्रान्तदर्शिनोमेधाविनः अ-

नूचानावा येवाअनूचानास्तेवाकवयइतिश्रुतेः। किंच नानाहृदाबहुप्रकारयाबुद्ध्या रक्षमाणाः धारयमाणाः किंचैवंरूपास्ते सिंधुंस्यंदमानं यज्ञद्वाराफलानिस्रवंतमग्निं सिषासन्तःसंभक्तुमिच्छन्तः सनितेःसनि सनीवंतर्धेतिविकल्पनादिडभावः जनसनखनामित्यात्वं पर्यपश्यन्त परितः पश्यन्ति शुश्रूषन्त इत्यर्थः किंच सूर्यः सर्वस्यप्रसवितायमग्निः एभ्यः एवंकुर्वद्भ्योनृभ्यः नेतृभ्यः आविरभवत् तेषामनुग्रहेणप्रत्यक्षोभवत् नृनित्यत्रविभक्तिव्यत्ययः नृन्प्राणिनोऽनुग्रहीतुमिति वायोज्यम् ॥ ४ ॥

४. विद्वान् और मेधावी लोग अज्ञेय अग्नि को अपने स्थान पर स्थापित करते हैं; बुद्धि-बल से, नाना उपायों से, उनकी रक्षा करते हैं। यज्ञ-फल का भोग करने की इच्छा से फलदाता अग्नि की शुश्रूषा करते हैं। उनके पास, सूर्यरूप में, अग्नि प्रकट होते हैं।

दिदृक्षेण्यःपरिकाष्ठासुजेन्यईळेन्योमहोअर्भायजीवसे।
पुरुत्रायदभवत्सूरहैभ्योगर्भेभ्योमघवाविश्वदर्शतः॥ ५॥ १५॥

दिदृक्षेण्यः। परि। काष्ठासु। जेन्यः। ईळेन्यः। महः। अर्भाय। जीवसे। पुरुऽत्रा। यत्। अभवत्। सूः। अह। एभ्यः। गर्भेभ्यः। मघऽवा। विश्वऽदर्शतः॥ ५॥ १५॥

अयमग्निः काष्ठासुपरस्परंव्यावर्तमानासुदशदिक्षुदिदृक्षेण्यः अनुग्रहदृष्ट्यादर्शनयुक्तोभवति यद्वा द्रष्टुमेष्टव्यः दर्शनेच्छाविषयभूतः दृशेःसन्नन्तात्कृत्यार्थेतवैकेन्केन्येतिकेन्यप्रत्ययः अतएवजेन्यः सर्वत्रप्रादुर्भवनशीलोभवतिजयशीलोवा किंच प्रदानसमयेईळेन्यः स्तुत्योभवति किमर्थमेवंमहोमहतोदेवादेःअर्भायअर्भकस्याल्पस्य यजमानादेर्वाजीवसेजीवनाय हविर्वहनेनप्रधनप्रदानेनेतिविवेकः तत्रोपपत्तिमाह—यदह यस्मात्खलु पुरुत्रा बहुषु देशेषु देवमनुष्येत्यादिना त्राप्रत्ययः मघवा हविर्लक्षणान्नवान् विश्वदर्शतः सर्वद्रष्टव्यविषयवानयमग्निः एभ्योगर्भेभ्यः षष्ठ्यर्थेचतुर्थी एषामृत्विजांगर्भवच्छिशुवदत्यन्तरक्षणीयानांसूरभवत् प्रसविता उत्पादयिताभवत्भवति तस्मान्नानाहृदारक्षमाणाःकवयः पदंनयन्तीतिपूर्वेणसंबन्धः॥ ५॥

५. अग्नि चाहते हैं कि उन्हें सब दिशाओं के निवासी देख सकें। वे सदा जयशील और स्तुति-योग्य हैं। वे शुद्ध और महान्—सबके जीवन-स्वरूप हैं। धनवान् और सबके दर्शनीय अग्नि, अनेक स्थानों में, शिशु-समान यजमानों के लिए पिता के समान रक्षक और पालनकर्त्ता हैं।

कथातइतिपंचर्चंसप्तमंसूक्तंदैर्घतमसमाग्नेयंत्रैष्टुभं कथेत्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोरस्यसूक्तस्यविनियोगः त्रिमूर्धानमितित्रीणीत्यनेनोक्तः[1]।

---

१ ऐ० ब्रा० २. २.।

तत्रप्रथमा—

कथातेअग्नेशुचयन्तआयोर्ददाशुर्वाजेभिराशुषाणाः।
उभेयत्तोकेतनयेदधानाऋतस्यसामन्रणयन्तदेवाः ॥ १ ॥

कथा। ते। अग्ने। शुचयन्तः। आयोः। ददाशुः। वाजेभिः।
आशुषाणाः। उभे इति। यत्। तोके इति। तनये। दधानाः।
ऋतस्य। सामन्। रणयन्त। देवाः ॥ १ ॥

हेअग्ने तेतवसंबन्धिनोरश्मयः शुचयन्तः दीप्तिंसर्वत्रचक्षाणाः प्रकटयन्तः आशुषाणाः आशुशीघ्रंसंभक्तारः आशून्संभक्तारोवाय्वादेरपिशीघ्रंसंभक्तारइत्यर्थः यद्वा समन्ताच्छोषयितारः यद्वा सर्वव्याप्नुवन्तः अश्नोतेर्लिटःकानच् व्यत्ययेनोप्रत्ययः सिच्चेतिद्विविकरणता आङ्पूर्वादन्तर्भावितण्यर्थाच्छुषेःशानचि छान्दसःशपोलुक् आशुशब्दात्सनोतेःकर्मण्यण् ईदृशारश्मयोवाजेभिरन्नैःसहितं आयोः आयुः आयुष्यं कर्मणिषष्ठी कथाकेनोपायेनददाशुः ददति दाश्दाने छान्दसोलिट् तमुपायमगृहाणेत्यर्थः रश्मीनांवरप्रदानंकुत्रदृष्टमितिचेत् उच्यते यद्यस्मात् उभेउक्तेअन्नायुषीतोकेपुत्रे तनये अनवच्छेदेनकुटुंबस्यविस्तारके यद्वा तोकेपुत्रेतनयेतत्पुत्रादौच दधानाः धारयन्तोदेवाः व्यवहर्तारोयजमानाः ऋतस्ययज्ञस्यसंबन्धिनिसामन्साम्निरथन्तरादौ रणयन्त रमन्ते रमयन्ति शब्दयन्त्येववा यस्मादन्नायुःपुत्रादिसहिताः सोमेनेष्ट्वासाम्निरमन्ते तस्माद्रश्मयोददतीत्यवगम्यतइत्यर्थः तादृशान्त्वदीयान्रश्मीन्मामप्यनुगृहाणेत्यर्थः ॥ १ ॥

१. अग्नि, तुम्हारी उज्ज्वल और शोषक शिखायें कैसे अन्न के साथ आयु प्रदान करती हैं, जिससे पुत्र, पौत्र आदि के लिए अन्न और आयु प्राप्त कर यजमान लोग याज्ञिक साम-गायन कर सकते हैं?

अथद्वितीया—

बोधामेअस्यवचसोयविष्ठमंहिष्ठस्यप्रभृतस्यस्वधावः।
पीयतित्वोअनुत्वोगृणातिवन्दारुस्तेतन्वंवन्देअग्ने ॥ २

बोध। मे। अस्य। वचसः। यविष्ठ। मंहिष्ठस्य। प्रऽभृतस्य।
स्वधाऽवः। पीयति। त्वः। अनु। त्वः। गृणाति। वन्दारुः।
ते। तन्वम्। वन्दे। अग्ने ॥ २ ॥

हेयविष्ठ युवतम हेस्वधावः हविर्लक्षणान्नेन तद्वन्नग्ने मेमदीयस्यमंहिष्ठस्यअतिशयेनपूजनीयस्य प्रभृतस्य प्रकर्षेणसंपादितस्यास्येदानींक्रियमाणस्यवचसः स्तुतिरूपस्यवचनस्य कर्म-

णिषष्ठी उक्तलक्षणंवचः बोधबुध्यस्व स्तुतोभवेत्यर्थः हेअग्ने लोकेत्वः अन्नयास्कः—त्वोनेमइत्य-र्धस्येत्युक्त्वैतदेवोदाजहार । एकोजनः पीयति वधकर्मैतव् हिनस्ति यज्ञादिनानपूजयतीत्यर्थः त्वःएकःअनुगृणातिअनुकूलंउच्चारयतितयोर्मध्ये हेअग्ने वंदारुर्वन्दनशीलोहं तेतवतन्वं तनुंतव-मूर्तिं वन्देस्तौमि ॥ २ ॥

२. हे युवा और अन्नवान् अग्नि, मेरी अत्यन्त पूज्य और अच्छी तरह सम्पादित स्तुति ग्रहण करो। कोई तुम्हारी हिंसा करता और कोई तुम्हारी पूजा करता है। मैं तो तुम्हारा उपासक हूँ। मैं तुम्हारी पूजा करता हूँ।

येपायवोमामतेयन्तेअग्नेपश्यन्तोअन्धंदुरितादरक्षन् ।
ररक्षतान्त्सुकृतोविश्ववेदादिप्सन्तइद्रिपवोनाहदेभुः ॥ ३ ॥

ये । पायवः । मामतेयम् । ते । अग्ने । पश्यन्तः । अन्धम् ।
दुःऽइतात् । अरक्षन् । ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः ।
दिप्सन्तः । इत् । रिपवः । न । अह । देभुः ॥ ३ ॥

अत्रेतिहासमाचक्षते—उचथ्यबृहस्पतिनामानौद्वावृषीआस्तां तत्रोचथ्यस्यममतानामभा-र्यासाचगर्भिणी तांबृहस्पतिर्गृहीत्वारमयत् शुक्रनिर्गमनावसरेप्राप्तेगर्भस्थंरेतः प्रावादीत् हेमुने रेतोमात्याक्षीः पूर्वमहंवसामि रेतःसंकरंमाकार्षीरिति एवमुक्तोबृहस्पतिर्बलात्प्रतिरुद्धरेतस्कः सन्शशाप हेगर्भ त्वंयतोरेतोनिरोधमकरोः अतस्त्वंदीर्घंतमःप्राप्नुहि जात्यन्धोभवेति एवंशप्तोममतायांदीर्घतमाअजायत सचोत्पन्नः तमोव्यथयाअग्निमस्तौषीत् सचस्तुत्याप्रीतः आन्ध्यंपर्यहरदिति तदिदमत्रोच्यते—हेअग्ने तेतवसंबन्धिनोयेपायवः प्रसिद्धाः पालयितारो-रश्मयः मामतेयंममतायाःपुत्रंदीर्घतमसं अन्धंपश्यन्तः अन्धोऽयं अतोऽस्माभीरक्षणी-यइत्यवगच्छतः दुरितात् दुष्टंप्राप्तात् दुःखात् अरक्षन् तान्सुकृतः सुखकर्तॄन्विश्ववेदाः विश्व-प्रज्ञः ररक्षरक्षति अस्मत्पालनायेतिभावः तैरस्मानपरिक्षिप्यतीत्यर्थः एवंरक्षितानस्मान्दिप्सन्तो-दंभितुमिच्छन्तोरिपवः कामादयोनाहदेभुः अहेतिविनिग्रहार्थीयः नखलुदंभितुंशक्नुवन्ति दंभु दंभे श्रंथिग्रंथिदंभिस्वंजीनामितिवक्तव्यमितिलिटःकित्त्वादनिदितामितिनलोपः तस्यासिद्धत्वा-देत्वाभ्यासलोपयोरप्राप्तौदभेश्चेतिवक्तव्यमितितौविधीयेते यद्वा सूक्तद्रष्टादीर्घतमाः स्वयमेवा-त्मानंपरोक्षतयाब्रवीति ॥ ३ ॥

३. अग्नि, तुम्हारी जिन प्रसिद्ध और पालक रश्मियों ने (ममता के पुत्र और अन्धे दीर्घतमा को) अन्धत्व से बचाया था, उन सुख-कर शिखाओं की सर्वप्रज्ञायुक्त तुम रक्षा करो। विनाशेच्छु शत्रुगण हिंसा न करने पायें।

अथचतुर्थी—

योनोअग्नेअररिवाँअघायुररातीवामर्चयतिद्वयेन।
मन्त्रोगुरुःपुनरस्तुसोअस्माअनुमृक्षीष्टतन्वंदुरुक्तैः॥ ४॥

यः। नः। अग्ने। अररिऽवान्। अघऽयुः। अरातिऽवा।
मर्चयति। द्वयेन। मन्त्रः। गुरुः। पुनः। अस्तु। सः। अस्मै।
अनु। मृक्षीष्ट। तन्वम्। दुःऽउक्तैः॥ ४॥

हेअग्ने नोऽस्मान् युष्मद्रक्षितान्यःअघायुःमारणादिरूपपापेच्छावान् अररिः अदाता अस्मद्दानप्रतिबन्धकइत्यर्थः रातेश्छान्दसस्यलिटःक्वसुः अरातीवास्वयमदानवान् छन्दसिवनिप्र तदिच्छतीतिमत्वर्थीयोवनिप् शत्रुत्वमाचरन्यः शत्रुःद्वयेनमानसवाचिकभेदेन द्विविधेन नददामीतिमानसोमन्त्रः निन्दाद्यारोपेणदाननिवारणंवाचिकोमन्त्रः यद्वा मायाहेतुकेन विरुद्धरूपेणद्विविधेनमन्त्रेणयोविरुद्धमाचरति तन्नसंकीर्तयति यच्चप्रियंब्रूतेतन्नकरोति अन्यद्ददतीत्येवंमंत्रस्वरूपद्वैविध्यम् पूर्वंमानसवाचिकभेदेन इदानींवाचिककायिकभेदेनेतिविवेकः ईदृशेनमन्त्रेणयः शत्रुर्मर्चयति भर्त्सयति विधेयीकरोतिवास्मान्समंत्रैकदेशोमानसरूपः अस्मैपुनर्गुरुरस्तु षष्ठ्यर्थे चतुर्थी प्रयोक्तुरेवपुनर्गरितास्तु तथादुरुक्तैर्दुर्वाक्यैः निन्दारूपैर्वाचिकैः तन्वं स्वकीयां तनुंअनुमृक्षीष्ट अनुमार्ष्टु अनुक्रमेणलुंपतु यद्वा सद्विविधोमन्त्रः अस्मैप्रयोक्तुरेवगुरुर्गरितास्तु अन्यान्यप्यस्मन्यक्कारायप्रयुक्तानिनिष्ठुरभाषणानिसन्ति तैर्दुरुक्तैः सोरातिःतनुमेवावलुंपतु स्वात्मानमेवावृत्पदहत्वित्यर्थः॥ ४॥

४. अग्निदेव, जो हमारे लिए पाप चाहते हैं, स्वयं दान नहीं करते, मानसिक और वाचनिक दो प्रकार के मंत्रों-द्वारा हमारी निन्दा करते हैं, उन्हें एक मानस मंत्र गुरुभार हो और वे दुर्वाक्य-द्वारा अपना ही शरीर नष्ट करें।

अथपञ्चमी—

उतवायःसहस्यप्रविद्वान्मर्तोमर्तंमर्चयतिद्वयेन।
अतःपाहिस्तवमानस्तुवन्तमग्नेमाकिर्नोदुरितायधायीः॥५॥१६॥

उत। वा। यः। सहस्य। प्रऽविद्वान्। मर्तः। मर्तम्। मर्चयति।
द्वयेन। अतः। पाहि। स्तवमान। स्तुवन्तम्। अग्ने। माकिः।
नः। दुःऽइताय। धायीः॥ ५॥ १६॥

पूर्वमन्त्रेद्विविधकुटिलमन्त्रेणकर्तातन्मन्त्रणंप्राप्नोतु मास्मानित्युक्तम् अत्रतुतन्मन्त्रेणास्मान्पाहीत्यग्निःप्रार्थ्यते उतवा हेसहस्य सहइतिबलनाम तत्रभवाग्ने योमर्तोमरणधर्मामनुष्यः प्रविद्वान्मायामन्त्रेणप्रकर्षेणजानन् द्वयेनपूर्वोक्तरीत्याद्विविधमन्त्रेणमर्तं मनुष्यं मर्चयति विधेयीकरोति भर्त्सयतिवा अवस्तादृशाद्भर्त्सनाचत्कर्तुःसकाशाद्वा हे स्तवमान स्तूयमानाग्ने स्तुवन्तं स्तुतिं कुर्वन्तं मांपाहिरक्ष किंच नोऽस्मान्दुरिताय तत्कृतायदुर्मन्त्रणप्रयुक्तदुःखाय समर्थं माकिर्धायीः मास्थापय दुरितभाजनंमाकार्षीरित्यर्थः धिधारणे व्यत्ययेनेट् सिचिवृद्धिः नमाङ्योगइत्यडभावः ॥ ५ ॥

५. बल के पुत्र अग्नि, जो मनुष्य जान-बूझकर दोनों तरह के मंत्रों से मनुष्य की निन्दा करता है, मैं विनय करता हूँ, हे स्तूयमान अग्नि, उसके हाथ से मेरी रक्षा करो। हमें पाप में मत फेंको।

॥ इतिद्वितीयस्यद्वितीयेषोडशोवर्गः ॥ १६ ॥

मथीयदितिपंचर्चमष्टमंसूक्तम् दैर्घतमसंत्रैष्टुभमाग्नेयं मथीयदित्यनुक्रमणिका सूक्तत्रयमध्यस्यतृतीयत्वेनपूर्वंविनियोगउक्तः।

तत्रप्रथमा—

मथीद्यदीं॑वि॒ष्टोमा॑त॒रिश्वा॒होता॑रंवि॒श्वाप्सुं॑वि॒श्वदे॑व्यम्।
नियंद॒धुर्म॑नु॒ष्या॑सुवि॒क्षुस्व१॒र्णचि॒त्रंवपु॑षेवि॒भाव॑म् ॥ १ ॥

मथी॑त्। यत्। ई॒म्। वि॒ष्टः। मा॒त॒रिश्वा॑। होता॑रम्।
वि॒श्वऽअ॑प्सुम्। वि॒श्वऽदे॑व्यम्। नि। यम्। द॒धुः। म॒नु॒ष्या॑सु।
वि॒क्षु। स्वः॑। न। चि॒त्रम्। वपु॑षे। वि॒भाऽव॑म् ॥ १ ॥

होतारं देवानामाह्वातारं विश्वाप्सुं अप्स्वितिरूपनाम नानारूपं पार्थिववैद्युतजाठरादिभेदेनआहवनीयादिभेदेनवा यद्वा कालीकराल्यादिरूपेण ज्वालानांवैरूप्याद्विश्वरूपत्वं विश्वदेव्यं सर्वदेवयोग्यक्रियासाधुं यदीयमेनमग्निं मातरिश्वा वृष्ट्यादिनिर्मात्रन्तरिक्षश्वसनोवायुः विष्टः काष्ठेष्वन्तःप्रविष्टःसन् मथीत् अमथ्नात्अवर्धयदित्यर्थः मथेविलोडने ह्यन्तक्षणेतिवृद्धिप्रतिषेधः पुनः सएवविशेष्यते यमग्निं मनुष्यासु मत्वाकर्मकुर्वतीषु विक्षु ऋत्विग्रूपासुप्रजासु पूर्वं वपुषे यज्ञसिद्धये निदधुर्धारयन्तियजमानाः मनुष्यशब्दोनिरुक्तेवहुधानिरुक्तः—मनुष्याःकस्मान्मत्वाकर्माणिसीव्यन्तिमनस्यमानेनसृष्टामनोरपत्यंमनुषोवेति[1] । यद्वा पूर्वं

१ नि ३.७.।

देवाः मनुष्यासु मनोरपत्यभूतासु विक्षु प्रजासुप्राणिषु वपुषे स्वरूपाययागादिस्वरूपप्रकाशाय शरीरधारणायवा जाठराग्निरूपेण निदधुः स्थापितवन्तः तत्रदृष्टान्तः—स्वःन स्वरणंस्वीरणंवाआदित्यमिव चित्रं चायनीयं विभावं विविधप्रकाशवन्तं यथाप्रकाशादिसाधनायधारयन्ति तद्वत् स्वःशब्दंयास्कएवंनिरुवाच—स्वरादित्योभवतिसुअरणःसुईरणःस्वृतोरसान्स्वृतोभासंज्योतिषांस्वृतोभासेतिवेति[1]। ईदृशं यंनिदधुः तंमथीदितिपूर्वत्रान्वयः ॥ १ ॥

१. वायु ने काठ के भीतर घुसकर विविधरूपशाली, सारे देवों के कार्य में निपुण और देवों को बुलानेवाले अग्नि को बढ़ाया। पहले देवों ने अग्नि को विलक्षण प्रकाशवाले सूर्य की तरह मनुष्यों और ऋत्विकों की यज्ञ-सिद्धि के लिए स्थापित किया था।

ददानमिन्नददभन्तमन्माग्निर्वरूथंममतस्यचाकन्।
जुषन्तविश्वान्यस्यकर्मोपस्तुतिंभरमाणस्यकारोः ॥ २ ॥

ददानम्। इत्। न। ददभन्त। मन्म। अग्निः। वरूथम्। मम। तस्य। चाकन्। जुषन्त। विश्वानि। अस्य। कर्म। उपऽस्तुतिम्। भरमाणस्य। कारोः ॥ २ ॥

मन्ममननीयंस्तोत्रं हविरादिकंवाददानमित् अग्नयेकुर्वाणमेवमां दंभितारोवैरिणोनददभंत दंभितुं हिंसितुंनप्रभवन्ति दंभेर्बहुलंछन्दसीतिविकरणस्यश्लुः व्यत्ययेनान्तादेशः ममकोऽतिशयइतिउच्यते तस्यप्रदातुर्ममवरूथं वरणीयं स्तोत्रादिकं अयमग्निश्चाकन् अत्यर्थं कामयते कनतिःकांतिकर्मा अस्माद्यङ्लुगन्ताल्लङि छान्दसोऽडभावः बहुलादेववाछान्दसस्तुजादित्वादभ्यासदीर्घः यस्मादेवंतस्मान्नदभ्नुवन्तीत्यर्थः नकेवलमग्निरेवकामयते किंतु सर्वेदेवाः कामयन्तइत्याह—उपस्तुतिं तंतंदेवमुपेत्य क्रियमाणांस्तुतिंभरमाणस्यकुर्वाणस्य कारोःस्तोतुः अस्ययजमानस्यमम विश्वानि सर्वाणि हविःप्रदानादिरूपाणि कर्माणिजुषन्त सेवन्ते सर्वेदेवाः अतोनददभन्तेत्यर्थः ॥ २ ॥

२. अग्नि को सन्तोषप्रदायक हव्य देने से ही शत्रु लोग मुझे नष्ट नहीं कर सकेंगे। अग्नि मेरे-द्वारा प्रदत्त स्तोत्र आदि के अभिलाषी हैं। जिस समय स्तोता अग्नि की स्तुति करते हैं, उस समय सारे देवता उनके दिये हुए हव्य को ग्रहण करते हैं।

अथतृतीया—

नित्येचिन्नुयंसदनेजगृभ्रेप्रशस्तिभिर्दधिरेयज्ञियासः।
प्रसूनंयन्तगृभयन्तइष्टावश्वासोनरथ्योरारहाणाः ॥ ३ ॥

---

1 नि० २. १४.

नित्ये । चित् । नु । यम् । सदने । जगृभ्रे । प्रशस्तिऽभिः ।
दधिरे । यज्ञियासः । प्र । सु । नयन्त । गृभयन्त । इष्टौ ।
अश्वासः । न । रथ्यः । ररहाणाः ॥ ३ ॥

यज्ञियासोयज्ञयोग्यायजमानाऋत्विजोवा यं मथनेनोत्पन्नमग्निं नित्येचित् सदने नित्यएवगार्हपत्यलक्षणे अभ्यासादनस्थाने नु क्षिप्रं जगृभ्रे गृह्णन्ति ग्रहेर्लिटिइरयोरेइतिरेभावः हृग्रहोर्भइतिभत्वं नित्यंगतश्रियोध्रियते नित्यंगार्हपत्यमितिसूत्राद्गार्हपत्योनित्यः तदाश्रयत्वात्सदनमपिनित्यमुच्यते गृहीत्वाप्रशस्तिभिः प्रशंसाभिः स्तुतिभिः दधिरे धारयन्त्याहवनीयार्थं धृत्वाच इष्टौ एषणेसाधनेयज्ञेनिमित्तभूतेसति गृभयन्तः गृह्णन्तः ऋत्विजः प्रसुनयन्त सुष्ठुप्रणयन्ति तत्रदृष्टान्तः—ररहाणाः रंहसागच्छन्तः रहिगतौ छान्दसस्यलिटःकानच् अनित्यमागमशासनमितिनुमभावः रथ्योरथवन्तः तत्रनियुक्ताः छन्दसीवनिपाविवितिरथशब्दान्मत्वर्थीयईकारः अश्वासोन अश्वाइव तेयथाधृत्वा रथस्वामिनमभिमतदेशंनयन्तितद्वत् ॥ ३ ॥

३. याज्ञिक लोग जिन अग्नि को नित्य अग्नि-गृह में ले जाते और स्तुति के साथ स्थापित करते हैं, उन्हीं अग्नि को ऋत्विकों ने शीघ्र-गामी और रथ-निबद्ध अश्व की तरह यज्ञ के लिए बनाया।

पुरूणिदस्मोनिरिणातिजम्भैराद्रोचतेवनआविभावा ।
आदस्यवातोअनुवातिशोचिरस्तुर्नशर्यामसनामनुद्यून् ॥ ४ ॥

पुरूणि । दस्मः । नि । रिणाति । जम्भैः । आत् । रोचते । वने ।
आ । विभाऽवा । आत् । अस्य । वातः । अनु । वाति । शोचिः ।
अस्तुः । न । शर्याम् । असनाम् । अनु । द्यून् ॥ ४ ॥

अत्रदावाग्निरूपेणायं स्तूयते दस्मउपक्षपयितायमग्निः पुरूणिबहूनिवृक्षादीनिनिरिणातिनितरांहिनस्ति रीगतिरेषणयोः प्वादित्वाद्ध्रस्वः केनसाधनेनेतितदुच्यते—जंभैर्दन्तस्थानीयाभिर्ज्वालाभिः आत् दाहानन्तरं वनेवृक्षादिसमूहात्मके विभावाविविधप्रकाशयुक्तःसन् आसर्वतः रोचते दीप्तोभवति आत् अनन्तरं अस्यशोचिर्ज्वाला अनु अनुकूलोवातः अग्निसखिभूतोवायुः अनुद्यून् अन्वितिवीप्सार्थे प्रतिदिनं वाति ज्वालाआदायगच्छति तत्रदृष्टान्तः—अस्तुः क्षेप्तुःसकाशात् असनां गच्छन्तीं शर्यां न शरोनाम हिंसासाधनलोहमयमिषुमुखं तत्प्रचुरां यद्वा शरोनामवंशावान्तरजातीयःकाष्ठविशेषः तद्विकारां इषुमिव शर्याइषवःशरमय्यइतियास्कः । यद्वा शरएवशर्या अथवा शरोहिंसा तत्करोतीतिशर्याइषुः तांयथावायुर्नोदकजन्योवेगोवाअनुकूलंप्रेरयति तद्वत् ॥ ४ ॥

४. विनाशक अग्नि सब प्रकार के वृक्षों को अपनी शिखाओं या दाँतों से नष्ट करके विपिन में चित्र-विचित्र शोभा प्राप्त करते

हैं। इसके अनन्तर जैसे धनुर्द्धारी के पास से वेग के साथ तीर जाता है, वैसे ही प्रतिदिन वायु शिखा के अनुकूल होकर बहते हैं।

नयंरिपवोनरिषण्यवोगर्भेसन्तंरेषणारेषयंन्ति।
अन्धाअंपश्यानदंभन्नभिख्यानित्यांसंईप्रेतारोंअरक्षन्॥५॥१७॥

न। यम्। रिपवः। न। रिषण्यवः। गर्भे। सन्तम्। रेषणाः। रेषयन्ति। अन्धाः। अपश्याः। न। दभन्। अभिऽख्या। नित्यासः। ईम्। प्रेतारः। अरक्षन्॥ ५॥ १७॥

यमग्निंगर्भेगर्भवद्दक्षकेअरणिमध्येसन्तंवर्तमानंरिपवोनराः नरेषयन्ति नदुःखयन्ति तथा रिषण्यवोऽन्येहिंसकाः दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यतीतिक्यचिनिपात्यते क्याच्छन्दसीत्युः नहिंसन्ति कीदृशास्ते रेषणाः हिंसनस्वभावाः यद्वा तैःक्रियमाणाहिंसनप्रकारानहिंसन्ति किंचास्याभिख्या अभितःख्यातिंमाहात्म्यंअंधाः ज्ञानशक्तिरहिताः अविद्वांसः अतएवअपश्याः अद्रष्टारः यद्वा विद्वांसोप्यभावयितारः अनुपासकाइत्यर्थः ईदृग्रूपाभयेऽपिनदभन् नदभ्नुवन्ति नहिंसन्ति लौकिकोपकारेणापिप्रयोजकत्वादितिभावः तस्यपारमार्थिकंरूपंकेजानन्तीतिचेव उच्यतेनित्यासोनित्याः अविचलितभक्तयः अग्निहोत्रादिनित्यकर्मरतावाअग्न्यनुग्रहाव स्वयमपि नित्याभविष्यन्तीतिभाविनित्यत्वमाश्रित्यनित्याउपचर्यन्ते तादृशायजमानाः प्रेतारः यज्ञादिनातमेवतर्पयितारःसन्तः ईएनमरक्षन् रक्षन्ति यज्ञादिरूपेणभजन्तइत्यर्थः॥ ५॥

५. अरणि के गर्भ में अवस्थित जिन अग्नि को शत्रु या अन्य हिंसक दुःख नहीं दे सकते, अन्धा भी जिनका माहात्म्य ही नष्ट कर सकता, उन्हीं की अविचल भक्तिवाले यजमान विशेष रूप से तृप्ति दे करके रक्षा करते हैं।

महःसइति पंचर्चंनवमंसूक्तम् दैर्घतमसंवैराजमाग्नेयं दशकास्त्रयोविराळेकादशकावेत्युक्तलक्षणसद्भावाव तथाचानुक्रान्तं—महःसवैराजमिति विनियोगोलैङ्गिकः।

तत्रप्रथमा—

महःसरायएषतेपतिर्दन्निनइनस्यवसुनःपदआ।
उपध्रजन्तमद्रयोविधन्नित्॥ १॥

महः। सः। रायः। आ। ईषते। पतिः। दन्। इनः। इनस्य। वसुनः। पदे। आ। उप। ध्रजन्तम्। अद्रयः। विधन्। इत्॥ १॥

२

महः महतः पूज्यस्य रायः गवादिरूपस्यधनस्यपतिः पालकः स्वामीसोऽग्निः दन्ददत् अभिमतंप्रयच्छन् ददातेःशतरिछान्दसःशपोलुक् तस्यछन्दस्युभयथेत्यार्धधातुकत्वादातोलो-पइटिचेत्याकारलोपः आआभिमुख्येन अस्मद्देवयजनंप्रति ईषते गच्छति किंच इनस्यस्वामि-नोऽपि इनःस्वामीसर्वस्यपतिरित्यर्थः ईद्दशोऽयं वसुनोधनस्यपदेआस्पदभूतेवेदिस्थानेआआ-श्रयति उपसर्गवशाद्योग्यक्रियाध्याहारः यद्वा वसुनोनिवासयोग्यस्य धनस्यापिइनइतिसंबन्धः यद्वा वसुप्राप्तिः प्रसिद्धा किंच उपब्रजंतं उपगच्छन्तमेनंअभिषवार्थं अद्रयः ग्राववन्तोयजमानाः विधन्निद् परिचरन्त्येव विधविधाने तौदादिकः लुङि बहुलंछन्दसीत्यडभावः निघाताभावश्छा-न्दसः यद्वा पूर्ववत्तच्छब्दश्रुतेः अत्रयच्छब्दाध्याहारेणास्यसंबन्धादनिघातः यद्वा अद्रयोभि-षवग्रावाणः स्वशब्दैः उपउपेत्यविधन्निपूजयन्त्येव आह्लादंजनयन्तीत्यर्थः ॥ १ ॥

१. महाधन के स्वामी अग्नि अभीष्ट प्रदान करते हुए हमारे देव-पूजन के सामने जा रहे हैं। प्रभुओं के भी प्रभु अग्नि वेद का आश्रय करते हैं। प्रस्तर;हस्त यजमान लोग आगत अग्नि की सेवा करते हैं।

अथद्वितीया—

सयोवृषानरांनरोदस्योःश्रवोभिरस्तिजीवपीतसर्गः ।
प्रयःसस्राणःशिश्रीतयोनौ ॥ २ ॥

सः । यः । वृषा । नराम् । न । रोदस्योः । श्रवःऽभिः । अस्ति । जीवपीतऽसर्गः । प्र । यः । सस्राणः । शिश्रीत । योनौ ॥ २ ॥

सताद्दशोयोऽग्निः नरांन मनुष्याणामिव रोदस्योः द्यावापृथिव्योरपि वृषा सेक्ताउत्पाद-कइत्यर्थः एवंसर्वोत्पादकः श्रवोभिः सर्वत्रश्रूयमाणैर्यशोभिर्युक्तःसन् अस्तिवर्तते सर्वोत्पादक-इत्युक्तं तत्रोपपत्तिमाह—यतोयंजीवपीतसर्गः जीवैर्नानाविधैःपीतआस्वादितःसर्गःसृष्टिक्रमोय-स्यसतथोक्तः तृतीयाकर्मणीतिपूर्वपदप्रकृतिस्वरः पुनर्बहुव्रीहौसएवस्वरः अत्रायंसृष्टिक्रमःअय-मग्निःस्वदत्तंहविरादित्यंप्रापय्य तद्रश्मिभिःसहवैद्युतरूपेणमेघद्वारोदकेनप्रवर्ष्य सर्वान्प्राणिनः प्रापयतीत्यतोवृष्ट्युत्पादनद्वारोत्पादयिता इदानींसाक्षादुत्पादकत्वमाह—योऽग्निर्योनौगर्भाशये सस्राणःप्रविष्टःसन् शिश्रीत निषिक्तंरेतः पारयति नृपश्वादिदेहाकारेणपरिणमयतीत्यर्थः यद्य-ग्निर्नपचेत्पूरयेदेवनोत्पद्येत तस्मादयंसाक्षादेवोत्पादकः सताद्दशोऽग्निः यशस्वीवर्ततइत्यर्थः यद्वा योऽग्निर्नरांन नराणांकर्मसूत्साहयुक्तानांयजमानानामिव नरामनुष्यानृत्यन्तिकर्मस्वितियास्कः।

१ नि० ५. १.

तेषांयथास्वर्गाद्यभिमतवर्षकः तद्वद्रोदस्योरपि आश्रयवाचिनाशब्देनाश्रयिणोलक्ष्यन्ते भूलोकवर्तिनांवृष्टिप्रदानेनद्युलोकवर्तिनांहविःप्रापणेनेतिभावः सताद्दशोऽग्निः श्रवोभिः हविर्लक्षणैः सोमाज्यादिभिरन्नैः निमित्तभूतैः जीवपीतसर्गः जीवविशेषैर्यजमानैः अविशेषेणसर्वैर्वा आस्वादितस्वभावःसन् अस्तिप्रकृष्टोवर्तते अमुमग्निंहविर्भिःप्रीणयित्वास्वाभिमतान्भोगान्भुंजतइत्यर्थः किंच योऽग्निः योनौ स्वकीयस्थाने वेदिलक्षणेसस्राणः प्रविष्टःसन् शिश्रीत स्वस्मिन्प्राप्तंपुरोडाशादिकंपचति सोऽयमग्निरस्ति महानुभावोवर्तते ॥ २ ॥

२. मनुष्यों की तरह जो अग्नि द्यावा पृथिवी के भी उत्पादक हैं, वे यशःशाली होकर वर्त्तमान हैं एवं उन्हीं से जीव लोग सृष्टि का आस्वादन प्राप्त करते हैं। उन्होंने गर्भाशय में पैठकर सारे जीवों की सृष्टि की है।

आयःपुरंनार्मिणीमदींदेदत्यःकविर्नभन्योऽ३नार्वा ।
सूरोनरुरुक्वाञ्छतात्मा ॥ ३ ॥

आ । यः । पुरम् । नार्मिणीम् । अदींदेत् । अत्यः । कविः ।
नभन्यः । न । अर्वा । सूरः । न । रुरुक्वान् । शतऽआत्मा ॥ ३ ॥

योऽग्निर्नार्मिणीं नर्मवतींयजमानानां संबंधिनीं उत्तरवेदिं यद्वा नृणांमनसिस्थितांयजमानानांयज्ञार्थंयांभूमिंप्रत्यश्वागमनमनीषाविद्यतेतांपुरंतत्स्थानं आदीदेव दीपयति कीदृशोऽयं अत्यः अपेक्षितदेशंप्रत्यतनशीलः कविःक्रान्तदर्शी तत्रदृष्टान्तः—अर्वाअरणकुशलोनभन्योन नभस्याकाशेभवःनभस्वान्वायुरिव किंच शतात्मा नानारूपः शतंसहस्रमित्यपरिमितवचनः तत्तद्यजमानगृहापेक्षया आहवनीयगार्हपत्याद्यपेक्षयावानानारूपत्वं अथवामित्रवरुणभेदेन अग्नेर्मित्रादिरूपत्वं त्वमग्नेवरुणोजायसेयत् इन्द्रंमित्रंवरुणमग्निमाहुरित्यादिश्रुतिषुप्रसिद्धम् अग्नेरेव इन्द्राद्यात्मकत्वमाहुरितिद्वितीयमन्त्रस्यार्थः ताद्दशोयं सूरोन सूर्यइवरुरुक्वान् दीप्यमानः रुच-दीप्तौ छान्दसस्यलिटःक्वसुः अतः सताद्दशोऽग्निरस्ति उत्कृष्टंवर्ततइतिपूर्वेणान्वयः ॥ ३ ॥

३. अग्निदेव मेधावी हैं, वे अन्तरिक्ष-विहारी वायु की तरह विभिन्न स्थानों में जाते हैं। उन्होंने दस सुन्दर वेदियों को प्रदीप्त किया है। नानारूप अग्नि सूर्य की तरह सुशोभित होते हैं।

अथचतुर्थी—

अभिद्विजन्मात्रीरोचनानिविश्वारजांसिशुशुचानोअस्थात् ।
होतायजिष्ठोअपांसधस्थे ॥ ४ ॥

---

१ ऋ० सं० ३. ८. १६. । २ ऋ० सं० २. ३. २२. ।

अभि । द्विऽजन्मा । त्री । रोचनानि । विश्वा । रजांसि ।
शुशुचानः । अस्थात् । होता । यजिष्ठः । अपाम् । सधऽस्थे ॥ ४॥

अयमग्निर्द्विजन्मा द्वाभ्यामरणीभ्यांजायमानः यद्वा मथनात्मथमंजन्मउत्पत्त्यनंतरंपवमानेष्ट्यादिसंस्काररूपंद्वितीयंजन्मइव एवंद्विजन्मत्वं अथवा द्यावापृथिवीभ्यामुत्पन्नत्वात् तादृशोऽग्निः त्रीरोचनानि क्षित्यादिस्थानानि त्रीणिरोचनानि गार्हपत्यादीनिवा अभिशुशुचानः अभितःप्रकाशयन् नकेवलंत्रीण्येव किंतु विश्वारजांसि सर्वाण्यपिरंजनात्मकानि क्षित्यादिलोकान् शुशुचानः अभितःप्रकाशयन् दीपयन् होतादेवानामाह्वाता यजिष्ठोयष्टृतमःसन् अपांप्रोक्षण्याद्युदकानां सधस्थे सहस्थाने यागदेशे अस्थात् तिष्ठति ॥ ४ ॥

४. द्विजन्मा अग्नि दीप्यमान लोकत्रय का प्रकाश करते और सारे रञ्जनात्मक संसार का भी प्रकाश करते हैं। वे देवों के आह्वान-कर्त्ता हैं। जहाँ जल संगृहीत होता है, वहाँ अग्नि वर्त्तमान हैं।

अयंसहोतायोद्विजन्माविश्वादधेवार्याणिश्रवस्या ।
मर्तोयोअस्मैसुतुकोददाश ॥ ५ ॥ १८ ॥

अयम् । सः । होता । यः । द्विऽजन्मा । विश्वा । दधे । वार्याणि ।
श्रवस्या । मर्तः । यः । अस्मै । सुऽतुकः । ददाश ॥ ५ ॥ १८ ॥

योद्विजन्मासएवहोताहोमनिष्पादकः अरणीभ्यामुत्पन्नस्यैवगार्हपत्यद्वाराआहवनीयत्वात् आह्वातावादेवानांसोऽयं विश्वाविश्वानिवार्याणि वरणीयानि ईडयंदवृशंसदुहांण्यतइत्याद्युदात्तत्वं श्रवस्या श्रवस्यया श्रवोन्नंहविर्लक्षणंतदिच्छया श्रवःशब्दात्क्यजन्तादप्रत्ययादिति भावेअप्रत्ययः दधेधारयति अस्मैउक्तस्वरूपायाग्नयेयोमर्तः ददाशददातिससुतुकः शोभनपुत्रोभवति ॥ ५ ॥

५. जो अग्नि द्विजन्मा हैं, वे ही होता हैं; वे ही हव्य-प्राप्ति की अभिलाषा से सारा वरणीय धन धारण करते हैं। जो मनुष्य अग्नि को हव्य देता है, वह उत्तम पुत्र प्राप्त करता है।

॥ इतिद्वितीयस्यद्वितीयेष्टादशोवर्गः ॥ १८ ॥

पुरुत्वेतितृचात्मकंदशमंसूक्तम् दैर्घतमसमाग्नेयमौष्णिहं पुरुतृचमौष्णिहमित्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहेछन्दस्यस्यविनियोगः अथैतस्याइतिखण्डेसूत्रितम्—पुरुत्वात्वामग्नइति ।

तत्रप्रथमा—

पुरुत्वादाश्वान्वोचेरिरग्नेतवस्विदा।
तोदस्येवशरणआमहस्य ॥ १ ॥

पुरु। त्वा। दाश्वान्। वोचे। अरिः। अग्ने। तव। स्वित्। आ।
तोदस्यऽइव। शरणे। आ। महस्य ॥ १ ॥

हेअग्ने त्वात्वांपुरुबहुवोचे यद्वा बहुदाश्वानितिसंबन्धः पुत्रंदेहिवित्तंदेहि इत्याद्याशासना-न्निब्रवीमीत्यर्थः किंतूष्णींनेत्याह—यतोदाश्वान् अभिमतंहविर्दत्तवानस्मि अतोवोचे इतरसाधा-रण्येनब्रुवतः कथंदातव्यमितिनमन्तव्यं यतोऽहं हेअग्नेतवस्वित् तवैवआआभिमुख्येन अरिः अर्ताहविरादिप्रापणेनसेवकोहं तत्र दृष्टान्तः—महस्यमहतः तोदस्येव शिक्षकस्य स्वामिनः श-रणेऽस्यगृहे यथागर्भदासादिरासमन्तान्नियतोवर्तते तद्वदहमपि यस्मादेवंतस्मादभिमतं बहुवो-चे त्वमपितत्सर्वंदेहीत्यर्थः अत्रनिरुक्तं[1]—बहुदाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्रऋच्छतेरीश्व-रोऽप्यरिरेतस्मादेवयदन्यदेवत्याअग्नावाहुतयोहूयन्तइत्येतद्दृष्ट्वैवमवक्ष्यत्तोदस्येवशरणआमहस्य तुदस्येवशरणेऽधिमहतइति ॥ १ ॥

१. हे अग्निदेव, मैं हव्य दान करता हूँ, इसलिए तुम्हारे पास बहु-विध प्रार्थनायें करता हूँ। अग्निदेव, मैं तुम्हारा ही सेवक हूँ। अग्नि-देव, महान् स्वामी के घर में जैसे सेवक हैं, वैसे ही तुम्हारे पास मैं हूँ।

अथद्वितीया—

व्यनिनस्यधनिनःप्रहोषेचिदररुषः।
कदाचनप्रजिगतोअदेवयोः ॥ २ ॥

वि। अनिनस्य। धनिनः। प्रऽहोषे। चित्। अररुषः। कदा।
चन। प्रऽजिगतः। अदेवऽयोः ॥ २ ॥

पूर्वमन्त्रेस्वाभीष्टंबहुविज्ञापयामीत्युक्तं अत्रतुस्वविलक्षणेभ्योदानादिरहितेभ्योदानंनदातव्य-मितिप्रार्थयते हेअग्ने त्वांविशेषेणब्रवीमि उपसर्गश्रुतेर्योग्यक्रियाध्याहारः अथवा सन्निहितत्वाद्वो-चेइत्यनुषज्यते अस्मदर्थं यद्यजिज्ञपन् तद्विरुद्धंवोचेवक्ष्यमाणस्वरूपस्यनदातव्यमितिब्रवीमीत्य-

---

१ नि० ५.७.

र्थः तेषांस्वरूपमाह—अनिनस्य अस्वामिनः त्वांअस्वामिनंकुर्वाणस्य तथा धनिनः समग्रधनवतः पूर्वमेव धनवतोदानस्य निरर्थकत्वात्तन्निवार्यते यद्वा यागाद्यनुपयोगिधनवतइत्यर्थः किंच प्रहोषेप्रकर्षेणहोतुंअररुषः अददतोदक्षिणारूपेण यद्वा प्रहोषेअनिनस्येतिसंबंधः प्रकर्षेणहोतुं असमर्थस्येत्यर्थः अत्रइनशब्देनतत्स्थंसामर्थ्यंलक्ष्यते चिच्छब्दःसमुच्चयार्थः किंच कदाचनप्रजिगतः कदाचिदपिप्रकर्षेणदेवानस्तुवतः अत्र चनेतिनिपातद्वयसमुदायः तत्र चशब्दःसमुच्चये नशब्दोनिषेधे किंच अदेवयोः देवानात्मनोनिच्छतः एतेषांनदातव्यमितिविवोचइत्यर्थः निन्दितानांस्वरूपनिरूपणेनस्वस्यातादृशत्वात् बहुवोचइत्येतद्युक्तमेवेत्युक्तंभवति यद्वा चनेतिचिच्छब्दपर्यायः उक्तप्रकारेणदुष्टस्यापिकदाचित्प्रजिगतः यदाकदाचित्त्वांस्तुवतः विवोचे तादृशस्य दातव्यमितिविशेषेणब्रवीमि किमुवक्तव्यमस्मदर्थमितिभावः ॥ २ ॥

२. अग्निदेव, जो धनी मनुष्य तुम्हें स्वामी नहीं मानता, उत्तमरूप हवन के लिए दक्षिणा नहीं देता एवं जो व्यक्ति देवों की स्तुति नहीं करता, उन देवशून्य दोनों व्यक्तियों को धन नहीं देना।

सचन्द्रोविंप्रमर्त्यौमहोव्राधन्तमोदिवि। प्रप्रेत्तेअग्नेवनुषःस्याम॥३॥१९॥

सः। चन्द्रः। विप्र। मर्त्यः। महः। व्राधन्ऽतमः। दिवि।
प्रऽप्र। इत्। ते। अग्ने। वनुषः। स्याम ॥ ३ ॥ १९ ॥

हेअग्ने विप्र मेधाविन् योमर्त्यःत्वांयजते समर्त्योयजमानोदिविद्युलोकेचन्द्रःसर्वेषामाह्लादकचन्द्रसदृशोभवति यद्वा चन्द्रएवभवति यजमानानां चन्द्रत्वप्राप्तिंछन्दोगाआमनंति—पितृलोकादाकाशमाकाशाच्चन्द्रमसमेषसोमोराजेति । ससोमलोकेविभूतिमनुभूयेतिच। तथामुण्डकेऽपि द्युलोकप्राप्तिराम्नायते—एह्येहीतितमाहुतयःसुवर्चसःसूर्यरश्मिभिर्यजमानंवहन्ति तन्नयंत्येताः सूर्यस्यरश्मयोयत्रदेवानांपतिरेकोधिवासइति एषवःपुण्यःसुकृतोब्रह्मलोकइतिच । पुनः सएवविशेष्यते महोमहतोऽपि व्राधंतमःप्रवृद्धतमः इतरदेवानामपिश्रेष्ठइत्यर्थः अतःअग्ने तेतव प्रप्रेव् प्रकर्षेणैव वनुषःसंभक्तारःस्याम यद्वा प्रीणयित्वा प्रप्रेद् स्याम प्रकृष्टाएवभवेम ॥ ३ ॥

३. हे मेधावी अग्नि, जो मनुष्य तुम्हारा यज्ञ करता है, वह स्वर्ग में चन्द्रमा की तरह सबका आनन्ददाता होता है; प्रधानों में भी प्रधान होता है। इसलिए हम विशेषतः तुम्हारे ही सेवक होंगे।

॥ इतिद्वितीयस्यद्वितीयेएकोनविंशोवर्गः ॥ १९ ॥

मित्रंनयमितिनवर्चमेकादशंसूक्तं दैर्घतमसंजागतंमैत्रावरुणंआद्यामैत्र्येव अत्रानुक्रमणिका—मित्रंनवमैत्रावरुणंहिजागतंमैत्र्याद्येति विनियोगोलैङ्गिकः।

तत्रप्रथमा—

मित्रंनयंशिम्यागोषुगव्यवःस्वाध्योविदथेअप्सुजीजनन् ।
अरेजेतांरोदसीपाजसागिराप्रतिप्रियंयजतंजनुषामवः ॥ १ ॥

मित्रम् । न । यम् । शिम्या । गोषु । गव्यवः । सुऽआध्यः ।
विदथे । अप्ऽसु । जीजनन् । अरेजेताम् । रोदसी इति । पाजसा ।
गिरा । प्रति । प्रियम् । यजतम् । जनुषाम् । अवः ॥ १ ॥

यमग्निंशिम्या कर्मनामैतत् शिमीशक्तिरितितन्नामसुपाठात् प्रकाशवृष्ट्युत्पादनादिकर्मणा मित्रंन मित्रमिवस्थितं यद्वा शिम्येत्येतत्क्रियया सहसंबध्यते गोषुबह्वीषु निमित्तभूतासुगव्यवः गाआत्मनइच्छन्तः अत्रयद्यपिगव्यवइत्येवालं नगोष्विति तथापि गव्यवइत्यत्रगोस्वामित्वंप्रतिपाद्यते तच्चैकयाद्वित्वादपिस्यात् अतःस्पृहणीयावह्व्यइत्यवगमयितुंगोष्वितिपदं यथा गवांमसिगोपतिः।गणानांत्वागणपतिं। तथास्वाध्यः सुष्ठुआध्यातारः फलस्योत्पादयितारः शोभनध्यानावाविदथेयागे अप्सुअंतरिक्षेवैद्युतरूपेणवर्तमानं आपइत्यन्तरिक्षनाम आपः पृथिवीतितन्नामसूक्तत्वात् अग्नेरन्तरिक्षोत्पत्तिः यदग्नेदिविजाअस्यप्सुजावा अप्स्वग्नेसधिष्टवइत्यादिमन्त्रान्तरेषुप्रसिद्धा प्रियंसर्वेषांप्रियतमंप्रीणयितारंवा यजतंयष्टव्यंअग्निं जनुषांजन्मवतांप्राणिनां अवःप्रति रक्षणंनिमित्तीकृत्यशिम्यामथनादिकर्मणाजीजनन् जनयन्तियजमानाः यद्वा अप्सु निमित्तभूतासुजीजनन् सर्वप्राणिनामुपकारायवृष्ट्यर्थंचेत्यर्थः एवमुत्पन्नस्याग्नेः पाजसाबलेन गिरा भयंकरशब्देनचरोदसीद्यावापृथिव्यावरेजेतां अकंपेतां अग्नेःसकाशात्कंपनं अरेजेतां रोदसीहोतृवूर्यइत्यादिश्रुतिषुप्रसिद्धं । नचसर्वरक्षणार्थमुत्पादितोऽग्निर्लोकद्वयस्यभीविमजनयत् किमेतर्दिदिवाच्यं निंदास्तुतित्वात् यथालोकौविभीतः तथाप्रवृद्धोभवदितिस्तुतौपर्यवसानात् यद्यप्यत्राग्निरेवप्रतिपाद्यते मित्रस्तुपरंदृष्टान्तितएव तथापिद्युस्थानस्याग्नेरेवमित्रत्वान्मन्त्रस्यमैत्रत्वमविरुद्धम् यद्वा मित्रंन सखायमिवस्थितंमित्रनामकंदेवं यज्ञेऽन्तरिक्षेवाऋत्विजः प्रादुर्भावयन्ति शिष्टमेतद्विशेषेण तथैवयोजनीयम् ॥ १ ॥

१. गोधनाभिलाषी और स्वाध्याय-सम्पन्न यजमानों ने गोधन की प्राप्ति और मनुष्यों की रक्षा के लिए मित्र की तरह प्रिय और यजनीय जिन अग्नि को अन्तरिक्ष-भव जल के मध्य में कर्म-द्वारा उत्पन्न किया है, उनके बल और शब्द से द्यावा-पृथिवी कम्पित होती है।

---

१ ऋ० सं० ५. ६. २३. । २ ऋ० सं० २. ६. २९. । ३ ऋ० सं० ६. ३. ३४. । ४ ऋ० सं० ६. ३. ३०. । ५ ऋ० सं० १. २. ३२. ।

अथद्वितीया—

यद्धत्यद्वांपुरुमीळ्हस्यसोमिनःप्रमित्रासोनदधिरेस्वाभुवः ।
अधक्रतुंविदतंगातुमर्चतउतश्रुतंवृषणापस्त्यावतः ॥ २ ॥

यत् । ह । त्यत् । वाम् । पुरुऽमीळ्हस्य । सोमिनः । प्र ।
मित्रासः । न । दधिरे । सुऽआभुवः । अध । क्रतुम् । विदतम् ।
गातुम् । अर्चते । उत । श्रुतम् । वृषणा । पस्त्यऽवतः ॥ २ ॥

हेमित्रावरुणौ यद्यस्मात्कारणाद्वांयुवां पुरुमीळ्हस्यबहुलाभीष्टसेचनस्य सोमिनः स्वाभुवः सोमवतः स्वाभवनशीलस्य कर्मणिषष्ठी त्यत् उक्तलक्षणंकर्म मित्रासोन मित्राणीव मित्रभूताःऋत्विजः प्रदधिरे प्रकर्षेणधारयन्ति हेतिपूरणः अध अतःकारणात् गातुं युष्मद्गमनं अर्चते षष्ठ्यर्थेचतुर्थी अर्चतःपूजयतोयजमानस्य क्रतुंकर्म विदतंजानीतम् विदेर्लोटिव्यत्ययेनशः उत अपिच हेवृषणा कामानांवर्षितारौ युवांपस्त्यावतः पस्त्येतिगृहनाम पस्त्यादुरोणइतितन्नामसूक्तत्वात् सदः प्राचीनवंशादिगृहवतोयजमानस्य आह्वानं स्तोत्रं वाश्रुतंशृणुतं छान्दसोविकरणस्यलुक् यद्वा यद्यस्मात्सोमिनः सोमवतः पुरुमीळ्हस्य एतन्नामकस्यराज्ञोमित्रासोन मित्राणीवस्थिताः स्वाभुवः स्वाभवनशीलाः स्वस्वव्यापारसमर्थाः दधिरे अधअतः कारणात् तस्यार्चते अर्चतः क्रतुंविदतमित्यादिपूर्ववत् ॥ २ ॥

२. चूंकि मित्रवत् ऋत्विकों ने तुम्हारे लिए अभीष्टदायी और अपने कर्म में समर्थ सोमरस धारण किया है, इसलिए पूजक के घर आओ। तुम अभीष्टवर्षी हो। तुम गृहपति का आह्वान सुनो।

अथतृतीयां—

आवांभूषन्क्षितयोजन्मरोदस्योःप्रवाच्यंवृषणादक्षसेमहे ।
यदीमृतायभरथोयदर्वतेप्रहोत्रयाशिम्यावीथोअध्वरम् ॥ ३ ॥

आ । वाम् । भूषन् । क्षितयः । जन्म । रोदस्योः । प्रऽवाच्यम् ।
वृषणा । दक्षसे । महे । यत् । ईम् । ऋताय । भरथः । यत् ।
अर्वते । प्र । होत्रया । शिम्या । वीथः । अध्वरम् ॥ ३ ॥

हे वृषणा कामानां वर्षितारौ हे मित्रावरुणौ वां युवयोः संबन्धि जन्म जननं उत्पत्तिं रोदस्योः द्यावापृथिव्योः सकाशात् द्यावापृथिवीभ्यामेव सर्वेषामुत्पत्तेः यद्वा मित्र इति सर्वोपकार्यग्निरुच्यते वरुण इति तमोनिवारक आदित्यः उभयोः पृथिवीद्युस्थानत्वात् ततः पूर्वमन्त्रे मित्रदृष्टान्तत्वेनाग्निः स्तुतः अत इदमधिगम्यते अग्निरेव मित्र इति तथान्यत्रापि अग्निं मित्रं न क्षितिषु प्रशंस्यं मित्रं न यं सुधितं भृगवो दधुरिति च। प्रवाच्यं स्तुत्यं तादृग्युवयोर्जन्म महे महते दक्षसे सर्वविषयबलाय क्षितयो मनुष्या यजमानाः आभूषन् सर्वतोलंकुर्वन्ति श्लाघन्त इत्यर्थः जन्मनः प्रवाच्यत्वमाह—यदीं यस्मादेव कारणात् अथवा ईमित्यनर्थकः मिताक्षरेष्वनर्थकाः कमीमिद्विति इत्युक्तत्वात्। ऋताय यज्ञाय भरथः सामर्थ्यं यत् यस्माच्च कारणात् अर्वते युष्मान्प्राप्नवते यजमानाय च भरथोभिमतं फलं अथवा उभयत्र कर्मणः संप्रदानत्वाच्चतुर्थी यज्ञं यजमानं च भरथ इत्यर्थः तथा च होत्रया स्तुतिरूपया वाचा शिम्या हविःप्रदानादिकर्मणा च प्रवीथः प्रकर्षेण प्राप्नुथः तस्मात्तत्प्रवाच्यं जन्म भूषयन्तीत्यर्थः होत्रेति वाङ्नाम होत्रा गीरिति तन्नामसु पाठात् ॥ ३ ॥

३. अभीष्ट-वर्षक मित्रावरुण, मनुष्य लोग महाबल की प्राप्ति के लिए द्यावा-पृथिवी से तुम्हारे प्रशंसनीय जन्म का कीर्त्तन करते हैं; क्योंकि तुम यजमान के यज्ञफलरूप मनोरथ को देते हो तथा स्तुति और हव्ययुक्त यज्ञ ग्रहण करते हो।

अथ चतुर्थी—

प्र सा क्षितिरसुर या महि प्रिय ऋतावानावृतमा घोषथो बृहत्।
युवं दिवो बृहतो दक्षमाभुवं गां न धुर्युप युञ्जाथे अपः ॥ ४ ॥

प्र। सा। क्षितिः। असुरा। या। महि। प्रिया। ऋतऽवानौ। ऋतम्। आ। घोषथः। बृहत्। युवम्। दिवः। बृहतः। दक्षम्। आऽभुवम्। गाम्। न। धुरि। उप। युञ्जाथे इति। अपः ॥ ४ ॥

हे असुरा असुरौ बलवन्तौ मित्रावरुणौ युवयोः या क्षितिः देवयजनरूपा महि महती अत्यधिका प्रिया प्रियतरा प्रीणयित्री वा सा क्षितिः प्रकर्षेण संपादिता उपसर्गश्रुतेर्योग्यक्रियाध्याहारः तामासीदतमिति शेषः यागभूमिर्देवानां प्रियेति प्रसिद्धम् आसाद्य च हे ऋतावानौ ऋतवन्तौ युवां बृहत्प्रवृद्धं ऋतमस्मदीयं यज्ञं आघोषथः अवैकल्येन संपादित इति स्तुतमित्यर्थः यतो युवं युवां बृहतो महतो दिवो द्युलोकस्य धुरि दक्षं तर्पणवहने समर्थं अथवा बृहतो दिवः म-

१ ऋ० सं० २. ५. २०.। २ ऋ० सं० ४. ५. १७.। ३ नि० १. ९.।

हतोद्युलोकस्थदेवान् दक्षं प्रीणयितुमितिशेषः यद्वा कर्मणिषष्ठी दिवोद्योतनात्मकंबृहतः प्रभूतं दक्षं अभिमतसाधनसमर्थं आभुवंसर्वतोभवनशीलं अपः कर्म सोमयागरूपं उपयुंजाथे सेवेथे तत्रत्यं हविःस्वीकुरुथ इत्यर्थः उपयोगेदृष्टान्तः—धुरिशारीरबलस्यनिर्वाहे तदर्थांगांन धेनुमिव तांयथाउपयुंजेवत्तद्वत् यद्वा विकारेप्रकृतिशब्दः क्षीरादिकमिव तस्माद्दत्तमाघोषथः ॥ ४ ॥

४. हे पर्याप्त-बलशाली मित्रावरुण, जो यज्ञभूमि तुम्हारे लिए प्रियतर है, वह उत्तम रूप से सजाई गई है। हे सत्यवादी मित्रावरुण, तुम हमारे महान् यज्ञ की प्रशंसा करो। दुग्ध आदि के द्वारा शरीर में बलदान के लिए समर्थ धेनु की तरह तुम दोनों विशाल द्युलोक के अग्र-भाग में देवों के आनन्दोत्पादन में समर्थ हो और विविध स्थानों में आरम्भ किये कर्म का उपभोग करते हो।

महीअत्रंमहिनावारमृण्वथोरेणवस्तुजआसद्मन्धेनवः ।
स्वरन्तिताउपरताातिसूर्यमानिम्रुचउषसस्तक्ववीरिव ॥५॥२०॥
मही इति । अत्रं । महिना । वारम् । ऋण्वथः । अरेणवः ।
तुजः । आ । सद्मन् । धेनवः । स्वरन्ति । ताः । उपरऽताति ।
सूर्यम् । आ । निऽम्रुचः । उषसः । तक्ववीःऽइव ॥ ५ ॥ २० ॥

हेमित्रावरुणौ युवां महीमहत्यां सप्तम्येकवचनेपूर्वसवर्णदीर्घः ईदूतौचसप्तम्यर्थेइतिप्रगृह्यता अत्रास्यांपृथिव्यां महिनामहत्त्वेन याधेनूः वारं वरणीयं प्रदेशमृण्वथः संपादयथः अंतर्भावितण्यर्थोयं गमनादिव्यवहारस्यतयोरधीनत्वात् द्यावापृथिव्योरभिमानिदेवत्वाच्चमित्रावरुणयोः ताएताधेनवोगावः सायंकालेयुष्मन्महत्त्वेन अरेणवः अनवद्याः तस्करायनपहारेणानष्टावा तुजः क्षीराणांप्रदात्र्यः तुजतिर्दानकर्मा सद्मन् सद्मनिगोष्ठे आआश्रिताः आगच्छन्तिवा उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ताएवंकारिताधेनवः उपरताति उपरतातौ सप्तम्यालुक् मेघानां विस्तारवत्यन्तरिक्षे मेघाच्छन्नेसति सूर्यं सर्वस्यप्रसवितारं सुवीर्यं शोभनसामर्थ्यं वा सुवीर्योमर्यायथागोपायतइति तत्सूर्यस्यसूर्यत्वमितिश्रुत्यन्तरात् । आदित्यमभिलक्ष्यस्वरन्ति स्वयंविसुखसंचाराय स्वृशब्दोपतापयोः भौवादिकः कस्मिन्कालेइतितदुच्यते—निम्रुचः उषसः सर्वेष्वपिसायंकालेषूषःकालेषुच तत्रदृष्टान्तः—तक्ववीरिव तकास्तेनः तस्यवेतागन्तावमनुष्यः सयथाक्रोशतितद्वत् एवंनिरुद्धानां गवांसुखसंचारोयुष्मदायत्तइतितयोःस्तुतिः ॥ ५ ॥

५. मित्रावरुण, तुम अपनी महिमा से जिन गायों को वरणीय प्रदेश में ले जाते हो, उन्हें कोई नष्ट नहीं कर सकता। वे दूध देती और गोशाला में लौट आती हैं। चौरघारी मनुष्यों की तरह वे गायें प्रातःकाल और सायंकाल को उपरिस्थित सूर्य की ओर देखकर चीत्कार करती हैं।

अथषष्ठी—

आवांमृतायकेशिनीरनूषतमित्रयत्रवरुणगातुमर्चथः ।
अवत्मनांसृजतंपिन्वतंधियोयुवंविप्रस्यमन्मनामिरज्यथः ॥ ६ ॥

आ । वाम् । ऋताय । केशिनीः । अनूषत । मित्र । यत्र ।
वरुण । गातुम् । अर्चथः । अव । त्मना । सृजतम् । पिन्वतम् ।
धियः । युवम् । विप्रस्य । मन्मनाम् । इरज्यथः ॥ ६ ॥

हेमित्रावरुणौ केशिनीः केशवत्योग्नेर्ज्वालाः वांयुवयोः ऋताय यज्ञार्थं आनूषत हविः समर्पणेनाभिपूजयन्तीत्यर्थः कुत्रेतितदुच्यते—हेमित्र हेवरुण युवामुभौ यत्रयागे गातुं गमनं देवयजनदेशंवा गातुरितिपृथिवीनाम गातुः पृथ्वेत्युक्तत्वात् अर्चथः पूजयथः स्वीकुरुथइत्यर्थः आगत्यच त्मना आत्मनैव अवसृजतं वृष्टिमवाङ्मुखंविसृजतं तथाकृत्वाधियोऽस्मदीयानिकर्माणि पिन्वतं वर्धयतमित्यर्थः एवंकृत्वाविप्रस्यमेधाविनः यजमानस्य मन्मनां मननवतीनां स्तुतीनां युवं युवां इरज्यथः ईश्वरौ स्वामिनौभवथः इरज्यतिरैश्वर्यकर्मा इरज्यतिपत्यतइतितन्नामसूक्तत्वात् ॥ ६ ॥

६. मित्रावरुण, तुम जिस यज्ञ में यज्ञभूमि को सम्मान-युक्त करते हो, उसमें केश की तरह अग्नि की शिखा यज्ञ के लिए तुम्हारी पूजा करती है। तुम निम्न-मुख से वृष्टि प्रदान करो और हमारे कर्म को सम्पन्न करो। तुम्हीं मेधावी यजमान की मनोहर स्तुति के स्वामी हो।

अथसप्तमी—

योवांयज्ञैःशशमानोहदाशतिकविर्होतायजतिमन्मसाधनः ।
उपाहतंगच्छथोवीथोअध्वरमच्छागिरःसुमतिंगन्तमस्मयू ॥ ७ ॥

यः । वाम् । यज्ञैः । शशमानः । ह । दाशति । कविः । होता ।
यजति । मन्मऽसाधनः । उप । अह । तम् । गच्छथः । वीथः ।
अध्वरम् । अच्छ । गिरः । सुऽमतिम् । गन्तम् । अस्मयू इत्यस्मऽयू ॥ ७ ॥

योह यःखलुयजमानोवां युवामुद्दिश्ययुवाभ्यांवा यज्ञैर्यागैर्निमित्तभूतैः शशमानः शंसमानोदाशतिहविरादिकं स्वस्वत्वंनिवर्त्य युष्मत्स्वत्वापादनंकरोति यएवकविः अनूचानः येवा-अनूचानास्तेकवयइतिश्रुतेः[१] । अथवाकविर्मेधावी होता सम्यक्होमनिष्पादकोयजमानोमन्म-

---

१ ऐ० ब्रा० २. २.

साधनः मननीयद्रव्यदक्षिणादिसाधनोपेतःसन् यजति सोमयागादिकंकरोति तमेवयजमानं सुमतिं शोभनप्रज्ञंउपउपलक्ष्य गच्छथःअह प्राप्नुथःखलु प्राप्यच अध्वरं तदीयंयज्ञं वीथः कामयेथे किंच अस्मयू अस्मान्कामयमानौ युवांगिरः स्तुतीः अच्छ अभिलक्ष्य गन्तं गच्छतं तादृशंमां प्राप्यस्तुतीःस्वीकुरुतमित्यर्थः अत्रयद्यपि तमितिसामान्यनिर्देशःप्रतिभाति तथापि अस्मयूइत्युक्तत्वाद्दीर्घतमाः स्वात्मानमेव परोक्षतयोक्तवानितिगम्यते यद्वा योदाशति यश्चयजतेतमुपेत्यतदीयंयज्ञंकामयेथेअतोस्मयू युवां सुमतिं मां मदीयागिरः स्तुतीः अच्छ अभिलक्ष्यगच्छतम् ॥ ७ ॥

७. जो मेधावी, होमनिष्पादक और मनोहर यज्ञों के साधन से संयुक्त यजमान यज्ञ के लिए तुम्हारे उद्देश्य से स्तुति करते हुए, हव्य प्रदान करता है, उसी बुद्धिशाली यजमान के लिए गमन करो। यज्ञ की कामना करो। हमारे ऊपर अनुग्रह करने की अभिलाषा से हमारी स्तुति स्वीकार करो।

युवांयज्ञैःप्रथमागोभिरञ्जतऋतावानामनसोनप्रयुक्तिषु ।
भरन्तिवांमन्मनासंयतागिरोदृप्यतामनसारेवदाशाथे ॥ ८ ॥
युवाम् । यज्ञैः । प्रथमा । गोभिः । अञ्जते । ऋतऽवाना । मनसः ।
न । प्रऽयुक्तिषु । भरन्ति । वाम् । मन्मना । सम्ऽयता । गिरः ।
अदृप्यता । मनसा । रेवत् । आशाथे इति ॥ ८ ॥

हे ऋतावाना यज्ञवन्तौवृष्ट्युदकवन्तौवा मित्रावरुणौ युवां प्रथमाप्रथमौ यज्ञैर्यजमानसाधनैर्गोभिः गोविकारैः पयआदिभिः अंजते व्यंजयन्ति यजमानाः देवभागंयागेषु क्षीरादिभिर्यजन्तइत्यर्थः यद्वा गोभिर्वाग्भिरंजते स्तुवन्ति तत्रदृष्टान्तः—प्रयुक्तिषुप्रयोगेषु मनसोन कर्मणिषष्ठी मनइव तद्यथा प्रथमंव्यञ्जयन्ति मुख्यंकुर्वन्ति तत्पूर्वकत्वात्सर्वव्यवहारस्य किंच वांयुवां मन्मना मननवता संयतायुवामेवसम्यग्गच्छता चित्तेन गिरः स्तुतीर्भरन्ति संपादयन्ति यस्मादेवं तस्मात् अदृप्यता अनभिभवतामनसाप्रकृष्टेनचेतसायुक्तौसन्तौरेवत् धनवत्कर्मास्मदीयमाशाथे अश्नुवाथे व्याप्नुथः ददाथेइत्यर्थः अश्नोतेर्लिटि अनित्यमागमशासनमितिवचनादिडभावः॥८॥

८. हे सत्यवादी मित्रावरुण, जैसे इन्द्रिय का प्रयोग करने के लिए पहले मन का प्रयोग करना होता है, वैसे ही यजमान लोग अन्य देवों के पहले गव्य-द्वारा तुम्हारा पूजन करते हैं। आसक्त चित्त से यजमान लोग तुम्हारी स्तुति करते हैं। तुम मन में दर्प न करके हमारे समृद्ध कार्य में उपस्थित होओ।

रेवद्वयोदधाथेरेवदाशाथेनरामायाभिरितऊतिमाहिनम् ।
नवांद्यावोहभिर्नोतसिन्धवोनदेवत्वंपणयोनानशुर्मघम् ॥९॥२१॥

रे॒वत् । वयः॑ । द॒धा॒थे॒ इति॑ । रे॒वत् । आ॒शा॒थे॒ इति॑ । नरा॑ ।
मा॒याभिः॑ । इ॒तःऽऊ॑ति । माहि॑नम् । न । वा॒म् । द्यावः॑ ।
अह॑ऽभिः । न । उ॒त । सिन्ध॑वः । न । दे॒व॒ऽत्वम् । प॒णयः॑ । न ।
आ॒न॒शुः॒ । म॒घम् ॥ ९ ॥ २१ ॥

हेमित्रावरुणौ युवांरेवद् धनवद् वयोऽन्नं दधाथे उभयंच धारयथः यस्मादेवंतस्माद्रेवद् धनवद् सहदृष्टत्वात् वयइतिगम्यते धनविशिष्टमन्नं हेनरानेतारौ युवांआशाथे अश्नुवाथे अस्मभ्यं ददाथे इत्यर्थः कीदृशं मायाभिः युवयोःप्रज्ञाभिः इतऊति इतःअस्मदभिमुखं गमनवद् इतोरक्षणवद्वा माहिनं महन्नामैतद् अतिमहद् ईदृशोरावयोरेतादृशंसामर्थ्यंकुतइत्यतआह—वांयुवयोर्देवत्वं अहभिरहोभिः रात्रिभिः अत्राहःशब्देनरात्रिरभिधीयते द्योशब्देनाह्नः पृथगभिधानाद् ताभिःसहिताद्यावोदिवसानानशुः नप्राप्नुवन्ति अहश्चरात्रिश्चोभेनतरतइत्यर्थः उतअपिच सिन्धवः स्यन्दनशीलानद्योनचैवानशुः तथायुवयोर्देवत्वंपणयोऽसुराअपि नानशुः मघंधनंचनानशिरे लोकत्रयेयुवयोः पराभवितारोनकेपिसन्तीत्यर्थः ॥ ९ ॥

९. मित्रावरुण, तुम धन-विशिष्ट अन्न धारण करो, हमें धनयुक्त अन्न प्रदान करो। वह बहुत है और तुम्हारे बुद्धि-बल से रक्षित है। दिन एवं रात्रि को तुम्हारा देवत्व नहीं मिला है। नदियों ने भी तुम्हारा देवत्व नहीं प्राप्त किया, और न पणियों ने ही। पणियों ने तुम्हारा दान भी नहीं पाया

7.4.63 | Page 298

युवंवस्त्राणीतिसप्तर्चं द्वादशंसूक्तं दैर्घतमसं अनादेशपरिभाषयात्रैष्टुभं मैत्रावरुणं पूर्वत्रमैत्रावरुणंहीत्युक्तत्वाद सूक्तविनियोगोलैंगिकः मैत्रावरुणेपशावाद्यावपायायाज्या मदानानामितिखण्डेसूत्रितम्—युवंवस्त्राणिपीवसावसाथेप्रबाहवासिसृतंजीवसेनइति सैवसमावर्तने नववस्त्रधारणेविनियुक्ता सूत्रितंच—युवंवस्त्राणिपीवसावसाथेइत्यहतेवाससीआच्छायेति ।

सैषाप्रथमा—

यु॒वं वस्त्रा॑णि पीव॒सा व॑साथे यु॒वोरच्छि॑द्रा॒ मन्त॑वो ह॒ सर्गाः॑ ।
अवा॑तिरत॒मनृ॑तानि॒ विश्व॑ ऋ॒तेन॑ मित्रावरुणा सचेथे ॥ १ ॥

यु॒वम् । वस्त्रा॑णि । पी॒व॒सा । व॒सा॒थे॒ इति॑ । यु॒वोः । अच्छि॑द्राः ।
मन्त॑वः । ह॒ । सर्गाः॑ । अव॑ । अ॒ति॒र॒त॒म् । अनृ॑तानि । विश्वा॑ ।
ऋ॒तेन॑ । मि॒त्रा॒व॒रु॒णा॒ । स॒चे॒थे॒ इति॑ ॥ १ ॥

हेमित्रावरुणौ पीवसा पीनौ युवंयुवां यद्वा पीवसा पीनान्यच्छिन्नानिवस्त्राण्याच्छादनयोग्यानि वासांसि वसाथे आच्छादयथः यद्वा पीवसा स्थूलेन प्रभूतेन तेजसा वस्त्राणिदधाथे अविच्छिन्नानि वस्त्रस्थानीयानितेजांसि धारयथइत्यर्थः किंच युवयोः सर्गाः सृष्टयःअच्छिद्राः अच्छिन्नाः मन्तवोह मननीयाश्च ईदृशौ युवां विश्वा विश्वानि सर्वाणिअनृतानि असत्यानि अप्रियाणि पापान्यवातिरतं नाशयतम् विश्वेत्यत्रसंहितायां ऋत्यकइतिप्रकृतिभावोह्रस्वत्वंच ऋतेनफलेन तत्साधनेनयज्ञेनवासचेथे संगच्छेथे अस्मभ्यं योजयथइत्यर्थः ॥ १ ॥

१. हे स्थूल मित्र और वरुण, तुम तेजोरूप वस्त्र धारण करो। तुम्हारी सृष्टि सुन्दर और दोषशून्य है। तुम सारे असत्य का विनाश करो और सत्य के साथ युक्त होओ।

एतच्चनत्वोविचिकेतदेषांसत्योमन्त्रःकविशस्तऋघावान्।
त्रिरश्रिंहन्तिचतुरश्रिरुग्रोदेवनिदोहप्रथमाअजूर्यन् ॥ २ ॥

एतत्। चन। त्वः। वि। चिकेतत्। एषाम्। सत्यः। मन्त्रः। कविऽशस्तः। ऋघावान्। त्रिःऽअश्रिम्। हन्ति। चतुःऽअश्रिः। उग्रः। देवऽनिदः। ह। प्रथमाः। अजूर्यन् ॥ २ ॥

एषांएतयोर्मध्ये बहुवचनंपूजार्थं यद्वा तदनुचरापेक्षयावहुवचनं एतयोर्मध्ये त्वःचन एकएवएतत् वक्ष्यमाणंसामर्थ्यरूपंकर्म विचिकेतत् विशेषेणचेतति अनुतिष्ठतीत्यर्थः सविशेष्यते सएकःसत्योबाध्यः सत्सुभवोवामन्त्रोमननवान् कविशस्तः कविभिर्मेधाविभिः शंसनीयःऋघावान् हिंसावान् अनेन वक्ष्यमाणस्यसामर्थ्यस्यसंभाविताप्रतिपादिताभवदित्युक्तम् किंतदित्याशंक्याह त्रिरश्रिं अश्रित्रयोपेतमायुधंत्रिरश्रि तद्वंतं मत्वर्थोलुप्यते उपलक्षणमेतत् सर्वायुधसंपन्नमित्यर्थः एतन्नामानंवाचतुरश्रिः ततोप्यधिकायुधवान् नकेवलमायुधसामर्थ्यं किंतु उग्रःस्वयमुद्गूर्णबलः हन्तिहिनस्ति अतिबलंशत्रुं किंच युवयोरेकस्यैव सामर्थ्येन देवनिदोह देवनिन्दकास्तुप्रथमाःसमर्थाःसन्तोऽपि अजूर्यन्स्वयमेवजीर्णाभवन्ति जीर्यतेःश्यनि बहुलंछन्दसीत्युत्वं युवयोर्मध्येएकोऽपिमहाबलः मिलितयोस्तुसामर्थ्येकिमुवक्तव्यमितिभावः अथवा एषांयुवयोरेतत् उत्तरत्रवक्ष्यमाणं सामर्थ्यंएकःसत्यादिलक्षणोविचिकेतत् विशेषेणजानाति शेषं पूर्ववत् ॥ २ ॥

२. मित्र और वरुण—दोनों ही कर्म का अनुष्ठान करते हैं। दोनों सत्यवादी मंत्रित्व-निपुण, कवियों के स्तवनीय और शत्रु-हिंसक हैं। वे प्रचण्ड रूप से, चतुर्गुण अस्त्रों से संयुक्त होकर त्रिगुण अस्त्रों से युक्तों का विनाश करते हैं। उनके प्रभाव से देव-निन्दक पहले ही जीर्ण हो जाते हैं।

अथतृतीया-

अपादेतिप्रथमापद्वतीनांकस्तद्वांमित्रावरुणाचिकेत ।
गर्भोभारंभरत्याचिदस्यऋतंपिपर्त्यनृतंनितारीत् ॥ ३ ॥

अपात् । एति । प्रथमा । पत्ऽवतीनाम् । कः । तत् । वाम् ।
मित्रावरुणा । आ । चिकेत । गर्भः । भारम् । भरति । आ ।
चित् । अस्य । ऋतम् । पिपर्ति । अनृतम् । नि । तारीत् ॥ ३ ॥

हेमित्रावरुणा मित्रावरुणौ पद्वतीनां मनुष्यादीनां प्रजानां प्रथमाप्रथमभाविनी अपात् पादरहितोषाः प्रतिदिनं सूर्यचन्द्रादिवत् स्वस्याः परिभ्रमणाभावात् सूर्यगमनेनैव स्वगमनाद्-पादितिचएतीतिचोपचर्यते तत् तादृशंवां युवयोः प्रसिद्धंकर्म कःआचिकेत कः आभिमुख्येनजा-नाति कितज्ञाने अतःस्तुत्यमित्यर्थः मित्रावरुणयोरहोरात्रदेवत्वादहोरात्रयोरन्तरालस्यैवोष-स्त्वादेतत्कर्मत्वं किंचास्यलोकस्यभारंनिर्वाहं गर्भः युवयोः गर्भस्थानीयः शिशुरादित्यः अहो-रात्रयोर्मध्यकालउत्पत्तेस्ताभ्यामेव मित्रावरुणत्वात् अहोरात्रेवैमित्रावरुणावितिश्रुतेः । सआ-भरतिचित् समन्तान्निर्वहत्येवहरतिवास्यभारंजाड्यं चिदित्यवधारणे तत्कथमितितदुच्यते-ऋतंसत्यंजगतः प्रकाशगमनादिरूपं पिपर्ति पूरयति अनृतं उक्तविलक्षणं अन्धकारं गमनादि निरोधंच नितारीत् नितरति निमज्जयति नाशयतीत्यर्थः शिशोर्जगद्भारवहनरूपं कर्मयुष्मत्सा-मर्थ्यादिति ॥ ३ ॥

३. मित्रावरुण, पद-संयुक्त मनुष्यों के आगे पदशून्या उषा आती है--यह जो तुम्हारा ही कर्म है, यह कौन जानता है ? तुम्हारे या दिवारात्रि के पुत्र सूर्य सत्य की पूर्त्ति और असत्य का विनाश करके सारे संसार का भार वहन करते हैं।

अथचतुर्थी-

प्रयन्तमित्परिजारंकनीनांपश्यामसिनोपनिपद्यमानम् ।
अनवपृग्णाविततावसानंप्रियंमित्रस्यवरुणस्यधाम ॥ ४ ॥

प्रऽयन्तम् । इत् । परि । जारम् । कनीनाम् । पश्यामसि । न ।
उपऽनिपद्यमानम् । अनवऽपृग्णा । विऽतता । वसानम् । प्रियम् ।
मित्रस्य । वरुणस्य । धाम ॥ ४ ॥

---

२ तै० सं० २. ४. १०. ।

कनीनां कमनीयानां दीप्तानांकन्यकास्थानीयानां उषसांकनतेःकांतिकर्मणइन् छंदि-कारादक्तिनइतिङीष् आमि कन्याशब्दस्यवाछान्दसंसंप्रसारणं तासांजारमादित्यंप्रयन्तमिव प्रगच्छन्तमेवपरिपश्यामसिवयंपरिपश्यामः उपनिपद्यमानंक्षणमात्रमपिनिषीदन्तं नपश्यामः एत-दपितयोःसामर्थ्यं पुनस्तदेवविशेष्यते अनवपृग्णा अनवपृग्णानि असंपृक्तानिअतएववितताति तेजांसिवसानंआच्छादयन्तं प्रियंसर्वेषांप्रियभूतंमित्रस्यवरुणस्यचधामतेजःस्थानभूतं यद्वा प्रि-यंधामेतिसंबध्यते तयोःप्रेमस्थानं ईदृशमादित्यं युष्मदनुज्ञयासंचरन्तंपश्यामसि ॥ ४ ॥

४. हम देखते हैं कि, उषा के जार सूर्य क्रमागत चलते ही हैं-- कभी भी बैठते नहीं। विस्तृत तेज से आच्छादित सूर्य मित्रावरुण के प्रियपात्र हैं।

अनश्वोजातोअनभीशुरर्वाकनिक्रदत्पतयदूर्ध्वसानुः ।
अचित्तंब्रह्मजुजुषुर्युवानःप्रमित्रेधामवरुणेगृणन्तः ॥ ५ ॥

अनश्वः । जातः । अनभीशुः । अर्वा । कनिक्रदत् । पतयत् । ऊर्ध्वऽसानुः । अचित्तम् । ब्रह्म । जुजुषुः । युवानः । प्र । मित्रे । धाम । वरुणे । गृणन्तः ॥ ५ ॥

सएवादित्यः अनश्वः यद्यपिशीघ्रगाम्यश्वरहितः तथाअनभीशुः आलंबनाधारप्रग्रह-स्थानीयरश्मिरहितः तथाप्यर्वाजातः शीघ्रगमनवान्संपन्नः तथाविधोयमादित्यः कनिक्रदत् अत्यर्थंक्रन्दयन् क्रन्देर्यङ्लुगन्ताच्छतरिदाधर्त्यादौनिपात्यते ऊर्ध्वसानुः उपर्युपरिसमुच्छ्रयणः सन् पतयत्गच्छति अचित्तंचित्ताविषयं ब्रह्मपरिवृढंउक्तरूपंकर्ममित्रेवरुणेचउभयोर्धामतेजः स्थानंयुवानः मिश्रयन्तः तयोर्धाम्निआरोपयन्तः तथाप्रगृणन्तः युवयोस्तेजःप्रभावमतिप्रकर्षे-णस्तुवन्तः जुजुषुः सेवन्तेमनुष्याः सूर्यस्यनिरालंबांतरिक्षसंचारात्मकंकर्मवरुणमित्रयोरधीन-मितिस्तुवन्तीत्यर्थः ॥ ५ ॥

५. आदित्य के न तो अश्व हैं न लगाम; परन्तु वे शीघ्र-गमन-शील और अतीव-शब्दकर्त्ता हैं। वे क्रमशः ही ऊपर चढ़ते हैं। संसार इन सब अचिन्तनीय और विशाल कर्मों को मित्र और वरुण के मानकर उनकी स्तुति और सेवा करता है।

आधेनवोमामतेयमवन्तीर्ब्रह्मप्रियंपीपयन्त्सस्मिन्नूधन् ।
पित्वोभिक्षेतवयुनानिविद्वानासाविवासन्नदितिमुरुष्येत् ॥ ६ ॥

आ । धेनवः । मामतेयम् । अवन्तीः । ब्रह्मऽप्रियम् । पीपयन् । सस्मिन् । ऊधन् । पित्वः । भिक्षेत । वयुनानि । विद्वान् । आसा । आऽविवासन् । अदितिम् । उरुष्येत् ॥ ६ ॥

मामतेयंममतायाःपुत्रंदीर्घतमसंमांब्रह्मप्रियंपरिवृढस्यकर्मणःप्रियतमं परिवृढस्याग्नेःप्रीणयितारंवा अवन्तोः अवन्त्यःप्रीणयन्त्यः धेनवोगावःस्वस्मिन्स्वकीयेऊधन् ऊधसिआपीपयन् सर्वतआप्याययन्तु प्यायतेर्णिचिच्छान्दसःपीभावः ऊधोगतेनक्षीरेणयुवाभ्यांप्रदत्तेननोऽस्मात्रक्षंत्वित्यर्थः मित्रावरुणाभ्यांपयस्येतिश्रुतेः । एवंप्रदत्तहविः वयुनानि अनुष्ठानविषयज्ञानानि विद्वान्जानन् हुतशेषोभक्षणीयइत्यवगच्छन् दीर्घतमाः पित्वः पितोः हुतशिष्टस्यान्नस्यतादृगन्नंआसाआस्येन भक्षयितुंभिक्षेत याचेत युष्मान् किंच आविवासन् युवांसमन्तात् परिचरन् अदितिं अखण्डितंअन्यूनमेतत्कर्मउरुष्येत् रक्षेत् यथाशिष्टंभिक्षेत यथाचकर्मसमापनेनरक्षेत् तथापोपयन्त्वित्यर्थः ॥ ६ ॥

६. प्रीति-प्रदायक गायें विशाल कर्म-प्रिय ममता के पुत्र को (मुझे) अपने स्तन से उत्पन्न दूध से प्रसन्न करें। वे यज्ञानुष्ठानों को जानकर यज्ञ में बचे अन्न को मुख-द्वारा खाने के लिए माँगें और मित्रावरुण की सेवा करके यज्ञ को अखण्डित रूप से सम्पूर्ण करें।

मैत्रावरुणपशौवपायाःएषानुवाक्या सूत्रितंच—आवांमित्रावरुणाहव्यजुष्टिमायातंमित्रावरुणेति ।

आवांमित्रावरुणाहव्यजुष्टिंनमसादेवाववसाववृत्याम् ।
अस्माकंब्रह्मपृतनासुसह्याअस्माकंवृष्टिर्दिव्यासुपारा ॥७॥२१॥

आ । वाम् । मित्रावरुणा । हव्यऽजुष्टिम् । नमसा । देवौ ।
अवसा । ववृत्याम् । अस्माकम् । ब्रह्म । पृतनासु । सह्याः ।
अस्माकम् । वृष्टिः । दिव्या । सुऽपारा ॥ ७ ॥ २२ ॥

हेदेवौदेवनशीलौ मित्रावरुणा मित्रावरुणौ वांयुवां हव्यजुष्टिं हविःसेवां नमसानमस्कारोपलक्षितेनस्तोत्रेण अवसारक्षणेननिमित्तभूतेन आववृत्यां आवर्तयेयं यद्वा नमस्कारेणअवसा अन्नेनच आववृत्यां किंच हेमित्रावरुणौ अस्माकंसंबन्धिब्रह्मेदानींक्रियमाणं परिवृढंकर्म पृतनासुसंग्रामेषु सह्याः सह्यात् शत्रूनभिभूयात् अनेनकर्मणाशत्रूनभिभवेयमित्यर्थः किंच अस्माकं दिव्यादिविभवावृष्टिः सुपारासुष्ठुपारयित्रीभवत्वितिशेषः वृष्टौसत्यांव्रीह्यादिद्वाराकर्मसमाप्तेरिति भावः ॥ ७ ॥

७. देव मित्रावरुण, मैं रक्षा के लिए नमस्कार और स्तोत्र करते हुए तुम्हारे हव्य-सेवन के लिए उद्योग करूँगा। हमारा महान् कर्म युद्ध के समय शत्रुओं को परास्त कर सके। स्वर्गीय वृष्टि हमारा उद्धार करे।

२

२५

यजामहेवामितिचतुर्ऋचंचतुर्दशंसूक्तं दैर्घतमसंत्रैष्टुभं मैत्रावरुणं यजामहेचतुष्कमित्यनुक्रमणिका विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

यजामहेवांमहःसजोषाहव्येभिर्मित्रावरुणानमोभिः ।
घृतैर्घृतस्नूअधयद्वामस्मेअध्वर्यवोनधीतिभिर्भरन्ति ॥ १ ॥

यजामहे । वाम् । महः । सऽजोषाः । हव्येभिः । मित्रावरुणा ।
नमःऽभिः । घृतैः । घृतस्नू इति घृतऽस्नू । अध । यत् । वाम् ।
अस्मे इति । अध्वर्यवः । न । धीतिऽभिः । भरन्ति ॥ १ ॥

हेघृतस्नू घृतस्यस्रावयितारौ मित्रावरुणौ महोमहान्तौ वां यजामहे पूजयामः यजमानाऋत्विजश्च कीदृशाः सजोषाः समानप्रीतियुक्ताः केनसाधनेनेतितदुच्यते—हव्येभिः पुरोडाशादिभिः घृतैश्चनमोभिः नमस्कारोपलक्षितैः अधअपिच यद्यस्मात्कारणाद्वांयुवां अस्मेअस्मदीयाध्वर्यवोन अध्वर्यवोऽपि अत्रनशब्दोप्यर्थे तेपिधीतिभिः स्वकीयैःकर्मभिः भरन्ति पोषयन्ति तस्माद्यजामहे ॥ १ ॥

१. हे घृतस्रावी (जलवर्षक) और महान् मित्रावरुण, चूँकि हमारे अध्वर्यु लोग अपने कार्य से तुम्हारा पोषण करते हैं; इसलिए हम समान-प्रीति-युक्त होकर हव्य, घृत और नमस्कार-द्वारा तुम्हारी पूजा करते हैं;

अथद्वितीया—

प्रस्तुतिर्वांधामनप्रयुक्तिरयामिमित्रावरुणासुवृक्तिः ।
अनक्तियद्वांविदथेषुहोतासुम्नंवांसूरिर्वृषणावियक्षन् ॥ १ ॥

प्रऽस्तुतिः । वाम् । धाम । न । प्रऽयुक्तिः । अयामि । मित्रावरुणा ।
सुऽवृक्तिः । अनक्ति । यत् । वाम् । विदथेषु । होता । सुम्नम् ।
वाम् । सूरिः । वृषणौ । इयक्षन् ॥ २ ॥

हेमित्रावरुणौ वांयुवयोः संबंधिनोः यागस्यप्रस्तुतिः प्रस्तावना करोमीतिसंकल्पएव नप्रयुक्तिः कृत्स्नप्रयोगोनसंपन्नः तावतैव युवयोर्धामतेजःस्थानमयामि प्राप्नोमिसुवृक्तिः युवयोः शोभ-

नावर्जकश्चयुष्मत्परिग्रहादस्मि यद् यदातु विदथेषुयज्ञेषुवांयुवांहोताहोमनिष्पादकोयमध्वर्युः अनक्तिहविषागच्छति होमंकरोतीत्यर्थः यद्वा होतादेवानामाह्वाता एतन्नामकऋत्विक् शस्त्रादिनावांअनक्तिव्यंजयति तदासूरिर्युष्मन्माहात्म्यवित् इयक्षन्यागंकर्तुमिच्छन् अहं हेवृषणौ कामानांवर्षितारौ वांयुवयोः सुम्नंयुष्मत्संबन्धिसुखं देवत्वलक्षणंअयामीतिशेषः ॥ २ ॥

२. हे मित्रावरुण, तुम्हारे उद्देश्य से केवल यज्ञ का प्रस्ताव या यज्ञ ही नहीं है; किन्तु उसके द्वारा मैं तुम्हारा तेज प्राप्त करता हूँ। जिस समय सुधी होता तुम्हारे उद्देश्य से यज्ञ करने के लिए आते हैं, उस समय, हे अभीष्टवर्षक, वे सुख प्राप्त करते हैं।

पीपायधेनुरदितिर्ऋतायजनायमित्रावरुणाहविर्दे ।
हिनोतियद्वांविदथेसपर्यन्त्सरातहव्योमानुषोनहोता ॥ ३ ॥

पीपाय । धेनुः । अदितिः । ऋताय । जनाय । मित्रावरुणा ।
हविःऽदे । हिनोति । यत् । वाम् । विदथे । सपर्यन् । सः । रातऽहव्यः ।
मानुषः । न । होता ॥ ३ ॥

हेमित्रावरुणामित्रावरुणौ ऋतायत्युष्मत्संबन्धियज्ञाय हविर्दे हविषोदात्रे आतोमनिन्क्विनिविच् टेर्भत्वेआतोधातोरित्याकारलोपः जनाययजमानायचधेनुःप्रीणयित्रीगौःअदितिः अदीनाबहुक्षीरासतीपीपायक्षीरेणपुनःपुनः आप्यायतां प्यायतेश्छान्दसःप्रार्थनायांलिट् लिड्यङोश्चेतिपीभावः पयस्यादिहविष्कंयज्ञं पयोव्रतादिषुयजमानंचेत्यर्थः कस्मिन्कालइतिचेत्तत्राह—यद्यदा सः प्रसिद्धोरातहव्यःएतन्नामाराजासपर्यन् स्तुत्यापूजयन्मानुषोहोतान मनुष्यस्ययजमानस्य संबन्धीएतन्नामकऋत्विगिव विदथे यज्ञेवांहिनोति हविरादिनाप्रीणयति तदापीपायेत्याह ॥३॥

३. मित्रावरुण, रातहव्य नाम के राजा के मनुष्य यजमान के होता की तरह यज्ञ में सेवा-द्वारा तुम्हें प्रसन्न करने पर राजा की धेनु जैसे दुग्धवती हुई थी, वैसे ही तुम्हारे यज्ञ में जो यजमान हव्य देता है, उसकी गायें भी बहुत दूधवाली होकर आनन्द बढ़ायें।

उतवांविक्षुमद्यास्वन्धोगावआपश्चपीपयन्तदेवीः ।
उतोनोअस्यपूर्व्यःपतिर्दन्वीतंपातंपयसउस्रियायाः ॥ ४ ॥ १३ ॥

उत । वाम् । विक्षु । मद्यासु । अन्धः । गावः । आपः । च ।
पीपयन्त । देवीः । उतो इति । नः । अस्य । पूर्व्यः । पतिः ।
दन् । वीतम् । पातम् । पयसः । उस्रियायाः ॥ ४ ॥

उतअपिच हेमित्रावरुणौ वांयुवांअंधः अदनीयमन्नंपयोरूपंपुरोडाशादिरूपंवा देवीर्द्योतनशीलागावः आपश्चव्रीह्यादिप्रवर्धकान्युदकानिचमद्यासुयुष्माभिर्मदनीयासु विक्षुप्रजासु यजमानलक्षणासु तासामभिवृद्ध्यर्थंपीपयन्त आप्याययन्तु उतोअपिच नोऽस्मत्संबन्धिनोऽस्य यजमानस्य पूर्व्यः पूर्वकालीनः पतिः पालकोऽग्निः दन्द्दाताभवत्वितिशेषः अग्नौहूयमानत्वात्सर्वेषामपिहविषां यस्मादेवंतस्मात् हेमित्रावरुणौ वीतंभक्षयतं पुरोडाशादिकं उस्रियायाः क्षीराद्यस्राविण्याः गोः पयसः पयः पातं यद्वा घनीभूतंपयस्यायाः वीतंस्रवद्रूपंपातम् ॥ ४ ॥

४. मित्र और वरुण, दिव्य धेनुएँ, अन्न और जल तुम्हारे भक्त यजमानों के लिए तुम्हें प्रसन्न करें। हमारे यजमान के पूर्व-पालक अग्नि दानशील हों और तुम क्षीरवर्षिणी धेनु का दूध पीओ।

विष्णोर्नुकमितिषळृचंपंचदशंसूक्तं दैर्घतमसंत्रैष्टुभंवैष्णवं अत्रानुक्रमणिका—विष्णोःषड्वैष्णवंहीति आभिप्लवषडहेषूक्थ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्यस्तोमातिशंसनार्थं इदमादिसूक्तद्वयंविनियुक्तं स्तोमेवर्धमानइतिखण्डेसूत्रितम्—विष्णोर्नुकमितिसूक्तेपरोमात्रयेत्यच्छावाकइति तथातृतीयसवनेसोमातिरेकेउत्तरसंस्थेोपगन्तव्याआतिरात्रात्ततोप्यतिरिक्ते तदर्थमेवशस्त्रमुपजनयितव्यं तत्रैतदेवसूक्तं सोमातिरेकइतिखण्डेसूत्रितम्—महाँइन्द्रोनृवद्विष्णोर्नुकमिति आग्निमारुतशस्त्रेआद्यादि नियुक्ता अथयथेतमितिखण्डेसूत्रितम्—विष्णोर्नुकंवीर्याणिप्रवोचंतंतुंतन्वन्त्रजसोभानुमन्विहीति।

सैषाप्रथमा—

विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि।
योअस्कंभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायः॥ १॥

विष्णोः। नु। कम्। वीर्याणि। प्र। वोचम्। यः। पार्थिवानि।
विऽममे। रजांसि। यः। अस्कंभायत्। उत्ऽतरम्। सधऽस्थम्।
विऽचक्रमाणः। त्रेधा। उरुऽगायः॥ १॥

हेनराः विष्णोर्व्यापनशीलस्य देवस्यवीर्याणिवीरकर्माणि नुकंअतिशीघ्रंप्रवोचं प्रब्रवीमि अत्रयद्यपिनुकमितिपदद्वयं तथापियास्केननवोत्तराणिपदानीत्युक्तत्वात् शाखान्तरेएकत्वे-

१ नि० ३. १३.

नपाठाच्चनुइत्येतस्मिन्नेवार्थेनुकमितिपदद्वयं कानितानीतितत्राह—योविष्णुः पार्थिवानिपृथिवीसंबन्धीनिरजांसि रंजनात्मकानि क्षित्यादिलोकत्रयाभिमानीनिअग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे अत्रत्रयोलोकाअपि पृथिवीशब्दवाच्याः तथाचमन्त्रान्तरं—यदिंद्राग्नीअवमस्यांपृथिव्यांमध्यमस्यांपरमस्यामुतस्थइति[1] । तैत्तिरीयेऽपि—योस्यांपृथिव्यांअस्यायुषेत्युपक्रम्य योद्वितीयस्यांतृतीयस्यांपृथिव्यामिति[2] । तस्माल्लोकत्रयस्यपृथिवीशब्दवाच्यत्वम् किंच यश्च विष्णुरुत्तरं उद्गततरं अतिविस्तीर्णंसधस्थं सहस्थानं लोकत्रयाश्रयभूतं अन्तरिक्षं अस्कभायत् तेषामाधारत्वेनस्कंभितवान् निर्मितवानित्यर्थः अनेनान्तरिक्षाश्रितंलोकत्रयमपिसृष्टवानित्युक्तंभवति यद्वा योविष्णुः पार्थिवानि पृथिवीसंबन्धीनिरजांसिपृथिव्याअधस्तनसप्तलोकान् विममे विविधं निर्मितवान् रजः शब्दोलोकवाची लोकारजांस्युच्यन्तइतियास्केनोक्तत्वात् किंच यश्चउत्तरं उद्गततरंउत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकं अस्कभायत् स्कंभितवान् सृष्टवानित्यर्थः स्कंभेः स्तंभुस्तुंभ्वितिविहितस्यश्नः छन्दसिशायजपीतिव्यत्ययेनशायजादेशः अथवापार्थिवानि पृथिवीनिमित्तकानिरजांसि लोकान्विममे भूरादिलोकत्रयमित्यर्थः भूम्यामुपार्जितकर्मभोगार्थत्वादितरलोकानां तत्कारणत्वं किंच यश्चोत्तरमुत्कृष्टतरं सर्वेषांलोकानामुपरिभूतं अपुनरावृत्तेस्तस्योत्कृष्टत्वं सधस्थं उपासकानांसहस्थानं सत्यलोकं अस्कभायत् स्कंभितवान् ध्रुवंस्थापितवानित्यर्थः किंकुर्वन् त्रेधाविचक्रमाणः त्रिप्रकारं स्वसृष्टान् लोकान् विविधंक्रममाणः विष्णोस्त्रेधाक्रमणं इदंविष्णुर्विचक्रमेइत्यादिश्रुतिषुप्रसिद्धं अतएवोरुगायः उरुभिर्महद्भिर्गीयमानः अतिप्रभूतं गीयमानोवा यएवंकृतवांस्तादृशस्यविष्णोर्वीर्याणिप्रवोचं ॥ १ ॥

१. मैं विष्णु के वीर-कार्य का शीघ्र ही कीर्त्तन करूँगा। उन्होंने वामनावतार में तीनों लोकों को मापा था। उन्होंने ऊपर के सत्यलोक को स्तम्भित किया था। उन्होंने तीन बार पाद-क्षेप किया था। संसार उनकी बहुत स्तुति करता है।

तृतीयसवनेसोमातिरेकएवशस्त्रमुपजनयितव्यं तत्रप्रतदित्ययमनुरूपस्तृचः सोमातिरेकइतिखंडेसूत्रितम्—प्रतद्विष्णुस्तवतेवीर्येणेतिस्तोत्रियानुरूपाविति वाजपेयेनाधिपत्यकामइतिखण्डेसूत्रितम्—प्रतत्तेअद्यशिपिविष्टनामप्रतद्विष्णुस्तवतेवीर्येणेति ।

तत्रप्रथमासूक्तेद्वितीयैषा—

**प्रतद्विष्णुःस्तवतेवी॒र्ये॑णमृ॒गोनभी॒मः कु॑च॒रोगि॑रि॒ष्ठाः ।**
**यस्यो॒रुषु॑त्रि॒षुवि॒क्रम॑णेष्वधिक्षि॒यन्ति॒भुव॑नानि॒विश्वा॑ ॥ २ ॥**

---

१ ऋ० सं० १. ७. २७. । २ तै० सं० १. २. १२. । ३ ऋ० सं० १. २. ७. ।

प्र । तत् । विष्णुः । स्तवते । वीर्येण । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः । यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियन्ति । भुवनानि । विश्वा ॥ २ ॥

यस्येतिवक्ष्यमाणत्वात्सइत्यवगम्यते समहानुभावोविष्णुः वीर्येणस्वकीयेनवीरकर्मणा पूर्वोक्तरूपेणप्रस्तवते प्रकर्षेणस्तूयतेसर्वैः कर्मणिव्यत्ययेनशप् वीर्येणस्तूयमानत्वेदृष्टान्तः—मृगोन सिंहादिरिव यथास्वविरोधिनोमृगयितासिंहोभीमोभीतिजनकः कुचरःकुत्सितहिंसादिकर्तादुर्गमप्रदेशगंतावा गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैःस्तूयते अस्मिन्नर्थे निरुक्तं—मृगोनभीमःकुचरोगिरिष्ठाःमृगइवभीमःकुचरोगिरिष्ठामृगोमार्ष्टेर्गतिकर्मणोभीमोबिभ्यत्यस्माद्भीष्मोप्येतस्मादेवकुचरइतिचरतिकर्मकुत्सितमथचेद्देवताभिधानंक्वायंनचरतीतिगिरिष्ठागिरिस्थायोगिरिःपर्वतःसमुद्गीर्णोभवतिपर्ववान्पर्वतःपर्वपुनःपृणातेःप्रीणातेर्वेति[1] । तद्वद्यमपि मृगः अन्वेष्टाशत्रूणांभीमः भयानकः सर्वेषांभीत्यपादानभूतः परमेश्वराद्भीतिः भीषास्माद्वातः पवतेइत्यादिश्रुतिषुप्रसिद्धा किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषुसर्वासुभूमिषु लोकत्रयेषु संचारीवा तथा गिरिष्ठाः गिरिवदुच्छ्रितलोकस्थायी यद्वा गिरि मन्त्रादिरूपायांवाचि सर्वदा वर्तमानः ईदृशोयंस्वमहिम्नास्तूयते किंच यस्यविष्णोरुरुषुविस्तीर्णेषुत्रिषुत्रिसंख्याकेषु विक्रमणेषुपादप्रक्षेपेषुविश्वासर्वाणिभुवनानिभूतजातानिआश्रित्यनिवसन्ति सविष्णुःस्तूयते ॥ २ ॥

२. चूंकि विष्णु के तीन पाद-क्षेप में सारा संसार रहता है इसलिए भयंकर, हिंस्र, गिरिशायी और वन्य जानवर की तरह संसार विष्णु के विक्रम की प्रशंसा करता है।

अथतृतीया—

प्रविष्णवेशूषमेतुमन्मगिरिक्षितउरुगायायवृष्णे ।
यइदंदीर्घंप्रयतंसधस्थमेकोविममेत्रिभिरित्पदेभिः ॥ ३ ॥

प्र । विष्णवे । शूषम् । एतु । मन्म । गिरिऽक्षिते । उरुऽगायाय । वृष्णे । यः । इदम् । दीर्घम् । प्रऽयतम् । सधऽस्थम् । एकः । विऽममे । त्रिऽभिः । इत् । पदेभिः ॥ ३ ॥

विष्णवे सर्वव्यापकायशूषंअस्मत्कर्तृकत्वादिजन्यं महत् बलत्वं मन्ममननंस्तोत्रं मननीयं शूषंबलंवा विष्णुमेतु प्राप्नोतु कर्मणःसंप्रदानत्वाच्चतुर्थी कीदृशायगिरिक्षिते वाचि गिरिवदुच्च-

1 नि० १.२०।

तप्रदेशेवातिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णेवर्षित्रे कामानां एवंमहानुभावं शूषंप्रामोतु कोऽस्यविशेषइतिउच्यते—योविष्णुरिदंप्रसिद्धंदृश्यमानं दीर्घंअतिविस्तृतं प्रयतंनियतं सधस्थं सहस्थानंलोकत्रयं एकइत् एकएवअद्वितीयः सन् त्रिभिः पदेभिः पादैर्विममे विशेषेणमितवान्॥३॥

३. उन्मत्त प्रदेश में रहनेवाले, अभीष्टवर्षक और सब लोकों में प्रशंसित विष्णु को महाबल और स्तोत्र आश्रित करें। उन्होंने अकेले ही एकत्र अवस्थित और अति विस्तीर्ण नियत लोक-त्रय को तीन बार के पद-क्रमण-द्वारा मापा था।

यस्यत्रीपूर्णामधुनापदान्यक्षीयमाणास्वधयामदन्ति।
यउंत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा॥ ४ ॥

यस्य। त्री। पूर्णा। मधुना। पदानि। अक्षीयमाणा। स्वधया। मदन्ति। यः। ऊम् इति। त्रिऽधातु। पृथिवीम्। उत। द्याम्। एकः। दाधार। भुवनानि। विश्वा॥ ४ ॥

यस्यविष्णोः मधुना मधुरेण दिव्येनामृतेनपूर्णा पूर्णानि त्री त्रीणिपदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान् यउ यएव पृथिवीं प्रख्यातां भूमिं द्यामुत द्योतनात्मकमन्तरिक्षंच विश्वाभुवनानि सर्वाणि भूतजातानि चतुर्दशलोकांश्च यद्वा पृथिवीशब्देन अधोवर्तीनिअतलवितलादिसप्तभुवनान्युपात्तानि द्युशब्देन तदवान्तररूपाणि भुवआदिसप्तभुवनानि एवंचतुर्दशलोकान् विश्वाभुवनानि सर्वाण्यपितत्रत्यानि भूतजातानि त्रिधातु त्रयाणांधातूनां समाहारः त्रिधातु पृथिव्यप्तेजोरूपधातुत्रयविशिष्टंयथा भवतितथादाधार धृतवान् तुजादित्वादभ्यासस्यदीर्घत्वं उत्पादितवानित्यर्थः छन्दोगारण्यके—तत्तेजोसृजत तदपोसृजत ताआपऐक्षन्त ताअन्नमसृजन्तेतिभूतत्रयसृष्टिमुक्त्वा हंताहमिमास्तिस्रोदेवतास्तासांत्रिवृतंत्रिवृतमेकैकांकरवाणीत्यादिना त्रिवृत्करणसृष्टिरुपपादिता यद्वा त्रिधातु कालत्रयंगुणत्रयंवा दाधारेत्यन्वयः॥ ४ ॥

४. जिन विष्णु का ह्रास-हीन; अमृतपूर्ण और त्रिसंख्यक पद-क्षेप अन्न-द्वारा मनुष्यों को हर्ष देता है, जिन विष्णु ने अकेले ही धातु-त्रय, पृथिवी, द्युलोक और समस्त भुवनों को धारण कर रखा है।

आतिथ्यायांतदस्येत्येषाप्रधानस्ययाज्या अथातिथ्येतिखण्डेसूत्रितम्—इदंविष्णुर्विचक्रमेतदस्यप्रियमभिपाथोअश्यामिति।

तदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवोमदन्ति।
उरुक्रमस्यसहिबन्धुरित्थाविष्णोःपदेपरमेमध्वउत्सः॥ ५ ॥

तत् । अस्य । प्रियम् । अभि । पाथः । अश्याम् । नरः । यत्र ।
देवऽयवः । मदन्ति । उरुऽक्रमस्य । सः । हि । बन्धुः । इत्था ।
विष्णोः । पदे । परमे । मध्वः । उत्सः ॥ ५ ॥

अस्यमहतोविष्णोः प्रियंप्रियभूतंतत्सर्वैःसेव्यत्वेनप्रसिद्धंपाथः अन्तरिक्षनामैतत् पाथोन्तरिक्षंपथाव्याख्यातं इतियास्केनोक्तत्वात् । अन्तरिक्षलोकाख्यंस्थानं अविनश्वरं ब्रह्मलोकमित्यर्थः अभिअश्यां व्याप्नुयां तदेवविशेष्यते यत्रस्थानेदेवयवःदेवंद्योतनस्वभावंविष्णुं आत्मनइच्छन्तःयज्ञदानादिभिःप्राप्तुमिच्छन्तोनरः मदन्ति तृप्तिमनुभवन्ति तदश्यामित्यन्वयः पुनरपितदेवविशेष्यते उरुक्रमस्यअत्यधिकंसर्वंजगदाक्रममाणस्यतत्तदात्मनाअतएव विष्णोर्व्यापकस्यपरमेश्वरस्यपरमेउत्कृष्टे निरतिशयेकेवलसुखात्मकेपदेस्थानेमध्वः मधुरस्यउत्सः निष्पन्दोवर्तते तदश्यांयत्रक्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयंनास्ति संकल्पमात्रेणामृतकुल्यादिभोगाःप्राप्यन्तेतादृशमित्यर्थः ततोधिकंनास्तीत्याह इत्थाइत्थंउक्तप्रकारेणसहिबन्धुःसखलुसर्वेषांसुकृतिनांबन्धुभूतः हितकरोवातस्यपदंप्राप्तवतः नपुनरावृत्तिः नसपुनरावर्ततइति श्रुतेस्तस्यबन्धुत्वं हिशब्दःसर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः ॥ ५ ॥

५. देवाकांक्षी मनुष्य जिस प्रिय मार्ग को प्राप्त करके तृप्त होते हैं, मैं भी उसी को प्राप्त करूँ। उस पराक्रमी विष्णु के परम पद में मधुर (अमृत आदि का) क्षरण है। विष्णु वस्तुतः बन्धु हैं।

अथषष्ठी—

ताविांवास्तून्युश्मसिगमध्यैयत्रगावोभूरिशृङ्गाअयासः ।
अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि ॥ ६ ॥ २४ ॥

ता । वाम् । वास्तूनि । उश्मसि । गमध्यै । यत्र । गावः । भूरिऽशृङ्गाः ।
अयासः । अत्र । अह । तत् । उरुऽगायस्य । वृष्णः । परमम् ।
पदम् । अव । भाति । भूरि ॥ ६ ॥ २४ ॥

हेपत्नीयजमानौ वां युष्मदर्थंतातानि गंतव्यत्वेनप्रसिद्धानि वास्तूनिसुखनिवासयोग्यानि स्थानानिगमध्यै युवयोर्गमनायउश्मसिकामयामहे तदर्थंविष्णुंप्रार्थयामइत्यर्थः तानीत्युक्तंका-

---

१ नि० ६. ७. ।

नीत्याह—यत्रयेषुवास्तुषुगावोरश्मयोभूरिशृंगाः अत्यंतोन्नत्युपेताः बहुभिराश्रयणीयावा अ-यासः अयनागन्तारः अतिविस्तृताः यद्वा अयासः गन्तारः अतादृशाःअत्यन्तप्रकाशयुक्ताइत्य-र्थः अत्राहअत्रखलु वास्त्वाधारभूतेद्युलोकेउरुगायस्य बहुभिर्महात्मभिर्गातव्यस्यस्तुत्यस्यवृष्णः कामानांवर्षितुः विष्णोः तत् तादृशंसर्वत्रपुराणादिषुगंतव्यत्वेनप्रसिद्धंपरमंनिरतिशयंपदं स्थानंभू-रिअतिप्रभूतं अवभातिस्वमहिम्नास्फुरति अयंमन्त्रोयास्केनगोशब्दोरश्मिवाचकइतिव्याचक्षाणे-नव्याख्यातः—तानिवांवास्तूनिकामयामहेगमनाययत्रगावोभूरिशृंगाबहुशृंगाभूरीतिबहुनोनामधे-यंप्रभवतीतिसतःशृंगंश्रयतेर्वाश्रृणातेर्वाशम्नातेर्वाशरणायोद्गतमितिवाशिरसोनिर्गतमितिवा यासोऽयनास्तत्रतदुरुगायस्यविष्णोर्महागतेःपरमंपदंपरार्ध्यस्थमवभातिभूरिपादःपद्यतेरिति[1] ॥ ६ ॥

६. जिन सब स्थानों में उन्नत शृङ्गवाली और शीघ्रगामी गायें हैं, उन्हीं सब स्थानों में तुम दोनों के जाने के लिए मैं विष्णु की प्रार्थना करता हूँ। इन सब स्थानों में बहुत लोगों के स्तवनीय और अभीष्टवर्षक विष्णु का परम पद यथेष्ट स्फूर्ति प्राप्त करता है।

॥ इतिद्वितीयस्यद्वितीयेचतुर्विंशोवर्गः ॥ २४ ॥

प्रवःपान्तमितिषळृचंषोडशंसूक्तम् दैर्घतमसंजागतं पूर्वत्रवैष्णवंहीत्युक्तत्वाद्वैष्णवं आ-द्यस्तृचःइन्द्रदेवताकश्च प्रवोजागतंत्वैन्द्रश्चाद्यस्तृचइत्यनुक्रमणिका आभिप्लविकेषूक्थ्ये-षुस्तोमातिशंसने उक्तोविनियोगः ।

तत्रप्रथमा—

प्रवःपान्तमन्धसोधियायतेमहेशूराय विष्णवेचार्चत ।
यासानुनिपर्वतानामदाभ्यामहस्तस्थतुरर्वतेवसाधुना ॥ १ ॥

प्र । वः । पान्तम् । अन्धसः । धियाऽयते । महे । शूराय । विष्णवे । च । अर्चत । या । सानुनि । पर्वतानाम् । अदाभ्या । महः । तस्थतुः । अर्वताऽइव । साधुना ॥ १ ॥

हे अध्वर्य्वादयः वोयुष्माकंसंबन्धिपान्तं पालनस्वभावं पातव्यंवाअन्धसः अन्धःसोम-रूपमन्नंप्रार्चत प्रकर्षेणसंपादयत कस्मैधियायते स्तुतीरिच्छते महेमहतेशूराय विक्रान्तायेन्द्रा-यविष्णवेव्यापकायएतन्नामकायदेवायच कस्तयोरतिशयइत्युच्यते—या यौ इन्द्राविष्णूपर्वतानां

---

१ नि० २.७.

प्रीणनवतां पूरणवतांवा पर्वतशब्दोयास्केनैवंनिरुक्तः—पर्ववान्पर्वतःपर्वपुनःपृणातेःप्रीणा-तेर्वेति'। उक्तलक्षणानां लोकानां सानुनि समुच्छ्रितप्रदेशे सर्वलोकेइत्यर्थः अथवा मेघानां समुच्छ्रितप्रदेशे पर्वतशब्दोमेघनामसूक्तत्वात् तत्रतस्थतुः तिष्ठतः कीदृशौतौ अदाभ्या अदंभनी-यौ परैरनभिभाव्यौ अतएवमहः महान्तौ यद्वा महोमहसिस्वतेजसि सानुनीत्यनेनसंबन्धः तत्र दृष्टान्तः—साधुना अभिमतदेशप्रापणसमर्थेन अर्वता वेगवता अश्वेनेव तेन यथा अत्युच्छ्रि-तं प्रदेशमारोहति तद्वदुच्चंपदमारूढौ तस्मात्ताभ्यामर्चत ॥ १ ॥

१. अध्वर्य्युगण, तुम स्तुतिप्रिय और महावीर इन्द्र और विष्णु के लिए पीने योग्य सोमरस तैयार करो। वे दोनों दुर्द्धर्ष और महिमावाले हैं। वे मेघ के ऊपर इस तरह भ्रमण करते हैं, मानों सुशिक्षित अश्व के ऊपर भ्रमण करते हैं।

सोमातिरेकेतृतीयसवने एषावैकल्पिकीयाज्या तथाचसूत्रितम्—त्वेषमित्थासमरणंशि-मीवतोरितिवायाज्येति।

त्वेषमित्थासमरणंशिमीवतोरिन्द्राविष्णूसुतपावामुरुष्यति।
यामर्त्यायप्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ २ ॥

त्वेषम्। इत्था। सम्ऽअरणम्। शिमीऽवतोः। इन्द्राविष्णू इति।
सुतऽपाः। वाम्। उरुष्यति। या। मर्त्याय। प्रतिऽधीयमानम्।
इत्। कृशानोः। अस्तुः। असनाम्। उरुष्यथः ॥ २ ॥

हेइन्द्राविष्णू शिमीवतोः इष्टप्रदानादिकर्मवतोः वांयुवयोः इत्था इत्थंत्वेषं प्रदीप्तं समर-णं सम्यग्यागदेशगमनं सुतपाः हुतशिष्टसोमपीतयजमानउरुष्यति रक्षति यागेनपूजयति यद्वा शिमीवतोः प्रहरणादिकर्मवतोः वांयुवयोः त्वेषंदीप्तंशौर्योपेतं समरणंसम्यक्परस्परगमनो-पेतंवृष्टिप्रदानायमेघविदारणरूपं कर्म यजमानः उरुष्यति रक्षति स्तौतीत्यर्थः कस्तयोरतिश-यइत्युच्यते—या याविन्द्राविष्णू युवांमर्त्यायमनुष्यायहविर्दात्रेयजमानायप्रतिधीयमानमित् प्र-तिधातव्यं फलरूपं असनां असनंचलनशीलं प्रदानशीलमन्नादिकं अस्तुः अभिमतक्षेप्तुः नि-रसितुर्वांशत्रूणां कृशानोरग्नेःसकाशात् उरुष्यथः अविच्छेदेनप्रवर्तयथः वह्नौहुतंहविः स्वी-कृत्यतन्मुखादेवफलमपिदास्यथइत्यर्थः ॥ २ ॥

२. इन्द्र और विष्णु, तुम लोग वृष्ट-पद हो, इसलिए यज्ञ में बचे हुए सोम पीनेवाले यजमान तुम्हारे दीप्तिपूर्ण आगमन की प्रशंसा करते हैं। तुम लोग मनुष्यों के लिए, शत्रु-विमर्दक अग्नि से प्रदातव्य अन्न सदा प्रेरित करते हो।

अथतृतीया—

ताईंवर्धन्तिमह्यस्यपौंस्यंनिमातरानयतिरेतसेभुजे।
दधातिपुत्रोवरंपरंपितुर्नामतृतीयमधिरोचनेदिवः ॥ ३ ॥

ताः। ईम्। वर्धन्ति। महि। अस्य। पौंस्यम्। नि। मातरा।
नयति। रेतसे। भुजे। दधाति। पुत्रः। अवरम्। परम्। पितुः।
नाम। तृतीयम्। अधि। रोचने। दिवः ॥ ३ ॥

ताः सोमरूपाः प्रसिद्धाआहुतयोयजमानेनहुताः ईंएतदस्येन्द्रस्य महिमहत्पौंस्यंपुंसः कर्मवक्ष्यमाणरूपंबलंवर्धन्ति वर्धयन्ति ईमित्यनर्थकोवा सचेन्द्रः सोमपानजनितं सामर्थ्यं मातरा द्यावापृथिव्यौनिनयति नितरांप्रापयति किमर्थं रेतसेप्राणिनांपुत्राद्युत्पादनसामर्थ्याय भुजे तेषां भोगाय रक्षणायवा कुत्रेतितदुच्यते—दिवोद्योतमानस्यादित्यस्यअधिअधिकंरोचनेरोचमानेमण्डले नाम नमनं द्यावापृथिव्योः स्थापितंसामर्थ्यं पुत्रःपुरुत्रातासर्वोजनः पितुः पालकाद्विष्णोरनुग्रहात् यद्वा पितुः स्वोत्पादकात्स्वयमुत्पन्नंसत् अवरंनिकृष्टंनामपौत्रसंज्ञंपरंतत्उत्कृष्टं पुत्रइतिनामतदुभयापेक्षयातृतीयं पितेतिनामदधाति धारयति । त्रीणिवावरेतांसिपितापुत्रःपौत्रइतिश्रुतेः[1]। अस्यायमर्थः अग्नौहुताःसोमाहुतयः आदित्यमण्डलंप्राप्यद्वादशात्मनःसवितुर्मूर्त्यन्तराविन्द्राविष्णूपोषयन्ति तुष्टौतौमेघद्वारावर्षंतः तयावृष्ट्यासस्यादिद्वाराप्रजाःपुत्रपौत्रादिरूपेणवर्धयतइत्येवंमहानुभावाविन्द्राविष्णूइति ॥ ३ ॥

३. सारी प्रसिद्ध आहुतियाँ इन्द्र के महान् पौरुष को बढ़ाती हैं। इन्द्र सबकी मातृभूता द्यावा-पृथिवी के रेत, तेज और उपभोग के लिए यही शक्ति प्रदान करते हैं। पुत्र का नाम निकृष्ट या निम्न है और पिता का नाम उत्कृष्ट या उच्च है। द्युलोक के दीप्तिमान् प्रदेश में तृतीय नाम या पौत्र का नाम है अथवा वह द्युलोक में रहनेवाले इन्द्र और विष्णु के अधीन है।

तत्तदिदस्यपौंस्यंगृणीमसीनस्यत्रातुरवृकस्यमीळ्हुषः।
यःपार्थिवानित्रिभिरिद्विगामभिरुरुक्रमिष्टोरुगायायजीवसे ॥४॥

तत्ऽतत्। इत्। अस्य। पौंस्यम्। गृणीमसि। इनस्य। त्रातुः।
अवृकस्य। मीळ्हुषः। यः। पार्थिवानि। त्रिऽभिः। इत्। विगामऽभिः।
उरु। क्रमिष्ट। उरुऽगायाय। जीवसे ॥४॥

---

[1] तै० ब्रा० ५. ६. ८.।

अस्यमहानुभावस्य तत्तत्पौंस्यं पुंस्त्वं पराक्रमातिशयं गृणीमसि गृणीमः स्तुमः कीदृशस्यास्य इनस्य सर्वस्यस्वामिनः त्रातुः पालकस्य अवृकस्य वृकोहिंसकः शत्र्वादिः तद्रहितस्य मीळ्हुषः सेक्तुः नित्यतरुणस्यस्तुत्येषुपराक्रमेषुमध्यमेकमुदाहरति योविष्णुः पार्थिवानिपृथिव्यादीनिप्रथनवन्तिवासामर्थ्याद् रजांसीतिगम्यते लोकत्रयस्यापिपृथिवीशब्दवाच्यत्वं पूर्वमुदाहृतम् तानित्रिभिरिद्भिगामभिः त्रिभिरेवविविधगमनैः उरुविस्तीर्णं यथाभवतितथा क्रमिष्टक्रांतवान् विचक्रमइत्यर्थः उरुगायाय उरुगातव्यायजीवसे लोकत्रयलक्षणाय यद्वा उरुगायाय षष्ठ्यर्थे चतुर्थी उरुगायस्यविष्णोरीदृशंपराक्रमंगृणीमसि किमर्थं जीवसेजीवनायरक्षणाय ॥ ४ ॥

४. हम सबके स्वामी, पालक, शत्रु-रहित और तरुण विष्णु के पौरुष की स्तुति करते हैं। विष्णु ने प्रशंसनीय लोक की रक्षा के लिए तीन बार पाद-विक्षेप-द्वारा सारे पार्थिव लोकों की विस्तृत रूप से प्रदक्षिणा की है।

द्वेइदस्यक्रमणेस्वर्दृशोभिख्यायमर्त्योभुरण्यति ।
तृतीयमस्यनकिरादधर्षतिवयश्चनपतयन्तःपतत्रिणः ॥ ५ ॥

द्वे इति । इत् । अस्य । क्रमणे इति । स्वःऽदृशः । अभिऽख्याय ।
मर्त्यः । भुरण्यति । तृतीयम् । अस्य । नकिः । आ । दधर्षति ।
वयः । चन । पतयन्तः । । पतत्रिणः ॥ ५ ॥

अस्यस्वर्दृशः स्वर्गस्य सर्वस्यवाद्रष्टुर्विष्णोः द्वेइत्क्रमणे द्वेएवपदे मर्त्योमनुष्यः अभिख्यायसर्वभूत्यादिनाप्रख्याय भुरण्यति गच्छति भजते भुरण्यतिःकण्ड्वादिर्गतिकर्मा भुरण्यतिशवतीतितत्कर्मसुपाठात् प्रसिद्धत्वाद्भूलोकं वृष्ट्यागमनादन्तरिक्षंचेत्युभेक्रमणेजानाति अस्यविष्णोस्तृतीयंक्रमणं द्युलोकाख्यं कोऽपि मर्त्योनकिः नैवादधर्षति बुध्यानाभिभवति ज्ञातुंनशक्नोतीत्यर्थः नकेवलं मनुष्यएवअपितुवयश्चन वेचारोमरुतोऽपि कीदृशास्ते पतयन्तः सर्वत्रगमनसमर्थाः तथापतत्रिणः पतनशीलागरुडादयोवायवोवा नकिरादधर्षति नैवशक्नुवन्ति धृषेर्लेटयडागमः सत्यलोकस्यात्यंतविप्रकृष्टत्वेन सर्वेषामविषयत्वादितिभावः ॥ ५ ॥

५. मनुष्यगण कीर्त्तन करते हुए स्वर्गदर्शी विष्णु के दो पाद-क्षेप प्राप्त करते हैं। उनके तीसरे पाद-क्षेप को मनुष्य नहीं पा सकते; आकाश में उड़नेवाले पक्षी या मरुत् भी नहीं प्राप्त कर सकते।

चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीँरवीविपत् ।
बृहच्छरीरोविमिमानऋक्वभिर्युवाकुमारःप्रत्येत्याहवम् ॥६॥२५॥

चतुःऽभिः । साकम् । नवतिम् । च । नामऽभिः । चक्रम् । न ।
वृत्तम् । व्यतीन् । अवीविपत् । बृहत्ऽशरीरः । विऽमिमानः ।
ऋक्वऽभिः । युवा । अकुमारः । प्रति । एति । आऽहवम् ॥ ६ ॥२५॥

अयमादित्यात्माविष्णुः चतुर्भिःसाकंसहितां नवतिं सचतुर्नवतिमित्यर्थः एतत्संख्याकान्कालावयवान् नामभिः स्वकीयनमनप्रकारैः प्रेरणविशेषैः वृत्तंयथाभवतितथाव्यतीन् विविधानेव स्वभावान् वृत्तंचक्रंन बह्वरोपेतंचक्रमिव तद्यथा शत्रोरुपरिप्रक्षेपेणभ्रमयति तद्वदुक्तसंख्याकान् कालावयवान् अवीविपद् कंपयति भ्रमयति टुवेपृकंपने ण्यन्तालुङिचङिरूपं केपुनस्तउच्यन्ते—संवत्सरएकः अयनेद्वे पंचर्तवः द्वादशमासाः चतुर्विंशत्यर्धमासाः त्रिंशदहोरात्राः अष्टौयामाः एकस्मिन्दिने पर्यावर्तमानानि मेषादीनिद्वादशलग्नानीति मिलित्वाचतुरधिकनवतिसंख्याकान् अवीविपद् ननु आदित्यःस्वयमपि इतरवत्परिभ्रमतिकथंभ्रमयतीत्युच्यते नैषदोषः एतेषांभ्रामकस्यध्रुवस्य विष्णोर्मूर्त्यन्तरत्वाद् अथवास्वभ्रमणाधीनत्वादितरेषांपरिभ्रमणस्य अतः स्वयंभ्रमयतीत्युच्यते एवंकालात्मकोविष्णुः बृहच्छरीरः विराडात्मनासर्वदेवमनुष्यादिशरीराणांस्वशरीरत्वाद् बृहच्छरीरत्वमेवोपपादयति विमिमानः विविधमात्मानं मिमानः देवतिर्यगात्मनाविभज्यस्थापयन् यद्वा ऋक्वभिः स्तुतिमद्भिर्मन्त्रवद्भिर्वाविमिमानः यद्यपिविभुः तथापि भक्त्यधीनत्वात्स्तुत्यामीयते युवा सर्वत्रमिश्रणशीलः नित्यतरुणोवा अतएवाकुमारः अनल्पः एवंभूतोमहाविष्णुराहवमाह्वानंप्रतिएतिगच्छति यज्ञदेशम् ॥ ६ ॥

६. विष्णु ने गति-विशेष द्वारा विविध स्वभावशाली काल के ९४ अंशों को चक्र की तरह वृत्ताकार परिचालित कर रखा है। विष्णु विशाल स्तुति से युक्त और स्तुति-द्वारा जानने योग्य हैं। वे नित्य, तरुण और अकुमार हैं। वे युद्ध में या आह्वान पर जाते हैं।

भवामित्रइतिपंचर्चंसप्तदशंसूक्तं दैर्घतमसंजागतंत्वित्युक्तत्वादिदमपिजागतं वैष्णवंहीत्युक्तत्वाद्वैष्णवं भवपंचेत्यनुक्रान्तं उक्थ्येतृतीयसवने अच्छावाकशस्त्रे एतत्सूक्तम् उक्थ्येतुहोत्रकाणामितिखण्डेसूत्रितम्—भवामित्रःसंवांकर्मणेति सौम्यचरोरुभयत्वोघृतेनयष्टव्यं तत्रोपरितने घृतयागे उरुविष्णोविक्रमस्वेति प्राकृतायाज्या दशमेहनितुतस्याःस्थानेभवामित्रइत्येषाप्रयोक्तव्या दशमेहनीतिखण्डेसूत्रितम्—उरुविष्णोविक्रमस्वेतिघृतयाज्यास्थानेभवामित्रइति।

सैषासूक्तेप्रथमा—

भवामित्रोनशेव्योघृतासुतिर्विभूतद्युम्नएवयाउसप्रथाः ।
अधातेविष्णोविदुषाचिदर्ध्यःस्तोमोयज्ञश्चराध्योहविष्मता ॥ १ ॥

भव॑। मि॒त्रः। न। शेव्यः॑। घृ॒तऽआ॑सुतिः। विभू॑तऽद्युम्नः। ए॒व॒ऽयाः।
ऊ॒म् इति॑। स॒ऽप्रथाः॑। अध॑। ते॒। वि॒ष्णो॒ इति॑। वि॒दुषा॑। चि॒त्।
अर्ध्यः॑। स्तोमः॑। य॒ज्ञः। च॒। राध्यः॑। ह॒विष्म॑ता॥ १॥

हेविष्णो मित्रोन मितेर्दुःखात्त्राता सखा आदित्योवा मित्रःप्रमीतेस्त्रायतेइतिनिरुक्तम्[1]। शेव्यः साधुः सुखकर्ताघृतासुतिः घृतमुदकमासूयतेयेनसतादृशः यद्वा घृतमाज्यमाभिमुख्येन नीयतेयस्मैसतादृशः विभूतद्युम्नः प्रभूतयशाः प्रभूतान्नोवा एवयाः रक्षणस्यमिश्रयिताप्रापयिता सप्रथाः सर्वतः पृथुः प्रतिविशेषणंनोभवेतिसंबन्धः द्व्यचोतस्तिङइतिदीर्घः उइतिपादपूरणः हेविष्णो त्वंयस्मादीदृशोभवसि अधास्मात् ते तव स्तोमः स्तोत्रविशेषः विदुषात्वन्माहात्म्यवेदित्रा यजमानेन अर्ध्यः पुनःपुनःप्रवर्धनार्हः चित् एव एकवारकरणेनसंपूर्यंतइत्यर्थः तथातेयज्ञश्च हविष्मता तेनयजमानेनराध्यः समाराधनीयः यद्वा विदुषाहोत्रासोमोराध्यः हविष्मतायज्ञश्चराध्यः॥ १॥

१. विष्णुदेव, मित्र की तरह तुम हमारे सुखदाता, घृताहुतिभाजन, प्रकृत अन्नवान्, रक्षाशील और पृथुव्यापी बनो। विद्वान् यजमान-द्वारा तुम्हारा स्तोत्र बार-बार कहने योग्य है और तुम्हारा यज्ञ हविवाले यजमान का आराधनीय है।

अथद्वितीया–

यः॒पू॒र्व्याय॑वे॒धसे॒नवी॑यसेसु॒मज्जा॑नये॒विष्ण॑वे॒दद॑ाशति।
योजा॒तम॑स्यम॒ह॒तोम॒हि॒ब्रव॒त्सेदु॒श्रवो॑भि॒र्यु॒ज्यं॑चिद॒भ्य॑सत्॥ २॥

यः। पू॒र्व्याय॑। वे॒धसे॑। नवी॑यसे। सु॒मत्ऽजा॑नये। विष्ण॑वे। द॒दा॑शति।
यः। जा॒तम्। अ॒स्य॒। म॒ह॒तः। महि॑। ब्रव॑त्। सः। इत्। ऊ॒म् इति॑।
श्रवः॑ऽभिः। यु॒ज्य॑म्। चि॒त्। अ॒भि। अ॒स॒त्॥ २॥

यः योमर्त्यः पूर्व्यायपूर्वकालीनायनित्यायेत्यर्थः वेधसेविविधजगत्कर्त्रे नवीयसेनित्यनूतनाय अत्यन्तरमणीयायेत्यर्थः स्तुत्यायवा सुमज्जानये स्वयमेवोत्पन्नाय जनेरौणादिकइण् सुमत्स्वयमित्यर्थइतियास्कः[2]। यद्वा सुतरांमादयतीतिसुमत् तादृशीजायायस्यसतथोक्तः तस्मै सर्वजगन्मादनशीलश्रीपतयइत्यर्थः बहुव्रीहौजायायानिङितिनिङादेशःसमासान्तः वलिलोपःउक्तगुणकायविष्णवे व्यापकायददाशति हविरादिकंददाति किंच अस्य विष्णोर्महतोमहानुभावस्य महि महत् पूज्यंजातंजन्म उत्पत्तिं हिरण्यगर्भादिरूपंजन्म ब्रवत् ब्रूयात् ब्रवीतेर्लेट्यडागमः

१ नि० १०. २१। २ नि० ६. २२।

संकीर्तयेत् सेदु उशब्दोपिशब्दार्थः सोऽपिदाता स्तोताच श्रवोभिरन्नैः कीर्तिभिर्वायुक्तःसन् युज्यंचित् सर्वैर्गन्तव्यमेव तत्पदं अभिआभिमुख्येनअसत्गच्छति प्राप्नोति ॥ २ ॥

२. जो व्यक्ति प्राचीन मेधावी, नित्य नवीन और स्वयं उत्पन्न या जगन्मादनशीला स्त्रीवाले विष्णु को हव्य प्रदान करता है; जो महानुभाव विष्णु की पूजनीय आदि कथा कहते हैं; वे ही समीप स्थान पाते हैं।

**तमुँस्तोतारःपूर्व्यंयथाविदऋतस्यगर्भंजनुषापिपर्तन।**
**आस्यंजानन्तोनामचिद्विवक्तनमहस्तेविष्णोसुमतिंभजामहे॥३॥**

तम्। ऊम् इति। स्तोतारः। पूर्व्यम्। यथा। विद। ऋतस्य। गर्भम्। जनुषा। पिपर्तन। आ। अस्य। जानन्तः। नाम। चित्। विवक्तन। महः। ते। विष्णो इति। सुऽमतिम्। भजामहे॥ ३ ॥

हेस्तोतारः तमुतमेव विष्णुं पूर्व्यं पूर्वार्हं अनादिसंसिद्धं ऋतस्यगर्भं यज्ञस्यगर्भभूतं यज्ञात्मना उत्पन्नमित्यर्थः यज्ञोवैविष्णुरितिश्रुतेः। यद्वा ऋतस्योदकस्य गर्भंगर्भकारणंउदकोत्पादकमित्यर्थः अपएवससर्जादावितिस्मृतेः।एवंभूतंविष्णुं यथा विद जानीथ तथाजनुषाजन्मनास्वतएवकेनचिद्रत्नाभादिना पिपर्तन स्तोत्रादिनाप्रीणयत यावदस्यमाहात्म्यंजानीथतावदित्यर्थः विदेर्लटि मध्यमबहुवचनं विदऋतस्येत्यत्र संहितायाम्रत्यकइतिप्रकृतिभावः किंच अस्यमहानुभावस्यविष्णोर्नामचित् सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकंविष्णुरित्येतन्नामजानन्तः पुरुषार्थप्रदमित्यधिगच्छन्तआसमन्तात् विवक्तन वदत संकीर्तयत यद्वा नाम यज्ञनामनमनं विष्णोरेव सर्वेषां स्वर्गापवर्गसाधनाय इष्ट्याद्यात्मना द्रव्यदेवतात्मनावा परिणाममाजानन्तोयूयंविवक्तन ब्रूत स्तुत वचेर्लोटिछान्दसःशपःश्लुः बहुलंछन्दसीत्यभ्यासत्येत्वम् पूर्ववत्तनादेशः इदानीं साक्षात्कृत्याह—हेविष्णो सर्वात्मकदेव महोमहतस्तेतवसुमतिंसुष्टुमतिं शोभात्मिकांबुद्धिं वा आभजामहे सेवामहेवयंयजमानाः ॥ ३ ॥

३. स्तोताओ, प्राचीन यज्ञ के गर्भभूत विष्णु को जैसा जानते हो, वैसे ही स्तोत्र आदि के द्वारा उनको प्रसन्न करो। विष्णु का नाम जानकर कीर्त्तन करो। विष्णु, तुम महानुभाव हो, तुम्हारी बुद्धि की हम उपासना करते हैं।

अग्नीषोमप्रणयनेतमस्यराजेत्येषाप्रयोक्तव्या अग्नीषोमौप्रणेष्यत्स्वितिखण्डेसूत्रितम्—तंमस्यराजावरुणस्तमश्विनेत्यर्धर्चआरमेदिति।

---

१ ऐ० ब्रा० २. २.

सैषाचतुर्थी—

तमस्यराजावरुणस्तमश्विनाक्रतुंसचन्तमारुतस्यवेधसः।
दाधारदक्षमुत्तममहर्विदंव्रजंचविष्णुःसखिवाँअपोर्णुते ॥ ४ ॥

तम्। अस्य। राजा। वरुणः। तम्। अश्विना। क्रतुम्। सचन्त।
मारुतस्य। वेधसः। दाधार। दक्षम्। उत्ऽतमम्। अहःऽविदम्।
व्रजम्। च। विष्णुः। सखिऽवान्। अपऽऊर्णुते ॥ ४ ॥

मारुतस्य मरुतांऋत्विजांसंघातोमारुतं तद्वतः मत्वर्थोलुप्यते मरुतांदेवानांसंबन्धिनोवावेधसः मेधाविनोऽस्ययजमानस्य तंप्रसिद्धं क्रतुंयागंयज्ञात्मकंविष्णुं यज्ञोवैविष्णुरितिश्रुतेः। राजाराजमानोवरुणः सचन्तसेवते तमेवक्रतुंयागंअश्विनाअश्विनौसचेते अन्येपिदेवाः सचन्तेसेवन्ते किंच विष्णुः सवनत्रयात्मनाव्याप्तोविष्णुः सखिवान्यजमानादिसखिभिर्युक्तःसन् उत्तमंउत्कृष्टतमंअहर्विदंअहर्वेत्तारं स्वर्गोत्पादकमित्यर्थः दक्षंबलंफलप्रदानसामर्थ्यरूपंदाधारधृतवान् किंच व्रजंचमेघंच व्रजइतिमेघनाम व्रजःचरुरितितन्नामसुपाठात् तंवृष्ट्युदकायअपोर्णुते अपगतावरणंकरोति आहुतिद्वारायज्ञस्यैववृष्ट्युत्पादकत्वात् यद्वा मारुतस्य मरुत्संघातस्य देवगणस्य वेधसःविधातुः स्रष्टुर्विष्णोः क्रतुंकर्मपालनादिरूपं वरुणादयःसचन्ते तदधीनत्वात् पालनस्य सच सखिवान् इन्द्रमरुदादिसहायोपेतःसन् उक्तलक्षणं दक्षंवृष्ट्युत्पादनादिसामर्थ्यरूपंबलंदाधार तथाव्रजंचापोर्णुते ॥ ४ ॥

४. राजा वरुण और अश्विनीकुमार ऋत्विक्‌युक्त यजमान के यज्ञ-रूप विष्णु की सेवा करते हैं। अश्विनीकुमार और विष्णु मित्र होकर उत्तम और विनज्ञ बल धारण करते और मेघ का आच्छादन हटाते हैं।

अथपञ्चमी—

आयोविवायसचथायदैव्यइन्द्रायविष्णुःसुकृतेसुकृत्तरः।
वेधाअजिन्वत्त्रिषधस्थआर्यमृतस्यभागेयजमानमाभजत् ॥५॥२६॥

आ। यः। विवाय। सचथाय। दैव्यः। इन्द्राय। विष्णुः। सुऽकृते।
सुकृत्ऽतरः। वेधाः। अजिन्वत्। त्रिऽसधस्थः। आर्यम्। ऋतस्य।
भागे। यजमानम्। आ। अभजत् ॥ ५ ॥ २६ ॥

१ तै० स० २. ६. ४.।

योविष्णुः दैव्यःदिविभवः सुक्रतुरः शोभनफलप्रदानांमध्येश्रेष्ठः आविवायआगच्छति वेतेर्लिटिरूपं किमर्थं सचथाय सचनाय यागसहायकरणाय कस्मैइन्द्रायइरांहविर्लक्षणान्नं द्रावयतीतीन्द्रोयजमानः इन्द्रइरांदृणातीतिइदंकरणादित्याग्रायणईतियास्केनोक्तनिर्वचनस्यात्रापिसद्भावात् तस्माउक्तरूपाययजमानाय सुकृते शोभनस्तुतिकर्त्रे आगत्यचवेधाअभिमतफलविधातात्रिषधस्थः त्रिसंख्योपेतसहस्थानवान् सवनत्रयस्थानः क्षित्यादिस्थानत्रयोवाविष्णुः आर्यंआगन्तव्यं यजमानं अजिन्वत् प्रीणयति जिविप्रीणनार्थः इदित्वान्नुम् तदर्थंऋतस्ययज्ञस्यभागेहुतशेषरूपे तंयजमानंआभजत्भजति समीपयतीत्यर्थः यद्वा ऋतस्ययज्ञस्य भागेफलेयजमानं आभजत् स्वामित्वेनस्थापयति ॥ ५ ॥

५. जो स्वर्गीय और अतिशय शोभनकर्मा विष्णु शोभनकर्मा इन्द्र के साथ मिलकर आते हैं, उन्हीं मेधावी तीनों लोकों में पराक्रमशाली विष्णु ने आनेवाले यजमान को प्रसन्न किया है और यजमान को यज्ञ-भाग दिया है।

॥ इतिद्वितीयस्यद्वितीयेषड्विंशोवर्गः ॥ २६ ॥

॥ इतिप्रथममेमण्डलेएकविंशोनुवाकः ॥ २१ ॥

द्वाविंशेनुवाकेष्टौसूक्तानि तत्राबोध्यग्निर्ज्मइतिप्रथमंसूक्तंषळृचंदैर्घतमसं आश्विनं पूर्वत्र जागतंत्वितितुशब्दादिदमपिजागतं अन्त्येद्वेत्रिष्टुभौ अबोधिषडाश्विनंत्वंत्येत्रिष्टुभौ इत्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोर्जागतेछन्दस्युक्तोविनियोगः अथाश्विनइतिखण्डेसूत्रितम्—अबोध्यग्निर्ज्मएषस्यभानुरिति । तत्रप्रथमा—

अबोध्यग्निर्ज्मउदेतिसूर्यो३व्यू१षाश्चन्द्रामह्यावोअर्चिषा ।
आयुंक्षातामश्विनायातवेरथंप्रासावीद्देवःसवितजगत्पृथक् ॥१॥

अबोधि । अग्निः । ज्मः । उत् । एति । सूर्यः । वि । उषाः । चन्द्रा । मही । आवः । अर्चिषा । अयुक्षाताम् । अश्विना । यातवे । रथम् । प्र । असावीत् । देवः । सविता । जगत् । पृथक् ॥ १ ॥

अयमग्निर्विहितःसन् ज्मः ज्मायाः पृथिव्यावेदिलक्षणायाःसंबन्धीसन् अबोधि प्रतिबोधितः ज्मेतिपृथिवीनाम ग्माज्मेतितन्नामसूक्तत्वात् किंच सूर्यउदेति तथा महीमहती उषाः अर्चिषा प्रकृष्टेनतेजसा चन्द्रा प्राणिनामाह्लादिनीसतीव्यावः तमांसिविवासयति वसेर्लुङिछान्दसश्च्लेर्लुक् छन्दस्यपिदृश्यतइत्याडागमः यतइयमुषाःउदेति यतश्चसूर्यः यतश्चायमग्निःप्रवृद्धोभवति अतःकारणात् हेअश्विना अश्विनौ युष्मत्संबन्धिनंरथं यातवे देवः देवय-

१ नि० १०. ८. ।

जनगमनायरासभाभ्यांअयुक्षातांआभिमुख्येनयुंजाथां तथा सवितासर्वकर्मणोनुज्ञातादेवोजगव जंगमंप्राणिजातं पृथक् स्वस्वकर्मानुरोधेन प्रासावीत् प्रसौतु अनुजानातु ॥ १ ॥

१. भूमि के ऊपर अग्नि जागे, सूर्य उगे। विराट उषा तेज-द्वारा सबको आह्लादित करके अन्धकार को दूर करती हैं। हे अश्विनीकुमारो, आने के लिए अपना रथ तैयार करो। सारे संसार को अपने-अपने कर्मों में सविता देवता नियुक्त करें।

यद्युञ्जाथेवृषणमश्विनारथंघृतेननोमधुनाक्षत्रमुक्षतम्।
अस्माकंब्रह्मपृतनासुजिन्वतंवयंधनाशूरसाताभजेमहि ॥ २ ॥

यत्। युञ्जाथे इति। वृषणम्। अश्विना। रथम्। घृतेन। नः। मधुना। क्षत्रम्। उक्षतम्। अस्माकम्। ब्रह्म। पृतनासु। जिन्वतम्। वयम्। धना। शूरऽसाता। भजेमहि ॥ २ ॥

हेअश्विना अश्विनौ यत् यदावृषं वृष्ट्यादिवर्षकंरथं युंजाथेयोजयथः तदा नःक्षत्रं अस्मदीयंबलंक्षत्रियजातंवा घृतेनोदकेन मधुनामधुरेण उक्षतं सिंचतं प्रवर्धयतमित्यर्थः यद्वा घृतेनक्षरणरूपेण मधुनामधुरेण अमृतेनउक्षतं युष्मद्रथस्थेनमधुनाअस्मदीयंबलंप्रवर्धयतमित्यर्थः अश्विनोरथस्यमधुपूर्णत्वंमधुवाहनोरथइत्यादिषुप्रसिद्धम् किंच अस्माकंपृतनासुअस्मदीयासुपुत्रभृत्यादिमनुष्यरूपासुप्रजासु ब्रह्मब्राह्मंतेजोजिन्वतंप्रीणयतं पृतनाइतिमनुष्यनाम विवस्वन्तः पृतनाइति तन्नामसूक्तत्वात् यद्वा पृतनासु परकीयासुप्रजासु ब्रह्मतासांपरिवृढमन्नमस्माकं जिन्वतं प्रीणयतं ब्रह्मेत्यन्ननाम ब्रह्म वर्चइतितन्नामसूक्तत्वात् वयंच शूरसाता शूरसातौ शूराणां प्रहारादिनायुक्तेसंग्रामे धनातदीयानिधनानि बहुविधानिभजेमहि लभेमहि ॥ २ ॥

२. अश्विद्वय, जिस समय तुम लोग वृष्टिदाता रथ को तैयार करते हो, उस समय मधुर जल-द्वारा हमारा बल बढ़ाओ। हमारे आदमियों को अन्न-द्वारा प्रसन्न करो। हम वीर संग्राम में धन प्राप्त करें।

अर्वाङ्त्रिचक्रोमधुवाहनोरथोजीराश्वोअश्विनोर्यातुसुष्टुतः।
त्रिवन्धुरोमघवाविश्वसौभगःशंनआवक्षद्द्विपदेचतुष्पदे ॥ ३ ॥

अर्वाङ्। त्रिऽचक्रः। मधुऽवाहनः। रथः। जीरऽअश्वः। अश्विनोः। यातु। सुऽस्तुतः। त्रिऽवन्धुरः। मघऽवा। विश्वऽसौभगः। शम्। नः। आ। वक्षत्। द्विऽपदे। चतुःऽपदे ॥ ३ ॥

अश्विनोरथःअर्वाङ् अस्मदभिमुखोयातु गच्छतु कीदृशःत्रिचक्रः चक्रत्रययुक्तः मधुवाहनः मधुवोढा जीराश्वः शीघ्रगाम्यश्वोपेतः सुष्टुतः अतएवअस्माभिःस्तूयमानः त्रिवन्धुरः

१ उत्तरस्यामृचि।

निम्नोन्नतकाष्ठत्रयोपेतः सारथ्याश्रयस्थानवंधुरं मघवाधनवान् अतएवविश्वसौभगः सर्वसौभाग्योपेतः ईदृशः अश्विनोरथः नोऽस्माकंद्विपदे पुत्रादिप्रजायै चतुष्पदे पशवेचशंसुखंआवक्षत्आवहतु वहेर्लेटचडागमः सिप् ॥ ३ ॥

३. अश्विनीकुमारों का तीन पहियोंवाला, मधुयुक्त, तेज घोड़ों से संयुक्त, प्रशंसित, तीन बन्धनोंवाला धन-पूर्ण और सर्व-सौभाग्य-सम्पन्न रथ हमारे सामने आये और हमारे द्विपद (पुत्र आदि) तथा चतुष्पद (गौ आदि) को सुख दे।

आनुऊर्जंवहतमश्विनायुवंमधुंमत्यानःकशंयामिमिक्षतम् ।
प्रायुस्तारिंष्टंनीरपांसिमृक्षतंसेधंतंद्वेषोभवंतंसचाभुवां ॥ ४ ॥

आ । नः । ऊर्जम् । वहतम् । अश्विना । युवम् । मधुंऽमत्या । नः । कर्शया । मिमिक्षतम् । प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधंतम् । द्वेषः । भवंतम् । सचाऽभुवां ॥ ४ ॥

हेअश्विना अश्विनौ युवंयुवांनोऽस्माकंऊर्जंबलप्राणनसमर्थं अन्नमावहतंप्रापयतं किंच नोऽस्मान् मधुमत्या माधुर्योपेतयाकशया वाचा इष्टप्रदानरूपया मिमिक्षतंसिंचतंप्रीणयतं कशेति वाङ्नाम कशाधिषणेतितन्नामसूक्तत्वात् यद्वा मधुमत्या माधुर्यंवृष्टिमत्यामाधुर्योपेतयाकशया प्रतोदन्या नोऽस्मान्मिमिक्षतं मध्वित्युदकनाम मधु पुरीषमितितन्नामसूक्तत्वात् कशया अश्वताडनेनशीघ्रमागत्यवृष्टिरूपंफलंदास्यतइतिकशायामधुमत्त्वम् किंच आयुरायुष्यं प्रतारिष्टंप्रवर्धयतं प्रपूर्वस्तिरतिर्वर्धनार्थः तथारपांसि मृक्षतं पापानिनिःशेषेणशोधयतं रपोरिप्रमितिपापनामनीभवतइतियास्कः[1] । किंच द्वेषः द्वेष्यं अमित्रादिकंसेधतंनाशयतंइदंचभाव्यंसचाभुवासहभुवौ अस्मत्कार्येषुसहभवनवन्तौभवतं भवन्तौऐकमत्यंभजतइत्यर्थः वाक्यभेदादनिघातः ॥ ४ ॥

४. अश्विनीकुमारो, तुम दोनों हमें बल प्रदान करो। अपनी मधुमती कषा-द्वारा हमें प्रसन्न करो। हमारी आयु बढ़ाओ, पाप दूर करो, द्वेषियों का विनाश करो और सारे कर्मों में हमारे साथी बनो।

युवंहगर्भंजगंतीषुधत्थोयुवंविश्वेषुभुवंनेष्वन्तः ।
युवमुग्निंचंवृषणावपश्चवनस्पतींरश्विनावैरंयेथाम् ॥ ५ ॥

युवम् । ह । गर्भम् । जगंतीषु । धत्थः । युवम् । विश्वेषु । भुवनेषु । अन्तरिति । युवम् । अग्निम् । च । वृषणौ । अपः । च । वनस्पतींन् । अश्विनौ । ऐरंयेथाम् ॥ ५ ॥

---

[1] नि० ४.२१।

हेअश्विनाअश्विनौ युवंह युवांखलु जगतीष्वन्तः गमनशीलासुगोषुमध्येगर्भंधत्थः धारयथः नकेवलंगोष्वेव अपितुयुवंयुवां विश्वेषुसर्वेषुभुवनेषुभूतजातेषु अन्तर्मध्येगर्भंधत्थः वृष्टिद्वारामिषरूपत्वेनगर्भस्थरेतसःपोषकत्वात् किंच हेवृषणौकामानांवर्षितारौ युवंयुवांअग्निंचअपश्चवनस्पतींश्चऐरयेथांप्रवर्तयेथां आहुतिभोगायाग्निं स्वीकृत्यचवृष्ट्युदकानि उदकैरोषधिवनस्पत्यादिकंएतान्यस्मदर्थंप्रैरयेथाम् ॥ ५ ॥

५. अश्विद्वय, तुम दोनों गमनशील गौओं और सारे संसार के प्राणियों में अन्तःस्थित गर्भों की रक्षा करो। अभीष्टवर्षकद्वय, अग्नि, जल और वनस्पतियों को प्रवर्त्तित करो।

युवंहस्थोभिषजाभेषजेभिरथोहस्थोरथ्या३राथ्येभिः।
अथोहक्षत्रमधिधत्थउग्रायोवांहविष्मान्मनसाददाश ॥६॥२७॥

युवम्। ह। स्थः। भिषजा। भेषजेभिः। अथो इति। ह। स्थः। रथ्या। रथ्येभिरिति रथ्येभिः। अथो इति। ह। क्षत्रम्। अधि। धत्थः। उग्रा। यः। वाम्। हविष्मान्। मनसा। ददाश ॥ ६ ॥२७॥

हेअश्विनौ युवंयुवां हखलु भेषजेभिः भेषजैरौषधैः भेषजौषधभैषज्यान्यगदोजायुरगदं तत्रऔषधमितिचाभिधानात् तैर्भिषजाभिषजौस्थः हशब्दः अश्विनौहिदेवानांभिषजावित्यादिप्रसिद्धिद्योतनार्थः अथो अपिच रथ्येभिः रथवोढृभिरश्वैः रथ्यारथवन्तौस्थः आवांरथोअश्विनेत्यादिप्रसिद्धिद्योतनार्थोहशब्दः अनयोरथेनविशेषसंबन्धः युवोर्हिपूर्वंसवितोषसोरथमृतायचित्रंघृतवन्तमिष्यतीत्यादिमन्त्रान्तरेषुप्रसिद्धःअथोअपिच युवयोः क्षत्रंबलं अधिह अधिकंखलु हशब्दःप्रसिद्धौ यस्मादेवंतस्मात् हेउग्रा उद्गूर्णसामर्थ्यौ अश्विनौवांयुवाभ्यां योहविष्मान् आज्यपुरोडाशादिहविर्युक्तोयजमानः मनसायुष्मदायत्तेनचेतसा ददाश ददाति तस्यहविरादिकंधत्थः धारयथः अत्यधिकमनुगृह्णीथइत्यर्थः प्रभूतबलौयुवांरथमारुह्य अस्मद्देवयजनमागत्य हविःप्रदंमांधृत्वाअस्मद्यज्ञं अस्मान्विचिकित्सतमितितात्पर्यार्थः ॥ ६ ॥

६. अश्विद्वय, तुम दोनों औषध-ज्ञान-द्वारा वैद्य और रथवाहक अश्वों-द्वारा रथवान् हुए हो। तुम्हारा बल बहुत अधिक है; इसलिए हे उग्र अश्विद्वय, तुम्हें जो आसक्त चित्त से हव्य प्रदान करता है, उसकी रक्षा करो।

॥ इतिद्वितीयस्यद्वितीयेसप्तविंशोवर्गः ॥ २७ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेद्वितीयोऽध्यायःसमाप्तः ॥ २ ॥

---

ऋ० सं० १. ८. १८। २ ऋ० सं० १. ३. ५।

## ॥ श्रीगणेशायनमः ॥

यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत् । निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥

अथतृतीयाध्यायआरभ्यते वसूरुद्रेत्येतदनुवाकापेक्षयाद्वितीयंसूक्तं षळृचंदैर्घतमसं पूर्वंत्राश्विनंत्वित्युक्तत्वादिदमप्याश्विनं अनादेशपरिभाषयात्रैष्टुभं दीर्घतमामामतेयइत्यन्त्यानुष्टुप् तथाचानुक्रान्तं—वसूअन्त्यानुष्टुविति अस्यविशेषविनियोगोलैङ्गिकः ।

तत्रप्रथमा—

ॐम् वसूरुद्रापुरुमन्तूवृधन्तादशस्यतंनोवृषणावभिष्टौ ।
दस्राहयद्रेक्णऔचथ्योवांप्रयत्सस्राथेअक्रवाभिरूती ॥ १ ॥

वसू इति । रुद्रा । पुरुमन्तू इति पुरुऽमन्तू । वृधन्ता । दशस्यतम् । नः । वृषणौ । अभिष्टौ । दस्रा । ह । यत् । रेक्णः । औचथ्यः । वाम् । प्र । यत् । सस्राथे इति । अक्रवाभिः । ऊती ॥ १ ॥

हेवृषणौ कामानांवर्षितारौ दस्रा अस्मद्विरोध्युपक्षपयितारौ हेअश्विनौ युवां नोऽस्मभ्यं दशस्यतं दत्तं दित्सितंफलं कीदृशौवां युवां वसू वासयितारौ प्रजानांवसुनाधनेनतद्वन्तौवा मत्वर्थोलुप्यते रुद्रा रुद्रौ रुत् दुःखंतद्धेतुभूतंपापंवा तस्यद्रावयितारौ संग्रामेभयंकरंशब्दयन्तौवा रुद्रौरौतीतिसतइतियास्कः । पुरुमन्तू बहूनांज्ञातारौ मनेरौणादिकस्तुन्प्रत्ययः वृधन्तावर्धमानौ स्तोत्रादिना अभिष्टौआभिमुख्येनपूजितौ अभीष्टसाधकौवा हशब्दउक्तगुणप्रसिद्धिद्योतनार्थः किमर्थंदीयतइतिचेत् यद्यस्मात्औचथ्यः उचथस्यपुत्रोदीर्घतमाः वांयुवांरेक्णः धनंस्तुतिव्याजेनप्रार्थयते तदर्थं यद्वा अयंयजमानोयद्यस्माद्रेक्णोहविर्लक्षणमन्नं वांयुवांददातीतिशेषः यस्माच्च अक्रवाभिः अकुत्सितैः ऊती ऊतिभिः रक्षणैः सुपांसुलुगितितृतीयायाःपूर्वसवर्णदीर्घः प्रसस्राथे प्रसारयथः प्रकर्षेणदत्थः तस्माद्दशस्यतं यस्मादभिमतप्रदोयस्माच्चायंप्रार्थयते ददातिवाहविः तस्माद्दशस्यतमित्यर्थः ॥ १ ॥

१. हे अभीष्टवर्षक, निवासदाता, पापहन्ता, बहुज्ञानी, स्तुति-द्वारा बर्द्धमान और पूजित अश्विनीकुमारो, हमें अभीष्ट फल दो; क्योंकि उचथपुत्र दीर्घतमा तुम्हारी प्रार्थना करता है और तुम प्रशंसनीय रीति से आश्रय प्रदान करते हो।

अथद्वितीया–

कोवांदाशत्सुमतयेचिदस्यैवसूयद्धेथेनमसापदेगोः ।
जिगृतमस्मेरेवतीःपुरन्धीःकामप्रेणेवमनसाचरन्ता ॥ २ ॥

कः । वाम् । दाशत् । सुऽमतये । चित् । अस्यै । वसू इति । यत् ।
धेथे इति । नमसा । पदे । गोः । जिगृतम् । अस्मे इति । रेवतीः ।
पुरम्ऽधीः । कामप्रेणऽइव । मनसा । चरन्ता ॥ २ ॥

हेवसू वासयितारावश्विनौ वां युवयोः संबन्धिन्यैअस्यैवक्ष्यमाणरूपायै सुमतयेचित् शोभनबुद्धै चित्पूजायामप्यर्थेवा स्वल्पेनैवहविषामहत्फलप्रदानरूपायै ईदृश्याअपिबुद्धेःप्रीणनायकोदाशत् कोदद्यात् दातुंशक्नुयात् युवयोःप्रभावस्यातिमहत्त्वादितिभावः दाशतेर्लेटयडागमः कथंमतेःसौष्ठवमितितदुच्यते यद्यस्मात्कारणात् गोःपदे भूम्याः सर्वैर्गन्तव्यायाःस्तुत्यायावा वेदिरूपायाःस्थाने एतावतीवैपृथिवीयावतीवेदिरितिश्रुतेः । गौरितिभूमिनाम तथाचनिरुक्तं– गौरितिपृथिव्यानामधेयंयद्दूरंगताभवतियच्चास्यांभूतानिगच्छन्तिगातेर्वौकारोनामकरणइति । तादृशेस्थाने अस्माभिःप्रार्थितौसन्तौ नमसा हविर्लक्षणेनयवमात्रप्रकारेणअन्नेन धेथे धारयथः बहुप्रदानविषयांबुद्धिं दधातेर्लेटिबहुलंछन्दसीतिविकरणस्यलुक् धातोर्ह्रस्वत्वं आतोङितइति इयादेशः यस्मादेवंतस्मात् अस्मे अस्मभ्यं रेवतीः क्षीरादिधनवतीः पुरन्धीः शरीरधारकाः शरीराभिवृद्धिहेतूर्गाः जिगृतंशब्दयतं ददतमित्यर्थः गृशब्दे छान्दसःशपःश्लुः अभ्यासस्येत्वंह्रस्वत्वंच पुनस्तावेवविशेष्येते कामप्रेणेव इवशब्दएवकारार्थः कामपूरकेणैव मनसासहचरन्ता चरन्तौयजमानस्यकामाःपूरणीयाइतिकृतसंकल्पावित्यर्थः प्रापूरणे कामंप्रीणातीतिकामप्रः आतोनुपसर्गेकः ॥ २ ॥

२. निवासप्रद अश्विनीकुमारो, तुम्हारे इस अनुग्रह के सामने कौन तुम्हें हव्य प्रदान कर सकता है? अपने यज्ञीय स्थान पर हमारी स्तुति सुनकर अन्न के साथ तुम लोग बहुत धन देना चाहते हो। शरीर-पुष्टिकरी, शब्दायमाना और बहुत दूधवाली गायें प्रदान करो। यजमानों की अभिलाषा पूर्ण करने के लिए तुम लोग कृत-संकल्प होकर विचरण करते हो।

युक्तोहयद्वांतौग्र्यायपेरुर्विमध्येअर्णसोधायिपज्रः ।
उपवामवःशरणंगमेयंशूरोनाज्मपतयद्भिरेवैः ॥ ३ ॥

---

१ तै० सं० २. ६. ४. । २ नि० २. ५. ।

युक्तः । ह । यत् । वाम् । तौग्र्याय । पेरुः । वि । मध्ये । अर्णसः । धायि । पज्रः । उप । वाम् । अवः । शरणम् । गमेयम् । शूरः । न । अज्म । पतयत्ऽभिः । एवैः ॥ ३ ॥

अत्रेतिहासमाहुः—तौग्र्यनामकंराजानं युद्धेशत्रवःपराभाव्यपाशैर्दृढंबद्ध्वासमुद्रमध्येप्रचिक्षिपुः सचोत्तरीतुमशक्तःसन् अश्विनौतुष्टाव तौचतुष्टौशीघ्रमेवरथमश्वैर्योजयित्वासमुद्रमागत्य तमुत्तार्यअपालयतामिति अयमर्थः—अजोहवीदश्विनातौग्र्यइत्यादिमन्त्रान्तरेप्रसिद्धः ।सोऽत्रोच्यते—हेअश्विनौ वां युवयोःसंबन्धी पेरुः पारणकुशलोरथः युक्तोह अश्वैर्युक्तःखलु हशब्दोमन्त्रान्तरप्रसिद्धिद्योतनार्थः सचोदाहृतः कस्मैतौग्र्याय एतन्नाम्नेराज्ञे तद्वंधमोचनार्थं कुत्रेतितदुच्यते— अर्णसः अंभसोमध्येसमुद्रस्यमध्ये सचपज्रः पाजसाबलेनतीर्णःसन् विधायि धारितःस्थापितः यस्मादेवंतस्माद्वां युवयोः अवः रक्षणं शरणंउपगमेयं संप्राप्नुयां ऐहिकदुःखाद्विमुक्तोयुष्मत्स्थानंसंभजेयं गतौदृष्टान्तः—पतयद्भिरेवैरश्वैः शूरोन शूरइव सयथाअज्मजित्वानिर्भयंस्वगृहंप्राप्नोतितद्वत् ॥ ३ ॥

३. अश्विनीकुमारो, तुम्हारे उद्धार-कुशल और अश्वयुक्त रथ के, तुग्रपुत्र भुज्यु के लिए बल-प्रयोग द्वारा उत्तीर्ण होने पर वह समुद्र में स्थित हुआ था। अतएव जैसे युद्धजेता वीर द्रुतगामी अश्व-द्वारा अपने घर में आता है, वैसे ही हम तुम्हारे आश्रय के लिए शरणागत हुए हैं।

अथचतुर्थी—

उपस्तुतिरौचथ्यमुरुष्येन्मामामिमेपतत्रिणीविदुग्धाम् ।
मामामेधोदशतयश्चितोधाक्प्रयद्वांबद्धस्त्मनिखादतिक्षाम् ॥४॥

उपऽस्तुतिः । औचथ्यम् । उरुष्येत् । मा । माम् । इमे इति । पतत्रिणी इति । वि । दुग्धाम् । मा । माम् । एधः । दशऽतयः । चितः । धाक् । प्र । यत् । वाम् । बद्धः । त्मनि । खादति । क्षाम् ॥ ४ ॥

अत्राख्यानमाहुः—जराजरितगात्रंजात्यन्धंदीर्घतमसंमामतेयंपरिवसितुमशक्नुवानाः स्वगर्भदासाः अग्नौप्रदाहायप्रचिक्षिपुः तत्रक्षिप्तःअश्विनावस्तावीत् तौचैनमरक्षतां ततोप्यम्रियमाणमुदकेषुमापातयन् तत्रनिमग्नःपुनरश्विनौतुष्टाव तुष्टौसन्तौतौजलादुदहार्ष्टां एवमवध्यं तं त्रैतनोनामकःकश्चिद्दासोस्यशिरोवक्षश्चाविध्यत् ततोऽप्यपालयतामिति तदिदंऋग्द्वयेनोच्यते— हेअश्विनौ उपस्तुतिः युवांबुद्ध्वाउपेत्यक्रियमाणास्तुतिः औचथ्यंउचथस्यपुत्रंदीर्घतमसंमांउ-

१ ऋ० सं० १. ८. १५.।

रुष्येव रक्षेत् दाहाद्युपद्रवात् उरुष्यतीरक्षाकर्मेतियास्कः । एवंसामान्येनोक्त्वा विशेषेणप्रत्युपद्रवपरिहारंप्रार्थयते इमेप्रसिद्धेपतत्रिणी पतनशीलेपुनरावर्तनशीलेअहोरात्रे मांमाविदुग्धाम् विशेषेणदोहगतसारं माकार्ष्टां प्राणनिर्गमनानुकूल्यं माकुरुतामित्यर्थः किंच मांदशतयोदशवारः चितःसंचितः संपादितः एधःप्रज्वालितेन्धनसंघोमाधाक् माधाक्षीत् दहतेर्लुङिसिचिहलन्तलक्षणावृद्धिः बहुलंछन्दसीतीडभावः हल्ङ्यादिसंयोगान्तलोपौ दुःसहदुःखप्राप्तिंदर्शयति यद्यस्माद्वांयुवयोःसंबंधीअयंजनोबद्धः पाशैर्दृढंवेष्टितःसन् त्मनिआत्मनिआत्मनाक्षांभूमिंखादतिभक्षयति गन्तुमशक्तःसन्भूमिंपरिलुठतीत्यर्थः तस्मादुपस्तुतिरौचथ्यमुरुष्येदिति ॥ ४ ॥

अस्याःपंचम्याविनियोगमाहशौनकः—आततायिनमायान्तंदृष्ट्वाव्याघ्रमथोवृकम् । नमागरन्निितिजपंस्तेभ्यएवप्रमुच्यते ॥१॥ त्रिरात्रोपोषितोरात्रौजपेदासूर्यदर्शनात् । आप्लुत्यप्रयतः सूर्यमुपतिष्ठेद्दिवाकरम् ॥ २ ॥पश्यंतितस्करानेनंतथान्येपापबुद्धयः । एकःशतानित्रायेततस्करेभ्यश्चरन्पथीति ॥३॥

४. अश्विनीकुमारो, तुम्हारी स्तुति दीर्घतमा की रक्षा करे। प्रतिदिन घूमनेवाले अहोरात्र हमें शीर्ण न करें। दस बार प्रज्वलित अग्नि मुझे जला न सके; क्योंकि तुम्हारे आश्रित यह व्यक्ति पाशबद्ध होकर पृथिवी पर लेट रहा है।

नमागरन्नद्योमातृतमादासायदींसुसंमुब्धमवाधुः ।
शिरोयदस्यत्रैतनोवितक्षत्स्वयंदासउरोअंसावपिग्ध ॥ ५ ॥

न । मा । गरन् । नद्यः । मातृऽतमाः । दासाः । यत् । ईम् ।
सुऽसंमुब्धम् । अवऽअधुः । शिरः । यत् । अस्य । त्रैतनः ।
विऽतक्षत् । स्वयम् । दासः । उरः । अंसौ । अपि । ग्धेति ग्ध ॥ ५ ॥

नद्योनद्यः शीलाः मातृतमाः मातृवज्जगतांहितकारिण्यःआपः मामांदीर्घतमसं नगरन् नगिरेयुः निमग्नंमाकुर्युः गॄनिगरणे लेटिव्यत्ययेनशप् गिरणप्राप्तिंदर्शयति यद्यस्माद्दासाअस्मदुपक्षपयितारोमदीयगर्भदासाः ईंएनंदीर्घतमसंमांसुसमुब्धं सुष्ठुसंकुचितसर्वांगं स्वतीपूजायामिति प्रादिसमासेअव्ययपूर्वपदप्रकृतिस्वरत्वम् अवाधुः अवाङ्मुखमपातयन् किंच अस्यममशिरः सत्रैतनः एतन्नामकोदासः अत्यंतनिर्घृणःसन् यद्यस्माद्वितक्षत् विविधंतष्टवान् तस्मात्सदासःस्वयंस्वकीयमेवशिरः तक्षतु नकेवलंशिरएव अपितुमदीयमुरः वक्षःस्थलंअंसौचग्ध हतवान् विदारितवानित्यर्थः हंतेर्लुङिछान्दसमेतद्रूपम् ततःस्वकीयमुरः अंसावपिस्वशस्त्रेणैवतथाकृतवान् तद्युवयोर्माहात्म्यमितिभावः ॥ ५ ॥

५. मातृरूप नदी-जल मुझे डुबो न दे। गर्भदासी या अनार्यों ने इन संकुलिताङ्ग वृद्ध को नीचे मुंह कर फेंक दिया है। त्रैतन ने इनका सिर काटा था। दास ने स्वयं हृदय-देश और अंश-द्वय पर आघात किया था।

अथषष्ठी—

दीर्घतमामामतेयोजुजुर्वान्दशमेयुगे।
अपामर्थंयतीनांब्रह्माभवतिसारथिः ॥ ६ ॥ १ ॥

दीर्घऽतमाः । मामतेयः । जुजुर्वान् । दशमे । युगे । अपाम् । अर्थम् । यतीनाम् । ब्रह्मा । भवति । सारथिः ॥ ६ ॥ १ ॥

दीर्घतमाः एतन्नामामहर्षिः सचमामतेयः ममतायाःपुत्रः दशमेयुगेदशयुगपर्यन्तं महानुभावयोरश्विनोःप्रभावात्पूर्वोक्ताद्दुःखाद्विमुक्तः अत्यंतसुखी स्वपुत्रभार्यादिभिःसहितोजीवितवान् दशमेयुगेतीतेसति जुजुर्वान् जीर्णोवलीपलितगात्रोबभूव एवंभूतःसन् अर्थं पुरुषैरर्थ्यमानंकर्मफलंस्वर्गादिकंयतीनांप्राप्नुवन्तीनां अपांअप्कार्याणांप्रजानां यद्वा अपांअपसांकर्मणांअर्थंप्रयोजनंयतीनां तासांप्रजानां ब्रह्माब्रह्मसदृशः परिवृढोभवति किंच सारथिः तद्वन्निर्वाहकोभवति देवोभवतीत्यर्थः एवमस्यवृत्तांतंमन्त्रोनोवदतिस्वयंवास्वात्मानं पारोक्ष्येणअश्विनोर्महानुभावत्वंप्रकटयितुंब्रवीति ॥ ६ ॥

६. ममता के पुत्र दीर्घतमा दसवें काल के बीतने पर जीर्ण हुए थे। जो सब लोग कर्म-फल पाने की इच्छा करते हैं, वे अपने नेता और सारथि हैं।

॥ इतिद्वितीयस्यतृतीयेप्रथमोवर्गः ॥ १ ॥

प्रद्यावेतिपंचर्चंतृतीयंसूक्तं दैर्घतमसंजागतंद्यावापृथिव्यं अनुक्रान्तंच—प्रद्यावापंचद्यावापृथिव्यंतुजागतंत्विति अग्निष्टोमेपृष्ठ्यस्यषष्ठेहनिचद्यावापृथिव्यनिविद्धानमेतत्सूक्तम् तथाचसूत्रं—प्रद्यावेतिदैर्घतमसमिति आद्याद्यावापृथिव्येपशौहविषोयाज्या तथाचसूत्रितम्—प्रद्यावायज्ञैःपृथिवीऋतावृधाप्रळानोरुद्रोतनोमयस्कृधीतिद्वेइति ।

सैषासूक्तेप्रथमा—

प्रद्यावांयज्ञैःपृथिवीऋतावृधामहीस्तुषेविदथेषुप्रचेतसा ।
देवेभिर्येदेवपुत्रेसुदंससेत्थाधियावार्याणिप्रभूषतः ॥ १ ॥

प्र । द्यावा । यज्ञैः । पृथिवी इति । ऋतऽवृधा । मही इति । स्तुषे । विदथेषु । प्रऽचेतसा । देवेभिः । ये इति । देवपुत्रे इति देवऽपुत्रे । सुऽदंससा । इत्था । धिया । वार्याणि । प्रऽभूषतः ॥ १॥

द्यावापृथिवीद्यावापृथिव्यौ दिवोद्यावेतिद्यावादेशआद्युदात्तः पृथिवीशब्दोङीषन्तोंतोदात्तः देवताद्वंद्वेचेत्युभयपदप्रकृतिस्वरत्वं समासमध्येपदान्तरपाठश्छान्दसः अहंयजमानः यज्ञैर्यागैः तत्प्रदानैर्निमित्तभूतैः हविःप्रदानार्थंप्रस्तुषे प्रकर्षेणस्तौमि पुरुषव्यत्ययः कीदृश्यौते ऋतावृधा यज्ञस्यवर्धयित्र्यौमहीमहत्यौ विदथेषुयागेषुप्रचेतसाप्रकर्षेणास्मान्चेतयित्र्यौ अस्माभिश्चेतयितव्ये वा ईदृश्यौस्तुषे अनयोःकोऽतिशयइतिउच्यते—येद्यावापृथिव्यौ देवेभिःयजमानैः देवपुत्रे देवायजमानाःपुत्रस्थानीयाः शुश्रूषकाययोस्तेतादृश्यौ यद्वा देवेभिर्विशिष्टे सुदंससा दंसइतिकर्मनाम शोभनकर्मोपेते इत्था सत्यं इत्थेतिसत्यनाम सत्राइत्थेतितन्नामसुपाठात् सत्यधियाअस्मदनुग्रहबुद्ध्या वार्याणिवरणीयानिधनानिअस्मभ्यंप्रभूषतः अलंकुरुतः दत्तइत्यर्थः यद्वा वार्याणि हवींषिधियाकर्मणानिमित्तेन कर्मसमाप्त्यर्थंभूषतः प्रकर्षेणस्वीकुरुतः ॥ १ ॥

१. यज्ञ-वर्द्धक, महान् और यज्ञकार्य में चैतन्यकारी द्यावा-पृथिवी की मैं, विशेष रूप से स्तुति करता हूँ। यजमान उनके पुत्र-स्वरूप हैं। उनके कर्म सुन्दर हैं। अनुग्रह करते हुए वे यजमानों को वरणीय धन प्रदान करते हैं।

उतमन्येपितुरद्रुहोमनोमातुर्महिस्वतवस्तद्धवीमभिः।
सुरेतसापितराभूमचक्रतुरुरुप्रजायाअमृतंवरीमभिः ॥ २ ॥
उत। मन्ये। पितुः। अद्रुहः। मनः। मातुः। महि। स्वऽतवः। तत्।
हवीमऽभिः। सुऽरेतसा। पितरा। भूम। चक्रतुः। उरु।
प्रऽजायाः। अमृतम्। वरीमऽभिः ॥ २ ॥

उतअपिच पितुः पितृस्थानीयायाः धात्र्याअद्रुहः अद्रोग्धुः नहिकदाचित्पिता स्वपुत्रादये द्रुह्यति तादृश्याः पृथिव्याः स्वतवः स्वायत्तंवलं स्वयमेवास्मदनुग्रहायत्वरमाणं अतएवमहि महत् तत्तादृशं अनुग्रहयुक्तंमनश्चित्तं हवीमभिः हवमानैराह्वानैर्मन्ये जानामि प्रसादयामीत्यर्थः यद्वा तत्तादृशमुक्तलक्षणंमनः हवीमभिः हवनैः महिमन्ये अतिमहत् प्रवृद्धं मन्ये तथा मातुः सर्वस्योत्पादयितुरन्तरिक्षस्यद्युलोकस्य मातान्तरिक्षंनिर्मीयन्तेऽस्मिन्भूतानीतिनिरुक्तम्। यद्वा पितुर्द्युलोकस्य मातुर्भूम्याः द्यौर्वःपितापृथिवीमातेतिश्रुतेः। तत्तादृशमुक्तलक्षणंमनोमन्ये द्यावापृथिव्योर्मनोऽस्मदाह्वानैःप्रीणयामीत्यर्थः किंच पितरा माताचपिताचपितरौ द्यावापृथिव्यौ सुरेतसा शोभनसामर्थ्येनप्रजायाः यजमानादिरूपायाः वरीमभिःवरिष्ठैःरक्षणविशेषैः भूमबहुतरं उरुविस्तीर्णं अमृतं अमरणभूतं अभिलषितंचक्रतुः कुरुतः ॥ २ ॥

२. मैंने आह्वान-मंत्र-द्वारा निर्द्रोह और पितृस्थानीय द्युलोक के उदार और सदय मन को जाना है। मातृस्थानीय पृथिवी के मन को भी जाना है। पिता-माता (द्यावा-पृथिवी) अपनी शक्ति से पुत्रों की भली भाँति रक्षा करते हुए बहुत और विस्तीर्ण अमृत देते हैं।

अथतृतीया–

तेसूनवःस्वपसःसुदंससोमहीजज्ञुर्मातरापूर्वचित्तये ।
स्थातुश्चसत्यंजगतश्चधर्मणिपुत्रस्यपाथःपदमद्वयाविनः ॥ ३ ॥

ते । सूनवः । सुऽअपसः । सुऽदंससः । मही इति । जज्ञुः । मातरा । पूर्वऽचित्तये । स्थातुः । च । सत्यम् । जगतः । च । धर्मणि । पुत्रस्य । पाथः । पदम् । अद्वयाविनः ॥ ३ ॥

तेप्रसिद्धाःसूनवः युवाभ्यामुत्पन्नाः पुत्रस्थानीयाःप्रजाः स्वपसः शोभनकर्माणः सुदंससःशोभनदर्शनाः युवांमहीमहत्यौ मातरा मातृवद्धितकारिण्यौजज्ञुः जानन्ति महानुभावतामवगच्छन्ति किमर्थं पूर्वचित्तये प्रथमबुद्धये अनुग्रहरूपायै किंच तेद्यावापृथिव्यौ स्थातुः स्थावरस्य जगतोजंगमस्य पुत्रस्य पुत्रस्थानीयस्योभयविधस्यजगतः अद्वयाविनः नविद्यतेद्वयंयस्य तादृशस्यस्वजीवनाय युष्मद्व्यतिरिक्तंअजानतइत्यर्थः ईदृशस्यधर्मणि धारणे रक्षणेनिमित्तभूते सति पदंस्थानंसत्यं अबाध्यं पाथः रक्षथः दत्थइत्यर्थः यद्वा तेप्रसिद्धाः सूनवः उत्पाद्यमानाः स्वपसः शोभनप्रकाशादिकर्माणः सुदंससः शोभनदर्शनाः सुष्ठूपक्षयन्तोवा आत्मानं स्वव्यापाराय ईदृशारश्मयः महीमहत्यौद्यावापृथिव्यौ पूर्वचित्तये प्राणिनां पूर्वज्ञानायजज्ञुः ज्ञातवन्तः द्यावापृथिव्योरन्तरालेव्याप्ताइत्यर्थः किंच स्थातुर्जगतश्च धर्मणिधारणे तदर्थं अद्वयाविनः मार्गद्वयरहितस्य बहुलंछन्दसीतिद्वयशब्दान्मत्वर्थीयोविनिः अन्येषामपिदृश्यतइतिदीर्घः पुत्रस्ययुष्मत्पुत्रस्थानीयस्यादित्यस्यपदंमार्गसत्यंपाथः अवश्यंरक्षथः ॥ ३ ॥

३. तुम्हारी सन्तान, सुकर्मा और सुदर्शन प्रजायें तुम्हारे पहले के अनुग्रह को स्मरण करके तुम्हें महान् और माता कहकर जानते हैं । पुत्र-स्वरूप स्थावर और जंगम पदार्थ द्यावा-पृथिवी के अतिरिक्त और किसी को नहीं जानते। तुम उनकी रक्षा का अबाध स्थान प्रदान करते हो।

अथचतुर्थी–

तेमायिनोममिरेसुप्रचेतसोजामीसयोनीमिथुनासमोकसा ।
नव्यंनव्यंतन्तुमातन्वतेदिविसमुद्रेअन्तःकवयःसुदीतयः ॥ ४ ॥

ते । मायिनः । ममिरे । सुऽप्रचेतसः । जामी इति । सयोनी इति सऽयोनी । मिथुना । सम्ऽओकसा । नव्यम्ऽनव्यम् । तन्तुम् । आ । तन्वते । दिवि । समुद्रे । अन्तरिति । कवयः । सुऽदीतयः ॥ ४ ॥

तेअत्रप्रसिद्धेद्यावापृथिव्यौ मायिनः मायाःप्रज्ञाः स्वविषयप्रज्ञावन्तः प्रज्ञोपलक्षितकर्मवन्तोवा सुप्रचेतसः सुष्ठुप्रकर्षेणचेतितुंशक्ताःरश्मयः ममिरे मिमते प्रमाणेनपरिच्छिन्दन्ति कीदृश्यौते जामी परस्परंभगिनीएतत्कुतइतिचेत् उच्यते—सयोनी समानोत्पत्तिस्थाने मिथुनाप्राण्युत्पत्तयेमिथुनभूतेपरस्परमवियुक्तेइत्यर्थः समोकसा समानस्थाने द्युपृथिव्योरेकस्मिन्नेवावकाशरूपेअवस्थानात् समीचीनस्थानेवा किंच कवयः मेधाविनः स्वव्यापारविषयज्ञानवन्तः सुदीतयः सुष्ठुद्योतनारश्मयोदिविद्योतमानेसमुद्रेन्तरिक्षेंतर्मध्ये समुद्रशब्दोंतरिक्षनामसुपाठात् तद्वचनः सचैवंयास्केननिरुक्तः—समुद्रःकस्मात्समुद्द्रवंत्यस्मादापःसमभिद्रवंत्येनमापःसंमोदन्तेस्मिन्भूतानिसमुदकोभवतिसमुनत्तीतिवेति । नव्यंनव्यं तंतुंतननीयंविस्तारणीयंजात्येकवचनं रश्मीन् आतन्वते समन्ताद्विस्तारयन्ति॥ ४ ॥

४. द्यावा-पृथिवी सहोदरा भगिनी और एक स्थान पर रहनेवाले जोड़े हैं। वे प्रज्ञा-युक्त और चैतन्यकारी हैं । किरणें उनका विभाग करती हैं। अपने कार्य में निरत और सुप्रकाशित रश्मियाँ द्योतमान अन्तरिक्ष के बीच नये-नये सूत फैलाती हैं ।

**तद्राधोअद्यसवितुर्वरेण्यंवयंदेवस्यप्रसवेमनामहे।**
**अस्मभ्यंद्यावापृथिवीसुचेतुनारयिंधत्तंवसुमन्तंशतग्विनम् ॥५॥२॥**

तत् । राधः । अद्य । सवितुः । वरेण्यम् । वयम् । देवस्य । प्रऽसवे । मनामहे । अस्मभ्यम् । द्यावापृथिवी इति । सुऽचेतुना । रयिम् । धत्तम् । वसुऽमन्तम् । शतऽग्विनम् ॥ ५ ॥ २ ॥

वयंयजमानाः सवितुः सर्वस्यप्रसवितुः देवस्यादित्यस्यांतर्यामिरूपिणः प्रसवेअनुज्ञायांसत्यां तत्तादृशंवरेण्यंवरणीयंराधः पुरुषार्थसाधनसमर्थं गवादिधनंमनामहे याचामहे मन्यतिर्याञ्चाकर्मा छान्दसःशप् यद्वा पुनःपुनरभ्यस्यामः लप्सीमहीतियावत् म्नाअभ्यासे व्यत्ययेनात्मनेपदं शपि पाघ्रादिनामनादेशः किंच अस्मभ्यंद्यावापृथिवी द्यावापृथिव्यौसुचेतुना शोभनचेतनेनअस्मदनुग्रहबुद्ध्या रयिंधनं धत्तंदत्तं कीदृशंवसुमंतंनिवासयोग्यगृहादिविशिष्टं शतग्विनं शतसंख्याकगवादिविशिष्टम्॥ ५ ॥

५. आज हम सविता देवता की अनुमति के अनुसार उस वरणीय धन को चाहते हैं। हमारे ऊपर द्यावा-पृथिवी अनुग्रह करके गृह आदि और शत-शत गौओं से युक्त धन दें।

तेहीतिपंचर्चंचतुर्थंसूक्तं दैर्घतमसंजागतंद्यावापृथिव्यं तेहीत्यनुक्रांतं चतुर्विंशेहनिवैश्वदेवशस्त्रेद्यावापृथिव्यनिविद्धानमेतत्सूक्तं तेहिद्यावापृथिवीयज्ञस्यवोरथ्यमितिवैश्वदेवमितिसूत्रितत्वात् तथा पृष्ठ्याभिप्लवषडहयोर्द्वितीयेहनिवैश्वदेवेद्यावापृथिव्यंनिविद्धानीयं चातुर्विंशकंतृतीयसवनमित्याभिप्लविकेद्वितीयेहन्यतिदिष्टत्वात् आभिप्लविकाद्द्वितीयादह्नः पृष्ठ्यस्यद्वितीयेहनिएतत्सूक्तमतिदेशतःप्राप्तं पृष्ठ्यस्याभिप्लवेनोक्तेअहनीआद्येआद्याभ्यामितिसूत्रितत्वात् प्रथमाआश्विनशस्त्रेविनियुक्ता संस्थितेष्वाश्विनायेतिसूत्रितम्—तेहिद्यावापृथिवीविश्वशंभुवाविश्वस्यदेवीपृचयस्येति ।

सैषासूक्तेप्रथमा—

तेहिद्यावापृथिवीविश्वशंभुवऋतावरीरजसोधारयत्कवी ।
सुजन्मनीधिषणेअन्तरीयतेदेवोदेवीधर्मणासूर्यःशुचिः ॥ १ ॥

ते इति । हि । द्यावापृथिवी इति । विश्वऽशम्भुवा ।
ऋतवरी इत्यृतऽवरी । रजसः । धारयत्कवी इति धारयतऽकवी ।
सुजन्मनी इति सुऽजन्मनी । धिषणे इति । अन्तः । ईयते ।
देवः । देवी इति । धर्मणा । सूर्यः । शुचिः ॥ १ ॥

तेहि तेखलुप्रसिद्धे द्यावापृथिवीअन्तः तयोरंतराले शुचिःशुद्धः विश्वस्यशोचयिता वा देवोदीप्यमानः सूर्योधर्मणाप्रकाशोदकदानादिधारणेनयुक्तःसन् ईयते सर्वदागच्छति ईङ्गतौ दैवादिकः तादृशंकर्मयुवयोरनुग्रहादितिस्तुतिः कीदृश्यौते विश्वशंभुवा विश्वंसुखंभावयितृयोस्तेविश्वशंभुवा विश्वस्यसुखयित्र्यावित्यर्थः ऋतावरीऋतवत्यौउदकवत्यौ ऋतशब्दाच्छन्दसीवनिपाविति वनिप् वनोरचेतिङीब्रेफौ रजसःउदकस्य उदकोत्पत्तौ उदकंरजउच्यतेइतिनिरुक्तम् । धारयत्कवी अकृच्छ्रेणधारकंकवित्वंययोस्तेतादृश्यौ उदकोत्पादनायाप्रयत्नवत्यौइत्यर्थः यद्वा धारयत्कविर्मनीषीआदित्योययोस्तेतादृश्यौ वृष्ट्युदकधारणवित्सूर्योपेते इत्यर्थः सुजन्मनीशोभनजन्मवत्यौ धिषणेधर्षणोपेते. स्वव्यापारेषुप्रगल्भेइत्यर्थः देवीद्योत-

१ नि० ४. १९. ।

माने अन्नयद्यपिधिषणेइत्येतद्धिषणेरोदसीइतितन्नामसूक्तत्वात् द्यावापृथिवीनाम तथापिद्या-वापृथिवीइत्यस्यविद्यमानत्वाद्यौगिकंद्रष्टव्यम् ॥ १ ॥

१. द्यावा-पृथिवी संसार के लिए सुखदायिनी, यज्ञवती, जल उत्पन्न करने के लिए चेष्टा-सम्पन्ना, सुजाता और अपने कार्य में निपुणा हैं। द्योतमान और शुचि सूर्य द्यावा-पृथिवी के बीच, अपने कार्य से, सदा गमन करते हैं।

उरुव्यचसामहिनीअसश्चतापितामाताचभुवनानिरक्षतः।
सुधृष्टमेवपुष्येईनरोदसीपितायत्सीमभिरूपैरवासयत् ॥ २ ॥

उरुऽव्यचसा। महिनी इति। असश्चता। पिता। माता। च।
भुवनानि। रक्षतः। सुधृष्टमे इति सुऽधृष्टमे। वपुष्येइति।
न। रोदसी इति। पिता। यत्। सीम्। अभि। रूपैः।
अवासयत् ॥ २ ॥

उरुव्यचसा प्रभूतवचनवत्यौ अतिविस्तीर्णे महिनी अतएवमहत्यौ असश्चताअसज्य-माने परस्परवियुक्तेइत्यर्थः पिता पालयित्रीद्यौः मातानिर्मात्रीपृथिवीचेत्युभे भुवनानिभूतजाता-नि रक्षतः पालयतः द्यौःपितःपृथिवीमातरित्यादिश्रुतेर्मातापितृरूपत्वं किंच सुधृष्टमे अति-शयेनधृष्टे छान्दसस्तकारलोपः प्रगल्भेरोदसी द्यावापृथिव्यौ वपुष्येन वपुषोहितेइव प्राणिनां पितराविव शरीररक्षकेइत्यर्थः तदेवोपपादयति यद्यस्मात्सीं सर्वतः पिता पितृस्थानीया द्यौः रूपैः निरूपणसाधनैः प्रशस्तैः प्रकाशैः निरूप्यमाणैर्वृष्ट्यादिभिर्वा अभ्यवासयत् अभिवास-यति अधितिष्ठति तस्मात्पितामाताचभुवनानिरक्षतः ॥ २ ॥

२. विशाल, विस्तीर्ण और परस्पर-वियुक्त माता-पिता (द्यावा-पृथिवी) प्राणियों की रक्षा करते हैं। शरीरियों के मंगल के लिए ही द्यावा-पृथिवी मानों सचेष्ट हैं; क्योंकि पिता सारे पदार्थों को रूप प्रदान करते हैं।

सवह्निःपुत्रःपित्रोःपवित्रवान्पुनातिधीरोभुवनानिमायया।
धेनुंचपृश्निंवृषभंसुरेतसंविश्वाहाशुक्रंपयोअस्यधुक्षत ॥ ३ ॥

सः। वह्निः। पुत्रः। पित्रोः। पवित्रऽवान्। पुनाति। धीरः।
भुवनानि। मायया। धेनुम्। च। पृश्निम्। वृषभम्।
सुऽरेतसम्। विश्वाहा। शुक्रम्। पयः। अस्य। धुक्षत ॥ ३॥

पित्रोः मातापित्रोर्द्यावापृथिव्योः पितामात्रेतिपिताशिष्यते उदात्तयणइतिपितुर्विभक्तिरुदात्ता पुत्रः पुरुत्राता पुत्रस्थानीयआदित्यः पवित्रवान्पावनरश्मियुक्तः धीरः धीमान् सर्वह्विः फलस्यवोढाधारकःसन् मायया प्रज्ञयास्वकीयया भुवनानिभूतजातानि पुनातिपावयति प्रकाशयतीत्यर्थः किंच सएवपुत्रः पृश्निंशुक्लवर्णांधेनुं प्रीणयित्रींभूमिं सुरेतसं शोभनसामर्थ्यं शोभनोदकंवा वृषभं सेक्तारंद्युलोकंच मायया पुनाति पावयति प्रकाशयतीत्यर्थः कदा विश्वाहा सर्वाण्यप्यहानि सर्वकालमित्यर्थः किंच अस्यद्युलोकस्य कर्मणिषष्ठी इमंद्युलोकं शुक्रंपयः दीप्तंपयःसदृशमुदकंधुक्षत दोग्धि दुहेश्छान्दसेलुङि शलइगुपधादनिटःक्सइतिच्लेःक्सादेशः ईदृशोमहानुभावआदित्यस्तयोःपुत्रइतिद्यावापृथिव्योःस्तुतिः ॥ ३ ॥

३. पिता-माता (द्यावा-पृथिवी) के पुत्र सूर्य हैं। वे धीर और फलदाता हैं। अपनी बुद्धि से वे सारे भूतों को प्रकाशित करते हैं। वे शुक्लवर्ण धेनु (पृथिवी) और सेचन-कार्य में समर्थ वृष (द्युलोक) को भी प्रकाशित करते हैं। वे द्युलोक से निर्मल दूध दुहते हैं।

अयंदेवानामपसामपस्तमोयोजजानरोदसीविश्वशंभुवा।
वियोममेरजसीसुक्रतूययाजरेभिःस्कंभनेभिःसमानृचे ॥ ४ ॥
अयम्। देवानाम्। अपसाम्। अपःऽतमः। यः। जजान।
रोदसी इति। विश्वऽशम्भुवा। वि। यः। ममे। रजसी इति।
सुक्रतुऽयया। अजरेभिः। स्कम्भनेभिः। सम्। आनृचे ॥ ४ ॥

पूर्वंपुत्रमाहात्म्येनैतेप्रशस्येदानींस्वोत्पादकंस्तुत्यंप्रशंसति—अयंदेवानांमध्येदेवतमः अपसां अपस्तमः अपइतिकर्मनाम तेनतद्वाँल्लक्ष्यते कर्मवतांमध्येप्रकृष्टकर्मा अयमित्युक्तं कइत्याह—योदेवोविश्वशंभुवासर्वप्रकारेणभूतानांसुखस्यभावयित्र्यौ रोदसी द्यावापृथिव्यौ महानुभावेजजानउत्पादितवान् नकेवलमुत्पादनमात्रं अपितु योदेवोरजसी रंजनात्मिकेद्यावापृथिव्यौ रजसीइतिद्यावापृथिव्योर्नाम रजसीसदसीइतितन्नामसुपाठात् उक्तरूपेविममे विशेषेण परिछिनत्ति किंस्वोपभोगाय नेत्याह—सुक्रतूयया शोभनकर्मेच्छया येनकर्मणाप्राणिनांसुखंभवति तादृक्कर्मेच्छया अथवैतदुत्तरत्रसंबध्यते सुक्रतूयया उक्तेननिमित्तेनेमेद्यावापृथिव्यावजरेभिः अजीर्णैर्दृढतरैः स्कंभनेभिः गतिप्रतिबंधनैः शंकुभिः समानृचे सम्यक्सर्वतःपूजितवान् स्थापितवानित्यर्थः ऋचस्तुतौ लिटिरेफसामान्याद्द्विहल्त्वमस्तीति तस्मान्नुड्द्विहलइत्यभ्यासस्यनुट् यस्मादेवंतस्मादयमेवदेवः अयमेवापस्तमइति एवंमहानुभावेन परमेश्वरेणोत्पन्नेइतिस्तुतिः ॥ ४ ॥

४. वे देवों में देवतम और कर्मियों में कर्मश्रेष्ठ हैं। उन्होंने सर्व-सुखदाता द्यावा-पृथिवी को प्रकट किया है और प्राणियों के सुख के लिए द्यावा-पृथिवी को विभक्त करते हैं। उन्होंने सुदृढ़ शङ्कु या खूँटे में इन्हें स्थिर कर रखा है।

अथपंचमी–

तेनौगृणानेमहिनीमहिश्रवःक्षत्रंद्यावापृथिवीधासथोबृहत् ।
येनाभिकृष्टीस्ततनामविश्वहापनाय्यमोजोअस्मेसमिन्वतम् ॥५॥३॥

ते इति । नः । गृणाने इति । महिनी इति । महि । श्रवः । क्षत्रम् ।
द्यावापृथिवी इति । धासथः । बृहत् । येन । अभि । कृष्टीः । ततनाम ।
विश्वहा । पनाय्यम् । ओजः । अस्मे इति । सम् । इन्वतम् ॥५॥३॥

तेप्रसिद्धे हेद्यावापृथिवी द्यावापृथिव्यौ गृणानेअस्माभिः स्तूयमानेसत्यौकर्मणिकर्तृप्रत्ययः महिमहत् अतिप्रभूतंश्रवः सर्वत्रप्रसिद्धमन्नंसर्वत्रश्रूयमाणां कीर्तिंवानोऽस्मभ्यं धासथः धत्तं दधातेर्लेटयडागमः सिब्बहुलमितिसिप् तथा बृहत् अतिप्रभूतंक्षत्रंबलंधासथः तदेवविशेष्यते येनबलेन विश्वहा सर्वेष्वप्यहःसु कृष्टीः पुत्रादिरूपाःप्रजाः अभिततनाम अभितोविस्तारयाम तनोतेर्लोटि छान्दसोविकरणस्यश्लुः आडुत्तमस्येत्याडागमः तस्य छन्दस्युभयथेति आर्धधातुकत्वात् अभ्यस्ताद्युदात्तत्वाभावेधातुस्वरः कृष्टयइतिमनुष्यनाम कृष्टयः चर्षणयइतितन्नामसुपाठात् किंच पनाय्यं स्तुत्यं ओजः शरीरबलं अस्मेअस्मासुसम्यगिन्वतं प्रवर्धयतमित्यर्थः इन्वतिर्व्याप्तिवचनः इन्वतिनक्षेइतितन्नामसुपाठात्॥ ५ ॥

५. द्यावा-पृथिवी, हम तुम्हारी स्तुति करते हैं। तुम महान् हो, हमें प्रभूत अन्न और बल प्रदान करो, जिससे हम सदा पुत्र आदि प्रजा का विस्तार करें। हमारे शरीर में प्रशंसनीय बल की वृद्धि कर दो।

॥ इतिद्वितीयस्यतृतीयेतृतीयोवर्गः ॥ ३ ॥

किमुश्रेष्ठइतिचतुर्दशर्चंपंचमंसूक्तं दैर्घतमसमार्भवं अंत्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया जगत्यः अनुक्रांतंच–किमुश्रेष्ठःषळूनार्भवंत्रिष्टुबंतमिति । व्यूळ्हेदशरात्रेषष्ठेहनिवैश्वदेवशस्त्रेआर्भवंनिविद्धानंद्विप्रतीकं तत्रकिमुश्रेष्ठइत्येतदंत्यवर्ज्यंप्रतीकंव्यूळ्हश्चेतिखण्डेसूत्रितम्–किमुश्रेष्ठउपनोवाजाइतित्रयोदशार्भवंचतस्रश्चेति ।

तत्रप्रथमा–

किमुश्रेष्ठःकिंयविष्ठोनआजगन्किमीयतेदूत्यंकद्यदूचिम
नानिन्दिमचमसंयोमहाकुलोग्नेभ्रातर्द्रुणइद्भूतिमूदिम ॥ १ ॥

किम् । ऊम् इति । श्रेष्ठः । किम् । यविष्ठः । नः । आ । अजगन् ।
किम् । ईयते । दूत्यम् । कत् । यत् । ऊचिम । न । निन्दिम । चमसम् ।
यः । महाऽकुलः । अग्ने । भ्रातः । द्रुणः । इत् । भूतिम् । ऊदिम॥१॥

ऋभवोनामसुधन्वनस्त्रयःपुत्राः ऋभुर्विभ्वावाजइति तेचमनुष्याःसन्तः सुकर्मणादेवत्वंप्राप्य कदाचित्कर्मकाले सोमपानायप्रवृत्ताः तान्प्रति देवैःप्रेरितोऽग्निः परस्परसमानरूपान्दृष्ट्वा स्वयमपितदाकारंधृत्वा तेषुमध्ये स्वयंचतुर्थःसन्पातुंप्रवृत्तः तेचऋभवः आगतंतंसमानरूपं अवलोक्य विवेक्तुंअसमर्थाः परस्परमेवंसंदिहते—अयंकिमुश्रेष्ठः किंनुखलुअस्मत्तोऽयंप्रशस्यतमः वयसाश्रेष्ठः सोऽस्मानाजगन् आगमत्प्राप्तः गमेर्लङिछान्दसःशपःश्लुः हल्ङ्यादिलोपेमोनोधातोरितिनत्वं अजगन्नितिगतिकर्मा अगन्नजगन्नितितन्नामसुपाठात् किंयविष्ठः किंवा नःअस्माकं युवतमः अस्मत्तःकनीयान् आजगन्प्राप्तः किंवा दूत्यं दूतकर्मदेवसंबन्धिईयते गच्छति देवैःप्रेरितोदूतोऽस्मानागतोवा दूतस्यभागकर्मणीइतियत् यदूचिम यदेतद्ब्रूमः तत्कथंनिश्चेतव्यमित्यर्थः वयं तावत्त्रयएव इदानींचत्वारःसमानरूपावर्तामहे तस्मादयमधिकः किमुश्रेष्ठइति विचिकित्सा एवंसंदिह्य कथंचित्स्वतोऽन्यं निश्चित्यतंप्रत्यपरोक्षेणब्रुवते—हेअग्नेभ्रातः भ्रातृवत् भागार्ह भ्रातायथाबलात् स्वकीयंभागंस्वीकरोति तद्वत्समानरूपमाश्रित्य बलाच्चमसपानायप्रवृत्तइतिभ्रातरित्युक्तं हेताद्दशाग्ने चमसंनर्निंदिम अधिकःसमागतइतिपानमकृत्वाचमसंनदूषयामः णिदिकुत्सायां छंदसिवेतिवक्तव्यमितिद्विर्वचनाभावः अदूष्यत्वेकारणमाह—यश्चमसोमहाकुलः महाकुलोत्पन्नः त्वष्ट्रानिर्मितत्वात् वक्ष्यतिच—त्वष्टाग्नास्वंतन्यांनजईति । अतःकारणाद्द्रुणः विकारेप्रकृतिशब्दः ततश्चतस्थे तच्छब्दः इदवधारणे दारुविकारचमसस्यभूतिं प्राप्तिं ऊदिम ब्रूमः विदेश्छान्दसेलिटि वचिस्वपीतिसंप्रसारणं क्रादिनियमादिट् ॥ १ ॥

१. जो हमारे पास आये हैं, वे क्या हमसे ज्येष्ठ हैं या छोटे? ये क्या देवों के दूत-कार्य के लिए आये हैं। इन्हें क्या कहना होगा? इन्हें कैसे पहचानेंगे? भ्राता अग्नि, हम चमस की निन्दा नहीं करेंगे; क्योंकि वह महाकुल में उत्पन्न है। उस काष्ठमय चमस की स्मृति की हम व्याख्या करेंगे।

अथद्वितीया—

एकंचमसंचतुरःकृणोतनयद्वोदेवाअब्रुवन्तद्वआगमम् ।
सौधन्वनायद्येवाकरिष्यथसाकंदेवैर्यज्ञियासोभविष्यथ ॥ २ ॥

२

१ ऋ० सं० २. ३. ४. ।

एकम् । चमसम् । चतुरः । कृणोतन । तत् । वः । देवाः । अब्रुवन् ।
तत् । वः । आ । अगमम् । सौधन्वनाः । यदि । एव । करिष्यथ ।
साकम् । देवैः । यज्ञियासः । भविष्यथ ॥ २ ॥

एवंपृष्टोऽग्निः तान्प्रत्युवाच—हेसौधन्वनाः सुधन्वनःपुत्राः यूयंएकंचमसं त्वष्ट्रासंपादितंपूर्वमेकमेवसंतंचमसं चतुरःकृणोतन चतुःसंख्याकान्कुरुत चतुरःशसीत्यन्तोदात्तत्वं पूर्ववत्तनप् यथाउपरितने ज्येष्ठआहचमसाद्वांकरेतीत्युपक्रम्य कनिष्ठआहचतुरस्करेतीति चतुष्ट्वंनिर्धारितं नकेवलमहमेवब्रवीमि किंतुवोयुष्मान्प्रति तदुक्तंचतुर्धाकरणरूपंकर्मउत्तरत्रवक्ष्यमाणं अश्वरथादिकरणरूपंचकर्म देवाइन्द्रादयः अब्रुवन् देवत्वप्राप्त्युपायत्वेनतत्तादृशंकर्म वोयुष्माकंवक्तुमहमागमं प्राप्तोऽस्मि यस्मादेवंतस्माद्यूयंयद्येवाकरिष्यथ यद्येवंमदुक्तप्रकारेणकर्तुंशक्नुथ तथाचेद्देवैः साकंसह यज्ञियासोभविष्यथइतितैरुक्तमित्यर्थः ॥ २ ॥

२. अग्नि ने कहा—सुधन्वा के पुत्र, एक चमस को चार बनाओ—देवों ने यह बात कहकर मुझे भेजा है। मैं तुम्हें कहने आया हूं। तुम लोग यह कार्य कर सकते हो और ऐसा करने पर तुम लोग देवों के साथ यज्ञांशभागी बनोगे।

अथतृतीया—

अग्निंदूतंप्रतियदब्रवीतनाश्वःकर्त्वोरथउतेहकर्त्वः ।
धेनुःकर्त्वायुवशाकर्त्वाद्वातानिभ्रातरनुवःकृत्व्येमसि ॥ ३ ॥

अग्निम् । दूतम् । प्रति । यत् । अब्रवीतन । अश्वः । कर्त्वः । रथः ।
उत । इह । कर्त्वः । धेनुः । कर्त्वा । युवशा । कर्त्वा । द्वा । तानि ।
भ्रातः । अनु । वः । कृत्वी । आ । इमसि ॥ ३ ॥

हेआगतदेव अग्निंअंगनादिगुणविशिष्टंदूतं दूतकर्मप्राप्तवन्तं त्वांप्रतियद्यत्कार्यं अब्रवीतन अब्रुवन्व्यत्ययेनमध्यमः पूर्ववत्तनप् किमिति अश्वः कर्त्वः एकस्मादश्वात् अश्वांतरंकर्तव्यमित्यर्थः अश्वादश्वमतक्षतेतिवक्ष्यमाणत्वात् कृत्यार्थेतवैकेनितित्वन्प्रत्ययः उत अपिच रथः कर्त्वः कर्तव्यः धेनुः कर्त्वाचर्मरहितागौः नित्यदोग्ध्रीपुनर्नूतनाकार्या तदुत्तरत्र निश्चर्मणोगामरिणीतधीतिभिरितिवक्ष्यमाणत्वात् तथा द्वा द्वौपितरौजीर्णौसंतौ पुनर्युवशा युवानौ शयानौ प्रकृष्टयौवनोपेतौ कर्त्वा कर्तव्यौ हेभ्रातरग्ने तानि वः युष्माकंदेवानां तैरुक्तानिकर्माणिकृत्वा अनु पश्चात् कृ-

१ ऋ० सं० ३. ७. १. । २ ऋ० सं० ३. ७, १. । ३ ऋ० सं० २. ३. ५. ।

त्वी कृत्याकर्मणा एमसि एमःआभिमुख्येनप्राप्नुमः इणगतौ इदन्तोमसिः यद्वा ऋभेरिदंवाक्यं हे ऋभवोयूयंआगतं अग्निंदूतंप्रतियदब्रवीतन यत्कार्यं वक्ष्यमाणरूपंकर्तव्यत्वेनवदथ अङ्गीकुरुथ तानिसर्वाणिसंपाद्य हेभ्रातरग्ने कृत्व्या कर्मणा एमसीति ब्रूथेतिऋषिराह ॥ ३ ॥

३. अग्निदेव, देवों ने अपने दूत अग्नि के प्रति जो-जो कार्य बताये हैं, उनमें से अश्व बनाना होगा, रथ का निर्माण करना होगा, गौ का सृजन करना होगा अथवा माता-पिता को फिर तरुण करना होगा ? भ्रातृवर, तुम्हारे उन सब कार्यों को करके अन्त में कर्म-फल के लिए तुम्हारे पास आयेंगे।

चकृवांसंऋभवस्तदंपृच्छतक्वेदंभूद्यःस्यदूतोनआजंगन् ।
यदावाख्यंच्चमसाञ्चतुरःकृतानादित्त्वष्टाग्नास्वन्तर्न्यानजे ॥ ४॥

चकृऽवांसः । ऋभवः । तत् । अपृच्छत । क्वं । इत् । अभूत् । यः । स्यः । दूतः । नः । आ । अजंगन् । यदा । अवऽअख्यंत् । चमसान् । चतुरः । कृतान् । आत् । इत् । त्वष्टा । ग्नासु । अन्तः । नि । आनजे ॥ ४ ॥

हेऋभवः तत्कार्यंयथाचकृवांसः कृतवन्तोयूयंअपृच्छत प्रश्नंकुरुत करोतेर्लिटःक्वसुः अत्रयद्यपिऋभुरितित्रयाणांमध्येएकस्यनाम तथापितस्यप्राथम्याच्छत्रिणोगच्छन्तीतिवत्सर्वेप्यृभवउच्यन्ते किमिति स्यः सदूतः क्वेदभूत कुत्रगतः सइत्युक्तंकइत्याह—यः योदूतोनोऽस्मानाजगन् आगमत्प्राप्तः एवंभूतेसति यदायंत्वष्टाचतुरःकृतान्चमसान् अवाख्यत् अभिपश्यति ख्यातेर्लुङि अस्यतिवक्तिख्यातीतिच्लेरङादेशः आदित् अनन्तरमेव त्वष्टातस्य चमसस्योत्पादकएतन्नामकोदेवः ग्नासु स्त्रीषु मेनाग्नाइतिस्त्रीणामितिनिरुक्तं अंतर्मध्येन्यानजे न्यक्तोभूत् स्त्रियमात्मानममन्यतेत्यर्थः अंजेर्लिटितस्मान्नुट् छान्दसोऽनुनासिकलोपः ॥ ४ ॥

४. ऋभुगण, वह कार्य करके तुमने पूछा कि जो दूत हमारे पास आया था, वह कहाँ गया ? जिस समय त्वष्टा या ब्रह्मा ने चमस के चार टुकड़े देखे, उसी समय वह स्त्रियों में छिप गया।

हनामैनाँइतित्वष्टायदब्रवीच्चमसंयेदेवपानमनिन्दिषुः ।
अन्यानामानिकृण्वतेसुतेसचाँअन्यैरेनान्कन्याउनामभिःस्परत् ॥५॥१

हनाम । एनान् । इति । त्वष्टा । यत् । अब्रवीत् । चमसम् । ये । देवऽपानम् । अनिन्दिषुः । अन्या । नामानि । कृण्वते । सुते । सचा । अन्यैः । एनान् । कन्या । नामऽभिः । स्परत् ॥ ५ ॥ १ ॥

एनान्वक्ष्यमाणान्हनामेति यद्यदाअब्रवीत् त्वष्टा पूजार्थंबहुवचनं एतच्छब्दस्यप्रकृतपराम-शकत्वात् ऋभूणांप्रकृतत्वात् तेषांहननप्रसाकिंदर्शयति येदेवपानं देवैःपातव्यंचमसंयेऋभवोऽ-निन्दिषुः निंदांअकुर्वन् देवयोग्यंत्वाष्ट्रंचमसंमनुष्याऋभवः स्वीकृत्यचतुर्धाव्यभजन् तान्हना-मेति यदाब्रवीदित्यर्थः तदाप्रभृतिमनुष्याः सुतेअभिषुतेसोमेपानायप्रस्तुतेसतिसचासहपरस्प-रंअन्यानामानि अन्यानिहोत्रध्वर्यूद्गात्रादीनिकृण्वतेकुर्वन्ति पूर्वंनामप्रच्छाद्योपहवकालेअध्वर्य-उपह्वयस्वहोतरुपह्वयस्वेत्येवमन्यैरेवनामभिःआत्मानंत्वष्ट्रवधभीत्याप्रख्यापयन्तीत्यर्थः पूर्व-मन्यानिनामानिकथंप्रसक्तानीत्यतआह—एनान्नरान्कन्यास्वोत्पादयित्रीमाता अन्यैरेवनामभिः स्परत्प्रीणयति स्पृप्रीतिपालनयोः लेटचडागमः ॥ ५ ॥

५. जिस समय त्वष्टा ने कहा कि जिन्होंने देवों के पानपात्र चमस का अपमान किया है, उनका वध करना होगा, उस समय से ऋभुगण ने सोम तैयार होने पर दूसरा नाम ग्रहण किया और कन्या या उनकी माता ने उसी नाम से पुकारकर उन्हें प्रसन्न किया।

इन्द्रो॒हरी॑युयु॒जेअ॒श्विना॒रथं॒बृह॒स्पति॑र्वि॒श्वरू॑पा॒मुपा॑जत।
ऋ॒भुर्विभ्वा॒वाजो॑दे॒वाँअ॑गच्छत॒स्वप॑सोय॒ज्ञियं॑भा॒गमै॑तन ॥ ६ ॥

इन्द्रः॑। हरी॒ इति॑। यु॒यु॒जे। अ॒श्विना॑। रथ॑म्। बृ॒हस्पतिः॑। वि॒श्वऽरू॑पाम्। उप॑। आ॒जत॒। ऋ॒भुः। विऽभ्वा॑। वाजः॑। दे॒वान्। अग॑च्छत॒। सुऽअपसः॑। य॒ज्ञिय॑म्। भा॒गम्। ऐ॒त॒न ॥ ६ ॥

पूर्वंसृष्टानांक्रमेणविनियोगमाह—इन्द्रोहरीयुयुजे एतन्नामानावश्वौरथेयोजितवान् तथा अश्विनाअश्विनौ रथंयोजितवन्तौ तथाबृहस्पतिः बृहतोमन्त्रस्य पालयिता एतन्नामकोदेवो विश्वरूपां नानारूपोपेतांगांउपाजत उपागमत् स्वीकृतवानित्यर्थः यद्यप्यत्रगौरितिविशेषोनश्रु-तः तथापिपूर्वं धेनुःकर्त्वेत्युक्तत्वात् परस्ताच्चयेधेनुंविश्वजुवं विश्वरूपामितिवक्ष्यमाणत्वाच्च वि-श्वरूपागौरित्येवाध्यवसीयते अतएवविश्वरूपामितिचतस्याश्वपंक्तिमितिकेचनव्याचक्षते त-तदसत् युष्मत्संपादितानि रथादीनींद्रादयः स्वभागत्वेनाकल्पयन् तस्माद्दभुर्विभ्वावाजश्च यूयं देवानिंद्रादीनगच्छत गत्वाच हेस्वपसः शोभनाश्वरथादिकर्मवन्तोयूयं यज्ञियं यज्ञार्हं यज्ञसं-बंधिनंभागं सोमरूपं देवत्वंप्राप्तैःसेवनीयं ऐतन प्राप्नुत कर्मसामर्थ्येनहविर्भुजोभवतेत्यर्थः इत्येवमृषिराह ॥ ६ ॥

६. इन्द्र ने अपने अश्वों को सजाया, अश्विनीकुमारों ने रथ तैयार किया और बृहस्पति ने विश्वरूपा गौ को स्वीकार किया। इसलिए हे ऋभु, विभु और वाज, तुम देवों के पास गमन करो। हे पुण्यकर्त्ता लोग, तुम यज्ञ-भाग ग्रहण करो।

अथसप्तमी—

निश्चर्मणोगामरिणीतधीतिभिर्याजरन्तायुवशाताकृणोतन।
सौधन्वनाअश्वादश्वमतक्षतयुक्त्वारथमुपदेवाँअयातन ॥ ७॥

निः। चर्मणः। गाम्। अरिणीत। धीतिऽभिः। या। जरन्ता।
युवशा। ता। अकृणोतन। सौधन्वनाः। अश्वात्। अश्वम्।
अतक्षत। युक्त्वा। रथम्। उप। देवान्। अयातन ॥ ७ ॥

हेसौधन्वनाः यूयं निश्चर्मणा मृतायागोःसकाशादुत्कृत्ताच्चर्मणः गांनूतनां निररिणीत निरगमयत उत्पादितवन्तः तेनैवचर्मणासंवीतांतत्सदृशीमन्यांधेनुंकृतवन्तइत्यर्थः यद्यपिपूर्वमेवाश्वादीनां विनियोगउक्तः तथापितेषामत्यन्तदुःखसंपादत्वज्ञापनाय पुनराह—नकेवलं गोकरणमेव अपिच या जरंता यौजीर्णौ पितरौ ता तौ युवशा युवानौ कृणोतन अकुरुत किंच अश्वादश्वं एकेनविद्यमानेनाश्वेनाश्वान्तरमतक्षत प्रयत्नेनसंपादितवन्तः यस्मादेवं कृतवंतस्तस्माद्रथं युष्मदीयंयुक्त्वाश्वैर्योजयित्वादेवानिन्द्रादीनुपायातन देवसमीपंमागुत ॥ ७ ॥

७. हे सुधन्वा के पुत्रो, तुमने आश्चर्यजनक कौशल से मृत धेनु के शरीर से चमड़ा लेकर उससे धेनु उत्पन्न की, जो पिता-माता बूढ़े थे, उन्हें फिर युवा किया और एक अश्व से अन्य अश्व उत्पन्न किया इसलिए रथ तैयार करके देवों के सामने जाओ।

इदमुदकंपिबतेत्यब्रवीतनेदंवाघापिबतामुञ्जनेजनम्।
सौधन्वनायदितन्नेवहर्यथतृतीयेघासवनेमादयाध्वै ॥ ८ ॥

इदम्। उदकम्। पिबत। इति। अब्रवीतन। इदम्। वा। घ।
पिबत। मुञ्जऽनेजनम्। सौधन्वनाः। यदि। तत्। नऽइव। हर्यथ।
तृतीये। घ। सवने। मादयाध्वै ॥ ८ ॥

इदानीमृषिर्देवैरुक्तमर्थंतान्संबोध्य यूयंऋभूनेवमुक्तवन्तःस्थेत्यनुवाचयति हेसौधन्वनाः सुधन्वनःपुत्राः यूयं इदमुदकं सोमलक्षणं पिबत इत्यब्रवीतन इत्युक्तवन्तः ब्रवीतेर्लङ्मिध्यमबहुवचनस्यतस्यतनबादेशे पित्त्वाद्ब्रुवईट् एतत्प्रातःसवनिकाभिप्रायं वा अथवा घेत्यनर्थकः प्रसिद्ध्यर्थोवा इदंमुंजनेजनं मुंजवान्नामपर्वतः सोमोत्पत्तिस्थानं ततआहृतत्वाचेनमुंजतृणेनशोधितं अपगततृणमित्यर्थः इदंसोमरसरूपमुदकं पिबतेत्यब्रवीतन एतन्माध्यंदिनसवनाभिप्रायं हेऋभवः यूयंतत् उभयसवनसंबन्धि सोमपानकार्यं नेवहर्यथ नैवकामयथ हर्यतिःकान्तिकर्मा ह-

येंतिउशिगितितत्कर्मसुपाठाव तृतीयसवनेतु मादयाध्वै अत्यर्थं तृप्ताभवथ ऋभवोदेवाःसोमस्य मत्तन्निवितृतीयसवने तेषांसोमपानसद्भावाव् एवंयूयमृभूनुक्तवन्तः अथवा ऋभून्प्रति तस्यैवेदं वाक्यं हेसौधन्वनाः यूयंदेवत्वंप्राप्य देवयजनंप्रतिसोमपानायरथेनागत्य श्रांतानश्वान् प्रातःसवनेइदमुदकं सोमलक्षणं पिबतेत्यब्रवीतन तत्रयदिनेच्छथ इदंवा मुंजनेजनं मुंजेनदूषितं वाजिनं पिबतेत्यब्रवीतन पश्चात्तद्द्वयंयदिनेवहर्यथ हेअश्वाः यूयं तृतीयसवने मादयाध्वै तत्रापिवाजिनमचाराव ॥ ८ ॥

८. देवो, तुमने कहा था, "हे सुधन्वा के पुत्रो, तुम लोग यही सोमरस पान करो अथवा मुञ्ज-तृण से शोधित सोमरस पान करो। यदि इन दोनों में तुम्हारी इच्छा न हो, तो तीसरे (सायं) सवन में सोमरस पीकर अत्यन्त तृप्त हो जाओ।"

**आपोभूयिंष्ठाइत्येकोअब्रवीदग्निर्भूयिष्ठइत्यन्योअंब्रवीत् ।**
**वधर्यन्तींबहुभ्यःप्रैकोअब्रवीदृतावदन्तश्चमसाँअंपिंशत ॥ ९ ॥**

आपः । भूयिष्ठाः । इति । एकः । अब्रवीत् । अग्निः । भूयिष्ठः । इति । अन्यः । अब्रवीत् । वधःऽयन्तीम् । बहुऽभ्यः । प्र । एकः । अब्रवीत् । ऋता । वदन्तः । चमसान् । अपिंशत ॥ ९ ॥

चमसचतुर्धाकरणकालेकिमितिसत्यंमदन्तोव्यभजन्नितितदाह—एकस्त्रयाणामन्यतमः आपोभूयिष्ठाइत्यब्रवीव् नह्युदकात्प्रशस्तंलोकोपकारकंतत्वान्तरमस्त्यतआपोभूयिष्ठाइत्येवमवादीव् अपामेवश्रेष्ठत्वमपएवससर्जादावित्यादिशास्त्राव तथान्योऽग्निर्भूयिष्ठइत्यब्रवीव् आंतरंबाह्यं चदाहपाकभुक्तजरणादिव्यापारेणाग्नेरेवजगन्निर्वाहकत्वाव् अग्नेरेवभूयिष्ठत्वमित्येवमन्यते तथा वधर्यन्तींवधरितिरेफान्तोऽपिवज्रनाम वधःअर्कइतितन्नामसुपाठाव तदिच्छतिवृष्ट्युदकायेति वधर्यन्तीमेघपंक्तिरुच्यते यद्यपीयंस्ववधायवज्रंस्वयमेवनापेक्षतेतथापि वृष्ट्यर्थंवज्रेणहन्यमानत्वाव तदिच्छतीत्युपचर्यते यद्वा बहुभ्यस्तेषामर्थाय वधर्यन्तींवधमात्मनइच्छन्तींभूमिं छान्दसोरेफोपजनः तामेवैकःबहुभ्यः संवादिभ्यः श्रेष्ठतमामब्रवीव् उदकस्यापिमेघकारणत्वाव् एवमृता ऋतानिउक्तरूपाणि यथार्थानिवाक्यानिवदन्तः परस्परंब्रुवन्तः चमसान् अपिंशतअवयविनोऽकुरुत चतुर्धाव्यभजतेत्यर्थः पिशिअवयवे शेमुचादीनामितिनुम् इदमेवऋतवदनंअपेक्ष्यऋभुशब्दंव्याचक्षाणोयास्कः—ऋभवउरुभान्तीतिवर्तेनभान्तीतिवर्तेनभवन्तीत्युक्तवान् ॥ ९ ॥

९. ऋभुओं में से एक ने कहा, "जल ही सबसे श्रेष्ठ है," एक ने अग्नि को श्रेष्ठ बताया और तीसरे ने पृथ्वी को। सच्ची बात कहकर ही उन्होंने चारों चमसों को तैयार किया।

अथदशमी—

श्रोणामेकंउदकंगामवाजतिमांसमेकःपिंशतिसूनयाभृंतम् ।
आनिम्रुचःशकृदेकोअपाभरत्किंस्वित्पुत्रेभ्यःपितराउपावतुः॥१०॥५॥

श्रोणाम् । एकः । उदकम् । गाम् । अव । अजति । मांसम् । एकः । पिंशति । सूनया । आऽभृतम् । आ । निऽम्रुचः । शकृत् । एकः । अप । अभरत् । किम् । स्वित् । पुत्रेभ्यः । पितरौ । उप । आवतुः ॥ १० ॥ ५ ॥

अत्रऋभवएवऋत्विग्रूपेणस्थितत्वात्सर्वेत्रयज्ञंनिर्वहंतीत्याह श्रोणांशोणं वाछन्दसीतिपररूपाभावः शोणवर्णमुदकंरुधिरं एकः ऋभुषुमध्येऋत्विग्गामवाजति बाह्यभूमिंप्रतिगमयति रक्षोभागत्वेनस्थापयति तथा एकोमांसं सूनया छेदनसाधनेन स्वधितिनाआभृतं संपादितंपिंशति हृदयजिह्वावक्षआद्याकारेणआहृतंसंपादितंमांसंपिंशति अवयवीकरोति स्वधितिनातत्तदवयवान्विभजतीत्यर्थः अथैकोनिम्रुचः निःशेषेणछिन्नान्मांसात् शकृत् कुक्षिस्थंजरच्चूर्णं ऊवध्यनामकं अपाभरत् अपाहरत् निरसनाय एवं ऋत्विग्रूपेणस्थितेभ्यःपुत्रेभ्यः पुरुत्रातृभ्यः पुत्रस्थानीयेभ्यः ऋभुभ्यः सर्वेष्वनुष्ठितेषु पितरायज्ञस्यपालयितारौजायापती किंस्विदुपावतुः किंनु खलुमामुतः अवतेःप्राप्त्यर्थाच्छान्दसोलिट् सर्वंतैरेवानुष्ठितमिति तयोर्नकिंचित्कृत्यमस्तीत्यर्थः अथवायमर्थः एकस्तेषामन्यतमः श्रोणां पंगुकांगां उदकं प्रत्यवगमयति अपरः सूनयामांसविक्रयिण्याभृतंसंपादितंमांसंपिंशति पित्रोरर्थे अपरआनिम्रुचः अस्तमयादर्वागेव शकृद्गोपुरीषंहरति एवमृभुभिरनुष्ठितेसति किंस्वित् एतस्मात्परिचरणादन्यत् पुत्रेभ्यः पितरौउपावतुः उपगच्छेतामिति ॥ १० ॥

१०. एक लोहितवर्ण जल या रक्त बाहर भूमि पर रखते हैं, दूसरे छूरे से कटे मांस को रखते हैं और तीसरे मांस से मल आदि अलग करते हैं। किस प्रकार पिता-माता (यजमान-दम्पती) पुत्रों (ऋभुओं) का उपकार कर सकते हैं?

॥ इतिद्वितीयस्यतृतीयेपंचमोवर्गः ॥ ५ ॥

अथैकादशी—

उद्वत्स्वस्मा अकृणोतनातृणंनिवत्स्वपःस्वपस्ययानरः ।
अगोह्यस्ययदसस्तनागृहेतदद्येदमृभवोनानुगच्छथ ॥ ११ ॥

उद्वत्ऽसु । अस्मै । अकृणोतन । तृणम् । निवत्ऽसु । अपः ।
सुऽअपस्यया । नरः । अगोह्यस्य । यत् । असस्तन । गृहे । तत् ।
अद्य । इदम् । ऋभवः । न । अनु । गच्छथ ॥ ११ ॥

पुराणप्रसिद्धान्सुधन्वनःपुत्रान्कर्मणादेवत्वंप्राप्तवतोऋभूनस्तुत्वावेदप्रसिद्धया सूर्यरश्मिरूपानृभूनिदानींस्तौति तथाचयास्कोनिरुक्तेपुराणप्रक्रियासिद्धानृभून्बहुधानिरुच्यतदुदाहरणत्वेनविष्ट्वीशमीत्येतामुदाहृत्यादित्यरश्मयोऽप्यृभवउच्यन्तइत्युक्त्वातस्मिन्नर्थेएतामृचमुदाजहार–हेऋभवः उरुप्रभूतं भासमानाःऋतेनादित्येनभासमानावाऋतेनोदकेनउदकार्थमुत्पन्नावारश्मीनामुरुभासमानत्वंप्रसिद्धम् तथाआदित्यादुत्पत्तिरपिउदकार्थंभवनमपिरश्मीनांघर्मकालेभूमिगतंसारमादायपुनर्वर्षकालेप्रवर्षतीतिप्रसिद्धम् आदित्याज्जायतेवृष्टिरितिशास्त्रात् तथाविधानरः प्रकाशवृष्ट्युदकादेर्नेतारोयूयं उद्वत्सुउन्नतेषुप्रदेशेषुमेवादिषु तृणंव्रीहियवादिरूपं अस्मैप्राणिजातायउपकारार्थंअकृणोतन कृतवन्तःस्थ उपसर्गाच्छन्दसिधात्वर्थेइतिवतिः तथा निवत्सुप्रवणदेशेषु अस्माएवअपउदकान्यकृणोतन अकुर्वत किंस्वभोगार्थं नेत्याह स्वपस्ययाशोभनकर्मेच्छया शोभनंकर्मैभिःकृतमितियजमानाः स्तुवन्तितदिच्छयेत्यर्थः किंच यूयंअगोह्यस्याग्राह्यस्यादित्यस्यगृहेमण्डलेयत् यावत्कालंअसस्तनसुप्तवन्तःस्थ रात्रौनिर्व्यापारास्तिष्ठथ षसस्वप्ने अस्माल्लङिपूर्ववत्तस्यतनबादेशः अदादित्वाच्छपोलुक् तत्तावन्तंकालं अद्याहनिइदंइदानीं नानुगच्छथअनुसृत्यनगच्छथ यावन्तंकालंरात्रौ सूर्येनिगूढावर्तध्वे तावन्तमेवकालमहन्यपिनानुगच्छथेत्यर्थः यद्वा अगोपनीयस्यतस्यगृहेअन्तरिक्षेयत्यावन्तंकालंअसस्तन वृष्टिमदत्त्वास्वापमकुरुत तत्तावंतंकालं अद्येदानींवर्षसमये इदंसस्याभिवर्धनवृष्टिप्रवाहरूपंकर्मनानुगच्छथअनुसृत्यनप्राप्नुथ यावन्तंकालंविवर्षथ तावन्तमेवकालंप्रवर्षथेत्यर्थः ॥ ११ ॥

११. प्रभूत दीप्तिशाली ऋभुओ, तुम नेता हो। प्राणियों के भले के लिए तुम ऊँचे स्थान पर व्रीहि, यव आदि तृण उत्पन्न करते और सत्कर्म करने की इच्छा से नीचे के प्रदेश में जल उत्पन्न करते हो। सूर्यमंडल में अब तक तुम निहित थे; इस समय वैसा नहीं करना। अपना कार्य सिद्ध करो?

अथद्वादशी–

संमील्ययद्भुवनापर्यसर्पतक्वस्वित्तात्यापितरावआसतुः ।
अशपतयःकरस्नंवआददेयःप्राब्रवीत्प्रोतस्माअब्रवीतन ॥ १२ ॥

सम्ऽमील्य । यत् । भुवना । परिऽअसर्पत । क्व । स्वित् । तात्या ।
पितरा । वः । आसतुः । अशपत । यः । करस्नम् । वः । आऽददे ।
यः । प्र । अब्रवीत् । प्रो इति । तस्मै । अब्रवीतन ॥ १२ ॥

---

१ नि० ११. १६.

हेऋभवोरश्मयोयूयं यत् यदाभुवनाभूतजातानि संमील्यसंमीलनंकृत्वाजलधरपटलैराच्छाद्यपर्यसर्पत परितःसर्पणंकुरुथ वर्षथेत्यर्थः तदा तात्या ता तौ तायमानेवृष्ट्युदके यद्वा तात्या तासु वर्षासु छान्दसस्त्यप्रत्ययोदकारस्यात्वंच अथवा पितृविशेषणं तात्या तत्कालीनौ पितरा पितरौ जगतःपालकौसूर्याचन्द्रमसौ क्वस्विदासतुः कुत्रखलुतिष्ठतः अस्तेर्लिटि व्यत्ययेनभूभावाभावः यद्वा असतेर्गत्यर्थस्यलिटिचेतद्रूपं अहोरात्रविभागेनप्रवर्षथेत्यर्थः किंच ईदृशान्वोयुष्मान्यःकोऽपि वृष्टिप्रतिबंधकारीराक्षसादिः करस्नं बाहुनामैतत् करस्नौबाहूइत्युक्तत्वात् अत्रत्वकारान्तं युष्मदीयंहस्तंआददेगृह्णाति प्रतिरोधंकरोति तमशपत नाशयथ यश्चप्राब्रवीत् प्रकर्षेणवाचानिरुंधे तस्मै प्रो प्रैवाब्रवीतन प्रकर्षेणभर्त्सनादिशब्दंकुरुथ यद्वा योनूनंस्तौति तंप्रकर्षेणस्तुतेत्यर्थः ॥ १२ ॥

१२. ऋभुओ, जिस समय तुम जलधर में भूतों को मिलाकर चारों ओर जाते हो, उस समय संसार के पिता-माता कहाँ रहते हैं ? जो लोग तुम्हारा हाथ पकड़कर रोकते हैं, उन्हें नीचा दिखाओ। जो वचनद्वारा तुम्हें रोकता है, उसकी भर्त्सना करो।

सुषुप्वांसऋभवस्तदपृच्छतागोह्यकइदंनोअबूबुधत्।
श्वानंबस्तोबोधयितारमब्रवीत्संवत्सरइदमद्याव्यख्यत ॥ १३ ॥
सुसुप्वांसः। ऋभवः। तत्। अपृच्छत। अगोह्य। कः। इदम्। नः। अबूबुधत्। श्वानम्। बस्तः। बोधयितारम्। अब्रवीत्। संवत्सरे। इदम्। अद्य। वि। अख्यत ॥ १३ ॥

हेऋभवः रश्म्यात्मकायूयं सुषुप्वांसः आदित्यमण्डले स्वपन्तोवर्षणाय स्वपेर्लिटःक्वसुः तत् तमादित्यं तद्वाक्यमपृच्छथ प्रश्नंकुरुथ किंतदितिचेदुच्यते हेअगोह्य केनचिदगोपनीयादित्यस्वामिन् नोऽस्मदीयमिदंकर्मवर्षणरूपंकःअबूबुधत् बोधयति प्रेरयति साहाय्यंकरोति बुधेर्ण्यन्ताल्लुङिचङिरूपं बस्तः सर्वस्यवासयिता आदित्यः वसेरौणादिकस्तप्रत्ययः बवयोरभेदात् बत्वं बोधयितारंप्रेरयितारंश्वानमब्रवीत् अंतरिक्षेश्वसंतंवायुंप्रावादीत् असौयुष्मान्प्रेरयतीति अथवा वायुसाहाय्येनवर्षन्तोयूयंसंवत्सरेपूर्णेअद्येदानींइदंजगत् व्यख्यत विविधंप्रकाशितवन्तः पूर्वंसूर्याचन्द्रमसौयथानदृश्येते तथावर्षित्वेदानींवर्षकालेतीतेविश्वंजगद्व्यक्तंकुरुथेत्यर्थः ख्यातेर्लुङ्यस्यतिवक्तिख्यातीत्यङ् ॥ १३ ॥

१३. ऋभुओ, तुम सूर्य-मंडल में सोकर सूर्य से पूछते हो कि "हे सूर्य, किसने हमारे कर्म को जगाया।" सूर्य कहते हैं, "वायु ने तुम्हें जगाया।" वर्ष बीत चला, इस समय फिर तुम लोग संसार को प्रकाशित करो।

अथचतुर्दशी—

दिवायान्तिमरुतोभूम्याग्निरयंवातोअन्तरिक्षेणयाति ।
अद्भिर्यातिवरुणःसमुद्रैर्युष्माँइच्छन्तःशवसोनपातः ॥ १४ ॥६॥

दिवा । यान्ति । मरुतः । भूम्या । अग्निः । अयम् । वातः ।
अन्तरिक्षेण । याति । अत्ऽभिः । याति । वरुणः । समुद्रैः । युष्मान् ।
इच्छन्तः । शवसः । नपातः ॥ १४ ॥ ६ ॥

हेशवसोवृष्टिकार्यस्यबलस्य नपातोनपातयितारः ऋभवः युष्मानइच्छन्तःवृष्ट्यनुकूल-चिकीर्षया युष्मानेवेच्छन्तःसर्वेदेवाःआयांति कस्मादितितदुच्यते मरुतः वृष्ट्यनुकूलादेवाः दिवा द्युलोकादन्तरिक्षाद्वयान्तिआगच्छन्ति सावेकाचइतितृतीया विभक्तेरुदात्तत्वं भूम्याः भूमेःसकाशादग्निर्याति आगच्छति अयंवातः सर्वदासंचारीवायुः अन्तरिक्षेणयातिअन्तरिक्षादायाति तथावरुणः आवरकोजलाभिमानीदेवः समुद्रैः समुन्दनस्वभावैरद्भिः ताभ्यआयाति यद्वा पूर्वं वृष्टिसाहाय्यायागताः एतेदेवाः कृतकार्याःसंतः पुनर्युष्मान्कामयमानाः स्वस्वदेशंप्रतियान्तीत्यर्थः ॥ १४ ॥

१४. बल के नप्ता ऋभुओ, तुम्हारे दर्शन की इच्छा से मरुत् द्युलोक से आ रहे हैं; अग्नि पृथ्वी से आते हैं; वायु, आकाश से आते हैं; और वरुण समुद्र-जल के साथ आते हैं।

॥ इतिद्वितीयस्यतृतीयेषष्ठोवर्गः ॥ ६ ॥

मानोमित्रइतिद्वाविंशत्यृचंपंचमंसूक्तं दैर्घतमसं तृतीयाषष्ठ्यौजगत्यौ शिष्टास्त्रिष्टुभः अश्वस्यस्तूयमानत्वात्तेनोच्यतेसादेवतेतिन्यायेनाश्वोदेवता अत्रानुक्रमणिका—मानोद्व्यधिकाश्वस्तुतिस्तु तृतीयाषष्ठ्यौजगत्याविति। अश्वमेधस्यमध्यमेहन्यध्रिगुप्रैषे अध्रिगोशमीध्वमितिशिष्टाषड्विंशतिरस्यवंक्रयइतिअस्मात्पुरस्तात्द्वैतसूक्तमावपेत् त्रीणिसुत्यानिभवन्तीतिखण्डेसूत्रितम्—अध्रिगोशमीध्वमितिशिष्टाषड्विंशतिरस्यवंक्रयइतिवामानोमित्रइत्यावपेतेति ।

तत्रप्रथमा—

मानोमित्रोवरुणोअर्यमायुरिन्द्रऋभुक्षामरुतःपरिख्यन् ।
यद्वाजिनोदेवजातस्यसप्तेःप्रवक्ष्यामोविदथेवीर्याणि ॥ १ ॥

मा । नः । मित्रः । वरुणः । अर्यमा । आयुः । इन्द्रः । ऋभुक्षाः ।
मरुतः । परि । ख्यन् । यत् । वाजिनः । देवऽजातस्य । सप्तेः ।
प्रऽवक्ष्यामः । विदथे । वीर्याणि ॥ १ ॥

नोऽस्मानश्वंस्तोतुंप्रवृत्तान्मित्रादयोदेवाः मापरिख्यन् परिख्यानं माकुर्वन्तु परिख्यानं नामनिंदा महानुभावंदेवजातमश्वं तुच्छानराःस्तुवंतीतिमाकुर्वन्तु ख्यातेर्माङिलुङिअस्यतिवक्तीत्यादिनाच्लेरङ् अहरभिमानीदेवोमित्रः रात्र्यभिमानीवरुणः अर्यमा तयोरन्तरालाभिमानी आदित्यःआयुः सततगन्तावायुः वकारलोपोवा इन्द्रःप्रसिद्धः ऋभुक्षाः देवानांनिवासभूतःप्रजापतिः यद्वैतन्महन्नामेंद्रविशेषणं ऋभुक्षाउक्षाइतितन्नामसुपाठात् मरुतःइन्द्रभ्रातरः निन्दायाः प्रसक्तिंदर्शयति ययस्माद्वाजिनोवेजनवतोबहन्नवतोवा देवजातस्य बहुदेवतास्वरूपेणोत्पन्नस्य उषादीनामस्यशिरआद्यवयवत्वादितिभावः उषावाअश्वस्यमेध्यस्यशिरइत्यादिश्रुतेः । यद्वा देवेभ्योजातस्यगंधर्वकुलेउत्पन्नत्वात् । सप्तेःसर्पणशीलस्य अश्वनामैतत् एवंविधस्याश्वस्य महानुभावस्यवीर्याणिवीरकर्माणिसामर्थ्यानिविदथे वेदनसाधनेयज्ञेमवक्ष्यामः प्रकर्षेणब्रूमः अतोमापरिख्यन् प्रत्युतानुगृह्णन्त्वित्यर्थः ॥ १ ॥

१. चूंकि हम यज्ञ में देवजात और द्रुतगति अश्व के वीर कर्म का कीर्त्तन करते हैं, इसलिए मित्र, वरुण, अर्यमा, आयु, इन्द्र, ऋभुक्षा और वायु हमारी निन्दा न करें।

अथद्वितीया—

यन्निर्णिजारेक्णसाप्रावृतस्यरातिंगृभीतांमुखतोनयन्ति ।
सुप्राङजोमेम्यद्विश्वरूपइन्द्रापूष्णोःप्रियमप्येतिपाथः ॥ २ ॥

यत् । निःऽनिजा । रेक्णसा । प्रावृतस्य । रातिम् । गृभीताम् ।
मुखतः । नयन्ति । सुऽप्राङ् । अजः । मेम्यत् । विश्वऽरूपः ।
इन्द्रापूष्णोः । प्रियम् । अपि । एति । पाथः ॥ २ ॥

यत् यस्मात् निर्निजा निर्निगितिरूपनाम निर्णिक् वव्रिरिति रूपनामसुपाठात् रेक्णसा रेक्णइतिधननाम रेक्णः रिक्थमितितन्नामसूक्तत्वात् उभयत्रमत्वर्थोलुप्यते रूपवता हिरण्यवता आभरणेनप्रावृतस्य सर्वतोवेष्टितस्याश्वस्यमुखतः पुरस्ताद्गृभीतां गृहीतांरातिंदातव्यां दातव्यत्वेनगृहीतामजां नयन्तिऋत्विजः सतादृशोजः सुप्राङ् सुष्ठुप्रशस्यगमनः मेम्यत् हन्यमानः मीञ्हिंसायां अस्माद्यङ्लुगन्तात्कर्मणिव्यत्ययेनशतृ यद्वा तस्यशब्दानुकरणं मेमेशब्दंकुर्वन् विश्वरूपः बहुवर्णोपेतः कृष्णग्रीवः कृष्णललाटइत्येवमनेकवर्णइत्यर्थः एवंरूपोयः इन्द्रापूष्णोः

इन्द्रःप्रसिद्धः पूषापोषकोदेवोऽग्निः तयोःप्रियं आग्नेयःकृष्णग्रीवइत्युक्तत्वात् अग्नेःप्रियत्वं सर्वेपींद्रस्येतींद्रप्रियत्वं एवंरूपंपाथोन्नमप्येतिप्राप्नोतु ॥ २ ॥

२. सुन्दर स्वर्णाभरण से विभूषित अश्व के सामने ऋत्विक् लोग उत्सर्ग के लिए छाग पकड़कर ले जाते हैं। विविध वर्ण के छाग शब्द करते हुए सामने जाते हैं। वह इन्द्र और पूषा का प्रिय अन्न हो।

एषच्छागःपुरोअश्वेनवाजिनापूष्णोभागोनीयतेविश्वदेव्यः।
अभिप्रियंयत्पुरोळाशमर्वतात्वष्टेदेनंसौश्रवसायजिन्वति ॥ ३ ॥

एषः। छागः। पुरः। अश्वेन। वाजिना। पूष्णः। भागः। नीयते। विश्वऽदेव्यः। अभिऽप्रियम्। यत्। पुरोळाशम्। अर्वता। त्वष्टा। इत्। एनम्। सौश्रवसाय। जिन्वति ॥ ३ ॥

एषःछागः शृंगरहितोऽजः अश्वेन वाजिनाशीघ्रव्यापकेनाश्वेनसहपूष्णः पोषकस्याग्नेर्भागोभजनीयः विश्वदेव्यः सर्वदेवार्हः अग्नेःसर्वदेवात्मकत्वात् तदर्हत्वेनसर्वदेवप्रियत्वं एवंविधोऽजः पुरः पुरस्तान्नीयतेप्राप्यते यत् यस्मादेवंक्रियते तस्मात्प्रियंप्रीणयितारं पुरोडाशंपुरस्ताद्रातव्यमेनमजं त्वष्टासर्वस्योत्पादकोदेवः त्वष्टारूपाणिविकरोतीतिश्रुतेः। तूर्णव्यापकोऽग्निर्वाऽभेत्वष्टुर्विभ्यतुरित्युक्तत्वात् अहोरात्रेइतिवारणीइतिवेतियास्केनारणीविभ्यतुरित्युक्तत्वात् अरणिसंबन्धोग्नेरेवेतिगम्यते अर्वताअरणवताश्वेनसहसौश्रवसाय देवानांशोभनान्नायतन्निमित्तं अभिजिन्वति प्रीतिहेतुकंकरोति ॥ ३ ॥

३. सब देवों के लिए उपयुक्त छाग पूषा के ही अंश में पड़ता है। उसे शीघ्रगामी अश्व के साथ सामने लाया जाता है। अतएव त्वष्टा देवता के सुन्दर भोजन के लिए अश्व के साथ इस छाग से सुखाद्य पुरोडाश तैयार किया जाय।

यद्धविष्यमृतुशोदेवयानंत्रिर्मानुषाःपर्यश्वंनयन्ति।
अत्रापूष्णःप्रथमोभागएतियज्ञंदेवेभ्यःप्रतिवेदयन्नजः ॥ ४ ॥

यत्। हविष्यम्। ऋतुऽशः। देवऽयानम्। त्रिः। मानुषाः। परि। अश्वम्। नयन्ति। अत्र। पूष्णः। प्रथमः। भागः। एति। यज्ञम्। देवेभ्यः। प्रतिऽवेदयन्। अजः ॥ ४ ॥

---

१ तै० सं० १. ५. ९.। २ नि० ८. १५.।

हविषांहविर्योग्यंदेवयानंदेवानांप्रापणीयमश्वंयद् यदामानुषाः ऋत्विजः ऋतुशः ऋतावृतौ कालेकाले त्रिःपरिणयन्ति पर्यग्निकुर्वन्तीत्यर्थः अत्रास्मिन्समये ऋचितुनुघेतिदीर्घः पूष्णः पोषकस्याग्नेर्भागोऽजःप्रथमः एतिपुरोगामीसन् गच्छति किंकुर्वन् यज्ञंदेवेभ्यःप्रतिवेदयन् प्रख्यापयन् ॥ ४ ॥

४. जब ऋत्विक् लोग देवों के लिए प्राप्त करने योग्य अश्व को समय-समय पर तीन बार अग्नि के पास ले जाते हैं तब पूषा के प्रथम भाग का छाग देवों के यज्ञ की बात का प्रचार करके आगे जाता है।

होताध्वर्युरावयाअग्निमिन्धोग्रावग्राभउतशंस्तासुविप्रः ।
तेनयज्ञेनस्वरंकृतेनस्विष्टेनवक्षणाआपृणध्वम् ॥ ५ ॥ ७ ॥

होता । अध्वर्युः । आऽवयाः । अग्निम्ऽइन्धः । ग्रावऽग्राभः । उत । शंस्ता । सुऽविप्रः । तेन । यज्ञेन । सुऽअरंकृतेन । सुऽइष्टेन । वक्षणाः । आ । पृणध्वम् ॥ ५ ॥ ७ ॥

होता देवानामाह्वाता एतन्नामकऋत्विक् अध्वर्युरध्वरयुः अध्वरस्यनेता सोऽपिआवयाः आभिमुख्येनहविषांगमयिताअध्वर्योर्विशेषणमेतद् आङ्पूर्वाद्वेतेरसुन् पूर्वपदप्रकृतिस्वरत्वंच यद्वा आभिमुख्येनावयष्टाप्रतिप्रस्थातोच्यते अवेयजइतिण्विन् अवाप्योरुपसर्गयोरित्यल्लोपः अग्निमिंधोग्नीत् भ्राष्ट्राग्न्योरिंधेइतिमुम् ग्रावग्राभःग्राव्णःस्तुत्यागृह्णातीति ग्रावस्तुत् कर्मण्यण् उत अपिच शंस्ताप्रशास्ता सुविप्रइतिमेधाविनाम शोभनमेधोपेतोब्रह्मोच्यते ब्रह्मात्वोवदतिजातंविद्यामित्यत्र ब्रह्मैकोजातेजातेविद्यांवदतिब्रह्मासर्वविद्यःसर्वंवेदितुमर्हतीत्युक्तत्वात् ब्रह्मैवसुविप्रशब्देनाभिधेयः सचानुक्तऋत्विगुपलक्षकः एतेसर्वेयूयंतेनप्रसिद्धेनस्वरंकृतेनसुष्ठुअरणीयंकृतेनस्वलंकृतेनवा उच्चारसौष्ठवादिनासुष्ठुसंपादितेनस्विष्टेनसुष्ठुइष्टेनयज्ञेनवक्षणाः अभितोघृतकुल्यादीन्प्रवहणस्वभावाः प्रसिद्धानदीर्वा आपृणध्वं सर्वतःपूरयत यज्ञंसम्यक्निवर्त्यफलंसाधयतेत्यर्थः ॥ ५ ॥

५. होता (देवों को बुलानेवाले), अध्वर्यु (यज्ञ-नेता), आवया (हव्यदाता), अग्निसिद्ध (अग्नि-प्रज्वलन-कर्त्ता), ग्रावग्राभ (प्रस्तर-द्वारा सोमरस निकालनेवाले), शंस्ता (नियमानुसार कर्म का अनुष्ठान करनेवाले) और ब्रह्मा (सब यज्ञ-कार्यों के प्रधान सम्पादक) प्रसिद्ध, अलंकृत और सुन्दर यज्ञ-द्वारा नदियों को पूर्ण करें।

यूपव्रस्काउतयेयूपवाहाश्चषालंयेअश्वयूपायतक्षति ।
येचार्वतेपचनंसंभरन्त्युतोतेषामभिगूर्तिर्नइन्वतु ॥ ६ ॥

१ ऋ० सं० ८. २. २४ । २ नि० १. ७ ।

यूप॒ऽव्र॒स्काः । उ॒त । ये । यू॒प॒ऽवा॒हाः । च॒षाल॑म् । ये ।
अ॒श्व॒ऽयू॒पाय॑ । तक्ष॑ति । ये । च॒ । अर्व॑ते । पच॑नम् । स॒म्ऽभर॑न्ति ।
उ॒तो इति॑ । तेषा॑म् । अ॒भिऽगू॑र्तिः । न॒ः । इ॒न्व॒तु॒ ॥ ६ ॥

यूपव्रस्काः यूपार्हवृक्षस्यव्रश्चनकर्तारः छेत्तारः उत येच यूपवाहाः छिन्नस्यवोढारः ये-च चषालं यूपस्योपरिस्थाप्यंयूपाग्रभागंचषालमाहुः अश्वयूपाय अश्वबंधनयूपायतक्षतीति वचनव्यत्ययः तक्षणेनतनूकुर्वंति येचार्वते अरणवतेऽश्वायपचनं पाकसाधनं काष्ठभांडादिकं संभरंति साधुसंपादयंति उतो अपिच नोऽस्मत्संबंधिनां तेषामृत्विजामभिगूर्तिः संकल्पः सर्वथाकरणीयमितिबुद्धिरिन्वतुव्याप्नोतु इन्वतिर्व्याप्तिवचनः इन्वति ननक्ष इतितद्वचनेषुपाठात् यद्वा तेषामभिगूर्तिर्नोऽस्मानिन्वतु यागं साधुपारं प्रापय्यफलेनयोजयत्वित्यर्थः ॥ ६ ॥

६. जो यूप के योग्य वृक्ष काटते हैं, जो यूप वृक्ष ढोते हैं, जो अश्व को बाँधने के यूप के लिए काष्ठ-मण्डप आदि तैयार करते हैं, जो अश्व के लिए पाक-पात्र का संग्रह करते हैं, हमारा संकल्प भी उन्हीं का हो।

उप॒प्रागा॑त्सु॒मन्मे॑ऽधायि॒मन्म॑दे॒वाना॒माशा॒उप॑वी॒तपृ॑ष्ठः ।
अन्वे॑नं॒विप्रा॒ऋष॑योमदन्तिदे॒वानां॒पुष्टे॑चकृमासु॒बन्धु॑म् ॥ ७ ॥

उप॑ । प्र । अ॒गा॒त् । सु॒ऽमत् । मे॒ । अ॒धा॒यि॒ । मन्म॑ । दे॒वाना॑म् ।
आशा॑ः । उप॑ । वी॒तऽपृ॑ष्ठः । अनु॑ । ए॒न॒म् । विप्रा॑ः । ऋष॑यः ।
म॒द॒न्ति॒ । दे॒वाना॑म् । पु॒ष्टे । च॒कृ॒म॒ । सु॒ऽबन्धु॑म् ॥ ७ ॥

मन्ममननीयंफलंसुमत् उपप्रागात् उपप्रैतु सुमत्स्वयमित्यर्थइतियास्कः । यद्वा स्वयमेव मादयितृतमे मयि अधायि धीयते फलभूतोऽश्वआगतःसचमयाधृतइत्यर्थः किमर्थंवीतपृष्ठः साधुपोषणेनप्राप्तपार्श्वभागः कांतपृष्ठोवा अत्यंतंदक्षइत्यर्थः तादृशोयं देवानामाशाः पूरयितुंउपगच्छतु यागार्थमागतमेनं सुबंधुं शोभनबंधनमश्वं देवानामाशास्यमानानां पुष्टे पोषणायचकृम कुर्मः तंच विप्रामेधाविनऋत्विजः ऋषयोतींद्रियद्रष्टारःअन्येवाविप्राऋषयश्चानुमदंति अनुमोदन्तां सम्यक्कृतमिति परितुष्यन्तु ॥ ७ ॥

७. हमारा मनोरथ स्वयं सिद्ध हो । मनोहर-पृष्ठ-विशिष्ट अश्व, देवों की आशा-पूर्ति के लिए, आवे । देवों की पुष्टि के लिए हम उसे अच्छी तरह बाँधेंगे। मेधावी ऋत्विक् लोग आनन्दित हों।

यद्वा॒जिनो॒दाम॒संदा॑न॒मर्व॑तो॒याशी॑र्ष॒ण्या॑रश॒नारज्जु॑रस्य ।
यद्वा॑घास्य॒प्रभृ॑त॒मास्ये॒३तृणं॒सर्वा॒ता॒ते॒अपि॑दे॒वेष्व॑स्तु ॥ ८ ॥

---

1 नि० ६.२२।

यत्। वाजिनः। दाम। सम्ऽदानम्। अर्वतः। या। शीर्षण्या।
रशना। रज्जुः। अस्य। यत्। वा। घ। अस्य। प्रऽभृतम्।
आस्ये। तृणम्। सर्वा। ता। ते। अपि। देवेषु। अस्तु॥ ८॥

वाजिनोवेगवतः अर्वतः अरणवतः गमनवतोश्वस्ययद्दामग्रीवाबद्धारज्जुः यच्चसंदानं सम्यगवच्छेदकं बंधकंपादबंधनंदामास्ति याचास्य शीर्षण्याशिरसि बद्धारशनामेखलाइव खलीनरज्जुरस्ति शिरःशब्दाद्भवेछन्दसीतियत् येचतद्धितेइतिशीर्षन्भावः तित्स्वरितः यद्वा घास्याश्वस्यास्ये मुखे प्रभृतं प्रहृतं प्रक्षिप्तं तृणमस्ति घशब्दोहार्थे सचप्रसिद्ध्यर्थः सर्वा सर्वाणि ता तानि सर्वाण्यपि हेअश्व ते तव संबंधीनि देवेष्वस्तुसंतु देवेषुमध्येभवंतु देवत्वंप्राप्नुवंतुवा वचनव्यत्ययः अत्रोपयुक्तानांसर्वेषां देवत्वंकिल अश्वस्यतत्प्राप्तिर्नाशासनीया॥ ८॥

८. जिस रस्सी से घोड़े की गर्दन बाँधी जाती है, जिससे उसके पैर बाँधे जाते हैं, जिस रस्सी से उसका सिर बाँधा जाता है, वे सब रस्सियाँ और अश्व के मुख में डाली जानेवाली घासें देवों के पास आवें।

यदश्वस्यक्रविषोमक्षिकाशयद्वास्वरौस्वधितौरिप्तमस्ति।
यद्धस्तयोःशमितुर्यन्नखेषुसर्वाताते अपिदेवेष्वस्तु॥ ९॥

यत्। अश्वस्य। क्रविषः। मक्षिका। आश। यत्। वा। स्वरौ।
स्वऽधितौ। रिप्तम्। अस्ति। यत्। हस्तयोः। शमितुः। यत्।
नखेषु। सर्वा। ता। ते। अपि। देवेषु। अस्तु॥ ९॥

अश्वस्य तदवयवभूतस्य क्रविषः आममांसस्य यत् यदंगं मक्षिका आशाभक्षयत् अशभोजने यद्वा कर्मणिषष्ठी अश्वस्ययन्मांसं भक्षयति वा अथवा स्वरौ पश्वंजनकाले यत् रिप्तंलिप्तमस्ति स्वरुणापशुमनक्तीतिश्रुतेः। अथवा स्वधितौछेदनकाले अवदानकाले यद्रिप्तमस्ति शमितुर्हस्तयोर्लिप्तमस्ति विशसनकालेयच्चनखेषु लिप्तं तासर्वा तानिसर्वाणि हेअश्व तेतवसंबंधीनिदेवेष्वस्तु देवेषुसंतोषार्थायभवन्तु॥ ९॥

९. अश्व का जो कच्चा ही मांस मक्खी खाती है, काटने या साफ़ करने के समय हथियार में जो लग जाता है और छेदक के हाथों तथा नखों में जो लग जाता है, वह सब देवों के पास जाय।

यदूवध्यमुदरस्यापवातियआमस्यक्रविषोगन्धोअस्ति।
सुकृतातच्छमितारःकृण्वन्तूतमेधंशृतपाकंपचन्तु॥१०॥८॥

यत्। ऊवध्यम्। उदरस्य। अपऽवाति। यः। आमस्य। क्रविषः।
गन्धः। अस्ति। सुऽकृता। तत्। शमितारः। कृण्वन्तु।
उत। मेधम्। शृतऽपाकम्। पचन्तु ॥ १० ॥ ८ ॥

उदरस्य संबंधियदूवध्यं ईषज्जीर्णंतृणं पुरीषमपवातिअपगच्छति यश्चामस्यापक्वस्यक्रविषोमांसस्यगंधोऽस्तिलेशोस्ति पाकस्यसमयेयत्किंचिदूवध्यं अपक्वस्यचलेशोऽस्तिआमगंधोस्ति तत्सर्वंशमितारोविशसनकर्तारः सुकृताकृण्वन्तु सुकृतंउक्तदोषरहितं कुर्वंतु उतअपिच मेधं मेध्यं यज्ञार्हं पश्ववयवं शृतपाकं देवयोग्यपाकोपेतंयथाभवतितथापचंतु पितृमनुष्यादियोग्यमतिपक्वमीषत्पक्वंचमाकुर्वन्त्वित्यर्थः ॥ १० ॥

१०. उदर का जो अजीर्ण अंश बाहर हो जाता है और अपक्व मांस का जो लेशमात्र रहता है, उसे छेदक निर्दोष करे और पवित्र मांस देवों के लिए उपयोगी करके पकावे।

यत्तेगात्रादग्निनापच्यमानादभिशूलंनिहतस्यावधावति।
मातद्भूम्यामाश्रिषन्मातृणेषुदेवेभ्यस्तदुशद्भ्योरातमस्तु ॥ ११ ॥

यत्। ते। गात्रात्। अग्निना। पच्यमानात्। अभि। शूलम्।
निऽहतस्य। अवऽधावति। मा। तत्। भूम्याम्। आ। श्रिषत्।
मा। तृणेषु। देवेभ्यः। तत्। उशत्ऽभ्यः। रातम्। अस्तु ॥ ११ ॥

हेअश्व तेतवाग्निनापच्यमानाद्गात्राद्यदूष्मरूपं रसोवायत्किंचिदवधावति तथानिहतस्य निःशेषेणहतस्य तव यदंगंरसरूपंशूलमभिलक्ष्यावधावति निर्गच्छति तत्तदंगंभूम्यामाश्रिषत् आश्लिष्टंमाभूत् श्लिषेःपुषादित्वादङ् पाकसमयेतथा मा तृणेषु विशसनसमये दर्भेषु मापगच्छतु तर्हितत्पतितं कुत्रगच्छत्वितिचेत् उच्यते—तत्तादृशं उशद्भ्यः कृत्स्नंहविःकामयमानेभ्योदेवेभ्योरातं दत्तमस्तु ॥ ११ ॥

११. अश्व, आग में पकाते समय तुम्हारे शरीर से जो रस निकलता और जो अंश शूल में आबद्ध रहता है, वह मिट्टी में गिरकर तिनकों में मिल न जाय। देवता लोग लालायित हुए हैं, उन्हें सारा हवि प्रदान किया जाय।

येवाजिनंपरिपश्यन्तिपक्वंयईमाहुःसुरभिर्निर्हरेति।
येचार्वतोमांसभिक्षामुपासतउतोतेषामभिगूर्तिर्नइन्वतु ॥ १२ ॥

ये । वाजिनम् । परिऽपश्यन्ति । पक्वम् । ये । ईम् । आहुः । सुरभिः ।
निः । हर । इति । ये । च । अर्वतः । मांसऽभिक्षाम् । उपऽआसते ।
उतो इति । तेषाम् । अभिऽगूर्तिः । नः । इन्वतु ॥ १२ ॥

येपक्वंवाजिनमश्वंअश्वावयवंपरिपश्यंति परितःपावनबुद्ध्येक्षंते यईं येचैनंसुरभिः शोभनगंधःअतोनिर्हर किंचिदप्यस्मभ्यंदेहीत्याहुः यद्वा निःशेषेणदेवेभ्योहरेत्याहुः यतः सुरभिः अतोदेवयोग्यमिति किंच येचार्वतोमांसभिक्षामुपासते येनराः अस्यार्वतोऽश्वस्य हुतशिष्टमांसयाचनांउपासते कांक्षन्ते उतोअपिच तेषामुक्तविधानामभिगूर्तिः अभितः उद्यमनंनोऽस्मानिन्वतु व्याप्नोतु यथास्माभिरश्वउपालब्धः एवंस्पृहयंति तथायज्ञोनिर्वाहयत्वित्यर्थः यद्वा मंत्रोदेवपरोव्याख्येयः येदेवाः वाजिनंपक्वंपरिपश्यंतिकदाहोष्यतीतिविलंबंदृष्ट्वा येच सुरभिः ईमेनंनिर्हर निःशेषेणास्मभ्यंदेहीत्याहुः येचार्वतः अश्वस्यमांसभिक्षामुपासतेतेषामभिगूर्तिर्नः इन्वतु तेषांउद्यमःसफलोभवत्वित्यर्थः ॥ १२ ॥

१२. जो लोग चारों ओर से अश्व का पकना देखते हैं, जो कहते हैं कि गन्ध मनोहर है, देवों को दो; तथा जो मांस-भिक्षा की अपेक्षा करते हैं, उनका संकल्प हमारा ही हो।

यन्नीक्षणंमांस्पचन्याउखायायापात्राणियूष्णआसेचनानि ।
ऊष्मण्यापिधानाचरूणामङ्काःसूनाःपरिभूषन्त्यश्वम् ॥ १३ ॥
यत् । निःऽईक्षणम् । मांस्पचन्याः । उखायाः । या । पात्राणि ।
यूष्णः । आऽसेचनानि । ऊष्मण्या । अपिऽधाना । चरूणाम् ।
अङ्काः । सूनाः । परि । भूषन्ति । अश्वम् ॥ १३ ॥

मांस्पचन्याः मांसपचन्याः पचतेरधिकरणेल्युट् मांसस्यपचियुड्घञोरित्यंतलोपः उखायाः स्थाल्यायत् नीक्षणंपाकपरीक्षासाधनं काष्ठं तथा या यानि पात्राणि यूष्णोरसस्यक्वथितस्य आसेचनानि आसेचनसाधनानि तथाऊष्मण्या ऊष्मनिवारणार्हाणिपात्राणि तथाचरूणांपात्राणां मांसपूर्णानां अपिधाना पिधानानितत्साधनानि तथा अंकाः हृदयाद्यवयवांकनसाधनाः वेतसशाखाः सूनाः अवदानसाधनाः स्वधित्यादयः एतमश्वंअश्वावयवं परिभूषंति परितोभूषयंति स्वस्वव्यापारेणसाधयन्तीत्यर्थः भूषअलंकारे भौवादिकः ॥१३॥

१३. मांस-पाचन की परीक्षा के लिए जो काष्ठभाजु लगाया जाता है, जिन पात्रों में रस रक्षित होता है, जिन आच्छादनों से गर्मी रहती है, जिस वेतस-शाखा से अश्व का अवयव पहले चिह्नित किया जाता है और जिस क्षुरिका से, चिह्नानुसार अवयव काटे जाते हैं, सो सब अश्व का मांस प्रस्तुत करते हैं।

अथचतुर्दशी—

निक्रमणंनिषदनंविवर्तनंयच्चपड्बीशमर्वतः।
यच्चपपौयच्चघासिंजघाससर्वातातेअपिदेवेष्वस्तु ॥ १४ ॥

निऽक्रमणम्। निऽसदनम्। विऽवर्तनम्। यत्। च। पड्बीशम्।
अर्वतः। यत्। च। पपौ। यत्। च। घासिम्। जघास। सर्वा।
ता। ते। अपि। देवेषु। अस्तु ॥ १४ ॥

यत् निक्रमणं नितरांक्रमतेयत्रतन्निक्रमणंस्थानं नितरांसीदत्यत्रेतिनिषदनं विवर्तनं विविधवर्तनं इतस्ततोलुंठनंयत्रतत् सर्वत्राधिकरणेल्युट् यच्चार्वतोऽश्वस्य पड्बीशंपादबंधनं यद्वा बंधनंपट् तद्वान्प्रदेशः अत्रसर्वत्रदेवार्थस्याश्वस्यरोमादीनामपिनिरर्थकत्वाभावायतत्स्थानमपि स्वीक्रियते यद्वा क्रियापरावगंतव्या आलंभसमयेनिग्रहेणयानिक्रमणादयश्चेष्टाःसंति ताइत्यर्थः यच्चपपौ यदुदकमपिबत् तच्चघासिंअदनीयंतृणादिकंजघासअभक्षयत् हेअश्व तेतवतातानिसर्वाणिनिक्रमणादीनि देवेष्वस्तुसंतु देवेषुव्याप्नोतु तान्यपिनिरर्थकानिमाभूवन्नित्यर्थः ॥ १४ ॥

१४. जहाँ अश्व गया था, जहाँ बैठा था, जहाँ लेटा था, जिससे उसके पैर बाँधे गये थे, जो उसने पिया था तथा जो घास उसने खाई थी, सो सब देवों के पास जाय।

अथपंचदशी—

मात्वाग्निर्ध्वनयीद्धूमगन्धिर्मोखाभ्राजन्त्यभिविक्तजघ्रिः।
इष्टंवीतमभिगूर्तंवषट्कृतंतंदेवासःप्रतिगृभ्णन्त्यश्वम् ॥ १५ ॥ ९ ॥

मा। त्वा। अग्निः। ध्वनयीत्। धूमऽगंन्धिः। मा। उखा। भ्राजन्ती।
अभि। विक्त। जघ्रिः। इष्टम्। वीतम्। अभिऽगूर्तम्। वषट्ऽकृतम्।
तम्। देवासः। प्रति। गृभ्णन्ति। अश्वम् ॥ १५ ॥ ९ ॥

हेअश्व त्वात्वां धूमगंधिः धूमेनव्याप्तोऽग्निः माध्वनयीत् माध्वनयतु धूमंदृष्ट्वाशब्दंमाकुर्वित्यर्थः अश्वस्यशब्देनप्रायश्चित्तविधानात् यद्वा हेपच्यमानाश्वावयव त्वात्वांधूमगंधिरग्निर्माध्वनयीत् ध्वनौसति भांडभंगःस्यात् नोनयतीत्यादिनाचङ्प्रतिषेधः ह्म्यंतक्षणेतिवृद्ध्यभावः किंचभ्राजंतीअत्यंताग्निसंयोगेनदीप्ताउखास्थाली मा अभिविक्त अभितोमाचीचलत् तापातिशयेनमानीनशदित्यर्थः ओविजीभयचलनयोः छांदसोविकरणस्यलुक् लुङिवाझलोझलीतिसलोपः स्था-

लीविशेष्यते जघ्रिःजिघ्रतीतापेन घ्राणगंधोपादाने आद्दगमहनइतिकिन्प्रत्ययः तंताद्दशमश्वं इष्टंहोतुमिषितं वीतंहोमायानीतं अभिगूर्तंआभिमुख्येनप्रदानायोद्यतं यद्वा इष्टंप्रयाजैराप्रीतंवीतं पर्यग्निकृतंअभिगूर्तं येयजामहेइत्यागूरित्योक्तम् वषट्कृतं वषट्कारेणदेवसंस्कृतं एवंभूतं तंदेवासोदेवाः प्रतिगृभ्णंति प्रतिगृह्णन्ति ॥ १५ ॥

१५. अश्वगण, धूमगन्ध अग्नि तुमसे शब्द न करा सकें, अतीव अग्नि-संयोग से प्रतप्त सुगन्धित माँड़ कम्पित न हो। यज्ञ के लिए अभिप्रेत और हवन के लिए लाया हुआ, सम्मुख में प्रदत्त और वषट्कार-द्वारा शोभित अश्व देवता ग्रहण करें।

यदश्वा॑यवास॑उपस्तृ॒णन्त्य॑धीवा॒सं॑याहिर॑ण्यान्यस्मै ।
सं॒दान॒मर्व॑न्तं॒पड्वी॑शंप्रि॒यादे॒वेष्वा॑या॑मयन्ति ॥ १६ ॥

यत् । अश्वा॑य । वासः॑ । उ॒प॒ऽस्तृ॒णन्ति॑ । अ॒धी॒वा॒सम् । या ।
हिर॑ण्यानि । अ॒स्मै॑ । स॒म्ऽदान॑म् । अर्व॑न्तम् । पड्वी॑शम् । प्रि॒या ।
दे॒वेषु॑ । आ । य॒म॒य॒न्ति॒ ॥ १६ ॥

अश्वायसंज्ञप्यमानाय अधीवासंउपर्याच्छादनयोग्यं यत् वासउपस्तृणन्ति सर्वतआच्छादयन्ति स्तृञ्आच्छादने क्रैयादिकः तथास्मैअश्वाय या यानिहिरण्यानि सौवर्णराजतकांस्यानिपात्राणिकल्पयन्ति तथाअर्वंतं षष्ठ्यर्थेद्वितीया अर्वतोश्वस्यसंदानं शिरोबंधनं पड्वीशंपादेषु प्रविष्टंपादबंधनं एतानिप्रिया देवानां प्रियतराणिचात्वालेबद्ध्वा स्थापितानि देवेष्वायामयन्ति प्रापयन्ति ॥ १६ ॥

१६. जिस आच्छादन योग्य वस्त्र से अश्व को आच्छादित किया जाता है, उसको जो सोने के गहने दिये जाते हैं, जिससे उसका सिर और पैर बाँधे जाते हैं, सो सब देवों के लिए प्रिय है। ऋत्विक् लोग देवों को यह सब प्रदान करते हैं।

यत्ते॑सा॒देमह॑सा॒शूकृ॑तस्य॒पार्ष्ण्या॑वा॒कश॑यावातु॒तोद॑ ।
स्रु॒चेव॒ताह॒विषो॑अध्व॒रेषु॒सर्वा॒ताते॒ब्रह्म॑णासूदयामि ॥ १७ ॥

यत् । ते॒ । सा॒दे । मह॑सा । शूकृ॑तस्य । पार्ष्ण्या॑ । वा॒ । कश॑या ।
वा॒ । तु॒तोद॑ । स्रु॒चाऽइ॑व । ता । ह॒विषः॑ । अ॒ध्व॒रेषु॑ । सर्वा॑ ।
ता । ते॒ । ब्रह्म॑णा । सू॒द॒या॒मि॒ ॥ १७ ॥

महसाबलेनशूकृतस्य शब्दानुकरणमेतत् शूत्कारंकुर्वतः तेतवसादेसदने गमने निमित्तभूते सति सदेर्भावेघञ् कर्षात्वतइत्यन्तोदात्तत्वं अर्थतोगमनं कुर्वन् शूत्कारंकुर्वतस्ते त्वां पार्ष्ण्यावा

कशयावातुतोद व्यथयति यद्यस्मात्तस्मात्तेतव ता तानि सर्वा सर्वाणि अध्वरेषुयागेषु ब्रह्मणामंत्रेणसूदयामि क्षरामि आहुतित्वेन कल्पयामीत्यर्थः तत्रदृष्टान्तः—अध्वरेषु यागेषु हविषः हविराज्यादिकं स्रुचेव स्रुचायथा सूदयंति तद्वत् ॥ १७ ॥

१७. अश्व, जोर से नासाध्वनि करते हुए गमन करने पर चाबुक के आघात अथवा एँड़ के आघात से जो व्यथा उत्पन्न हुई थी, सो सब व्यथा मैं उसी प्रकार मंत्र-द्वारा आहुति में देता हूँ, जैसे स्रुक्-द्वारा हव्य दिया जाता है।

चतु॑स्त्रिंशद्वा॒जिनो॑दे॒वब॑न्धो॒र्वङ्क्री॒रश्व॑स्य॒स्वधि॑तिः॒समे॑ति ।
अच्छि॑द्रा॒गात्रा॑व॒युना॑कृणोत॒परु॑ष्परुरनु॒घुष्या॒विश॑स्त ॥ १८ ॥

चतुः॑ऽत्रिंशत् । वा॒जिनः॑ । दे॒वऽब॑न्धोः । वङ्क्रीः॑ । अश्व॑स्य ।
स्वऽधि॑तिः । सम् । ए॒ति॒ । अच्छि॑द्रा । गात्रा॑ । व॒युना॑ । कृ॒णो॒त॒ ।
परुः॑ऽपरुः । अ॒नु॒ऽघुष्य॑ । वि । श॒स्त॒ ॥ १८ ॥

वाजिनोऽश्वस्यदेवबंधोः देवानांप्रियस्य चतुस्त्रिंशद्वंक्रीः एतत्संख्यान्युभयपार्श्वास्थीनि स्वधितिः छेदनसाधनोऽसिः समेति सम्यग्गच्छति छेदनायइतरेषांअजादीनांषड्विंशतिरेव षड्विंशतिरस्यवंक्रयइतिप्रैषात् हेविशसनकर्तः अस्याश्वस्यगात्राणिशरीरावयवान् अच्छिद्राणियथाभवन्तितथावयुना वयुनानि प्रज्ञानानि वयुनमितिप्रज्ञानाम वयुनंअभिख्येतितन्नामसूक्तत्वात् कृणोत कुरुत तप्तनप्तनथनाश्चेतितवादेशः हृदयजिह्वावक्षःप्रभृतीनिप्रज्ञायमध्येछिन्नानि माकुरुतेत्यर्थः तदर्थंपरुःपरुः प्रतिपर्वंप्रतिहृदयाद्यवयवं अनुघुष्यइदमवद्यमिति संशब्द्यैवविशस्त विशसनंकुरुत शसुहिंसायां छांदसःशपोलुक् गात्रंगात्रमस्यानूनंकृणुतादितिप्रैषात् ॥ १८ ॥

१८. देवों के बन्धु-स्वरूप अश्व की जो बग़ल की टेढ़ी चौंतीस हड्डियाँ हैं, उन्हें काटने के लिए खड्ग जाता है। हे अश्वच्छेदक, ऐसा करना, जिससे अंग विच्छिन्न न हो जायँ। शब्द करके और देख-देखकर एक-एक हिस्सा काटो।

एक॒स्त्वष्टु॒रश्व॑स्याविश॒स्ताद्वा य॒न्तारा॑भवत॒स्तथ॑ऋ॒तुः ।
या ते॒गात्रा॑णामृतु॒थाकृ॒णोमि॒ता॒ता॒पिण्डा॑नां॒प्रजु॑होम्य॒ग्नौ ॥ १९ ॥

एकः॑ । त्वष्टुः॑ । अश्व॑स्य । वि॒ऽश॒स्ता । द्वा । य॒न्तारा॑ । भ॒व॒तः॒ ।
तथा॑ । ऋ॒तुः । या । ते॒ । गात्रा॑णाम् । ऋ॒तु॒ऽथा । कृ॒णोमि॑ ।
ताऽता॑ । पिण्डा॑नाम् । प्र । जु॒हो॒मि॒ । अ॒ग्नौ ॥ १९ ॥

त्वष्टुरस्यदीप्तस्याश्वस्य विशस्ताविशसनस्यकर्ता एकएव सकः ऋतुः एतदुपलक्षितः कालात्मा तस्यैवसर्वेषामपिपर्यवसितृत्वात् यद्वा ऋतुः निःशंकंविशसनायगंताशमिता तथा द्वा द्वौ यंतारा नियमयितारौअहोरात्रेदेवौ द्यावापृथिव्यौवा ऋत्विक्षुभवतः तथाऋतुरित्यत्र ऋत्यकइतिप्रकृतिभावोह्रस्वत्वंच हेअश्व तेतवगात्राणांमध्येयायानि हृदयाद्यवयवजातानि ऋतुथा कालेकृणोमिछिनद्मिसंपादयामि पिण्डानांमध्ये ताता तानितानि प्रज्ञाना नुरोधेनाग्नौजुहोमि प्रकर्षेणहुतंकरोमि॥ १९ ॥

१९. ऋतु ही तेजःपुञ्ज अश्व का एकमात्र विकाशक हैं। उन्हें दो दिन-रांत धारण करते हैं। अश्व, तुम्हारे शरीर के जिन अवयवों को, यथासमय काटता हूँ, उनका पिण्ड बनाकर अग्नि को प्रदान करता हूँ।

**मात्वांतपत्प्रियआत्मापियन्तंमास्वधितिस्तन्व१आतिष्ठिपत्ते ।**
**मातेगृध्नुरविशस्तातिहायछिद्रागात्राण्यसिनामिथूकः ॥ २० ॥**

**मा । त्वा । तपत् । प्रियः । आत्मा । अपिऽयन्तम् । मा ।**
**स्वऽधितिः । तन्वः । आ । तिस्थिपत् । ते । मा । ते । गृध्नुः ।**
**अविऽशस्ता । अतिऽहाय । छिद्रा । गात्राणि । असिना ।**
**मिथु । करिति कः ॥ २० ॥**

हेअश्व त्वात्वां अपियंतं देवान्प्रति गच्छन्तं प्रियआत्माभोगायतनत्वात् तवप्रियतरोदेहोमातपत् तसंमाकार्षीत् वियोगजनितान्यथामाभूदित्यर्थः स्वधितिःशस्त्रं तेतव तन्वः तनूःअंगानि मातिष्ठिपत् त्वयिचिरमास्थितानिमाकार्षीत् स्थापयतेर्लुङि तिष्ठतेरिदितीत्वं तथा तेतवगात्राणि गृध्नुः केवलमांसग्रहणेप्सुः अविशस्ता विशसने अकुशलः शमिता अतिहाय न्यूनातिरेकभावेन तत्तदंगमतिक्रम्य मध्ये मिथु मिथ्याव्यर्थं असिनाछिद्रा छिद्राणि तिर्यक् छिन्नानिमाकःमाकार्षीत् करोतेर्लुङि मंत्रेघसेतिच्लेर्लुक् गुणः हल्ङ्याब्भ्यइतिवलोपः ॥ २० ॥

२०. अश्व, तुम जिस समय देवों के पास जाते हो, उस समय तुम्हारी प्रिय देह तुम्हें क्लेश न दे। तुम्हारे शरीर में खड्ग अधिक क्षत न करे। मांस-लोलुप और अनभिज्ञ छेदक अस्त्र-द्वारा विभिन्न अंगों को छोड़कर तुम्हारा गात्र वृथा न काटे।

**नवाउएतन्म्रियसेनरिष्यसिदेवाँइदेषिपथिभिःसुगेभिः ।**
**हरीतेयुञ्जापृषतीअभूतामुपास्थाद्वाजीधुरिरासभस्य ॥ २१ ॥**

न । वै । ऊम् इति॑ । ए॒तत् । म्रि॒यसे॑ । न । रि॒ष्य॒सि॒ । दे॒वान् । इत् । एषि॑ । प॒थिऽभिः॑ । सु॒ऽगेभिः॑ । हरी॒ इति॑ । ते॒ । यु॒ञ्जा । पृष॑ती॒ इति॑ । अ॒भू॒ता॒म् । उप॑ । अ॒स्था॒त् । वा॒जी । धु॒रि । रास॑भस्य ॥ २१ ॥

नवाउ नैवखलु एतन्म्रियसे वाशब्दएवकारार्थः उइत्यवधारणे नैवेदानीं इतराश्ववन्मृतोभवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात् अतएवनरिष्यसि नहिंस्यसे व्यर्थहिंसायाअभावात् ननुप्रत्यक्षतोमृतिरवयवनाशश्चदृश्यते कथमेवमुच्यतइति उच्यते सुगेभिः शोभनगमनसाधनैः पथिभिः मार्गैः देवयानलक्षणैः देवानिदेषि देवानेवप्राप्नोषि अतोयुक्तैषोक्तिः कैःसाधनैरितितत्राह—तेत्वांवोढुं हरीएतन्नामानाविंद्रस्याश्वौ तेतवयुंजा रथेयुक्तावभूतां भविष्यतः आशंसारूपत्वात् भूतार्थनिर्देशः हरीइंद्रस्येतिनिरुक्तं । तथापृषती पृषत्योमरुतांवाहनभूतौ युंजाअभूतां युक्तौभविष्यतः पृषत्योमरुतामितिचनिरुक्तं । युजेर्ऋत्विगित्यादिनाक्विन् युजेरसमासेइतिनुम् सुपांसुलुगित्याकारः तथारासभस्यअश्विवाहनस्य एतन्नामकस्याश्वस्य धुरिस्थानेवर्तमानः कश्चिद्वाजीउपास्थात् उपस्थास्यति वहतीत्यर्थः यद्वा रासभस्यभानोर्धुरिवर्त्मनियुक्तोवाजी अश्वःउपस्थास्यति देवत्वंगच्छतस्तवगमनाय इन्द्रादयः स्वस्ववाहनानि प्रेषयन्तीत्यर्थः यद्वा तत्तद्देवभावमापन्नं त्वांतानितानिवाहनानिवहंति ॥ २१ ॥

२१. अश्व, तुम न तो मरते हो और न संसार तुम्हारी हिंसा करता है। तुम उत्तम मार्ग से देवों के पास जाते हो। इन्द्र के हरि नाम के दोनों घोड़े और मरुतों के पृषती नाम के दोनों वाहन तुम्हारे रथ में जोते जायँगे। अश्विनीकुमारों के वाहन रासभ के बदले, तुम्हारे रथ में, कोई शीघ्रगामी अश्व जोता जायगा।

उपाकरणकाले अवघ्राणावर्तेने यद्यश्वोनकुर्यात् तदैषानैमित्तिकीयजमानवाचनार्थाभवति तथाचसूत्रितम्—सुगव्यंनोवाजीस्वश्व्यमितियजमानंवाचयेदिति ।

सैषासूक्तेद्वाविंशी—

सु॒ग॒व्यंनो॑वा॒जीस्व॒श्व्यंपुं॒सःपु॒त्राँउ॒तवि॑श्वा॒पुषं॑र॒यिम् ।
अ॒ना॒गा॒स्त्वंनो॒अदि॑तिःकृणोतुक्ष॒त्रंनो॒अश्वो॑वनतांह॒विष्मा॑न् ॥ २२ ॥ १० ॥

सु॒ऽग॒व्यम् । नः॒ । वा॒जी । सु॒ऽअ॒श्व्यम् । पुं॒सः । पु॒त्रान् । उ॒त । वि॒श्व॒ऽपुष॑म् । र॒यिम् । अ॒ना॒गाः॒ऽत्वम् । नः॒ । अदि॑तिः । कृ॒णो॒तु॒ । क्ष॒त्रम् । नः॒ । अश्वः॑ । व॒न॒ता॒म् । ह॒विष्मा॑न् ॥ २२ ॥ १० ॥

वाजीअश्वआलभ्यमानोऽस्माकं सुगव्यंशोभनेनगोसमूहेनयुक्तंविश्वापुषंरयिं विश्वस्य पोषकंधनंकृणोतुकरोतु खलगोरथादितिसमूहार्थेयत् छान्दसमुत्तरपदाद्युदात्तत्वं यद्वा सामूहिकस्याणःप्रसंगेसर्वत्रगोरजादिप्रत्ययप्रसंगेइतियत् तदंतस्याद्युदात्तंद्व्यच्छन्दसीत्युत्तरपदाद्युदात्तत्वं तथास्वश्व्यं शोभनाश्वसमूहयुक्तं तथा पुंसः पुत्रान् पुत्रशब्दःस्त्रीपुमपत्यसाधारणः अतः पुमपत्यानीत्यर्थः यद्वा पुंसोबंध्वादीन् पुत्रान्पुरुरक्षकानात्मजान् स्त्र्यपत्यानिपुमपत्यानिचेत्यर्थः उत अपिच विश्वापुषंरयिंविश्वपोषणसमर्थंधनं किंचनोऽस्मानदितिः अदीनोश्वः अनागास्त्वं कृणोतु सर्वतोनिष्पापत्वंकरोतु उक्तानांफलानांन्यूनातिरेकजनितपापक्षयाभावे असंभवादपापत्वंप्रार्थ्यते किंच हविष्मान्हविर्भूतावयवोपेतोऽश्वोनोऽस्माकंक्षत्रंबलंक्षात्रंतेजोवनतां संभजतांकुरुताम्॥२२॥

२२. यह अश्व, हमें गौ और अश्व से युक्त तथा संसार-रक्षक धन प्रदान करे; हमें पुत्र प्रदान करे। तेजस्वी अश्व, हमें पाप से बचाओ। हविर्भूत अश्व, हमें शारीरिक बल प्रदान करो।

॥ इतिद्वितीयस्यतृतीयेदशमोवर्गः ॥ १० ॥

यदक्रंदइतित्रयोदशर्चंसप्तमंसूक्तंदैर्घतमसंत्रैष्टुभं अश्वस्यस्तूयमानत्वात्तद्देवत्यं यदक्रंदः सप्तोनेत्यनुक्रमणिका । आश्वमेधिकेमध्यमेहनिउपाकरणायावस्थितमश्वमाद्याभिरेकादशभिः स्तौति तथाच त्रीणिसुत्यानीतिखण्डेसूत्रितम्—तमवस्थितमुपाकरणाययदक्रंदइत्येकादशभिः स्तौत्यप्रणुवन्निति ।

तत्रप्रथमा—

यदक्रन्दःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् ।
श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्वन् ॥ १ ॥

यत् । अक्रन्दः । प्रथमम् । जायमानः । उत्ऽयन् । समुद्रात् । उत । वा । पुरीषात् । श्येनस्य । पक्षा । हरिणस्य । बाहू इति । उपऽस्तुत्यम् । महि । जातम् । ते । अर्वन् ॥ १ ॥

हेअर्वन् अरणकुशलाश्व तेतवमहिमहत् जातंजन्मजननं उपस्तुत्यंउपेत्यसर्वैःस्तोतव्यं स्तौतेरेतिस्तुशास्वितिक्यप् ततस्तुक् कथंस्तुत्यत्वमित्युच्यते यद्यस्मात्समुद्रात् अंतरिक्षनामैतत् उदकसमुंदनापादानाद्यक्षगंधर्वादिसंमोदनाधिकरणाद्वांतरिक्षात् प्रथमंपूर्वंजायमानः उत्पन्नः यद्वा समुद्रआदित्यः समुंदनाद्वृष्ट्यातस्माद्वाजायमानः सूरादश्वंवसवोनिरतष्टेतिवक्ष्यमाणत्वात् उतवा अथवापुरीषात् सर्वकामानांपूरकात् उदकात्प्रथममुद्यन् उद्गच्छन्सतादृशस्त्वं यद्यस्मात्अक्रंदः महाशब्दमकरोः यजमानमनुग्रहीतुं किंच ते पक्षा पतनसाधनौ पक्षौ श्येनस्यपक्षाविव

तौयथाशीघ्रपतनसाधनौ तादृशावित्यर्थः तवबाहू हरिणस्यबाहूइव तौयथावेगवंतौतादृशावित्यर्थः यस्मादेवंतस्मात्तेजन्मस्तुत्यमित्यर्थः ॥ १ ॥

१. अश्व, तुम्हारा महान् जन्म सबकी स्तुति के योग्य है। अन्तरिक्ष या जल से प्रथम उत्पन्न होकर, यजमान के अनुग्रह के लिए, महान् शब्द करते हो। श्येन पक्षी के पक्ष की तरह तुम्हें पक्ष हैं तथा हरिण के पद की तरह तुम्हें पैर हैं।

यमेनंदत्तंत्रितएंनमायुनगिन्द्रंएणंप्रथमोअध्यंतिष्ठत् ॥
गन्धर्वोअंस्यरशनामंगृभ्णात्सूरादश्वंवसवोनिरंतष्ट ॥ २ ॥

यमेन । दत्तम् । त्रितः । एनम् । अयुनक् । इन्द्रः । एनम् ।
प्रथमः । अधि । अतिष्ठत् । गन्धर्वः । अस्य । रशनाम् ।
अगृभ्णात् । सूरात् । अश्वम् । वसवः । निः । अतष्ट ॥ २ ॥

यमेननियामकेनाग्निनादत्तमेनमश्वं त्रितःपृथिव्यादिषुत्रिषुस्थानेषुवर्तमानस्तीर्णतमोवावायुः अयुनक् रथेयोजितवान् किंचैनमश्वं इन्द्रः प्रथमः प्रतमः प्रकृष्टतमः प्रथमइतिमुख्यनाम अध्यतिष्ठत् अधिष्ठितवान् अस्यगंधर्वः सोमः सोमेनसमयाविपृक्तइतिवक्ष्यमाणत्वात् सचास्याश्वस्यरशनांनियमनरज्जुमगृभ्णात् अग्रहीत् ईदृशोश्वः कुतःसमुत्पन्नइतिचेत् उच्यते—हेवसवः रश्मयोयूयंसूरादादित्यादश्वं एवंमहानुभावं निरतष्ट निःशेषेणसाधुसंपादितवंतः यद्वा वसुशब्देनोक्ताएवयमादयः पराम्रश्यन्ते हेवसवः स्वस्वव्यापारेणसर्वस्याच्छादयितारोयूयं सूरादादित्यादश्वमेनंनिरतष्ट अतक्षत निरित्येषसमित्येतस्यस्थाने तक्षतिःकरोतिकर्मा सचक्रियासामान्यवचनः अत्रौचित्याद्धारणेवर्तते सम्यग्धारितवंतइत्यर्थः तक्षेर्लङिछान्दसःशपोलुक् स्कोःसंयोगाद्योरितिकलोपः ॥ २ ॥

२. यम या अग्नि ने अश्व दिया था, त्रित या वायु ने उसे रथ में जोड़ा। रथ पर पहले इन्द्र चढ़े और गन्धर्वों या सोमों ने उसकी लगाम को धारण किया। वसुओं ने सूर्य से अश्व को बनाया।

असियमोअस्यादित्योअर्वन्नसित्रितोगुह्येनव्रतेनं ।
असिसोमेनसमयाविपृक्तआहुस्तेत्रीणिदिविबन्धनानि ॥ ३ ॥

असि । यमः । असि । आदित्यः । अर्वन् । असि । त्रितः ।
गुह्येन । व्रतेन । असि । सोमेन । समया । विऽपृक्तः । आहुः ।
ते । त्रीणि । दिवि । बन्धनानि ॥ ३ ॥

हेअर्वन् त्वंयमोसि नियमिताग्निरसि तेनदत्तत्वात्तच्छब्दव्यपदेशः तथा आदित्योसि सूरान्निरतष्टेत्युक्तत्वात् तथागुह्येन व्रतेन गोपनीयेनदुर्दिनरूपेणवा कर्मणा सर्वत्रव्याप्तिरूपेणेत्यर्थः तेनत्रितः त्रिषुस्थानेषु तायमानोवायुरसि त्रितएनमायुनगित्युक्तत्वात् तद्रूपत्वं अथवागुह्येनव्रतेन गोपनीयेनकर्मणा योगादिसाधनरूपेण त्रितः एतन्नामकऋषिरसि किंच हेअश्व त्वं सोमेनसमयासहविपृक्तः वीत्येषसमित्येतस्मिन्नर्थे संपृक्तोसि तेनगृहीतत्वात् हेअश्वैवंरूप तेतव दिवि द्युलोके आदित्येवावर्तमानस्य त्रीणिबंधनानि उत्पत्तिकारणान्याहुःपुराविदः वसवआदित्योद्युस्थानंचेतित्रीणि ॥ ३ ॥

३. अश्व, तुम यम, आदित्य और गोपनीय व्रतधारी त्रित हो। तुम सोम के साथ मिलित हो। पुरोहित लोग कहते हैं कि द्युलोक में तुम्हारे तीन बन्धन-स्थान हैं।

त्रीणितआहुर्दिविबन्धनानित्रीण्यप्सुत्रीण्यन्तःसमुद्रे ।
उतेवमेवरुणश्छन्त्स्यर्वन्यत्रातआहुःपरमंजनित्रम् ॥ ४ ॥
त्रीणि । ते । आहुः । दिवि । बन्धनानि । त्रीणि । अप्ऽसु ।
त्रीणि । अन्तरिति । समुद्रे । उतऽइव । मे । वरुणः । छन्त्सि ।
अर्वन् । यत्र । ते । आहुः । परमम् । जनित्रम् ॥ ४ ॥

पूर्वंदिवित्रीणिबंधनानीत्युक्तं इदानीं स्थानत्रयेष्वपित्रीणिबंधनानीत्याह—हेअर्वन् तेतव दिवि बंधनानित्रीणिआहुः तानिपूर्वमुक्तानि अप्सुअबुपजीवितत्वाद्भूलोकोप्यप्शब्देनाभिधीयते पृथिव्यांत्रीणिबंधनान्याहुः अन्नंस्थानंबीजमितित्रीणि तथा समुद्रेअन्तः समुद्रमध्ये समुद्रवणादपामपादानातसमुद्रमंतरिक्षं तस्मिन्त्रीणि वृष्ट्युत्पत्तिनिमित्तानि मेघोविद्युत्स्तनितमिति उतेव इवशब्दश्चार्थे अपिच हेअर्वन् अश्व वरुणः पापस्यवारकः फलस्यावर्जयितावा त्वंमेमह्यं छन्त्सि कथयसि किंकथयसीतिचेदुच्यते तेतव परमंजनित्रं निरतिशयं जन्म जनेरौणादिकइत्रप्रत्ययः यत्रयेषुत्रिषूक्तेषुस्थानेष्वाहुः कथयन्ति यद्वा यत्रयस्मिन्नादित्येपरमंजनित्रमाहुः सूराद्श्वंवसवोनिरतष्टेत्युक्तत्वात् तादृशंप्रशस्यं जन्म यज्ञसाधनभावेनकथयसीत्यर्थः ॥ ४ ॥

४. अश्व, द्युलोक में तुम्हारे तीन बन्धन (वसुगण, सूर्य और द्युस्थान) हैं। जल या पृथिवी में तुम्हारे तीन बन्धन (अन्न, स्थान और बीज) हैं। अन्तरिक्ष में तुम्हारे तीन बन्धन (मेघ, विद्युत् और स्तनित) हैं। तुम्हीं वरुण हो। पुरातत्त्वविदों ने जिन सब स्थानों में तुम्हारे परम जन्म का निर्देश किया है, वह तुम हमें बताते हो।

इमातेवाजिन्नवमार्जनानीमाशफानांसनितुर्निधाना ।
अत्रातेभद्रारशनाअपश्यमृतस्ययाअभिरक्षन्तिगोपाः ॥५॥१९॥

इमा । ते । वाजिन् । अवऽमार्जनानि । इमा । शफानाम् ।
सनितुः । निऽधाना । अत्र । ते । भद्राः । रशनाः । अपश्यम् ।
ऋतस्य । याः । अभिऽरक्षन्ति । गोपाः ॥ ५ ॥ ११ ॥

हेवाजिन्नश्व तेसंबंधीन्यवमार्जनान्यंगसंशोधकानि स्थानानीमाइमानिउक्तानिद्युलोकादीनि किंच सनिर्यातु यागसंभक्तुस्तवेमा इमानिशफानांनिधाना निधानानि स्थानानि संचारप्रदेशाइत्यर्थः किंचात्रैवतेतवभद्राः भंदनीयाः कल्याणीः रशनाग्रीवादिषुसंयुक्ताःरज्जूरत्रापश्यं एषूक्तेषुस्थानेष्वपश्यं रशनाविशेष्यन्ते यागोपाः गोपयित्र्योरशनाः ऋतस्यसत्यभूतस्य यज्ञसाधनस्यवाश्वस्य कर्मणिषष्ठी ऋतमभिरक्षंति अभितःपालयन्ति ताअपश्यं दृष्टवानस्मि यद्वा इमातेतवावमार्जनानि अङ्गप्रक्षालनसाधनान्युदकानि इमानि सनितुस्तव शफानांनिधानानि देवयजनभूमयः संचारप्रदेशावा अत्रास्मिन्देवयजनस्थाने यारशनाःगोपास्तवपालयितारोराजपुरुषाः ऋत्विजोवाऋतस्यसंबंधिनः अभिरक्षंति ताअपश्यम् ॥ ५ ॥

५. अश्व, मैंने देखा है ये सब स्थान तुम्हारे अंग-शोधक हैं। जिस समय तुम यज्ञांश का भोजन करते हो, उस समय तुम्हारा पद-चिह्न यहाँ पड़ता है। तुम्हारी जो फलप्रद वल्गा (लगाम) सत्यभूत यज्ञ की रक्षा करती है, उसे भी यहाँ देखा है।

॥ इतिद्वितीयस्यतृतीयेएकादशोवर्गः ॥ ११ ॥

अथषष्ठी—

आत्मानंतेमनसारादजानामवोदिवापतयन्तंपतङ्गम् ।
शिरोअपश्यंपथिभिःसुगेभिररेणुभिर्जेहमानंपतत्रि ॥ ६ ॥

आत्मानम् । ते । मनसा । आरात् । अजानाम् । अवः । दिवा ।
पतयन्तम् । पतङ्गम् । शिरः । अपश्यम् । पथिऽभिः । सुऽगेभिः ।
अरेणुऽभिः । जेहमानम् । पतत्रि ॥ ६ ॥

हेअश्व तेतवआत्मानंशरीरं मनसाअस्मदीयेनप्रकृष्टमननवताचेतसा आरात् अतिदूरे स्थितंअजानांजानामि अतिव्याप्तंभावयामीत्यर्थः कथं अवः अवस्तावसामर्थ्याद्भूमेःभूमिमारभ्य दिवा अंतरिक्षेणमार्गेणपतंगमादित्यंपतयंतं गच्छन्तंव्याप्नुवन्तं यद्वा यतोदिवा अंतरिक्षेणमार्गेणदिविवापतयंतंगच्छन्तं पतंगमादित्यंअवः व्याप्नोषि अतोव्याप्तंजानामि किंच शिरोपश्यं तवशिरएवपश्यामि कथंसुगेभिः शोभनगमनसाधनैः अरेणुभिःअपापैःपथिभिर्मार्गैः आ-

दित्यमण्डलादप्युपरिभूतैः सत्यलोकमार्गैरित्यर्थः तत्रप्रतिबंधाभावान्मार्गाणामुक्तरूपत्वं तथाविधैस्तैर्जेहमानं उपर्युपरिव्यामुवद् पतत्रिपतनवद् शिरोअपश्यंभावयामि एवंलोकत्रयव्याप्तं भावयामीत्यर्थः यद्वा तेआत्मानमेवंभावयामि मनसाधिया द्योतनात्मकेनांतरिक्षमार्गेण दिवः सकाशाद्वा अवः अवस्तात् अवाङ्मुखंपतयन्तं यागदेशंप्रतिव्यामुवद् अतएवपतंगंपतनशीलंअधः पतदादित्यसदृशंवा एवंतवशिरोभावयामीत्यर्थः शिरश्चैवमपश्यं उक्तरूपैर्देवयजनमार्गैर्जेहमानंयज्ञदेशंव्यामुवद् पतत्रिशीघ्रगामिशिरः पश्यामि यद्यपिआत्मशब्देनसशिरस्कंशरीरमुक्तं तथापिदेहात्पूर्वंशिरसोदृश्यमानत्वात्पृथगभिधीयते ॥ ६ ॥

६. अश्व, दूर से ही मन के द्वारा मैंने तुम्हारे शरीर को पहचाना है। तुम नीचे से, अन्तरिक्ष-मार्ग में सूर्य में जाते हो। मैंने देखा है, तुम्हारा सिर धूलि-शून्य, सुखकर, मार्ग से शीघ्र गति से क्रमशः ऊपर उठता है।

अत्रा॑ते॒रू॒पमु॑त्त॒मम॑पश्यं॒जिगी॑षमाणमि॒षआप॒दे॒गोः ।
य॒दाते॒मर्तो॒अनु॒भोग॒मान॒ळादिद्ग्रसि॑ष्ठ॒ओष॑धीरजीगः ॥७॥

अत्र॑ । ते॒ । रू॒पम् । उ॒त्ऽत॒मम् । अप॑श्यम् । जिगी॑षमाणम् । इ॒षः । आ । प॒दे । गोः । य॒दा । ते॒ । मर्तः॑ । अनु॑ । भोग॑म् । आन॑ट् । आत् । इत् । ग्रसि॑ष्ठः । ओष॑धीः । अजी॒ग॒रिति॑ ॥ ७ ॥

एवंगमनानंतरंहेअश्व तेतवोत्तमं उक्तरूपेणोत्कृष्टतमंरूपं अत्रास्मिन्यागदेशे अपश्यंपश्यामि कीदृशंगोःभूम्याःपदेस्थानेदेवस्थाने देवयजनप्रदेशेआजिधावनस्थानेवा इषः कर्मणिषष्ठी इषंइष्यमाणमन्नं अन्नानिवा आसर्वतोजिगीषमाणंगंतुमिच्छन्तं हेअश्व तेतवयदामर्तोमनुष्योभोगंभोक्तव्यमन्नंअन्वानट् नशतिर्गतिकर्मा अनुक्रमेणसमीपंगमयति आदित् अनंतरंतदानीमेव तदनुग्रहात् विलंबमकृत्वाग्रसिष्ठः महातृणएव ग्रसितृतमोभक्षयितृतमःसन् ओषधीरन्नान्यजीगः गिरसिभक्षयसि महानुभावोपित्वंलौकिकाश्ववत्तुच्छेनपुरुषेणदीयमानंस्वल्पंभक्षंअनुग्रहात्स्वीकरोषीत्यर्थः ॥ ७ ॥

७. मैं देखता हूँ, तुम्हारा उत्कृष्ट रूप पृथिवी पर चारों ओर अन्न के लिए आता है। अश्व, जिस समय मनुष्य भोग लेकर तुम्हारे पास जाता है, उस समय तुम ग्रास-योग्य तृण आदि का भक्षण करते हो।

अनु॑त्वा॒रथो॒अनु॒मर्यो॑अर्व॒न्ननु॒गावोनु॒भगः॑क॒नीना॑म् ।
अनु॒व्राता॑स॒स्तव॑स॒ख्यमी॑यु॒रनु॑दे॒वाम॑मिरे॒वी॒र्यं॑ते ॥ ८

अनु । त्वा । रथः । अनु । मर्यः । अर्वन् । अनु । गावः । अनु ।
भगः । कनीनाम् । अनु । व्रातासः । तव । सख्यम् । ईयुः । अनु ।
देवाः । ममिरे । वीर्यम् । ते ॥ ८ ॥

इदानींकृत्स्नस्यलोकस्यापिमुख्यइतिप्रतिपादयति हेअर्वन् गमनशीलाश्व त्वात्वामनु अनुसृत्य रथोगच्छति ततःपुरतोश्वस्यगमनात् तथामर्योमर्त्यः त्वात्वामनुगच्छति जात्येकवचनं अनुगावः गावोऽपित्वामनुगच्छन्ति तथाकनीनां कन्यकानां स्त्रीणांभगोभाग्यं सौंदर्यं त्वद्गमनु तथा व्रातासोव्राताः संघात्मकाः अन्येअश्वसमूहाः वस्वादिदेवगणावात्वामनु अनुसृत्यतवसख्यमीयुःसखिभावंगच्छंति देवाऋत्विजः द्योतमानादेवावात्वामनुसृत्य तेवीर्यं वीरकर्म ममिरे स्तुत्यामांति अतःसर्वोऽपित्वामनुसरः त्वंतुसर्वस्यश्रेष्ठइत्यर्थः ॥ ८ ॥

८. अश्व, तुम्हारे पीछे-पीछे अश्व जाता है, मनुष्य तुम्हारे पीछे जाता है, स्त्रियों का सौभाग्य तुम्हारे पीछे जाता है। दूसरे अश्वों ने तुम्हारा अनुगमन करके मैत्री प्राप्त की है। देव लोग तुम्हारे वीर-कर्म की प्रशंसा करते हैं।

हिरण्यशृङ्गोयोअस्यपादामनोजवाअवरइन्द्रआसीत् ।
देवाइदस्यहविरद्यमायन्योअर्वन्तंप्रथमोअध्यतिष्ठत् ॥ ९ ॥

हिरण्यऽशृङ्गः । अयः । अस्य । पादाः । मनःऽजवाः ।
अवरः । इन्द्रः । आसीत् । देवाः । इत् । अस्य । हविःऽअद्यम् ।
आयन् । यः । अर्वन्तम् । प्रथमः । अधिऽअतिष्ठत् ॥ ९ ॥

अयमश्वोहिरण्यशृंगः हितरमणीयशृंगउन्नतशिरस्कः हृदयरमणशृंगस्थानीयशिरोरुहोवा अस्य पादा अयः अयोमयाः अयःपिंडसदृशाइत्यर्थः तथामनोजवाः मनोवेगाः अथवैतदिंद्रविशेषणं ईदृशस्याश्वस्यसामर्थ्यं प्रतिमनोवेगः इन्द्रोप्यवरोनिकृष्टआसीत् किंच अस्याश्वस्य हविरद्यं हविषःअदनं भक्षणं स्वार्थिकोयत् अदनयोग्यं हविर्वाअपेक्ष्य देवाः इत् सर्वेपिदेवाः आयन् प्राप्ताः यइन्द्रः अर्वन्तं प्रथमः प्रथमभावीसन् अध्यतिष्ठत् अधिष्ठितवान् सहविघ्नेनस्वकीयत्वेनवा श्रितवानित्यर्थः इंद्रएणंप्रथमोअध्यतिष्ठदितिह्युक्तम् ॥ ९ ॥

९. अश्व का सिर सोने का है और उसके पैर लोहे के तथा वेगशाली हैं। वेग के सम्बन्ध में तो इन्द्र भी निकृष्ट हैं। देवगण अश्व के हव्य-भक्षण के लिए आते हैं। पहले इन्द्र ही यहाँ बैठे हैं।

अथदशमी—

ई॒र्मान्ता॑सः॒ सिलि॑कमध्यमा॒सः सं शूर॑णासो दि॒व्यासो॒ अत्याः॑ ।
हं॒सा इ॑व श्रेणि॒शो य॑तन्ते॒ यदाक्षि॑षुर्दि॒व्यमज्म॒मश्वाः॑ ॥ १० ॥ १२ ॥

ई॒र्मऽअ॑न्तासः । सिलि॑कऽमध्यमासः । सम् । शूर॑णासः ।
दि॒व्यासः॑ । अत्याः॑ । हं॒साःऽइ॑व । श्रे॒णि॒ऽशः । य॒त॒न्ते॒ । यत् ।
आक्षि॑षुः । दि॒व्यम् । अज्म॑म् । अश्वाः॑ ॥ १० ॥ १२ ॥

अत्राश्वसमूहस्तुतिद्वारेणायंस्तूयते ईर्मांतासःईरिताः प्रेरिताः अंतायेषांतेतथोक्ताः विरलान्ता-इत्यर्थः सिलिकमध्यमासः संसृताः संगतामध्यप्रदेशायेषांतेतथोक्ताः मध्येनिविडाइत्यर्थः अ-थवा शरीरस्यैतेविशेषणे ईर्मं ईरितःपुरोभागेउन्नतइत्यर्थः तादृशःपृथुरन्तोजघनप्रदेशोयेषांतेता-दृशाः तथा सिलिकमध्यमासः संसृतः संगतः संलग्नोमध्यभागोयेषांतेतादृशाः पुष्टत्वात्प्रौढपृ-ष्ठाः संलग्नमध्याश्चेत्यर्थः जघनपुरोभागावपेक्ष्य सिलिकमध्यमाइत्युक्तम् समित्ययमुपसर्गोयतन्त-इत्याख्यानेनसंबंधयितव्यः शूरणासः विक्रमशीलाः दिव्यासोदिविभवाः अत्याः अतनशीलाः यद्यप्ययमश्वनाम तथाप्यश्वशब्दस्यवक्ष्यमाणत्वात् अयंयौगिकोवगन्तव्यः ईदृशाअश्वाः श्रे-णिशः एकव्यापाराणांबहूनांसमूहःश्रेणिरित्युच्यते शीघ्रधावनायश्रेणिशः पंक्तीभूयसंयतंते सम्यक् यत्नंकुर्वन्ति तत्रदृष्टान्तः—हंसाइव तेयथाश्रेणीभूताईर्मान्तासइत्याद्युक्तरूपाःसन्तः अ-न्तरिक्षेगमनाययतंतेतद्वत् कदा उच्यते यत् यदा अश्वाः दिव्यं अज्मंगमनं गंतव्यंवामार्गंआक्षि-षुः व्याप्नुवन्तितदा । अयंमंत्रोयास्केनैवंव्याख्यातः—ईर्मान्ताःसमीरितान्ताःपृथ्व्यन्तावासिलि-कमध्यमाःसंसृतमध्यमाःशीर्षमध्यमावापिवाशिरआदित्योभवतियदनुशेतेसर्वाणिभूतानिमध्ये-चैषांतिष्ठतीदमपीतरच्छिरएतस्मादेवसमाश्रितान्येतर्दिंद्रियाणिभवन्तिसंशूरणासोदिव्यासोअत्याः शूरःशवतेर्गतिकर्मणोदिव्यादिविजाअत्याअतनाः हंसाइवश्रेणिशोयतन्तेहंसाहन्तेर्घ्नंत्यध्वानंश्रे-णिशइतिश्रेणिश्श्रयतेः समाश्रिताभवन्तियदाक्षिषुर्यदापुर्दिव्यमज्ममजनिमाजिमश्वाइति॥१०॥

१०. जिस समय अश्व स्वर्गीय पथ से जाता है, उस समय वह निविड़-जघन-विशिष्ट होता है। पतली कमरवाले, विक्रमशाली और स्वर्गीय अश्वगण दल के दल हंसों की तरह पंक्ति-बद्ध होकर उसके साथ जाते हैं।

॥इतिद्वितीयस्यतृतीयेद्वादशोवर्गः॥ १२ ॥

---

१ नि०४. १३.।

अथैकादशी—

तव॒शरी॑रंपतयि॒ष्ण्व॑र्व॒न्तव॑चि॒त्तंवात॑इव॒ध्रजी॑मान् ।
तव॒शृङ्गा॑णि॒विष्ठि॑तापुरु॒त्रार॑ण्येषु॒जर्भु॑राणाचरन्ति ॥ ११ ॥

तव॑ । शरी॑रम् । प॒त॒यि॒ष्णु । अर्व॑न् । तव॑ । चि॒त्तम् । वात॑ःऽइव ।
ध्रजी॑मान् । तव॑ । शृङ्गा॑णि । विऽस्थि॑ता । पु॒रु॒ऽत्रा । अर॑ण्येषु ।
जर्भु॑राणा । च॒र॒न्ति॒ ॥ ११ ॥

हेअर्वन् तवशरीरंपतयिष्णुपतनशीलंव्याप्तमित्यर्थः तथा तवचित्तंमनोवातइवध्रजीमान् शीघ्रगमनवान्वायुरिवतद्वत् शीघ्रगमनानुकूलमित्यर्थः किंच तवशृंगाणिशिरसोनिर्गताः शृंगस्थानीयाःकेशाः पुरुत्रापुरुषुबहुषुप्रदेशेषुविष्ठिता विष्ठितानि विविधंस्थितानि किंच तेएवारण्येषु जर्भुराणामनोहराणिपूर्यमाणानिवा एवंभूताः केशाश्चरन्ति यद्वा अत्राश्वस्यशृंगाभावात् तद्वदुन्नतानितेजांसिपरिगृह्यन्ते ॥ ११ ॥

११. अश्व, तुम्हारा शरीर शीघ्रगामी है, तुम्हारा चित्त भी वायु की तरह शीघ्रगन्ता है। तुम्हारे केसर नाना स्थानों में नाना भावों में अवस्थित तथा जंगल में विविध स्थानों में भ्रमण करते हैं।

आश्वमेधिकेमध्यमेहनि अग्निगुमैषे मानोमित्रइतिसूक्तानंतरमुपप्रागाच्छसनमितिद्वेऋचौशंसनीये सूत्रितंच—उपप्रागाच्छसनमितिद्वेइति ।

सैषासूक्तेद्वादशी—

उप॒प्रागा॒च्छस॑नं॒वा॒ज्यर्वा॑देव॒द्रीचा॒मन॑सा॒दीध्या॑नः ।
अ॒जःपु॒रोनी॑यते॒नाभि॑र॒स्यानु॑प॒श्चात्क॒वयो॑यन्ति॒रे॒भाः ॥ १२ ॥

उप॑ । प्र । अ॒गा॒त् । शस॑नम् । वा॒जी । अर्वा॑ । दे॒व॒द्रीचा॑ ।
मन॑सा । दीध्या॑नः । अ॒जः । पु॒रः । नी॒य॒ते॒ । नाभि॑ः । अ॒स्य॒ ।
अनु॑ । प॒श्चात् । क॒वय॑ः । य॒न्ति॒ । रे॒भाः ॥ १२ ॥

अयमर्वा अरणकुशलोवाजी अश्वः शसनं विशसनस्थानं उपप्रागात् उपप्रैति-उपगच्छति किंकुर्वन् देवद्रीचामनसा देवान्गच्छतामनसादीध्यानोध्यायन् कदादेवानस्मदवयवैनार्चा-

मि देवत्वंप्राप्नोमीतिवामनसिध्यायन् किंचास्यपुरः पुरस्तान्नाभिर्नेहनंबंधुभूतइत्यर्थः यद्वास्यवं-धनस्थानीयः अविमुक्तत्वात् एवंभूतोऽजः पुरोनीयते पुरतःप्राप्यते अनु अनुसृत्यपश्चात् अनं-तरं क्षत्रयद्यप्युभयोःपर्यवसितोर्थएकएव तथाप्यजाश्वोभयानंतर्यत्वप्रकटनायपदद्वयं यद्वा अन्वितिक्रिययासंबध्यते कवयः अनूचानाः रेभाः स्तोतारः ऋत्विजोयन्ति गच्छन्ति येवाअ-नूचानास्तेकवयइतिश्रुतेः।यद्वा कवयइतिमेधाविनाम कविर्मनीषीतितन्नामसुपठितत्वात् रेभइ-तिस्तोतृनाम रेभः जरितेतितत्रपाठात्॥ १२ ॥

१२. वह द्रुतगामी अश्व आसक्त चित्त से देवों का ध्यान करते हुए वध-स्थान में जाता है। उसके मित्र छाग को उसके आगे-आगे ले जाया जाता है। कवि स्तोता पीछे-पीछे जाते हैं।

उपप्रागात्परमंयत्सधस्थमर्वाँअच्छापितरंमातरंच।
अद्यादेवाञ्जुष्टतमोहिगम्याअथाशास्तेदाशुषेवार्याणि॥१३॥१३॥

उप। प्र। अगात्। परमम्। यत्। सधऽस्थम्। अर्वान्।
अच्छ। पितरम्। मातरम्। च। अद्य। देवान्। जुष्टऽतमः।
हि। गम्याः। अथ। आ। शास्ते। दाशुषे। वार्याणि॥१३॥१३॥

अर्वान् अरणकुशलोयमश्वः उपप्रागात् उपगच्छति किं यत्परमंउत्कृष्टं सधस्थं सह-स्थानं सुकृतिभिरेकत्रनिवासयोग्यंस्वर्गाख्यंयदस्तितत् किमर्थंपितरंमातरंच अच्छ आभिमु-ख्येनप्राप्तुं हेअश्वाद्यास्मिन्काले जुष्टतमः प्रीततमः स्वर्गंप्राप्नोमीतिहर्षयुक्तइत्यर्थः एवंभूतोदे-वान्गम्याः गच्छेः हिशब्दः यज्ञेउपयुक्तस्यपशोःस्वर्गप्राप्तेः सगर्भ्योनुसखासयूथ्यइत्यादिमंत्रा-न्तरप्रसिद्धिद्योतनार्थः अथानन्तरं यजमानः आशास्ते कस्मै दाशुषे हविर्दत्तवते स्वस्मै कानि वार्याणि वरणीयानिधनानि यद्वा पुरुषस्यव्यत्ययः आशास्ते प्रार्थये यजमानार्थम्॥ १३॥

१३. द्रुतगामी अश्व, पिता और माता को प्राप्त करने के लिए उत्कृष्ट और एक निवास-योग्य स्थान पर गमन करता है। अश्व, आज खूब प्रसन्न होकर देवों के पास जाओ, ताकि हव्यदाता वरणीय धन प्राप्त करे।

॥ इतिद्वितीयस्यतृतीयेत्रयोदशोवर्गः॥१३॥

अस्यवामस्येतिद्विपंचाशत्यृचमष्टमंसूक्तंदैर्घतमसम् अत्रेयमनुक्रमणिका अस्यद्विपंचाशद-ल्पस्तवंत्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्रप्रायेणज्ञानमोक्षाक्षरप्रशंसाच पंचपादंसाकंजा-नांयद्वायत्रेयंसर्शिक्केसप्तार्धगर्भागौरीरितिजगत्यः एतदन्तंतुवैश्वदेवं तस्याःसमुद्राइतिवाचः समुद्राआपोक्षरंसाप्रस्तारपङ्क्तिः शकमयमितिशकधूमः उक्षाणंपृश्निमितिसोमस्त्रयःकेशिनइत्यग्निः

१ तै० सं० १. २. ४.

सूर्योवायुश्चकेशिनश्चत्वारिवाग्वाचइन्द्रंमित्रंसौर्यौद्वादशेतिसंवत्सरसंस्थंकालचक्रवर्णनं यस्ते-सरस्वत्यैयज्ञेनसाध्येभ्यःपरानुष्टुप्सौरीपर्जन्याग्निदेवतावान्त्यासरस्वतेसूर्यायवेति । अत्रस्तु-त्यावहुत्वेनस्तुतिभागस्याल्पीयस्त्वादिदंसूक्तमल्पस्तवनं नसूक्तान्तरवद्बहुस्तवनं इदमेववैल-क्षण्यंतुशब्देनद्योत्यते अस्मिन्सूक्ते मायेणसंशयोत्थापनादयोबहवोर्थाःप्रतिपाद्यन्ते । अ-चिकित्वांश्चिकितुषइत्यनयासंशयउत्थाप्यते पृच्छामित्वेत्यत्रप्रश्नःप्रतीयते इयंवेदिरित्यत्रप्र-तिवचनं यईचकारेत्यादिनाज्ञानप्रशंसाप्रतिपाद्यते अपश्यंगोपामित्यादिनाब्रह्मसाक्षा-त्काररूपमोक्षस्यप्रशंसा नक्षरतीत्यक्षरंब्रह्म द्वासुपर्णेत्यादिनातस्यप्रशंसा पंचपादंपितरंसाकंजा-नांसप्तथंयद्गायत्रेअधिअयंसर्शिकेसप्तार्धगर्भागौरीर्मिमायेतिषट्जगत्यः समानमेतदित्यनुष्टुप् त-स्याःसमुद्राइतिप्रस्तारपंक्तिः तल्लक्षणंछन्दोग्रंथेसूत्रितं—प्रस्तारपंक्तिःपुरतइति । पुरतःपूर्वार्धेद्वा-दशाक्षरौजागतौपादौततोद्वावष्टाक्षरौगायत्रौसाप्रस्तारपंक्तिरितिसूत्रार्थः। अनुक्रमण्यामप्युक्तम्—आद्यौचेत्प्रस्तारपंक्तिरिति । शिष्टाअनादेशपरिभाषयात्रिष्टुभः गौरीर्मिमायेत्येतदन्तानां विश्वे-देवादेवता तस्याःसमुद्राइत्यस्याःपूर्वार्धस्यवाग्देवता उत्तरार्धस्यआपः शकमयमित्यस्याः पूर्वार्धस्यशकधूमः उक्षाणंपृश्निमित्युत्तरार्धस्यसोमोदेवता त्रयःकेशिनइत्यस्याः अग्निसूर्यवायवः चत्वारिवागित्येषावाग्देवताका इन्द्रंमित्रंवरुणंकृष्णंनियानमित्येतेसूर्यदेवते द्वादशप्रधयइत्यस्याः संवत्सरात्माकालोदेवता यस्तेस्तनइत्यस्याःसरस्वती यज्ञेनेत्यस्याःसाध्यादेवता समानमेतदित्य-स्याःसूर्यःपर्जन्योवाग्नयोवादेवता दिव्यंसुपर्णमित्यस्याःसरस्वान्सूर्योवादेवता कृत्स्नसूक्त-स्यविनियोगंशौनकआह—स्तेयंकृत्वाद्विजोमोहात्त्रिरात्रोपोषितःशुचिः । सूक्तंजप्त्वास्यवामीयं क्षिप्रंमुच्येतकिल्बिषादिति। महाव्रतेवैश्वदेवशस्त्रे वैश्वदेवनिविद्धानंद्विप्रतीकं तत्रास्यवामस्येत्या-दिकमेकचत्वारिंशत्यृचंप्रथमंप्रतीकं पंचमारण्यकेसूत्रितम्—अस्यवामस्यपलितस्यहोतुरिति सलिलस्यदैर्घतमसः एकचत्वारिंशतमिति ।

तत्रप्रथमा—

अस्यवामस्यपलितस्यहोतुस्तस्यभ्रातामध्यमोअस्त्यश्नः ।
तृतीयोभ्राताघृतपृष्ठोअस्यात्रापश्यंविश्पतिंसप्तपुत्रम् ॥ १ ॥

अस्य । वामस्य । पलितस्य । होतुः । तस्य । भ्राता । मध्यमः । अस्ति । अश्नः । तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य । अत्र । अपश्यम् । विश्पतिम् । सप्तऽपुत्रम् ॥ १ ॥

अत्रद्वितीयपादेतच्छब्दश्रुतेः प्रथमपादेप्रतिविशेषणंयोग्यक्रियार्थसंबद्धोयच्छब्दोऽ-ध्याहार्यः योयंदिविद्योतते तस्यास्यवामस्य वननीयस्यसंभजनीयस्य आरोग्यार्थिभिःसर्वैः सेवनीयस्य पलितस्यपालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य तथायोयंदिविद्योतते तस्यास्यहोतुः ह्वातव्यस्य आह्वानार्हस्यादित्यस्यमध्यमोमध्यमस्थानोमध्येभवोवायुरुच्यते आदित्याग्नीअपेक्ष्यास्यमध्यमत्वं सचाश्नः सर्वत्रव्याप्तः नहिवायुरहितःकश्चित्प्रदेशोऽस्ति तादृशोभ्रातास्ति भ्रातृस्थानीयोभवति यथालोकेभ्रातापितृधनस्यभागंहरति तद्वन्मध्यस्थानमन्तरिक्षलोकंहरतीतिवा वृष्ट्यर्थंरश्मिभिराहृतानांभौमानांरसानांहरणाद्वाभ्रातेत्युच्यते पित्र्येणधनेनस्वार्जितेनवाभर्तव्योभवतीतिभ्राता मध्यमोवायुरपिवृष्ट्यर्थंरसैर्भक्तव्योभवति किञ्च घृतपृष्ठः घृतमाहुतिलक्षणंपृष्ठेयस्यतादृशोभ्रातातस्यतृतीयोस्तिभवति त्रयाणांपूरणस्तृतीयः उक्तोभयापेक्षयातृतीयत्वं भ्रातृत्वंप्रतिपादितप्रकारेणात्रापिद्रष्टव्यं रात्रौसवितुस्तेजोभागस्यहरणाद्दिवास्वकीयतेजसोभागस्यतदर्थमेवभक्तव्यत्वाद्वाभ्रातृत्वं अत्रएषुभ्रातृषुमध्येपुरोदेशेवाविश्पतिं विशांप्रजानांपालयितारं सप्तपुत्रं सर्पणरश्मिपुत्रोपेतं ऐतिहासिकपक्षे अदितिःपुत्रकामेतिप्रस्तुते मित्रवरुणादिष्वदितिपुत्रेष्वस्यादित्यस्यसप्तमपुत्रत्वं ईदृशंमहानुभावमादित्यमपश्यं अद्राक्षं भावनयात्मत्वेनसाक्षात्करोमीत्यर्थः तद्योहंसोसौयोसौसोहमितिश्रुतिः। एवंवाअस्यवामस्य विश्वस्योद्गरितुः स्रष्टुरित्यर्थः पलितस्यपालयितुः स्वसृष्टजगत्पालनशीलस्य होतुरादातुः स्वस्मिन्संहर्तुरित्यर्थः परमेश्वरस्यसृष्ट्यादिकर्तृत्वं श्रुतिस्मृतिपुराणादिषुप्रसिद्धं तस्यतादृशस्यपरमेश्वरस्यभ्रातातद्भागहारीतदंशभूतसूत्रात्मा मध्यमः सर्वत्रमध्येवर्तमानोऽस्तिजगद्धारकत्वेनवर्तते सचाश्नः व्यापनशीलः वायुनावैगोतमसूत्रेणायंचलोकःपरश्चलोकःसर्वाणिचभूतानिसंरब्धानीतिश्रुतेः। वक्ष्यमाणविराडपेक्षयावामध्यमत्वं किंच अस्यपरमेश्वरस्य तृतीयः घृतपृष्ठः घृतमित्युदकनाम तेनतत्कार्यंशरीरमुच्यते तदेवपृष्ठं स्पर्शनीयंसर्वस्यस्पर्शकंवायस्यसतादृशः पृष्ठंस्पृशतेरितिनिरुक्तं[1]। यद्वा प्रदीप्तपृष्ठः पृष्ठशब्दःकृत्स्नशरीरोपलक्षकः प्रकाशितशरीराभिमानीत्यर्थः नत्वयंसूक्ष्मशरीराभिमानिसूत्रात्मवत्स्पर्शनाविषयोभवति अत्रएषुमध्येविश्पतिं विशां प्रजानांपतिंउपलक्षणमेतत् सर्वस्यपतिमित्यर्थः सर्वस्यपतिःसर्वस्येशानइतिश्रुतेः सप्तपुत्रं सप्तलोकाः पुत्रायस्यतादृशं स्वमाययासृष्टसर्वलोकमित्यर्थः अपश्यं पश्येयं साक्षात्करोमीत्यर्थः। अयमर्थः—स्वाधीनमायोजगत्कारणभूतःपरमेश्वरएकः ततउत्पन्नौ स्थूलसूक्ष्मशरी-

२

---

१ नि० ३. ३.।

राभिमानिनौद्वौविराट्सूत्रात्मानौ तेषुमध्ये द्वयोःसाक्षात्कारेणमोक्षाभावात् सृष्ट्यादिकारणंपरमेश्वरंज्ञेयत्वेनप्रसिद्धम् श्रवणमननादिसाधनेनसाक्षात्करोमीत्यर्थः एवमुत्तरत्राप्यध्यात्मपरतयायोजयितुंशक्यं तथापिस्वरसत्वाभावाद्ग्रंथविस्तरभयाच्चनलिख्यते यत्रद्वासुपर्णेत्यादौ स्फुटमाध्यात्मिकोऽप्यर्थःप्रतीयते तत्रतत्रप्रतिपादयामः अयंमन्त्रोयास्केनव्याख्यातः–अस्यवामस्यवननीयस्यपलितस्यपालयितुरित्यादिना तच्चव्याख्यानमत्रानुसन्धेयम्॥ १ ॥

१. सबके सेवनीय और जगत्पालक होता या सूर्य के मध्यम भ्राता या वायु सर्वत्र व्याप्त हैं। उनके तीसरे भ्राता या अग्नि आहुति धारण करते हैं। भाइयों के बीच सात किरणों से युक्त विश्पति को देखा गया।

अथद्वितीया–

स॒प्त यु॑ञ्जन्ति॒ रथ॒मेक॑चक्र॒मेको॒ अश्वो॑ वहति स॒प्तना॑मा।
त्रि॒नाभि॑ च॒क्रम॒जर॑मन॒र्वं यत्रे॒मा विश्वा॒ भुव॒नाधि॑ त॒स्थुः ॥ २ ॥

स॒प्त । यु॒ञ्जन्ति॒ । रथ॑म् । एक॑ऽचक्रम् । एकः॑ । अश्वः॑ । व॒ह॒ति॒ । स॒प्तऽना॑मा । त्रि॒ऽनाभि॑ । च॒क्रम् । अ॒जर॑म् । अ॒न॒र्वम् । यत्र॑ । इ॒मा । विश्वा॑ । भुव॑ना । अधि॑ । त॒स्थुः ॥ २ ॥

एकचक्रंएकरथाङ्गोपेतं यद्यपित्रीणिचक्राणितथापि तेषामेकरूपत्वात् एकचक्रमित्युच्यते रथंरंहणस्वभावं सूर्यस्यसंबन्धिनं सप्त एतत्संख्याकाअश्वायुंजन्ति अनुबध्नन्ति वहन्त्यहोरात्रनिर्वाहाय किंवस्तुतःसप्त नेत्याह–एकोऽश्वः सप्तनामा एकएवसप्ताभिधानः सप्तधानमनप्रकारोवा एकएववायुः सप्तरूपाणि धृत्वावहतीत्यर्थः वाय्वधीनत्वादन्तरिक्षसंचारस्य एकचक्रमित्युक्तम् कीदृशंतदित्यतआह–त्रिनाभिवलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयोपेतं अजरंअमरणधर्मकं अनर्वंअशिथिलं पुनस्तदेवविशेष्यते यत्रयस्मिन्चक्रे इमाविश्वाभुवना इमानिप्रसिद्धानिसर्वाणिभूतजातानि अधि आश्रित्य तस्थुः तिष्ठन्ति यद्वा एकचक्रं एकचारिणं असाहाय्येनसंचरन्तंरथं आदित्यमण्डलं सप्तयुञ्जन्ति सर्पणस्वभावाःसप्तसंख्यावा रश्मयः सप्तप्रकारस्कार्याःअसाधारणाः परस्परविलक्षणाः षळृतवः एकःसाधारणइत्येवं अथवा मासद्वयात्मकाःषट् अपरोधिकमासात्मकइत्येवं सप्तर्तवोयुञ्जन्ति एतस्यकार्यंनिर्वहन्तीत्यर्थः सचैकः असहायः अश्वोव्यापनशीलआदित्यः सप्तनामा सप्तरसानां संनमयितारोरश्मयोयस्यतादृशः

१ नि० ४, २६।

सप्तऋषिभिः स्तूयमानोवा आदित्योवहति धारयति भ्रमयतीत्यर्थः किंत्रिनाभिचक्रं त्रिनाभयः नाभिस्थानीयाः संबद्धावात्रयऋतवोयस्यतत्तादृशं केते ग्रीष्मवर्षाहेमन्ताख्याः यद्वा भूतभविष्यवर्तमानाख्यास्त्रयःकालास्त्रिनाभयः तद्विशिष्टंचक्रं चक्रवत्पुनःपुनःपरिभ्रममाणं संवत्सराख्यं चक्रंनानाकालावयवोपेतं अयमादित्यः पुनःपुनरावर्तयति संवत्सरादर्वाचीनानां तत्रैवान्तर्भावात् ततोयुगादीनांतदावृत्तिसाध्यत्वात्संवत्सरस्यचक्रत्वेननिरूपणं पुनःकीदृशं तत् यत्रयस्मिन्चक्रे इमाविश्वाभुवना इमानिसर्वाणिभूतान्यधितस्थुः आश्रित्यतिष्ठन्ति कालाधीनत्वात्सर्वस्यस्थितेः ईदृशस्यकालस्यकारणभूतपरमेश्वरज्ञानेनमोक्षसद्भावात् ज्ञानमोक्षाक्षरप्रशंसाचेत्यनुक्रमण्यामुक्तं अयमपिमन्त्रोयास्केन—सप्तयुञ्जन्तिरथमेकचक्रमेकचारिणमित्यादिनाव्याख्यातः तदत्राप्यनुसन्धेयम् ॥ २ ॥

२. सूर्य के एकचक्र रथ में सात घोड़े जोते गये हैं। एक ही अश्व सात नामों से रथ ढोता है। चक्र की तीन नाभियाँ हैं। वे न तो कभी शिथिल होतीं हैं न जीर्ण। सारा संसार उनका आश्रय करता है।

अथतृतीया—

इमंरथमधियेसप्ततस्थुःसप्तचक्रंसप्तवहन्त्यश्वाः।
सप्तस्वसारोअभिसंनवन्तेयत्रगवांनिहितासप्तनाम ॥ ३ ॥

इमम्। रथम्। अधि। ये। सप्त। तस्थुः। सप्तऽचक्रम्।
सप्त। वहन्ति। अश्वाः। सप्त। स्वसारः। अभि। सम्। नवन्ते।
यत्र। गवाम्। निऽहिता। सप्त। नाम ॥ ३ ॥

इममुक्तस्वरूपमादित्यं मण्डलाख्यंसंवत्सराख्यंवा रथंयेसप्तरश्मयोऽधितस्थुरधिष्ठिताः संवत्सरपक्षे अयनऋतुमासपक्षदिवसरात्रिमुहूर्ताख्याःसप्तावयवाअधितिष्ठन्ति कीदृशंरथं सप्तचक्रं चक्रनाच्चरणात्क्रमणाद्वाचक्राणिरश्मयः तेसप्तयस्यरथस्य तादृशमुभयविधंरथं पूर्वोक्ताअधिष्ठिताःअश्वाव्यापनशीलाःसप्तवहन्ति निर्वहन्तिचतादृशंरथंसप्तस्वसारः स्वयंसरणाः स्वरादित्यस्तेनसारिताः परस्परंस्वसृभूतावा सप्तसंख्याकारश्मयऋतवश्च अभिसंनवन्ते आभिमुख्येनसंगच्छन्ते असाधारणाः परस्परविलक्षणकार्याः षड्ऋतवः सर्वसाधारणएकइति सप्तत्वम् यद्वा उक्तरूपामासद्वयात्मकाःषट् त्रयोदशमासात्मकःसप्तमइतिसप्तत्वं कीदृशोरथइतितदुच्यते—

१ नि० ४. २७.।

यत्रयस्मिन्रथे उभयविधेगवांवाचां स्तुतिरूपाणां सप्त सप्तविधानिनाम नमनानि सप्तस्वररूपाणिनिहिता निहितानि सप्तस्वरोपेतैःसामभिःस्तुत्यंरथमित्यर्थः यद्वा गवांउदकानां सप्त सर्पणस्वभावानि नाम नमनानि यत्र यासुस्वसृषुनिहितानि ताः स्वसारः परस्परस्वसृभूतादेवनद्यः अभिसंनवन्ते ॥ ३ ॥

३. जो सात, सप्त-चक्र रथ का, अधिष्ठान करते हैं, वे ही सात अश्व हैं; वे ही इस रथ को ढोते हैं। सात भगिनियाँ (किरणें) इस रथ के सामने आती हैं। इसमें सात गायें (किरणें या स्वर) हैं।

अथचतुर्थी—

कोद॑दर्श प्रथ॒मं जाय॑मानमस्थ॒न्वन्तं॒ यद॑न॒स्था बिभ॑र्ति ।
भूम्या॒ असु॒रसृ॑गा॒त्मा क्व॑स्वि॒त्को वि॒द्वांस॒मुप॑गा॒त्प्रष्टु॑मे॒तत् ॥ ४ ॥

कः । द॒दर्श॑ । प्र॒थ॒मम् । जाय॑मानम् । अ॒स्थ॒न्ऽवन्त॑म् । यत् । अ॒न॒स्था । बिभ॑र्ति । भूम्याः॑ । असुः॑ । असृ॑क् । आ॒त्मा । क्व॑ । स्वि॒त् । कः । वि॒द्वांस॑म् । उप॑ । गा॒त् । प्रष्टु॑म् । ए॒तत् ॥ ४ ॥

एवंप्रपञ्चस्यकालायत्ततांप्रतिपाद्य तस्यकारणभूतस्यपरमेश्वरस्याविषयत्वमाह—कोददर्श कोद्रष्टुंशक्नुयात् कदा प्रथमंसृष्टेःपूर्वं अव्याकृतावस्थायामित्यर्थः किंजायमानं प्रथमभावविकारमापन्नं उत्पद्यमानंप्रपञ्चमित्यर्थः दुर्ज्ञेयत्वेहेतुमाह—यद्यस्मात् अस्थन्वन्तंअस्थिमन्तंशरीरं उपलक्षणमेतत् कार्यभावमापन्नमित्यर्थः अनस्था अस्थिरहिता अशरीरा सांख्यप्रसिद्धाप्रकृतिः वेदान्तप्रसिद्धा ईश्वरायत्तामायाबिभर्ति गर्भवदन्तर्धारयति अव्याकृतावस्थायां अनस्थोऽशरीरः परमेश्वरोबिभर्ति यदाकेवलःपरमेश्वरोमायाशबलितःसन् इदंजगन्निर्मितवान् उत्पत्तिसमयेदेहादिसहितंस्यकस्यचिदभावात् कोददर्श तदानींमनोनित्यं आत्माचनित्यः तत्संयोगात्कश्चिदात्माजानातीतिचेत् सोपिनसंभवतीत्यतआह—भूम्याःसंबन्धिपार्थिवंस्थूलशरीरं असुःप्राणः तदुपलक्षितंसूक्ष्मशरीरं असृक्शोणितंसप्तधातूपलक्षकं यद्यपि शरीरं पञ्चभूतात्मकं तथापिभूतद्वयप्रत्यक्षत्वात्तदपेक्षयोक्तम् आत्मा तैःसंबद्धःचेतनः क्वस्वित्कुत्रास्ते नकश्चिदस्तीत्यर्थः नान्यत्किंचनमिषदितिश्रुतेः[1]। विद्वांसंजगत्कारणविषयज्ञानवन्तं अन्यं गुर्वादिकंएतत्कारणंप्रष्टुं कः शिष्यः अल्पमतिरुपगात् उपगच्छति तादृशोदेहेन्द्रियसंघातरूपआत्मातस्मिन्समयेकुत्रास्ति प्रष्टाप्रतिवक्ताचोभावपिनस्तइत्यर्थः नतुतद्वितीयमस्ति

1 ऐतरेयोपनिषत् ।

ततोऽन्यद्द्विभक्तंयत्पश्येदितिश्रुतेः । यद्वा प्रथमं प्रथमभाविनं जगतःकारणभूतं कोददर्श कःसाक्षात्करोति जायमानमस्थन्वन्तंमानुषं अनस्थिकः परमेश्वरः शरीरं अशरीरः यद्यस्माद्बिभर्ति द्रष्टुरपितत्कार्यत्वादितिभावः शिष्टंसमानम् ॥ ४ ॥

४. प्रथम उत्पन्न को किसने देखा था---जिस समय अस्थि-रहिता (प्रकृति) ने अस्थि-युक्त (संसार) को धारण किया ? पृथिवी से प्राण और रक्त उत्पन्न हुए; परन्तु आत्मा कहाँ से उत्पन्न हुई ? विद्वान् के पास कौन इस विषय की जिज्ञासा करने जायगा ?

पाकंःपृच्छामिमनसाविजानन्देवानामेनानिहितापदानि ।
वत्सेबष्कयेधिसप्ततन्तून्वितत्निरेकवयओतवाउं ॥ ५ ॥ १४ ॥

पाकंः । पृच्छामि । मनसा । अविंऽजानन् । देवानाम् । एना ।
निऽहिता । पदानि । वत्से । बष्कये । अधि । सप्त । तन्तून् ।
वि । तत्निरे । कवयः । ओतवै । उँ इति ॥ ५ ॥ १४ ॥

पाकः पक्तव्योपक्वमतिरहं मनसा संस्कृतेन अविजानन् अतिगहनंतत्त्वं विशेषेणज्ञातुमशक्नुवन् पृच्छामि प्रश्नंकरोमि अज्ञानेकारणमाह—एना एनानि पदानिसंदेहास्पदानि तत्त्वानि देवानांनिहिता निहितानि तानिदेवानामपिगूढानीत्यर्थः यद्वा देवानांपदानि तत्त्वानि निधिवद्गोपयित्वा स्थापितानि अतः पृच्छामि तत्त्वज्ञानोपयोगायेतिशेषः तानिकानीत्युच्यते—वत्से सर्वस्यनिवासभूते बष्कये वटितिसत्यनाम तत्कषतीतिबष्कयआदित्यः यद्वा बष्कयोनामैकहायनोवत्सः पुनरपिवत्सशब्दस्य पृथङ्निर्देशात्बष्कयशब्देनतत्कालमात्रंलक्ष्यते तस्मिन्नादित्ये अधिअधिकं सप्ततन्तून् तायमानान्सप्तसोमसंस्थान् कवयोमेधाविनोयजमानाओतवै जगद्रूपतिर्यक्तन्तून् वेतुं वितत्निरे वितन्वन्ति यद्वा सप्ततन्तवः सप्तच्छन्दांसि तानिवितन्वन्ति किमर्थं ओतवै सप्तसोमसंस्थारूपतिर्यक्तन्तुसंतानाय यज्ञनिर्माणायेत्यर्थः यज्ञानांस्थितेःसूर्याधीनत्वादितिभावः ईदृशंतत्त्वंपृच्छामीत्यर्थः ॥ ५ ॥

५. मैं अनाड़ी हूँ; कुछ समझ में न आने से पूछ रहा हूँ। ये सब संदिग्ध बातें देवों के पास भी रहस्यमयी हैं। एक वर्ष के गोवत्स या सूर्य के वेष्टन के लिए मेधावियों ने जो सात सूत या सात सोम-यज्ञ प्रस्तुत किये, वे क्या हैं ?

अचिकित्वाञ्चिकितुषश्चिदत्रकवीन्पृच्छामिविद्मनेनविद्वान् ।
वियस्तस्तम्भषळिमारजांस्यजस्यरूपेकिमपिस्विदेकम् ॥ ६ ॥

अचिकित्वान् । चिकितुषः । चित् । अत्र । कवीन् । पृच्छामि ।
विद्मने । न । विद्वान् । वि । यः । तस्तम्भ । षट् । इमा । रजांसि ।
अजस्य । रूपे । किम् । अपि । स्वित् । एकम् ॥ ६ ॥

अचिकित्वान् देवतातत्त्वमजानन्नहं चिकितुषः विशेषेणतत्त्वंजानतःकवीन् क्रान्तदर्शिनः अधिगतपरमार्थान् अत्र अस्मिंस्तत्त्वविषयेपृच्छामि किमर्थं विद्मने वेदनायपरमार्थज्ञानाय किंजानन्नेवपराभवायर्थं नेत्याह विद्वान्नपृच्छामि अपितु अज्ञानादेव यःपरमेश्वरः वितस्तंभ स्तंभितवान्नियमितवान् अथयआत्मासेतुर्विधृतिरेषांलोकानामसंभेदायेतिश्रुतेः । किंइमा इमानि षट् रजांसि लोकान् लोकारजांस्युच्यन्तइतिनिरुक्तम् यद्यपि लोकाःसप्त तथापिसत्यलोकस्यकर्मिणांसर्वेषांसाधारणत्वाभावात् षडित्युक्तम् ननुषडेवोकाः सप्तमःकिमितिननिर्दिष्टइति उच्यते—अजस्यजननादिरहितस्यचतुर्मुखस्यब्रह्मणःरूपेस्वरूपेएकंसत्यलोकाख्यंपुनरावृत्तिरहितंस्थानंकिमपिस्वित् किंस्विदेव तन्नकेनाप्यधिगन्तुंशक्यमित्यर्थः कैश्चिदेवोपासकैरर्चिरादिमार्गेणगन्तव्यत्वादितिभावः यद्वा षट् रजांसिविलक्षणाःषऋतवः तानि यः स्तंभयत्तत्त्वं अजस्यगमनशीलस्यजन्मरहितस्यवादित्यस्यरूपेरूप्यमाणेदृश्यमाने मण्डले एकमद्वितीयं किमपि स्वित् किंस्वित् यत्किंचिदवाङ्मनसगम्यंतत्त्वमस्ति तत्पृच्छामि यएषोऽन्तरादित्येहिरण्मयःपुरुषोदृश्यतइत्यादिश्रुतिप्रतिपादितंतत्त्वमित्यर्थः अथवा षडिमानिरजांसित्रिविधान्भूलोकांश्च यस्तस्तंभ तिस्रोभूमीर्धारयन्त्रीरुँतद्यौरितिनिगमः । तस्याजस्यपरब्रह्मणः रूपेनानाविकारभाजिजगति किमपिस्विदेकमेकात्मकमस्तीतिप्रश्नः अविशेषमस्तिनाममात्रमेकरूपमस्तीत्युत्तरविवक्षयाप्रश्नः अस्तीत्येवोपलब्धव्यमितिश्रुतेः ॥ ६ ॥

६. मैं अज्ञानी हूँ। कुछ न जानकर ही ज्ञानियों के पास जानने की इच्छा से पूछता हूँ। जिन्होंने इन छः लोकों को रोक रक्खा है, जो जन्म-रहित रूप से निवास करते हैं, वे क्या एक हैं ?

अथसप्तमी—

इहब्रवीतुयईमङ्गवेदास्यवामस्यनिहितंपदंवेः ।
शीर्ष्णःक्षीरंदुह्रतेगावोअस्यवव्रिंवसानाउदकंपदापुः ॥ ७ ॥

इह । ब्रवीतु । यः । ईम् । अङ्ग । वेद । अस्य । वामस्य ।
निऽहितम् । पदम् । वेरिति वेः । शीर्ष्णः । क्षीरम् । दुह्रते । गावः ।
अस्य । वव्रिम् । वसानाः । उदकम् । पदा । अपुः ॥ ७ ॥

---

१ तैत्तिरीयनारायणोपनिषदि । २ ऋ० सं० २. ७. ७. ।

इहेदानीं ईमेतद्वक्ष्यमाणंतत्त्वं अंगक्षिप्रंअविचारेण ब्रवीतु कः योवेद सः कीदृशंतत् अ-स्यपुरतोदृश्यमानस्य वामस्यवननीयस्य वेर्गन्तुरादित्यस्यपदं सर्वैर्गन्तव्यंस्वरूपंनिहितंगूढंवर्तते किंचास्यादित्यस्यशीर्ष्णःशिरोवदुन्नतस्यसर्वेषामुत्कृष्टस्यवागावः केचनवर्षकालीनारश्मयःक्षी-रमुदकंदुह्रते क्षरन्ति वव्रिंरूपनामैतत् रूपंवसानाः आच्छादयन्तः अतिविस्तरेणतेजसातपन्तः केचनास्यगावोरश्मयः उदकंस्वसृष्टंपदासृष्टेनैवमार्गेण अपुः पिबन्ति भूमिंनिरुदकांकुर्वन्तीत्य-र्थः तस्यस्वरूपंब्रवीत्वित्यन्वयः ॥ ७ ॥

७. गमनशील और सुन्दर आदित्य का स्वरूप अतीव निगूढ़ है। वे सबके मस्तक-स्वरूप हैं। उनकी किरणें दूध दुहतीं तथा अति विशाल तेज से युक्त होकर उसी प्रकार पुनः जलपान करती हैं। जो यह सब कथायें जानते हैं, वे कहें।

मातापितरमृतआबभाजधीत्यग्रेमनसासंहिजग्मे।
साबीभत्सुर्गर्भरसानिविद्धानमस्वन्तइदुपवाकमीयुः ॥ ८ ॥

माता। पितरम्। ऋते। आ। बभाज। धीती। अग्रे। मनसा। सम्। हि। जग्मे। सा। बीभत्सुः। गर्भऽरसा। निःविद्धा। नमस्वन्तः। इत्। उपऽवाकम्। ईयुः ॥ ८ ॥

मातासर्वस्यनिर्मात्रीपृथिवी पितरंपालकंद्युलोकंतत्स्थंद्युलोकस्थमादित्यमित्यर्थः समाव-भाजआभजते किमर्थंऋते उदकेयज्ञेवानिमित्तभूतेसति केनद्वारेण धीती धीत्याकर्मणायागादि-रूपेणस्वकीयेनाज्यसोमादिहविषातर्पयतीत्यर्थः अग्रे ततःपूर्वं पिताचमनसाअस्याममभिप्रायवता चेतसासंजग्मेहि संश्लिष्टोवर्ततेखलु वृष्टिमकरोदित्यर्थः अनन्तरंसामाताबीभत्सुः गर्भबन्धने-च्छावती गर्भरसा गर्भरसेनगर्भोत्पत्तिनिमित्तेनरसेननिविद्धानितरांविद्धासीत् यद्वा गर्भरसः ओषध्याद्युत्पादनसमर्थंउदकंयस्याः सा तादृशी उदकेनात्यन्तंक्लिन्ना निविद्धाकृषीवलैर्हल-मुखेननितरांविदारिताभवति बीजावापार्थं अत्रायंसमाधिर्योकाचनयोषिदपत्यार्थंस्वप-तिमुपानयति सचतस्यामनुरागयुक्तःसंगतोभवति साचान्तर्वत्नीसतीपुत्रान्जनयतीवि तद्वदत्रा-पि अनन्तरंनमस्वन्तइत् भाविनीहिमियंगर्भाधानवन्तएव उपवाकंउपेत्यवचनं परस्परंसम्भाष-णयुक्तानि सस्यानीविचनमीयुः प्राप्नुवन्ति यद्वा हविर्लक्षणान्नवन्तउपेत्यवचनं मैषादिरू-पीयुः वृष्टौसत्यांसस्याद्विद्वारायागमनुतिष्ठेयुरित्यर्थः ॥ ८ ॥

८. माता (पृथिवी) वृष्टि के लिए पिता या द्युलोक में स्थित आदित्य को अनुष्ठान-द्वारा पूजती हैं। इसके पहले ही पिता भीतर-ही-भीतर, उसके साथ संगत हुए थे। गर्भ-धारण की इच्छा से माता गर्भ-रस से निबिद्ध हुई थीं। अनेक प्रकार के शस्य उत्पन्न करने के लिए आपस में बातचीत भी की थी।

अथनवमी—

युक्तामातासीद्धुरिदक्षिणाया अतिष्ठद्गर्भोवृजनीष्वन्तः।
अमीमेद्वत्सोअनुगामपश्यद्विश्वरूप्यंत्रिषुयोजनेषु ॥ ९ ॥

युक्ता। माता। आसीत्। धुरि। दक्षिणायाः। अतिष्ठत्। गर्भः।
वृजनीषु। अन्तरिति। अमीमेत्। वत्सः। अनु। गाम्।
अपश्यत्। विश्वऽरूप्यम्। त्रिषु। योजनेषु ॥ ९ ॥

मातानिर्मीयन्तेऽस्मिन्भूतानीतिमाताद्यौः दक्षिणायाः अभिमतपूरणसमर्थायाःपृथिव्याः धुरिनिर्वहणेयुक्तासीत् वर्षणायसमर्थोभूदित्यर्थः कथमितितदुच्यते—गर्भोगर्भस्थानीयउदकसंघोवृजनीषु उदकवत्सु मेघपङ्क्तिष्वन्तर्मध्ये अतिष्ठत्तिष्ठति अनन्तरं वत्सः पुत्रस्थानीयः उदकसंघः त्रिषुयोजनेषु मेघरश्मिवायुषुसंयुक्तेषुसत्सु अमीमेत् वर्षणसमयेशब्दयति अनन्तरं विश्वरूप्यं विश्वरूपवतींगामन्वपश्यत् अनुक्रमेणपश्यति वर्षतीत्यर्थः यद्वा त्रिषुयोजनेषुसत्सु वत्सोमेघोवर्षणायगांभूमिंमत्यमीमेत् अनन्तरंसर्वोजनोऽनुक्रमेणविश्वरूप्यंसस्यादिभिर्नानारूपवतींभूमिमपश्यत् पश्यति ॥ ९ ॥

९. पिता (द्युलोक) अभिलाष-पूरण में समर्थ पृथिवी का भार वहन करने में नियुक्त थे। गर्भभूत जलराशि मेघमाला के बीच थी। वत्स या वृष्टि जल ने शब्द किया और तीन (मेघ, वायु और किरण) के योग से विश्व-रूपिणी गौ (पृथिवी) हुई अर्थात् पृथिवी शस्याच्छादिता हुई।

अथदशमी—

तिस्रोमातॄस्त्रीन्पितॄन्बिभ्रदेकऊर्ध्वस्तस्थौनेमवग्लापयन्ति।
मन्त्रयन्तेदिवोअमुष्यपृष्ठेविश्वविदंवाचमविश्वमिन्वाम् ॥ १० ॥ १५

तिस्रः। मातॄः। त्रीन्। पितॄन्। बिभ्रत्। एकः। ऊर्ध्वः। तस्थौ।
न। ईम्। अव। ग्लपयन्ति। मन्त्रयन्ते। दिवः। अमुष्य। पृष्ठे।
विश्वऽविदम्। वाचम्। अविश्वऽमिन्वाम् ॥ १० ॥ १५ ॥

एकः प्रधानभूतः असहायोवापुत्रस्थानीयआदित्यः संवत्सराख्यःकालोवा तिस्रोमातॄः सर्वस्यवृष्ट्याद्युत्पादयित्रीः क्षित्यादिलोकत्रयानित्यर्थः तथात्रीन्पितॄन् जगतांपालयितॄन् लोकत्रयाभिमानिनोऽग्निवायुसूर्याख्यान् बिभ्रत्सन् ऊर्ध्वस्तस्थौ उन्नतः अत्यन्तदीर्घस्तिष्ठति भूतभविष्यदाद्यात्मना सूर्यपक्षेसर्वेभ्यउन्नतः ईमेनं नावग्लापयन्ति ग्लानिंनैवकुर्वन्ति नहिकालआदि-

त्योवान्येनपराभूयते दिवः पृष्ठेद्युलोकस्योपरिअन्तरिक्षेमन्त्रयन्ते गुप्तंपरस्परंभाषन्ते देवाः किं विश्वविदं विश्ववेदनसमर्थांविश्वैर्वेदनीयांवा अविश्वमिन्वां असर्वव्यापिनींवाचं गर्जितलक्षणां अमुष्य आदित्यसंबन्धिनींमन्त्रयन्तइत्यर्थः ॥ १० ॥

१०. एकमात्र आदित्य तीन माता (पृथिवी, अन्तरिक्ष और आकाश) और तीन पिता (अग्नि, वायु और सूर्य) को धारण करते हुए ऊपर अवस्थित हैं, उन्हें थकावट नहीं आती। द्युलोक की पीठ पर देवता लोग सूर्य के सम्बन्ध में बातचीत करते हैं। उस बातचीत को कोई नहीं जानता; परन्तु उसमें सबकी बातें रहती हैं।

द्वादशारंनहितज्जरायवर्वर्तिचक्रंपरिद्यामृतस्य ।
आपुत्राअग्नेमिथुनासोअत्रसप्तशतानिविंशतिश्चतस्थुः ॥ ११ ॥

द्वादशऽअरम् । नहि । तत् । जराय । वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य । आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥ ११ ॥

ऋतस्योदकस्य सत्यात्मकस्यवा आदित्यस्यचक्रं पुनःपुनः क्रमणशीलं मण्डलाख्यं रथचक्रंवा वर्वर्ति पुनःपुनर्वर्तते संचरति कुत्र द्यांपरि द्युलोकस्यांतरिक्षस्यपरितः कीदृशंतव द्वादशारं द्वादशसंख्याकमासात्मकैर्मेषादिराश्यात्मकैर्वा अरैः रथाङ्गावयवैर्युक्तं तच्चक्रं नहिजराय नैवखलुजरायैभवति हेअग्ने सर्वदागमनयुक्तादित्य यद्वा अग्नेरेवस्थानत्रये तत्तदात्मनावर्तमानत्वादसावप्यग्निरित्युच्यते अत्रास्मिन्त्वदीयेचक्रे मिथुनासः स्त्रीपुंसरूपेण परस्परंमिथुनीभूताः सप्तशतानिविंशतिश्च विंशत्युत्तरसप्तशतसंख्याकाःपुत्राः पुत्रवदुत्पद्यमानाः प्राणिनांदुःखात्त्रारोवाअहोरात्ररूपास्तस्थुः तिष्ठन्तिनिष्पद्यन्ते षष्ट्यधिकशतत्रयसंख्याकान्यहानि तावत्यएवरात्रयइत्येवंतद्विभागः । सप्तचवैशतानिविंशतिश्चसंवत्सरस्याहोरात्राः सएषोहःसमानइत्यारण्यकम् ॥ ११ ॥

११. सत्यात्मक आदित्य का, बारह अरों (राशियों) से युक्त चक्र स्वर्ग के चारों ओर बार-बार भ्रमण करता और कभी पुराना नहीं होता है। अग्नि, इस चक्र में पुत्र-स्वरूप सात सौ बीस (३६० दिन और ३६० रात्रियां) निवास करते हैं।

पञ्चपादंपितरंद्वादशाकृतिंदिवआहुःपरेअर्धेपुरीषिणम् ।
अथेमेअन्यउपरेविचक्षणंसप्तचक्रेषळरआहुरर्पितम् ॥ १२ ॥

पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् । दिवः । आहुः । परे । अर्धे । पुरीषिणम् । अथ । इमे । अन्ये । उपरे । विऽचक्षणम् । सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् ॥ १२॥

पञ्चपादं पञ्चसंख्याकऋत्वात्मकपादोपेतं एतत् हेमन्तशिशिरयोरेकत्वाभिप्रायं पितरं सर्वस्यप्रीणयितारं द्वादशाकृतिं द्वादशमासाएवाकृतयोयस्यताहृशंपुरीषिणं वृष्ट्युदकेन तद्वन्तं प्रीणयितारंवा पुरीषमित्युदकनाम उक्तलक्षणं संवत्सरचक्रं दिवोद्युलोकस्यपरेअर्धे तात्स्थ्यात्ताच्छब्द्यं परस्मिन्नर्धेन्तरिक्षलक्षणेवस्थितआदित्यइत्यर्थः तस्मिन्नर्पितमाहुः एतदुत्तरस्थितमत्राप्यनुषज्ज्यते यद्यत्रार्पितं तत्तदधीनं अतः संवत्सरं परायत्तमाहुरित्यर्थः अथअपिच इमे अन्येकेचनवेदवादिनएवमाहुः किमिति उपरे उपरमन्तेऽस्मिन्नुपरताः प्राणिनोऽत्रेतिवोपरःसंवत्सरः तस्मिन् कीदृशेसप्तचक्रे सप्तादित्यरश्मयस्तद्द्वारेणचक्रस्थानीयायस्य सतथोक्तः यद्वा अयनर्तुमासपक्षाहोरात्रिमुहूर्तानिसप्त सप्तचक्राणि पुनःपुनःक्रममाणानियस्य तादृशे षळरे षळृतवएवअराः नाभौप्रत्यूताः संबद्धायस्य तथोक्तलक्षणे संवत्सरे रथे विचक्षणं विविधदर्शनकरमादित्यं अर्पितमाहुः एतदुक्तं भवति—अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेस्तीव्रमन्दादिभावस्यच कालाधीनत्वात्तदधीनमाहुः अन्येतुसंवत्सराद्यात्मकस्यकालस्य सूर्यगमनागमनसाध्यत्वात्तदायत्तत्वमाहुरिति ॥ १२ ॥

१२. पाँच पैरों (ऋतुओं) और बारह रूपों (महीनों) से संयुक्त आदित्य जिस समय द्युलोक के पूर्वार्द्ध में रहते हैं, उस समय उन्हें कोई-कोई पुरीषी या जलदाता कहते हैं। दूसरे कोई-कोई छः अरों (ऋतुओं) और सात चक्रों (रश्मियों) से संयुक्त रथ पर द्योतमान सूर्य को 'अर्पित' कहते हैं—जब कि, वे द्युलोक के दूसरे आधे में रहते हैं।

पञ्चारेचक्रेपरिवर्तमानेतस्मिन्नातस्थुर्भुवनानिविश्वा ।
तस्यनाक्षस्तप्यतेभूरिभारःसनादेवनशीर्यतेसनाभिः ॥ १३ ॥

पञ्चऽअरे । चक्रे । परिऽवर्तमाने । तस्मिन् । आ । तस्थुः । भुवनानि । विश्वा । तस्य । न । अक्षः । तप्यते । भूरिऽभारः । सनात् । एव । न । शीर्यते । सऽनाभिः ॥ १३ ॥

पञ्चारेपञ्चर्तुरूपैररैः युक्तेचक्रे संवत्सरात्मकेपरिवर्तमाने संवत्सरपरिवत्सरादिरूपेणपुनःपुनरावर्तमानेसति तस्मिन्कालचक्रे विश्वाभुवनानि सर्वाणिभूतजातानि आतस्थुः तिष्ठन्ति वर्तन्तइत्यर्थः किञ्च तस्यचक्रस्यमध्येवर्तमानः अक्षोभूरिभारः सकलभुवनवहनेन प्रभूतभारोऽपि

नतप्यते नपीड्यते किञ्च सनादेव सनातनएवसनाभिः समाननाभिकः सर्वदैकरूपनाभिरसौ नशीर्यते नभिद्यते यथालौकिकिरथाक्षः भारेणभग्नोभवति अक्षघातेनचनाभिर्विवृताभवति तद्व-द्त्रनास्तीत्यर्थः ॥ १३ ॥

१३. नियत परिवर्त्तमान पांच ऋतुओं या अरों (खूंटों) से युक्त चक्र पर सारे भुवन विलीन हैं। उसका अक्ष प्रभूत भार-वहन में नहीं थकता। उसकी नाभि सदा समान रहती है--कभी शीर्ण नहीं होती।

सनैमिचक्रमजरंविवांवृतउत्तानायांदशयुक्तावहन्ति।
सूर्यस्यचक्षूरजसैत्यावृतंतस्मिन्नार्पिताभुवनानिविश्वा ॥१४॥

सऽनेमि। चक्रम्। अजरम्। वि। ववृते। उत्तानायाम्। दश। युक्ताः। वहन्ति। सूर्यस्य। चक्षुः। रजसा। एति। आऽवृतम्। तस्मिन्। आर्पिता। भुवनानि। विश्वा ॥ १४ ॥

सनेमि समाननेमि एकप्रकारबहिर्वलयं अक्षीणनेमिचक्रं संवत्सराख्यंअजरं सदातनम-पि जरारहितं विववृते पुनःपुनर्विशेषेणवर्तते उत्तानायांऊर्ध्वतनायांईषायांउपरिविस्तृतभूम्यांवा दशइन्द्रादयः पञ्चलोकपालाः निषादपञ्चमाश्चत्वारोब्राह्मणादयोवर्णाः मिलित्वादशसंख्याकाः युक्ताः स्वस्वव्यापारयुक्तावहन्ति निर्वहन्ति कृत्स्नं जगन्निर्वहन्तीत्यर्थः तन्निर्वाहार्थत्वात्काल-स्य किञ्च सूर्यस्यादित्यस्यचक्षुः ख्यातस्वभावंसर्वस्यचक्षुःस्थानीयं वा मण्डलं चक्षुःख्यातेर्वा-चष्टेर्वेतिनिरुक्तम्। रजसावृष्ट्युदकेन आवृतं व्याप्तं एतिगच्छति उदकंरजउच्यतेइतियास्कः। तादृशे मण्डले विश्वाभुवनानि सर्वाणिभूतजातानिआर्पिता आर्पितानि तदधीनत्वात्तेषाम् ॥१४॥

१४. समान नेमि से संयुक्त और अजीर्ण काल-चक्र निरन्तर घूम रहा है। एक साथ दस (पंच लोक-पाल और निषाद, ब्राह्मण आदि पंच वर्ण) ऊपर मिलकर पृथिवी को धारण करते हैं। सूर्य का नेत्र-रूप मण्डल वृष्टि-जल से छिप गया--सारे प्राणी और जगत् भी उसमें विलीन हुए।

साकंजानांसप्तथमाहुरेकजंषळिद्यमाऋषयोदेवजाइति।
तेषामिष्टानिविहितानिधामशःस्थात्रेरेजन्तेविकृतानिरूपशः॥१५॥१६॥

साकम्ऽजानाम्। सप्तथम्। आहुः। एकऽजम्। षट्। इत्। यमाः। ऋषयः। देवऽजाः। इति। तेषाम्। इष्टानि। विऽहितानि। धामऽशः। स्थात्रे। रेजन्ते। विऽकृतानि। रूपऽशः ॥ १५ ॥ १६ ॥

---

१ नि० ३. ३. । २ नि०. ४. १९. ।

साकंजानांएकस्मादादित्यात्सहोत्पन्नानांसप्तानामृतूनांमध्ये सप्तथं सप्तममृतुं थट्छन्दसीतिथट् एकजंएकेनोत्पन्नमाहुः कालतत्त्वविदः चैत्रादीनांद्वादशानांमासानांद्वयद्वयमेलनेनवसंताद्याःषड्ऋतवोभवंति अधिकमासेनैकउत्पद्यतेसप्तमर्तुः नचतादृशोमासएवनास्तीतिमन्तव्यं अस्तित्रयोदशोमासइत्याहुरितिश्रुतेः। तदेवोच्यते षळिद्यमाः इच्छब्दएवकारार्थः षडेवऋतवोमासद्वयरूपाः ऋषयोगन्तारः तेच देवजाः देवादादित्याज्जाताः इत्येवमाहुः सप्तमाधारस्यत्रयोदशस्यमासस्य देवाभावः निःसूर्योधिकमासःमण्डलंतपतेरवेरित्यादिस्मृतेः।तस्मात्षडेवदेवजाः अदेवजएकः तेषामृतूनांस्वरूपाणि इष्टानि सर्वलोकाभिमतानि धामशः तत्तत्स्थानेविहितानि पृथक्पृथक्स्थापितानि रूपशः रूपभेदेन विकृतानि विविधाकृतियुक्तानि सचरूपभेदस्तैत्तिरीयैराम्नातः—सरसंमहवसन्तायप्रायच्छद्यवंग्रीष्मायेत्यादि। स्थात्रे अधिष्ठात्रे तदर्थायरेजन्तेचलन्ति जगद्व्यवहारायपुनःपुनरावर्तन्तइत्यर्थः॥ १५॥

१५. आदित्य की सहजात ऋतुओं में सातवीं (अधिक मासवाली) ऋतु अकेली है। अन्य छः ऋतुएँ जोड़ी हैं, गमनशील हैं और देवों से उत्पन्न हैं। ये ऋतुएँ सबकी इष्ट, स्थान-भेद से पृथक्-पृथक् स्थापित और रूप-भेद से विविध आकृतियों से संयुक्त हैं। वे अपने अधिष्ठाता के लिए बार-बार घूमती हैं।

॥ इतिद्वितीयस्यतृतीयेषोडशोवर्गः॥ १६॥

अथषोडशी—

स्त्रियः॑स॒तीस्ताँउ॑मे॒पुंस॑आहुः॒पश्य॑दक्ष॒ण्वान्नवि॑चे॑तद॒न्धः।
क॒विर्यः॑पु॒त्रःसईमाचि॑केत॒यस्तावि॑जा॒नात्सपि॒तुष्पि॒तास॑त्॥१६॥

स्त्रियः॑। स॒तीः। तान्। ऊँ॒ इति॑। मे॒। पुंसः॑। आ॒हुः॒। पश्य॑त्।
अ॒क्ष॒ण्ऽवान्। न। वि। चे॒त॒त्। अ॒न्धः। क॒विः। यः। पु॒त्रः। सः।
ई॒म्। आ। चि॒के॒त॒। यः। ता। वि॒ऽजा॒नात्। सः। पि॒तुः पि॒ता।
अस॑त्॥ १६॥

मेमदीयाः यादीधितयः स्त्रियःसंस्त्यानवत्योयोषितः सतीः सत्यः योषिद्वदुदकरूपगर्भधारणाद् स्त्रीत्वं एषांरश्मीनां आविष्टलिंगत्वात् स्त्रीलिङ्गता तानु तान्रश्मीनेव पुंसआहुः प्रभूतवृष्ट्युदकसेक्तॄन्पुरुषानाहुः प्रतिनिर्देशापेक्षयापुल्लिङ्गता अमुमर्थमत्यन्तनिगूढं अक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चिन्महान् पश्यत् जानातिअन्धः अतथारूपः स्थूलदृष्टिः नविचेतत् नविचेतयति नजानाति किञ्च यःकविः क्रान्तदर्शीपुत्रः स्त्रीपुरुषरूपाणां रश्मीनांपुत्रस्थानीयः पुरुजगतांत्रा-

१ तै० सं० ६. ५. ३.। २ तै० सं० ७. २. १०.।

ता वृष्ट्युदकलक्षणोऽस्ति सईंसएवपुत्रः यद्वा ईंएनमर्थं स्त्रीणांसतीनांपश्चात्पुरुषभावं आचिकेत स-र्वतोजानाति पित्रोःस्थितिंपुत्रएवजानातिनान्योयःकश्चित् तातानि विजानात्स्त्रीपुरुषपुत्ररूपाणिजा-नीयात् सपितुः पितासत् पितावृष्ट्याजगत्पालकोरश्मिसमूहः तस्यापिपिताआदित्यः सभवति आदित्यएवभवतीत्यर्थः यद्वा लौकिकोक्तिरियं यस्तानिजानाति सएवंभवति स्वयंपितुःपुत्रःस-न्नपिस्वपुत्रापेक्षयापिताचभवति पुत्रपौत्रादिसहितः चिरकालंजीवीभवतिइत्यधिदैवतम्। अथा-ध्यात्मं याइदानीं स्त्रियःसतीः स्त्रीत्वंप्राप्ताआहुर्लौकिकाः ताँउ तानेवमेमह्यंपुंसः पुरुषानाहुः प्र-तिपादयन्ति तत्त्वज्ञाः कथमन्यस्यान्यभावः उच्यते एकस्यैवनिरस्तसमस्तोपाधिकस्यात्मनस्तद्दे-हावस्थानमात्रेणतत्तद्व्यपदेशोपपत्तेः श्रूयतेहि त्वंस्त्रीत्वंपुमानसित्वंकुमारउतवाकुमारीत्यादि स्त्री-त्वंपुंस्त्वंचोभयमपिवस्तुतोनास्तीत्युक्तंभवति स्मृतिरपितदभावंबोधयति—नैवस्त्रीनपुमानेषनैवचा-यंनपुंसकः। यद्यच्छरीरमादत्तेतेनतेनसचोद्यतइति । द्वितीयःपादःपूर्ववत् किञ्च पुत्रःवयसा अल्पोऽपियःकविःक्रान्तप्रज्ञोज्ञानीस्यात् ईमिममर्थंसविचिकेतजानाति एवमुक्तलक्षणस्य परमा-त्मनः ता तानिस्त्रीत्वपुंस्त्वादीनि योविजानात् औपाधिकानिजानीयात् सपितुः स्वोत्पादकस्या-पिज्ञानरहितस्यपितासत् पितृवत्पूज्योभवति उक्तमर्थमभिप्रेत्यताण्डकब्राह्मणम्—शिशुर्वांगिरसो-मन्त्रकृतांमन्त्रकृदासीत् सपितॄन्पुत्रकाइत्यामन्त्रयतेत्युपक्रम्य तंपितरोब्रुवन्नधर्मंकरोषियोनःपितॄ-न्सतःपुत्रकाइत्यामन्त्रयतइति सोब्रवीदहंवावपितास्मियोमन्त्रकृदितिदेवानपृच्छन्त तेदेवाअब्रुवन् एषवावपितायोमन्त्रकृदिति तद्वैसउदजयदिति ।मन्त्रद्रष्टुरेवकिलपितृत्वं तत्त्ववित् पितुःपितासदि-तिकिमाश्चर्यमित्यभिप्रायः ॥ १६ ॥

१६. किरणें स्त्री होकर भी पुरुष हैं। जिनके आँखें हैं, वे ही यह देख सकते हैं; जिनकी दृष्टि मोटी है, वे नहीं। जो पुत्र मेधावी हैं, वे ही यह समझ सकते हैं। जो ये सब बातें समझ सकते हैं; वे ही पिता के पिता हैं।

अथसप्तदशी—

अवःपरेणपरएनावरेणपदावत्संबिभ्रतीगौरुदस्थात्।
साकद्रीचीकंस्विदर्धंपरागात्क्वस्वित्सूतेनहियूथेअन्तः ॥ १७ ॥

अवः। परेण। परः। एना। अवरेण। पदा। वत्सम्। बिभ्रती।
गौः। उत्। अस्थात्। सा। कद्रीची। कम्। स्वित्। अर्धम्।
परा। अगात्। क्व। स्वित्। सूते। नहि। यूथे। अन्तरिति ॥ १७ ॥

अत्राग्नौहूयमानाहुतिर्गोरूपेणस्तूयते गौःगोरूपागमनशीलैषाआहुतिःआहुतिसंघेनपोष्यं वत्सं वत्सस्थानीयमग्निं अवःअवस्तात् अधोदेशेपरेणपदापादद्वयेनस्वावयवेनाकृष्यबिभ्रतीधा-

रयन्ती तथा परः परस्तादुपरिदेशे एना अनेनावरेणचपदापादद्वयेनाकृष्य तमेववत्संबिभ्रती उदस्थात्सूर्यंप्रत्युत्तिष्ठति अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठतइतिस्मृतेः। अथैवंकृतवतीसा- आहुतिः कद्रीचोक्कगतेत्थनिश्चयगमना आदित्यंप्राप्तवतीत्यर्थः कंस्वित्कंफलभाजंपुरुषंप्रति अर्धमर्धमार्गमागत्य यद्वा अर्धंऋद्धंपरागात् परागच्छतिआगत्यचक्कस्वित्सूते कुत्रप्रदेशेफल- मुत्पादयति नहीतरगोवदियं यूथेअन्तः सजातीयगोमध्ये सूतेसाधारण्येन यत्रक्कस्विन्नसूते अपितुकस्मिंश्चिदनुष्ठातरि अतःसमहान्कोनुखल्विति यद्वा आदित्यरश्मिसमूहएवगोरूपेण स्तूयते गौः उक्तलक्षणारश्मिरूपागौर्वत्संवत्सवद्रक्षणीयंयजमानंउक्तक्रमेणबिभ्रतीउदस्थात् अथतथाकृत्वा साकद्रीची अदृश्यगमनासती कंस्विदर्धंऋद्धं अर्धस्थानभाजंवा कंस्वित्पु- रुषमादित्यंपरागात् अप्रतिनिवृत्तागती—तन्नयन्त्येताःसूर्यस्यरश्मयोयत्रदेवानांपतिरेकोधिवा- सइतिश्रुतेः। तथाकृत्वाच क्कस्वित्सूते कस्मिन्निन्द्रादिलोकेजनयति नसर्वत्र शिष्टंसमानम्॥१७॥

१७. वत्स, यजमान या अग्नि का पिछला भाग सामने के पैर से और सम्मुख-भाग पीछे के पैर से धारण करते हुए गौ, आदित्य-रश्मि या आहुति ऊपर की ओर जाती है। वह कहाँ जाती है? किसके लिए आधे रास्ते से लौट आये? कहाँ प्रसव करती है? दल के बीच प्रसव नहीं करती।

अवः परेण पितरं यो अस्यानुवेद पर एनावरेण।

कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥

अवः। परेण। पितरम्। यः। अस्य। अनुऽवेद। परः। एन। अवरेण। कविऽयमानः। कः। इह। प्र। वोचत्। देवम्। मनः। कुतः। अधि। प्रऽजातम् ॥ १८ ॥

अवः अवस्तात्स्थितं अस्यपितरंएतल्लोकपालकमग्निंपरेणादित्येनसहयोनुवेद अनुक्र- मेणजानाति तथापरः परस्तात्स्थितमादित्यमस्यपितरंपालकंसोपीममेवलोकं वृष्ट्यादिनापा- लयति तादृशमादित्यं एनाअनेनावरेणाग्निनासहयोनुवेद अग्न्यादित्यौव्यतिहारेणोपास्ते य- द्वा अभिभूतरजस्तमस्कौ उद्बुद्धसत्वौ अतएवस्वाधीनमायावेतौएकत्वेनयोऽधिगच्छति सतादृ- शःपुरुषः कवीयमानः कविवदाचरन्क्रान्तदर्शित्वमात्मनःख्यापयन् कइहास्मिँल्लोकेप्रवोचत् प्रब्रवीति किंच देवंद्योतमानंदेवविषयमलौकिकंवामनः कुतः कस्माददृष्टविशेषादधि आधिक्ये- नप्रजातंउत्पन्नं उभयमपिदुर्लभमित्यर्थः॥१८॥

१८. जो अधःस्थित (अग्नि) लोक-पालक की ऊर्द्ध्वस्थित (सूर्य) के साथ और ऊर्द्ध्वस्थित की अधःस्थित के साथ उपासना करते हैं, वे ही मेधावी की तरह आचरण करते हैं। किसने ये सब बातें कही हैं? कहाँ से यह अलौकिक मन उत्पन्न हुआ है?

अथैकोनविंशी-

येअर्वाञ्चस्ताँउपराचआहुर्येपराञ्चस्ताँउअर्वाचआहुः।
इन्द्रश्चयाचक्रथुःसोमतानिधुरानयुक्तारजसोवहन्ति ॥ १९ ॥

ये। अर्वाञ्चः। तान्। ऊम् इति। पराचः। आहुः। ये। पराञ्चः।
तान्। ऊम् इति। अर्वाचः। आहुः। इन्द्रः। च। या। चक्रथुः।
सोम। तानि। धुरा। न। युक्ताः। रजसः। वहन्ति ॥ १९ ॥

येसूर्यसोमयोश्चक्रे वर्तमानारश्मयोग्रहादयश्च तत्परिभ्रमणवशेनअर्वाञ्चः अर्वागंचनाः अधोमुखाःसन्ति ताँउ तानेवपराचआहुः पुराङ्मुखांचनानूर्ध्वानाहुःकालविदः तथा प्रथमं येपराञ्चः परागञ्चनाः ताँउ तानेवअर्वाचआहुः हेसोम त्वंइन्द्रः परमेश्वरः इरांभूमिंवृष्ट्याधारकआदित्यः यद्वा द्वादशादित्यानांमध्येइन्द्रोप्येकःविवस्वदिन्द्रयुताइत्युक्तत्वादयमपीन्द्रःसचयुवां या यानिमण्डलपरिभ्रमणानिचक्रथुः कृतवन्तौ तानिरजसोरंजनात्मकस्यलोकस्य कर्मणिषष्ठी लोकंवहन्ति निर्वहन्ति तत्रदृष्टान्तः—धुरान शकटादौधुरियुक्ताःसंबद्धाअश्वादयोयथाधुरंवहन्तितद्वत् यद्वा एतत्पूर्वार्धेदृष्टान्तितं धुरायुक्ताः धुरिस्थितंचक्रमपिधुरशब्देनोच्यते तत्रयुक्ताः समर्पिताः पुरुषाः तत्परिभ्रमणवशेनार्वाञ्चः पराञ्चोभवन्ति पराञ्चोप्यर्वाञ्चोभवन्तितद्वत् ॥१९॥

१९. जिन्हें विद्वान् लोग अधोमुख कहते हैं, उन्हीं को ऊर्ध्वमुख भी कहते हैं और जिन्हें ऊर्ध्वमुख कहते हैं, उन्हें अधोमुख भी कहते हैं। सोम, तुमने और इन्द्र ने जो मण्डलद्वय बनाया है, वह युग-युक्त अश्व आदि की तरह विश्व का भार वहन करता है।

अथविंशी-

द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते।
तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति॥२०॥१७॥

द्वा। सुऽपर्णा। सऽयुजा। सखाया। समानम्। वृक्षम्। परि।
सस्वजाते इति। तयोः। अन्यः। पिप्पलम्। स्वादु। अत्ति।
अनश्नन्। अन्यः। अभि। चाकशीति ॥ २० ॥ १७ ॥

अत्रलौकिकपक्षिद्वयदृष्टान्तेनजीवपरमात्मानौस्तूयेते यथालोकेद्वौसुपर्णौ सुपतनौशोभनगमनौ सयुजासमानयोगौ सखायौ समानख्यानौ समानं वृक्षं परिषस्वजाते एकमेववृक्षंपरि-

षस्वजाते आश्रयतः तयोरन्यः एकः पिप्पलंपक्कंफलं स्वाद्वत्ति स्वादुतरमत्ति अपरःअनश्नन्अ-
भिचाकशीतिअभिपश्यति तद्वत् द्वौसुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ सयुजासमानयोगौ यो-
गोनामसंबन्धः सचतादात्म्यलक्षणः सएवात्मा परमात्मनःस्वरूपंयस्यजीवात्मनः एवमेकस्वरू-
पावित्यर्थः अनेनभास्करमतानुसारिणोऽतिरेकनाम्नोजीवात्मा परमात्मनोनान्यः सचपरमात्मा
जीवादन्योजीवाश्रयणादितिमतंनिरस्तंभवति । ननु संबन्धोद्विष्ठः सचपक्षिणोरेवभेदमपेक्षते
अतः कथमैकात्म्यमिति न औपाधिकभेदंवास्तवाभेदंचापेक्ष्यप्रवृत्तः अतएव सखायौ समान-
ख्यानौ नान्यख्यानौ नन्वेकस्य यादृशंख्यानं तादृशमेवान्यस्येतिव्युत्पत्त्याभेदःस्फुटंप्रति-
भाति कथंतादात्म्यमुच्यतइतिनवक्तव्यं नात्रपरस्परंदृष्टान्तदार्ष्टान्तिकभावः अपितुयस्ययादृ-
शंख्यानं स्फुरणं परमात्मनः तदेवख्यानमितरस्यापि जीवात्मनइतिसखायावित्युच्यते एक-
रूपप्रकाशावित्यर्थः अतउपपन्नमैकात्म्यं अनेनवास्तवभेदोपिनिरस्तः समानंवृक्षंपरिषस्वजा-
तेइत्यत्र यथाश्रयान्तराभावादुभयोरेकाश्रयत्वमभ्युपगन्तव्यम् तद्वत्सयुजासखायावित्युभयत्रा-
प्येकयोगख्याने आश्रयणीये वृश्च्यतइतिवृक्षोदेहः सचोभयोःसमानएकएव जीवस्यभोगार्थ-
त्वात् परमात्मनासृष्टैर्महाभूतैरारब्धत्वात्तस्योपलब्धिस्थानत्वाच्चोभयोरपिसमानः तादृशं समानं
वृक्षंपरिषस्वजाते परिष्वजतः आश्रयतः नचजीवस्यवस्तुतईश्वरत्वेकथंजीवबुद्ध्यासंसारशो-
काविति वाच्यं तयोर्मोहकृतत्वात् तथाचाथर्वणिकाअनुमन्त्रमाम्नाय अस्यसंदेहनिवर्तकमुत्त-
रंमन्त्रमेवमामनन्ति—समानेवृक्षेपुरुषोनिमग्नोअनीशयाशोचतिमुह्यमानः । जुष्टंयदापश्यत्यन्य-
मीशमस्यमहिमानमितिवीतशोकइति । अस्यायमर्थः—एकएवशरीरेपूर्णःपुरुषः परमात्मा निम-
ग्नोनिगूढःसन् स्वयमपीश्वरोप्यनीशत्वबुद्ध्यामुह्यमानोमूढःसन्शोचति संसारेअहंकर्ता सुखीदुः
खीतिजननमरणेनुभवति यदातुजुष्टं नित्यतृप्तं अन्यं संसारशोकातीतंईशंपरमेश्वरंपश्यति
स्वानन्यतयासाक्षात्करोति तदावीतशोकः देहाद्व्यतिरिक्तःस्वस्वरूपसाक्षात्कारेण गतताप-
त्रयःसन् अस्यमहिमानमिति निरस्तसमस्तौपाधिकस्य परमेश्वरस्यमहिमानं सार्वात्म्यसर्वज्ञ-
त्वादिमहिमानमिति एति प्राप्नोति नचतद्भावान्यत्रतन्महिमाप्राप्यते अतस्तद्रूपोभवतीत्यर्थः त-
स्माद्वस्तुतएकएव भेदस्तुमोहकृतइतिप्रसिद्धम् । अनुभवदशायां लौकिकबुद्ध्याभेदमभ्युपे-
त्योच्यते तयोरन्योजीवात्मापिप्पलंकर्मफलंस्वादुस्वादुभूतमत्तिभुंक्ते यस्य यदुपार्जितं तत्तस्य
स्वादुभवति अन्यः परमात्माअनश्नन् आप्तकामत्वेनाभुंजानः स्पृहायाअभावात् आप्तकाम-
स्यकास्पृहेतिस्मृतेः । तस्मादवास्तवभेदमुपजीव्यतयोरन्यइत्युक्तम् वस्तुतस्त्वनीशयाशोचति-
मुह्यमानइत्युक्तत्वादभेदएव तादृशःपरमात्मा अभिचाकशीति स्वात्मन्यध्यस्तंजगत्साक्षित्वेनेक्षते

अत्रद्वौद्वौप्रतिष्ठितौ सुकृतौ धर्मकर्तारावित्यादिनिरुक्तेगतं अस्यमन्त्रस्यव्याख्यानमनुसंधेयम्॥ २० ॥

२०. दो पक्षी (जीवात्मा और परमात्मा) मित्रता के साथ एक वृक्ष या शरीर में रहते हैं। उनमें एक (जीवात्मा) स्वादु पिप्पल का भक्षण करता और दूसरा (परमात्मा) कुछ भी भक्षण (भोग) नहीं करता, केवल द्रष्टा है।

॥ इतिद्वितीयस्यतृतीयेसप्तदशोवर्गः ॥ १७ ॥

अथैकविंशी—

यत्रा॑सु॒प॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषंवि॒दथा॑भि॒स्वर॑न्ति ।
इ॒नोविश्व॑स्य॒भुव॑नस्यगो॒पाःसमा॒धीरः॒पाक॒मत्रावि॑वेश ॥ २१ ॥

यत्र॑ । सु॒ऽप॒र्णाः । अ॒मृत॑स्य । भा॒गम् । अनि॑ऽमेषम् । वि॒दथा॑ ।
अ॒भि॒ऽस्वर॑न्ति । इ॒नः । विश्व॑स्य । भुव॑नस्य । गो॒पाः । सः ।
मा॒ । धीरः॑ । पाक॑म् । अत्र॑ । आ । वि॒वे॒श ॥ २१ ॥

यत्रादित्यमण्डलेसुपर्णाः सुपतनाः शोभनगमनारश्मयः अमृतस्योदकस्यभागंभजनीयमंशंआदाय अनिमेषंअनवरतं विदथावेदनेनज्ञानेनअस्माभिरेवंकर्तव्यमितिबुद्ध्वाअभिस्वरन्ति अभिप्रापयन्ति यश्चविश्वस्यभुवनस्यभूतजातस्यइनः स्वामी तथातस्यैवगोपाः गोपायिता रक्षितायमादित्यः सः परमेश्वरः धीरोधीमान् प्राण्यनुग्रहबुद्धियुक्तःसन् मामांपाकंपक्तव्यं अपक्कप्रज्ञं अत्रास्मिन्स्वकीयमण्डले आविवेश प्रवेशयति अत्रास्मदीयेदेहेवानियामकतयाप्रविष्टइत्यधिदैवतपक्षे। अथाध्यात्मपक्षे यत्रयस्मिन्नात्मनिसुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणायगमनकुशलानीन्द्रियाणि चक्षुरादीनि अमृतस्यभागं अत्रविषयावच्छिन्नचैतन्यममृतमित्युच्यते तस्यभागंभजनीयंस्वस्वांशं अनिमेषं निमेषरहितं अनारतं विदथा वेदनेनवृत्त्यवच्छिन्नचैतन्येनावरुद्धानिअभिस्वरन्ति अभिप्रयन्ति आवरणापगमनेन स्फोरयन्ति किञ्च यस्विनः स्वाम्यस्यदेहस्य विश्वस्यभुवनस्यगोपाः गोपायिता रक्षिता यद्वा विश्वस्यभुवनस्य भूतजातस्यस्वामी अस्यदेहस्यगोपाः अनेन तत्त्वंपदार्थयोरेकत्वंप्रतिपादितंभवति सपरमेश्वरोधीरः समाधिनिष्ठः सर्वदाअविक्रियः मामांपाकं परिपक्कमनस्कं यागदानादिना अपगतरजस्तमस्कत्वेनदर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कंमां आविवेश उक्तरूपेचित्ते तादृशंवस्तुस्फुरतीत्यर्थः

२

१ नि० १२.४३.

यद्वा परिपक्कमनाहं पूर्वमज्ञानदशायां मदन्यईश्वरोस्तीत्यविद्वान् ततःपरमस्तिकश्चित्सर्वज्ञःसर्वेश्वरःसत्यज्ञानादिलक्षणइतिनिश्चित्य पश्चात् गुरुशास्त्राभ्यांसएवाहमस्मीतिमत्वा एवंपारंपर्येणावगत्यासंभावनाविपरीतभावनेव्युदस्य भावनयासाक्षात्कृत्य परिपूर्णः परमात्माभूवमित्यर्थः अयमेव समाधीरःपाकमत्राविवेशेत्यनेनोच्यते नन्वनवच्छिन्नस्यपरमात्मनः सर्वत्रव्याप्तत्वात्प्राप्तिरेवनोपपद्यते संप्रत्यत्रप्राप्तिर्द्विविधा प्राप्तप्राप्तिरप्राप्तप्राप्तिश्चेति प्राप्तस्यापिकंठेचामीकरन्यायेनावरणाज्ञानहानद्वारेणप्राप्तिरुपपद्यते अस्यमन्त्रस्ययन्निरुक्तं[1] यत्रसुपर्णाःसुपतनाआदित्यरश्मयइत्यादिकंतदत्रद्रष्टव्यम् ॥ २१ ॥

२१. जिनमें (सूर्यरूप मण्डल में) सुन्दर गति रश्मियाँ, कर्त्तव्यज्ञान से अमृत का अंश लेकर सदा जाती हैं और जो धीर भाव से सारे भुवनों की रक्षा करते हैं, मेरी अपरिपक्व बुद्धि होने पर भी मुझे उन्होंने, स्थापित किया।

अथद्वाविंशी—

यस्मिन्वृक्षेमध्वदःसुपर्णानिविशंतेसुवतेचाधिविश्वे ।
तस्येदाहुःपिप्पलंस्वाद्वग्रेनत्नोन्नशद्यःपितरंनवेद ॥ २२ ॥

यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च । अधि । विश्वे । तस्य । इत् । आहुः । पिप्पलम् । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥ २२ ॥

अत्रवृक्षत्वरूपककल्पना अधिदैवतेआदित्यं अध्यात्ममात्मानंचप्रशंसति यस्मिन्नादित्येवृक्षेवृक्षवत्सर्वफलाश्रयभूतेमध्वदः मध्वित्युदकनाम तददन्तीतिमध्वदःउदकस्याचारःसुपर्णाः सुपतनारश्मयोनिविशन्ते प्रविशन्तिरात्रौसुवतेच पुनरुदयकालेप्रकाशंजनयन्तिच यस्मादादित्यात् कुत्रअधिविश्वेविश्वस्योपरितस्यादित्यवृक्षस्यपिप्पलं पालकंफलंस्वादुरसवत् अग्रेउपरिउपासनानन्तरंआहुः कथयन्तितत्त्वविदः यद्वा सर्वस्मादुपरिवर्तमानमाहुः ईदृशंपितरं जगतःपालयितारंयोनरोनवेद नोपास्ते सतन्नोन्नशत् नशतिर्गतिकर्मा तत्फलंनप्राप्नोति वेदितुस्तु अग्रेपिप्पलमाहुरित्यर्थः इत्पूरणः इत्यधिदैवपक्षे । अथाध्यात्मपक्षे यस्मिन्परमात्मनिवृक्षे वृक्षवद्जन्मनादिरहिते अविक्रिये सुपर्णाः शोभनगमनानींद्रियाणि मध्वदः मधुनोज्ञानस्यअत्रीणितत् ज्ञानेनज्ञानभांजीत्यर्थः निविशन्तेस्वापकालेस्वस्वविषयेभ्यः प्रतिनिवृत्तानिआत्मनिवृत्त्यालीयन्ते पुनःप्रबोधकाले अधिविश्वेविश्वस्योपरिसुवतेचउद्यन्ति स्वस्वविषयान्लभन्तइत्यर्थः तस्यपरमात्मनः पिप्पलं पालकंसंसारतउद्धारकंस्वादु आस्वादनीयंअमृतत्वलक्षणंज्ञानं यत्फला-

---

१ नि० ३. १२. ।

स्वादनेपुनः क्षुत्तृष्णाशोकमोहजरामरणादयोनभवन्तितद्धिस्वादुतमं इतरस्वर्गादिफलानिपुनर्जननाद्यापादकत्वादापातस्वादूनि तत्फलं अग्रेस्वरूपज्ञानोत्तरकालमाहुः यःपुमान् पितरंपालकंज्ञानफलं तत्फलाधारमात्मानंवानवेद नजानाति गुरुशास्त्राव सतत्फलंनोन्नशव् नप्राप्नोति अतआत्मानंयोवेदसएवतन्मोक्षफलंप्राप्नोतीत्यर्थः यद्वा चर्मवदाकाशमित्यादिश्रुतेर्ज्ञानाद् अन्योपायस्यामृतत्वप्राप्तिंनिवारयति ब्रह्मवेदब्रह्मैवभवतीत्यादिकानुज्ञामाप्तिमाह तस्मादीदृशंपरमेश्वरंविदित्वामुक्तोभूयासमित्यर्थः ॥ २२ ॥

२२. जिस (आदित्य) वृक्ष पर जलग्राही किरणें रात को बैठतीं और संसार के ऊपर प्रातःकाल दीप्ति प्रकट करती हैं; विद्वान् लोग उनका फल प्रापणीय बताते हैं। जो व्यक्ति पिता (सूर्य या परमात्मा) को नहीं जानता, वह इस फल को नहीं प्राप्त करता।

यद्गा॑य॒त्रे अधि॒ गाय॒त्रमाहि॑तं॒ त्रैष्टु॑भाद्वा॒ त्रैष्टु॑भं॒ निर॒तक्ष॑त ।
यद्वा॒ जग॒ज्जग॒त्याहि॑तं प॒दं य इत्तद्वि॒दुस्ते अ॑मृत॒त्वमा॑नशुः ॥ २३ ॥

यत् । गा॒य॒त्रे । अधि॑ । गा॒य॒त्रम् । आऽहि॑तम् । त्रैस्तु॑भात् । वा॒ । त्रैस्तु॑भम् । निः॒ऽअत॑क्षत । यत् । वा॒ । जग॑त् । जग॑ति । आऽहि॑तम् । प॒दम् । ये । इत् । तत् । वि॒दुः । ते । अ॒मृ॒त॒ऽत्वम् । आ॒न॒शुः ॥ २३ ॥

गायत्रेअधिगायत्रमाहितं प्राथम्यात्सर्वैःस्तुत्यत्वाच्च गायत्रीभूः तदीयंस्थानंगायत्रंअधि उपरि तत्रगायत्रमाग्नेयंपदंआहितं प्रथमसृष्टत्वाद् गायतित्रायतेचेतिव्युत्पत्त्याचप्रजापतेर्मुखाद्गायत्र्यासहोत्पन्नत्वाद्भक्त्याग्निरपिगायत्रः गायत्रोग्निरितिश्रुतेः। भूम्यामग्निःस्थापितइति यदस्ति तथा त्रैष्टुभा द्वितीयत्वाद् वृष्टिपर्जन्यविद्युद्रूपत्रिस्तोभयुक्तादन्तरिक्षात्त्रैष्टुभंत्रिस्तोभयुक्तं ऊर्ध्वाधस्तिर्यग्लक्षणस्तोभत्रयोपेतंवायुं निरतक्षत साधुसंपादितवन्तोदेवाइतियदस्ति वा अथवा जगति सर्वैर्गन्तव्ये उद्गततमेवातृतीयभूते द्युलोकेच जगत् गमनशीलंआदित्याख्यंपदमाहितमितियदस्ति तदिदंत्रिषुस्थानेषुत्रयाणामग्न्यादीनांपदाधानं यद्वद् येएवनराविदुर्जानन्ति तएवामृतत्वमानशुःअमरणरूपंपदमाप्नुवन्ति इत्यधिलोकम्। अथाधियज्ञं गायत्रेप्रातःसवने अधिउपरिगायत्रंछन्दः पदमाहितमितियद् तथा त्रैष्टुभाद् माध्यंदिनात्सवनाद् त्रैष्टुभंछन्दोनिरतक्षत तत्रआहितमितियद् वा किंचेत्यर्थः जगतितृतीयसवने जगद् जागतंपदमाहितमितियद् तत्तादृशंसवनत्रयेषुछन्दस्त्रयसंस्थापनं येनराविदुः यजमानाविदुर्जानन्ति तेअमृतत्वंज्ञानानुष्ठानद्वारेण मोक्षमानशुः आप्नुवन्ति अथवागायत्रेप्रातःसवने त्रिषुसवनेषुछन्दस्त्रयंपरिमाणाद् सवनान्यपितत्तच्छन्दःशब्देनोच्यन्ते

गायत्रंप्रातःसवनं त्रैष्टुभंमाध्यंदिनंसवनं जागतंतृतीयसवनमितिश्रुतेः । तादृशेप्रातःसवनेअधिउपरि गायत्रं अष्टाक्षरात्मकं आहावप्रतिगररूपंगायत्रंपदमाहितं तद्यथाहोताशोंसावोमितित्र्यक्षरेण आह्वयते तथाशोंसामोदैवोमिति पञ्चाक्षरेणाध्वर्युःप्रतिगृणाति तन्मिलित्वाऽष्टाक्षरंसंपद्यते तच्चाष्टाक्षरंगायत्रीसदृशं तस्याअपिपादस्याष्टाक्षरत्वात् इदमेकंप्रातःसवनरूपेगायत्रेगायत्रपदप्रतिष्ठापनं तथासवनान्तेऽपिशंसनानन्तरमुक्थंवाचीतिचतुरक्षरमाह होता ओमुक्थशाइतिचतुरक्षरमध्वर्युः तदष्टाक्षरंसंपद्यते एतदपरं गायत्रेगायत्रस्थापनं । तथा त्रैष्टुभान्माध्यंदिनसवनात् त्रैष्टुभंआहावप्रतिगरणरूपंपदंनिरतक्षतऋत्विजः तद्यथा—माध्यंदिनसवनेहोताध्वर्योशोंसावोमित्याह्वयते षडक्षरेण अध्वर्युश्चशंसामोदैवोमितिपञ्चाक्षरेणप्रतिगृणाति तन्मिलित्वैकादशाक्षरंसंपद्यते इदमेकंमाध्यंदिनसवनादौत्रैष्टुभेत्रैष्टुभाधानं । तथासवनान्तेपि शंसनानन्तरं उक्थंवाचिइन्द्रायेति सप्ताक्षरमाह होता अध्वर्युश्चोमुक्थशाइतिचतुरक्षरेणप्रतिगृणाति तन्मिलित्वैकादशाक्षरंसंपद्यते इदमपरंत्रैष्टुभे त्रैष्टुभस्थापनं । तथा तृतीयसवनेहोताध्वर्योशोशोंसावोमितिसप्ताक्षरेणाह्वयते शंसामोदैवोमितिपञ्चाक्षरेणाध्वर्युःप्रतिगृणाति तत् द्वादशाक्षरंभवति तदिदंप्रथमंजागतेजागतोत्पादनं तथापश्चादपिशंसनानन्तरमाह—उक्थंवाचीन्द्रायदेवेभ्यइति एतदेकादशाक्षरंभवति तमिदन्द्वंसन्तमिन्द्रइत्याचक्षतइतिश्रुतेः संख्यापूर्तिः ओमित्यध्वर्युरेकाक्षरेणप्रतिगृणाति तन्मिलित्वाद्वादशाक्षरं संपद्यते तदिदमपरंजागतेजागतपदस्थापनं । एवंत्रिषुछन्दस्सु त्रिषुगायत्र्यादिसवनेषु गायत्रादिच्छन्दस्त्रयःपदप्रतिष्ठापनं एतत्सर्वमैतरेयब्राह्मणे—देवविंशःकल्पयितव्याइतिखण्डेविस्पष्टमाम्नातम् । तत्तादृशंछन्दसिछन्दःस्थापनंयइत्तद्विदुः येएवजानन्ति तएवामृतत्वमानशुः प्राप्नुवन्त्यनुष्ठानद्वारा एवमजानन्तोनुष्ठानेनापिनफलंप्राप्नुवन्तीत्यर्थः तस्यसाकल्याभावादितिभावः ॥२३॥

२३. जो पृथिवी पर अग्नि का स्थान जानते हैं, जो जानते हैं कि, देवों ने, अन्तरिक्ष से, वायु को उत्पन्न किया है तथा जो ऊर्ध्वतन प्रदेश में आदित्य का स्थान जानते हैं, वे अमृतत्व पाते हैं।

अथचतुर्विंशी—

गायत्रेणप्रतिमिमीतेअर्कमर्केणसामत्रैष्टुभेनवाकम् ।
वाकेनवाकंद्विपदाचतुष्पदाक्षरेणमिमतेसप्तवाणीः ॥ २४ ॥

गायत्रेण । प्रति । मिमीते । अर्कम् । अर्केण । साम । त्रैस्तुभेन । वाकम् । वाकेन । वाकम् । द्विऽपदा । चतुःऽपदा । अक्षरेण । मिमते । सप्त । वाणीः ॥ २४ ॥

---

१ तै० सं० ६-४.५. २ ऐ० ब्रा० ३. १२.

गायत्रेणगायत्रच्छन्दसाअर्कंअर्चनसाधनंमन्त्रंप्रतिमिमीते प्रत्येकंपरिच्छिनत्ति अर्कोमन्त्रो-भवतियदनेनार्चन्तीतिनिरुक्तं । प्रतिमन्त्रंगायत्रेणच्छन्दसोपनिबद्धंकरोति उपलक्षणमेतदन्येषां छन्दसां यद्वेतरेषांछन्दसामस्यैवचतुश्चतुरक्षराधिक्येन तत्तच्छन्दोनिष्पत्तेरस्यप्रकृतित्वात् प्राधान्येनेदमुक्तम् अर्कशब्दोजात्यभिप्रायः सर्वान्मन्त्रान्गायत्र्यादिभिश्छन्दोभिःप्रतिमिमीत-इत्यर्थः यद्वा प्रतिशब्दःसमित्येतस्मिन्नर्थे छन्दोभिर्मन्त्रान्संमितंकरोतीत्यर्थः अर्केणसाम उक्तलक्षणेनमन्त्रेणसामगायत्ररथंतरसंज्ञकंसामप्रतिमिमीते नन्वेकंसामतृचेक्रियतइतितिसृष्वेकंसामविहितं अतोर्कैःसामेतिवक्तव्यम् कथमुच्यतेअर्केणेति न वस्तुतएकंसामैकस्यामृच्यारूढं पश्चादन्योन्यां तदुत्तरयोर्गायतीत्यतिदेशतःप्राप्तंतिसृषुगानं अतएकवचनमविरुद्धम् त्रैष्टुभेनवाकं अत्रत्रिष्टुबुपादानमितरच्छन्दःप्रदर्शनार्थं अथवा अनादेशेसर्वत्रत्रिष्टुभोग्रहणात् प्राचुर्याभिप्रायेणेदमुक्तं त्रैष्टुभेनद्विवारत्रिवारावृत्तेनद्वृचतृचरूपंवाकंवक्तव्यं एकैकंछन्दः प्रतिमिमीते अथवा वाकंसूक्तं एतावद्भिस्त्रिष्टुब्भिरुपनिबद्धमिदंसूक्तमितितादृशेनवाकेन वाकंवाकवर्गंअनुवाकंवा मिमीते कीदृशेनवाकेनेतिसविशेष्यते द्विपदाचतुष्पदा पादद्वयबद्धविराडादिछन्दोनिबद्धमन्त्ररूपेण चतुष्पदापादचतुष्टयोपेतेन अनुष्टुबादिमन्त्ररूपेणेति इयतीभिर्द्विपदाभिर्वर्गः इयतीभिश्चतुष्पदाभिरुपेतोवर्गः इयद्द्विपदरूपैर्वाकैः इयच्चतुष्पदरूपैर्वाकैश्चपरिमितोनुवाकइति । सूक्तपक्षेएतावद्भिः सूक्तैरयमनुवाकइति किञ्चाक्षरेण अक्षरेणैवसप्तवाणीः वागधिष्ठितानिसप्तच्छन्दांसिमिमते निर्माणंकुर्वन्ति अष्टाक्षरागायत्रीएकादशाक्षरात्रिष्टुप् द्वादशाक्षराजगतीति अक्षरैःपादाःपरिमीयन्ते परिमितैःपादैश्छन्दांसि ततःपादानांछंदसांअक्षरंमूलमिति तथा ऋग्वर्गसूक्तानुवाकादीनांचाक्षरंमूलमित्यक्षरप्रशंसा॥ २४ ॥

२४. उन्होंने गायत्री छन्द-द्वारा पूजन-मंत्र की सृष्टि की, अर्चना-मंत्र-द्वारा साम को बनाया, त्रिष्टुप्-द्वारा द्वृच-तृच-रूप वाक् का निर्माण किया, द्विपाद और चतुष्पाद वचन के द्वारा अनुवाक-रचना की तथा अक्षर-योजना-द्वारा सातों छन्दों की रचना की।

अथपञ्चविंशी—

जगता सिन्धुं दिव्यंस्तभायद्रथन्तरे सूर्यं पर्यपश्यत् ।
गायत्रस्यं सुमिधंस्तिस्र आंहुस्ततो मह्ना प्ररिरिचे महित्वा ॥ २५ ॥ १८

जगता । सिन्धुम् । दिवि । अस्तभायत् । रथम्ऽतरे । सूर्यम् ।
परि । अपश्यत् । गायत्रस्य । सम्ऽइधः । तिस्रः । आहुः ।
ततः । मह्ना । प्र । रिरिचे । महिऽत्वा ॥ २५ ॥ १८॥

---

१ नि० ५. ४. ।

जगतीछन्दस्कायामृच्युत्पन्नंसाम जगत् तेन ब्रह्मासृष्टिकाले सिन्धुंस्यन्दनशीलं उदकस्य स्यंदकंवादित्यं दिवि द्युलोकेअस्तभायत् स्तंभितवान् जागतोवा एषयएषतपतीतिश्रुतेः। रथन्तरे एतन्नामके साम्नि स्तंभितं सूर्यं पर्यपश्यत् परिदृष्टवान्प्रजापतिः तदाधारभूतायामृचि स्वर्दृशमितिसूर्यप्रतिपादकशब्ददर्शनात् असौवावस्वर्दृगितिहिश्रुतिः । अतएवतत्रसूर्यदर्शनं विधीयते रथन्तरे प्रस्तूयमाने संमील्येव स्वर्दृशं प्रतिवीक्षेतेति साम ब्राह्मणेन गायत्रस्य गायत्र्यामुत्पन्नस्यसाम्नः समिधः समिन्धनास्तिस्रोविभक्तीराहुः पादत्रयमाहुरित्यर्थः अथवा तिस्रऋचआहुःततोहेतोः मह्ना बलेन महित्वामहत्त्वेनप्ररिरिचे प्ररिच्यतेअन्यानिसामानि पृथक्पृथङ्निर्मितवान् यद्वा गायत्रशब्दः छन्दोवाची तस्यतिस्रोमूर्तीराहुः क्रमेणाष्टाक्षरैकादशाक्षरद्वादशाक्षरैर्गायत्रीत्रिष्टुब्जगत्यात्मिकाः यस्मादेवंततस्तस्माद्गायत्रीछन्दसांकनिष्ठासती मह्ना बलेन महत्त्वेन प्ररिरिचे सर्वाणिच्छन्दांस्यतिक्रामति येनैवबलेनसोममाहृतवती तादृशेनैवंभवति ॥ २५ ॥

२५. जगती छन्द-द्वारा उन्होंने द्युलोक में वृष्टि को स्तम्भित कर रखा है, रथन्तर साम या सूर्य-सम्बन्धीय मंत्र में सूर्य को देखा है। पण्डित लोग कहते हैं कि गायत्री के तीन चरण हैं; इसलिए गायत्री माहात्म्य और ओजस्विता में अन्य सबको लाँघ जाती है।

॥ इतिद्वितीयस्यतृतीयेऽष्टादशोवर्गः ॥ १८ ॥

प्रवर्ग्येघर्मदुघाह्वानकाले उपह्वयइत्यादिकेद्वेऋचौ उपह्वयेसुदुघांधेनुमेतामितिद्वेइति सूत्रितत्वात्।

सैषाषड्विंशी—

**उपह्वयेसुदुघांधेनुमेतांसुहस्तोगोधुगुतदोहदेनाम् ।**
**श्रेष्ठंसवंसवितासाविषन्नोभीद्धोघर्मस्तदुषुप्रवोचम् ॥ २६ ॥**

**उप । ह्वये । सुऽदुघाम् । धेनुम् । एताम् । सुऽहस्तः । गोऽधुक् ।**
**उत । दोहत् । एनाम् । श्रेष्ठम् । सवम् । सविता । साविषत् ।**
**नः । अभिऽइद्धः । घर्मः । तत् । ऊम् इति । सु । प्र । वोचम् ॥ २६ ॥**

अहंहोताउपह्वये उपेत्याह्वयामि किंएतां धेनुं आगच्छन्तीं क्षीरेणप्रीणयित्रींगां प्रवर्ग्यार्थां पुनःकीदृशीं सुदुघां सुष्ठुदोग्ध्रीं उत अपिच एनां उक्तलक्षणां गां सुहस्तः शोभनहस्तः दोहनकुशलः गोधुक् गोदोग्धा अध्वर्युः दोहत् दोग्धि यस्मादेवं तस्मादुपह्वयइत्यर्थः तदर्थंसवितासर्वस्यानुज्ञातापरमेश्वरोनोऽस्मदीयं श्रेष्ठंप्रशंस्यं सवं सोमयागं क्षीरंवा साविषत् अनुजानातु कथ-

---

१ ऐ० ब्रा० ४. १०.

मेवं तच्छब्दश्रुतेर्यच्छब्दाध्याहारः यद्यस्मात् घर्मः प्रवर्ग्यः यद्धर्मइत्यतः यत्तद्धर्मस्यघर्मत्व-मितितैत्तिरीयकम् । तत्तादृशोभीद्धः अभिदीप्तः तदु उशब्दएवकारार्थः तस्मादेवकारणात् सुप्रवोचं सुष्टुब्रवीमिउपह्वयइति । यद्वा एतांपुरतोदृश्यमानांधेनुंवृष्ट्याप्रीणयित्रींमेघलक्षणांधेनुं उपह्वये आह्वयामि वर्षदोहाय किंचैनांधेनुं सुहस्तः शोभनदोहनकुशलहस्तोपेतोगोधुक् गोदोग्धा आदित्योवावायुर्दोहत् दोग्धि तदधीनत्वाद्वर्षणस्य किंच तदर्थं सवितापेरकः परमेश्वरोस्मदर्थं अस्मदुपभोगादृष्टमपेक्ष्यसाविषत् अनुजानातु प्रतिबन्धंमाकरोत्वित्यर्थः किमितीदमुच्यतइत्युच्यते—घर्मः ग्रीष्मःअवर्षणजनितः सस्यशोषः अभीद्धः प्रवृद्धःतदुप्रवोचं तस्मादेवकारणात्ब्रवीमि ब्रवीतेर्लुङिवच्यादेशे अस्यतिवक्तीत्यादिनाचेरङ् छान्दसोडभावः ॥ २६ ॥

२६. मैं इस दुग्धवती गौ को बुलाता हूँ। दूध दुहने में निपुण व्यक्ति उसे दूहता है। हमारे सोम के श्रेष्ठ भाग को सविता ग्रहण करें; क्योंकि उससे उनका तेज प्रवृद्ध होगा। इसलिए मैं उन्हें बुलाता हूँ।

हिङ्कृण्वतीवसुपत्नीवसूनांवत्समिच्छन्तीमनसाभ्यागात् ।
दुहामश्विभ्यांपयोअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ २७ ॥

हिङ्ऽकृण्वती । वसुऽपत्नी । वसूनाम् । वत्सम् । इच्छन्ती । मनसा । अभि । आ । अगात् । दुहाम् । अश्विऽभ्याम् । पयः । अघ्न्या । इयम् । सा । वर्धताम् । महते । सौभगाय ॥ २७ ॥

यथाहूतागौः हिङ्कृण्वती वत्संप्रतिहिङ्कारंकुर्वती वसूनांवसुपत्नीक्षीरदध्याज्यादिबहुधनानांसर्वदापालयित्री वृत्त्यवृत्तिभ्यांवसुनःपालयित्रीत्वं तस्यैवाधिक्यंचप्रतिपाद्यते पुनःकीदृशी मनसावत्समिच्छन्ती ईदृशीसाअभ्यागात् अभ्यागमत् इयंआगता अघ्न्यागोनामैतत् अहननीयागौः अश्विभ्यांताभ्यामर्थायपयःक्षीरंदुहांदुग्धां सातादृशीमहतेसौभगाय प्रवृद्धायसौभाग्याय वर्धतां प्रवृद्धाभवतु यद्वास्मैसौभगायक्षीरंवर्धयतां अत्रापिवृष्टिपरत्वेनयथायोगंयोग्यं हिङ्कृण्वतीवर्षणायशब्दयन्ती वसूनां गोसस्यादिधनानां बहूनांवसुपत्नी तेषामेवपालयित्री वत्संलोकं वत्सवत्पोषणीयंमनसाइच्छन्तीप्रीणयितुंअभ्यागात् अभिगच्छती मेघरूपासाचाघ्न्या अहन्तव्याप्रस्तुत्येत्यर्थः पयउदकंअश्विभ्यां व्याप्ताभ्यां स्थावरजंगमाभ्यांअर्थाय यद्वा अश्विनैवाय्वादित्यौताभ्यांसकाशाद्दुहांदुग्धां तौहि वृष्टेर्मोचयितारौ शिष्टमविशिष्टम् ॥ २७ ॥

२७. धनशाली धेनु वत्स के लिए मन ही मन व्यग्र होकर "हम्बा" करती हुई आती है। यह अश्विनीकुमारों के लिए दूध दे और महासौभाग्य-लाभ के लिए प्रवृद्ध हो।

प्रवर्ग्येअभिष्टवेदोहनसमयेवत्सेमातुःसकाशादपनीयमानेगौरमीमेदित्येषा सूत्रितंच—गौरमीमेदनु वत्संमिषन्तंनमसेदुपसीदतेति ।

सैषाष्टाविंशी—

गौरमीमेदनुवत्संमिषन्तंमूर्धानंहिङ्ङकृणोन्मातवाउ ।
सृक्वाणंघर्ममभिवावशानामिमातिमायुंपयतेपयोभिः ॥ २८ ॥

गौः । अमीमेत् । अनु । वत्सम् । मिषन्तम् । मूर्धानम् । हिङ् ।
अकृणोत् । मातवै । ऊम् इति । सृक्वाणम् । घर्मम् । अभि ।
वावशाना । मिमाति । मायुम् । पयते । पयःऽभिः ॥ २८ ॥

गौर्धेनुः मिषन्तंनिमीलिताक्षंवत्समनुप्राप्यअमीमेत् शब्दंकरोति मीमयतिःशब्दकर्मा यद्वा उक्तंवत्समनुआत्मानंप्रक्षिपति किञ्च तस्यवत्सस्यमूर्धानंमातवैमातुं निर्मातुंलेहनेनशोधयितुं ऊशब्दोवधारणे हिङ्ङकृणोत् हिंकारमकरोत् करोति किञ्च सृक्वाणंवत्सस्यशब्दवदनप्रान्तंफेनस्यस्रष्टारं घर्मंक्षीरस्यक्षरणशीलं वत्संअभिअभिलक्ष्य वावशानाभृशंकामयमानामायुंशब्दंमिमाति निर्मातिकरोति तादृशीसतीपयोभिः प्रभूतैःक्षीरैः पयते प्यायते आप्यायनंकरोतिवत्सम् ।अत्रापि मेघपरतयायोजनीयं एवमाहूता मेघरूपा गौर्धेनुः मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षंलोकाख्यंपुत्रंअनुअनुसृत्यामीमेत् गर्जनशब्दंवर्षणचिह्नरूपं करोति मूर्धस्थानीयांभूमिं मातवाउ निर्मातुमेव सस्यादियुक्तांकर्तुं हिङ्ङकृणोत् हिंकाररूपंशब्दमकरोत् प्रतिपादनभेदादपुनरुक्तिः किञ्च सृक्वाणंफलस्यस्रष्टारंघर्मंदोसंपुत्रमभिवावशाना आभिमुख्येनकामयमाना पयोभिरुदकैः पयते प्यायते आप्यायनंकरोति ॥ २८ ॥

२८. धेनु नेत्र बन्द किये बछड़े के लिए "हम्बा" शब्द करती है। बछड़े का मस्तक चाटने के लिए "हम्बा" रव करती है। बछड़े के ओठों पर गाज या फेन देखकर धेनु "हम्बा" रव करती तथा यथेष्ट दूध पिलाकर उसे परिपुष्ट करती है।

अयंसशिङ्क्तेयेनगौरभीवृतामिमातिमायुंध्वसनावधिश्रिता ।
साचित्तिभिर्निहिचकारमर्त्यंविद्युद्भवन्तीप्रतिवव्रिमौहत ॥ २९॥

अयम् । सः । शिङ्क्ते । येन । गौः । अभिऽवृता । मिमाति । मायुम् ।
ध्वसनौ । अधि । श्रिता । सा । चित्तिऽभिः । नि । हि । चकार ।
मर्त्यम् । विऽद्युत् । भवन्ती । प्रति । वव्रिम् । औहत ॥ २९ ॥

सोयंवत्सः शिंके अव्यक्तध्वनिंकरोति येनवत्सेनगौर्माताअभीवृता आगत्याभितोवेष्टिताभवति किञ्च सागौर्मायुंशब्दं मिमाति निर्मिमाति कुत्रस्थिता ध्वसनावधिश्रिता ध्वसनस्थाने गवांनिवासाश्रयेधिष्ठिता सातादृशी चित्तिभिः ज्ञानैस्तत्पूर्वकैःकर्मभिर्वा मर्त्यंनिचकार हि नीचैःकरोति ज्ञानविशिष्टामनुष्याःयथाबालकस्यादनस्तनपानादिस्नेहंकुर्वन्ति ततोऽप्यतिशयमियंकरोतीत्यर्थः किञ्च विद्युद्भवन्ती बहुक्षीरतयाविद्योतमाना वव्रिंस्वकीयंरूपं वव्रिरिति रूपनाम प्रत्यौहत प्रकाशयति यद्वा वत्सस्नेहातिशयस्वरूपं विद्युद्भवन्ती विद्युदिवशीघ्रदर्शनाऔहत अयमेकोर्थः । अर्थान्तरंचशाकपूणिर्नामनिरुक्ताचार्यः सकलमन्त्रदेवताजानामीत्यभिमानितवान् दुर्ज्ञेयस्यतत्त्वस्यस्वरूपमसौजानातिकिलैनंव्यामोहयामीतिमनसिकृत्वासंदिग्धोभयलिंगादेवताप्रादुरासीदथतस्यपुरतः सच तांनबुबुधे बुभुत्सयाचतांस्वरूपंप्रदर्शयेति पप्रच्छ साचायंसशिंकइत्येषामद्देवता तत्रप्रतीयमानंमत्स्वरूपमित्युपदिदेश कथमत्रोभयलिंगत्वं वस्तुतःउभयलिङ्गत्वेकथंदेवतैक्यमिति उच्यते—अत्रोभयलिङ्गत्वमुभयथासंभवति स्त्रीपुंल्लिङ्गद्वयेन मध्यमोत्तमलिंगद्वयेनच तत्कथंअयंसयेनेति पुंल्लिङ्गवाचिनाशब्दत्रयेणमेघःप्रतीयते अधिश्रितासेत्यादिनास्त्रीलिंगवाचकेनमाध्यमिकावाक् अतउभयलिंगत्वं तथाविद्युद्भवन्तीत्यन्तं मध्यमलिङ्गं तत्रमेघस्तनितयोर्माध्यमिकयोःप्रतीतेः तथासतिवव्रिमौहत इत्यत्रवर्षेणपृथिवींप्रच्छाद्य तस्यारसंप्रत्यादत्तइत्ययमर्थोविवक्षितः सचादित्यव्यापारइत्युत्तमलिंगत्वं तर्हिवस्तुतउभयलिंगत्वप्रतीतेः उभेअपिदेवते यल्लिङ्गंसादेवतेतिन्यायात् अतःकथमेकदेवतासिद्धिरिति अयंसयेनेत्येतेषांव्यत्ययाश्रयेणसर्वदेवतानामधिष्ठानात्मिकायाः एकत्वश्रवणेनवा सर्वफलदातृत्वात्मनएकत्वाश्रयणेनवादेवतैक्योपपत्तेः अनेनमध्यमोत्तमभेदेनोभयलिंगत्वपक्षेपिदेवतैक्यमुक्तं भवति अतएवैकैववामहानात्मादेवतेत्युक्तत्वाद्वस्तुतोदेवतैक्यं अधिष्ठात्रधिष्ठानभेदेनभेदश्चनविरुध्यते अयंसशिंकेइयंसामाध्यमिकायावाचोधिष्ठात्रीदेवता शिंक्ते अव्यक्तध्वनिंकरोति येनगौरभीवृता गौरितिवाङ्नाम माध्यमिकावाक् ययाभिवृता अभितोव्याप्ताअधिष्ठितेत्यर्थः सेयं शिंक्ते। अथवा अयंसशिंकइतिनैवमाध्यमिकावाङ्निर्दिश्यते अपितुमेघः तस्यांवाचिशिंजानायां सएवाशिंकइत्युपचर्यते मंचाःक्रोशन्तीतिवत् अयंसमेघः शब्दंकरोति येनमाध्यमिकावागभिव्याप्ता शब्देनेप्रकारएवोच्यते—मिमाति मायुंस्तनितलक्षणंशब्दंकरोति अथवेयंलुप्तोपमा मिनोति स्वतेजः सर्वत्रप्रक्षिपतीतिमायुरादित्यः तमिवातिदीप्तंकरोतीत्यर्थः अथवा सामर्थ्यादात्मानमादित्यसदृशंनिर्मिमीते कुत्रस्थिता ध्वसनावधिश्रिता ध्वंसनेमेघेधिश्रिता सा ईदृशीचित्तिभिः कर्मनामैतत् स्वकर्मभिर्वृष्टिरूपैर्मर्त्यंमरणधर्माणंस्थावरजंगमरूपंकृत्स्नंजगत् निहिचकार नीचैःकरोति

मनुष्यान्प्रणतान्करोति ओषध्यादिकंफलेनावनतंकरोति अथवा चित्तिभिर्द्योतनलक्षणैः कर्मभिः विद्युतिविद्योतमानायां भीत्यासर्वेशिरांसिनतानिकुर्वन्ति कथंभूतानिनीचैःकरोतीतिउच्यते—विद्युद्भवन्तीविद्युद्रूपतामापद्यमानाप्रतिवव्रिमौहत वव्रिरितिरूपनाम ऊहतिरत्रसामर्थ्यादुपसंहारवाची प्रत्युपसंहरति उदकलक्षणंरूपंपुनरादत्ते रश्मिद्वारावृष्टमुदकंपुनर्घ लेआदत्ते एकस्यैवज्योतिषस्त्रेधाकरणाद्विद्युतःसूर्यरश्मिभावउपपद्यते तमूंअकृण्वन्त्रेधाभुवेकमितिवक्ष्यमाणत्वात् स्तनितस्यविद्युद्भावोमेघविद्युत्स्तनितानामभेदाभिप्रायेण ॥ २९ ॥

२९. बछड़ा धेनु के चारों ओर घूमकर अव्यक्त शब्द करता है और गोचर-भूमि पर गाय "हम्बा" करती है। धेनु पशु-ज्ञान-द्वारा मनुष्यों को लज्जित करती है और द्योतमान होकर अपना रूप प्रकट करती है।

अ॒न॒च्छ॑ये॒तु॒रगा॑तु॒जी॒वमेज॑द्ध्रु॒वंम॒ध्य॒आप॒स्त्या॑नाम् ।
जी॒वोमृ॒तस्य॑चरति॒स्व॒धाभि॒रम॑र्त्यो॒मर्त्ये॑ना॒सयो॑निः ॥ ३० ॥१९॥

अ॒नत् । श॒ये॒ । तु॒रऽगा॑तु । जी॒वम् । एज॑त् । ध्रु॒वम् । मध्ये॑ । आ । प॒स्त्या॑नाम् । जी॒वः । मृ॒तस्य॑ । च॒र॒ति॒ । स्व॒धाभिः॑ । अम॑र्त्यः । मर्त्ये॑न । सऽयो॑निः ॥ ३० ॥ १९ ॥

अनेनदेहस्यासारताजीवस्यनित्यत्वंचप्रतिपाद्यते इदंशरीरंजीवावस्थायां अनत् प्राणनं कुर्वत् जीवंजीवनवत् तुरगातुस्वव्यापारायतूर्णंगमनंसत् एजत् कंपमानंसत् शयेशेतेवर्तते पश्चात्प्राणापगमनानन्तरं उक्तविलक्षणंसत् ध्रुवमविचलितंसत् पस्त्यानां गृहाणांमध्ये अथैतेष्वाशेतेच स्थाणुवत्तिष्ठति आकारःपूरणोवा जीवस्यवैलक्षण्यमाह—मृतस्यशरीरस्य संबन्धीजीवः मर्त्येनमरणधर्मकेन शरीरेणसयोनिः पूर्वंसमानोत्पत्तिस्थानः यद्यपिजीवस्यनजन्मास्ति तथापिवपुषस्तत्सद्भावात् तत्संबन्धेनोपचर्यंते तदेवाह—अमर्त्यः अमरणस्वभावः जीवापेतंवावकिलेदंम्रियतेइतिश्रुतेः । उक्तस्वभावोजीवः स्वधाभिश्चरति पुत्रैःस्वधाकारपूर्वकदत्तैरन्नैश्चरति वर्तत इत्यर्थः ॥ ३० ॥

३०. चञ्चल, श्वास-प्रश्वासशील और अपनी कार्य-सिद्धि में व्यग्र जीव सोकर घर में अविचल भाव से अवस्थित हुआ। मर्त्य के साथ उत्पन्न मर्त्य का अमर जीव स्वधा भक्षण करता हुआ सदा विहरण करता है।

॥ इतिद्वितीयस्यतृतीयेएकोनविंशोवर्गः ॥ १९ ॥

प्रवर्ग्येभिष्टवे अपश्यंगोपामित्येकाविनियुक्ता सूत्रितंच—अपश्यंगोपामनिपद्यमानं स्तक्वेद्रप्सस्येति ।

१ ऋ० सं० ८. ४. १२.।

सैषासूक्तेएकत्रिंशी—

अपश्यंगोपामनिपद्यमानमाचपराचपथिभिश्चरन्तम् ।
ससध्रीचीःसविषूचीर्वसानआवरीवर्तिभुवनेष्वन्तः ॥ ३१ ॥

अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा । च ।
पथिऽभिः ।चरन्तम् । सः । सध्रीचीः । सः । विषूचीः । वसानः ।
आ । वरीवर्ति । भुवनेषु । अन्तरिति ॥ ३१ ॥

अहंगोपां सर्वस्यलोकस्य वृष्टिप्रकाशादिनागोपायितारं अनिपद्यमानं कदाचिदप्यविषण्णं तथापथिभिः विचित्रैःमार्गैरन्तरिक्षरूपैराचरन्तंच पराचरन्तंच उदयप्रभृत्यामध्याह्नमागच्छन्तं मध्याह्नप्रभृत्यासायंपराङ्मुखंगच्छन्तं एवंमहानुभावमादित्यं अपश्यं याथात्म्येनपश्येयं किञ्च सआदित्यः सध्रीचीः सहाञ्चतीः विषूचीः विष्वगञ्चतीः रात्रावपि चन्द्रभौमादित्यानां प्रकाशयित्रीः त्विषोवसानः आच्छादयन् भुवनेषु भुवनैकदेशेषु लंकादिप्रदेशेषु अन्तर्मध्ये आवरीवर्ति उदयास्तमयंकुर्वन् पुनःपुनरावर्तते तमपश्यमित्यर्थः एषवैगोपाएषहीदंसर्वंगोपायतीत्याद्यस्यब्राह्मणम् । अपश्यंगोपामित्याह असौवाआदित्योगोपाः सहीमाःप्रजागोपायतीत्यादितैत्तिरीयकंवाद्रष्टव्यम् ॥ ३१ ॥

३१. मैं इन रक्षक और प्रसन्न आदित्य को अन्तरिक्ष में आते-जाते देखता हूँ। सर्वत्रगासिनी और सहगामिनी किरण-माला से आच्छादित होकर भुवनों में बार-बार आते-जाते हैं।

अथद्वात्रिंशी—

यईंचकारनसोअस्यवेदयईंददर्शहिरुगिन्नुतस्मात् ।
समातुर्योनापरिवीतोअन्तर्बहुप्रजानिर्ऋतिमाविवेश ॥ ३२ ॥

यः । ईम् । चकार । न । सः । अस्य । वेद । यः । ईम् । ददर्श । हिरुक् ।
इत् । नु । तस्मात् । सः । मातुः । योना । परिऽवीतः । अन्तः ।
बहुऽप्रजाः । निःऽऋतिम् । आ । विवेश ॥ ३२॥

---

१ तै० आ० पंचमप्रपाठके. ।

अत्रगर्भवासक्लेशपूर्वकजननप्रतिपादनेनतत्परिहारायात्माज्ञातव्यइत्यर्थात्प्रतिपाद्यते यः पुमान् पुत्रार्थीईंएनंगर्भंचकारकरोति विक्षिपतिवा तत्कारणभूतस्यरेतसोविक्षेपद्वारेण नसपुमान्स्यतत्त्वंवेद कर्मणिषष्ठीवा एनंगर्भंनजानाति कथंभूतः कथंवाकेनप्रयोजनेनेति सर्वात्मनानजानातीत्यर्थः यश्चमातुरुदरस्थंददर्श उदरवृद्धयन्यथानुपपत्त्यानुमानेनवादर्शयति सतस्माच्चक्षुःसकाशात् सहिरुगिन्नुहि रुगित्यन्तर्हितनाम इच्छब्दएवकारार्थः नुनिश्चये अत्यन्तमन्तर्हितएवखलु यद्वा यःसंसारावस्थायांईंएनं कृषिवाणिज्यवेदाध्ययनादिकंचकार सोस्यएतन्नवेद लोकान्तरे जन्मान्तरेवा तथा यईंएनंददर्श गिरिनदीसमुद्रबन्ध्वादिकंददर्शजीवसमये तस्माद्दृष्टाद्धिरुगिन्नुपृथगेवअत्रानुभूतंसर्वंनजन्मान्तरे लोकान्तरेवानुभवतीत्यर्थः सतादृशोमातुर्जनन्याः योना योनौ अन्तःपरिवीतः उल्बजरायुभ्यांपरितोवेष्टितःसन् बहुप्रजाः बहुजन्मभाक् अथवा उत्पन्नःसन् स्वयमप्यपत्योत्पादनेनबहुप्रजाः निर्ऋतिमाविवेश एवंगर्भंदुःखमनुभवन् निर्ऋत्यभिधानंप्रदुःखमनुभवति यावत्स्वरूपभूतात्मज्ञानं अतस्तत्परिहारायात्माज्ञातव्यइत्युक्तंभवति एवमात्मविदामभिप्रेतोऽर्थः। नैरुक्तानांतुमते—यईंचकारमध्यस्थानोवायुर्मेघोवाएतद्वृष्ट्युदकंकरोति सोस्यतत्त्वमितिशेषः। अथवाएतत्कर्मनजानातितयोरचेतनत्वादितिभावः यस्तुईंएतद्ददर्श पश्यति तस्मादपिहिरुक् अन्तर्हितःप्राणिकर्मवशेनकालेवर्षितापरमेश्वरआदित्यात्मनिगूढइत्यर्थः यईंहिरुक् अन्तर्हितंईमेतद्ददर्शपश्यति सवृष्टिलक्षणः पुत्रोमातुर्मिमातुरन्तरिक्षस्ययोनौ योनिवदुत्पत्त्याधारभूतेन्तरिक्षेउभयोरप्यन्तरिक्षनामत्वात् सामान्यविशेषभावोद्रष्टव्यः अन्तरिक्षैकदेशेयोन्यामन्तर्मध्येबहुप्रजाः बहुप्रजातान्नः बहुप्राण्युपकारी अथवाजनिरत्रान्तर्भावितण्यर्थः बहूनांधाराणांसस्यनिष्पादनद्वारेणप्राणिनांप्रजनयितासन् निर्ऋतिं निरमणसाधनांभूमिमाविवेशप्रविशतिप्राप्नोतीत्यर्थः ॥ ३२ ॥

३२. जिसने गर्भ किया है, वह भी उसका तत्त्व नहीं जानता। जिसने उसको देखा है, वह उसके पास भी लुप्त है। मातृ-योनि के बीच वेष्टित होकर वह गर्भ बहुत सन्तानवान् होता और पाप-लिप्त होता है।

अथत्रयस्त्रिंशी—

द्यौर्मे॑ पि॒ता ज॑नि॒ता नाभि॒रत्र॒ बन्धु॑र्मे मा॒ता पृ॑थि॒वी म॒हीयम्।
उ॒त्ता॒नयो॑श्च॒म्वो॒३॒॑र्योनि॑र॒न्तरत्रा॑ पि॒ता दु॑हि॒तुर्गर्भ॒माधा॑त् ॥ ३३ ॥

द्यौः। मे॒। पि॒ता। ज॒नि॒ता। नाभिः॑। अत्र॑। बन्धुः॑। मे॒। मा॒ता। पृ॒थि॒वी। म॒ही। इ॒यम्। उ॒त्ता॒नयोः॑। च॒म्वोः॑। योनिः॑। अ॒न्तः। अत्र॑। पि॒ता। दु॒हि॒तुः। गर्भ॑म्। आ। अ॒धा॒त् ॥ ३३ ॥

---

१ नि० २.८.

दीर्घतमाब्रवीति मेममद्यौर्द्युलोकः पितापालकः नकेवलंपालकत्वमात्रं अपितुजनिताजनयिता उत्पादयिता तत्रोपपत्तिमाह—नाभिरत्रनाभिभूतोभौमोरसोऽत्रतिष्ठतीतिशेषः ततश्चान्नंजायते अन्नाद्रेतः रेतसोमनुष्यइत्येवंपारंपर्येणजननसंबन्धिनोहेतोरसस्यात्रसद्भावात् अनेनैवाभिप्रायेणजनितेत्युच्यते अतएवबन्धुः बन्धिका तथेयं मही महतीपृथिवीमेमाता मातृस्थानीयास्वोद्भूतौषध्यादिनिर्मात्रीत्यर्थः किञ्च उत्तानयोः ऊर्ध्वतानयोः चम्वोः सर्वस्यअन्योर्भोगसाधनयोर्द्यावापृथिव्योरन्तर्मध्ये योनिः सर्वभूतनिर्माणाश्रयमन्तरिक्षंवर्ततइतिशेषः अत्रास्मिन्नन्तरिक्षेपिता द्युलोकःअधिष्ठात्रधिष्ठानयोरभेदेनादित्योद्यौरुच्यते सस्वरश्मिभिः अथवाइन्द्रः पर्जन्योवादुहितुः दूरेनिहितायाः भूम्याः गर्भंसर्वोत्पादनसमर्थंवृष्ट्युदकलक्षणंआधात् सर्वतःकरोति॥ ३३ ॥

३३. स्वर्ग मेरा पालक और जनक है, पृथिवी की नाभि मेरा मित्र है और यह विस्तृत पृथिवी मेरी माता है। उच्च पात्र-द्वय (आकाश और पृथिवी) के बीच योनि (अन्तरिक्ष) है। वहाँ पिता (द्यु) दूर-स्थिता (पृथिवी) का गर्भ उत्पादन करता है।

आश्वमेधिकेमध्यमेहनिब्रह्मोद्येहोत्रादयःपृच्छामित्वेत्यनयायजमानंपृच्छेयुः तथाचसूत्रितम्—एकैकशोयजमानंपृच्छन्ति पृच्छामित्वापरमन्तंपृथिव्याइति।

पृच्छामि॑त्वा॒पर॒मन्तं॑पृथि॒व्याःपृ॒च्छामि॒यत्र॒भुव॑नस्य॒नाभिः॑।
पृ॒च्छामि॑त्वा॒वृष्णो॒अश्व॑स्य॒रेतः॑पृ॒च्छामि॑वा॒चःप॑र॒मंव्यो॑म ॥ ३४ ॥

पृ॒च्छामि॑। त्वा॒। पर॑म्। अन्त॑म्। पृ॒थि॒व्याः। पृ॒च्छामि॑। यत्र॑। भुव॑नस्य। नाभिः॑। पृ॒च्छामि॑। त्वा॒। वृष्णः॑। अश्व॑स्य। रेतः॑। पृ॒च्छामि॑। वा॒चः। प॒र॒मम्। विऽओ॑म ॥ ३४ ॥

हेयजमान त्वात्वांपृच्छामि प्रश्नंकरोमि किं पृथिव्याःपरमन्तंउत्कृष्टांकाष्ठांयत्रसर्वापृथिवी समाप्यतेतत्पृच्छामि तथात्वांअन्यत्पृच्छामि किंतदितिउच्यते—यत्रभुवनस्यभूतजातस्य नाभिः संनाहोबन्धनंयत्रसर्वंसन्नद्धंभवति तमित्यर्थः किञ्च त्वात्वांवृष्णोवर्षकस्याश्वस्यव्याप्तस्यआदित्यस्य असौवांआदित्योवृषाश्वइतितैत्तिरीयकम्। तस्यरेतः रेतोवत्कारणं तत्किमितिपृच्छामि तथा वाचः सर्वस्यवाग्जातस्य परमंनिरतिशयंव्योमस्थानंसर्वस्यवचसःकारणं एतत्प्रश्नचतुष्टयंपृच्छामि॥ ३४ ॥

३४. मैं तुमसे पूछता हूँ, पृथिवी का अन्त कहाँ है? मैं तुमसे पूछता हूँ, संसार की नाभि (उत्पत्ति-स्थान) कहाँ है? मैं तुमसे पूछता हूँ, सेचन-समर्थ अश्व का रेत क्या है? मैं तुमसे पूछता हूँ, समस्त वाक्यों का परम स्थान कहाँ है?

अथैवंपृष्टोयजमानइयंवेदिरित्यनयाप्रतिब्रूयात् इयंवेदिःपरोअन्तःपृथिव्याइतिप्रत्याहेतिसूत्रितत्वात्।

सैषापंचत्रिंशी—

इयंवेदिःपरोअन्तःपृथिव्याअयंयज्ञोभुवनस्यनाभिः।
अयंसोमोवृष्णोअश्वस्यरेतोब्रह्मायंवाचःपरमंव्योम ॥३५॥२०॥

इयम्। वेदिः। परः। अन्तः। पृथिव्याः। अयम्। यज्ञः।
भुवनस्य। नाभिः। अयम्। सोमः। वृष्णः। अश्वस्य। रेतः।
ब्रह्मा। अयम्। वाचः। परम्। विऽओम ॥ ३५ ॥ २० ॥

पृथिव्याः प्रथनवत्याभूम्याः परोअन्तः परमन्तंपर्यवसानमियंवेदिः नहिवेद्यतिरिक्ताभूमिरस्ति एतावतीवैपृथिवीयावतीवेदिरितिश्रुतेः।तथा अयंयज्ञोभुवनस्य भूतजातस्यनाभिः संनहनं तत्रैववृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनांबन्धकत्वात् अथवृष्णोवर्षकस्यादित्यस्यरेतोऽयंसोमोरसात्मकः अग्नौहुतः सोमरसः आदित्यंप्राप्यवृष्ट्यादिफलंजनयति अयंब्रह्माप्रजापतिरेव वाचोमन्त्रादिरूपायाः परमंव्योमउत्कृष्टंरक्षकंस्थानंतत्रैवोत्पत्तेस्तत्रैवपर्यवसानाच्च ॥ ३५ ॥

३५. यह वेद ही पृथिवी का अन्त है, यह यज्ञ ही संसार की नाभि है, यह सोम ही सेचन-समर्थ अश्व का रेत है और यह ब्रह्मा या ऋत्विक् वाक्य का परम स्थान है।

॥ इतिद्वितीयस्यतृतीयेविंशोवर्गः ॥ २० ॥

अथषट्त्रिंशी—

सप्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठन्तिप्रदिशाविधर्मणि।
तेधीतिभिर्मनसातेविपश्चितःपरिभुवःपरिभवन्तिविश्वतः॥ ३६ ॥

सप्त। अर्धऽगर्भाः। भुवनस्य। रेतः। विष्णोः। तिष्ठन्ति। प्रऽदिशा।
विऽधर्मणि। ते। धीतिऽभिः। मनसा। ते। विपःऽचितः।
परिऽभुवः। परि। भवन्ति। विश्वतः ॥ ३६ ॥

---

२ तै० सं० २. ६. ४.।

सप्त सर्पणस्वभावाः सप्तसंख्यावारश्मयः अर्धगर्भाः संवत्सरस्यार्धे गर्भंगर्भस्थानीयमुदकं धारयमाणाः यद्वा ब्रह्माण्डस्यार्धेमध्येन्तरिक्षे गर्भवद्वर्तमानाः भुवनस्यल्लोकस्यरेतः सारंवृष्टिप्रदत्वेनरेतोभूताः तादृशारश्मयोविष्णोर्व्यापकस्यादित्यस्य विधर्मणिजगद्धारणव्यापारे प्रदिशाप्रदेशेन तिष्ठन्तिवर्तन्ते किञ्च तेधीतिभिः प्रज्ञाभिः मनसाजगदुपकारःकर्तव्यइतिबुद्ध्याच विश्वतः सर्वतः द्वितीयार्थेतसिः विश्वंपरिभवन्ति परितोभावयन्ति कृत्स्नंजगद्व्याप्नुवन्तीत्यर्थः यस्मादेवंतस्मात् तेतएवविपश्चितोबुद्धियुक्ताः परिभुवः सर्वत्रव्याप्ताश्च यद्वा सप्तार्धगर्भाः सप्त महदहंकारौपञ्चतन्मात्राणीतिमिलित्वा सप्तसंख्यानितत्त्वानि अर्धगर्भाः अविकृतिरूपाः विकाराश्रयायाः मूलप्रकृतेःप्रकृतिविकृतेरुदासीनस्यात्मनश्चोत्पन्नत्वादर्धांशेनप्रपञ्चाकारेणपरिणामादर्धगर्भाः पुरुषांशस्याविक्रियत्वादित्यभिप्रायः अतएवतेषांप्रकृतिविकृतित्वं यस्मादेवंतस्माद्भुवनस्य रेतः कारणंकारणभूतानि तान्येव विष्णोर्व्याप्तस्यपुरुषस्यविधर्मणिप्रदिशाप्रदेशेनतिष्ठन्ति इतरत्समानम् ॥ ३६ ॥

३६. सात किरणें आधे वर्ष तक गर्भ धारण या वृष्टि को उत्पन्न करके तथा संसार में रेतः-स्वरूप या वृष्टि-दान द्वारा जगत् का सारभूत होकर विष्णु या आदित्य के कार्य में नियुक्त हैं। वे ज्ञाता और सर्वतोगामी हैं। वे प्रज्ञा-द्वारा भीतर-ही-भीतर सारे जगत् को व्याप्त किये हुए हैं।

न॒वि जा॑नामि॒ यदि॑वे॒दमस्मि॑ नि॒ण्यः संन॑द्धो॒ मन॑सा चरामि।
य॒दा माग॑न्प्रथम॒जा ऋ॒तस्यादिद्वा॒चो अ॑श्नुवे भा॒गम॒स्याः ॥ ३७ ॥

न। वि। जा॒ना॒मि॒। यत्ऽइ॑व। इ॒दम्। अस्मि॑। नि॒ण्यः। सम्ऽन॑द्धः। मन॑सा। च॒रा॒मि॒। य॒दा। मा॒। आग॑न्। प्र॒थ॒म॒ऽजाः। ऋ॒तस्य॑। आत्। इत्। वा॒चः। अ॒श्नु॒वे॒। भा॒गम्। अ॒स्याः ॥ ३७ ॥

अहंयदिवेदं यदपीदंविश्वं अस्मि कृत्स्नःप्रपञ्चोप्यहमेवास्मि नामरूपांशमपरमार्थंत्यक्त्वासर्वत्रानुगतोस्मि योयंसच्चिदानन्दाकारोऽस्ति सोहमस्मीतिनविजानामि विविच्यनाज्ञासिषं परंशास्त्रजनितमिदमहमस्मीतिविज्ञानंनजातं अविवेकीअहमित्यर्थः कार्यकारणयोरभेदात् कृत्स्नप्रपञ्चस्यापिब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेवभवति इदं सर्वं यदयमात्मा ब्रह्मैवेदंसर्वं आत्मैवेदंसर्वं सईक्षत बहुस्यांप्रजायेयेत्यादिश्रुतिभ्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् तदनन्यत्वमारंभणशब्दादिभ्यइत्याद्युपपत्तिभिश्च प्रपञ्चस्यब्रह्मानन्यत्वंसिद्धं यदा इवशब्दउपमार्थः यदिव यत्परोक्षज्ञानं सर्वैकात्म्यरूपमानुभविकमस्ति तदि-

वतद्वदेवाहमस्मि इदंसर्वमहमस्मीतिज्ञानंमेजातं अपित्वेतद्दार्ष्टांतिकभूतमानुभविकंसार्वात्म्यं यदस्तितन्नविजानामि नप्राप्तोस्मि शास्त्रजनितं सार्वात्म्यंजातं नत्वानुभविकमित्यर्थः तत्रकारणमाह—यतोऽहंनिण्यः अन्तर्हितनामैतत् अन्तर्हितः मूढचित्तः चित्तप्रत्यक्प्रवणाभावेनपरिच्छिन्नइत्यर्थः तत्रोपपत्तिमाह—सन्नद्धः अविद्याकामकर्मभिः सम्यग्बद्धोवेष्टितः अतएवमनसायुक्तः भावनासहिष्णुनाबहिर्मुखेन विक्षिप्तेनचेतसायुक्तः संचरामिसंसारे अथवा मनसासन्नद्धः चरामिइन्द्रियपरवशएवसन् संसारेदुःखमनुभवामि नसार्वात्म्यंजानामीतिपरिदेवते यास्कोपीमंपरिदेवनार्थत्वेनोदाजहार—अथापिपरिदेवनाकस्माच्चिद्भावात् नविजानामियदिवेदमस्मीति बहिर्मुखचेतसःस्वरूपापरिज्ञानजनितंदुःखमन्यत्रश्रूयते पराङ् विश्वानिव्यवृणत् स्वयंभूस्तस्मात्पराङ्पश्यतिनान्तरात्मन्निति। तर्हिकदैतद्भवतीत्याह—यदामाआगन् आगमिष्यति तदाकिंतदितिउच्यते ऋतस्य परमार्थस्य परस्यब्रह्मणः प्रथमजाः प्रथमोत्पन्नः चित्तप्रत्यक्प्रवणजनितोनुभावः सयदामामांप्राप्नोति आदित् अनन्तरमेवअव्यवधानेन अस्यावाचः ऐकात्म्यप्रतिपादिकायाउपनिषद्वाचः यदिवेदमस्मीत्युक्तायावाभागंभजनीयं शब्दब्रह्मणाव्याप्यंपरंब्रह्मपदं अश्नुवे प्राप्नोमि चित्तस्यबहिर्मुखतां परित्यज्यान्तर्मुखतैवदुःसंपादा सायदास्यात् तदानीमेवस्वरूपं द्रष्टुं सुशकंभवति पश्चाद्विलंबाभावात् यथागिरिशिखरात्पतन् पाषाणोऽविलंबेनपतति तद्वच्चित्तप्रत्यङ्मुखत्वस्यदुःशकत्वमिति तत्रैवश्रूयते कश्चिद्धीरः प्रत्यगात्मानमैच्छदावृतचक्षुरमृतत्वमिच्छन्निति ॥ ३७॥

३७. मैं यह हूँ कि नहीं—मैं नहीं जानता; क्योंकि मैं मूढ़-चित्त हूँ, अच्छी तरह आबद्ध होकर विक्षिप्तचित्त रहता हूँ। जिस समय ज्ञान का प्रथम उन्मेष होता है उसी समय में वाक्य का अर्थ समझ सकता हूँ।

अथाष्टत्रिंशी—

अपाङ्प्राङेतिस्वधयांगृभीतोमर्त्योमर्त्येनासयोनिः।
ताशश्वन्ताविषूचीनावियन्तान्य१न्यंचिक्युर्ननिचिक्युरन्यम्॥३८॥

अपांङ्। प्राङ्। एति। स्वधयां। गृभीतः। अमर्त्यः। मर्त्येन। सऽयोनिः। ता। शश्वन्ता। विषूचीना। विऽयन्ता। नि। अन्यम्। चिक्युः। न। नि। चिक्युः। अन्यम्॥ ३८॥

---

१ नि० ७. ३.।

अमर्त्यः अमरणधर्मायमात्मा मर्त्येनमरणधर्मणाभूतात्मनादेहेनसयोनिः समानस्थानत्रयपरिच्छेदकोदेहोऽस्ति तत्रसर्वत्रसोयमपितिष्ठन्नित्यर्थः यद्वा ससमानोत्पत्तिः सहवासेनस्वस्मिन्नुत्पत्तिरुपचर्यते एवंभूतःसन् स्वधयाअन्नोपलक्षिततत्तद्भोगेनगृभीतः यद्वा स्वधाशब्देनान्नमयं शरीरंलक्ष्यते तेनगृहीतःसन्नपाङेति अशुक्लंकर्मकृत्वाधोगच्छति प्राङेति ऊर्ध्वंस्वर्गादिलोकंप्राप्नोति परमात्मैवसूक्ष्मशरीरोपाधिकःसन् नानाविधंकर्मकृत्वातद्भोगायजीवसंज्ञांलब्ध्वाशरीरत्रयेणसंबद्धोलोकान्तरेषुसंचरति स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोकेगुणत्रयान्वितःसन् परिभ्रमति तथाचश्रूयते—गुणान्वयोयःफलकर्मकर्ताकृतस्यतस्यैवसचोपभोक्ता । सविश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपःसंचरतिस्वकर्मभिरिति । इदानीमुभयप्राधान्येनाह ते तौभूतात्मकर्त्रात्मानौ शश्वन्ता अविभागेनसर्वदावर्तमानौ यद्वा सूक्ष्मशरीरपक्षेसर्वदासहवासउपपद्यते स्थूलशरीरपक्षेपि सात्त्विकजातेः तत्कारणानांभूतसूक्ष्माणांसद्भावात् तत्रशरीरसंबन्धउपपद्यते विषूचीनाइहलोके सर्वत्र गमनौ वियन्ता तत्तत्फलोपभोगायसर्वत्रलोकान्तरेषुगच्छन्तौवर्तेते तत्रनराः अन्यंभूतात्मानं निचिक्युः नितरांविशेषेणपश्यन्तिजानन्ति अन्यमपरं देहवच्छायातिरिक्तं नर्ननिचिक्युः नजानन्ति केचनपामरादेहव्यतिरिक्तंनजानन्ति केचनविवेकिनः कर्तृभोक्तृत्वोपेतोदेहातिरिक्तःकश्चिदस्तीत्यनुमिमते नकेपिदेहत्रयव्यतिरिक्तमात्मानंजानन्ति अतोदुर्लभमात्मज्ञानमित्यर्थः ॥ ३८ ॥

३८. नित्य अनित्य के साथ एक स्थान पर रहता है; अन्नमय शरीर प्राप्त कर वह कभी अधोदेश और कभी ऊर्ध्वदेश में जाता है। वे सदा एक साथ रहते हं, इस संसार में सर्वत्र एक साथ जाते हैं; परलोक में भी सब स्थानों पर एक साथ जाते हैं। संसार इनमें एक को (अनित्य को) पहचान सकता है—दूसरे (आत्मा) को नहीं।

ऋचोअक्षरेपरमेव्योमन्यस्मिन्देवाअधिविश्वेनिषेदुः ।
यस्तन्नवेदकिमृचाकरिष्यतियइत्तद्विदुस्तइमेसमासते ॥ ३९ ॥

ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः । अधि ।
विश्वे । निऽसेदुः । यः । तत् । न । वेद । किम् । ऋचा । करिष्यति ।
ये । इत् । तत् । विदुः । ते । इमे । सम् । आसते ॥ ३९ ॥

पूर्वमन्त्रेदेहात्मजीवात्मानावुक्तौ तयोरन्यस्यजीवात्मनःपारमार्थिकंरूपंयदस्ति तदत्रोच्यते—ऋचोअक्षरे अत्रऋक्शब्देन ऋक्प्रधानभूताः सांगापरविद्यात्मकाश्चत्वारोवेदाउच्यन्ते ऋगादीनामपरविद्यात्वंमुण्डकेश्रूयते—द्वेविद्येवेदितव्येइतिप्रतिज्ञाय तत्रापरा ऋग्वेदोयजुर्वेदःसामवेदइत्या-
२ दिना तस्याःसंबन्धिन्यक्षरे अदृश्यादिगुणके क्षरणरहिते अनश्वरे नित्येसर्वत्रव्याप्तेब्रह्मणिअक्ष-

रशब्दस्यब्रह्मवाचकत्वं एतद्वैतदक्षरस्यप्रशासनेगार्गिययातदक्षरमधिगम्यते येनाक्षरंपुरुषंवेदसत्यमित्यादिश्रुतिषुप्रसिद्धं ऋगक्षरयोःप्रतिपाद्यप्रतिपादकभावःसंबन्धः सर्वैःवेदैःखलुब्रह्माधिगम्यते तंत्वौपनिषदंपुरुषंपृच्छामि इत्यादिश्रुतेः। ननूपनिषद्भागानांतथास्तु इतरेषांतु कथं ब्रह्मविषयत्वमिति उच्यते—यद्यपीतरभागानां यागादिविषयत्वं तथापि बुद्धिशुद्ध्युत्पादनद्वारावेदनसाधनत्वेनब्रह्मविषयाभविष्यन्ति तमेतंवेदानुवचनेनब्राह्मणाविविदिषन्तीत्यादिश्रुतेः। तदेवविशेष्यते परमेउत्कृष्टेनिरतिशयेव्योमन् व्योमनि व्योमसदृशे अलेपत्वनीरूपत्वव्यापित्वादिसादृश्येनव्योमेत्युक्तं यद्वा विशेषेणसर्वस्यरक्षके निरधिष्ठानःभ्रमः कस्यचिदस्तिसाध्यस्तस्यसर्वस्याधिष्ठानत्वेनाक्षकत्वात्तादृशेतत्त्वेसर्वमध्यस्तमित्यर्थः पुनस्तदेवविशेष्यते यस्मिन्परमात्मनिविश्वेसर्वेदेवाअधिनिषेदुः निषीदन्ति आश्रित्यतिष्ठन्ति तस्मिन् यद्वा उक्तलक्षणेवस्तुनि ऋगुपलक्षिताःसर्वेसांगावेदाः पर्यवसिताइत्यर्थः यः योमर्त्यः तत्तादृशंदेवादीनांस्वरूपलाभास्पदं कृत्स्नवेदैस्तात्पर्यप्रतिपाद्यं यद्वस्तुनवेद नजानाति समर्त्यः ऋचापूर्वोक्तेनऋगादिशब्दजालेनकिंकरिष्यति वेदनसाधनेनवेदेनवेद्यमविदित्वाकिंसाधयतीत्यर्थः प्रयोजनाभावात्सर्वस्यापिवेदस्यवैफल्यादितिभावः अथवायोऽक्षरमविदित्वाकर्मणांकर्ताभवति यागादीननुतिष्ठति तेनकिंचिदपि कर्मकृतंनभवतीत्यर्थः येइद्वयेएवतत्तत्त्वंविदुर्जानन्ति तइमेसमासते तएवेमेज्ञातारः समासतेसम्यक्तिष्ठन्ति अपुनरावृत्त्यास्वस्वरूपेवस्थानंसमासनं यद्वा येविदुरित् येजानंत्येव नानुतिष्ठन्ति इच्छब्दोवधारणे तइमे तएवसमासते गवामयनादिसहस्रसंवत्सरसत्रपर्यन्तानि सहोपयन्ति सहार्थेसमशब्दः सत्रादधिकानांयागानामभावात् तेषामपिफलमेतज्ज्ञानेनैवप्राप्तंभवतीत्यर्थः कर्तृणांबहुत्वाद्बहुवचननिर्देशः अन्येत्वन्यथावर्णयन्ति ऋचः ऋगर्चनीयआदित्यःआदित्यमण्डलंऋगादिमयंवा ऋग्भिः पूर्वाह्णेदिविदेवः आदित्योवाएषएतन्मण्डलंतपति तत्रताऋचइत्यादिश्रुतेः। तस्यसंबन्धिनि अक्षरेपरमेव्योमन्निति उक्तलक्षणेब्रह्मणि यएषोन्तरादित्येहिरण्मयःपुरुषोदृश्यतइत्यादिश्रुत्युक्तस्वरूपे यस्मिन्सर्वेदेवाद्योतमानारश्मयोनिषेदुः वर्तन्ते यएतन्नवेद सकेवलयाऋचाकिंकरिष्यति येजानन्तिभावयन्ति तएवविद्वांसःसमासते भूम्यांसुखेनरोगादिरहिताः भोगिनःसन्तःचिरकालं जीवन्ति। अपरेप्रकारान्तरेणप्रतिपादयन्ति ऋचोअक्षरेऋगुपलक्षितसर्ववेदसंबन्धिन्यक्षरेप्रणवरूपेओंकारे अविनाशिनिसर्ववेदेषुव्याप्तेवा प्रणवस्यसर्ववेदसारत्वंब्राह्मणेश्रूयते—तान्वेदानभ्यतपत्तेभ्योभितप्तेभ्यस्त्रयोवर्णाअजायन्ताकारउकारोमकारइतितानेकधासमभरत् तदेतदो३मितीति। परमेनिरतिशये नहिप्रणवादधिकंकिंचिन्मन्त्रजातमस्ति त्रिकालातीतस्यब्रह्मणः प्रतिपा-

---

१ तै० नारायणोपनिषदि.। २ऐ० ब्रा० ५. ३२.।

दकत्वात् यच्चान्यत्त्रिकालातीतंतदप्योंकारएव ओमितिब्रह्मेत्यादिश्रुतेः। वेदानांप्रणवस्यस्थान-प्रतिनिधिभावःसंबन्धः यऋचोधीतेइत्याद्युपक्रम्य यःप्रणवमधीते ससर्वमधीते ओमितिप्रतिपद्य-ते एतद्वैयजुस्त्रयींविद्यांप्रत्येषावागेतत्परममक्षरमित्यादिश्रुतेः । यस्मिन्विश्वेसर्वेदेवाअधिनिषेदुः प्रणवस्यसर्वमन्त्रात्मकत्वात् मन्त्रेषुसर्वदेवतानांनिवासात् सर्वदेवनिवासत्वं ब्रह्माधिष्ठानत्वाद्वाब्रह्मणि सर्वदेवानांनिवासात् शिष्टमविशिष्टम्। अयंमन्त्रोनिरुक्तेव्याख्यातः—अपरेत्वन्यथावर्णयन्ति ऋ-चः ऋगर्चनीयोजीवः तस्यसंबन्धिनिअक्षरेअविनाशेव्याप्तेवापरमात्मनीत्यर्थः अतएवजीवा-पेक्षयापरमेउत्कृष्टेनिरुपाधिकेव्योमन्विशेषेणसर्वाधिष्ठानत्वेनरक्षकेव्योमसदृशेवायस्मिन्परमात्म-नि देवागमनवन्तोव्यवहरन्तोवाइन्द्रियसंज्ञकाविश्वेसर्वेपि अधिनिषेदुः निषीदन्ति आश्रित्यवर्त-न्ते यस्तन्नवेदनजानाति उपाध्यंशपरित्यागेनतदेवस्वरूपमितिनपश्यतिस्थूलोजनः किमृचा करिष्यति केवलेनजीवेन जीवभावेन किंफलंप्राप्स्यति जननमरणादिक्लेशस्यात्यागादितिभावः यइत् तद्विदुस्तइत्यादिसिद्धम्॥ ३९॥

३९. सारे देवता महाकाश के समान मन्त्राक्षरों पर उपवेशन किये हुए हैं---इस बात को जो नहीं जानता, वह ऋचा से क्या करेगा ? इस बात को जो जानता है, वह सुख से रहता है।

अग्निहोत्रार्थाधेनुर्यदिकुत्सितंशब्दंकुर्यात् तदानींसूयवसादित्यनयायवसादिकंप्रयच्छेत् तथाचसूत्रितम्—वाश्यमानायैयवसंप्रयच्छेत्सूयवसाद्भगवतीहिभूयाइति । प्रवर्ग्येभिष्टवेएषै-वपरिधानीया सूत्रितंच—सूयवसाद्भगवतीहिभूयाइतिपरिदध्यादिति।

सैषाचत्वारिंशी—

सूयवसाद्भगवतीहिभूयाअथोवयंभगवन्तःस्याम।
अद्धितृणमघ्न्येविश्वदानींपिबशुद्धमुदकमाचरन्ती॥४०॥२१॥

सुयवसऽअत्। भगऽवती। हि। भूयाः। अथो इति। वयम्। भगऽवन्तः। स्याम। अद्धि। तृणम्। अघ्न्ये। विश्वऽदानीम्। पिब। शुद्धम्। उदकम्। आऽचरन्ती॥ ४०॥ २१॥

हेअघ्न्ये गोनामैतत् अहननीयेहेगौस्त्वं सूयवसात् शोभनयवसस्यतृणादिकस्यात्रीसती भगवती भगइतिधननाम सर्वैर्भजनीयप्रभूतक्षीरादिधनवती भूयाः भव हिःपूरणःप्रसिद्धौवा लो-केयवसादिभक्षणेन क्षीरादिसमृद्धिःप्रसिद्धा अथोअनन्तरमेव वयं यजमानाअपिभगवन्तः प्रभू-

---

१ मांडूक्योपनिषदि. २ नि० १. ८.

तेनधनेनतद्वन्तः स्याम अथैकवारंपूर्वमुक्तं इदानीं सर्वदाकर्तव्यमितिप्रार्थयते विश्वदानीं विश्व-कालंसर्वदा तृणमद्धिभक्षय आचरन्ती सर्वतोनिर्गच्छन्ती शुद्धंनिर्मलमुदकंपिब। अयंमन्त्रोयास्के-नैवंव्याख्यातः—सुयवसादिनीभगवतीहिभवाथेदानींवयंभगवन्तःस्यामाद्धितृणमघ्येसर्वदापिब-चशुद्धमुदकमाचरन्तीति ॥ ४० ॥

४०. अहननीया गो ! शोभन शस्य, तृण आदि का भक्षण करो और यथेष्ट दुग्धवती बनो। ऐसा करने पर हम भी प्रभूत धनवाले हो जायँगे। सदा तृण चरो और सर्वत्र घूमते हुए निर्मल जल का पान करो।

॥ इतिद्वितीयस्यतृतीयेएकविंशोवर्गः ॥ २१ ॥

अथैकचत्वारिंशी—

गौरीर्मिमायसलिलानितक्षत्येकंपदीद्विपदीसाचतुंष्पदी।
अष्टापदीनवंपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ ४१ ॥

गौरीः। मिमाय। सलिलानि। तक्षती। एकंऽपदी। द्विऽपदी। सा। चतुःऽपदी। अष्टाऽपदी। नवंऽपदी। बभूवुषी। सहस्रंऽअक्षरा। परमे। विऽओमन् ॥ ४१ ॥

गौरीः गरणशीलामाध्यमिकावाक् सुलोपाभावश्छान्दसः मिमायशब्दयति किंकुर्वती सलिलानि वृष्ट्युदकानि तक्षती संपादयित्री एकपदीएकपादोपेता एकाधिष्ठानामेघेवर्तमाना गमनसाधनेनवायुना एकपदीवा द्विपदी मेघान्तरिक्षाख्ये द्यधिष्ठाना आदित्योवा द्वितीयः तथा सा चतुष्पदी पादचतुष्टयोपेता दिक्चतुष्टयाधिष्ठाना अथाष्टापदी अवान्तरदिगपेक्षयाष्टपादोपेता अष्टाधिष्ठाना नवपदी उपरिदिगपेक्षयासूर्येणवा नवदिगधिष्ठानाबभूवुषी एवंभूता भवतेश्छान्दसःक्वसुः ततोङीपिवसोःसंप्रसारणं किमनयापरिगणनया सहस्राक्षरा अपरिमितवचनोयं अपरिमितव्याप्तियुक्ता बहुव्यापनशीलोदकवतीत्यर्थः कुत्रेतितदुच्यते—परमेव्योमन् उदकाश्रयत्वेनोत्कृष्टेन्तरिक्षे केचिदेवमाहुः गौरीः गरणशीलाशब्दब्रह्मात्मिकावाक् मिमाय मिमतिःप्रतिष्ठार्थेधातुः प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेननिष्पादयन्ती एकपदी अव्याकृतत्वेनैकप्रतिष्ठाना एकरूपावा प्रणवात्मनाद्विपदी सुप्तिङ्भेदेन पादद्वयवती चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन। अष्टापदी आमन्त्रितसहिताष्टविभक्तिभेदेनाष्टापदी नवपदी बभूवुषी साव्ययैरुक्तैरष्टभिर्नवपदी अथवा सनाभिकंपूरःकण्ठादिपुनवसुपदेषुभवन्ती पश्चाद्बहु-

१ नि० ११. ४४.।

विधाभिव्यक्तिमुपेयुषी परमेव्योमन् उत्कृष्टहृदयाकाशे मूलाधारेवासहस्राक्षरा अनेकाकारेण व्याप्ता अनेकध्वनिप्रकाराभवतीत्यर्थः। अयंमन्त्रः आचार्येणैवंव्याख्यातः—गौरीर्मिमायसलिलानितक्षतीकुर्वत्येकपदीमध्यमेनद्विपदीमध्यमेनचादित्येनचचतुष्पदीदिग्भिरष्टापदीदिग्भिश्चावान्तरदिग्भिश्चनवपदीदिग्भिश्चावान्तरदिग्भिश्चादित्येनचसहस्राक्षराबहूदकापरमेव्यवनेइति॥ ४१॥

४१. मेघनिनाद-रूपिणी और अन्तरिक्ष-विहारिणी वाक्, वृष्टि-जल की सृष्टि करते हुए, शब्द करती है। वह कभी एकपदी, कभी द्विपदी, कभी चतुष्पदी, कभी अष्टपदी और कभी नवपदी होती है। कभी-कभी तो सहस्राक्षर-परिमिता होकर, अन्तरिक्ष के ऊपर स्थित होकर शब्द करती है।

तस्याः॑समु॒द्राअधि॒विक्ष॑रन्ति॒तेन॑जीवन्ति॒प्र॒दिश॒श्चत॑स्रः।
तत॑ःक्षरत्य॒क्षर॑ं॒तद्वि॒श्व॒मु॒प॑जीवति॥ ४२॥

तस्याः॑। स॒मु॒द्राः। अधि॑। वि। क्ष॒र॒न्ति॒। तेन॑। जी॒व॒न्ति॒। प्र॒ऽदिश॑ः। चत॑स्रः। तत॑ः। क्ष॒र॒ति॒। अ॒क्षर॑म्। तत्। विश्व॑म्। उप॑। जी॒व॒ति॒॥ ४२॥

तस्याः उक्तायाःगोःसकाशात्समुद्राः वृष्ट्युदकसमुन्दनाधिकरणभूतामेघाअधिअधिकं प्रभूतमुदकंविक्षरन्ति विविधंक्षरन्ति तेनोदकेनप्रदिशश्चतस्रः प्रशब्दोवीत्यर्थे विदिशश्चतस्रोदिशश्च अथवा प्रकृष्टादिशोमुख्याश्चतस्रः तत्स्थेषुताच्छब्द्यं तत्स्थाःपुरुषाजीवन्ति ततः पश्चात्तदक्षरमुदकंक्षरति सस्यादिकमुत्पादयतीत्यर्थः तत्सस्यादिकंविश्वंजगदुपजीवति। अयमपियास्केन व्याख्यातः—तस्याःसमुद्राअधिविक्षरन्तिवर्षन्तिमेघास्तेनजीवन्तिदिगाश्रयाणिभूतानिततःक्षरत्यक्षरमुदकंतत्सर्वाणिभूतान्युपजीवन्तीति॥ ४२॥

४२. उसके पास से सारे मेघ वर्षा करते हैं, उसी से चारों दिशाओं में आश्रित भूतों की रक्षा होती है। उसी से जल उत्पन्न होता और जल से सारे जीव प्राण धारण करते हैं।

श॒क॒म॑यं॑धू॒म॒मा॒राद॑पश्यं॒विषू॒वता॑प॒रए॒नाव॑रेण।
उ॒क्षाणं॒पृश्नि॑मपचन्तवी॒रास्तानि॒धर्मा॑णिप्रथ॒मान्या॑सन्॥ ४३॥

श॒क॒ऽम॒यम्। धू॒मम्। आ॒रात्। अ॒प॒श्य॒म्। वि॒षु॒ऽवता॑। प॒रः। ए॒ना। अव॑रेण। उ॒क्षाण॑म्। पृश्नि॑म्। अ॒प॒च॒न्त॒। वी॒राः। तानि॑। धर्मा॑णि। प्र॒थ॒मानि॑। आ॒स॒न्॥ ४३॥

---

१ नि० ११.४०। २ नि० ११.४१।

शकमयंशकृन्मयंशुष्कगोमयसंभूतंधूमंआरात् नातिदूरेअपश्यंदृष्टवानस्मि दिवाधूमस्य दूरेदृश्यमानत्वात् सएवदर्शनविषयतयोक्तः विषूवताव्याप्तिमताएनाअनेनअवरेणनिकृष्टेनधूमेन परः परस्तात् तत्कारणभूतमयमग्निमपश्यं अहंयजमानइत्यर्थः किञ्च उक्षाणंफलस्यसेक्तारं पृश्निंशुक्लवर्णं प्राश्नुतेतेनफलमितिस्वयंप्राश्नुतइतिवापृश्निर्वल्लीरूपःसोमः तंवीराः विविधेरणकुशलाऋत्विजः अपचन्त अत्रधात्वर्थानादरेणतिङ्प्रत्ययःकरोत्यर्थः सचक्रियासामान्यवचनःअत्रौचित्यादभिषवेणसंपादितवन्तइत्यर्थः तानितत्साधनानिधर्माण्यनुष्ठानानि प्रथमानिप्रतमानि प्रकृष्टानि फलपर्यवसानीयानि आसन् संपादितान्यभवन् यद्वा सोमउक्षाऽभवत्पूर्वंतंदेवाःशकृतापचन्। यज्ञार्थंतद्भवोधूमोमेघआसीत्तदुच्यते। ततपरत्वेनवामन्त्रोव्याख्येयोयंविचक्षणैः ॥ ४३ ॥

४३. मैंने पास ही सूखे गोबर से उत्पन्न धू. को देखा। चारों दिशाओं में व्याप्त निकृष्ट धूम के बाद अग्नि को देखा। वीर या ऋत्विक् लोग शुक्ल-वर्ण वृष या फलदाता सोम का पाक करते हैं। उनका यही प्रथम अनुष्ठान है।

त्रयः॑के॒शिन॑ऋतु॒था विच॑क्षते संवत्स॒रे व॑पत॒ एक॑एषाम्।
विश्व॒मेको॑अ॒भिच॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेक॑स्य ददृशे॒ न रू॒पम् ॥४४॥

त्रयः॑। के॒शिनः॑। ऋ॒तु॒ऽथा। वि। च॒क्ष॒ते॒। सं॒व॒त्स॒रे। व॒प॒ते॒। एकः॑। ए॒षा॒म्। विश्व॑म्। एकः॑। अ॒भि। च॒ष्टे॒। शची॑भिः। ध्राजिः॑। एक॑स्य। द॒दृ॒शे॒। न। रू॒पम् ॥ ४४ ॥

केशस्थानीयप्रकृष्टरश्मियुक्तास्त्रयोऽग्न्यादित्यवायवः तेच ऋतुथाऋतुकालेविचक्षते विविधलक्षणांभूमिंपश्यन्ति तेषांपृथक्पृथक्कार्यमाह एषांमध्येएकोऽग्निः संवत्सरेतीतेसति वपते दाहेन केशस्थानीयौषधिवनस्पत्यादिकच्छेदनेननापितत्कार्यंकरोति एकःअन्यआदित्योविश्वंसर्वंजगत् शचीभिः स्वकीयैःप्रकाशवृष्ट्यादिकर्मभिरभिचष्टेसर्वतःपश्यति एकस्यवायोः ध्राजिर्गतिर्ददृशेदृश्यतेसर्वैः नरूपं अप्रत्यक्षत्वात्स्पर्शशब्दधृतिकंपलिंगैर्गम्यतइतिहिन्यायविदोवदन्ति अयमपिमन्त्रोयास्केनैवंव्याख्यातः—त्रयःकेशिनऋतुथाविचक्षतेकालेकालेभिविपश्यन्ति संवत्सरेवपतएकएषामित्यग्निःपृथिवींदहतिसर्वमेकोभिविपश्यतिकर्मभिरादित्योगतिरेकस्यदृश्यतेनरूपमिति ॥ ४४ ॥

४४. केश-युक्त तीन व्यक्ति (अग्नि, आदित्य, वायु) वर्ष के बीच, यथासमय भूमि का परिदर्शन करते हैं। उनमें एक जन पृथिवी का क्षौर कर्म करते हैं, दूसरे अपने कार्य-द्वारा परिदर्शन करते हैं और तीसरे का रूप नहीं देखा जाता, केवल गति देखी जाती है।

वाग्देवत्ये पशौ चत्वारिवागितिहविषोऽनुवाक्या चत्वारिवाक्परिमितापदानियज्ञेनवाचःपदवीयमायन्नितिसूत्रितत्वात्।

सैषापञ्चचत्वारिंशी—

चत्वारिवाक्परिमितापदानितानिविदुर्ब्राह्मणायेमनीषिणः।
गुहात्रीणिनिहितानेङ्गयन्तितुरीयंवाचोमनुष्यावदन्ति ॥ ४५ ॥

चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः ।
ये । मनीषिणः । गुहा । त्रीणि । निऽहिता । न । इङ्गयन्ति ।
तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥ ४५ ॥

वाक्वाचःकृत्स्नायाःपदानि चत्वारिपरिमिता परिमितानि लोकेयावागस्तिसाचतुर्धाविभक्तेत्यर्थः तानिपदानिब्राह्मणावेदविदः मनीषिणोमनसईषिणोमेधाविनोविदुर्जानन्ति तेषांमध्येत्रीणिगुहागुहायांनिहितास्थापितानिनेङ्गयन्तिनचेष्टन्ते नप्रकाशन्तइत्यर्थः वाचस्तुरीयंपदंमनुष्याअज्ञास्तज्ज्ञाश्ववदन्ति व्यक्तमुच्चारयन्ति व्यवहरन्ति कानितानिचत्वारीति अत्रबहवः स्वस्वमतानुरोधेनबहुधावर्णयन्ति सर्ववैदिकवाग्जालस्यसंग्रहरूपाभूरादयस्तिस्रोव्याहृतयः प्रणवएकइति वेदत्रयसारत्वात्तासांव्याहृतीनामेवसारसंग्रहभूतत्वादकाराद्यात्मकस्यप्रणवस्य इतिसप्रणवासुव्याहृतिषु सर्वावाक्परिमितेतिकेचनवेदवादिनोवदन्ति।अपरेव्याकरणमतानुसारिणोनामाख्यातोपसर्गनिपातभेदेन क्रियाप्रधानमाख्यातं द्रव्यप्रधानंनाम प्रागुपसृज्यतेआख्यातपदस्येत्युपसर्गःप्रादिः उच्चावचेष्वर्थेषुनिपतनान्निपातःअपितुचेत्यादिः एतेष्वेवसर्वावाक्परिमितेति अखण्डायाःकृत्स्नायावाचः चतुर्धाव्याकृतत्वात् वाग्वैपराच्यव्याकृतावदत् तामिन्द्रोमध्यतोवक्रम्यव्याकरोत्तस्मादियंव्याकृतावागुद्यतइतिश्रुतेः।[1] अन्येतुयाज्ञिकाः मन्त्रःकल्पोब्राह्मणंचतुर्थालौकिकीति याज्ञिकैःसमाम्नातोनुष्ठेयार्थप्रकाशकोवेदभागोमन्त्रविधानप्रतिपादकोवेदभागइतिमन्त्राः।कल्पोतऊर्ध्वमित्यादिनोक्तःकल्पः।मन्त्रतात्पर्यार्थप्रकाशकोवेदभागोब्राह्मणं।भोगविषयागामानयेत्यादिरूपाव्यावहारिकी एष्वेवसर्वावाङ्मियमितेतियाज्ञिकाः।ऋग्यजुःसामानिचतुर्थीव्यावहारिकीतिनैरुक्ताः।[2] सर्पाणांवाग्वयसांक्षुद्रस्यसरीसृपस्यचचतुर्थीव्यावहारिकीत्यैतिहासिकाः।पशुषुतूणवेषुमृगेष्वात्मनिचेत्यात्मवादिनः अपरेमान्त्रिकाः प्रकारान्तरेणप्रतिपादयन्ति परापश्यन्तीमध्यमावैखरीतिचत्वारीति एकैवनादात्मिकावाङ्मूलाधाराद् उदितासतीपरेत्युच्यते नादस्यचसूक्ष्मत्वेनदुर्निरूपत्वात्सैव दयगामिनीपश्यन्तीत्युच्यते योगिभिर्द्रष्टुंशक्यत्वात्

---

१ तै० सं० ६. ४. ७.।  २ नि०१३. ९.।

सैवबुद्धिंगताविवक्षांप्राप्तामध्यमेत्युच्यते मध्येहृदयाख्येउदीयमानत्वान्मध्यमा अथयदासैवव-क्त्रेस्थितातात्वोष्ठादिव्यापारेणबहिर्निर्गच्छतितदावैखरीत्युच्यते एवंचत्वारिवाचःपदानिपरिमिता-नि मनीषिणोमनसःस्वामिनःस्वाधीनमनस्काब्राह्मणावाच्यस्यशब्दब्रह्मणःअधिगंतारोयोगिनः परादिचत्वारिपदानिविदुर्जानन्ति तेषुमध्येत्रीणिपरादीनि गुहागुहायांनिहिता निहितानि हृदये-हृदयान्तर्वर्तित्वात् तुरीयंतुपदंवैखरीसंज्ञकंमनुष्याःसर्वेवदन्ति व्याकरणप्रसिद्धानामाख्या-तादिपक्षेमनोषिणोब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञावाग्योगविदस्तानिपदानिजानन्ति अ-वाग्योगविदः पामराः वाचोवाङ्मयस्यतुरीयंचतुर्थंभागंवदन्तिव्यवहरन्ति अर्थप्रकाशनायप्रयु-ञ्जते अयंमन्त्रोनिरुक्तेव्याख्यातःसोत्राप्यनुसन्धेयः। अथापिब्राह्मणंभवति—सावैवाक्सृष्टाचतु-र्धाव्यभवदेष्वेवलोकेषुत्रीणिपशुषुतुरीयंयापृथिव्यांसाग्नौसारथन्तरेयान्तरिक्षेसावायौसावामदे-व्येयादिविसादित्येसाबृहतीसास्तनयित्नावथपशुषुततोयावागत्यरिच्यततांब्राह्मणेष्वदधुस्तस्मा-द्ब्राह्मणाउभयींवाचंवदन्तियाचदेवानांयाचमनुष्याणामिति ॥ ४५ ॥

४५. वाक् चार प्रकार की है। मेधावी योगी उसे जानते हैं। उसमें तीन गुहा में निहित हैं, प्रकट नहीं हैं। चौथे प्रकार की वाक् मनुष्य बोलते हैं।

अथषट्चत्वारिंशी—

इन्द्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान्।
एकंसद्विप्राबहुधावदन्त्यग्निंयमंमातरिश्वानमाहुः ॥ ४६ ॥ २२ ॥

इन्द्रम्। मित्रम्। वरुणम्। अग्निम्। आहुः। अथो इति। दिव्यः।
सः। सुऽपर्णः। गरुत्मान्। एकम्। सत्। विप्राः। बहुधा।
वदन्ति। अग्निम्। यमम्। मातरिश्वानम्। आहुः ॥४६॥ २२ ॥

अमुमादित्यमैश्वर्यविशिष्टमिन्द्रमाहुः तथामित्रंप्रमीतेर्मरणात्त्रातारं अहरभिमानिनमेत-न्नामकंदेवंआहुः वरुणंपापस्यनिवारकं रात्र्यभिमानिनंदेवमाहुः तथाग्निंअङ्गनादिगुणविशिष्टमे-तन्नामकमाहुः अथोअपिचायमेवदिव्योदिविभवः सुपर्णः सुपतनोगरुत्मान् गरणवान् पक्षवा-न्वैतन्नामकोयःपक्ष्यस्ति सोऽप्ययमेव कथमेकस्यनानात्वमिति उच्यते—अमुमेवादित्यमेकमेव वस्तुतःसन्तं विप्रामेधाविनः देवतातत्त्वविदोबहुधावदन्ति तत्तत्कारणैनेन्द्राद्यात्मानंवदन्ति एकै-ववामहानात्मादेवता ससूर्यइत्याचक्षते इत्युक्तत्वात् किञ्च तमेववृष्ट्यादिकारणं वैद्युताग्निंयमं नियन्तारं मातरिश्वानं अन्तरिक्षेश्वसन्तंवायुमाहुः सूर्यस्यब्रह्मणोनन्यत्वेनसावात्म्यमुक्तंभव ति

---

1 नि० १३.९। 2 नि० १३.९।

अत्रयेकेचिदग्निःसर्वादेवताइत्यादिश्रुतितः अयमेवाग्निरुत्तरं अपिज्योतिषीइतिमत्वाग्नेरेवसार्वात्म्यप्रतिपादकोयंमन्त्रइतिवदन्ति तत्पक्षेप्रथमोऽग्निशब्दः उद्देश्यः तमग्निमुद्दिश्येन्द्राद्यात्मकत्वं कथयन्ति अयंमन्त्रोनिरुक्तेएवंव्याख्यातः—इममेवाग्निंमहान्तमात्मानमेकमात्मानंबहुधामेधाविनोवदन्तिइन्द्रंमित्रंवरुणमग्निंदिव्यंचगरुत्मन्तंदिव्योदिविजोगरुत्मान् गरणवान्गुर्वात्मामहात्मे'-तिवेति ॥ ४६ ॥

४६. मेधावी लोग इन आदित्य को इन्द्र, मित्र, वरुण तौर अग्नि कहा करते हैं। ये स्वर्गीय, पक्षवाले (गरुड़) और सुन्दर गमनवाले हैं। ये एक हैं, तो भी इन्हें अनेक कहा गया है। इन्हें अग्नि, यम और मातरिश्वा कहा जाता है।

वर्षकामेष्ट्यांतिस्रःपिंडयोह्येतव्याः तत्रकृष्णंनियानमितितृतीयस्यानुवाक्या कृष्णंनियानंहरयःसुपर्णानियुत्वन्तोग्रामजितोयथानरइति।

सैषासप्तचत्वारिंशी—

कृष्णंनियानंहरयःसुपर्णाअपोवसानादिवमुत्पतन्ति।
तआववृत्रन्त्सदनादृतस्यादिद्घृतेनपृथिवीव्युद्यते ॥ ४७ ॥

कृष्णम्। निऽयानम्। हरयः। सुऽपर्णाः। अपः। वसानाः। दिवम्।
उत्। पतन्ति। ते। आ। अववृत्रन्। सदनात्। ऋतस्य।
आत्। इत्। घृतेन। पृथिवी। वि। उद्यते ॥ ४७ ॥

कृष्णंकृष्णवर्णंनियानं नियमेनगच्छन्तंमेघं हरयः उदकस्यहर्तारः सुपर्णाः शोभनपतनारश्मयः अपोवसानाः उदकानिवासयन्तःमेघेषु अद्भिर्मेघान्पूरयन्तइत्यर्थः अन्तर्भावितण्यर्थाद्विकर्मकत्वं यद्वा कृष्णंनियानंनियमनंरात्रिः देवानांहिरात्रिर्दक्षिणायनं तत्प्रतितस्मिन्वर्षकालइत्यर्थः एवंकुर्वन्तोदिवंद्युलोकंतदाश्रितमादित्यंवोद्दिश्योत्पतन्ति ऊर्ध्वंगच्छन्ति तेरश्मयऋतस्यसदनात् उदकस्यस्थानादादित्यमण्डलादाववृत्रन् आवर्तन्तेअर्वाञ्चआगच्छन्ति आदित् अनन्तरमेव यदार्वागागच्छन्ति तदानोमेवघृतेनोदकेन पृथिवीव्युद्यते विविधंक्लिद्यते कृष्णंनिरयणंरात्रिरादित्यस्य हरयः सुपर्णाहरणाआदित्यरश्मयइत्यादिनिरुक्तंद्रष्टव्यम् ॥ ४७ ॥

४७. सुन्दर गतिवाली और जल-हारिणी सूर्यकिरणें कृष्णवर्ण और नियत-गति मेघ को जलपूर्ण करते हुए द्युलोक में गमन करती हैं। वह वृष्टि के स्थान से नीचे आती हैं और पृथिवी को जल से अच्छी तरह भिगोती हैं।

अथाष्टाचत्वारिंशी—

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत।
तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥ ४८ ॥

द्वादश। प्रऽधयः। चक्रम्। एकम्। त्रीणि। नभ्यानि। कः।
ऊम् इति। तत्। चिकेत। तस्मिन्। साकम्। त्रिऽशताः। न।
शङ्कवः। अर्पिताः। षष्टिः। न। चलाचलासः ॥ ४८ ॥

द्वादश एतत्संख्याकाः प्रधयः परिधयः प्रहिता वर्तन्ते तत्स्थानीयाः द्वादश मासा एकं अद्वितीयं चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रं आश्रिताः तथा त्रीणि त्रिसंख्याकानि नभ्यानि नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यानि आश्रितानि यथा सूर्यरथचक्रस्य द्वादश परिधयो नाभ्याश्रयाणि त्रीणि फलकानि सन्ति तद्वत्कालचक्रस्यापि क उ कोऽपि महान् तच्चक्रं चिकेत जानाति तस्मिन् चक्रे साकं सह शंकवो न शंकव इव अत्र पुरस्तादुपचारो पि नशब्दः सामर्थ्यादुपमार्थीयः तस्मिन्नपि संवत्सरचक्रे त्रिशताः एतत्संख्याकाः षष्टिर्न नशब्दश्चार्थे षष्टिश्चारा अरस्थानीयान्यहानि अर्पिताः अर्पितानि कीदृशानि तानि चलाचलासः एकश्चलशब्दो द्विर्भावमाप्तः चलाः चलनस्वभावानीत्यर्थः चरिचलिपतिपदीनामच्याक्चाभ्यासस्येति द्विर्वचनमागागमश्च ततोऽसुक् षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानीति ब्राह्मणं। द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानादित्यादि निरुक्तम् ॥ ४८ ॥

४८. बारह परिधियाँ (राशियाँ), एक चन्द्र (वर्ष) और तीन नाभियाँ हैं। यह बात कौन जानता है? इस चन्द्र (वर्ष) में तीन सौ साठ अर या खूँटे हैं।

प्रवर्ग्ये भिष्टवे यस्ते स्तन इत्येका सूत्रितं च—यस्ते स्तनः शशयो यो मयोभूर्गौ रमीमेदनु वत्सं मिषन्तमिति। एषैव सारस्वते पशौ हविषो याज्या सूत्रितं च—यस्ते स्तनः शशयो यो मयोभूस्त्वं सोम प्र चिकितो मनीषेति द्वे इति।

सैषैकोनपञ्चाशी—

यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवेकः ॥ ४९ ॥

---

१ ऐ० ब्रा० ३. १२। २ नि० ४. २७।

यः । ते । स्तनः । शशयः । यः । मयःऽभूः । येन । विश्वा ।
पुष्यसि । वार्याणि । यः । रत्नऽधाः । वसुऽवित् । यः । सुऽदत्रः ।
सरस्वति । तम् । इह । धातवे । कः ॥ ४९ ॥

हेसरस्वति तेतवसंबन्धीयःस्तनःस्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपः स्तनःशशयःशयानः तवदेहेवर्तमानः यश्चस्तनःमयोभूःरसास्वादिनां सुखस्यभावयिता येनस्तनेन विश्वासर्वाणिवार्याणिवरणीयानिअभिमतरूपाणिधनानिपुष्यसि भोक्तृभ्यः यश्चस्तनोरत्नधाः बहुविधरमणीयरत्नानां धारयिता वसुवित् वसूनांवासयितॄणां धनानां वेत्तालब्धावेदयितावा किञ्च यःस्तनः सुदत्रः शोभनदानः सुदत्रःकल्याणदानइतिनिरुक्तम् । अत्रासकृद्यच्छब्दश्रवणं स्तनस्यातिप्रशस्तत्वज्ञापनार्थं हेदेवि तंतादृशंसर्वप्राण्युपकारकंसूक्तमयंस्तनं इहास्मिन्कर्मणि इदानींवा धातवे अस्माभिर्धातुंपातुं पानाय कः कुरु ॥४९॥

४९. सरस्वती, तुम्हारे शरीर में रहनेवाला जो गुण संसार के सुख का कारण है, जिससे सारे वरणीय धनों की रक्षा करती हो, जो गुण बहुरत्नों का आधार है, जो समस्त धन प्राप्त किये हुए है और जो कल्याणवाही है, इस समय हमारे पान के लिए उसे प्रकट करो।

अग्निमन्थने यज्ञेनयज्ञमित्येषापरिधानीया यज्ञेनयज्ञमयजन्तदेवाइतिपरिदध्यादितिसूत्रितत्वात्।

सैषापञ्चाशी–

यज्ञेनयज्ञमयजन्तदेवास्तानिधर्माणिप्रथमान्यासन् ।
तेहनाकंमहिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ ५० ॥

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि ।
आसन् । ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे ।
साध्याः । सन्ति । देवाः ॥ ५० ॥

देवाव्यवहर्तारोयजमानायज्ञेननिर्मथ्याग्निनायज्ञंहोमसाधनमाहवनीयं अयजन्त पूजितवन्तः अनुष्ठानायसंयोजितवन्तइत्यर्थः अग्निंमथित्वाप्रहरति तेनैवाग्नयआतिथ्यंक्रियतइतिहितैत्तिरीयकम् । तानिधर्माणिअग्निसाधनानिकर्माणिप्रथमानि प्रथमइतिमुख्यनाम प्रतमानिप्रकृष्टतमान्यासन् फलप्रसवसमर्थान्यभवन्नित्यर्थः तेह तेचयजमानाः नाकं नास्मिन्नकमस्तीति

१ नि० ६. १४. २ तै० सं० ६- २.१.।

नाकःस्वर्गः तंमहिमानःमाहात्म्ययुक्ताः सचन्तसंगताः कीदृशंनाकं यत्रयस्मिन्नाके पूर्वेपूर्वेत-नाः साध्याःसाधनाः यज्ञादिसाधनवन्तः कर्मदेवाइत्यर्थः तेसन्तिनिवसन्ति तं सचन्त तस्मादि-दानीमपिमनुष्यैरेवंकर्तव्यमित्यर्थः यद्वा देवाइदानींदेवभावमापन्नाः पूर्वंयज्ञेनअग्निनापशुभूतेन यज्ञंयष्टव्यमग्निंअयजन्तपूजितवन्तः अग्नेरेवमूर्तिभेदेनदेवत्वंचपशुत्वंचद्रष्टव्यं अग्निःपशुरासीत्त-मालभन्ततेनायजन्तेतिश्रुतेः।शिष्टंपूर्ववत्।यत्रयस्मिन्स्वर्गेनिमित्तभूतेसतिपूर्वेपूर्वतनाःसाध्याःदेवाः साधनाः छन्दोभिमानिनःआदित्याअंगिरसश्चसाध्यादेवाउच्यन्ते छन्दांसिवैसाध्यादेवास्तेग्रेग्नि-मयजन्ततेस्वर्गंलोकमायन्नादित्याश्चैवेहासन्नंगिरसश्चतेग्रेग्निनाग्निमयजन्ततेस्वर्गंलोकमायन्निति ब्राह्मणम्। एतेदेवाः स्वर्गेसन्तिभवन्ति स्वर्गप्राप्ताइत्यर्थः यद्वा येयज्ञेन ज्ञानादियज्ञेन यज्ञं वि-ष्णुंअयजन्त पूजयंति तेनाकंविष्णुलोकंमहानुभावाः सचन्तसंगच्छन्ते यत्रपूर्वेसाध्यादयोदेवाः सन्तितत्स्थानं अग्निनाग्निमयजन्तदेवाइत्यादिनिरुक्तमनुसन्धेयम्॥ ५० ॥

५०. देवों वा यजमानों ने यज्ञ या अग्नि-द्वारा यज्ञ किया है; क्योंकि वही प्रथम धर्म है। वह माहात्म्य आकाश में एकत्र है, जहाँ पहले से ही साधनीय देवता हैं।

समानमेतदुदकमुच्चैत्यवचाहभिः।
भूमिंपर्जन्याजिन्वन्तिदिवंजिन्वन्त्यग्नयः॥ ५१ ॥

समानम्। एतत्। उदकम्। उत्। च। एति। अव। च। अहऽभिः।
भूमिम्। पर्जन्याः। जिन्वन्ति। दिवम्। जिन्वन्ति। अग्नयः॥५१॥

एतत्प्रसिद्धमुदकंसमानं एकरूपमित्यर्थः अहभिः कैश्चिदहोभिःग्रीष्मकालीनैरुच्चैति ऊ-र्ध्वंगच्छति तथाअहभिःवर्षकालीनैरहोभिः तदुदकंअवचैति अवाङ्मुखंचगच्छति चवायोगेप्रथ-मेतिप्रथमाविभक्तिर्नेनिहन्यते रश्मिनाडचैवभूमिंप्राप्नोति तदेवोच्यते पर्जन्याः प्रीणयितारोमेघाः भूमिंजिन्वन्ति उदकसंस्त्यायेनसस्याद्युत्पादनद्वाराभूमिष्ठान्प्रीणयन्ति तथाअग्नयआहवनीयाद्याः स्वेहुते दिवमादित्यादिद्युलोकस्थान्देवाञ्जिन्वन्ति प्रीणयन्ति॥ ५१ ॥

५१. जल एक ही तरह का है; कभी ऊपर और कभी नीचे जाता-आता है। प्रसन्नता-दाता मेघ भूमि को प्रसन्न करते हैं। अग्नि द्युलोक को प्रसन्न करते हैं।

सरस्वद्देवताकेपशौ दिव्यंसुपर्णमितिवपायाज्या दिव्यंसुपर्णवायसंबृहन्तंसवावृधेनर्योयोष-णास्वितिसूत्रितत्वात्।अन्वारंभणीयायांसरस्वद्यागेएषैवयाज्या सूत्रितंच—दिव्यंसुपर्णवायसंबृ-हन्तमासवंसवितुर्यथेति।

---

१ तै० सं० ५. ७. २६.। १ ऐ० ब्रा० १. १६.। ३ नि० १. १६.।

सैषाद्विपञ्चाशी—

दि॒व्यंसु॑प॒र्णंवा॑य॒संबृ॒हन्तं॑म॒पांगर्भं॑दर्श॒तमोष॑धीनाम् ।
अ॒भी॒प॒तोवृ॒ष्टिभि॑स्त॒र्पय॑न्तं॒सर॑स्वन्त॒मव॑सेजोहवीमि ॥५२॥२३॥

दि॒व्यम् । सु॒ऽप॒र्णम् । वा॒य॒सम् । बृ॒हन्त॑म् । अ॒पाम् । गर्भ॑म् ।
द॒र्श॒तम् । ओष॑धीनाम् । अ॒भी॒प॒तः । वृ॒ष्टिऽभिः॑ । त॒र्पय॑न्तम् ।
सर॑स्वन्तम् । अव॑से । जो॒ह॒वी॒मि ॥ ५२ ॥ २३ ॥

दिव्यंदिविभवंसुपर्णंशोभनगमनं वायसंगमनशीलंबृहन्तंमहान्तं अपांगर्भंवृष्ट्युदकानांगर्भवदुत्पादकं ओषधीनां ओषधीर्दर्शतं दर्शनायदर्शयन्तमित्यर्थः यद्वा ओषधीनांगर्भंदर्शतमितिपृथग्विशेषणं किञ्च अभीपतः आनुकूल्येनवृष्टिभिस्तर्पयन्तं जगत्प्रीणयन्तं यद्वा अभीपतः अभिगमनवतः सलिलाधारान्तडागादीन् तर्पयन्तं अथवाअभिगन्ताहं सरस्वन्तंउदकवन्तं सरइत्युदकनाम कं देवंसूर्यंवाअवसेरक्षणायजोहवीमि पुनःपुनराह्वयामि ॥ ५२ ॥

५२. सूर्यदेव स्वर्गीय सुन्दर गतिवाले, गमनशील, प्रकाण्ड, जल के गर्भोत्पादक और ओषधियों के प्रकाशक हैं। वे वृष्टि-द्वारा जलाशय को तृप्त और नदी को पालित करते हैं। रक्षा के लिए उन्हें बुलाता हूँ।

॥ इतिद्वितीयस्यतृतीयेत्रयोविंशोवर्गः ॥ २३ ॥

॥ इतिप्रथमेमण्डलेद्वाविंशोनुवाकः ॥ २२ ॥

त्रयोविंशानुवाकेपञ्चदशसूक्तानि तत्रकयाशुभेतिपञ्चदशर्चंप्रथमंसूक्तंत्रैष्टुभं अत्रानुक्रमणिका—कयापञ्चोनासंवादस्तृतीयाद्ययुजोमरुतांवाक्यं अन्त्यस्तृचोगस्त्यस्यच शिष्टा इन्द्रस्यैकादशीच मरुत्वांस्त्विन्द्रोदेवतेति । अत्रैन्द्रागस्त्यमरुतांसंवादःप्रतिपाद्यते तत्रतृतीयापञ्चमीसप्तमीनवमीनांमरुद्वाक्यरूपत्वात्तएवर्षयः यस्यवाक्यंसऋषिरितिन्यायात् अन्त्यतृचस्यागस्त्यवाक्यत्वात्सएवर्षिः शिष्टायुजःआद्याचैकादशीचेन्द्रस्यवाक्यं अतःसएवर्षिः अत्र यास्तेनोच्यतेसादेवतेतिसामान्यापवादेन कृत्स्नस्यमरुत्वद्गुणकइन्द्रोदेवता संसवचातुर्विंशकयोर्मरुत्वतीयशस्त्रेनिविद्धानीयात्पूर्वंएतत्सूक्तं यदिपर्यायान्मरुत्वतीयइतिखण्डयोःसूत्रितम्—कयाशुभेतिचमरुत्वतीयेपुरस्तात्सूक्तस्यशंसेदिति । आभिप्लविकेपञ्चमेहनिमरुत्वतीयेएतदेवसूक्तं पञ्चमस्यकयाशुभायस्तिग्मश्रृंगइतिमाध्यंदिनेइतिसूत्रितत्वात् । महाव्रते मरुत्वतीयशस्त्रे एतत्सूक्तं पञ्चमारण्यकेकयाशुभासवयसःसनीळामरुत्वाँइन्द्रवृषभोरणायेत्युक्तत्वात् । विषुवति मरुत्वतीये एतदेवनिविद्धानीयं त्यंसुमेषंकयाशुभेतिचमरुत्वतीयमितिसूत्रितत्वात् । अस्य

विनियोगंशौनकआह—ज्ञातिपुत्रसुहृन्मित्रैर्यश्चराज्यंचिकीर्षति । नित्यंसनियतोभूत्वासूक्तंतुमनसाजपेत् । कयाशुभेतिपैशुन्यंकृत्वाचार्यनृपद्विजैः । श्रुत्वापररहस्यंतुगुरोरप्याहशौनकइति ।

तत्रप्रथमा—

कयाशुभासवयसःसनीळाःसमान्यामरुतःसंमिमिक्षुः ।
कयामतीकुतएतासएतेर्चन्तिशुष्मंवृषणोवसूया ॥ १ ॥

कया । शुभा । सऽवयसः । सऽनीळाः । समान्या । मरुतः ।
सम् । मिमिक्षुः । कया । मती । कुतः । आऽइतासः । एते ।
अर्चन्ति । शुष्मम् । वृषणः । वसुऽया ॥ १॥

इन्द्रवाक्यं सवयसः समानवयस्काः सनीळाः समानस्थानाएतेमरुतः कयाशुभाकैरपि दुर्ज्ञेययाशोभयासमान्या सर्वेषामेकरूपयामहत्यायुक्ताः यद्वा शुबित्युदकनाम उक्तरूपयाशुभा उदकेनसंमिमिक्षुः लोकंसम्यक्सिञ्चन्ति मिहिसमानार्थोमिमिक्षतिधातुः यद्वा मांयुद्धादिषु प्रवर्तमानं संमिमिक्षुः तदर्थं एतेमरुतः कयाअनिश्चेययया मती मत्या कुतोदेशादेतासः आगताः आगत्यच एतेवृषणोवर्षितारोवसूया वसूयया सुपांसुलुगितिपूर्वसवर्णदीर्घः धनेच्छया यद्वा वसवोवासयितारोवा तेनैवजसोयाजादेशः शुष्मं बलं वृष्टिप्रदानजनितं लोकेअर्चन्ति पूजयंति जगतिकुर्वन्ति यद्वा ममबलंवर्धयन्तीत्यर्थः मरुतोहैनंनाजहुरितिश्रुतेः अत्रेन्द्रमरुत्संवादरूपं सर्वत्रप्राणजीवात्मपरतयापियोजनीयम् । अत्रद्वितीययापीन्द्रोब्रूते ॥ १ ॥

१. (इन्द्र) समानवयस्क और एक स्थान-निवासी मरुत् लोग सर्वसाधारण की दुर्ज्ञेय शोभा से युक्त होकर पृथिवी पर सिञ्चन करते हैं। मन में क्या सोचकर वे किस देश से आये हैं? आकर जलवर्षीयगण धन-लाभ की इच्छा से क्या बल की अर्चना करते हैं?

अथद्वितीया—

कस्यब्रह्माणिजुजुषुर्युवानःकोअध्वरेमरुतआववर्त ।
श्येनाँइवध्रजतोअन्तरिक्षेकेनमहामनसारीरमाम ॥ २ ॥

कस्य । ब्रह्माणि । जुजुषुः । युवानः । कः । अध्वरे । मरुतः ।
आ । ववर्त । श्येनान्ऽइव । ध्रजतः । अन्तरिक्षे । केन ।
महा । मनसा । रीरमाम ॥ २ ॥

युवानोनित्यतरुणाः महानुभावामरुतः कस्यमहाभागस्य ब्रह्माणिपरिवृढानि हवींषिजुजुषुः सेवन्ते कश्चमहानध्वरे स्वकीये यागेमरुतएतानाववर्त यागान्तरेभ्योतिवर्तयन्ति दुर्निग्रहत्वेदृष्टान्तमाह—अन्तरिक्षे ध्रजतोगच्छतः श्येनान् इव शंसनीयगमनानेतन्नामकान्पक्षिणइव केनतत्मीतिसाधनेन महा महतामनसा मननवता स्तोत्रेण रीरमाम रमेमहि अथमरुतइन्द्रेणोक्ताः तृतीययाऽनयाप्रतिब्रुवते ॥ २ ॥

२. तरुणवयस्क मरुद्गण किसका हव्य ग्रहण करते हैं? वे अन्तरिक्षचारी श्येन पक्षी की तरह हैं। यज्ञ में उन्हें कौन हटा सकता है? कैसे महा-स्तोत्र-द्वारा हम उन्हें आनन्दित करें?

**कुतस्त्वमिन्द्रमाहिनःसन्नेकोयासिसत्पतेकिन्तइत्था ।**
**संपृच्छसेसमराणःशुभानैर्वोचेस्तन्नोहरिवोयत्तेअस्मे ॥ ३ ॥**

कुतः । त्वम् । इन्द्र । माहिनः । सन् । एकः । यासि । सत्ऽपते ।
किम् । ते । इत्था । सम् । पृच्छसे । समऽअराणः । शुभानैः ।
वोचेः । तत् । नः । हरिऽवः । यत् । ते । अस्मे इति ॥ ३ ॥

हेइन्द्रसत्पते सतांपालक त्वं माहिनोमहनीयः पूजनीयः अनुचैररनुगन्तव्यइत्यर्थः तथाभूतःसन्नपि एकोऽसहायःसन् कुतोयासि कुतःकारणाद्यासि यद्वा कुत्रयासि तेतव इत्थाइत्थं किंत्वं एवमेवकिंनकोऽप्यनुचरोऽस्ति किंच त्वंसमराणः अस्माभिःसंगच्छमानः संपृच्छसे समीचीनंपृच्छसि हेहरिवः हरिभ्यांतद्वन्निन्द्र तेतव अस्मे अस्मासु यद्वक्तुमिष्टतममस्तितन्नोस्मभ्यं शुभानैःशोभमानैर्वचनैः वोचेः ब्रूहि ॥ ३॥

३. (मरुद्गण) हे साधुपालक और पूज्य इन्द्र, तुम अकेले कहाँ जा रहे हो? तुम क्या ऐसे ही हो? हमारे साथ मिलकर तुमने ठीक ही पूछा है। हरि-वाहन, हमारे लिए जो वक्तव्य है वह मीठे वचनों से कहो।

**ब्रह्माणिमेमतयःशंसुतासःशुष्मइयर्तिप्रभृतोमेअद्रिः ।**
**आशासतेप्रतिहर्यन्त्युक्थेमाहरीवहतस्तानोअच्छ ॥ ४ ॥**

ब्रह्माणि । मे । मतयः । शम् । सुतासः । शुष्मः । इयर्ति । प्रऽभृतः ।
मे । अद्रिः । आ । शासते । प्रति । हर्यन्ति । उक्था । इमा ।
हरी इति । वहतः । ता । नः । अच्छ ॥ ४ ॥

अथैवंतैःपृष्टः अनयाचतुर्थ्येन्द्रःप्रत्याह—हेमरुतः ब्रह्माणिसर्वाणिकर्माणिहवींषिवा मेम-मस्वभूतानितथामतयश्चमननयुक्ताःस्तुतयश्चमेममशंसुखकार्याः यद्वा मेमतयोबुद्धयः तेषुवर्त-न्तइतिशेषः तथासुतासोभिषुताःसोमाःमेमदीयाः मदर्थाएव अतोयज्ञंप्रतिगन्तव्यमित्यर्थः कि-ञ्च मध्येराक्षसादिबाधपरिहाराय शुष्मः बलवान्मेमदीयोद्रिःशत्रूणांभक्षकोवज्रः प्रभृतःसन्नि-यर्ति गच्छत्येवलक्ष्यंप्रति नचनिवर्तते नकेवलंहविरादीनांमदीयत्वमेव अपितुयजमानाआशा-सतेमामेवप्रार्थयन्ते किंचोक्था उक्थानिशस्त्राणि मांप्रतिहर्यन्तिकामयन्ते मामेवशंसन्तीत्य-र्थः किञ्च नोऽस्मदीयाविमाहरी इमावश्वौ ता तानिगन्तव्यानिहविरादीनि अच्छअभिप्राप्तुं मां वहतः अभिमतदेशंमापयतः अतएवशीघ्रंगच्छामि युष्माभिरपितत्प्राप्तुं गन्तव्यमित्यर्थः अतो-सहायइतिमन्तव्यमितिभावः ॥ ४ ॥

४. (इन्द्र) सारा हव्य मेरा है; सारी स्तुतियाँ मेरे लिए सुखकर हैं; प्रस्तुत सोम मेरा है। मेरा मज़बूत वज्र फेंके जाने पर अव्यर्थ होता है। यजमान लोग मेरी ही प्रार्थना करते हैं, ऋङ्-मंत्र मुझे ही चाहते हैं। ये हरि नाम के दोनों घोड़े हव्य-लाभ के लिए मुझे ढोते हैं।

अतो॑व॒यमन्त॒मेभि॑र्युजा॒नाःस्वक्ष॑त्रेभिस्त॒न्व१॒ःशुम्भ॑मानाः ।
महो॑भि॒रेताँ॒उप॑युज्महे॒न्विन्द्र॑स्व॒धामनु॒हिनो॑ब॒भूथ ॥ ५ ॥ २४ ॥

अतः॑ । व॒यम् । अ॒न्त॒मेभिः॑ । यु॒जा॒नाः । स्वऽक्ष॑त्रेभिः ।
त॒न्वः॑ । शुम्भ॑मानाः । महः॑ऽभिः । एता॒न् । उप॑ । यु॒ज्म॒हे॒ ।
नु । इन्द्र॑ । स्व॒धाम् । अनु॑ । हि । नः॒ । ब॒भूथ ॥ ५ ॥ २४ ॥

एवमुक्तामरुतस्तमेवंब्रुवते—हेइन्द्र त्वंयस्मादेवंकरोषि अतःकारणाद्वयमपिअन्तमेभिः अ-न्तिकतमैरश्वैर्युजानाः युक्ताःसन्तः कीदृशैः स्वक्षत्रेभिः स्वायत्तबलैः किंच महोभिस्तेजोभिः तन्वः आत्मशरीराणिशुंभमानाःदीपयन्तः हर्षंप्राप्नुवानाइत्यर्थः यद्वा महोभिः स्वमहत्त्वेनयुक्ताव-यंएतान्गन्तॄन्नु क्षिप्रमुपयुज्महे तवसाकंहविरादिस्वीकुर्मइत्यर्थः हेइन्द्र त्वमपिनोऽस्मत्संबन्धिस्व-धांउदकं बलंवा अनुबभूथहि अस्मत्सृष्टोदकजन्यं हविरनुभवसिखलु हिशब्दः परस्परोपकार्यो-पकारिभावप्रसिद्धिद्योतनार्थः ॥ ५ ॥

५. (मरुद्गण) इसी लिए हम महातेज से अपने शरीर को अलंकृत करके, निकटवर्त्ती और बली अश्वों से युक्त होकर, यज्ञस्थान में जाने के लिए शीघ्र ही तैयार हुए हैं। तुम रेत या बल के साथ हमारे साथ ही रहो।

क्व१॒स्यावो॑मरुतःस्व॒धासी॒द्यन्मामेकं॑स॒मध॑त्ताहि॒हत्ये॑ ।
अ॒हंह्यु१॒ग्रस्त॑वि॒षस्तुवि॑ष्मा॒न्विश्व॑स्य॒शत्रो॒रन॑मंवध॒स्नैः ॥ ६ ॥

क्वं । स्या । वः । मरुतः । स्वधा । आसीत् । यत् । माम् । एकम् । सम्ऽअधत्त । अहिऽहत्ये । अहम् । हि । उग्रः । तविषः । तुविष्मान् । विश्वस्य । शत्रोः । अनमम् । वधऽस्नैः ॥ ६ ॥

हेमरुतः स्या सा स्वधा तदुदकंबलंवा वोयुष्माकंसंबन्धि क्वासीत् नैवासीदित्यर्थः अस्माकमुदकंत्वमनुभवसीतिन्नूथ यत् या स्वधा एकमसहायंमांअहिहत्ये वृष्ट्यर्थंमेघहननकर्मणिवृत्रवधेवा समधत्त सहितमभूत् समासीदितिसंबन्धः असहायस्यकथमेतत्सेत्स्यतीत्यतआह—अहंहि अहं खलु उग्रः उद्गूर्णबलस्तविषोबलवान् तुविष्मान्महत्त्वोपेतोऽस्मि यस्मादतिबलोहं तस्माद्विश्वस्य कृत्स्नस्य शत्रोर्मेघस्य शत्रोरितीयंकर्मणिषष्ठी सर्वंशत्रुसंघं वधस्नैः वधरूपैःशोधनैः वधकुशलैरित्यर्थः यद्वा वधइतिवज्रनाम वधस्नैर्वज्रस्यासनैः क्षेपणमकारैरनमं अनमयं अन्तर्भावितण्यर्थोयं वशीकरोमीत्यर्थः ॥ ६ ॥

६. (इन्द्र) मरुतो, अहि या वृत्रासुर के वध के समय मेरे साथ रहने का तुम्हारा ढंग कहाँ था? मैं उग्र बलिष्ठ महात्म्यवाला हूँ; इसलिए मैंने सारे शत्रुओं को वध-द्वारा परास्त किया है।

भूरिंचकर्थयुज्येंभिरस्मेसमानेभिर्वृषभपौंस्येभिः ।
भूरीणिहिकृणवामाशविष्ठेन्द्रक्रत्वामरुतोयद्वशाम ॥ ७ ॥

भूरिं । चकर्थ । युज्येंभिः । अस्मे इति । समानेभिः । वृषभ । पौंस्येभिः । भूरीणि । हि । कृणवाम । शविष्ठ । इन्द्र । क्रत्वा । मरुतः । यत् । वशाम ॥ ७ ॥

अथैवमुक्तवन्तं इन्द्रंपुनराहुः हेइन्द्र वृषभ वर्षितस्त्वं भूरिचकर्थ प्रभूतं कृतवानसि सत्यमेव तथापि अस्मेअस्माकंसमानेभिः समानैः युज्येभिः अस्माभिर्युक्तैः पौंस्येभिः पुंसःकर्मभिः सामर्थ्यैरेवचकर्थ नत्वंएकएवेत्यर्थः हेशविष्ठ शवइतिबलनाम हेइन्द्र बलवत्तम वयंभूरीणिहि त्वत्कृतादपिप्रभूतानिकर्माणिकृणवाम कृतवन्तःस्म हेइन्द्र क्रत्वाक्रतुनाकर्मणायद्यद्वृष्ट्यादिकंवशाम कामयामहे तानित्वत्तोप्यधिकानीत्यर्थः यतोवयंमरुतः छान्दसमनुदात्तत्वं एतेनस्वमहत्त्वंस्थापितंभवति स्वरोव्यत्ययस्तः अथवा इन्द्रस्येदंवाक्यं हेमरुतोयद्यस्यैवतत्तस्यैवभवतु तर्ह्यहंच यूयंचसहैवक्रत्वाकर्मणायद्वशाम यद्वृष्टिकर्मकामयामहे तस्मादुदकंसमानमेवेत्यर्थः एवंमरुतइतिनिघातस्वरस्यव्याख्यानम् ॥ ७ ॥

७. (मरुद्गण) अभीष्ट-वर्षी इन्द्र, हम समान पौरुषवाले हैं। हमारे साथ मिलकर तुमने बहुत कुछ किया है। बलवत्तम इन्द्र, हमने
२ भी बहुत काम किया है। हम मरुत हैं; इसलिए कार्य-द्वारा हम वृष्टि आदि की कामना करते हैं।

अथाष्टमी—

वधींवृत्रंमरुतइन्द्रियेणस्वेनभामेनतविषोबभूवान् ।
अहमेतामनवेविश्वश्चन्द्राःसुगाअपश्चकरवज्रबाहुः ॥ ८ ॥

वधीम् । वृत्रम् । मरुतः । इन्द्रियेण । स्वेन । भामेन । तविषः । बभूवान् । अहम् । एताः । मनवे । विश्वऽचन्द्राः । सुऽगाः । अपः । चकर । वज्रऽबाहुः ॥ ८ ॥

इदानीमिन्द्रआह—हेमरुतः अहमिन्द्रः इन्द्रियेणवीर्येणस्वेनभामेनस्वसमानकोपेन तविषोबलवान्बभूवान्भूतःसंपन्नःसन्वृत्रंवधीं हतवानस्मि कस्मैतदुच्यते—मनवे मनोरर्थायैताः विश्वश्चन्द्राः सर्वाह्लादकाः सुगाः सुगमनाः सर्वत्रसस्यादिषुगमनशीलाः अपोवृष्ट्युदकानि चकर चकार कृतवानस्मि यतोहंवज्रबाहुः अनेनसहायनैरपेक्ष्यमुक्तंभवति ॥ ८ ॥

८. (इन्द्र) मरुतो, मैंने क्रोध के समय विशाल पराक्रमी बनकर अपने बाहुबल से वृत्र को पराजित किया है। मैं वज्रबाहु हूँ। मैं मनुष्य के लिए सबकी प्रसन्नता-दायक सुन्दर वृष्टि किया करता हूँ।

अनुत्तमातेमघवन्नकिर्नुनत्वावाँअस्तिदेवताविदानः ।
नजायमानोनशतेनजातोयानिकरिष्याकृणुहिप्रवृद्ध ॥ ९ ॥

अनुत्तम् । आ । ते । मघऽवन् । नकिः । नु । न । त्वाऽवान् । अस्ति । देवता । विदानः । न । जायमानः । नशते । न । जातः । यानि । करिष्या । कृणुहि । प्रऽवृद्ध ॥ ९ ॥

इदानींतेमरुतोहर्षेण प्रत्याहुः आइतिस्मरणे स्मृतवन्तोवयमिदानीं हेमघवन् तेत्वया अनुत्तंअप्रेरितं नकिर्नु नैवास्ति नुनिश्चये त्वयायदुक्तं तत्सत्यमित्यर्थः हेदेव त्वावान् त्वत्सदृशोविदानः विद्वान् व्यत्ययेनशानच् जयोपायवेदितादेवतादेवोनास्ति किञ्च हेप्रवृद्ध अतिबल जायमानोजातोवाकश्चिद्देवोमर्त्योवानास्ति त्वंयानि वृत्रवधादीनिकरिष्या कर्तव्यानि कृणुहि कुरुषे तानि न नशते नव्याप्नोति नशतिर्व्याप्तिकर्मा नान्यस्त्वच्चेष्टितानुकार्येवेत्यर्थः ॥ ९ ॥

९. (मरुद्गण) इन्द्र, तुम्हारा सभी कुछ उत्तम है। तुम्हारे समान कोई देवता विद्वान् नहीं है। अतीव बलशाली इन्द्र, तुमने जो कर्त्तव्य-कर्मों को किया है, उन्हें न तो कोई पहले कर सका, न आगे कर सकता है।

अथदशमी–

एकस्यचिन्मेविभ्व१स्त्वोजोयानुदधृष्वान्कृणवैमनीषा ।
अहंह्यु१ग्रोमरुतोविदानोयानिच्यवमिन्द्रइदीशएषाम्॥ १० ॥२५॥

एकस्य । चित् । मे । विऽभु । अस्तु । ओजः । या । नु ।
दधृष्वान् । कृणवै । मनीषा । अहम् । हि । उग्रः । मरुतः । विदानः ।
यानि । च्यवम् । इन्द्रः । इत् । ईशे । एषाम् ॥ १० ॥ २५ ॥

इदानीमिन्द्रआह मेममएकस्यचित् एकस्यैव विभु सर्वत्रगमनशीलमोजोबलमस्तु यद्वा बलमेकस्यैवास्तु किमर्थमितिचेत् उच्यते–या यानिकर्माणि मनीषामनीषयामनसईषयादधृष्वान्धर्षितवानहंतानिनुक्षिप्रंकृणवै कर्तुंशक्नवानि हेमरुतः अहंहिअहंखलु उग्रः उद्गूर्णबलः विदानः वेदनावान् यानियानिवसूनिच्यवं अवगच्छामि एषामहमेवेन्द्रइत् ईश्वरएवसन् ईशे ईश्वरोभवामि अथवा विदानोहंयानिच्यवं यान्युद्दिश्यगच्छेयं एषामीशे यतोहमिन्द्रः अतःशक्तइत्यर्थः॥१०॥

१०. (इन्द्र) में अकेला हूँ। मेरा ही बल सर्वत्र व्याप्त हो; मैं जो चाहूँ, तुरन्त कर डालूँ; क्योंकि, मरुतो, मैं उग्र और विद्वान् हूँ एवं जिन धनों का मुझे पता है, उनका मैं ही अधीश्वर हूँ।

॥ इतिद्वितीयस्यतृतीयेपञ्चविंशोवर्गः ॥ २५ ॥

अथैकादशी–

अमन्दन्मामरुतःस्तोमोअत्रयन्मेनरःश्रुत्यंब्रह्मचक्र ।
इन्द्रायवृष्णेसुमखायमह्यंसख्येसखायस्तन्वेतनूभिः ॥ ११ ॥

अमन्दत् । मा । मरुतः । स्तोमः । अत्र । यत् । मे । नरः । श्रुत्यम् ।
ब्रह्म । चक्र । इन्द्राय । वृष्णे । सुऽमखाय । मह्यम् । सख्ये ।
सखायः । तन्वे । तनूभिः ॥ ११ ॥

इदमपीन्द्रवाक्यं हेमरुतः मामां अत्रास्मिन्नुदकोत्पादनविषये स्तोमः स्तोत्रं अमन्दत् मादयति मोदयतेवा हेनरःसखायः यूयं मेमम यत् श्रुत्यं सर्वैःश्रोतव्यं ब्रह्मपरिवृढंमेघधारणादिरूपंकर्म चक्र कृतवन्तःस्थ प्रभूतं स्तोत्रंवा अनुत्तमातइत्यादिकं इन्द्राय परमैश्वर्यगुणकायवृष्णे अभिमतवर्षिने सुमखायशोभनयागाय सख्ये युष्माभिःसमानख्यानाय तनूभिरनेकशरीरैरु-

पेताय मह्यं ममतन्वे मदीयशरीरपोषाय भवतु यद्वा तनूभिःअस्मच्छरीरभूतैः युष्माभिः कृतं मह्यमेवास्त्वित्यर्थः ॥ ११ ॥

११. मरुतो, इस सम्बन्ध में तुमने मेरा जो प्रसिद्ध स्तोत्र किया है, वह मुझे आनन्दित करता है। मैं अभीष्ट फलदाता, ऐश्वर्यशाली, विभिन्न रूपोंवाला और तुम्हारा योग्य मित्र हूँ।

एवेदेतेप्रतिमारोचमानाअनेद्यःश्रवएषोदधानाः।
संचक्ष्यामरुतश्चन्द्रवर्णाअच्छान्तमेछदयाथाचनूनम् ॥ १२ ॥

एव । इत् । एते । प्रति । मा । रोचमानाः । अनेद्यः । श्रवः ।
आ । इषः । दधानाः । सम्ऽचक्ष्य । मरुतः । चन्द्रऽवर्णाः ।
अच्छान्त । मे । छदयाथ । च । नूनम् ॥ १२ ॥

हेमरुतः एवेत् एवमेव एतेयूयंमामांप्रतिरोचमानाः मद्विषये संप्रीयमाणाः मांख्यापयन्तो- वाअनेद्यः अनन्तिकस्थं श्रवः कीर्तिं इषश्च अन्नानिदधानाः आइतिचार्थे यद्वा अनेद्यइतिप्र- शस्यनाम प्रशस्यं यशोस्मत्तोदधानाः अस्माभिर्वाधारयमाणाः चन्द्रवर्णाः चन्द्रमितिहिरण्यना- म सुवर्णवर्णाः यूयं मे मां संचक्ष्य सम्यक्प्रकाश्य नूनंनिश्चयं अच्छान्त यशोभिराच्छादितवन्तः छदयाथ आच्छादयथच मांप्रतिसर्वदारोचमानाः मय्येवकीर्तिमन्नंचदधानाः मत्कृतैः कर्म- भिः मामेवस्तुतेत्यर्थः ॥ १२ ॥

१२. मरुतो, तुम सोने के रंग के हो। मेरे लिए प्रसन्न होकर दूरस्थ कीर्ति और अन्न धारण करते हुए मुझे अच्छी तरह से प्रकाश और तेज- द्वारा आच्छादित किया है। मुझे आच्छादित करो।

अथत्रयोदशी—

कोन्वत्रमरुतोमामहेवःप्रयातनसखींरच्छासखायः।
मन्मानिचित्राअपिवातयन्तएषांभूतनवेदामऋतानाम् ॥ १३ ॥

कः । नु । अत्र । मरुतः । ममहे । वः । प्र । यातन । सखीन् ।
अच्छ । सखायः । मन्मानि । चित्राः । अपिऽवातयन्तः । एषाम् ।
भूत । नवेदाः । मे । ऋतानाम् ॥ १३ ॥

हेमरुतोवःयुष्मान् अत्रलोकेकोनुखलुमर्त्यःममहे पूजयति हेसखायः सर्वस्यसखिवत्प्रि- यकारिणःसन्तः सखीन्हविःप्रदानेन सखिभूतान् यजमानान् अच्छ आभिमुख्येनप्राप्तुं प्रयातन

गच्छत हेचित्राः चायनीयाः यूयं मन्मानिमननीयानि धनानि अपि वातयन्तः संपूर्णं प्रापयन्तोभूतभवत किञ्च मे मदीयानां एषां ऋतानां अवितथानांधनानांनवेदाःभूत ज्ञातारोभवत ॥ १३ ॥

१३. (अगस्त्य) मरुतो, कौन मनुष्य तुम्हारी पूजा करता है ? तुम सबके मित्र हो। तुम यजमान के सामने आओ। मरुतो, तुम मनोहर धन की प्राप्ति के उपाय-भूत बनो और सत्य कर्म को जानो।

आयद्दुवस्याद्दुवसेनकारुरस्माञ्चक्रेमान्यस्यमेधा।
ओषुवर्तमरुतोविप्रमच्छेमाब्रह्माणिजरितावोअर्चत् ॥ १४ ॥

आ। यत्। दुवस्यात्। दुवसे। न। कारुः। अस्मान्। चक्रे।
मान्यस्य। मेधा। ओ इति। सु। वर्त। मरुतः। विप्रम्। अच्छ।
इमा। ब्रह्माणि। जरिता। वः। अर्चत् ॥ १४ ॥

हेमरुतः यत् दुवस्यात् युष्मत्परिचरणार्हाद्वस्तोत्राद् तेनस्तोत्रेणदुवसे परिचरणायपर्याप्ता कारुः कर्त्रीस्तुतिकुशलामान्यस्यमाननीयस्यविदुषोमेधाबुद्धिः अस्मान् नेतिसंप्रत्यर्थे इदानींतनानाचक्रे आभिमुख्येनकरोति प्राप्नोतीत्यर्थः यद्वा षष्ठीबहुवचनं इदंसूक्तंदुवस्यानां परिचरणार्हाणां दुवसेपरिचरणायेत्यर्थः अतोहेमरुतोयूयंविप्रंमेधाविनंयजमानंमामगस्त्यमच्छ आभिमुख्येनप्राप्तुं सु सुष्ठु ओवर्त ओइतिनिपातद्वयसमुदायरूपएकोनिपातः आङित्याभिमुख्ये उकारोवधारणे आवर्तध्वमेव किमर्थमेवमिति उच्यते—इमाब्रह्माणि इमानिपरिवृढानिकर्माण्युद्दिश्य जरितागरिता स्तोतावोयुष्मान्अर्चद् अर्चति यस्मादेवंतस्मादावर्तध्वमित्यर्थः ॥ १४ ॥

१४. मरुतो, स्तोत्र-द्वारा परिचरण-समर्थ, स्तुति-कुशल और मान्य ऋत्विक् की बुद्धि, तुम्हारी सेवा के लिए हमारे सामने आती है। मरुतो, मैं मेधावी हूँ। मेरे सामने आओ। तुम्हारे प्रसिद्ध कर्म को लक्ष्य कर स्तोता तुम्हारा पूजन करता है।

अथपञ्चदश्यां सूक्तोपक्रममारभ्यकृतांस्तुतिंमरुद्भ्योनिवेद्याभिमतमाशास्ते।

एषवःस्तोमोमरुतइयंगीर्मान्दार्यस्यमान्यस्यकारोः।
एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुम् ॥ १५ ॥ २६ ॥

एषः। वः। स्तोमः। मरुतः। इयम्। गीः। मान्दार्यस्य।
मान्यस्य। कारोः। आ। इषा। यासीष्ट। तन्वे। वयाम्।
विद्याम। इषम्। वृजनम्। जीरऽदानुम् ॥ १५ ॥ २६ ॥

हेमरुतः एषःस्तोमः इदानींक्रियमाणप्रकारंस्तोत्रं वोयुष्मदर्थंयुष्मत्प्रीणनायभवत्वि-त्यर्थः तथेयंगीः स्तुतिरूपावागपिवोयुष्मदर्थाय यस्मादेवंतस्मान्मांदार्यस्य स्तुतिविशेषैःमन्दयि-तुः स्तुतिभिर्मदस्यप्रेरयितुर्वा मान्यस्यवरप्रदानादिनामाननीयस्यकारोः स्तोतुः इषाइच्छया आ-यासीष्ट आगच्छत किमर्थं तन्वेशरीरायतत्पोषायेत्यर्थः वयां वयमपि इषं अन्नंवृजनं बलंजी-रदानुं जयशीलदानं एतत्सर्वं विद्याम युष्मास्वागतेषुयज्ञसंपूर्त्येष्ट्याद्विद्वाराल्लभेमहि ॥ १५ ॥

१५. मरुतो, यह स्तोत्र और यह स्तुति माननीय और प्रसन्नता-दायक है अथवा मान्य मान्दर्य कवि की है। यह शरीर-पुष्टि के लिए तुम्हारे पास जाती है। हम अन्न, बल और दीर्घ आयु अथवा जय, शील और दान पायें।

॥ इतिद्वितीयस्यतृतीयेषड्विंशोवर्गः ॥ २६ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसाय-णाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेतृतीयोऽध्यायःसमाप्तः॥३॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत्। निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम्॥१॥

इत्थंद्वितीयाष्टकगस्तृतीयोध्यायआदरात्। व्याख्यातःसायणार्येणपुरुषार्थप्रदर्शकः॥२॥

अथचतुर्थोध्यायआरभ्यते—कयाशुभेत्यस्मिंस्त्रयोविंशेनुवाकेपञ्चदशसूक्तानि तत्रतन्निवत्येतत् द्वितीयंसूक्तंपञ्चदशर्चं अत्रानुक्रमणिका—तन्वगस्त्योमारुतंहिद्वित्रिष्टुबन्तं मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसंदृष्ट्वावासतीवरेकुम्भेरेतोपतत्ततोगस्त्यवसिष्ठावजायेतामिति। सूक्तसंख्यानुवर्ततआन्यस्याःसूक्तसंख्यायाःइतिपरिभाषितत्वात्पञ्चदशर्चं उक्तलक्षणेनागस्त्येनदृष्टत्वाचस्यार्षं मारुतंहीत्युक्तत्वात् तुह्यादिपरिभाषयेदमादिसूक्तत्रयंमरुद्देवताकं अन्त्येद्वेत्रिष्टुभौ शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः विनियोगोलैङ्गिकः।

ओम् तन्नुवोचामरभसायजन्मनेपूर्वंमहित्वंवृषभस्यकेतवे।
ऐधेवयामन्मरुतस्तुविष्वणोयुधेवशक्रास्तविषाणिकर्तन॥१॥

तत्। नु। वोचाम। रभसाय। जन्मने। पूर्वम्। महिऽत्वम्।
वृषभस्य। केतवे। ऐधाःऽइव। यामन्। मरुतः। तुविऽस्वनः।
युधाःऽइव। शक्राः। तविषाणि। कर्तन॥१॥

हेमरुतः वयंयुष्मदीयंतत्तादृशंप्रसिद्धंपूर्वंपूरकंपूर्वतनंवा महित्वंमाहात्म्यंनुक्षिप्रंवोचाम ब्रूमः किमर्थं रभसायराभस्ययुक्ताय जन्मनेवेषांप्रादुर्भावाय वेषांसन्निधानायेत्यर्थः तदपिकिमर्थमित्यतआह—वृषभस्यफलस्यवर्षितुर्यज्ञस्यकेतवेप्रज्ञानाय वायुप्रेरणेनमेघागमनंप्रसिद्धं हे तुविस्वनः गमनसंरंभेणप्रभूतध्वनियुक्ताः हेशक्राः सर्वमपिकर्तुंशक्ताः यूयं यामन् यामनियागगमनेप्रस्तुतेसतिऐधेव ऐधानि एधःसंबन्धीनितेजांसीव प्राप्येनमहत्त्वेनतविषाणिबलानिसामर्थ्यानिकर्तन कुरु तवस्तुमइत्यर्थः तत्रदृष्टान्तः—युधेव युद्धेनतद्युद्धनिमित्तंयथातविषाणिकुरुथतद्वत्॥१॥

१. फलवर्षक यज्ञ के सुसम्पादन के लिए, मरुतों के शीघ्र आकर उपस्थित होने के लिए, उनके प्रसिद्ध पूर्वतन महात्म्य को कहता हूँ। हे विशाल ध्वनि से युक्त और सब कार्यों में समर्थ मरुद्‌गण, तुम्हारे यज्ञस्थल में जाने के लिए प्रस्तुत होने पर जैसे समिधा तेज से आवृत होती है, वैसे ही तुम लोग युद्ध में जाने के लिए प्रभूत बल धारण करो।

नित्यंनसूनुंमधुबिभ्रतउपक्रीळन्तिक्रीळाविदथेषुघृष्वयः ।
नक्षन्तिरुद्राअवसानमस्विनंनमर्धन्तिस्वतवसोहविष्कृतम् ॥ २ ॥

नित्यम् । न । सूनुम् । मधु । बिभ्रतः । उप । क्रीळन्ति । क्रीळाः ।
विदथेषु । घृष्वयः । नक्षन्ति । रुद्राः । अवसा । नमस्विनम् ।
न । मर्धन्ति । स्वऽतवसः । हविःऽकृतम् ॥ २ ॥

नित्यंनसूनुं औरसंप्रियंपुत्रमिव मधुमधुरंहविर्बिभ्रतः धारयंतोमरुतः विदथेषुयागेषु घृष्वयः रक्षःप्रभृतीनांघर्षकाःसन्तः क्रीळाः क्रीडनशीलाः उपउपेत्यक्रीळन्ति विहरन्ति किञ्च रुद्राः रुद्रपुत्राः मरुतोपिरुद्राउच्यन्ते जन्यजनकयोरभेदात् मरुतांरुद्रपुत्रत्वंपुराणेषु तपसातुष्टौपार्वतीपरमेश्वरौ मरुतःपुत्रत्वेनस्वीचक्रतुरितिप्रसिद्धम् नमस्विनंनमस्कारोपलक्षितस्तोत्रोपेतं हविष्कृतं हविषःकर्तारं प्रदातारंयजमानं अवसारक्षणेनतर्पणेनवानिमित्तभूतेननक्षन्तिव्याप्नुवन्ति किञ्च स्वतवसः स्वायत्तबलामरुतः यजमानंनमर्धन्ति नसङ्ग्रामयन्ति नक्लेशयन्तीत्यर्थः ॥२॥

२. औरस पुत्र की तरह प्रिय–मधुर हव्य धारण करके घर्षणकारी मरुद्गण, प्रसन्न चित्त से, यज्ञ में क्रीड़ा करते हैं। विनीत यजमान की रक्षा के लिए रुद्रगण मिलते हैं। उनके बल उनके अधीन हैं; वे कभी यजमान को क्लेश नहीं देते।

यस्माऊमासोअमृताअरासतरायस्पोषंचहविषाददाशुषे ।
उक्षन्त्यस्मैमरुतोहिताइवपुरूरजांसिपयसामयोभुवः ॥ ३ ॥

यस्मै । ऊमासः । अमृताः । अरासत । रायः । पोषम् । च ।
हविषा । ददाशुषे । उक्षन्ति । अस्मै । मरुतः । हिताःऽइव ।
पुरु । रजांसि । पयसा । मयःऽभुवः ॥ ३ ॥

यस्मैयजमानायहविषाददाशुषे सोमादिहविर्दत्तवतेहविषाप्रीतः ऊमासः अवितारः अमृताःअमरणधर्माणोमरुतोरायस्पोषंधनस्यपुष्टिं चशब्दात्पश्वादिपुष्टिंअरासत प्रायच्छन् रासतिर्दानार्थः अस्मैयजमानायहिताइवहिताचरणाः सखायइवसन्तोमयोभुवः सुखस्यभावयितारोमरुतोरजांसिलोकान्पुरुप्रभूतंयथाभवतितथा पयसाउदकेनसस्याद्युत्पत्त्यर्थंउक्षन्ति सिञ्चन्ति ॥३॥

३. जिस हविर्दाता यजमान की आहुति से प्रसन्न होकर सर्व-रक्षक, अमर और सुखोत्पादक मरुद्गण यथेष्ट धन देते हैं, उसी यजमान के हितकारी सखा की तरह तुम लोग समस्त संसार को अच्छी तरह सींचते हो।

अथचतुर्थी—

आयेरजांसितविषीभिरव्यंतप्रवएवासःस्वयंतासोअध्रजन् ।
भयंन्तेविश्वाभुवनानिहर्म्याचित्रोवोयामःप्रयंतास्वृष्टिषु ॥ ४ ॥

आ । ये । रजांसि । तविंषीभिः । अव्यंत । प्र । वः । एवासः ।
स्वऽयंतासः । अध्रजन् । भयंन्ते । विश्वा । भुवनानि । हर्म्या ।
चित्रः । वः । यामः । प्रऽयंतासु । ऋष्टिषु ॥४ ॥

हेमरुतःयुष्मत्संबन्धिनःयेएवासः एवाअश्वविशेषाः तविषीभिः स्वकीयैर्बलैः वृष्टिप्रदाना-
दिरूपैः रजांसिलोकान्आअव्यत सर्वतः आवृण्वन्ति ते वोयुष्माकं एवासोश्वाः स्वयतासःस्व-
यमेवसारथिनाविनैवयुक्ताः प्राध्रजन् प्रकर्षेणागच्छन्तिव्याप्नुवन्ति किञ्च युष्मदागमनाद्विश्वा
भुवनानिसर्वाणिभूतजातानि विश्वाहर्म्यासर्वाणिहर्म्याणिचभयन्तेबिभ्यतिपतनात् यस्मादेवं
तस्माद्वोयामः चित्रश्चायनीयः आश्चर्यभूतइत्यर्थः भीतेःकारणमाह—ऋष्टिषुयुद्धस्थासुहेतिषु
प्रयतासुप्रकर्षेणोद्यतासुसतीषु अथवानीतौदृष्टान्तः—ऋष्टिषुप्रयतासुसतीषु लुप्तोपमेयंआयुधेषूद्य-
तेषुयथाजनाबिभ्यतितद्वद्युष्मदागमनाद्बिभ्यतीत्यर्थः ॥ ४ ॥

४. मरुतो, तुम्हारे अश्वगण अपने बल से सारे संसार का भ्रमण करते हैं; वे अपने ही रथ से युक्त होकर जाते हैं। तुम्हारी यात्रा अत्यन्त आश्चर्यमयी है। हथियार उठाने पर जैसे लोग संसार में डरते हैं, वैसे ही सारे भुवन और अट्टालिकायें, तुम्हारे यात्रा-काल में, डरती हैं।

अथपञ्चमी—

यत्त्वेषयांमानदयंन्तपर्वतान्दिवोवापृष्ठंनर्याअचुंच्यवुः ।
विश्वोवोअज्मंन्भयतेवनस्पतीरथीयंतीवप्रजिहीतओषधिः ॥५॥१॥

यत् । त्वेषऽयांमाः । नदयंन्त । पर्वतान् । दिवः । वा । पृष्ठम् ।
नर्याः । अचुंच्यवुः । विश्वः । वः । अज्मंन् । भयते । वनस्पतिः ।
रथियन्तीऽइव । प्र । जिहीते । ओषधिः ॥ ५ ॥ १ ॥

मरुतः त्वेषयामाः प्रदीप्तगमनाः यत्यदापर्वतान् पर्ववतोगिरेर्गह्वराणि पूरकान् मेघान्वा
नदयन्तनादयन्तिवा अथवा दिवोविद्योतनात्मकस्यान्तरिक्षस्यपृष्ठं उपरिभागंनर्यानरेभ्यो-
हिताःअचुच्यवुः गच्छन्ति तथावोयुष्मत्संबन्धिनि अज्मन् गमनेनिमित्तभूतेसति विश्वोव-
नस्पतिः वनस्यपालयितावृक्षसमूहोभयतेबिभेति तथौषधिः प्रियङ्गुव्रीह्यादिः प्रजिहीते प्रकर्षेण

गच्छतिस्वस्थानाव् इतस्ततश्चलतीत्यर्थः तत्रदृष्टान्तः—रथीयन्तीव रथमात्मनःइच्छन्तीस्त्रीर-थारूढेत्यर्थः तादृशीस्त्रीव सायथाचलतितद्वत् ॥ ५ ॥

५. मरुतों का गमन अत्यन्त प्रदीप्त है। वे जिस समय गिरि-गह्वरों को ध्वनित करते हैं अथवा मनुष्यों के हित के लिए अन्तरिक्ष के ऊपरी भाग में चढ़ते हैं, उस समय उनके पथ के सारे वीरुध, डर के मारे व्याकुल हो जाते और रथारूढ़ा स्त्री की तरह ओषधियाँ एक स्थान से दूसरे स्थान पर चली जाती हैं।

यूयंनंउग्रामरुतःसुचेतुनारिष्टग्रामाःसुमतिंपिपर्तन ।
यत्रावोदिद्युद्रदतिक्रिविर्दतीरिणातिपश्वःसुधितेवबर्हणा ॥६॥

यूयम् । नः । उग्राः । मरुतः । सुऽचेतुना । अरिष्टऽग्रामाः ।
सुऽमतिम् । पिपर्तन । यत्र । वः । दिद्युत् । रदति । क्रिविःऽदती ।
रिणाति । पश्वः । सुधिताऽइव । बर्हणा ॥ ६ ॥

हेउग्राः उद्गूर्णबलामरुतोयूयं सुचेतुनाशोभनचेतसा अरिष्टग्रामाः अहिंसितसंघाःसन्तो-नोस्माकं सुमतिंशोभनांबुद्धिं पिपर्तनपूरयत कस्मिन्कालेइतितदुच्यते—यत्रयस्मिन्कालेवोयुष्म-त्सबन्धिनीक्रिविर्दतीविक्षेपणशीलदन्तीदिद्युद्धेतिःरदति विलिखति मेघसंस्त्यायंपश्वःपशूंश्च रिणातिरिषतिहिनस्ति वायौवातिसतिपशवःशीर्यन्तइतिप्रसिद्धम् हिंसायांदृष्टान्तः—सुधिताइव सुहितासुष्ठुप्रेरिताबर्हणा हतिस्तत्साधनाहेतिर्वायथारिणातितद्वत् ॥ ६ ॥

६. उग्र मरुतो, सुबुद्धि के साथ, तुम लोग अहिंसक होकर हमें सुबुद्धि प्रदान करो। जिस समय तुम्हारी क्षेपणशील और दन्त-विशिष्ट विद्युत् दशन करती है, उस समय सुलक्षित हेति (अस्त्र-विशेष) की तरह, पशुओं को नष्ट करती है।

प्रस्कम्भदेष्णाअनवभ्रराधसोलातृणासोविदथेषुसुष्टुताः ।
अर्चन्त्यर्कंमदिरस्यपीतयेविदुर्वीरस्यप्रथमानिपौंस्या ॥ ७ ॥

प्र । स्कम्भऽदेष्णाः । अनवभ्रऽराधसः । अलातृणासः । विदथेषु ।
सुऽस्तुताः । अर्चन्ति । अर्कम् । मदिरस्य । पीतये । विदुः ।
वीरस्य । प्रथमानि । पौंस्या ॥ ७ ॥

प्रस्कंभदेष्णाः प्रकर्षेणस्तंभितदानाः अविरतदानाइत्यर्थः अनवभ्रराधसःअभ्रष्टहविरादि-धनाः राधइतिधननाम अलातृणासः नकारस्यस्थानेलकारः अनातृणासःआतर्दनरहिताःअथवा

अलं पर्याप्तं आतर्दना: शत्रूणां यद्वा अलमत्यर्थं दातार: फलानां सुष्टुता: ऋत्विग्भि: सम्यक्स्तुता: एवंरूपामरुत: विदथेषुयागेषुअर्कमर्चनीयमिन्द्रं स्वसखीभूतं अर्चन्ति पूजयन्ति स्तुत्यादिनासंभावयन्तीत्यर्थ: किमर्थं मदिरस्यमादनसाधनस्यसोमस्यपीतये पानाय तस्येन्द्रस्यमहत्त्वं कथं जानन्तीत्यतआह—हेमरुत: वीरस्यविविधंशत्रूणामीरकस्येन्द्रस्य प्रथमानिप्रतमानिमुख्यानिपौंस्यापुंस्त्वानि वृत्रवधादिरूपाणिविदुर्जानन्ति ॥ ७ ॥

७. जिनका दान अविरत है, जिनका धन भ्रंश-रहित है, जिनका शत्रु-वध पर्याप्त है और जिनकी स्तुति सुगीत है, वे मरुद्गण, सोम के पाने के लिए, स्तुति गाते हैं; क्योंकि वे ही लोग इन्द्र की प्रथम वीर-कीर्त्ति जानते हैं।

शतभुजिभिस्तमभिह्रुतेरघात्पूर्भीरक्षतामरुतोयमावत।
जनंयमुग्रास्तवसोविरप्शिनःपाथनाशंसात्तनयस्यपुष्टिषु ॥ ८ ॥

शतभुजिऽभिः। तम्। अभिऽह्रुतेः। अघात्। पूःऽभिः। रक्षत। मरुतः। यम्। आवत। जनम्। यम्। उग्राः। तवसः। विऽरप्शिनः। पाथन। शंसात्। तनयस्य। पुष्टिषु ॥ ८ ॥

हेमरुत:यूयंशतभुजिभि: शतमित्यपरिमितनाम असंख्यातभोगवद्भि:पूर्भि:पालनै:जेतव्यै: शत्रूणांनगरैर्वा तं रक्षतपालयत तमित्युक्तंकमित्याह—यंजनंअभिह्रुते: अभिभवकारणात्कुटिलस्वभावादघात्पापात् आवतअरक्षत किञ्च हेउग्रा: उद्गूर्णतेजस: हेतवस: बलवन्तोवेगवन्तोवा हेविरप्शिन:महन्नामैतत् महान्त: यद्वा रपणीया:शब्दारपा:तेषांयेविरप्शिन: विविधारप्शिन: स्तोतारोयेषां तेयथोक्ता: हेतादृशायूयं यंचजनंपाथनपाथरक्षथ कस्मान्निमित्तादितिउच्यते तनयस्यउपलक्षणमेतत् पुत्रादीनांपुष्टिषुपोषेषुनिमित्तभूतेषुशंसादभिशंसनात्वयमेवंकुरुथ तंरक्षथेति शेष: पापक्षयाद्यनिष्टपरिहारेणपुत्रादिपोषरूपेष्टप्राप्त्याचरक्षथेत्यर्थ: ॥ ८ ॥

८. मरुतो, तुमने जिस व्यक्ति को कुटिल-स्वभाव पाप से बचाया है, हे उग्र और बलवान् मरुद्गण, तुमने जिस मनुष्य को पुत्रादि-पुष्टि-साधन-द्वारा निन्दा से बचाया है, उसे असंख्य योग्य वस्तुओं-द्वारा प्रतिपालित करो।

विश्वानिभद्रामरुतोरथेषुवोमिथस्पृध्येवतविषाण्याहिता।
अंसेष्वावःप्रपथेषुखादयोक्षोवश्चक्रासमयाविवावृते ॥ ९ ॥

विश्वानि। भद्रा। मरुतः। रथेषु। वः। मिथस्पृध्याऽइव। तविषाणि। आऽहिता। अंसेषु। आ। वः। प्रऽपथेषु। खादयः। अक्षः। वः। चक्रा। समया। वि। वावृते ॥ ९ ॥

हेमरुतः वोरथेषुयुष्मत्संबन्धिरथेषुरंहणसाधनेषुविश्वानिभद्रा सर्वाणिकल्याणानिभोगयोग्यानिद्रव्याणि अस्मभ्यंप्रदेयानिफलानिवा आहिताआहितानि तथावः अंसेष्वावःतदुपलक्षितभुजेष्वपि आकारोप्यर्थे मिथस्पृध्येव बलाधिक्यात्परस्परस्पर्धाविषयाणितविषाणिबलानिअंसेषूकलक्षणान्यायुधानिवाआहितानि किञ्च वःप्रपथेषु प्रगताःपन्थानोयेषुविश्रामस्थानेषुतानिप्रपथानि तेषु खादयःखाद्यानिभक्ष्याणि आहितानि यद्वा प्रगतःपन्थायैस्तेषुपादाग्रेषुखादयः स्थिराआभरणविशेषाआहिताः किञ्च वःअक्षः युष्मत्संबन्धीरथाक्षः चक्रा तत्रोपनिबद्धानिचक्राणि समयासमीपेतेषांपरिसरेविववृते विशेषेणवर्तते नकदाचिदपिचक्रेषुसंलग्नोभवतीत्यर्थः यस्मादेवंदेवयजनगमनसाधनानिसन्ति तस्मात्शीघ्रमागच्छध्वमित्यभिप्रायः॥ ९॥

९. मरुतो, सारे कल्याणवाही पदार्थ तुम्हारे रथ पर स्थापित हैं। तुम्हारे स्कन्धदेश में परस्पर स्पर्द्धावाले आयुध हैं। तुम्हारे लिए विश्राम-स्थान पर खाद्य तैयार है। तुम्हारे सारे चक्र अक्ष के पास घूमते हैं।

भूरीणिभद्रानर्येषुबाहुषुवक्षःसुरुक्मारभसासोअञ्जयः।
अंसेष्वेताःपविषुक्षुराअधिवयोनपक्षान्व्यनुश्रियोधिरे॥१०॥२॥

भूरीणि। भद्रा। नर्येषु। बाहुषु। वक्षःऽसु। रुक्माः। रभसासः।
अञ्जयः। अंसेषु। एताः। पविषु। क्षुराः। अधि। वयः। न।
पक्षान्। वि। अनु। श्रियः। धिरे॥ १०॥ २॥

तेमरुतः नर्येषुनरेभ्योहितेषुबाहुषुभुजेषु भूरीणिप्रभूतानि भद्राभद्राणि कल्याणानिधनानिस्तोतृभ्योदातुंधिरे दधिरेधारयन्ति तथावक्षःसु उरःस्थलेषुरुक्माः सुवर्णरत्नादिनिर्मितान्याभरणानि धारयन्ति कीदृशानि रभसासः राभस्ययुक्तानिकान्तिमन्तिवाअंसेषुभुजमूलेषुएताः शुक्लवर्णाःमालाः पविषुवज्रसदृशेषुआयुधेषुक्षुराः क्षुरधाराः अधिसप्तम्यर्थानुवादी एवमेतेमरुतः सर्वांगेषुश्रियोलक्ष्मीः अनुअनुक्रमेणविधिरे विविधंधारयन्ति तत्रदृष्टान्तः—वयोनपक्षान् पक्षिणः पक्षानिव॥ १०॥

१०. मनुष्यों की हितकारिणी भुजाओं पर मरुद्गण अनन्त कल्याण-साधक द्रव्य धारण करते हैं, वक्षःस्थल में कान्तियुक्त और सुन्दर-रूप-संयुक्त सोने के आभूषण धारण करते हैं। स्कन्धदेश में श्वेत-वर्ण की माला धारण करते हैं। वज्र-सदृश आयुध पर क्षुर धारण करते हैं। जैसे पक्षी पक्ष धारण करते हैं, वैसे ही मरुत्लोग श्री धारण करते हैं।

महान्तोमह्नाविभ्वो३विभूतयोदूरेदृशोयेदिव्याइवस्तृभिः।
मन्द्राःसुजिह्वाःस्वरितारआसभिःसंमिश्लाइन्द्रेमरुतःपरिष्टुभः॥११॥

म॒हान्तः । म॒ह्ना । वि॒ऽभ्वः । विऽभूतयः । दू॒रे॒ऽदृशः । ये । दि॒व्याःऽइव
स्तृऽभिः । म॒न्द्राः । सु॒ऽजि॒ह्वाः । स्वरितारः । आ॒सऽभिः ।
सम्ऽमिश्लाः । इन्द्रे । म॒रुतः । प॒रि॒ऽस्तुभः ॥ ११ ॥

येमरुतोमहान्तः माहात्म्योपेताः केन मह्नामहत्त्वेनप्रभावातिशयेन तथाविभ्वंविभवः व्याप्ताः तथाविभूतयः विविधैश्वर्यवन्तः दूरेदृशः दूरेदृश्यमानाः प्रकाशमानाः दूरदर्शनेदृष्टान्तः—दिव्याःस्तृभिरिव स्तृभिरितिनक्षत्रनाम ऋक्षाःस्तृभिरितिनक्षत्राणामितिनिरुक्तत्वात् दिविभवाः देवास्तृभिः स्वपुष्पकभूतैस्तेजःपुंजैर्नक्षत्रैर्यथादूरेदृश्यमानाभवन्तितद्वत् किञ्च मन्द्राः मादनाः सुजिह्वाः शोभनजिह्वाः आसभिरास्यैः स्वरितारःशब्दयितारः प्रियवचनाइत्यर्थः अतएवसुजिह्वाइत्युक्तं किञ्च इन्द्रेसंमिश्लाः सम्यक्मिश्रयितारः इन्द्रसहायिनइत्यर्थः मरुतोहैनंनाजहुरितिश्रुतेः । तथापरिष्टुभः परिस्तोभयुक्ताः स्तुतिभिर्युक्ताः एवंमहाभागायेमरुतःसन्तितेस्मद्यज्ञमागच्छन्तीतिशेषः ॥ ११ ॥

११. जो मरुद्गण महान्, महिमान्वित, विभूतिमान् और आकाशस्थ नक्षत्रों की तरह दूर में प्रकाशित हैं, जो प्रसन्न हैं, जिनकी जीभ सुन्दर है, जिनके मुख से शब्द होता है, जो इन्द्र के सहायक हैं और जो स्तुति-युक्त हैं, वे हमारे यज्ञ-स्थल में आयें।

अथद्वादशी—

तद्वः॑सुजातामरुतोमहित्व॒नंदी॒र्घंवो॑दा॒त्रमदि॑तेरिवव्र॒तम् ।
इन्द्र॑श्च॒नत्यजसा॒विह्रु॑णाति॒तज्जना॑य॒यस्मै॑सु॒कृते॒अरा॑ध्वम् ॥ १२ ॥

तत् । व॒ः । सु॒ऽजा॒ताः । म॒रु॒तः । म॒हि॒ऽत्व॒नम् । दी॒र्घम् । व॒ः ।
दा॒त्रम् । अदि॑तेःऽइव । व्र॒तम् । इन्द्रः॑ । च॒न । त्यज॑सा । वि ।
ह्रु॒णा॒ति॒ । तत् । जना॑य । यस्मै॑ । सु॒ऽकृते॑ । अरा॑ध्वम् ॥ १२ ॥

हेसुजाताः शोभनजननाः हेमरुतः वोयुष्मदीयं महित्वनंमहत्त्वंतवतादृक् खलु तदित्युक्तं किमित्याह—वोयुष्माकं दात्रंदानंवृष्ट्यादिरूपंदीर्घंअत्यायतंअविच्छिन्नं प्रकृष्टोपकारीत्यर्थः दीर्घत्वेदृष्टान्तः—अदितेर्व्रतमिव अदीनायादेवमातुर्भूम्यावा व्रतमितिकर्मनाम तद्यथादीर्घंअतिविस्तृतंतद्वत् अदितिर्द्यौरदितिरन्तरिक्षमित्यादिमंत्रवर्णात् । किञ्च हेमरुतोयूयंयस्मैसुकृते शोभनयागादिकर्त्रेयजमानाययदभिमतंधनमराध्वं दद्ध्वं तदिन्द्रश्च इन्द्रोपित्यजसात्यागेननवि-

---

१ नि० ३. २०. । २ ऋ० सं० २. ५. १६. ।

छुणाति नविह्वरति कौटिल्यंनकरोति चनेत्ययंयद्यपिनिपातद्वयसमुदायरूपएकोनिपातितः तथाप्यवयवविभागेनचशब्दःसमुच्चये नशब्दोनिषेधेधिगन्तव्यः युष्मद्धनादित्यागमिन्द्रत्यागोपिनातिक्रामतीत्यर्थः यद्वा यस्मैतद्धनमराध्वंतमिन्द्रोपिनकुटलयतिननिषेधयति किंत्वनुमोदयतीत्यर्थः ॥ १२ ॥

१२. सुजात मरुद्गण, तुम्हारा माहात्म्य प्रसिद्ध है और तुम्हारा दान अदिति के व्रत की तरह अविच्छिन्न है। तुम जिस पुण्यात्मा यजमान को दान देते हो, उसके प्रति इन्द्र कुटिलता नहीं करते।

तद्वौजामित्वंमरुतःपरेयुगेपुरूयच्छंसममृतासआवत ।
अयाधियामनवेश्रुष्टिमाव्यासाकंनरोदंसनैराचिकित्रिरे ॥ १३ ॥

तत् । वः । जामिऽत्वम् । मरुतः । परे । युगे । पुरु । यत् ।
शंसम् । अमृतासः । आवत । अया । धिया । मनवे । श्रुष्टिम् ।
आव्य । साकम् । नरः । दंसनैः । आ । चिकित्रिरे ॥ १३ ॥

हेमरुतः यद्वोजामित्वंबंधुत्वं अस्मद्विषयप्रेमाधिक्यंतद्वखलुप्रसिद्धमित्यर्थः कियत्पर्यन्तमितितदुच्यते—परेयुगे युगशब्दःकालोपलक्षकः उत्कृष्टेमहतिकालेतीतेपिवर्ततइतिशेषः तत्कथमधिगतमित्यतआह अमृतासोऽमरणधर्माणोहेमरुतोयूयं यद्यस्माच्छंसमस्माभिःक्रियमाणांस्तुतिंपुरुप्रभूतंयथाभवतितथाआवतरक्षथ तस्माद्युष्मत्कृतंजामित्वमविनाशीत्यर्थः किंच यूयं अयाधिया अनया अनुग्रहात्मिकयाबुद्ध्यामनवेमनुष्यायस्तोत्रेयष्ट्रेवा अस्मदादयेश्रुष्टिमाव्यकीर्तिंस्तुतिंवारक्षित्वासाकंसंभूयनरःनेतारः सन्तोदंसनैः कर्मभिरित्थंभूताआचिकित्रिरे सर्वतोजानीथ ॥ १३ ॥

१३. मरुद्गण, तुम्हारी मित्रता प्रसिद्ध और चिरस्थायिनी है। अमर होकर तुम लोग हमारी स्तुति की भली भाँति रक्षा करते हो। अनुग्रह-पूर्वक, मनुष्यों की स्तुति की रक्षा करते हुए, उनके साथ मिलकर तथा उनका नेतृत्व स्वीकार कर कर्म-द्वारा सब जान जाते हो।

येनदीर्घंमरुतःशूशवामयुष्माकेनपरीणसातुरासः ।
आयत्ततनन्वृजनेजनासएभिर्यज्ञेभिस्तदभीष्टिमश्याम् ॥ १४ ॥

येन । दीर्घम् । मरुतः । शूशवाम । युष्माकेन । परीणसा । तुरासः ।
आ । यत् । ततनन् । वृजने । जनासः । एभिः । यज्ञेभिः ।
तत् । अभि । इष्टिम् । अश्याम् ॥ १४ ॥

हेतुरासः वेगवन्तोमरुतोःयुष्माकेनयुष्मत्संबन्धिनायेनपरीणसायद्यप्येतद्बहुनामसुपठितम् तथापियद्बहुतन्महदपिभवतीत्यत्रमहदित्यर्थेगृह्यते महतायुष्मदभिगमनेनैषणेनवादीर्घमायतंसत्रादिरूपंकर्मशूशवाम प्रवर्धयामः किञ्च यवयेनचाभिगमनेनैषणेनवाजनासोजनाःअस्मदीयाः वृजनेसङ्ग्रामेआततनन्सर्वतोविस्तारयन्ति स्वसामर्थ्यैःसङ्ग्रामंजयन्तीत्यर्थः तदिष्टिमेषणंगमनं एभिर्यज्ञेभिः इदानींक्रियमाणैःस्तोत्रादिरूपैःपूजनैः अभिआभिमुख्येनअश्याम्व्याप्नुयाम् ॥१४॥

१४. वेगवान् मरुतो, तुम्हारे महान् आगमन पर हम दीर्घ कर्म-यज्ञ को वर्द्धित करते हैं। उसके द्वारा युद्ध में मनुष्य विजयी होता है। इन सब यज्ञों-द्वारा में तुम्हारा शुभागमन प्राप्त कर सकूं।

एषवःस्तोमोमरुतइयंगीर्मान्दार्यस्यमान्यस्यकारोः ।
एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुम् ॥ १५ ॥ ३ ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य । मान्यस्य । कारोः । आ । इषा । यासीष्ट । तन्वे । वयाम् । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १५ ॥ ३ ॥

अयंमन्त्रस्तृतीयाध्यायान्तेव्याख्यातः सूक्तोपक्रमप्रभृतिक्रियमाणांस्तुतिंमरुद्भ्यः समर्प्यस्वाभीष्टमाशास्ते हेमरुतः एषःस्तोमःइदानींकृतंस्तोत्रंवोयुष्माकंयुष्मदर्थमित्यर्थः तथेयंगीः स्तुतिरूपावागपिवोयुष्माकं कस्यसंबन्धीदमितितदुच्यते—मान्दार्यस्यमन्दतेरीयतेश्चमान्दार्यः स्तुतिंप्रेरयतः मान्यस्यमाननार्हस्य कारोः स्तोतॄनामैतत् स्तोतुः संबन्धि यद्वैतत्पदत्रयमुत्तरत्रसंबध्यते उक्तलक्षणस्तोतुः इषाइच्छयाकामनयातन्वेयुष्मच्छरीरवृद्ध्यै स्तुत्याहिशरीरंवर्धते आयासीष्टअभिगच्छतुस्तुतिः वयांवयंचेषमन्नंवृजनंबलंजीरदानुंचिरकालजीवनंच विद्यामलभेमहि ॥ १५ ॥

१५. मरुतो, कवि मान्य मान्दर्य का यह स्तोम तुम्हारे लिए है; यह स्तुति तुम्हारे लिए है; इच्छानुसार उसकी शरीर-पुष्टि के लिए तुम्हारे पास आती है। हम भी अन्न, बल और दीर्घायु प्राप्त करें।

॥ इतिद्वितीयस्यचतुर्थेतृतीयोवर्गः ॥ ३ ॥

सहस्रंतइत्येकादशर्चंतृतीयंसूक्तंआगस्त्यंत्रैष्टुभं आद्यैन्द्री शिष्टामरुद्देवताकाः पूर्वत्रहिशब्दात् सहस्रमेकादशाद्यैन्द्रीत्यनुक्रमणिका विशेषविनियोगोलैङ्गिकः ।

तत्रप्रथमा—

सहस्रन्तइन्द्रोतयोनःसहस्रमिषोहरिवोगूर्ततमाः ।
सहस्रंरायोमादयध्यैसहस्रिणउपनोयन्तुवाजाः ॥ १ ॥

स॒हस्र॑म् । ते॒ । इ॒न्द्र॒ । ऊ॒तयः॑ । नः॒ । स॒हस्र॑म् । इषः॑ । ह॒रि॒ऽवः॒ ।
गू॒र्तऽत॑माः । स॒हस्र॑म् । रायः॑ । मा॒द॒यध्यै॑ । स॒ह॒स्रिणः॑ । उप॑ । नः॒ ।
य॒न्तु॒ । वाजाः॑ ॥ १ ॥

हेइन्द्र तेतवऊतयोरक्षाप्रकाराः सहस्रमपरिमिताइत्यर्थः नोस्मभ्यंउपयन्त्विति सर्वत्रयोज्यं तथा हेहरिवः हरीइन्द्रस्याश्वौ ताभ्यां तद्वन्निन्द्र गूर्ततमाः अत्यन्तंगूर्णानि इषःइषणीयाः अन्नानिसहस्रंबहूनित्वदीयानि तथासहस्रंरायः अपरिमितानिधनानिमणिमुक्तादीनिमादयध्यै अस्मान्मादयितुंयानिसन्तितान्यस्मानुपयन्तु तथासहस्रिणोवाजाः गमनवन्तश्चतुष्पाद्रूपाः पशवोपिनोस्मानुपयन्तु समीपंप्राप्नुवन्तु ॥ १ ॥

१. इन्द्र, तुम हजारों तरह से रक्षा करो। तुम्हारी रक्षायें हमारे पास आयें। हरि नामक अश्ववाले इन्द्र, तुम्हारे पास हजार तरह के प्रशंसनीय अन्न हैं; वे हमें प्राप्त हों। इन्द्र, तुम्हारे पास हजार तरह का धन है। हमारी तृप्ति के लिए वे हमें प्राप्त हों। हजार चौपाये हमें प्राप्त हों।

आनोवो॑भिर्म॒रुतो॑या॒न्त्वच्छा॒ज्येष्ठे॑भिर्वा॑बृ॒हद्दि॑वैःसुमा॒याः।
अध॒यदे॑षां॒नि॒युतः॑पर॒माःस॑मु॒द्रस्य॑चि॒द्ध॒नय॑न्तपा॒रे ॥ २ ॥

आ । नः॒ । अवः॑ऽभिः । म॒रुतः॑ । या॒न्तु॒ । अच्छ॑ । ज्येष्ठे॑भिः । वा॒ ।
बृ॒हत्ऽदि॑वैः । सु॒ऽमा॒याः । अध॑ । यत् । ए॒षा॒म् । नि॒ऽयुतः॑ । प॒र॒माः ।
स॒मु॒द्रस्य॑ । चि॒त् । ध॒नय॑न्त । पा॒रे ॥ २ ॥

तेमरुतः अवोभीरक्षणैः सहितानोस्मानच्छ आभिमुख्येनायान्तु आगच्छन्तु सुमायाः मायेतिप्रज्ञानाम शोभनप्रज्ञाः एवंमरुतोज्येष्ठेभिः बृहद्दिवैःवा ज्येष्ठैः प्रशस्यतमैर्मणिमुक्तादिधनैश्चसहिताआयान्तु वाशब्दःसमुच्चये आगमने कथमेषांसामर्थ्यमित्यतआह—अधअथैषांमरुतांयद्यस्मान्नियुतः एतन्नामकाः परमाःउत्कृष्टाःअश्वाः समुद्रस्यचित् चिच्छब्दोप्यर्थे समुद्रस्यापिपारेपरस्मिन्तीरे धनयन्त धनधारणंबहनंकुर्वन्ति तस्माद्रक्षणैर्धनैश्चायान्त्वित्यर्थः ॥ २ ॥

२. आश्रय देने के लिए मरुद्गण हमारे पास आयें। सुबुद्धि मरुद्गण प्रशस्यतम और महादीप्ति-संयुक्त धन के साथ हमारे पास आयें; क्योंकि उनके नियुत् नाम के उत्कृष्ट अश्व समुद्र के उस पार भी धन धारण करते हैं।

मि॒म्यक्ष॒येषु॑सु॒धि॑ता॒घृता॒ची॒हिर॑ण्यनि॒र्णि॒गुप॑रा॒नऋ॒ष्टिः ।
गुहा॒चर॑न्ती॒मनु॑षो॒नयो॑षा॒स॒भाव॑तीविद॒थ्ये॑व॒संवाक् ॥ ३ ॥

मिम्यक्षं । येषुं । सुऽधिता । घृताचीं । हिरण्यऽनिर्निक् । उपरा । न । ऋष्टिः । गुहां । चरन्ती । मनुषः । न । योषां । सभाऽवती । विदथ्याऽइव । सम् । वाक् ॥ ३ ॥

सुधिता सुष्ठुनिहिता सुष्ठुहितावा लोकेघृताचीघृतंक्षरणशीलमुदकंअञ्चन्ती हिरण्यनिर्णिक् हितरमणीयरूपा निर्णिगितिरूपनाम एवं रूपाऋष्टिः विद्युदाख्यायुधविशेषोवा उपरान मेघमालेव येषुमरुत्सुसंमिम्यक्ष म्यक्षतिर्गतिकर्मा सङ्गताभूव मेघपङ्क्तिविद्युताविमे अपि सङ्गते इत्यर्थः मेघपङ्क्तिर्विद्युच्चोभेदृष्टान्तेनविशेष्येते गुहानिगूढागुहायां वान्तरिक्षेचरन्ती तत्रदृष्टान्तः-मानुषोनयोषा मनुष्यस्य परिवृढादेर्महिषीवव सायथासुवेषान्तःपुरएवमध्येचरतितद्वव किंसर्वदैवमिति नेत्याह—सभावती सभाजनसङ्गस्तद्वतीवर्षकाले आविर्भवन्तीत्यर्थः तत्रदृष्टान्तः—विदथ्यावागिव विदथोयज्ञः तदर्हतीतिविदथ्या प्रैषस्तोत्रादिरूपावाक् सायथायज्ञसभांमाप्याविर्भवतितद्वव यद्वा विदथ्यावेदनार्हाविवदमानयोर्वाक् सायथाभवति तद्वव सैवंरूपायेषुमिम्यक्ष तेमरुतो देवयजनमागच्छन्त्वित्यर्थः ॥ ३ ॥

३. सुव्यवस्थित, जल-वर्षक और सुवर्ण-वर्ण विद्युत् मेघमाला की तरह अथवा निगूढ़ स्थान में अवस्थित मनुष्य की भार्या की तरह अथवा कही गई यज्ञीय वाणी की तरह इन मरुतों के साथ मिलती है।

अथचतुर्थी—

परांशुभ्राअयासोयव्यासाधारण्येवमरुतोमिमिक्षुः ।
नरोदसीअपनुदन्तघोराजुषन्तवृधंसख्यायदेवाः ॥ ४ ॥

परां । शुभ्राः । अयासः । यव्या । साधारण्याऽइव । मरुतः । मिमिक्षुः । न । रोदसी इति । अप । नुदन्त । घोराः । जुषन्त । वृधम् । सख्याय । देवाः ॥ ४ ॥

शुभ्राःशोभनालङ्काराअयासोभिगन्तारोमरुतः यव्यामिश्रणशीलयाविद्युतापरामिमिक्षुः प्रकर्षेणसिञ्चन्तिउदकसंस्त्यायं साधारण्येव यथालोकेसाधारण्यास्त्रियासङ्गतायुवानोरेतोमुञ्चन्तितद्वव एवंकुर्वन्तोघोराःअतिवृष्टिमदानेनभयङ्कराः तेरोदसीद्यावापृथिव्यौनापनुदन्त अपनोदनं वर्षणरूपं तिरस्कारंनकुर्वन्ति द्यावापृथिवीवचनोरोदसीशब्दःसर्वत्राद्युदात्तः अत्रतुव्यत्ययेनान्तोदात्तत्वमितिद्रष्टव्यं यद्वा रोदसीशब्देनरोदनस्वभावोरुद्रः तस्यस्त्रीरोदसीतिकेचिदाहुः
२ अपरेतुमरुतांस्त्रियोरोदसीतिनामधेयमित्याहुः अयमेवपक्षोयुक्तः उत्तरत्रैवंव्यवहाराव तत्पक्षेरो-

दसीरोदस्यांङीषन्तात् सप्तम्याईकारोलुग्वा ईदूतौंचसप्तम्यर्थेइतिप्रगृह्यसंज्ञा तस्यां प्रियंधनंनमुश्चन्ति किन्तु देवाःमोदयितारोमादयितारोवा मरुतःसख्यायवृधंवृद्धिंजुषन्तसेवन्ते द्यावापृथिवीपक्षे सख्यायजगतांसखिभावायतयोर्वृद्धिंकुर्वन्तीत्यर्थः ॥ ४ ॥

४. साधारण स्त्री की तरह आलिंगन-परायण बिजली के साथ शुभ्रवर्ण, अतिगमनशील और उत्कृष्ट मरुद्गण मिलते हैं। भयंकर मरुद्गण द्यावा-पृथिवी को नहीं हटाते। देवता लोग मैत्री के कारण उनकी समृद्धि का साधन करते हैं।

जोषद्यदीमसुर्यासचध्यैविषितस्तुकारोदसीनृमणाः ।
आसूर्येवविधतोरथंगात्त्वेषप्रतीकानभसोनेत्या ॥ ५ ॥

जोषत् । यत् । ईम् । असुर्या । सचध्यै । विसितऽस्तुका ।
रोदसी । नृऽमनाः । आ । सूर्याऽइव । विधतः । रथम् । गात् ।
त्वेषऽप्रतीका । नभसः । न । इत्या ॥ ५ ॥ ४ ॥

रोदसीमरुत्पत्नी विद्युद्वा एतन्नामकेयमपि ईमेनंमरुत्संघं जोषत्सेवते जुषेर्लेटचडागमः किमर्थं सचध्यैसङ्गमनार्थं कीदृशीसा असुर्या असुराःक्षेप्तारोमरुतः तेषांस्वभूताविषितस्तुका विशिष्टकेशसंघा विप्रकीर्णकेशसंघावा संभोगवशेन तथानृमणाः नृषुनेतृषुमरुत्सुमननवती मनुष्येषुवावृष्टिप्रदानमनोयुक्ता त्वेषप्रतीकादीप्तोपक्रमादीप्तावयवा ईदृशीदेवी विधतः परिचरतोमरुत्संघस्यरथमागात् आगच्छतिव्याप्नोति यागदेशंगन्तुंरथमारुह्यवायज्ञमागच्छति केव विधतःसूर्यस्यरथंत्वेषप्रतीकासूर्येवसूर्यपत्नीव यद्वा सूर्यस्यदुहिताश्विनोरथमिव सायथारोहतितद्वत् आगमनेदृष्टान्तः—नभसइत्यान अन्तरिक्षादित्ययोः साधरणोयंनभःशब्दः नभइतिषट्साधारणानीत्युक्त्वादत्रादित्यवचनः तस्यगतिरिव सायथाशीघ्रातद्वत् ॥ ५ ॥

५. असुर (मरुतों) की अपनी पत्नी रोदसी या बिजली आलुलायित केश और अनुरक्त मन से मरुतों के संगम के लिए उनकी सेवा करती है। जैसे सूर्या अश्विनीकुमारों के रथ पर चढ़ती है, वैसे ही प्रदीप्तावयवा रोदसी चंचल मरुतों के रथ पर चढ़कर शीघ्र आती है।

आस्थापयन्तयुवतिंयुवानःशुभेनिमिश्लांविदथेपुपज्राम् ।
अर्कोयद्वोमरुतोहविष्मान्गायद्गाथंसुतसोमोदुवस्यन् ॥ ६ ॥

आ । अस्थापयन्त । युवतिम् । युवानः । शुभे । निऽमिश्लाम् ।
विदथेषु । पज्राम् । अर्कः । यत् । वः । मरुतः । हविष्मान् ।
गायत् । गाथम् । सुतऽसोमः । दुवस्यन् ॥ ६ ॥

युवाशोमिश्रयन्तःनित्यतरुणावामरुतः युवतिं मिश्रयन्तींनित्यतरुणींवाविद्युद्रूपांरोदस्यां स्त्रियमास्थापयन्त आस्थापयन्ति देवतात्वेनरथेधारयन्ति कीदृशींतां निमिश्लांनियमेनमिश्रयन्तींपज्रांपज्रोबलंतद्वतींशुभेशोभतेदीप्यतइतिशुबुदकंवृष्ट्युदकार्थंशुभेरथइतिवायोज्यं किंनिमित्तं विदथेषुयागेषुनिमित्तभूतेषु कदायत्यदाहेमरुतोवोयुष्मान्अर्कः मत्वर्थोलुप्यते अर्चनसाधनमन्त्रोपेतःस्तोतावा हविष्मान्प्रदेयाज्यादिहविर्युक्तः सुतसोमः होमायाभिषुतःसोमोयंयजमानोदुवस्यन्परिचरन्गाथंगातव्यंस्तोत्रंगायत्गायति तदेत्यर्थः ॥ ६ ॥

६. यज्ञ आरम्भ होने पर वृष्टि दान के लिए तरुण वयस्क तरुणी रोदसी को रथ पर बैठाते हैं। बलवती रोदसी नियमानुरूप उनके साथ मिलती हैं। उसी समय अर्चन-मंत्र-युक्त हव्यदाता और सोमाभिषवकारी यजमान मरुतों की सेवा करते हुए स्तव-पाठ करता है।

प्रतंविवक्मिवक्म्योयएषांमरुतांमहिमासत्योअस्ति ।
सचायदींवृषमणाअहंयुःस्थिराचिज्जनीर्वहतेसुभागाः ॥ ७ ॥
प्र । तम् । विवक्मि । वक्म्यः । यः । एषाम् । मरुताम् । महिमा ।
सत्यः । अस्ति । सचा । यत् । ईम् । वृषऽमनाः । अहम्ऽयुः ।
स्थिरा । चित् । जनीः । वहते । सुऽभागाः ॥ ७ ॥

एषांमरुतांयोयोमहिमामहत्त्वातिशयः वक्म्यःसर्वैःस्तुत्यःसत्यःअबाध्यःअस्ति तंप्रविवक्मि प्रवच्मिवर्णयामि कथमेषांमहिमाप्राप्तइतिउच्यते—यद्यस्मादईंएतेषांसबन्धिनीरोदसी वृषमणावृष्ट्यादिवर्षणमनस्काअहंयुःअहंकारवतीजगदुपकारकर्त्रीनमत्तःकाचिदस्तीत्यहंकारः स्थिराचिद् चिदितिपूजायां अत्यन्तमविनश्वराईदृशीदेवीसुभगाःशोभनभाग्योपेताः जनीःजननशीलाःप्रजाः वृष्ट्युत्पत्तीर्वावहतेधारयति वृष्टौसत्यांसर्वेप्राणिनउत्पद्यन्ते यस्मादेवंतस्मान्महिमास्ति तंमहिमानंस्तौमीत्यर्थः ॥ ७ ॥

७. मरुतों की महिमा सबकी प्रशंसनीय और अमोघ है। मैं उसका वर्णन करता हूँ। उनकी रोदसी वर्षणाभिलाषिणी अहंकारिणी और अविनश्वरा है। यह सौभाग्यशालिनी और उत्पत्तिशील प्रजा को धारण करती है।

पान्तिमित्रावरुणाववद्याच्चयतईमर्यमोअप्रशस्तान् ।
उतच्यवन्तेअच्युताध्रुवाणिवावृधईंमरुतोदातिवारः ॥ ८ ॥
पान्ति । मित्रावरुणौ । अवद्यात् । चयते । ईम् । अर्यमो इति ।
अप्रऽशस्तान् । उत । च्यवन्ते । अच्युता । ध्रुवाणि । वावृधे ।
ईम् । मरुतः । दातिऽवारः ॥ ८ ॥

हेमरुतः युष्मत्संबन्धिनोदेवाः मित्रावरुणौअहोरात्र्यभिमानिदेवौ अर्यमो अर्यमा उ इ-तिनिपातसमुदायात्मकमेकंपदं उशब्दोपिशब्दार्थे अर्यमापिएतेत्रयोपिईंअमुंलोकंयज्ञंवाअव-द्यावगर्ह्यात् अयथानुष्ठानात् जगतपक्षेव्यवहारप्रतिबन्धरूपात्पान्तिरक्षन्ति तथाएतेषांमध्ये अर्यमोऽप्रशस्तान्क्षीणानपिपदार्थान्नयतेचायन्तिनाशयन्ति उतअपिचएतैः प्रेरितानिअच्यु-ताअच्युतानिअस्रावीणिएतएवध्रुवाणिअविचलानिमेघस्थोदकानिच्यवन्ते च्यावयन्तिवा एते अहोरात्रेवैमित्रावरुणावहोरात्राभ्यांखलुवैपर्जन्योवर्षतीतिश्रुतेः। यद्वा अच्युतानिध्रुवाणिधनानिच्यवन्ते कदेतिउच्यते हेमरुतोयुष्मदीयंईमयंकालोदातिवारः प्रदेयजलःखण्डितमेघोवायदावृ-धेवर्धते तदामित्रादयोदेवायुष्मदनुकूलव्यापारेणजगद्रक्षन्तीत्यर्थः यद्वा दातिवारोदत्तवरणीयह-विर्लक्षणधनोयजमानः हेमरुतः ईमेनान्युष्मान्ववृधेवर्धयतियदा तदेत्यर्थः॥ ८ ॥

८. मित्र, वरुण और अर्यमा इस यज्ञ को निन्दा से बचाते और उसके अयोग्य पदार्थ का विनाश करते हैं। मरुतो, तुम्हारे जल देने का समय जब आता है, तब वे मेघों के बीच संचित जल की वर्षा करते हैं।

नहीनुवोमरुतोअन्त्यस्मेआरात्ताच्चिच्छवसोअन्तमापुः ।
तेधृष्णुनाशवसाशूशुवांसोर्णोनद्वेषोधृषतापरिष्ठुः ॥ ९ ॥

नहि । नु । वः । मरुतः । अन्ति । अस्मे इति । आरात्तात् ।
चित् । शवसः । अन्तम् । आपुः । ते । धृष्णुना । शवसा ।
शूशुऽवांसः । अर्णः । न । द्वेषः । धृषता । परि । स्थुः ॥ ९ ॥

हेमरुतः वःशवसोयुष्माकंसबन्धिनोबलस्य अन्तमवसानं अन्ति अन्तिके आरात्तात्चिद्दूरादपि यद्वा चिदितिकुत्सायां अत्यन्तदूरात्अस्मेअस्मासुमध्येएकेपि नुक्षिप्रंनह्यापुः नैवखलुप्राप्नुवन्ति सन्निधावसन्निधौचनप्राप्नुवन्तीत्यर्थः अथपरोक्षेप्राप्तबलत्वमाह—तेखलुमरुतोधृष्णुनाधर्षकेण शवसाबलेनशूशुवांसोवर्धमानाः अतएवधृषतापराभिभावकेनसामर्थ्येनद्विषोद्वेष्टॄन् परिष्ठुःपरि-भवन्तिवशीकुर्वन्ति तत्रदृष्टान्तः—अर्णोन उदकमिव यथाउदकंस्वविरोधिरजआदिकमभिभ-वतितद्वत् यस्मादेवंतस्माच्छवसोन्तंनापुः॥ ९ ॥

९. मरुतो, हमारे बीच किसी ने भी, अत्यन्त दूर से भी, तुम्हारे बल का अन्त नहीं पाया है। दूसरों को परास्त करनेवाले बल के द्वारा बढ़कर जलराशि की तरह अपनी शक्ति से शत्रुओं को विजित करते हैं।

वयमद्येत्येतांदशमींअस्तमितेआदित्येजपेत् तथाचसूत्रम्—वयमद्येन्द्रस्यप्रेष्ठाइत्यस्तंयात्यादित्यइतिपाठस्तु।

अथदशमी–

वयमद्येन्द्रस्यप्रेष्ठावयंश्वोवोचेमहिसमर्ये ।
वयंपुरामहिंचनोअनुद्यून्तन्नऋभुक्षानरामनुष्यात् ॥ १० ॥

वयम् । अद्य । इन्द्रस्य । प्रेष्ठाः । वयम् । श्वः । वोचेमहि ।
सऽमर्ये । वयम् । पुरा । महि । च । नः । अनु । द्यून् । तत् । नः ।
ऋभुक्षाः । नराम् । अनु । स्यात् ॥ १० ॥

अद्यास्मिन्दिनेवयंयष्टारइन्द्रस्यदेवस्यप्रेष्ठाः प्रियतमाः भवेम यद्वा प्रियतमावयमिन्द्रस्य महत्त्वंवोचेमहि स्तोतुंसमर्थाभूयास्म किञ्च वयंश्वः परस्मिन्नपिदिनेसमर्येसहमर्यामर्त्याऋत्विजोयस्मिन्समर्योयज्ञः तस्मिन्सङ्ग्रामेवाइन्द्रस्यमहत्त्वंवोचेमहि किञ्च वयंपुरापूर्वस्मिन्नतीतेपिकालेमहिमहत् बलंनोस्मदर्थंवोचेमहि तथा द्यूनदिवसाननुप्रतिदिवसमित्यर्थः अतीते आगामिनिच दिवसे सर्वदावोचेमहि तत्तस्माद्दभुक्षाः महन्नामैतत् ऋभुक्षाः उक्षाइतितन्नामसुपाठात् महानिन्द्रोनरांमनुष्याणांमध्येनोस्माननुस्यात् अनुभवतु अनुकूलमभिमतप्रदोवाभवतु॥ १० ॥

१०. आज हम इन्द्र के प्रियतम होंगे, यज्ञ में उनकी महिमा गायेंगे। हमने पहले इन्द्र का माहात्म्य गाया था और प्रतिदिन गाते हैं। इसलिए महान् इन्द्र हमारे लिए अनुकूल हों।

एषवःस्तोमोमरुतइयंगीर्मान्दार्यस्यमान्यस्यकारोः ।
एषायासीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुम् ॥ ११ ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्य ।
मान्यस्य । कारोः । आ । इषा । यासीष्ट । तन्वे । वयाम् ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥ ५ ॥

एषइत्येकादशीव्याख्याता॥ ११ ॥

११. मरुतो, कवि मान्दर्य की यह स्तुति तुम्हारे लिए है। इच्छानुसार उसकी शरीर-पुष्टि के लिए तुम्हारे पास आती है। हम भी अन्न, बल और दीर्घायु पायें।

॥ इतिद्वितीयस्यचतुर्थेपञ्चमोवर्गः ॥ ५ ॥

यज्ञायज्ञेतिदशर्चंचतुर्थंसूक्तंआगस्त्यंमारुतं अन्त्यास्तिस्रस्त्रिष्टुभः शिष्टाःसप्त त्रिष्टुबन्तपरिभाषयाजगत्यः यज्ञायज्ञादशत्रिष्टुबन्तमित्यनुक्रान्तं विशेषविनियोगोलैङ्गिकः।

तत्रप्रथमा—

यज्ञायज्ञावःसमनातुतुर्वणिर्धियंधियंवोदेवयाउंदधिध्वे ।
आवोर्वाचःसुवितायरोदस्योर्महेववृत्यामवसेसुवृक्तिभिः ॥ १ ॥

यज्ञाऽयज्ञा । वः । समना । तुतुर्वणिः । धियम्ऽधियम् । वः ।
देवऽयाः । ऊम् इति । दधिध्वे । आ । वः । अर्वाचः । सुविताय ।
रोदस्योः । महे । ववृत्याम् । अवसे । सुवृक्तिऽभिः ॥ १ ॥

हेमरुतः वः समनासमीकृतिर्न्यूनाधिकाभावलक्षणा यज्ञायज्ञा सर्वेष्वपियज्ञेषुतुर्वणिः तूर्णवनिः त्वरमाणासंजभमानाभवति तुर्वणिस्तूर्णवनिरितियास्कः। तत्तद्यागावसरेआगत्यहविः स्वीकृत्यवैकल्यपरिहारेणसमंकुरुथेत्यर्थः किञ्च वोयूयंधियंधियंयुष्मत्संबन्धिवृष्टिप्रदानादिरूपं सर्वंकर्मदेवयाउ देवान्प्रापयितारएवसन्तोदधिध्वे धारयथधारयध्वेवा देवार्थंहविराद्युत्पादनायं वृष्टिंकुरुथेत्यर्थः यस्मादेवंकुरुथ तस्माद्वोयुष्मानर्वाचोस्मदभिमुखान्आववृत्यांआवर्तयामि किमर्थंरोदस्योर्द्यावापृथिव्योर्महेमहतेअवसेरक्षणायप्रीणनायवा तदपिकिमर्थमितिउच्यते—सुवितायसुष्ठुव्यापनाय कैःसाधनैः सुवृक्तिभिः शोभनावर्जनैः स्तोत्रैः ॥ १ ॥

१. मरुतो, सारे यज्ञों में ही तुम्हारा समान आग्रह है। अपने सारे कर्मों को देवों के पास ले जाने के लिए धारण करते हो; इसलिए द्यावा-पृथिवी की भली भाँति रक्षा करने के लिए उत्कृष्ट स्तोत्र-द्वारा तुम्हें अपनी ओर आने के लिए बुलाता हूँ।

अथद्वितीया—

वव्रासोनयेस्वजाःस्वतवसइषंस्वरभिजायन्तधूतयः ।
सहस्रियासोअपांनोर्मयआसागावोवन्द्यासोनोक्षणः ॥ २ ॥

वव्रासः । न । ये । स्वऽजाः । स्वऽतवसः । इषम् । स्वः ।
अभिऽजायन्त । धूतयः । सहस्रियासः । अपाम् । न । ऊर्मयः ।
आसा । गावः । वन्द्यासः । न । उक्षणः ॥ २ ॥

येमरुतोववासोन वव्रिरितिरूपनाम रूपवन्तइव तेयथाप्रकृष्टालक्ष्यन्तेतद्वत् यद्वा अरूपाअपिसरूपाइव स्वजाः स्वयमेवस्वस्माद्वाजायमानाःअनन्यहेतुकाइत्यर्थः धूतयःकम्पनशीलाःसन्तिवेइषंअन्नंहविर्लक्षणं अन्नसाधनंसस्यादिकंवा स्वः स्वर्गंचाभिजायन्त अभिलक्ष्यप्रादुर्भवन्ति

१ नि० ६. १४.।

तेदृष्टान्तमुखेनश्रूयन्ते—अपांनोर्मयः उदकानामूर्मयइव संहस्त्रियासः सहस्रसंमिताः तथावंद्यासः बहुक्षीरादिप्रदत्वेनस्तुत्यागावोन गावइव आसा समीपेएवउक्षणः वृष्ट्युदकस्यसेक्तारः तादृशामरुतः प्रादुर्भवन्तीत्यन्वयः ॥ २ ॥

२. स्वयं उत्पन्न, स्वाधीन बल और कम्पनशील मरुद्गण मानो मूर्तिमान् होकर अन्न और स्वर्ग के लिए प्रकट होते हैं। असंख्य और प्रशंसनीय धेनु जैसे दूध देती है, वैसे ही, जल-तरंग के समान वे उपस्थित होकर जल-दान करते हैं।

सोमा॑सो॒नये सु॒तास्तृ॒प्तांश॑वोहृ॒त्सुपी॒तासो॑दु॒वसो॒नास॑ते ।
ऐषा॒मंसे॑षुर॒म्भिणी॑वरारभे॒हस्ते॑षुखा॒दिश्च॑कृ॒तिश्च॒सं द॑धे ॥ ३ ॥

सोमा॑सः । न । ये । सु॒ताः । तृ॒प्तऽअं॑शवः । हृ॒त्ऽसु । पी॒तास॑ः ।
दु॒वस॑ः । न । आस॑ते । आ । ए॒षा॒म् । अंसे॑षु । र॒म्भिणी॑ऽइव ।
र॒र॒भे । हस्ते॑षु । खा॒दिः । च॒ । कृ॒तिः । च॒ । सम् । द॒धे ॥ ३॥

येमरुतःसुताः अभिषुताः तृप्तांशवः तर्पितावयवाः सोमासोन सोमाइव यथावल्लीरूपाः सोमाः अभिषवात्पूर्वं आप्यायनेनतृप्तावयवाःसन्तः पश्चात्सुताःअभिषुताः रसभूताः पीतासःपीताःसन्तोहृत्सुपातॄणां हृदयेषुदुवसोनासते परिचरन्तइवासते तद्वत् येमरुतः यज्ञेआहूतास्तृप्तावयवाभवन्ति ध्यायमानाःसन्तोहृत्सुहृदयेषुदुवसोन परिचरन्तइवासते यद्वा प्राणादिरूपेणशरीरे स्थितादुवसः परिचरन्तइवगमनादिचेष्टाःकुर्वन्तः आसते एषामंसेषुरम्भिणीव युवतमांसावलम्बिनीयोषिदिवारारभे आश्लिष्यति अवलम्बते सामर्थ्यात् शक्त्याख्यायुधविशेषोभुजलक्ष्मीर्वा किञ्च हस्तेषुखादिः हस्तत्राणकश्चकृतिः कर्तनीचखड्गलतावृष्टिश्चसन्दधे सन्धीयते सम्यक्धृताभवति परस्परसमुच्चयार्थाश्चकाराः येमरुतउक्तरूपास्तेआविर्भवन्तीत्यर्थः॥३॥

३. सुसंस्कृत शाखावाली सोमलता, अभिषुत और पीत होकर, जैसे हृदय के बीच परिचारिका की तरह कार्य करती है, वैसे ही ध्यान किये जाने पर मरुद्गण भी करते हैं। उनके अंश-देश में, स्त्री की तरह, आयुध-विशेष आलिंगन करता है। मरुतों के हाथ में हस्तत्राण और कर्त्तन है।

अव॒स्वयु॑क्तादि॒वआवृथा॑ययु॒रम॑र्त्याः॒कश॑याचोदत॒त्मना॑ ।
अ॒रे॒णव॑स्तुविजा॒ताअ॑चुच्यवुर्दृ॒ळ्हानि॑चिन्म॒रुतो॒भ्राज॑दृष्टयः॥४॥

अव॑ । स्वऽयु॑क्ताः । दि॒वः । आ । वृथा॑ । य॒युः । अम॑र्त्याः ।
कश॑या । चो॒द॒त॒ । त्मना॑ । अ॒रे॒णव॑ः । तु॒वि॒ऽजा॒ताः । अ॒चु॒च्य॒वुः ।
दृ॒ळ्हानि॑ । चि॒त् । म॒रुत॑ः । भ्राज॑त्ऽऋष्टयः ॥ ४ ॥

एतेमरुतः स्वयुक्ताः स्वैर्युक्ताः परस्परसंयुक्ताः स्वेनधनेनवा युक्ताःसन्तोदिवोद्युलोका-द्वथा अनायासेनावाययुः अवाङ्मुखमागच्छन्ति हेअमर्त्यामरुतोयूयंत्मनाआत्मनास्वयमेवकश-यावाङ्मैतव् वाचास्तुतिरूपया चोदत प्रेरयत स्तोतुमितिशेषः तेचमरुतः अरेणवःअपापाः तु-विजाताः बहुयज्ञेषु प्रादुर्भूताः भ्राजदृष्टयः दीप्ताः एवंभूताःसन्तोदृह्लानिचिव् दृढान्यपिपर्वतादी-निअचुच्यवुः च्यावयन्तिचालयन्ति ॥ ४ ॥

४. परस्पर मिले हुए मरुद्गण अनायास स्वर्ग से आते हैं। अमर मरुतो, अपने ही वाक्यों से हमारा उत्साह बढ़ाओ। निष्पाप, अनेक यज्ञों में प्रादुर्भूत और प्रदीप्त मरुद्गण दृढ़ पर्वतों को भी कम्पित कर देते हैं।

कोवोन्तर्मरुतऋष्टिविद्युतोरेजतित्मनाहन्वेवजिह्वया।
धन्वच्युतइषांनयामनिपुरुप्रैषाअहन्योनैतशः ॥ ५ ॥ ६ ॥

कः। वः। अन्तः। मरुतः। ऋष्टिऽविद्युतः। रेजति। त्मना।
हन्वाऽइव। जिह्वया। धन्वऽच्युतः। इषाम्। न। यामनि।
पुरुऽप्रैषाः। अहन्यः। न। एतशः ॥ ५ ॥ ६ ॥

हेमरुतः हेऋष्टिविद्युतः मेघभेदेनायुधविशेषेण विद्योतमानाः वोयुष्माकमन्तः युष्मासुमध्ये स्थित्वाकःपुमान्रेजतिचालयति प्रेरयति तर्हिकथंचालनमितिउच्यते त्मनाआत्मनैवचालने दृ-ष्टान्तः—जिह्वयाहन्वेव द्विवचनस्यआकारः हनूइव तौयथारसनयाचाल्येते तद्वत् यद्यप्येवंत-थापिइषांअन्नानां तत्साधनानां सस्यानां यामनि प्राप्तौसम्प्रदृद्ध्यर्थं धन्वच्युतोन धन्वन्शब्दो-न्तरिक्षस्यवचनः तेनतत्स्थमुदकंलक्ष्यते उदकस्राविणोमेघाइव तेयथाआकांक्ष्यन्ते तथायुष्मा-नन्नादिप्राप्तये पुरुप्रैषाः बहुविधं फलमिच्छन् यजमानः स्तोत्रैः बहुप्रकारमाकारयतीत्यर्थः त-त्रदृष्टान्तः—अहन्यः अह्निभवः एतशोन अश्वइव सयथा शिक्षकेणनानाप्रकारं प्राप्यते तद्वत् ॥ ५ ॥

५. आयुध-विशेष या भुज-लक्ष्मी से सुशोभित मरुद्गण, जैसे जीभ दोनों जबड़ों को चालित करती है, वैसे ही तुम्हारे बीच रहकर कौन तुम्हें परिचालित करता है। तुम लोग स्वयं परिचालित होते हो। जैसे जलवर्षी मेघ परिचालित होता है, जैसे दिन में मेघ चालित होता है, वैसे ही बहुफलेच्छु यजमान, अन्न-प्राप्ति के लिए, तुम्हें परिचालित करता है।

क्वस्विदस्यरजसोमहस्परंक्वावरंमरुतोयस्मिन्नायय।
यच्च्यावयथविथुरेवसंहितंव्यद्रिणापतथत्वेषमर्णवम् ॥ ६ ॥

क्व । स्वित् । अस्य । रजसः । महः । परम् । क्व । अवरम् । मरुतः ।
यस्मिन् । आऽयय । यत् । च्यवयथ । विथुराऽइव । समऽहितम् ।
वि । अद्रिणा । पतथ । त्वेषम् । अर्णवम् ॥ ६ ॥

हेमरुतः यूयंयस्मिन्नुदकनिमित्तभूतेसतिआययआगच्छत अस्यरजसोवृष्ट्युदकस्यलोकस्य वामहोमहतः परंपारं अन्तंक्वस्वित्कुत्रास्तीति नास्तीत्यर्थः तथा अवरं अवाग्भागआदिश्च क्वस्वित्कुत्रास्ति आद्यन्तंनकोपिजानातीत्यर्थः यद्यदायूयंविथुरेवविथुराणिशिथिलानितृणानी-वसंहितंएकभूतंउदकंच्यावयथस्वस्थानाच्चालयथ तदा अद्रिणावज्रेणत्वेषंदीप्तं अर्णवं उदक-वन्तंमेघंविपतथविशीर्णंपातयथ ॥ ६ ॥

६. मरुतो, जिस जल के लिए तुम आते हो, उस विशाल वृष्टि-जल का आदि और अन्त कहाँ है? शिथिल तृण की तरह जिस समय तुम जलराशि को गिराते हो, उस समय वज्र-द्वारा दीप्तिमान् मेघ को विदीर्ण करते हो।

सातिर्नवोमवतीस्वर्वतीत्वेषाविपाकामरुतःपिपिष्वती ।
भद्रावोरातिःपृणतोनदक्षिणापृथुज्रयीअसुर्येवजञ्जती ॥ ७ ॥
सातिः । न । वः । अमऽवती । स्वःऽवती । त्वेषा । विऽपाका ।
मरुतः । पिपिष्वती । भद्रा । वः । रातिः । पृणतः । न । दक्षिणा ।
पृथुऽज्रयी । असुर्याऽइव । जञ्जती ॥ ७ ॥

हेमरुतः वोयुष्माकंसबन्धिनीसातिर्न संभक्तिरिव युष्मत्संभजनंयथाप्रशस्तगुणंतद्वद्वोरा-तिः वृष्ट्यादिविषया अमवती अमात्यवती इन्द्रादिसहायवती यथाराजेवामवानित्यत्रामशब्दो-मात्यवचनः तद्वत् यद्वा वःसातिः संविभक्तिर्नामवतीरोगवतीनभवति किन्तुस्वर्वतीसुखवतीत्वे-षादीप्ताविपाकापरिपक्वफलापिपिष्वतीपेषणवती कृषीवलैःकर्षणवतीवृष्टौसत्यांकर्षन्तीतिप्रसिद्धम् स्वविरोधिपेषणवतीवाभद्राभन्दनीयास्तुत्या किञ्च पृणतोदातुर्धनिकस्यदक्षिणान दक्षिणेव तद्वत् समृद्धकरी पृथुज्रयीपृथुजवाशीघ्रगामिनी किञ्च असुर्येव असुरस्यस्वभूता जञ्जतीसर्वानभि-भवन्तीशक्तिरिव सायथान्येभ्योपहृत्यान्यस्मैदातुंसमर्थातद्वदियमपिमेघस्थमुदकमपहृत्यजगतो-दातुंशक्तेत्यर्थः ईदृशीरातिरस्मभ्यमस्त्वितिभावः ॥ ७ ॥

७. मरुतो, जैसा तुम्हारा धन है, वैसा ही दान भी है। दान के सम्बन्ध में तुम्हारे सहायक इन्द्र हैं। उसमें सुख और दीप्ति है। उसका फल परिपक्व है। उससे कृषि-कार्य का भी मंगल होता है। वह दाता की दक्षिणा की तरह शीघ्र फलदाता है। वह असूर्य की जयशील शक्ति की तरह है।

अथाष्टमी–

प्रतिष्टोभन्तिसिन्धवःपविभ्योयदभ्रियांवाचमुदीरयन्ति ।
अवस्मयन्तविद्युतःपृथिव्यांयदीघृतंमरुतःप्रुष्णुवन्ति ॥ ८ ॥

प्रति । स्तोभन्ति । सिन्धवः । पविऽभ्यः । यत् । अभ्रियाम् ।
वाचम् । उत्ऽईरयन्ति । अव । स्मयन्त । विऽद्युतः ।
पृथिव्याम् । यदि । घृतम् । मरुतः । प्रुष्णुवन्ति ॥ ८ ॥

पविभ्योमरुत्संबन्धिवज्रेभ्यः सिन्धवः स्यन्दनशीलाआपः प्रतिष्टोभन्ति प्रतिचलन्ति कदा यवयदाअभ्रियांअभ्रभवांवाचंशब्दंस्तनितलक्षणंउदीरयन्त्युच्चारयन्तिवज्राणि किञ्च विद्युताः विद्योतमानाः तडितः पृथव्यांअन्तरिक्षेपृथिवीत्यन्तरिक्षनाम पृथिवीभूरितितन्नामसूक्तत्वात् तत्रावस्मयंतस्मयन्तेअवाङ्मुखंप्रकाशन्ते पृथिव्यामित्येतदुत्तरत्रवायोज्यं यदि यदा पृथिव्यांभूम्यांघृतंक्षरदुदकंमरुतः प्रुष्णुवन्तिप्रुष्णन्ति सिञ्चन्ति प्रुषेःक्र्यादिकस्यव्यत्ययेनश्नुः यदैवंतदेत्यर्थः ॥ ८ ॥

८. जिस समय वज्र मेघ-सम्भूत शब्द उच्चारित करते हैं, उस समय उनसे क्षरणशील जल परिचालित होता है। जिस समय मरुद्गण पृथिवी पर जल सेचन करते हैं, उस समय विद्युत् निम्नमुख पृथिवी पर प्रकट होती है।

असूतपृश्निर्महतेरणायत्वेषमयासांमरुतामनीकम् ।
तेसप्सरासोजनयन्ताभ्वमादित्स्वधामिषिरांपर्यपश्यन् ॥ ९ ॥

असूत । पृश्निः । महते । रणाय । त्वेषम् । अयासाम् । मरुताम् ।
अनीकम् । ते । सप्सरासः । अजनयन्त । अभ्वम् । आत् । इत् ।
स्वधाम् । इषिराम् । परि । अपश्यन् ॥ ९ ॥

पृश्निर्मरुन्माता नानावर्णा पृश्निर्यैवैपयसोमरुतोजाताःपृश्नेःपुत्राउपमासइतिश्रुतेः । तामेवान्तरिक्षदेवतां केचिदाहुःसादेवी त्वेषंदीप्तंअयासां गन्तृणांमरुतामनीकंसमूहं एकोनपञ्चाशत्संख्याकमसूत उत्पादितवती किमर्थं महतेरणायसङ्ग्रामायमेघजयायेत्यर्थः तेचमरुतःसप्सरासः समानरूपाःहिंसकावामेघानां अभ्वंमेघंजनयन्ति उत्पादितवन्तः आदित् अनन्तरमेव इषिरांसवैरिष्टव्यांस्वधामन्नं सस्यादिसमृद्धिलक्षणंपर्यपश्यन् परिपश्यन्तिसर्वेजनाः ॥ ९ ॥

९. पृश्नि ने महासंग्राम के लिए प्रदीप्त गमन-युक्त मरुद्गण को प्रसव किया है। समान रूपवाले मरुतों ने जल उत्पन्न किया है। इसके पश्चात् संसार ने अभिलषित अन्न आदि प्राप्त किया है।

अथदशमी—

एषवःस्तोमोमरुतइयंगीर्मान्दार्यस्यमान्यस्यंकारोः ।
एषायांसीष्टतन्वेवयांविद्यामेषंवृजनंजीरदानुम् ॥ १० ॥ ७ ॥

एषः । वः । स्तोमः । मरुतः । इयम् । गीः । मान्दार्यस्यं ।
मान्यस्यं । कारोः । आ । इषा । यासीष्ट । तन्वे । वयाम् ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १० ॥ ७ ॥

एषवइतिदशमीव्याख्याता ॥ १० ॥

१०. मरुतो, कवि मान्य मान्दार्य का यह स्तोत्र तुम्हारे लिए है; यह स्तुति तुम्हारे लिए है। अपने शरीर की पुष्टि के लिए तुम्हारे पास आता है। हम भी अन्न, बल और दीर्घायु प्राप्त करें।

॥ इतिद्वितीयस्यचतुर्थेसप्तमोवर्गः ॥ ७ ॥

महश्चित्त्वमित्यष्टर्चंपञ्चमंसूक्तं ऐन्द्रमागस्त्यंत्रैष्टुभं द्वितीयाचतुष्पदाविराट् अथचतुष्पदाविराट् दशकैरित्युक्तत्वात विराजोदिशइति पिङ्गलनागेनसूत्रितत्वाच्च महोष्टौ द्वितीयाविराळित्यनुक्रमणिका। समूळ्हेदशरात्रेद्वितीयेछन्दोममरुत्वतीये इदं विश्वजितोग्निनरइतिखण्डेसूत्रितम्—द्वितीयस्यशंसामहांमहश्चित्त्वमिन्द्रेति ।

तत्रप्रथमा—

महश्चित्त्वमिन्द्रयतएतान्महश्चिदसित्यजसोवरूता ।
सनोवेधोमरुतांचिकित्वान्त्सुम्नावनुष्वतवहिप्रेष्ठा ॥ १ ॥

महः । चित् । त्वम् । इन्द्र । यतः । एतान् । महः । चित् । असि ।
त्यजसः । वरूता । सः । नः । वेधः । मरुताम् । चिकित्वान् ।
सुम्ना । वनुष्व । तव । हि । प्रेष्ठा ॥ १ ॥

हेइन्द्र त्वं यतःकारणात् एतान्मरुतोमहश्चित् महतोपिसामर्थ्यातिशयवत्त्वात् त्वन्निरपेक्षोपिस्नेहान्नत्यजसीतिशेषः अतःकारणात् महश्चिदसि चिदितिपादपूरणः यद्वा महतोपित्यजसः त्यागात् यद्वैतवक्रोधनाम क्रोधाद्वा वरूतावरितारक्षितासिभवसि यद्वा मरुतोपित्यागात् वृष्ट्यादिविषयात्वारयितासि यस्मादेवंतस्मात् हेमरुतांवेधः विधातः सतादृशस्त्वंचि

कित्वान्चेतनावान् अस्मदनुग्रहविषयज्ञानोपेतःसन् नोस्मभ्यं सुम्ना सुखानि मरुदायत्ता-निवृष्ट्यादिरूपाणिवनुष्व देहि तानिसुम्नानितवहिप्रेष्ठा तवखलुप्रियतमानि हिशब्दोयमिन्द्रो-मरुत्सखेत्यादिश्रुतिषुप्रसिद्ध्यर्थः ॥ १ ॥

१. इन्द्र, तुम निश्चय ही महान् हो; क्योंकि तुम रक्षक और महान् मरुतों का परित्याग नहीं करते। हे मरुतों के विधाता, तुम हमारे प्रति कृपा करके हमें सुख प्रदान करो। वह सुख प्रियतम है।

अयुंज्रन्तइंद्रविश्वकृष्टीर्विदानासोनिष्षिधोमर्त्यत्रा ।
मरुतांपृत्सुतिर्हासमानास्वर्मीळ्हस्यप्रधनस्यसातौ ॥ २ ॥

अयुंज्रन् । ते । इन्द्र । विश्वऽकृष्टीः । विदानासः । निःऽसिधः ।
मर्त्यऽत्रा । मरुताम् । पृत्सुतिः । हासमाना । स्वःऽमीळ्हस्य ।
प्रऽधनस्य । सातौ ॥ २ ॥

पूर्वमन्त्रेमरुतामिन्द्रसाहाय्यमुक्तंअत्रेन्द्रस्यमरुत्साहाय्यमुच्यते हेइन्द्र तेमरुतोयुज्रन्युज्यन्ते त्वयायुक्ताभवन्तीत्यर्थः कीदृशास्ते विश्वकृष्टीः विश्वकृष्टयः राजत्वेन सर्वजनवन्तः किञ्च मर्त्य-त्रा मर्त्येषु मर्त्यार्थंनिःषिधोनिःशेषेणोदकस्यसेक्तॄन् मेघान् विदानासः जनानाः किञ्च येषांमरु-तां पृत्सुतिः सेनास्वर्मीळ्हस्यप्रधनस्यसुखसेक्तुः प्रकृष्टधनवतोवृत्रादिसंग्रामस्यसातौ लाभेजये निमित्तभूतेसति सेना हासमानाहासंकुर्वन्ती हर्षयुक्ताभवति यद्वा सुखेनमिह्यते जलंयस्मिन् तादृशस्य प्रधनस्य प्रकृष्टोदकाख्यधनसाधनस्यसंग्रामस्यसातौमेघभेदनायेतियावत् येषामी-दृशीसेनास्ति ते मरुतोयुज्रन्नितिसंबन्धः ॥ २ ॥

२. इन्द्र, सब मनुष्योंवाले, मनुष्यों के लिए जल-सिंचन करनेवाले और विद्वान् मरुद्गण तुम्हारे साथ मिलें। मरुतों की सेना, सुख के उपायभूत युद्ध में, जय-प्राप्ति के लिए सदा प्रसन्न हुई है।

अथतृतीया—

अम्यक्सातइन्द्रऋष्टिरस्मेसनेम्यभ्वंमरुतोजुनन्ति ।
अग्निश्चिद्धिष्मातसेशुशुक्वानापोनद्वीपंदधतिप्रयांसि ॥ ३ ॥

अम्यक् । सा । ते । इन्द्र । ऋष्टिः । अस्मे इति । सनेमि ।
अभ्वम् । मरुतः । जुनन्ति । अग्निः । चित् । हि । स्म ।
अतसे । शुशुक्वान् । आपः । न । द्वीपम् । दधति । प्रयांसि ॥ ३ ॥

हेइन्द्र तेतव साप्रसिद्धाऋष्टिःवज्राख्यायुधविशेषोस्मेस्मद्वृष्ट्यर्थं अम्यक् प्राप्नोति मेघसमीपे एवञ्च सति मरुतोपि सनेमि अह्वायेति षट्पुराणनामानीत्युक्तत्वात् सनेमीतिपुराणनाम पुराणंचिरकालं संगृहीतं अभ्वं उदकं जुनन्तिक्षिपन्ति वर्षन्तीत्यर्थः वृष्ट्यासस्यादिसमृद्धौ सत्यामग्निश्चिद्धिस्महि स्मेतिपूरणे अग्निरपि अतसे सन्ततेकर्मणि निमित्तभूतेसति शुशुक्वान् दीप्यमानो वर्तते पश्चात्पयांसि चरुपुरोडाशादिहवींषिदधति धारयन्ति ददतिवायजमानाः किमिव आपोनद्वीपं द्विपार्श्वस्थोदकवान् पर्वतादिः द्वीपःतं यथा आपोधारयन्तितद्वत् यद्वा आयुधमेवोच्यते वज्राख्यायुधविशेषः अतसे काष्ठसमूहेशुशुक्वान् दीपयन्नग्निश्चित् चिच्छब्दउपमार्थे दधिचिदित्युपमार्थेइतियास्केनोपमार्थस्योक्तत्वात् काष्ठेज्वलन्नग्निरिव तद्वद्दीप्तोवर्तते एतदेवदीप्तत्वमपेक्ष्यसेइत्युक्तं एवंचसत्यापोद्वीपमिव वृष्ट्युदकानिपयांसि सस्याद्यन्नानिदधतिधारयन्ति एतत्सर्वं महानुभावस्येन्द्रस्यऋष्टेःसामर्थ्यमितीन्द्रस्यस्तुतिः ॥ ३ ॥

३. इन्द्र, तुम्हारा प्रसिद्ध वज्रायुध-विशेष (ऋष्टि) हमारे लिए, मेघ के पास जाता है। मरुद्गण चिर-सञ्चित जल गिरा रहे हैं। विस्तृत यज्ञ के लिए अग्नि प्रदीप्त हुए हैं। जैसे जल द्वीप को धारण करता है, वैसे ही अग्नि हव्य धारण करते हैं।

अथचतुर्थी—

त्वंतूनंइन्द्रतंरयिंदाओजिष्ठयादक्षिणयेवरातिम्।
स्तुतश्चयास्तेचकनन्तवायोःस्तनंनमध्वःपीपयन्तवाजैः ॥ ४ ॥

त्वम्। तु। नः। इन्द्र। तम्। रयिम्। दाः। ओजिष्ठया।
दक्षिणयाऽइव। रातिम्। स्तुतः। च। याः। ते। चकनन्त। वायोः।
स्तनम्। न। मध्वः। पीपयन्त। वाजैः ॥ ४ ॥

हेइन्द्र त्वंतु तुअवधारणे त्वमेव तंरयिंत्वद्दानयोग्यंगवादिधनंदाः देहि यस्मादितरेभ्योपि त्वमेवबहुप्रदः अतोतिमहद्धनंदेहीत्यर्थः वयंतु ओजिष्ठयाओजस्वितमयापरिक्रमणार्हयादक्षिणयासमृद्धिसाधनयागवादिलक्षणया ऋत्विजमिवरातिंदातारंत्वांमीणयामइतिशेषः यद्वा दक्षिणाशब्दोदेयद्रव्यसामान्यवचनः रातिशब्दोबन्धुवचनः हिरण्यादिसारवद्द्रव्यप्रदानेनबन्धुंयथावशीकुर्वन्ति तद्वत् त्वांवशीकुर्मइत्यर्थः किञ्च वायोःक्षेपिष्ठस्यशीघ्रवरप्रदस्य ते कर्मणिषष्ठी वायुंत्वांस्तुवः येस्मदीयाः स्तोतारः चकनन्त कामयन्ते स्तुवन् याःस्तुतयः ताअपित्वामेवकामयन्तेतिवायोजना कनतेर्ण्यन्ताल्लुङिचङिरूपं चङ्यन्यतरस्यामितिचङःपूर्वमक्षरमुदात्तं होत्रादयोवाजैर्हविर्लक्षणै-

१ नि० १. ४.

रत्नैःपीपयन्त आप्यायन्ति तत्रदृष्टान्तः—मध्वोमधुरस्यस्तन्यस्यलाभाय वाजैःसारवद्भिरन्नविशेषैः स्तनंन तंयथाआप्याययन्तितद्वत् वयं त्वां बहूकृतप्रदानाय स्तुत्याहविषाप्याययामः त्वंतु दातव्यत्वेनप्रसिद्धंधनंसर्वदादेहीत्यर्थः ॥ ४ ॥

४. इन्द्र, तुम अपने दान-योग्य धन का दान करो। तुम दाता हो। हम लोग प्रचुर दक्षिणा-द्वारा तुम्हें प्रसन्न करेंगे। तुम वायु या शीघ्र वरदाता हो। स्तोता लोग तुम्हारी स्तुति करना चाहते हैं। मधुर दूध के लिए जैसे लोग स्त्री के स्तन को पुष्ट करते हैं, वैसे ही हम भी तुम्हें अन्न आदि के द्वारा पुष्ट करते हैं।

त्वेरायइन्द्रतोशतमाःप्रणेतारःकस्यचिदृतायोः ।
तेषुणोमरुतोमृळयन्तुयेस्मापुरागातूयन्तीवदेवाः ॥ ५ ॥ ८ ॥

त्वे इति । रायः । इन्द्र । तोशऽतमाः । प्रऽनेतारः । कस्य । चित् । ऋतऽयोः । ते । सु । नः । मरुतः । मृळयन्तु । ये । स्म । पुरा । गातुयन्तिऽइव । देवाः ॥ ५ ॥

हेइन्द्र त्वेतव रायोधनविशेषाः तोशतमाः अतिशयेनप्रीणयितारः तुष्यतेस्तोषः छान्दसं शत्वं यद्वा तेरायोरातयोबन्धवोबन्धुभूताःसखिभूताः मरुतस्तोशतमाःतोशतिर्वधकर्मा नितोशति निबर्हयतीतितन्नामसुपाठात् तोशतमाः हिंसितृतमाः अवर्षकाणांमेघानां कस्यचिदृतायोः ऋतमितियज्ञनाम कस्यापियज्ञेच्छोः यजमानस्यप्रणेतारः प्रकर्षेणनिर्वोढारः तेमरुतोनोस्मान् सुसुष्ठुमृळयन्तु सुखयन्तु केते येस्म येखलु देवाः द्योतनशीलामरुतः पुरापूर्वंगातुयन्तीव यज्ञगमनमिच्छन्तीव ते आगत्यमृळयन्तु ॥ ५ ॥

५. इन्द्र, तुम्हारा धन अत्यन्त प्रीति-दाता और यजमान का यज्ञ-निर्वाहकारी है। जो मरुद्गण पहले ही यज्ञ में जाने के लिए तैयार हो जाते हैं, वे ही हमें सुखी करें।

अथषष्ठी—

प्रतिप्रयाहीन्द्रमीळ्हुषोनॄन्महःपार्थिवेसदनेयतस्व ।
अधयदेषांपृथुबुध्नासएतास्तीर्थेनार्यःपौंस्यानितस्थुः ॥ ६ ॥

प्रति । प्र । याहि । इन्द्र । मीळ्हुषः । नॄन् । महः । पार्थिवे । सदने । यतस्व । अध । यत् । एषाम् । पृथुऽबुध्नासः । एताः । तीर्थे । न । अर्यः । पौंस्यानि । तस्थुः ॥ ६ ॥

हेइन्द्र त्वंमीळ्हुषः उदकसेक्तॄन्नॄन् जगन्नेतॄन्नराकारान्वा महोमहतः मेघान्प्रतिप्रयाहि अभिगच्छ मेघानांवृत्ररूपेणनराकारत्वंयुक्तं गत्वाच पार्थिवेसदने पृथिवीत्यन्तरिक्षनाम तत्संबन्धिनिस्थानेयतस्व प्रयत्नंकुरु तैःसहयुध्यस्वेत्यर्थः यद्वा हविःप्रदातॄन्कर्मनिर्वाहकान्महतोयजमानान्प्रतिगच्छ गत्वाचपार्थिवेसदनेदेवयजनेयतस्व यत्नंकुरु हविर्भोजनाय अधअपिच यद्यदाएषां त्वत्सहायकारिणांमरुतांसंबन्धिनः पृथुबुध्नासोविस्तीर्णमूलाएताः पृषद्वर्णागन्तारोवाअश्वाः अर्यः अरेः शत्रोःपौंस्यानिपुंस्त्वकर्माणितीर्थे न युद्धमार्गेइव तस्थुः तिष्ठन्ति मेघानाक्रमन्ते यद्वैषां मरुतांपृथुबुध्नासः बृहन्मूलाएताः कृष्णवर्णामेघाः तिष्ठन्ति तत्रदृष्टान्तः—अर्यः अरणीयस्य स्वामिनः पौंस्यानिबलानितीर्थे न राजवीथ्यांयथातिष्ठन्तितद्वत् ॥ ६ ॥

६. इन्द्र, तुम जल-सेचक हो। पुरुषार्थी और विशाल मेघ के सामने जाओ। अन्तरिक्ष प्रदेश में रहकर चेष्टा करो। युद्ध-क्षेत्र में शत्रुओं के पराक्रम की तरह मरुतों के विस्तीर्ण पद—अश्वगण—मेघों पर आक्रमण करते हैं।

प्रति॒घो॒राणा॒मेतो॒नाम॒यासां॒म॒रुतां॑शृण्वआय॒तामु॑प॒ब्दिः ।
येमर्त्यं॒पृत॒ना॒यन्त॒मूमै॑र्ऋ॒णा॒वानं॒नप॒तय॑न्त॒सर्गैः॑ ॥ ७ ॥

प्रति॑ । घो॒राणा॑म् । एता॑नाम् । अ॒यासा॑म् । म॒रुता॑म् । शृ॒ण्वे॒ ।
आ॒ऽय॒ताम् । । उ॒प॒ब्दिः॑ । ये । मर्त्य॑म् । पृ॒त॒ना॒ऽयन्त॑म् ।
ऊमैः॑ । ऋ॒ण॒ऽवान॑म् । न । प॒तय॑न्त । सर्गैः॑ ॥ ७ ॥

हेइन्द्र तेसंबन्धिनांघोराणांभयानकानांशब्दायमानानांवा एतानांएतवर्णानांअयासांअयमानानांगमनशीलानांमरुतांआयतांआगन्तॄणांमरुतांउपब्दिः उपगुर्वादिसमीपेगम्यतेज्ञायते उपपद्यतइतिवाउपब्दिः वाक्प्रतिशृण्वेश्रूयते कर्मणिकर्तृप्रत्ययः तएवविशेष्यन्ते—येमरुतोमर्त्यंमरणधर्माणंऊमैः स्वरक्षणैः उदकनिर्गमनसाधनैर्वापृतनायन्तंपृतनाआत्मनइच्छन्तंवैरिणंमेघंवा सर्गैः सृष्टैः स्वकीयप्रहारविशेषैः पतयन्ति तेषामेवध्वनिःश्रूयतइत्यर्थः पातनेदृष्टान्तः—सर्गैः ऋणावानंन छन्दसीवनिपावितिवनिप् ऋणवन्तंअधमर्णमिव तंयथापीडयित्वातदीयंधनमपहरन्तितद्वत् एवंमहानुभावामरुतस्तवानुगाइतीन्द्रस्यस्तुतिः ॥ ७ ॥

७. इन्द्र, भयंकर, कृष्णवर्ण और गमनशील मरुतों के आने का शब्द सुनाई देता है। जैसे अधम शत्रु का विनाश किया जाता है, वैसे ही मनुष्यों की रक्षा के लिए मरुद्गण प्रहरण-द्वारा सेना-बल-संयुक्त शत्रुओं का विनाश करते हैं।

त्वंमाने॑भ्यइन्द्रवि॒श्वज॑न्या॒रदा॑म॒रुद्भिः॑शु॒रुधो॒गोअ॑ग्राः ।
स्तवा॑नेभिःस्तवसेदेवदे॒वैर्वि॒द्यामे॒षंवृ॒जनं॑जी॒रदा॑नुम् ॥ ८ ॥

त्वम् । मानेभ्यः । इन्द्र । विश्वऽजन्या । रद । मरुत्ऽभिः । शुरुधः ।
गोऽअग्राः । स्तवानेभिः । स्तवसे । देव । देवैः । विद्याम । इषम् ।
वृजनम् । जीरऽदानुम् ॥ ८ ॥

हेइन्द्र त्वंमानेभ्योमानार्थंचित्तसमुन्नत्यर्थं तादर्थ्येचतुर्थी विश्वजन्याविश्वजन्यः सोराकारः विश्वेप्राणिनउत्पादनीयायस्यताद्दशस्त्वंसर्वजनहितशक्त्यावा मरुद्भिःसहशुरुधः शोकस्यरोधयित्रीः शोषिकाः गोअग्राःगर्जितमुदकंवाअग्रेपुरतोयासांतामेघपंक्तीः रद विलिख विदारय हेदेव द्योतमान त्वं स्तवानेभिः स्तूयमानैर्देवैरन्यैर्मरुदादिभिः ऋत्विग्भिर्वास्तवसे स्तूयसे उभयत्रकर्मणिकर्तृप्रत्ययः विद्यामेत्ययंव्याख्यातः ॥ ८ ॥

८. इन्द्र, सारे प्राणी तुमसे ही उत्पन्न हुए हैं। मरुतों के साथ, अपने सम्मान के लिए, तुम दुःख-नाशिका और जल-धारिणी मेघ-पंक्ति को विदीर्ण करो। देव, स्तूयमान देवगण तुम्हारी स्तुति करते हैं। तुम हमें अन्न, बल और दीर्घायु प्रदान करो।

॥ इतिद्वितीयस्यचतुर्थेनवमोवर्गः ॥ ९ ॥

ननूनमस्तीतिपञ्चर्चंषष्ठंसूक्तं आगस्त्यमैन्द्रं अत्रानुक्रमणिका—ननूनंपञ्चागस्त्यैनैन्द्रेहविषिमरुतामुद्यतइन्द्रागस्त्ययोःसंवादऐन्द्रः तत्राद्यातृतीयाचेन्द्रवाक्यं चतुर्थीचाद्यैबृहती तिस्रोनुष्टुभइतिसूक्तस्येन्द्रागस्त्यसंवादरूपत्वात् आद्यातृतीयाचतुर्थीचेन्द्रवाक्यं अतस्तासांयस्यवाक्यन्यायेनसऋषिः शिष्टेअगस्त्यवाक्ये अतस्तयोःसएवर्षिः आद्याचबृहती ततस्तिस्रोनुष्टुभः अन्त्याअविशेषात्त्रिष्टुप् विशेषविनियोगोलैङ्गिकः अत्रसूक्तेयास्कः—अगस्त्यइन्द्रायहविर्निरुप्यमरुद्भ्यःसंप्रदित्सांचकारसइन्द्रएत्यपरिदेवयाञ्चक्रइति ।

तत्रप्रथमा—

ननूनमस्तिनोश्वःकस्तद्वेदयदद्भुतम् ।
अन्यस्यचित्तमभिसंचरेण्यमुताधीतंविनश्यति ॥ १ ॥

न । नूनम् । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् ।
अद्भुतम् । अन्यस्य । चित्तम् । अभि । समऽचरेण्यम् । उत ।
आऽधीतम् । वि । नश्यति ॥ १ ॥

---

१ नि० १. ५.

परिदेवनप्रकारःप्रतिपाद्यते इन्द्रआह—अद्यतनंयदस्तितन्नूनमद्यनास्ति नूनमत्रविचिकित्सार्थे अत्राद्येतियद्यपिनास्ति तथाप्युत्तरवाक्येश्वइतिदर्शनादत्राद्येतिगम्यते तथाश्वोपिनूनंनो-उशब्दोऽवधारणे श्वस्तनमपिनैव नास्ति अद्ययथास्मदर्थंनिरुप्तमस्मभ्यंनास्तिकिल श्वःकथंलप्स्यतइतिभावः यदद्भुतंअन्यस्मैनिरुप्यान्यस्मैदत्तमितियदस्ति वैपरीत्यंतत्कोवेद यद्वा यदद्भुतं भाविकार्यंयदस्तितत्कोवेद अद्यश्वोवालप्स्यतइतिआशानकार्येत्युक्तंभवति तदेवाह—अभिसञ्चरेण्यंसर्वतःसञ्चारि अन्यस्यचित्तंमानसंकोवाजानातीतिशेषः उतअपिच आधीतंआध्यातंचिन्तितमपिविनश्यति किमुसकृत्स्मृतंनश्यतीति ॥ १ ॥

१. (इन्द्र) आज या कल कुछ नहीं है। अद्भुत कार्य की बात कौन कह सकता है? अन्य मनुष्यों का मन अत्यन्त चञ्चल होता है—जो अच्छी तरह पढ़ा जाता है, वह भी भूल जाता है।

किंनइन्द्रजिघांससिभ्रातरोमरुतस्तव ।
तेभिःकल्पस्वसाधुयामानःसमरणेवधीः ॥ २ ॥

किम् । नः । इन्द्र । जिघांससि । भ्रातरः । मरुतः । तव । तेभिः ।
कल्पस्व । साधुऽया । मा । नः । समऽअरणे । वधीः ॥ २ ॥

इदमगस्त्यवाक्यं हेइन्द्र नोस्माननपराधिनः किंजिघांससि हन्तुमिच्छसि कथमवध्यत्वमित्यतआह—मरुतस्तवभ्रातरः त्वयाभोगप्रदानेनभरणीयाइत्यर्थः अतोवयमवध्याइत्युक्तंभवति मरुतामिन्द्रभ्रातृत्वमेकस्मिन्नेवदितिगर्भेउत्पन्नत्वात् साचोत्पत्तिःपुराणेषुप्रसिद्धा सन्तुभ्रातरः ततश्चकिमित्यतआह—तेभिस्तैर्मरुद्भिःसह साधुयासाधुत्वंकल्पस्व कल्पय हविर्भागान्तैः सहयुद्धंवानोस्मान्समरणेसङ्ग्रामेमावधीः माहिंसीः यद्वा कृषेर्दृष्टान्तः—सङ्ग्रामेयथाविरोधिनंहंसिनतथास्मानिति॥ २ ॥

२. (अगस्त्य) इन्द्र, तुम क्या मुझे मारना चाहते हो? मरुद्गण तुम्हारे भ्राता हैं। उनके साथ अच्छी तरह यज्ञभाग भोगो। युद्धकाल में हमें नहीं विनष्ट करना।

अथतृतीया—

किंनोभ्रातरगस्त्यसखासन्नतिमन्यसे।
विद्माहितेयथामनोस्मभ्यमिन्नदित्ससि ॥ ३ ॥

किम् । नः । भ्रातः । अगस्त्य । सखा । सन् । अति । मन्यसे ।
२ विद्म । हि । ते । यथा । मनः । अस्मभ्यम् । इत् । न । दित्ससि ॥ ३॥

इदमिन्द्रवाक्यं हेभ्रातः हेअगस्त्य हविःप्रदानवरप्रदानाभ्यांपरस्परोपकारकत्वाद्भ्रातृत्वं तादृशस्त्वं सखासन्अस्मद्धितकार्यंपिसन् नोस्मान्किमतिमन्यसे कस्मादपराधादतिक्रम्यमनुपे अपलपसि नायमपलापः किन्तु तथ्यमेवेतिचेदुच्यते मन्तव्यंतेतव मनोमानसंयथायथावत् विद्मजानीमः कथंजानीथेतिउच्यते अस्मभ्यमिन्न्नदित्ससि अस्मदर्थंनिरुप्तमस्मभ्यंदातुंनेच्छस्येव इदंवार्थे॥ ३ ॥

३. (इन्द्र) भ्राता अगस्त्य, मित्र होकर तुम क्यों हमें अनादृत कर रहे हो ? हम निश्चय ही तुम्हारे मन की बात जानते हैं। तुम हमें नहीं देना चाहते।

अथचतुर्थी—

अरंकृण्वन्तुवेदिंसमग्निमिन्धतांपुरः ।
तत्रामृतस्यचेतनंयज्ञंतेतनवावहै ॥ ४ ॥

अरम् । कृण्वन्तु । वेदिम् । सम् । अग्निम् । इन्धताम् । पुरः ।
तत्र । अमृतस्य । चेतनम । यज्ञम् । ते । तनवावहै ॥ ४ ॥

इदमिन्द्रवाक्यं अपरेगस्त्यवाक्यमाहुः हेऋत्विजोयूयंअगस्त्योङ्गीकृतवान् तस्माद्वेदिमरंकृण्वन्तु कुर्वन्तु संमार्जनपर्युक्षणादिनापरिचरन्तु तथापुरः पुरस्तात् अग्निमाहवनीयादिकंसमिन्धतांइध्मप्रक्षेपेणप्रज्वालयन्तु तत्राग्नावमृतस्यामरणलक्षणस्यदेवत्वस्यचेतनंप्रज्ञापकंयज्ञं हेअगस्त्य तेत्वदीयंत्वंचाहंचतनवावहै अगस्त्यवाक्यपक्षेशिष्टमविशिष्टं तत्र वेद्याममृतस्यतत्साधनस्य हविषश्चेतनंप्रज्ञापनमासादनंकुरुत किञ्च आवांपत्नीयजमानौ अध्वर्युयजमानौवा हेइन्द्र तेत्वदर्थंयज्ञंतनवावहै ॥ ४ ॥

४. ऋत्विक्गण, तुम वेदी को सजाओ और सामने अग्नि को प्रज्वलित करो। अनन्तर उसमें तुम और हम अमृत के सूचक यज्ञ को करेंगे।

त्वमीशिषेवसुपतेवसूनांत्वंमित्राणांमित्रपतेधेष्ठः ।
इन्द्रत्वंमरुद्भिःसंवदस्वाधप्राशानऋतुथाहवींषि ॥ ५ ॥ १० ॥

त्वम् । ईशिषे । वसुऽपते । वसूनाम् । त्वम् । मित्राणाम् । मित्रऽपते ।
धेष्ठः । इन्द्र । त्वम् । मरुत्ऽभिः । सम् । वदस्व । अध । प्र । अशान ।
ऋतुऽथा । हवींषि ॥ ५ ॥ १० ॥

इदमगस्त्यवाक्यं हेवसूनांवसुपते अतिप्रभूतानांपुरोडाशाज्याद्दिधनानांस्वामिन् हेइन्द्र त्वमीशिषे ईश्वरोभवसि सर्वस्यवृत्त्यवृत्तिभ्यांवहुत्वंनिन्यसंवन्धश्चप्रतिपद्यते यद्वा हेवसुपते वसूनामीशिषेइतियोजना द्वितीयोवसुशब्दोनुवादोवा तथा हेमित्राणांमित्रपते अस्मदादिमित्रस्य नित्यंपालकेन्द्र त्वंधेष्ठः सर्वस्यातिशयेनधारकोसि हेइन्द्र त्वंउक्तमहिमस्त्वंमरुद्भिः संवदस्व तैः साकंसम्यक्कृतमितिवदस्व अध अपिच त्वंऋतुथा ऋतावृतौ उपलक्षणमेतत्कालस्य तत्तद्यागकालेहवींषिआज्यचर्वादीनिप्राशनप्रकर्षेणभुंक्ष्व ॥ ५ ॥

५. (अगस्त्य) हे धन के अधिपति, हे मित्रों के मित्रपति, तुम ईश्वर हो, तुम सबके आश्रय-स्वरूप हो। तुम मरुतों से कहो कि हमारा यज्ञ सम्पन्न हुआ है। तुम यथासमय अर्पित हव्य भक्षण करो।

॥ इतिद्वितीयस्यचतुर्थेदशमोवर्गः ॥ १० ॥

प्रतिवइतिषळृचंसप्तमंसूक्तं आगस्त्यं त्रैष्टुभं मारुतं आद्येद्वेकेवलमारुते शिष्टाश्चतस्रोमरुत्वदिन्द्रदेवताकाः प्रतिवःषण्मारुतंतुचतस्रोन्त्यामरुत्वतीयाइत्यनुक्रमणिका विशेषविनियोगोलैङ्गिकः।

प्रतिवएनानमंसाहमेमिसूक्तेनंभिक्षेसुमतिंतुराणाम् ।
रराणतांमरुतोवेद्याभिर्निहेळोधत्तविमुंचध्वमश्वान् ॥ १ ॥

प्रति । वः । एना । नमसा । अहम् । एमि । सुऽउक्तेन । भिक्षे ।
सुऽमतिम् । तुराणाम् । रराणता । मरुतः । वेद्याभिः । नि ।
हेळः । धत्त । वि । मुचध्वम् । अश्वान् ॥ १ ॥

हेमरुतः वोयुष्मानहंप्रत्येमि अभिगच्छामि केनसाधनेन नमसानमस्कारेण हविषावा नमइत्यन्ननाम यथासूक्तेनशोभनवचनेनस्तुतिरूपेणतुराणांत्वरमाणानांशत्रूणांहिंसकानांवायुष्माकं सुमतिंशोभनमतिं अनुग्रहबुद्धिं भिक्षे याचे इन्द्रस्यैवपुनर्हविःप्रदानादिदंयाच्यते किञ्च हेमरुतः यूयंवेद्याभिर्वेदितव्याभिःस्तुतिभीरराणता रममाणेनमनसाइत्थंभूताःसन्तोहेळः क्रोधनामैतत् क्रोधंयुष्मदभिजनितंनिधत्त निकृष्टंधारयत त्यजतेत्यर्थः तथाऽश्वान्विमुचध्वंरथेभ्योवियोजयत क्रोधात्पुनर्गमनंमाकुरुतेत्यर्थः ॥ १ ॥

१. मरुतो, मैं नमस्कार और स्तुति करता हुआ तुम्हारे पास आता हूँ। हे वेगवान् मरुतो, तुम्हारी दया चाहता हूँ। मरुतो, स्तुति-द्वारा आनन्दित चित्त से क्रोध छोड़ो और रथ से अश्व छोड़ो अर्थात् ठहरने की कृपा करो।

एषवस्तोमोमरुतोनमस्वान्हृदातष्टोमनसाधायिदेवाः ।
उपेमायातमनसाजुषाणायूयंहिष्ठानमसइद्वृधासः ॥ २ ॥

एषः । वः । स्तोमः । मरुतः । नमस्वान् । हृदा । तष्टः । मनसा ।
धायि । देवाः । उप । ईम् । आ । यात । मनसा । जुषाणाः ।
यूयम् । हि । स्थ । नमसः । इत् । वृधासः ॥ २ ॥

हेमरुतः एषवःस्तोमः इदानींक्रियमाणः प्रकारोवोयुष्माकंयुष्मदर्थइत्यर्थः कीदृशोयं नमस्वान् नमइत्यन्ननाम हविर्लक्षणान्नवान् नकेवलंस्तुतिमात्रं भक्षणायहविरपियुष्माकमित्यर्थः किञ्च हृदातष्टःयुष्मन्निवेदनबुद्ध्यासंपादितः तादृशःस्तोमोहेदेवाः देवनशीलाः मनसा अनुग्रहवता चित्तेनधायि धार्यतां तदर्थमनसाआदरबुद्ध्याजुषाणाः ईमेनांस्तुतिंतद्धविश्चसेवमानाः उपायात उपागच्छतैव माविलंबंकुरुत यूयंनमसोन्नस्यहवीरूपस्यवृधासःस्थहि वर्धयितारोभवथखलु अतआगन्तव्यमेव इत्पूरणः ॥ २ ॥

२. मरुतो, तुम्हारे इस स्तोम में अन्न है। देवगण, यह स्तोम, तुम्हारे उद्देश्य से हृदय से सम्पादित हुआ है; कृपा करके इसे मन में रखिए। सादर इसे स्वीकार करते हुए आओ। तुम हव्य-रूप अन्न के वर्द्धयिता हो।

स्तुतासोनोमरुतोमृळयन्तूतस्तुतोमघवाशंभविष्ठः ।
ऊर्ध्वानःसन्तुकोम्यावनान्यहानिविश्वामरुतोजिगीषा ॥ ३ ॥

स्तुतासः । नः । मरुतः । मृळयन्तु । उत । स्तुतः । मघऽवा ।
शम्ऽभविष्ठः । ऊर्ध्वा । नः । सन्तु । कोम्या । वनानि । अहानि ।
विश्वा । मरुतः । जिगीषा ॥ ३ ॥

तेमरुतः स्तुतासः स्तुताःसन्तोनोस्मान्मृळयन्तु सुखयन्तु उतअपिच मघवा मघमितिधननाम अस्मद्दातव्यबहुधनेन तद्वानिन्द्रः स्तुतःशंभविष्ठःसुखस्यभावयितृतमःसन् अस्मान्मृळयन्तु किञ्च हेमरुतोनोस्माकं जिगीषा जिगातेर्गतिकर्मणोजिगीषा जिगीषितव्यानि प्राप्तव्यानि उत्तरत्रानुभूयमानानि विश्वा सर्वाण्यहानि दिवसानि ऊर्ध्वा उन्नतानिउपर्युपरिश्रियायशसावोत्कृष्टानिकोम्याकोम्यानिस्पृहणीयानिवनानिसर्वैः संभजनीयानिसन्तु जिगीषाजेतुमिष्टानिजेतव्यानिचसन्त्वितिवायोज्यं एवंकृत्वामरुतइन्द्रश्चसुखयन्त्वित्यर्थः ॥ ३ ॥

३. मरुद्गण, स्तुत होकर हमें सुखी करो। इन्द्र, स्तुत होकर हमें सर्वापेक्षा सुखी करें। मरुतो, हम लोग जितने दिन जियें, वे सब दिन उत्कृष्ट, स्पृहणीय और भोग-योग्य हों।

अस्मादहंतविषादीषमाणइन्द्राद्भियामरुतोरेजमानः ।
युष्मभ्यंहव्यानिशितान्यासन्तान्यारेचकृमामृळतानः ॥ ४ ॥

अस्मात् । अहम् । तविषात् । ईर्षमाणः । इन्द्रात् । भिया ।
मरुतः । रेजमानः । युष्मभ्यम् । हव्या । निःशितानि । आसन् ।
तानि । आरे । चकृम । मृळत । नः ॥ ४ ॥

हेमरुतः शृणुत अहं अस्मात् प्रसिद्धात्तविषात् बलवतइन्द्रात्तत्सकाशात् भियाभीत्याईषमाणः पलायमानः पुरतःस्थातुमशक्तः तथा रेजमानः वेपमानोभवं ततश्चकिमायातमित्यत आह—यानियुष्मभ्यंहव्याहवींषिनिशितानिसंस्कृतान्यासन् तानि तान्येव आरे चकृम दूरे कृतवन्तोवयं इन्द्रभयात् अतोनोस्मानपराधिनोमृळत मृळयत सुखयत ॥ ४ ॥

४. मरुतो, हम इस बलवान् इन्द्र के पास से डर के मारे भागते हुए काँपने लगे। तुम्हारे लिए जिस हव्य को संस्कृत किया था, उसे दूर कर दिया। हमें सुखी करो।

येनमानासश्चितयन्तउस्राव्युष्टिषुशवसाशश्वतीनाम् ।
सनोमरुद्भिर्वृषभश्रवोधाउग्रउग्रेभिःस्थविरःसहोदाः ॥ ५ ॥

येन । मानासः । चितयन्ते । उस्राः । विऽउष्टिषु । शवसा । शश्वतीनाम् ।
सः । नः । मरुत्ऽभिः । वृषभ । श्रवः । धाः । उग्रः । उग्रेभिः ।
स्थविरः । सहःऽदाः ॥ ५ ॥

हेइन्द्र शवसाबलभूतेन त्वयानुगृहीताः मानासोमान्याः त्वयाभिमानितावा उस्रारश्मयः शश्वतीनांनित्यानांबह्वीनांउषसांव्युष्टिषुसतीषुप्रकाशेषुसत्सु चितयन्तेचेतयन्ते प्राणिनां स्वस्वव्यवहारायप्रज्ञापयन्ते ऐन्द्रींदिशितेनैवानुगृहीताउषसोरश्मयउद्गच्छन्तीतिप्रसिद्धं हेवृषभ वर्षितरिन्द्र सतादृशस्त्वंमरुद्भिःसहितः नः अस्माकं श्रवोधाः सर्वत्रश्रूयमाणमन्नंधेहिस्थापयदेहीत्यर्थः कीदृशस्त्वं उग्रः उद्गूर्णबलः सहोदाः पराभिभवसमर्थंबलंसहस्तस्यदावा स्थविरः पुरातनः कीदृशैर्मरुद्भिः उग्रेभिः क्रूरबलैः एवं महानुभावोन्नंदेहि ॥ ५ ॥

५. इन्द्र, तुम बल-स्वरूप हो। तुम्हारे माननीय अनुग्रह से किरणें, प्रतिदिन उषा के उदयकाल में प्राणियों को चैतन्य देती हैं। अभीष्टवर्षी, उग्र बल-प्रदायी और पुरातन इन्द्र, तुम उग्र मरुतों के साथ अन्न धारण करो। अथषष्ठी—

त्वंपाहीन्द्रसहीयसोनॄन्भवामरुद्भिरवयातहेळाः ।
सुप्रकेतेभिःसासहिर्दधानोविद्यामेषंवृजनंजीरदानुम् ॥ ६ ॥ ११ ॥

त्वम् । पाहि । इन्द्र । सहीयसः । नॄन् । भव॑ । मरुत्ऽभिः ।
अव॑यातऽहेळाः । सुऽप्रकेतेभिः । सस॒हिः । दधा॑नः । विद्याम॑ ।
इषम् । वृजन॑म् । जीरऽदा॑नुम् ॥ ६ ॥ ११ ॥

हेइन्द्र त्वंपाहिरक्षकान् सहीयसोनॄन् सहस्वितमान् अनुग्रहेणातिप्रवृद्धबलान् नेतॄन् मनुष्यानस्मान्मरुतोवा किञ्च मरुद्भिःसाकं अस्मास्ववयातहेळाभव अपगतमन्युर्भव मरुत्सुवाताथाभव किञ्च सुप्रकेतेभिः शोभनप्रज्ञानैर्मरुद्भिःसह सासहिः शत्रूणामभिभवितासन् दधानः अस्मदभिमतस्यधारयिताभवेतिशेषः शिष्टोव्याख्यातः ॥ ६ ॥

६. इन्द्र, प्रभूत बलशाली मरुतों की रक्षा करो। उनके प्रति निष्क्रोध बनो। मरुद्गण उत्तम प्रज्ञावाले हैं। उनके साथ शत्रुओं के विनाशक बनो और हमारी रक्षा करो। हम अन्न, बल और दीर्घायु प्राप्त करें।

॥ इतिद्वितीयस्यचतुर्थेएकादशोवर्गः ॥ ११ ॥

चित्रोवइतितृचात्मकमष्टमंसूक्तमागस्त्यंमारुतंगायत्रं चित्रस्तृचंगायत्रमित्यनुक्रमणिका लैङ्गिकोविशेषविनियोगः ।

तत्रप्रथमा—

चित्रोवो॑ऽस्तुयाम॑श्चित्रऊती सु॑दानवः । मरु॑तोअहि॑भानवः ॥ १ ॥

चित्रः । वः । अस्तु । याम॑ः । चित्रः । ऊती । सुऽदानवः ।
मरु॑तः । अहि॑ऽभानवः ॥ १ ॥

हेमरुतः वोयुष्माकंयामोस्मद्यज्ञागमश्चित्रश्चायनीयः पूज्यआश्चर्यभूतोवास्तुभवतु नकेवलमागमनमेवचित्रं किन्तु हेसुदानवः शोभनदानाः हेअहिभानवः अहीयमानप्रकाशाः युष्माकं संबन्धीचित्रःसआगमः ऊतीऊत्यैरक्षणाय इष्टतर्पणायवा युक्तश्चभवतु भवदागमनंशीघ्रमस्तु अभिमतमदंचास्त्वित्यर्थः ॥ १ ॥

१. मरुतो, यज्ञ में तुम्हारा आगमन विचित्र हो। दानशील और उत्कृष्ट दीप्तिवाले मरुतो, तुम्हारा आगमन हमारी रक्षा करे।

आरेसाव॑ःसुदानवोमरु॑तऋञ्जतीशरु॑ः । आरेअश्मायमस्य॑थ ॥ २ ॥

आरे । सा । वः । सुऽदानवः । मरु॑तः । ऋञ्जती । शरु॑ः ।
आरे । अश्मा॑ । यम् । अस्य॑थ ॥ २ ॥

हेसुदानवः शोभनदानामरुतः वोयुष्माकंसंबन्धिनीरुशतीप्रसाधयन्ती स्वतेजसास्वात्मानमलंकुर्वतीप्रसिद्धिंप्राप्नुवानावा साप्रसिद्धाशरुः हिंसका ऋष्टिः आरेदूरेभवतु तथाऽयमस्यथ क्षिपथ सोश्माऽस्मासुव्यापकआयुधविशेषः आरेदूरनामैतत्दूरेभवतु मांनप्राप्नोतु यद्वा आरेशब्द-आराच्छब्दपर्यायः सचदूरेसमीपेचवर्तते अत्रसमीपवचनः यमस्मत्तोन्यमस्यथ तंवैरिणमस्माकं अश्मा उपलोपमः कठिनःआयुधविशेषः आरेसमीपंप्राप्नोतु ॥ २ ॥

२. दानशील मरुतो, तुम्हारे दीप्यमान और प्राणिवधकुशल अस्त्र हमारे पास से दूर हों। तुम जिस अश्म नाम के रथ को फेंकते हो, वह भी हमारे पास से दूर हो।

अथतृतीया—

तृणस्कन्दस्यनुविशःपरिवृङ्क्तसुदानवः। ऊर्ध्वान्नःकर्तजीवसे॥३॥१२॥

तृणऽस्कन्दस्य। नु। विशः। परि। वृङ्क्त। सुऽदानवः। ऊर्ध्वान्। नः। कर्त। जीवसे॥ ३ ॥ १२ ॥

हेमरुतः सुदानवः शोभनदानायूयं तृणस्कन्दस्य तृणवच्चलनस्वभावस्य शुष्यमाणस्यवा मम विशःपुत्रभृत्यादिरूपाःप्रजाः नुक्षिप्रं परिवृङ्क्त परिवर्जयत बाधापरिहारेणरक्षत यद्वोक्तलक्षण-कालस्यासुरविशेषस्यवा प्रजाः परिवर्जयत किञ्च नोस्मानूर्ध्वान्कर्त कुरुत जीवसेचिरजीवनाय ॥ ३ ॥

३. दाता मरुतो, तिनके के समान नीच होने पर भी मेरी प्रजाओं को बचाना। हमें उन्नत करो, ताकि हम बच जायँ।

॥ इतिद्वितीयस्यचतुर्थेद्वादशोवर्गः ॥ १२ ॥

गायत्सामेतित्रयोदशर्चंनवमंसूक्तंआगस्त्यंत्रैष्टुभमैन्द्रं गायत्सप्तोनेत्यनुक्रान्तं समूळ्हेदशरात्रेतृतीयेछन्दोमेमरुत्वतीयशस्त्रेएतत्सूक्तं विश्वजितोग्निंनरइतिखण्डेसूत्रितम्—तृतीयस्येन्द्रः स्वाहागायत्सामेति।

तत्रप्रथमा—

गायत्सामंनभन्यं१यथावेरर्चामतद्वावृधानंस्वर्वत्।
गावोधेनवोबर्हिष्यदब्धाआयत्सद्मानंदिव्यंविवासान्॥ १ ॥

गायत्। साम। नभन्यम्। यथा। वेः। अर्चाम। तत्। वृवृधानम्। स्वःऽवत्। गावः। धेनवः। बर्हिषि। अदब्धाः। आ। यत्। सद्मानम्। दिव्यम्। विवासान्॥ १ ॥

हेइन्द्र नभन्यंनभस्यंनभसिभवंनभोव्यापिनं हिंसकंवाराक्षसादिकस्य नभतिर्वधकर्मा न-भतिअर्दतीतिवधकर्मसुगणनात् तादृशंसाम हेइन्द्र यथावेः येनप्रकारेणवेत्सि तथा गायत् गाय-ति उद्गातात्तस्माद्यतःस्तौति ततःकारणात् ववृधानंवर्धमानंस्वर्वत्फलभूतेनस्वर्गेणतद्वत्शस्त्रंय-थावेस्तथार्चामपूजयाम शंस्यमित्यर्थः स्तुतमनुशंसतीतिन्यायात् यद्वा तव उक्तलक्षणंसाम ववृधानं सर्वत्रयथाभवतितथार्चाम किञ्च बर्हिषियज्ञेधेनवोदोग्ध्र्यः अदब्धाः अहिंसिताः गावः यत् सद्मानं सीदन्तंदिव्यंदिविभवमिन्द्रंत्वांआविवासान् विवासतिःपरिचरणकर्मा आगत्यपरिचर-न्ति क्षीरंदुहन्तितथार्चाम ॥ १ ॥

१. इन्द्र, उद्गाता सामयेव का इस प्रकार आकाशव्यापी गान गाता है कि तुम समझ सको। हम उस वर्द्धमान और स्वर्ग-प्रदाता स्तोत्र की पूजा करते हैं। स्वर्गीय इन्द्र, दुग्धवती और हिंसा-शून्या गायें जैसे कुशासन पर बैठने के समय तुम्हारी सेवा करती हैं, वैसे ही मैं भी पूजा करता हूँ।

अर्चद्वृषावृषभिःस्वेदुहव्यैर्मृगोनाश्नोअतियज्जुगुर्यात् ।
प्रमन्दयुर्मनांगूर्तहोताभरतेमर्योमिथुनायजत्रः ॥ २ ॥

अर्चत् । वृषा । वृषऽभिः । स्वऽइदुहव्यैः । मृगः । न । अश्नः । अति यत् । जुगुर्यात् । प्र । मन्दयुः । मनाम् । गूर्त । होता । भरते । मर्यः । मिथुना । यजत्रः ॥ २ ॥

वृषा हविषांवर्षितायंयजमानः स्वेदुहव्यैः स्वायत्तहविष्कैः यद्वा स्वयंप्राप्तं इदु उदकंहव्यं येषांतादृशैः वृषभिर्वर्षकैः हविःप्रदातृभिः अध्वर्य्वादिभिः विशिष्टःसन् अर्चत् अर्चयतिइन्द्रं यद्वा वृषाफलस्यवर्षितायः इन्द्रः उक्तलक्षणैरध्वर्य्वादिभिरर्च्यतेयद्यस्मादश्नोव्यापकः पानाद्य-र्थंधावन्मृगोन हरिणादिरिव अयमिन्द्रः अश्नः अशनशीलःसन् अतिजुगुर्यात् अत्यर्थमुद्यु-क्तेहविर्भक्षणाययथामृगः क्षुत्पिपासार्दितः शीघ्रमुद्युङ्क्तेतथायमिन्द्रोपि यस्मादेवंतस्मादर्चति यद्वा यमिन्द्रोयद् यथा अश्नोमृगइवातिजुगुर्यात्भक्षयेत् तथार्चतीत्यर्थः किञ्च हेगूर्तउद्गूर्णेन्द्रमनां मननं स्तोत्रमिच्छतांदेवानांमन्दयुः स्तुतियुक्तोमर्योहोतामानुषएतन्नामकऋत्विक् यजत्रोयागनिष्पादकः सन् मिथुनामिथुनानि युग्मरूपाणियाज्यापुरोनुवाक्यादीनि मिथुनौवा जायापतिरूपःसन् प्रभर-ते प्रकर्षेणसंपादयति तस्मादर्चयतीत्यर्थः॥ २ ॥

२. हव्यदाता यजमान, हव्य-प्रदाता अध्वर्यु आदि के साथ अपने दिये हव्य-द्वारा इन्द्र की पूजा करते हैं। पिपासित मृग की तरह इन्द्र, द्रुत वेग से यज्ञ-स्थल में उपस्थित होंगे। उग्र इन्द्र, स्तोत्राभिलाषी देवों की स्तुति करते हुए मर्त्य होता, स्त्री-पुरुष, यज्ञ-सम्पादन करते हैं।

नक्षद्धोतापरिसद्मंमितायन्भरद्गर्भमाशरदःपृथिव्याः ।
क्रन्ददश्वोनयमानोरुवद्गौरन्तर्दूतोनरोदसीचरद्वाक् ॥३॥

नक्षत् । होता । परि । सद्म । मिता । यन् । भरत् । गर्भम् । आ ।
शरदः । पृथिव्याः । क्रन्दत् । अश्वः । नयमानः । रुवत् । गौः ।
अन्तः । दूतः । न । रोदसी इति । चरत् । वाक् ॥ ३ ॥

होताहोमनिष्पादकोयमग्निर्मितापरिमितानिसद्मसदनानिगार्हपत्यादिस्थानानिपरियन्परितोगच्छन्नक्षतव्याप्नोति व्याप्यचशरदःसंवत्सरसंबन्धिनंपृथिव्याभूम्याश्चसबन्धिनंगर्भंगर्भस्थानीयमन्नंहविर्लक्षणमाभरत् आहरति स्वीकरोति संभरन्तिवासंवत्सरपर्यन्तंवर्धितंभूम्यामुत्पन्नमित्यर्थः यद्वा संवत्सरसंबन्धिनंवसन्तादिकालेज्योतिष्टोमादिषुदीयमानंपार्थिवंहविर्भरत् वसन्तेवसन्तेज्योतिषायजेतेतिश्रुतेः। तथाकृत्वाक्रन्दत्अश्वः लुप्तोपममेतत् अश्वइव क्रन्दतिहर्षातिशयात्किंकुर्वन् नयमानः नयत्इन्द्रायहविर्भारं किञ्च गौर्गन्तोद्वृत्तोवृषइवरुवत् रौतिशब्दायते किंकुर्वन् दूतोन वार्ताहरोदूतइव रोदसीरोदस्योर्द्यावापृथिव्योरन्तर्मध्येरोदस्योरन्तरावाक् स्तूयमानःस्तुवन्वादेवान् चरत्चरतिगच्छति हविःस्वीकारायपृथिवींतत्प्रापणायद्युलोकंचपरिभ्रमतीत्यर्थः वक्तेःकर्तरिकर्मणिवाक्विबचीत्यादिनाक्विब्दीर्घौ संप्रसारणाभावश्च ॥ ३ ॥

३. होम-सम्पादक अग्नि परिमित गार्हपत्यादि स्थान में चारों ओर व्याप्त हैं तथा शरत्काल के और पृथिवी के गर्भस्थानीय अन्न को ग्रहण करते हैं। अश्व की तरह शब्द करके, वृषभ की तरह शब्द करके, अन्न लेकर, आकाश और पृथिवी के बीच दूत-स्वरूप बातचीत करते हैं।

ताकर्मापतरास्मैप्रच्यौत्नानिदेवयन्तोभरन्ते ।
जुजोषदिन्द्रोदस्मवर्चानासत्येवसुग्म्योरथेष्ठाः ॥ ४ ॥

ता । कर्म । अपऽतरा । अस्मै । प्र । च्यौत्नानि । देवऽयन्तः ।
भरन्ते । जुजोषत् । इन्द्रः । दस्मऽवर्चाः । नासत्याऽइव ।
सुग्म्यः । रथेऽस्थाः ॥ ४

ता तानि अपतरा अपतराणिव्याप्ततराणिवाहवींषि अस्माइन्द्रायतदर्थंकर्मकुर्मःसंपादयामः कृञश्छान्दसेवर्तमानार्थेलुङि मन्त्रेघसेनिर्च्लुक् छन्दस्युभयथेत्यार्धधातुकत्वेनङित्त्वाभावाद्गुणः च्यौत्नानिच्यावयितॄणिदृढानिस्तोत्राणिकर्माणिस्वकीयानिसामर्थ्यानिवा देवयन्तोदेवानात्मनइच्छन्तोयजमानाःप्रभरन्ति प्रकर्षेणसंपादयन्ति तद्द्वयमपिसंपादयामइत्यर्थः दस्मवर्चाःदर्शनीयतेजाः शत्रूपक्षपणबलोवानासत्येवनासत्याविवाश्विनाविवतौहिद्यावापृथिव्यात्मानौ

ताविवसुगम्यः सुगम्यःसुखेनगन्तुंशक्यः रथेष्ठाःरथेवर्तमानः एवंभूतःसन् इन्द्रःजुजोषत्अस्मत्कृ-
तंस्तोत्रादिकमसेवताम् ॥ ४ ॥

४. हम इन्द्र के उद्देश्य से अत्यन्त व्यापक हव्य प्रदान करेंगे। देवाभिलाषी यजमान दृढ़ स्तोत्र करते हैं। दर्शनीय तेजवाले अश्विनी-कुमारों की तरह जानने योग्य और रथ पर अवस्थित इन्द्र हमारे स्तोत्र का सेवन करें।

तमुंष्टुहीन्द्रंयोहसत्वायःशूरोमघवायोरथेष्ठाः ॥
प्रतीचश्चिद्योधीयान्वृषण्वान्ववव्रुषश्चित्तमसोविहन्ता ॥५॥१३॥

तम्। ऊँ इति। स्तुहि। इन्द्रम्। यः। ह। सत्वा। यः। शूरः।
मघऽवा। यः। रथेऽस्थाः। प्रतीचः। चित्। योधीयान्।
वृषण्ऽवान्। ववव्रुषः। चित्। तमसः। विऽहन्ता ॥ ५ ॥ १३ ॥

तमु तमेवेन्द्रंस्तुहि हेहोतः स्तुतिंकुरु किमस्याधिक्यमिति उच्यते योह यःखलु सत्वा अ-तिप्रभूतबलः यद्वा सत्वा सादकःशत्रूणां यश्चशूरः शौर्योपेतः मघवाबलवान्धनवान्वा यश्चरथेष्ठाः रथेवर्तमानः किञ्च प्रतीचश्चित्प्रत्यभिमुखंयोद्धुरपियोधीयान् योद्धृतमः प्रतिपूर्वादञ्चतेःक्विन्नं-ताव लुप्तनकाराच्छसि अचइत्यकारलोपे चाविति दीर्घः अञ्चेश्छन्दस्यसर्वनामस्थानमितिवि-भक्तिरुदात्ता वृषण्वान् वृषाणोवर्षितारोवज्रादयः तद्वान् वृषातेवज्रउततेवृषारथइतिहिनिगमः। तथाववव्रुषश्चित् आवरकस्यापितमसोमेघादेर्विहन्ताविशेषेणघातकः यस्मादेवंमहानुभावः त-स्मात्स्तुहि ॥ ५ ॥

५. हे होता, जो इन्द्र अनन्त बलवाले, शौर्य्यवान्, बलवान् रथ पर स्थित, सामने के योद्धाओं में श्रेष्ठ योद्धा, वज्र आदिवाले और मेघ आदि के विनाशक हैं, उनकी स्तुति करो।

॥ इतिद्वितीयस्यचतुर्थेत्रयोदशोवर्गः ॥ १३ ॥

अथषष्ठी—

प्रयदित्थामहिनानृभ्योअस्त्यरंरोदसीकक्ष्ये३नास्मै ।
संविव्यइन्द्रोवृजनंनभूमाभर्तिस्वधावाँओपशमिवद्याम् ॥ ६॥

प्र। यत्। इत्था। महिना। नृऽभ्यः। अस्ति। अरम्। रोदसी इति।
कक्ष्ये३इति। न। अस्मै। सम्। विव्ये। इन्द्रः। वृजनम्।
न। भूम। भर्ति। स्वधाऽवान्। ओपशम्ऽइव। द्याम् ॥ ६ ॥

१ ऋ० सं० २. ६. १८.।

यत् यइन्द्रोमहिनामहत्त्वेनस्वैश्वर्येणनृभ्योनेतृभ्यः कर्मनिर्वाहकेभ्योयजमानेभ्यः प्रास्ति प्रभवति ईष्टेस्वर्गादिप्रदानेनरक्षितुं अस्मैरक्षकायेन्द्रायरोदसीद्यावापृथिव्यौकक्ष्येकक्ष्यायतेसती- सञ्चारायनारंनालंनपर्याप्तेजगतोधीशस्येन्द्रस्यसञ्चारायाल्पत्वात् द्यावापृथिव्यौनपर्याप्तेइत्यर्थः सृज्यादपिस्रष्टुर्महिम्नोधिकत्वादितिभावः अयमिन्द्रोवृजननंभूम भूमिंभूतानिवावृजननं बलमिव वृजतेःकर्तनार्थस्येदंरूपं तदिव तद्यथा आवृणोतितथायमपिस्वतेजसासंविव्ये सम्यगावृणोतिलो- कत्रयं किंचायंस्वधावानन्नवान्वृष्टिलक्षणोदकवान्वा द्यांदिवंभर्तिबिभर्ति धारणेदृष्टान्तः—ओ- पशमिव ईषदुपशेतेइत्योपशंशृङ्गं तत् वृषभइव यद्वा परस्परंसमीपेवर्तमानंक्षित्यन्तरिक्षाख्यं लोकद्वयमोपशं तदिव द्यांबिभर्ति लोकत्रयमपिबिभर्तीत्यर्थः भृञोलटिछान्दसःशपोलुक् ॥ ६ ॥

६. इन्द्र, अपनी महिमा से कर्म-निष्ठ यजमानों को स्वर्ग आदि फल देने में समर्थ हैं। द्यावा-पृथिवी उनकी कक्षा की पूर्त्ति के लिए पर्याप्त नहीं है। जैसे अन्तरिक्ष पृथिवी को वेष्टित कर रहता है, वैसे ही वे भी अपनी प्रतिभा से तीनों लोकों को व्याप्त करते हैं। जैसे वृषभ अनायास शृंग धारण करता है, वैसे ही अन्नवान् इन्द्र भी स्वर्ग को अनायास धारण करते हैं।

समत्सुत्वाशूरसतामुराणंप्रपथिंतमंपरितंसयध्यै ।
सजोषसइन्द्रंमदेक्षोणीःसूरिंचिद्येअनुमदन्तिवाजैः ॥ ७ ॥
समत्ऽसु । त्वा । शूर । सताम् । उराणम् । प्रपथिन्ऽतमम् ।
परिऽतंसयध्यै । सऽजोषसः । इन्द्रम् । मदे । क्षोणीः । सूरिम् ।
चित् । ये । अनुऽमदन्ति । वाजैः ॥ ७ ॥

हेशूर शौर्योपेतेन्द्र समत्सुसंग्रामेषु सतांत्वामेवाश्रित्यवर्तमानानांप्राणिनामुराणं उरूणि अतिप्रभूतानिबलादीनिकुर्वाणंप्रपथिंतमंप्रकृष्टमार्गगतमंसुकृतिनामुत्तममार्गभूतंइन्द्रंशत्रूणांदारकं त्वात्वां परितंसयध्यै अवतंसीकर्तुंभूषणीकर्तुंमदेतवमदार्थंच सजोषसःसहसेवमानाः समान- प्रीतयोवा क्षोणीः क्षोण्योविशःपरिजनाःमरुतःप्रयतन्ते कीदृशास्ते येवाजैर्बलैःअनुमदन्तिअनुकू- लंमादयन्ति संग्रामेमरुतः त्वामेवस्वामिनंकृत्वामादयन्तिहर्षयन्तीत्यर्थः यद्वा येयजमानाः वा- जैर्हविर्भिर्मादयन्तितेसमानप्रीतियुक्तास्तवमनुष्यभूताऋत्विजःयजमानभूताः प्रजाः समत्सुसहमा- दनस्थानेषुयागेषूक्तलक्षणविशिष्टंत्वामेवपूजयितुं तवमदायचप्रयतन्ते ॥ ७ ॥

७. शूर इन्द्र, युद्ध-भूमि में साधुओं के बलप्रद और उत्तम-मार्ग-रूप हो। मरुद्गण तुम्हें स्वामी कहकर आनन्दित होते हैं। ये तुम्हारे परिजन हैं। तुम्हारे आनन्द के लिए सब लोग समान आनन्दित होकर तुम्हें अलंकृत करने की चेष्टा कर रहे हैं।

एवाहितेशंसवनासमुद्रआपोयत्तआसुमदन्तिदेवीः ।
विश्वातेअनुजोष्याभूद्गौःसूरीँश्चिद्यदिधिषावेषिजनान् ॥ ८ ॥

एव । हि । ते । शम् । सवना । समुद्रे । आपः । यत् । ते । आसु ।
मदन्ति । देवीः । विश्वाः । ते । अनु । जोष्याः । भूत् । गौः ।
सूरीन् । चित् । यदि । धिषा । वेषि । जनान् ॥ ८ ॥

हेइन्द्र एवाहिएवंहिसतितेतवसंबन्धीनि सवना सवनानि सूयतेसोमोत्रेतिसवनानिसोमयागाः ते शंसुखकराभवन्ति कथंसति यत्यदिदेवीः देव्योद्योतमानाआपः समुद्रेउदकसमुद्रवणापादानभूतेन्तरिक्षेआसुप्रजासुनिमित्तभूतासुतेत्वांमदन्तिमादयन्ति अन्तर्भावितण्यर्थोयं यदाप्राण्युपकारार्थंवर्षणायत्वांप्रेरयन्तिवृष्ट्युदकानि तदाखलुतवसोमयागाःसुखकराभवन्ति यज्ञसाधकवृष्टिप्रदानेनयागान्निवर्तयेत्यर्थः किञ्च हेइन्द्र तेत्वांविश्वागौःसर्वापिस्तोत्रशस्त्ररूपावाक् तेत्वं अनुक्रमेणजोष्याजोषणार्हाप्रीणयित्रीभूतभवति कदा यदिसूरींश्चित्स्तोत्रादिप्रेरयितॄन्स्तोतृजनानपिधिषाधिषणयाप्रज्ञयावृष्टिप्रदानरूपेणकर्मणावावेषिकामयसे तदासर्वापिस्तुतिस्त्वदर्थाभवति ॥ ८ ॥

८. यदि अन्तरिक्ष-स्थित और प्रकाशमान जल प्रजाओं के लिए तुम्हें सुखी करे, यदि सारे स्तोत्र आदि तुम्हें प्रसन्न करें और यदि तुम वृष्टि-प्रदान आदि कर्म-द्वारा स्तोताओं की कामना करो, तो तुम्हारा सवन सुखकर हो।

असामयथासुषखायएनस्वभिष्टयोनरांनशंसैः ।
असद्यथानइन्द्रोवन्दनेष्ठास्तुरोनकर्मनयमानउक्था ॥ ९ ॥

असाम । यथा । सुऽसखायः । एन । सुऽअभिष्टयः । नराम् ।
न । शंसैः । असत् । यथा । नः । इन्द्रः । वन्दनेऽस्थाः । तुरः ।
न । कर्म । नयमानः । उक्था ॥ ९ ॥

हेएन इनःईश्वरेन्द्र यथासुसखायः शोभनत्वद्रूपसहायवन्तोऽसामभूयास्म किञ्च स्वभिष्टयः शोभनाभ्येषणाःशोभनाभीष्टाश्चासाम किमिव नरांनशंसैः नराणांराजादीनांशंसैःशंसनैरिवस्तुतिभिर्यथामनुष्याःशोभनाभीष्टाभवन्तितद्वत् इदानींपरोक्षेणाह नोस्मभ्यमिन्द्रोवन्दनेष्ठाःअस्मत्स्तुतौवर्तमानःसन् तुरोन त्वरमाणइव नोस्माकंकर्मउक्थाउक्थैः शस्त्रैर्नयमानः फलंप्रापयन्स्तुत्यातुष्टःसन् अस्मदीयेनकर्मणाफलमापयितातथासतभवेत् हेऋत्विजस्तथाकुरुतेतिशेषः ॥ ९ ॥

९. प्रभु इन्द्र, जैसे हम तुम्हारे मित्र हो सकें और स्तुति-द्वारा राजाओं की तरह तुम्हारे पास से अभीष्ट प्राप्त कर सकें, वैसा करो। इन्द्रदेव, हमारे स्तुति-काल में उपस्थित होकर शीघ्रता के साथ हमारा यज्ञ उक्त स्तुति के साथ ले जाओ।

अथदशमी—

विष्पर्धसोनरांनशंसैरस्माकासदिन्द्रोवज्रहस्तः।
मित्रायुवोनपूर्पतिंसुशिष्टौमध्यायुवउपशिक्षन्तियज्ञैः॥१०॥१४॥

विऽस्पर्धसः। नराम्। न। शंसैः। अस्माक। असत्। इन्द्रः।
वज्रऽहस्तः। मित्रऽयुवः। न। पूःऽपतिम्। सुऽशिष्टौ।
मध्यऽयुवः। उप। शिक्षन्ति। यज्ञैः॥ १०॥ १४॥

नरांनेतॄणांमध्येसस्पर्धान्नरान्यथाविस्पर्धसःकुर्वन्तिसखिभूताः तद्वद्वयमपीन्द्रंशंसैः स्तुतिभिः सखायोवयंतथाकुर्मः सचवज्रहस्तोवीरशिक्षणायसर्वदावज्रधारीन्द्रः अस्माक अस्माकमसत विस्पर्धमनुकूलोभवतु किञ्च मित्रायुवोन मित्रेच्छवः हितैषिणइव सुशिष्टौसुशासनेवर्तमानंपूर्पतिंपुरस्वामिनंयथाभिमतदानेनपूजयन्तितथामध्यायुवः अस्माकंश्रियांयशसांचमध्येवस्थितिंकामयमानाअध्वर्य्वादयोयज्ञैर्यज्ञसाधनैर्हविःस्तोत्रादिभिरुपशिक्षन्तिउपेत्ययजन्ते शिक्षतिर्दानकर्मा॥ १०॥

१०. जैसे मनुष्यों में प्रतिस्पर्द्धी व्यक्तियों को स्तुति द्वारा सवय किया जाता है वैसे ही हम भी इन्द्र को करेंगे। इन्द्र केवल हमारे ही होंगे। जैसे योग्य शासक नगरपति की हितैषी लोग पूजा करते हैं, वैसे ही हमारे बीच अवस्थानाभिलाषी अध्वर्यु लोग, हव्य आदि द्वारा, इन्द्र की पूजा करते हैं।

॥ इतिद्वितीयस्यचतुर्थेचतुर्दशोवर्गः॥१४॥

अथैकादशी—

यज्ञोहिष्मेन्द्रंकश्चिदृन्धञ्जुहुराणश्चिन्मनसापरियन्।
तीर्थेनाच्छातातृषाणमोकोदीर्घोनसिध्रमाकृणोत्यध्वा॥ ११॥

यज्ञः। हि। स्म। इन्द्रम्। कः। चित्। ऋन्धन्। जुहुराणः।
चित्। मनसा। परिऽयन्। तीर्थे। न। अच्छ। ततृषाणम्।
ओकः। दीर्घः। न। सिध्रम्। आ। कृणोति। अध्वा॥ ११॥

कश्चिदयज्ञोयज्ञवान् यज्ञानुष्ठायी इन्द्रंऋन्धन्वर्धयन्हिस्मभवतिइन्द्रंयज्ञेनवर्धयतीत्यर्थः जुहुराणश्चिवकुटिलगतिस्तुकश्चिवमनसाकेवलेनपरियन्परितोगच्छन्लौकिकविषयादिकंध्यायन् वर्तते यद्वा परिवर्जनार्थः वर्जयित्वागच्छन्नेदंप्राप्नोति तत्रदृष्टान्तः—तीर्थेप्रसिद्धे मार्गेअच्छआवर्तते यद्वा परिवर्जनार्थः वर्जयित्वागच्छन्नेदंप्राप्नोति तत्रदृष्टान्तः—तीर्थेप्रसिद्धे मार्गेअच्छआभिमुख्येनसमीपेवर्तमानमोकः पानीयादिकंसवनंततृषाणंपिपासायुक्तं यथा अविलंबेनप्रीणातिस-

यथातत्सवनआगच्छतीत्यर्थः तद्वद्यज्ञेनकश्चित्पुमानिन्द्रमभिगच्छतीति कुटिलस्यदृष्टान्तः—दीर्घोन वक्रत्वेनातिदूरोध्वामार्गइव सयथासिध्रंफलंपानीयादिरूपंफलार्थिनंवापुरुषंआकृणोति अर्वाक्करोति नीचैःकरोति वर्जयतीत्यर्थः तस्माद्यज्ञमार्गमजानानोवक्रोदूरेपरिभ्रमतिनेन्द्रंतर्पयतितद्विलक्षणस्तुवर्जयत्येव ॥ ११ ॥

११. उसी प्रकार यज्ञपरायण व्यक्ति यज्ञ-द्वारा इन्द्र की वृद्धि करता है और कुटिलगति व्यक्ति मन ही मन सदा चिन्ता-परायण रहता है, जिस प्रकार तीर्थ-मार्ग में सम्मुखस्थित जल तुरत लोगों को प्रसन्न करता और दीर्घ-पथ का जल तृषार्त व्यक्ति को निराश करता है।

मोषूणइन्द्रात्रपृत्सुदेवैरस्तिहिष्मांतेशुष्मिन्नवयाः ।
महश्चिद्यस्यमीढुषोयव्याहविष्मतोमरुतोवन्दतेगीः ॥ १२ ॥

मो इति । सु । नः । इन्द्र । अत्र । पृत्ऽसु । । देवैः । अस्ति ।
हि । स्म । ते । शुष्मिन् । अवऽयाः । महः । चित् । यस्य ।
मीढुषः । यव्या । हविष्मतः । मरुतः । वन्दते । गीः ॥ १२ ॥

हेइन्द्र अत्रपृत्सु एषूपस्थितेषुसङ्ग्रामेषुवृष्टयर्थंमेघजयेषुदेवैर्मरुदादिभिः सहनोस्मान्मोषुमैवात्याक्षीरितिशेषः मरुत्सहितोयुध्यस्वेत्यर्थःहेशुष्मिन्बलवन्निन्द्र अस्तिहिस्मते अस्तिहिस्मतवखलु तवकिमस्तीतिउच्यते अवयाः अवयजनं अवयुज्यपृथक्कृत्ययजनंहविर्भागोस्तिमरुद्भ्यः पृथगप्यस्तिहविर्भागः केवलंमरुद्भ्यएवदीयतेनास्मभ्यं अतः कथंयोत्स्यामीतिनमन्तव्यमित्यर्थः यद्वा अवयाः शत्रूणांवर्जनायगन्तावज्रोस्तितेकिञ्च हविष्मतः प्रदेयहविर्युक्तस्यमीढुषोहविः प्रदातुः यद्वैतत्पदद्वयंमरुतांविशेषणं यस्यममयव्याफलेनेन्द्रेणवासहमिश्रयन्तीगीः स्तुतिशस्त्रादिरूपावाक् महश्चित् महतोपिमीढुषःसेक्तृन् हविष्मतोस्मद्दत्तहविषातद्वतोमरुतोवंदतेस्तौति ॥ १२ ॥

१२. इन्द्र, युद्ध-वेला में मरुतों के साथ तुम हमें नहीं छोड़ना; क्योंकि हे बलवान् इन्द्र, तुम्हारे लिए यज्ञ का भाग स्वतंत्र है। हमारी फल-समन्वित स्तुति महान्, हविष्मान् और जलदाता मरुतों की वन्दना करती है।

एषस्तोमइन्द्रतुभ्यमस्मेएतेनगातुंहरिवोविदोनः ।
आनोववृत्याःसुवितायदेवविद्यामेषंवृजनंजीरदानुम् ॥ १३ ॥ १५ ॥

एषः । स्तोमः । इन्द्र । तुभ्यम् । अस्मे इति । एतेन । गातुम् ।
हरिऽवः । विदः । नः । आ । नः । ववृत्याः । सुवितार्य । देव ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १३ ॥ १५ ॥

अथत्रयोदश्यासूक्तादिमारभ्यकृतांस्तुतिंनिगमय्यफलंप्रार्थयते—हेइन्द्र अस्मेअस्मत्संबन्धीएषस्तोमः इदानींकारितप्रकारः स्तोत्रविशेषः तुभ्यंत्वदर्थं हेहरिवः हरिभ्यांतद्वन्निन्द्र एतेनस्तोत्रेणगमनेनवानोस्मदीयंगातुंदेवयजनमार्गंविदः विदस्व विद्धिवाच हेदेव सुविताय सुहितायशोभनगमनायवा नोस्मान्आववृत्याः आवर्तस्व अस्मद्यागंप्रत्यागच्छ विद्यामेत्यादिव्याख्यातम् ॥ १३ ॥

१३. इन्द्र, यह स्तोम तुम्हारा ही है। हरिवाहन, इस स्तुति-द्वारा तुम हमारा देव-पूजन-मार्ग जान लो और अनायास आने के लिए हमारे पास पधारो।

॥ इतिद्वितीयस्यचतुर्थेपञ्चदशोवर्गः ॥ १५ ॥

त्वंराजेतिदशर्चंदशमंसूक्तंआगस्त्यमैन्द्रंत्रैष्टुभं त्वंराजादशेत्यनुक्रान्तं पृष्ठ्यषळहेस्तोमवृद्धौस्तोमातिप्रशंसनार्थंहोत्रकैरेतच्छस्तव्यं ऐन्द्राणित्रैष्टुभान्यमरुच्छन्दान्यावपेरन्निति सूत्रम्।

त्वंराजेन्द्रयेचदेवारक्षानॄन्पाह्यसुरत्वमस्मान्।
त्वंसत्पतिर्मघवानस्तरुत्रस्त्वंसत्योवसवानःसहोदाः ॥ १ ॥

त्वम्। राजा। इन्द्र। ये। च। देवाः। रक्ष। नॄन्। पाहि। असुर। त्वम्। अस्मान्। त्वम्। सत्ऽपतिः। मघऽवा। नः। तरुत्रः। त्वम्। सत्यः। वसवानः। सहःऽदाः ॥ १ ॥

हेइन्द्र त्वंराजा अधिपतिः सर्वस्यजगतः किञ्च येदेवाः मरुदादयःसन्तितेषामपिविशेषेण अतोहेअसुर शत्रूणांनिरसितस्त्वंनॄनस्मान् कर्मनेतॄन्यजमानान्रक्षपालय विशेषतोस्मानपिपाहिरक्ष त्वंच सत्पतिः सतांसतःकर्मफलस्यवापातामघवाधनवान् नोस्माकंतरुत्रः तारयितापापात् किञ्च त्वंसत्यः अबाध्यःसत्यफलोवा वसवानः स्वतेजसासर्वंछादयन्वसूनिवाकुर्वन् स्तोतृभ्यः सहोदाः सहसोबलस्यदाताभवतिशेषः ॥ १ ॥

१. इन्द्र, तुम संसार और सारे देवों के राजा हो। तुम मनुष्यों की रक्षा करो। असुर, तुम हमारी रक्षा करो। असुर, तुम हमारी रक्षा करो। तुम साधुओं के पालक, धनवान् और हमारे उद्धार-कर्त्ता हो। तुम सत्य और बल-प्रदाता हो। तुमने अपने तेज से सबको ढक लिया है।

दनोविशइन्द्रमृध्रवाचःसप्तयत्पुरःशर्मशारदीर्दर्त्।
ऋणोरपोअनवद्यार्णायूनेवृत्रंपुरुकुत्सायरन्धीः ॥ २ ॥

दनः । विशः । इन्द्र । मृध्रऽवाचः । सप्त । यत् । पुरः । शर्म । शारदीः । दर्त् । ऋणोः । अपः । अनवद्य । अर्णाः । यूने । वृत्रम् । पुरुऽकुत्साय । रन्धीः ॥ २॥

हेइन्द्र त्वंवृत्रसंबंध्यसुराणांपुरभेदनसमयेमृध्रवाचः मर्षणवचनाः विशस्तदीयाःप्रजाः शर्म सुखंयथाभवति तथा दनः अदमयः दमेरिदंरूपं यद्वा वर्णव्यत्ययःनदःअनदःअशब्दयः असुरप्रजाः अतिभयंकरशब्दमकरोः कदेत्याह यत्यदाशारदीःप्रत्यग्राःयद्वैतत्संवत्सरः लक्षकःसंवत्सरपर्यन्तं दृढीकृताअपिसप्तपुरःएतत्संख्याकाः पुरीर्दर्द् अदारयः पुरुषव्यत्ययः दृणातेर्लङि छान्दसोविकरणस्यलुक् रात्सस्येतिनियमात्तलोपाभावः तथाकृत्वाहेअनवद्य अकातर यद्वा अनिंद्य हेइन्द्र अर्णाअरणशीलाःअपः तदीयदुर्गस्थान्युदकाश्रयाणि तटाकादीनिऋणोः अगमयः प्रावर्तयः भग्नान्यकरोः एवमुपद्रुत्यपुरुकुत्सायएतन्नाम्नेराज्ञेयूनेनित्यतरुणायतदर्थं वृत्रमेतन्नामकमसुरंरन्धीः असाधयःअहनः अयमैतिहासिकपक्षः निरुक्तरूढ्यातु हेइन्द्रमृध्रवाचोविशःमर्षणध्वनियुक्ताःवृष्टिरूपाःप्रजाःदनःअदमयःअशब्दयोवाअवर्षयइत्यर्थः कदा यत् यदासप्तपुरःशारदीर्दर्द् सर्पणस्वभावान् प्रत्यग्रान् वृष्ट्याजगत्पूरकान् मेघानदारयः तदेत्यर्थः तथाकृत्वा हेअनवद्य अर्णाअरणस्वभावाअपःऋणोःअगमयः प्रावर्तयःकुल्यादिरूपेण अनन्तरंयूने, पुरुकुत्सायवृत्रंमुख्यंमेघंरन्धीःअसाधयःअहनःअयमर्थः त्वंहत्यदिन्द्रसप्तयुध्यन्नित्यादिमन्त्रान्तरेषुप्रसिद्धः[1] । यास्कस्त्वेवंव्याख्यातवान्—दनोदानमनसोमनुष्यानिन्द्रमृदुवाचःकुर्विति[2] ॥ २ ॥

२. इन्द्र, जिस समय तुमने संवत्सर-पर्यन्त दृढ़ीकृत सात पुरियों को भिन्न किया था, उस समय प्रजाओं को संयत-वाक्य करके अनायास दमन किया था। अनवद्य इन्द्र, तुमने गतिशील जल दिया था। तुमने तरुण-वयस्क पुरुकुत्स राजा के लिए वृत्र का वध किया था।

अथतृतीया—

अजात्वंइन्द्रशूरपत्नीर्द्यांचयेभिःपुरुहूतनूनम् ।
रक्षोअग्निमशुषंतूर्वयाणंसिंहोनदमेअपांसिवस्तोः ॥ ३ ॥

अजः । त्वम् । इन्द्र । शूरऽपत्नीः । द्याम् । च । येभिः । पुरुऽहूत । नूनम् । रक्षो इति । अग्निम् । अशुषम् । तूर्वयाणम् । सिंहः । न । दमे । अपांसि । वस्तोः ॥ ३ ॥

---

१ ऋ० सं० २. ३. ११. । २ नि० ६. ३१. ।

हेइन्द्र शूरपत्नीः शूरैरक्षोभिः पालिताः वृतः वर्तन्तआस्वितिवृतः असुरपुरीः यद्वा शूराय-जमानास्तैः पालिताः वृतोवेदिभूमीः अज गच्छ जेतुं तथा कृत्वाद्यांचनूनमवश्यमज किन्त्वमेक-एव न हेपुरुहूत बहुभिर्बहुधावा आहूतेन्द्र येभिर्मरुदादिभिरनुगतोसितैःसहितःसन् तथाकृत्वा-अशुषंआशोषयितारं अशान्तंवा तूर्वयाणंतूर्णगमनमग्निंवैद्युतंहोमाधारंवाग्निंरक्षोरक्षस्वैव किमर्थं रक्षणमित्युच्यते दमेगृहेअपांसिकर्माणिकुर्वन्वस्तोः वस्तुं यद्वा वासयितुंकारयितुमित्यर्थः यज्ञ-द्विट्सु हतेष्वग्नौसुस्थिरेसति यागाद्यनुष्ठानपरःस्थास्यामीत्यर्थः रक्षणेदृष्टान्तः—सिंहोनसिंहइव सयथा स्वाश्रयभूतंवनंगजाद्युपद्रवपरिहारेणरक्षतितद्वत् असुरपुरभङ्गगमनेवादृष्टान्तःसिंहोय-थानिर्भयोविरोधिमृगान् हन्तुंधावतितद्वत् ॥ ३ ॥

३. इन्द्र, तुम राक्षसों की सारी नगरियों को जाते और वहाँ से, हे पुरुहूत, अनुचरों के साथ स्वर्ग में जाते हो। वहाँ अशोषक और शीघ्रकारी अग्नि को सिंह की तरह बचाते हो जिससे वह अपने गृह में अपना कर्त्तव्य पूरा कर सके।

शेषन्नुतइन्द्रसस्मिन्योनौप्रशस्तयेपवीरवस्यमह्ना ।
सृजदर्णांस्यवयद्युधागास्तिष्ठद्धरीधृषतामृष्टवाजान् ॥ ४ ॥

शेषन् । नु । ते । इन्द्र । सस्मिन् । योनौ । प्रऽशस्तये । पवीरवस्य ।
मह्ना । सृजत् । अर्णांसि । अव । यत् । युधा । गाः ।
तिष्ठत् । हरी इति । धृषता । मृष्ट । वाजान् ॥ ४ ॥

हेइन्द्र तेशत्रवः सस्मिन्सर्वस्मिन्समानेवायोनौस्वकीयेस्थानेअन्तरिक्षेवा योनिरन्तरिक्षं नुक्षिप्रंशेषन् शेरतां शीङोलेट्यडागमः व्यत्ययेनपरस्मैपदं सिब्बहुलमितिसिप् किमर्थं प्रशस्तये प्रशंसनाय त्वत्स्तुतयेत्वन्महिमाख्यापनायेत्यर्थः किंसेवनादिसाधनेन नेत्याह पवीरवस्यकुलिश-स्यकुलिशशब्दस्यवामह्नामहिम्ना त्वद्वज्रप्रहारेणहतामेघाः शत्रवोवातत्रैवशेरतेनिपतन्ति नपलाय-न्तइत्यर्थः किञ्च यत्यदायुधाप्रहरणसाधनेनायुधेनयुद्धेनवा गाः गच्छति तदार्णांस्युदकानि सृजः अवसृजः अवाङ्मुखमपातयः पुरुषव्यत्ययः तदर्थंहरीअश्वौतिष्ठत् अध्यतिष्ठः अत्रापिपुरु-षव्यत्ययः यद्वा यदाहरीअधितिष्ठसितदाअवसृजः अथैवंकृत्वावाजानन्नानिसस्यादिलक्षणा-नि धृषताधर्षकेणसामर्थ्येन मृष्टशोधय प्रवर्धयेत्यर्थः ॥ ४ ॥

४. इन्द्र, तुम्हारे शत्रु या मेघ वज्र की महिमा से तुम्हारी प्रशंसा करते हुए अपने जन्मस्थान में शीघ्र शयन करें। जब तुम अस्त्र लेकर जाते हो, तब नीचे जल गिराते और हरियों के ऊपर चढ़ते हो। अपनी शक्ति से तुम शस्य आदि बढ़ाते हो।

वहकुत्समिन्द्रयस्मिञ्चाकन्त्स्यूमन्यूऋज्रावातस्याश्वा ।
२ प्रसूरश्चक्रंवृहतादभीकेभिस्पृधोयासिषद्वज्रबाहुः ॥ ५ ॥ १६ ॥

वहं । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । स्यूमन्यू इति ।
ऋज्रा । वातस्य । अश्वा । प्र । सूरः । चक्रम् । वृहतात् । अभीके ।
अभि । स्पृधः । यासिषत् । वज्रऽबाहुः ॥ ५ ॥ ३६ ॥

हेइन्द्र कुत्संएतन्नामानमृषिंप्राप्तंस्यूमन्यू स्यूमकमितिसुखनाम तदिच्छन्तौसततगामिनौवाऋज्राऋजुगामिनौवातस्यवायोः समानवेगौ अश्वा तदीयावश्वौवहप्रस्थापय यस्मिन्हविषि निमित्तभूतेसतिकुत्संचाकन्कामयसेतर्पयसेवाहविरादिकंतदर्थंसूरः प्रेरकः सूर्यः चक्रंस्वमण्डलंस्वरथचक्रंवाअभीकेआसन्नदेशेप्रवृहतात् ऊर्ध्वंगमयतु प्रकाशयतु अथपरोक्षेणाह—वज्रबाहुरयमिन्द्रः स्पृधः सङ्ग्रामंकुर्वतः शत्रूनभियासिषत्अभियातु ॥ ५ ॥

५. इन्द्र, तुम जिस यज्ञ में कुत्स ऋषि की कामना करते हो, उसमें अपने वशीभूत, सरलगामी और वायु के समान वेगशाली अश्वों को परिचालित करते हो। उसके लिए सूर्य रथचक्र को पास ले आयें और वज्रबाहु इन्द्र संग्रामकर्त्ता शत्रुओं के सामने आयें।

जघन्वाँइन्द्रमित्रेरूञ्चोदप्रंवृद्धोहरिवोअदाशून् ।
प्रयेपश्यन्नर्यमणंसचायोस्त्वयाशूर्तावहमानाअपत्यम् ॥ ६ ॥
जघन्वान् । इन्द्र । मित्रेरून् । चोदऽप्रवृद्धः । हरिऽवः । अदाशून् ।
प्र । ये । पश्यन् । अर्यमणम् । सचा । आयोः । त्वया । शूर्ताः ।
वहमानाः । अपत्यम् ॥ ६ ॥

हेइन्द्र हरिवः हरिभ्यांतद्वन्स्त्वंचोदप्रवृद्धःचोदनैःस्तोत्रैःप्रवृद्धःसन् अदाशून् अदातॄन् मित्रेरून्मित्राणांयजमानानांईरयितॄन्बाधकान्तद्वैरिणांमित्रत्वंगच्छतोवाजघन्वान्हतवानसि किञ्च येअर्यमणंदातारंत्वात्वांप्रपश्यन्पश्यन्ति तेनराः आयोर्मनुष्यस्याध्वर्य्वादेः हविर्लक्षणान्नस्यवा सचासहशूर्ताः क्षिप्राः हविःप्रदानेत्वरमाणाः त्वयाअपत्यंकुलस्यपालयितारंपुत्रंवहमानायेसन्ति तेमपश्यन् यद्वा येअर्यमणंत्वांपश्यन्तितेएवंभवन्ति यद्वा येनराअर्यमणंयंकिंचिद्दातारं पश्यन् पश्यन्तः त्वामयजन्त अर्योमनुष्यस्यसचासहायभूताः त्वयाशूर्ताः क्षिप्रावर्जिताः अपत्यंपुत्रंवहमानायेसन्ति तानजघन्वानभवेत्यर्थः ॥ ६ ॥

६. हरिवाहन इन्द्र, तुमने, स्तोत्र-द्वारा प्रवृद्ध होकर, दान-रहित और यजमानों के विघ्नकारी लोगों का विनाश किया है। जिन्होंने तुम्हें आश्रयदाता रूप से देखा है और जो हव्य प्रदान के लिए मिलित हुए हैं, वे तुमसे संतान प्राप्त करते हैं।

अथसप्तमी–

रपत्कविरिन्द्रार्कसातौक्षांदासायोपबर्हणींकः ।
करत्तिस्रोमघवादानुचित्रानिदुर्योणेकुयवाचंमृधिश्रेन ॥ ७ ॥

रपत् । कविः । इन्द्र । अर्कऽसातौ । क्षाम् । दासाय । उपऽबर्हणीम् ।
करिति कः । करत् । तिस्रः । मघऽवा । दाऽतुऽचित्राः । नि ।
दुर्योणे । कुयवाचम् । मृधि । श्रेत् ॥ ७ ॥

हेइन्द्र त्वांकविःक्रान्तदर्शनूचानोवाहोतार्कसातौ अर्चनीयस्यान्नस्यलाभेनिमित्तभूतेसति रपत्स्तौति यद्वा एतन्नामाऋषिःरपनअस्तौत अन्नार्थंतस्यातिप्रभूतमन्नंप्रादाइत्यर्थः तथाच दासा-यप्राण्युपक्षपयित्रेअसुराय क्षांभूमिंउपबर्हणींशय्यांकःअकरोः हत्वाभूमावपातयइत्यर्थः करो-तेर्लुङि मन्त्रेघसेतिच्लेर्लुक् अथपरोक्षकृतः मघवाधनवानयमिन्द्रःतिस्रोभूमीः दार्शिकपाशुक-सोमिकरूपाभूमीःक्षित्यन्तरिक्षद्युरूपावाभूमीर्दानुचित्राः दानेनदेयैर्धनैर्वाचायनीयाःकरत्करो-ति यद्वा तिस्रःअयोरजतहिरण्यमयाःपुरीर्दानुचित्राः खण्डनेनचित्राअकरोत् तथादुर्योणेदुष्टयो-नौस्थानेएतन्नामकस्यराज्ञःप्रीत्यर्थंवाकुयवाचंकुत्सितंशब्दयन्तं एतन्नामानमसुरंमृधिसङ्ग्रामेनिः श्रेत्हिंसितवान् ॥ ७ ॥

७. इन्द्र, पूजनीय अन्न की प्राप्ति के लिए कवि तुम्हारी स्तुति करते हैं। तुमने पृथिवी को दास की शय्या बना दिया है। इन्द्र ने तीन भूमियों के दान-द्वारा विचित्र कार्य किया है। एवं दुर्योणि राजा के लिए कुयवाच का वध किया है।

अथाष्टमी–

सनाताइन्द्रनव्याआगुःसहोनभोविरणायपूर्वीः ।
भिनत्पुरोनभिदोअदेवीर्ननमोवधरदेवस्यपीयोः ॥ ८ ॥

सना । ता । ते । इन्द्र । नव्याः । आ । अगुः । सहः । नभः ।
अविऽरणाय । पूर्वीः । भिनत् । पुरः । न । भिदः ।
अदेवीः । ननमः । वधः । अदेवस्य । पीयोः ॥ ८ ॥

हेइन्द्र तेतवसंबन्धीनि सना सदातनानिनित्यानि ता तानि शौर्याणिनव्याःनवतराःइदा-नींतनाऋषयः आगुःआगच्छन्ति स्तुतिव्याजेनप्राप्नुवन्तीत्यर्थः कानितानीतिउच्यते–पूर्वीर्बह्वी-र्नभोहिंसाः नभेर्हिंसार्थात्क्विप् तदन्तस्येदंरूपं ताहिंसाः अविरणायअविगतरणायसङ्ग्रामनाशनाय

सहः अभ्यभवः तदर्थंभिदः भेत्रीर्घातिकाअदेवीः आसुरीः पुरोन पुरीःअपि भिनत्विदारितवा-नसि पुरुषव्यत्ययः नशब्दश्चार्थे तथा अदेवस्यअस्तुत्यस्यपीयोः हिंसकस्यासुरस्यवधः वज्रं ननमः अनमयः अनुकूलमकरोः यद्वा हेइन्द्र सनानित्यंतत्तत्कालेतेतवसत्र्चन्धिन्यः ता तानि लि-ङ्गव्यत्ययः ताःपूर्वीःपुरातन्यः आपः नव्याः नूतनाः स्तुत्याः सत्यःआगुः आगच्छन्ति किमर्थं अविरणाय अविरमणायप्राणिनामविनाशाय तदर्थंनभः हिंसकान्बन्धकान्वामेघान्सहःमर्षणंअ-करोः किञ्च अदेवीः पुरःअवर्षणेनादेवनशीलानउदकपुटबन्धानभिनत भिन्नानकरोः तथाअदे-वस्यअदेवनशीलस्यपीयोः प्रतिकूलस्यवृत्रस्यवधर्वज्रंननमः अनमयः ॥ ८ ॥

८. इन्द्र, नये ऋषिगण तुम्हारे सनातन प्रसिद्ध वीर कर्म की स्तुति करते हैं। तुमने अनेक हिंसकों को, संग्राम-निवारण के लिए, विनष्ट किया है। तुमने देवशून्य विपक्ष नगरों को भिन्न किया है और देवरहित शत्रु का अस्त्र नत किया है।

त्वंधुनि॑रिन्द्र॒धुनि॑मतीर्ऋ॒णोर॒पः सी॒रान स्र॒वन्तीः ।
प्रयत्स॑मु॒द्रमति॑शूर॒पर्षि॑पा॒रया॑तु॒र्वशं॒यदुं॑स्व॒स्ति ॥ ९ ॥

त्वम् । धुनिः॑ । इन्द्र॒ । धुनि॑ऽमतीः । ऋ॒णोः॑ । अ॒पः । सी॒राः ।
न । स्र॒वन्तीः॑ । प्र । यत् । स॒मु॒द्रम् । अति॑ । शू॒र॒ । पर्षि॑ । पा॒रय॑ ।
तु॒र्वश॑म् । यदु॑म् । स्व॒स्ति ॥ ९ ॥

हेइन्द्र त्वंधुनिः कम्पयिताशत्रूणामसि अतोधुनिमतीः कम्पनोपेततरङ्गवतीः अथवा धुनिर्नामजलप्रतिरोधकार्यसुरः सएवप्रतिबन्धकतयायासां तादृशीरपःऋणोः अगमयःभूमाव-पातयः तत्रदृष्टान्तः—स्रवन्तीःप्रवहन्तीःसीराःन नदीनामैतत् सरणवतीर्नदीरिव तद्वत्सन्तताइत्यर्थः एवंकृत्वा हेशूर यत् यदासमुद्रमतिपर्षि अतिक्रम्यपूरयस्युदकं तदानीं तुर्वशंयदुं उभावपिराजर्षी स्वस्ति अविनाशंपारय अपालयःसंपूर्णजलवर्षणेन तथाचमन्त्रान्तरं—त्वमपोयदवेतुर्वशायारम-यइति ॥ ९ ॥

९. इन्द्र, तुम शत्रुओं में हड़कम्प पैदा करनेवाले हो। इसी लिए तुम प्रवहमाना सीरा नाम की नदी की तरह तरंग-युक्त जल पृथिवी पर गिराते हो। हे शूर, जिस समय तुम समुद्र को परिपूर्ण करते हो, उस समय तुमने तुर्वसु और यदु के मंगल के लिए उनका पालन किया है।

त्वम॒स्माक॑मिन्द्र॒वि॒श्वध॑स्याअ॒वृक॑तमोन॒रांनृ॑पा॒ता ।
सनो॒विश्वा॑सांस्पृ॒धांस॑हो॒दावि॒द्यामे॒षंवृ॒जनं॒जीरदा॑नुम् ॥ १० ॥ १७ ॥

१ ऋ० सं० ४. १. ३०.

त्वम् । अस्माकंम् । इन्द्र । विश्वध । स्याः । अवृकऽतंमः ।
नराम् । नृऽपाता । सः । नः । विश्वासाम् । स्पृधाम् । सहःऽदाः ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १० ॥ १७ ॥

हेइन्द्र त्वमस्माकंविश्वध विश्वस्मिन्नपिकालेविश्वप्रकारैर्वाअवृकतमः अहिंसकतमः यद्वा दातृतमइत्यर्थः स्याः भव तथानरांनृपाताअस्मदीयानांपुत्रभृत्यादिरूपाणांबहूनांमनुष्याणां सर्वदारक्षकोभव अपरोनृशब्दोनुवादः किञ्च सत्वंविश्वासांस्पृधांसर्वासांस्पर्धानिमित्तानांअस्मत्सेनानांसहोदाः तासामर्थायबलस्यदाताभव विद्यामेतिगतम् ॥ १० ॥

१०. इन्द्र, तुम सदा हमारे रक्षक-श्रेष्ठ बनो और प्रजाओं का पालन करो। हमारे सैन्यों को बल दो, जिससे हम अन्न, बल और दीर्घ आयु प्राप्त कर सकें।

॥ इतिद्वितीयस्यचतुर्थेसप्तदशोवर्गः ॥ १७ ॥

मत्स्यपायीतिषळृचमेकादशंसूक्तंआगस्त्यमैन्द्रं आद्यास्कन्धोग्रीवीबृहती द्वितीयपादस्य द्वादशाक्षरत्वात् इतरेषांत्रयाणामष्टाक्षरत्वाच्च द्वितीयश्चेन्न्यंकुसारिण्युरोबृहतीवास्कन्धोग्रीवीवेत्युक्तलक्षणसद्भावात् अन्त्यात्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषया आनुष्टुभन्त्वितिविशेषवचनेनापोहितत्वादनुष्टुभः मत्सिषळानुष्टुबंतुत्रिष्टुबन्तंत्वाद्यास्कन्धोग्रीवीत्यनुक्रान्तम् । द्वितीयेस्वरसाम्नि आद्यस्तृचःस्तोत्रियः अभिजिद्बृहत्पृष्ठइतिखण्डेसूत्रितम्—मत्स्यपायितेमहएमेनंप्रत्येतनेति ।

मत्स्यपायितेमहःपात्रस्येवहरिवोमत्सरोमदः ।
वृषातेवृष्णइन्दुर्वाजीसहस्रसातमः ॥ १ ॥

मत्सिं । अपायि । ते । महः । पात्रस्यऽइव । हरिऽवः । मत्सरः ।
मदः । वृषा । ते । वृष्णे । इन्दुः । वाजी । सहस्रऽसातमः ॥ १ ॥

हेहरिवः हरिभ्यांतद्वन्निन्द्र महोमहान्पूज्योयंसोमः पात्रस्येवतत्पात्रेणेवसोमपात्रेणयथाधार्यते सोमः तत्सदृशेनतेत्वया तृतीयार्थेषष्ठी यद्वा पात्रस्येवतेतवस्वभूतोमहोमहान्सोमइविवायोजना अपायि पीयते आशंसायाविवक्षितत्वाद्भूतवत्प्रयोगः यतः पिबसिअतोमत्सि माद्यसिमादयस्ववापात्रेयथासोमःपूर्यतेतथात्यधिकंपिब पीत्वाचमादयस्वेत्यर्थः किञ्च वृष्णेतेअभिमतवर्षित्रेतुभ्यं चतुर्थ्यर्थेषष्ठीमत्सरोमदसाधनःमदस्तर्पयिता वृषावर्षिता इन्दुःक्लेदयिता आह्लादकारीत्यर्थः वाजी अन्नवान् अन्नवत्तृप्तिसद्भावादन्नवानित्युच्यते सहस्रसातमः अपरिमितदातृतमः सहस्रपुरुषसंभजनपर्याप्तशक्त्यतिशयोवा एवंमहानुभावः सोमः संपादितः तंपिबेत्यर्थः ॥ १ ॥

१. हरिवाहन इन्द्र, हर्षकर, अभीष्टवर्षी, आह्लादकारी, अन्नवान्, असीम दानवाले और महानुभाव सोम जिस प्रकार पात्र में स्थापित किया जाता है, उसी प्रकार तुम भी होकर और पान कर धारण करो और अतीव प्रसन्न बनो।

अथद्वितीया—

आनस्तेगन्तुमत्सरोवृषामदोवरेण्यः ।
सहावाँइन्द्रसानसिःपृतनाषाळमर्त्यः ॥ २ ॥

आ । नः । ते । गन्तु । मत्सरः । वृषा । मदः । वरेण्यः ।
सहऽवान् । इन्द्र । सानसिः । पृतनाषाट् । अमर्त्यः ॥ २ ॥

हेइन्द्र तेत्वांनोस्मदीयः मत्सरोमर्षणसाधनः सोमआगन्तु आगच्छतु कीदृशोयं वृषावर्षकः मदस्तर्पयितावरेण्योवरणीयः सहावानसहायवानसहसाबलेनतद्वान्वा सानसिः संभजनीयः पृतनाषाट्शत्रुसेनायाअभिभविता अमर्त्यः अविनाशी ईदृशःसोमस्त्वामागच्छतु यद्वा उत्तरार्धइन्द्रपरतयाव्याख्येयः हेइन्द्र सहवानअस्मदत्तसोमसहायवान्सन्बलवान्वा सानसिःअस्माभिः संभजनीयः पृतनाषाट् अमर्त्यश्चभवसि ॥ २ ॥

२. इन्द्र, हर्षंकर, अभीष्टवर्षी, तर्पयिता, वरणीय, सहायवान्, शत्रु-सैन्य-विनाशक और अविनाशी सोम तुम्हें प्राप्त हो।

अथतृतीया—

त्वंहिशूरःसनितांचोदयोमनुषोरथम् ।
सहावान्दस्युमव्रतमोषःपात्रंनशोचिषा ॥ ३ ॥

त्वम् । हि । शूरः । सनिता । चोदयः । मनुषः । रथम् । सहऽवान् ।
दस्युम् । अव्रतम् । ओषः । पात्रम् । न । शोचिषा ॥ ३ ॥

हेइन्द्र त्वंहित्वंखलुशूरः शौर्योपेतः सनितादातासि अतोमनुषोमनुष्यस्यमेरथंरंहणस्वभावंस्यन्दनंमनोरथंवास्वर्गगमनसाधनंयज्ञाख्यंरथंवाचोदयः प्रेरय किञ्च त्वंसहावान्सोमसहायवान्बलवान्वाभूत्वा दस्युमुपक्षपयितारमव्रतं अकर्माणं अननुष्ठायिनंओषः दह किमिव शोचिषादीप्त्या ज्वालयाग्निः पात्रंन स्वाधारंपात्रविशेषमिव यागाधिकारीसन्योनयजतेतंदहेत्यर्थः ॥ ३ ॥

३. इन्द्र, तुम शूर और दाता हो, मैं मनुष्य हूँ। मेरा मनोरथ पूर्ण करो। तुम सहायवान् हो। जैसे अग्नि अपनी ज्वाला से पात्र को जलाता है, वैसे ही तुम व्रत-रहित दस्यु को जलाओ।

मुषायसूर्यंकवेचक्रमीशानओजसा ।
वहशुष्णायवधंकुत्संवातस्याश्वैः ॥ ४ ॥

मुषाय । सूर्यम् । कवे । चक्रम् । ईशानः । ओजसा । वह ।
शुष्णाय । वधम् । कुत्सम् । वातस्य । अश्वैः ॥ ४ ॥

हेकवे क्रान्तदर्शिन्निन्द्र ईशानःसमर्थःसन्सूर्यंसूर्यस्य सुपांसुपोभवन्तीतिषष्ठ्येकवचनस्यद्वितीयैकवचनादेशः तत्संबन्धिचक्रमेकं ओजसाबलेनसामर्थ्यातिशयेनमुषाय अमुष्णाः छन्दसिशायजपीतिशायजादेशः पूर्वंसूर्यरथस्यचक्रद्वयमासीत् एकमिन्द्रोमुमोषेतीतिहासः । तथाचमन्त्रान्तरं—प्रान्यच्चक्रमवृहः सूर्यस्यकुत्सायान्यदिति । किञ्च शुष्णायएतन्नामकायासुरायतद्वधार्थं द्वितीयार्थेवाचतुर्थी शुष्णंहन्तुमित्यर्थः कुत्संकर्तनसाधनंवधंवज्रं वातस्य वायोरश्वैः वायुवेगैर्वाश्वैर्युक्तःसन् वह अवहः शुष्णंहन्तुंवज्रमधारयः यद्वा शुष्णवधायवज्रमवहः तंचहत्वा तदीयैर्वायुवेगैरश्वैः तदुपलक्षितैः तदीयैर्धनैः कुत्संमहर्षिंअगमः शुष्णासुरधनंकुत्सायादाइत्यर्थः तथाचान्यत्र त्वंकुत्संशुष्णहत्येष्वाविथ कुत्सायशुष्णमशुषमित्यादीनि॥४॥

४. मेधावी इन्द्र, तुम ईश्वर हो। अपनी सामर्थ्य से तुमने सूर्य के दो चक्रों में से एक का हरण कर लिया। शुष्ण का वध करने के लिए कर्त्तन-साधन वज्र लेकर वायु के समान वेगवाले अश्व के साथ आओ।

अथपञ्चमी—

शुष्मिन्तमोहितेमदोद्युम्निन्तमउतक्रतुः।
वृत्रघ्नावरिवोविदामंसीष्ठाअश्वसातमः ॥ ५ ॥

शुष्मिन्ऽतमः । हि । ते । मदः । द्युम्निन्ऽतमः । उत । क्रतुः ।
वृत्रऽघ्ना । वरिवःऽविदा । मंसीष्ठाः । अश्वऽसातमः ॥ ५ ॥

हेइन्द्र तेतवमदः सोमपानजनितः शुष्मिन्तमः बलवत्तमः हिप्रसिद्धम् उतअपिचतेक्रतुः कर्मव्यापारोस्मदर्थोद्युम्निन्तमः अतिशयेनान्नवान् यशोवान्वाउभयत्रायस्मयादीनिछन्दसीतिभसंज्ञायाबाधितत्वात् नलोपः हेइन्द्र अश्वसातमः अश्वोपलक्षितबहुधनदाः त्वंवृत्रघ्ना वृत्रघातिनोवरिवोविदाधनस्यपरिचरणस्यवावेदयितारौलंभयितारौतवमदक्रतूमंसीष्ठाः अनुज्ञातवानसि शत्रुघातिनौधनदातारौचस्यातामित्यनुग्रहमकरोरित्यर्थः ॥ ५ ॥

५. इन्द्र, तुम्हारी प्रसन्नता सर्वापेक्षा बल-संयुक्त है। तुम्हारा यज्ञ सर्वापेक्षा अन्नवान् है। हे अनेक-अश्व-दाता इन्द्र, अपने वृत्रघाती और धनदायी तथा क्रतु का समर्थन करो।

अथषष्ठी—

यथापूर्वेभ्योजरितृभ्यइन्द्रमयइवापोनतृष्यतेबभूथ।
तामनुत्वानिविदंजोहवीमिविद्यामेषंवृजनंजीरदानुम् ॥६॥१८॥

यथा। पूर्वेभ्यः। जरितृऽभ्यः। इन्द्र। मयःऽइव। आपः। न।
तृष्यते। बभूथ। ताम्। अनु। त्वा। निऽविदम्। जोहवीमि।
विद्याम। इषम्। वृजनम्। जीरऽदानुम् ॥ ६ ॥ १८ ॥

हेइन्द्र पूर्वेभ्योजरितृभ्यः पुरातनेभ्यः स्तोतृभ्योमयइवबभूथ मयः सुखंसुखस्वरूपमिवाभवः तद्वत्स्तोतृभ्योस्मभ्यं सुखस्वरूपोभव तत्रदृष्टान्तः—तृष्यतेआपोनतृषार्तस्योदकानियथासुखकराणीतितद्वत् तस्मात् तांनिविदंत्वत्प्रीतिकरींप्रसिद्धां स्तुतिंत्वातुभ्यंअनुजोहवीमिपुनःपुनःकरोमि यद्वा तांनिविदंअनु तृतीयार्थेइत्यनोःकर्मप्रवचनीयत्वं तयास्तुत्यात्वांजोहवीमिपुनःपुनराह्वयामि विद्यामेतिव्याख्यातम् ॥ ६ ॥

६. इन्द्र, तुम पुराने स्तोताओं के प्रति, तृषार्त्त के पास जल की तरह हुए थे; इसलिए हम बार-बार तुम्हारी स्तुति करते हैं, जिससे अन्न, बल और दीर्घायु प्राप्त करें।

मत्सिनइतिषळृचंद्वादशंसूक्तं आगस्त्यमैन्द्रमानुष्टुभं पूर्वत्रतुशब्दात्त्रिष्टुबन्तंत्वित्युक्तत्वात् अन्त्यात्रिष्टुप् मत्सिनइत्यनुक्रान्तम् विशेषविनियोगोलैङ्गिकः।

मत्सिनोवस्यइष्टयइन्द्रमिन्दोवृषाविश।
ऋघायमाणइन्वसिशत्रुमन्तिनविन्दसि ॥ १ ॥

मत्सि। नः। वस्यःऽइष्टये। इन्द्रम्। इन्दो इति। वृषा। आ। विश।
ऋघायमाणः। इन्वसि। शत्रुम्। अन्ति। न। विन्दसि ॥ १ ॥

हेइन्दो क्लेदयितः सोम त्वंनोवस्यइष्टये वसीयसोधनस्यप्राप्तयेउक्षणाययागायवाइन्द्रंमत्सिमादयस्व तदर्थंवृषावर्षिताकामानां त्वमिन्द्रं आविश अथतथापीतःसन्नृघायमाणः शत्रून्हिंसयन्इन्वसिव्यामोषि अतः अन्तिअन्तिकेशत्रुंनविन्दसिनलभसे यतः शत्रवः त्वत्सामर्थ्येनपलायिताः अतः नविन्दसि यद्वा उत्तरार्धइन्द्रपरतयाव्याख्येयः हेइन्द्र त्वंतं सोमंपीत्वाऋघायमाणःसन् इन्वसि अन्तिकेशत्रुंनविन्दसि ॥ १ ॥

१. हे सोम, धन-लाभ के लिए इन्द्र को आनन्वित करो। अभीष्टवर्षी इन्द्र के बीच प्रवेश करो। प्रसन्न होकर शत्रुओं का विनाश करते हुए क्रमशः व्याप्त होते हो; इसलिए किसी शत्रु को पास में नहीं आने देते।

अथद्वितीया—

तस्मिन्नावेशयागिरोयएकश्चर्षणीनाम् ।
अनुस्वधायमुप्यतेयवंनचर्कृषद्वृषा ॥ २ ॥

तस्मिन् । आ । वेशय । गिरः । यः । एकः । चर्षणीनाम् ।
अनु । स्वधा । यम् । उप्यते । यवम् । न । चर्कृषत् । वृषा ॥ २ ॥

हेअन्तरात्मन् होतर्वा तस्मिन्प्रसिद्धे इन्द्रे गिरः स्तुतिरूपावाचः आवेशयस्थापय तंस्तुहीत्यर्थः यइन्द्रश्चर्षणीनां ज्ञानवतांमनुष्याणांएकः एकएवस्थानीयः यमनुयमेवेन्द्रमनु स्वधाहविर्लक्षणमन्नमुप्यते दीयतइत्यर्थः सचेन्द्रोवृषावर्षकःसन् यवंन यवमिव पक्वंयवंयथाचर्कृषत् क्रमेणाददतेकर्षकाःतद्वदादत्ते यद्वायंअनुस्वधाअन्नसाधनंव्रीह्यादिकंउप्यतेभूमौ यस्येन्द्रस्यवृष्टिरूपमनुग्रहमपेक्ष्योप्यतइत्यर्थः सचवृषावृष्टेर्वर्षितासइन्द्रोयवंन यवमिव सर्वबीजमपिचर्कृषत् पुनःपुनःकरोतिअङ्कुरयति हविःसाधनत्वप्राशस्त्यमपेक्ष्ययवशब्दःप्रयुक्तः एवंमहानुभावेइन्द्रे गिरआवेशयेति ॥ २ ॥

२. इन्द्र, मनुष्यों के अद्वितीय अधीश्वर हैं। वे यथारीति यव (जौ) की तरह हमारा अभीष्ट सार्थक करते हैं।

अथतृतीया—

यस्यविश्वानिहस्तयोःपञ्चक्षितीनांवसु ।
स्पाशयस्वयोअस्मध्रुग्दिव्येवाशनिर्जहि ॥ ३ ॥

यस्य । विश्वानि । हस्तयोः । पञ्च । क्षितीनाम् । वसु । स्पाशयस्व ।
यः । अस्मऽध्रुक् । दिव्याऽइव । अशनिः । जहि ॥ ३ ॥

यस्येन्द्रस्यहस्तयोः पञ्चक्षितीनां क्षियन्तिनिवसन्तिगच्छन्तिवाक्षितयोमनुष्याः पञ्चानां मनुष्याणांप्रीणयितॄणिविश्वानिसर्वाणि वसूवसूनि धनानि धृतानिभवन्ति देवामनुष्याः पितरःपशवःपक्षिणश्चेतिपञ्चजनाः चत्वारोवर्णानिषादपञ्चमाःपञ्चजनाइत्यन्ये हेताहशेन्द्र त्वंस्पाशयस्व बाधयस्व योऽस्मध्रुक् अस्मभ्यंद्रुह्यतितं केनप्रकारेणेतिसउच्यते दिव्यादिविभवा अशनिरिव अशनिर्भूत्वास्मद्द्वेष्टॄन्जहि ॥ ३ ॥

३. जिन इन्द्र के हाथों में पंच क्षिति अर्थात् ब्राह्मणादि चार वर्ण और निषाद का सर्वप्रकार अन्न है, वही इन्द्र, जो हमारा द्रोह करता है, उसे दिव्य वज्र की तरह विनष्ट करें।

अथचतुर्थी—

असुन्वन्तंसमंजहिदूणाशंयोनतेमयः ।
अस्मभ्यमस्यवेदनंदद्धिसूरिश्चिदोहते ॥ ४ ॥

असुन्वन्तम् । समम् । जहि । दुःऽनशम् । यः । न । ते । मयः ।
अस्मभ्यम् । अस्य । वेदनम् । दद्धि । सूरिः । चित् । ओहते ॥ ४ ॥

हेइन्द्र असुन्वन्तं सोमाभिषवमकुर्वाणंत्वामयजन्तमित्यर्थः दूणाशंदुःखेननाशनीयंसमं अयंसर्वानुदात्तःसर्वशब्दपर्यायः अयष्टॄन्सर्वान् यद्वा समंएकोयोगेन अविशेषेणवाजहि तेनकिमपराद्धमित्यतआह यस्तेतवमयः मयइतिसुखनाम तवसुखहेतुर्नभवति योहोमेनस्तुत्यावानप्रीणातितंजहि किञ्चास्यवेदनंधनमस्मभ्यंदद्धिदेहि दददानेइत्यस्माद्व्यत्ययेनपरस्मैपदम् छान्दसः शपोलुक् सूरिश्चिदोहते चिदेवार्थे सूरिस्तवस्तोतैव ओहते वहतिप्राप्नोतिधनम्॥ ४ ॥

४. इन्द्र, जो लोग सोम का अभिषव नहीं करते और जिनका विनाश करना दुःसाध्य है, उनका वध करो; क्योंकि वे तुम्हारे सुख के कारण नहीं हैं। उनका धन हमें दो। तुम्हारा स्तोता ही धन प्राप्त करता है।

आवोयस्यंद्विबर्हसोर्केषुसानुषगसंत् ।
आजाविन्द्रस्येन्दोप्रावोवाजेषुवाजिनम् ॥ ५ ॥

आवः । यस्य । द्विऽबर्हसः । अर्केषु । सानुषक् । असत् ।
आजौ । इन्द्रस्य । इन्दो इति । प्र । आवः । वाजेषु । वाजिनम्॥ ५॥

हेइन्दो सोम तवयस्यद्विबर्हसः स्तोत्रहवीरूपद्विविधपरिवृढकर्मवतोयजमानस्य अर्केषु मन्त्रेषुसानुषक्सानुषङ्गः सातत्यमसद्भवेत् तमावः तंयजमानंरक्षसितर्पयसिवा यद्वा कर्मणिषष्ठीयं द्वयोः स्थानयोः परिवृढंयमिन्द्रं हेइन्दो यदाअर्केषुसानुषक् असदभवेः तदा आवः अरक्षः अतर्पयोवा तस्यैवेन्द्रस्यआजौसङ्ग्रामे हेसोम वाजिनंतथान्नवन्तंतमिन्द्रंवाजेषु बलेषुअन्नेषुवानिमित्तभूतेषुप्रावः प्रकर्षेणारक्षयः पानसमयेतर्पयित्वासङ्ग्रामसमयेबलवर्धनेनजयप्राप्तशत्रुधनतर्पणेनवाअरक्षइत्यर्थः ॥ ५ ॥

५. हे सोम, जिन स्तोत्र और हवि के द्विविध कर्म करनेवाले यजमान के पूजा-साधक मंत्र में तुम सदा अवस्थिति करते हो, उसकी तुम रक्षा करो। हे सोम, इन्द्र के युद्ध में अन्न के लिए अन्नवान् इन्द्र की रक्षा करो।

अथषष्ठी—

यथापूर्वेभ्योजरितृभ्यंइन्द्रमयंइवापोनतृष्यंतेबभूथं।
तामनुंत्वानिविदंजोहवीमिविद्यामेषंवृजनंजीरदांनुम्॥ ६॥१९॥

यथां। पूर्वेभ्यः। जरितृऽभ्यः। इन्द्र। मयःऽइव। आपः। न।
तृष्यंते। बभूथं। ताम। अनुं। त्वा। निऽविदंम्। जोहवीमि।
विद्यामं। इषंम्। वृजनंम्। जीरऽदांनुम्॥ ६॥ १९॥

यथापूर्वेभ्यइतिषष्ठीव्याख्याता॥ ६॥

६. इन्द्र, तुम प्राचीन स्तोताओं के प्रति, तृषार्त्त के पास जल की तरह कृपालु हुए थे; इसलिए हम बार-बार तुम्हारी सुखकर और प्रसिद्ध स्तुति करते हैं, ताकि हम अन्न, बल और दीर्घायु प्राप्त करें।

॥ इतिद्वितीयस्यचतुर्थेएकोनविंशोवर्गः॥ १९॥

आचर्षणिप्राइतिपञ्चर्चंत्रयोदशंसूक्तं आगस्त्यमैन्द्रंत्रैष्टुभं आचर्षणिप्राःपञ्चेत्यनुक्रमणिका। होत्रकशस्त्रेषुस्तोमवृद्धावस्यविशेषविनियोगः ऐन्द्राणित्रैष्टुभान्यमरुच्छव्दान्यावपेरन्निति सूत्रितत्वात्।

आचर्षणिप्रावृषभोजनांनांराजांकृष्टीनांपुरुहूतइन्द्रः।
स्तुतःश्रवस्यन्नवसोपंमद्रिग्युक्त्वाहरीवृषणायांह्यर्वाङ्॥ १॥
आ। चर्षणिऽप्राः। वृषभः। जनांनाम्। राजां। कृष्टीनाम्।
पुरुऽहूतः। इन्द्रः। स्तुतः। श्रवस्यन्। अवंसा। उपं। मद्रिक्।
युक्त्वा। हरी इतिं। वृषंणा। आ। याहि। अर्वाङ्॥ १॥

अयमिन्द्रः चर्षणिप्राः चर्षणयोमनुष्याः तेषांधनादिना प्रीणयिता जनानां सर्वेषां वृषभः कामानांवर्षिता तथाकृष्टीनां मनुष्यनामैतत्मनुष्याणांराजास्वामीपुरुहूतः बहुभिराहूतईदृशइन्द्रोस्मानाजानात्वागच्छतुवा उत्तरार्धःपरोक्षवादः हेइन्द्र स्तुतोस्माभिः श्रवस्यन् हविर्लक्षणान्नमिच्छन् अवसाअस्मद्रक्षणेनतर्पणेनवायुक्तःसन् मद्रिक् मदभिमुखमञ्चन् वृषणावर्षकौयुवानौ हरीअश्वौयुक्त्वारथेयोजयित्वा अर्वाङ् अस्मदभिमुखमायाहि आगच्छ॥ १॥

१. मनुष्यों के प्रीति-दायक, सबके इच्छित-वर्षक, मनुष्यों के स्वामी और बहुतों के द्वारा आहूत इन्द्र हमारे पास आयें। इन्द्र, हमारी स्तुति ग्रहण कर दोनों तरुण अश्वों को रथ में जोतकर, हव्य ग्रहण करने और रक्षा के लिए हमारे सामने आओ।

अथद्वितीया—

येतेवृषणोवृषभासइन्द्रब्रह्मयुजोवृषरथासोअत्याः।
ताँआतिष्ठतेभिरायाह्यर्वाङ्हवामहेत्वासुतइन्द्रसोमे ॥ २ ॥

ये। ते। वृषणः। वृषभासः। इन्द्र। ब्रह्मऽयुजः। वृषऽरथासः।
अत्याः। तान्। आ। तिष्ठ। तेभिः। आ। याहि। अर्वाङ्।
हवामहे। त्वा। सुते। इन्द्र। सोमे ॥ २ ॥

हेइन्द्र तेतवसबन्धिनोवृषणोवर्षकायुवानः वर्षणवन्तोवा वृषभासः श्रेष्ठाः ब्रह्मयुजः परिवृढेनमन्त्रेणयुज्यमानाः वृषरथासः वर्षणरथवन्तः तत्रनियुक्ताइत्यर्थः ईदृशाःअत्याः अश्वाः येसन्तितानातिष्ठ आश्रय आरोह तेभिस्तैःअर्वाङ् अस्मदभिमुखमायाहि आगच्छ वयंच हेइन्द्र सोमेसुतेसति त्वात्वांहवामहे आह्वयामः ॥ २ ॥

२. इन्द्र, तुम्हारे जो तरुण, उत्तम, मंत्र-द्वारा रथ में योजनीय, वर्षक और रथ से युक्त घोड़े हैं, उन पर चढ़ो और उनके साथ हमारे सामने आओ।

आतिष्ठरथंवृषणंवृषातेसुतःसोमःपरिषिक्तामधूनि।
युक्त्वावृषभ्यांवृषभक्षितीनांहरिभ्यांयाहिप्रवतोपमद्रिक् ॥ ३ ॥

आ। तिष्ठ। रथम्। वृषणम्। वृषा। ते। सुतः। सोमः।
परिऽसिक्ता। मधूनि। युक्त्वा। वृषऽभ्याम्। वृषभ। क्षितीनाम्।
हरिऽभ्याम्। याहि। प्रऽवता। उप। मद्रिक् ॥ ३ ॥

हेइन्द्र त्वंरथमातिष्ठ आश्रय यज्ञगमनार्थं कीदृशंरथं वृषणंवर्षकंकामानां किमर्थमिति चेदुच्यते—तेत्वदर्थंवृषावर्षकः सोमः सुतोभिषुतः तथामधूनिमधुराणिघृतक्षीरादीनिपरिषिक्तापरितः सिक्तानिसंपादितानि यद्वा मधूनिमधुराः सोमरसाः चमसेषुपूरिताः आगमनप्रकारउच्यते हेवृषभवर्षकेन्द्र वृषभ्यांवर्षकाभ्यांहरिभ्यांयुक्त्वारथंयोजयित्वाक्षितीनांकर्मसुनिवसतांयजमानानामस्माकमनुग्रहाय क्षितीनांवृषभेतिवायोज्यं प्रवतावेगवतारथेनमद्रिक्मदभिमुखमञ्चन् मदाभिमुख्येनोपयाहि॥ ३ ॥

३. इन्द्र, तुम अभीष्टवर्षक रथ पर चढ़ो; क्योंकि तुम्हारे लिए मनोरथ दाता सोम तैयार है—मधुर घृत आदि भी तैयार है। अभीष्ट-वर्षक इन्द्र, अभीष्टदाता दोनों हरि नाम के घोड़ों को जोतकर यज-मानों के ऊपर कृपा करने के लिए वेगवान् रथ से हमारे सामने आओ।

अयंयज्ञइत्येषाचतुर्थीअहर्गणेषुमध्येष्वहस्सुहारियोजनग्रहस्ययाज्या अग्निष्टोमोत्यग्निष्टोमइतिखण्डेसूत्रितम्—अयंयज्ञोदेवयाअयंमियेधइतीतरेष्विति।

अयंयज्ञोदेवयाअयंमियेधइमाब्रह्माण्ययमिन्द्रसोमः।
स्तीर्णंबर्हिरातुशक्रप्रयाहिपिबानिषद्यविमुचाहरीइह ॥ ४ ॥

अयम्। यज्ञः। देवऽयाः। अयम्। मियेधः। इमा। ब्रह्माणि
अयम्। इन्द्र। सोमः। स्तीर्णम्। बर्हिः। आ। तु। शक्र।
प्र। याहि। पिब। निऽसद्य। वि। मुच। हरी इति। इह ॥ ४ ॥

हेइन्द्र अयंयज्ञोदेवयाः देवानगच्छन्नवतितथायंयज्ञोमियेधः मेधः पशुः पशुर्वैमेधइतिहि-श्रुतेः। इमाइमानिब्रह्माणिमन्त्राः अयंसुतःसोमः स्तीर्णंबर्हिः आसनायास्तृतादर्भाः एतेपदार्था-स्त्वदुचिताएवंसंपादिताः हेशक्रशक्तेन्द्र तुपुनः किमित्युक्ते आप्रयाहिप्रकर्षेणशीघ्रमागच्छ आ-गत्यचनिषद्यबर्हिष्युपविश्यपिबसोमं तदर्थं इहास्मिन्देवयजनेहरीअश्वौविमुच वियोजय छा-न्दसोनुमभावः ॥ ४ ॥

४. इन्द्र, देवों के उद्देश्य से यह यज्ञ जाता है। यह यज्ञीय पशु, ये मंत्र, यह प्रस्तुत सोम और यह बिछाया हुआ कुश तुम्हारे लिए तैयार हैं। तुम जल्दी आओ, बैठो, सोम पिओ और यज्ञ-स्थल में हरि घोड़ों को छोड़ो।

ओसुष्टुतइन्द्रयाह्यर्वाङुपब्रह्माणिमान्यस्यकारोः।
विद्यामवस्तोरवसागृणन्तोविद्यामेषंवृजनंजीरदानुम् ॥५॥२०॥

ओ इति। सुऽस्तुतः। इन्द्र। याहि। अर्वाङ्। उप। ब्रह्माणिः।
मान्यस्य। कारोः। विद्याम। वस्तोः। अवसा। गृणन्तः।
विद्याम। इषम्। वृजनम्। जीरऽदानुम् ॥ ५ ॥ २० ॥

हेइन्द्र सुष्टुतः अस्माभिः सम्यक्स्तुतःसन् अर्वाङ् अस्मदभिमुखमायाहि आगच्छैव मा-विलंबय किमुद्दिश्यमान्यस्यमाननीयस्यकारोःस्तोतुः होतुः कर्तुर्यजमानस्यवाब्रह्माणिमन्त्रान् उप उपलक्ष्यगृणन्तः स्तुवन्तः अभिमतंशब्दयन्तोवावयं अवसात्वद्रक्षणेनरक्षिताःसन्तोवस्तोर्वस्तुंसु-खेनसंस्थातुं अहर्निवा सर्वेष्वहस्सुअन्नादिकंविद्याम लभेमहि विद्यामेत्यादिव्याख्यातम् ॥ ५ ॥

५. इन्द्र हमारे द्वारा अच्छी तरह स्तुत होकर माननीय स्तोता के मंत्र को उपलक्ष्य करके हमारे सामने आओ। हम, स्तुति करते हुए, तुम्हारा आश्रय प्राप्त कर अनायास वास-स्थान प्राप्त करेंगे। साथ ही अन्न, बल और दीर्घ आयु भी लाभ करेंगे।

यद्धस्येतिपञ्चर्चंचतुर्दशंसूक्तं आगस्त्यमैन्द्रंत्रैष्टुभं यद्धस्येत्यनुक्रमणिका विशेषविनियोगः पूर्ववत्।

तत्रप्रथमा—

यद्धस्यातंइन्द्रश्रुष्टिरस्तियर्यावभूथंजरितृभ्यंऊती ।
मानःकाममहयन्तमाधग्विश्वातेअश्यांपर्यापंआयोः ॥ १ ॥

यत् । ह । स्या । ते । इन्द्र । श्रुष्टिः । अस्ति । यया । बभूथ ।
जरितृऽभ्यः । ऊती । मा । नः । कामम् । महयन्तम् । आ ।
धक् । विश्वा । ते । अश्याम् । परि । आपः । आयोः ॥ १ ॥

हेइन्द्र यत् या स्या सा हप्रसिद्धाश्रुष्टिः सर्वत्रश्रूयमाणासमृद्धिस्तेतवास्ति यया जरितृभ्यःस्तोतृभ्यःऊतीऊत्यैरक्षणायबभूथसमर्थोभवसि नोस्माकंमहयन्तं अस्मान्महतःकुर्वाणंकामं अभीष्टं माआधक् माधाक्षीः तेतवसंबन्धीनिविश्वासर्वाणिभोगजातानि आपः आप्तव्यानि यद्वा विश्वासर्वाआपः आप्ताश्रुष्टीः समृद्धीः आयोर्मनुष्यस्योचिताः पर्यश्यां परितोव्याप्नुयाम् ॥ १ ॥

१. इन्द्र, जिस समृद्धि के द्वारा तुम स्तोताओं की रक्षा करते हो, वह सर्वत्र प्रसिद्ध हो। तुम हमें महान् करने की अभिलाषा को नष्ट न करो। तुम्हारे लिए जो वस्तु प्राप्तव्य और भोग्य है, वह सब हम प्राप्त करें।

नघाराजेन्द्रआदभन्नोयानुस्वसाराकृणवन्तयोनौ ।
आपश्चिदस्मैसुतुकाअवेषन्गमन्नइन्द्रःसख्यावयश्च ॥ २ ॥

न । घ । राजा । इन्द्रः । आ । दभत् । नः । या । नु ।
स्वसारा । कृणवन्त । योनौ । आपः । चित् । अस्मै । सुऽतुकाः ।
अवेषन् । गमत् । नः । इन्द्रः । सख्या । वयः । च ॥ २ ॥

अयंराजा राजमानईश्वरोवा इन्द्रः नोस्मदीयानिकर्माणिनादभत् सर्वतोनहिंस्यात् घपूरणः कानीतिउच्यते या यानिकर्माणि वृष्ट्यादिरूपाणि स्वसारा परस्परंस्वसृभूतेस्वयंसरणभूते अहोरात्रे नुपूरणः योनौस्वकीयेस्थानेकृणवन्त द्विवचनस्थानेबहुवचनं कुरुतः कृविहिंसाकरणयोश्च धिन्विकृण्व्योरचेत्युप्रत्ययः बहुलग्रहणाच्छप् तानीन्द्रोप्यनुजानात्वित्यर्थः स्वसृभूतावध्वर्युयजमानौवा कुरुतः यद्वा स्वसारोङ्गुल्योयोनौफलोत्पादनस्थानेयज्ञे यानिकृतवत्यस्तानीतियोज्यं किञ्च अस्माइन्द्रायसुतुकाः शोभनबलहेतून्यापः अप्कार्याणिहवींषि अवेषन्व्याप्नुवन्तिनोस्मभ्यमिन्द्रः सख्यासख्यानिवयश्चप्रभूतमन्नंचगमत्गमयतु ॥ २ ॥

२. परस्पर भगिनी-स्वरूप अहोरात्र अपने जन्मस्थान में जो वृष्टि-रूप कर्म करते हैं, राजा इन्द्र वह हमारा कर्म नष्ट न करें। बल का कारण हव्य इन्द्र के लिए व्याप्त होता है। इन्द्र हमें मैत्री और अन्न प्रदान करें।

अथतृतीया—

जेतानृभिरिन्द्रःपृत्सुशूरःश्रोताहवंनाधमानस्यकारोः ।
प्रभर्तारथंदाशुषउपाकउद्यन्तागिरोयदिचत्मनाभूत् ॥ ३ ॥

जेता । नृऽभिः । इन्द्रः । पृत्ऽसु । शूरः । श्रोता । हवम् ।
नाधमानस्य । कारोः । प्रऽभर्ता । रथम् । दाशुषः । उपाके ।
उत्ऽयन्ता । गिरः । यदि । च । त्मना । भूत् ॥ ३ ॥

अयमिन्द्रः शूरोविक्रान्तःसन् नृभिः सङ्ग्रामनेतृभिर्मरुद्भिःसहितःसन् पृत्सुसङ्ग्रामेषुजेता जयशीलः शत्रूणां तथा नाधमानस्यत्वदनुग्रहंयाचमानस्यकारोः स्तोतुः हवमाह्वानंश्रोताभवति किञ्च यदिच यदाच त्मनाआत्मना अन्यप्रेरितः एवंगिरः स्तुतिरूपाणिवचांसिस्तोतॄन्वा उद्यन्ता उच्छ्रयिताभूत् भवेत् तदादाशुषोहविर्दत्तवतोयजमानस्य उपाके समीपनामैतत् समीपएवयागदेशेरथंप्रभर्ता सम्यक् प्रभरन्भवति जेतेत्यादिषुतृन्नन्तेषु नलोकाव्ययेत्यादिनाकर्मणिषष्ठीप्रतिषेधः यदा स्तुतिंश्रोतुमिच्छति तदास्वयमेवशीघ्रंरथंधावयित्वायागंप्राप्नोतीत्यर्थः ॥ ३ ॥

३. विक्रमशाली इन्द्र, युद्ध-नेता मरुतों के साथ युद्ध में जय-लाभ करते हुए अनुग्रहार्थी स्तोता का आह्वान सुनते हैं। जिस समय स्वयं स्तुति-वाक्य को वरण करने की इच्छा करते हैं, उस समय हव्यदाता यजमान के पास रथ ले जाते हैं।

अथचतुर्थी—

एवानृभिरिन्द्रःसुश्रवस्याप्रखादःपृक्षोअभिमित्रिणोभूत् ।
समर्यइषस्तवतेविवाचिसत्राकरोयजमानस्यशंसः ॥ ४ ॥

एव । नृऽभिः । इन्द्रः । सुऽश्रवस्या । प्रऽखादः । पृक्षः । अभि ।
मित्रिणः । भूत् । सऽमर्ये । इषः । स्तवते । विऽवाचि । सत्राऽकरः ।
यजमानस्य । शंसः ॥ ४ ॥

अयमिन्द्रोनृभिः कर्मनिर्वाहकैर्यजमानैर्दत्तंपृक्षोहविर्लक्षणमन्नं सुश्रवस्याशोभनान्नेच्छयाअन्नेच्छुर्वाप्रखादः प्रकर्षेणखादितएव एवमेवपूर्वंयथातथैवमित्रिणः सहायवतोपियजमानस्यशत्रूनभिभूवअभिभवति यद्वा नृभिर्वृष्टिनेतृभिर्मरुद्भिःसहितोयमिन्द्रःसुश्रवस्याप्रखादःसन्नेवमेवमित्रिणऋत्विग्रूपमित्रवतोयजमानस्यार्थे तदभिमताय अभिभूव अभीत्यनर्थकःभवति आभिमुख्येनवाभवति तस्यहविःस्वीकृत्यतदभिमतायभवतीत्यर्थः अथ तथाभूतःसन् विवाचि विविधपरस्पराह्वानध्वनियुक्तेसमर्थेसंग्रामे विविधस्तोत्रशस्त्रध्वनियुक्तेसमर्ये मर्त्ययुक्तेयज्ञे वा

तन्निमित्तंयजमानस्यशंसः शंसकः सन् सत्राकरः फलानांसत्यकार्यंयमिन्द्रइषोहविर्लक्षणमन्नंस्त-वते स्तौति ॥ ४ ॥

४. उत्तम धन के लाभ की इच्छा से यजमान-द्वारा दिया हुआ अन्न, प्रचुर परिमाण में, भक्षण करते तथा सहायतावाले यजमान के शत्रुओं को पराजित करते हैं। विभिन्न आह्वानों की ध्वनियों से युक्त युद्ध में सत्यपालक इन्द्र यजमान के कर्म की प्रसिद्धि करते हुए हव्य को स्वीकार करते हैं।

त्वयांवयंमंघवन्निन्द्रशत्रूंनभिष्यांममहतोमन्यंमानान् ।
त्वंत्रातात्वमुंनोवृधेभूंर्विद्यामेषंवृजनंजीरदांनुम् ॥ ५ ॥ २१ ॥

त्वयां । वयम् । मघऽवन् । इन्द्र । शत्रून् । अभि । स्याम ।
महतः । मन्यंमानान् । त्वम् । त्राता । त्वम् । ऊँ इतिं ।
नः । वृधे । भूः । विद्याम । इषम् । वृजनम् । जीरऽदांनुम् ॥ ५॥ २१॥

हेमघवन् धनवन्निन्द्र त्वयासहायेनवयं यजमानाः महतोमन्यमानान् अतिबलानवध्यान् मन्यमानान् शत्रूनाभिष्याम अभिभवितारोभवेम हेइन्द्र त्वंत्रातात्वमेवास्माकंरक्षकः अतस्त्वमु त्वमेवनोस्माकंवृधे धनादिवर्धनायभूर्भव विद्यामेत्यादिगतम् ॥ ५ ॥

५. इन्द्र, तुम्हारी सहायता लेकर हम उन शत्रुओं का वध करेंगे, जो अपने को अवध्य समझते हैं। तुम हमारे त्राता हो। तुम हमारे धन के वर्द्धक बनो, ताकि हम अन्न, बल और दीर्घ आयु प्राप्त करें।

॥ इतिद्वितीयस्यचतुर्थेएकविंशोवर्गः ॥ २१ ॥

पूर्वीरहमितिषळृचंपञ्चदशंसूक्तंत्रैष्टुभं उपान्त्याबृहती अत्रत्रयाणांद्वृचानांलोपामुद्राग-स्त्यतच्छिष्यैर्दृष्टत्वात्तएवर्षयः सूक्तप्रतिपाद्योर्थोरतिर्देवता अत्रानुक्रमणिका—पूर्वीःषट् जायाप-त्योर्लोपामुद्रायाअगस्त्यस्यचद्वृ चाभ्यांरत्यर्थंसंवादंश्रुत्वान्तेवासीब्रह्मचार्यन्त्येबृहत्यादीअपश्यदि-ति विशेषविनियोगोलैङ्गिकः।

पूर्वीरहंशरदंःशश्रमाणादोषावस्तोरुषसोजरयंन्तीः ।
मिनातिश्रियंजरिमातनूनामप्यूनुपत्नीर्वृषंणोजगम्युः ॥ १ ॥

पूर्वीः । अहम् । शरदः । शश्रमाणा । दोषाः । वस्तोः । उषसः ।
जरयंन्तीः । मिनाति । श्रियम् । जरिमा । तनूनाम् । अपि ।
ऊँ इतिं । नु । पत्नीः । वृषणः । जगम्युः ॥ १ ॥

लोपामुद्रा आह हेअगस्त्य अहंलोपामुद्रापूर्वीः शरदः पुरातनानसंख्यातान् संवत्सरान् दोषारात्रीः वस्तोरहानितथादेहंजरयन्तीरुषसः उषःकालांश्च सर्वत्रात्यन्तसंयोगेद्वितीया अद्यतनकालपर्यन्तंबहुसंवत्सरंकात्स्न्र्येनत्वच्छुश्रूषयाशश्रमाणाश्रान्ताभूवं इदानींतुजरिमाजरातनूनामङ्गानांश्रियंसौन्दर्यमिनातिहिनस्ति एवमपिनानुगृह्णासीत्यर्थः अप्यूनु अपिःसंभावनायांउइत्यवधारणे नुइतिवितर्के इदानीमपिकिंसंभावनीयं लोकेहिपत्नीः स्त्रियः वृषणः सेक्तारःपुरुषाः जगम्युः गच्छेयुः संभोगंकुर्युः अतोमांकिमित्यवमन्यसे इदानीमपिवासंभावयेत्यर्थः ॥ १ ॥

१. (लोपामुद्रा) अगस्त्य, अनेक वर्षों से मैं दिन-रात बुढ़ापा लानेवाली उषाओं में तुम्हारी सेवा करके श्रान्त हुई हूँ। जरा शरीर के सौन्दर्य का नाश करता है। इस समय पुरुष स्त्री के पास क्या गमन करे!

ये॒चि॒द्धिपूर्व॑ऋ॒त॒साप॒आस॑न्त्सा॒कंदे॒वेभि॒रव॑दन्नृ॒तानि॑।
ते॒चि॒दवा॑सुर्न॒ह्यन्त॑मा॒पुः॒सम॑ूनुपत्नी॒र्वृष॑भि॒र्जग॑म्युः ॥ २ ॥

ये। चि॒त्। हि। पूर्वे॑। ऋ॒त॒ऽसापः॑। आस॑न्। सा॒कम्। दे॒वेभिः॑।
अव॑दन्। ऋ॒तानि॑। ते। चि॒त्। अव॑। अ॒सुः॒। न॒हि। अन्त॑म्।
आ॒पुः। सम्। ऊँ इति॑। नु। पत्नीः॑। वृष॑ऽभिः। ज॒गम्युः॑ ॥ २ ॥

सातमेवाह हेपते अगस्त्य येचिद्धियेपितु पूर्वेपुरातनाऋतसापः सत्यस्यापवितारः व्यामुवानामहर्षयः आसन्तेदेवेभिर्देवैःसाकंसह ऋतानिसत्यवाक्यान्यवदन्वदन्ति येमहत्तपोयज्ञंवाअनुतिष्ठन्तियेचदेववाक्यानिदेवस्मृतिरूपाणिवदन्ति तेचिच्चिदप्यर्थे तेपि अवासुः अवक्षिपन्तिरेतः स्यतिरुपसृष्टोविमोचनेवर्तते तेनह्यन्तमापुः नहिब्रह्मचर्यादेरन्तंप्रापुवन् ब्रह्मचारिणोप्यनिषिद्धऋतुकालगमनमपिकुर्वन्तीत्यर्थः तथापत्नीः पत्न्यश्चतपस्यमानाः वृषभिर्भोगवर्षकैःपतिभिः सहसमूनुजगम्युः उन्वितिपूरणौ सङ्गच्छेरन् अतस्त्वंकथंमांनानुभवसीत्यर्थः ॥ २ ॥

२. अगस्त्य, जो प्राचीन और सत्य-रक्षक ऋषि लोग देवताओं के साथ सच्ची बात कहते थे, उन्होंने भी रेत का स्खलन किया है; परन्तु उन्हें भी अन्त नहीं मिला। पुरुष स्त्री के साथ गमन करे।

अथतृतीया—

न॒मृषा॑श्रा॒न्तंयदव॑न्ति॒दे॒वा॒विश्वा॒इत्स्पृधो॑अ॒भ्य॑श्नवाव।
२ जया॒वेदत्र॑श॒तनी॑थमा॒जिंयत्स॒म्यञ्चा॑मिथु॒नाव॒भ्यजा॑व ॥ ३ ॥

न । मृषा । श्रान्तम् । यत् । अवन्ति । देवाः । विश्वाः । इत् ।
स्पृधः । अभि । अश्नवाव । जयाव । इत् । अत्र । शतऽनीथम् ।
आजिम् । यत् । सम्यञ्चा । मिथुनौ । अभि । अजाव ॥ ३ ॥

अगस्त्यस्तामाह भोःपत्नि त्वया मयाचनमृषाश्रान्तं व्यर्थंनैवखिन्नमावाभ्यां यत् यस्मात् देवाअवन्तिरक्षन्ति तपोभिःप्रीताः आवांविश्वाइत् सर्वाअपिस्पृधःस्पर्धमानाःसेनाःअभ्यश्नवाव अभितोव्याप्नुवाव अत्रास्मिन्संसारे शतनीथं अपरिमितभोगप्राप्तिसाधनमाजिंप्राप्तिपरस्परं जयाव जयलक्षणं सुरतसङ्ग्रामं वा जयाव यत्यस्मात् सम्यञ्चासम्यक्परस्परं गच्छन्तौपूजयन्तौवामिथुना मिथुनौ स्त्रीपुरुषरूपौ सन्तौ अभ्यजाव त्वंचाहमपिपरस्परमभिजयावेत्येवंतयोर्कंसंभोगं संभावयामास ॥ ३ ॥

३. (अगस्त्य) हम लोग वृथा नहीं श्रान्त हुए; क्योंकि देवता लोग रक्षा करते हैं। हम सारे भोगों का उपभोग कर सकते हैं। यदि हम दोनों चाहें, तो इस संसार में हम सैकड़ों भोगों के साधन प्राप्त कर सकते हैं।

नदस्यमारुधतःकामआगन्नितआजातोअमुतःकुतश्चित् ।
लोपामुद्रावृषणंनीरिणातिधीरमधीराधयतिश्वसन्तम् ॥ ४ ॥
नदस्य । मा । रुधतः । कामम् । आ । अगन् । इतः । आऽजातः ।
अमुतः । कुतः । चित् । लोपामुद्रा । वृषणम् । निः । रिणाति ।
धीरम् । अधीरा । धयति । श्वसन्तम् ॥ ४ ॥

हेजाये नदस्यनदनस्य जपशब्दयितुःजपाध्ययनकर्तुःरुधतोरेतोनिरोद्धुः ब्रह्मचर्यमास्थितस्य उभेकर्मणिषष्ठ्यौ उक्तलक्षणं मामांकामआगन् आगमत् नदस्यमारुधतः कामआगमदितिनिरुक्तम् । कस्यहेतोरिति उच्यते इतःत्वत्सङ्गमनिमित्तात् तथा अमुतोवसन्तादिकालात् कुतश्चित्कारणादाजातः सर्वतउत्पन्नः यद्वा इतएतल्लोकजनितादमुतोलोकान्तरजनिताद्वा कुतश्चिन्निमित्तात्कामात्कथमिति उच्यते इयंलोपामुद्रावृषणंरेतसःप्रवर्तकंमां नीरिणातिनितरांगच्छति किञ्चधीरंधीमन्तं नियमादविचालिनं श्वसन्तंमहाप्राणं महाबलं अधीराकातरैषायोषित् धयतिउपभुङ्क्ताम् ॥ ४ ॥

४. यद्यपि मैं जप और संयम में नियुक्त हूँ; तथापि इसी कारण या किसी भी कारण, मुझे काम-भाव हो गया है। सेचन करनेवाली लोपामुद्रा पति के साथ संगत हो। अधीरा स्त्री धीर और महाप्राण पुरुष का उपभोग करे।

अथानयोर्दम्पत्योः संभोगसंल्लापंश्रुत्वातत्प्रायश्चित्तंचिकीर्षुरुत्तराभ्यामाह—अनयोर्विनियोगःशौनकेनोक्तः—इमंनुसोममित्येतेद्वेऋचौप्रयतोजपन् । सर्वान्कामानवाप्नोतिपापेभ्यश्चप्रमुच्यतइति ।

तयोर्मध्येप्रथमासूक्तेपञ्चमी—

इमंनुसोममन्तितोहृत्सुपीतमुपंब्रुवे । यत्सीमागंश्चकृमातत्सुमृंळतुपुलुकामोहिमर्त्यः ॥ ५ ॥

इमम् । नु । सोमम् । अन्तितः । हृत्ऽसु । पीतम् । उपं । ब्रुवे । यत् । सीम् । आगः । चकृम । तत् । सु । मृळतु । पुलुऽकामः । हि । मर्त्यः ॥ ५ ॥

अन्तितःसमीपेवर्तमानंपीतंपीयमानंहृत्सुहृदयप्रदेशेषुस्थितंइमंसोमंसीसर्वतः नुक्षिप्रंउपब्रुवे उपेत्यमनसाप्राप्यप्रार्थयते किंब्रवीषि उच्यते यदागः गुर्वोः कामप्रलापः श्रवणविषयंपापंचकृमकृतवन्तोवयंतत्तस्मादागसः ससोमः सुसम्यक्मृळतुसुखयतु पापजनितदुःखंमाकरोत्वित्यर्थः महत्पापमनुभुज्यमानंप्रार्थनयाकथंलुप्यतेइत्यतआह—हियस्मान्मर्त्योमनुष्यः पुलुकामोबहुकामनावान् अल्पेनैवकर्मणाबहुकामानाकलयति यस्मादेवंतस्मात्परिहरेत्यर्थः यद्वा पापमपवर्जनीयतयाप्राप्यतइवेत्याह पुरुकामोहिखलुमर्त्यः कामहतःसन्कामेननिरुद्धएववर्तते अतस्तयोरुत्सेकोयुक्तः तच्छब्दश्रवणदोषोपिप्रामादिकोस्माकंप्राप्तोनेनसोमेनपरिहर्तव्यइत्यर्थः यद्वायंमन्त्रः चन्द्रपरोव्याख्येयः मनसोभिमानित्वाच्चतस्यपापस्यापिमनस्येवसंभावितत्वात् अस्मिन्पक्षेहृत्सुपीतंहृदयस्थितमित्यर्थः शिष्टंस्पष्टम् ॥ ५ ॥

५. (शिष्य) हृदय में पीत इस सोम से मैं आन्तरिक प्रार्थना करता हूँ कि सोम मुझे सुखी करे । मनुष्य बहुत कामनावाला होता है ।

अथविनियुक्तयोर्मध्येद्वितीययासूक्तेषष्ठ्यान्तेवास्येवाह—

अगस्त्यःखनमानःखनित्रैःप्रजामपत्यंबलमिच्छमानः । उभौवर्णावृषिरुग्रःपुपोषसत्यादेवेष्वाशिषोजगाम ॥ ६ ॥ २२ ॥

अगस्त्यः । खनमानः । खनित्रैः । प्रऽजाम् । अपत्यम् । बलम् । इच्छमानः । उभौ । वर्णौ । ऋषिः । उग्रः । पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥ ६ ॥ २२ ॥

अयमगस्त्योमद्रुरुः खनित्रैः फलस्योत्पादनसाधनैः यज्ञस्तोत्रादिभिः खनमानः फलमभि-मतमुत्पादयन्प्रजांप्रकर्षेणपुनःपुनर्जायमानमपत्यं कुलस्यापतनसाधनंपुत्रादिकंबलंचेच्छमानः स-न्यद्वा प्रजांभृत्यादिरूपांचेच्छन् ऋषिः अतीन्द्रियद्रष्टामहानुभावः उग्रः उद्गूर्णः संसारेसञ्चर-न्नप्यपापःसन्नुभौवर्णांवर्णैर्वर्णनीयाकारौकामंचतपश्चपुपोष सत्याआशिषोदेवेषुदेवेभ्योजगाम प्राप्तवान् यतोयंमहानुभावः तस्मादस्मान्पातीत्यर्थः ॥ ६ ॥

६. उग्र ऋषि अगस्त्य ने अनेक उपायों का उद्भावन करके, बहुत पुत्रों और बल की इच्छा करके, काम और तप, दोनों वरणीय वस्तुओं का पालन किया था। अगस्त्य ने देवों के पास सत्य आशीर्वाद प्राप्त किया था।

॥ इतिप्रथमेमण्डलेत्रयोविंशोनुवाकः ॥ २३ ॥

अथचतुर्विंशेनुवाकेद्वादशसूक्तानि तत्रयुवोरजांसीतिदशर्चंप्रथमंसूक्तंआगस्त्यंत्रैष्टुभं तुह्या-दिपरिभाषयेदमादिसूक्तपञ्चकमाश्विनं युवोर्दशाश्विनंवाइत्यनुक्रमणिका एतदादीनितृतीयव-र्जितानिपञ्चसूक्तानिप्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभेछन्दसिविनियुक्तानि अथाश्विनइतिखण्डे सूत्रितम्—युवोरजांसीतिपञ्चानांतृतीयमुद्धरेदिति।

युवोरजांसिसुयमासोअश्वारथोयद्वांपर्यर्णांसिदीयंत्।
हिरण्ययावांपवयःप्रुषायन्मध्वःपिबन्ताउषसःसचेथे ॥ १ ॥

युवोः। रजांसि। सुऽयमासः। अश्वाः। रथः। यत्। वाम्। परि। अर्णांसि। दीयंत्। हिरण्ययाः। वाम्। पवयः। प्रुषायन्। मध्वः। पिबन्तौ। उषसः। सचेथे इति ॥ १ ॥

हेअश्विनौ युवोः युवयोरश्वाः रथवोढारोरजांसिरंजकान्लोकान् सुयमासः शोभननिय-माःलोकत्रयसञ्चारिणइत्यर्थः कदेत्याह यत्यदावांरथः अर्णांसि अरणीयानभिमतदेशान्परि-दीयत्परिगच्छेत् परितोगच्छतिवा तदेत्यर्थः दीयतिर्गतिकर्मा तकतिदीयतीतितत्कर्मसुपाठात् किञ्च त्वदागमनकालेयुवांयुवयोः पवयः वज्रारथनेमयोवाहिरण्याः हिरण्मयाः प्रुषायन्पुष्ण-न्तिअभिमतं यद्वाहिरण्मयानिपवयोमधुपात्राणिवांयुवाभ्यामर्थाययस्मादेवंतस्मात्युवांमध्वोम-धुनोमधुसदृशस्यसोमरसस्य कर्मणिषष्ठी सोमरसंपिबन्तावास्वादयन्तौउषसःउषःसबन्धिनिकाले सचेथे यज्ञंसङ्गच्छेथे अत्रक्रमोनविवक्षितः उषःकालएवागत्यमधुरंसोमरसंपिबतमित्यर्थः ॥१॥

१. अश्विनीकुमारो, जिस समय तुम्हारे शोभनगति घोड़े तुम्हें लेकर अभिमत प्रदेश में जाते हैं, उस समय तुम्हारे हिरण्मय रथ की नेमि अभिमत प्रदान करती है; इसलिए तुम उषाकाल में सोमपान करते हुए यज्ञ में आ मिलो।

अथद्वितीया—

युवमत्यस्यावनक्षथोयद्विपत्मनोनर्यस्यप्रयज्योः।
स्वसायद्वांविश्वगूर्तीभरातिवाजायेट्टेमधुपाविषेच ॥ २ ॥

युवम्। अत्यस्य। अव। नक्षथः। यत्। विऽपत्मनः। नर्यस्य।
प्रऽयज्योः। स्वसा। यत्। वाम्। विश्वगूर्तीइति विश्वऽगूर्ती।
भराति। वाजाय। ईट्टे। मधुऽपौ। इषे। च ॥ २ ॥

हेअश्विनौ युवंयुवांयद्यदा अत्यस्यातनशीलस्यसततसञ्चारिणोविपत्मनः विविधगमनस्यविचित्रगमनस्यवानर्यस्यमनुष्याणांहितस्य प्रयज्योःप्रकर्षेणपूज्यस्यएतानिकर्मणिषष्ठ्यन्तानि उक्तरूपंरथं अव अवस्तात् तदुदयात्पूर्वंनक्षथोव्यामुथोदेवयजनंगन्तुं किञ्च यद्यदाहेविश्वगूर्तीसर्वस्तुत्यौसर्वदोद्गूर्णौवावांयुवयोः स्वसास्वसृस्थानीयाः स्वयंसारिणीवोषाः भराति पोषते त्वदागमनायप्रभातंकरोति यदाहेमधुपौ मधुरस्यसोमरसस्यपातारौ युवांयजमानोवाजाय बलायगमनायवा इषेप्रभूतान्नायईट्टेस्तौति तदारथंप्रापुथइत्यर्थः ॥ २ ॥

२. सर्वस्तुत्य अश्विद्वय, जिस समय तुम्हारी भगिनी-स्थानीय उषा प्रस्तुत होती है, हे मधुपायी अश्विद्वय, जिस समय अन्न और बल के लिए यजमान तुम्हारी स्तुति करता है, उस समय तुम्हारा सतत-गन्ता, विचित्र गति-शील, मनुष्य-हितैषी और विशिष्ट रूप से पूजनीय रथ निम्नाभिमुख जाता है। अथतृतीया—

युवंपयउस्रियायामधत्तंपक्वमामायामवपूर्व्यंगोः।
अन्तर्यद्वनिनोवामृतप्सूह्वारोनशुचिर्यजतेहविष्मान् ॥ ३ ॥

युवम्। पयः। उस्रियायाम्। अधत्तम्। पक्वम्। आमायाम्।
अव। पूर्व्यम्। गोः। अन्तः। यत्। वनिनः। वाम्।
ऋतप्सूइत्यृतऽप्सू। ह्वारः। न। शुचिः। यजते। हविष्मान् ॥ ३ ॥

हेअश्विनौ युवंयुवांउस्रियायां गोनामैतत् भोगोत्स्राविण्यांगवि पयः अधत्तं अधारयतं स्थापितवन्तौ तथाआमायां अपक्वायांपक्वंपरिपक्वंभोगयोग्यंगोसंबंधिदुग्धंपूर्व्यंपूर्वभवंतत्रैवोत्सन्नं अव अवस्तादधारयतं गविक्षीरमुत्पाद्यपुनर्भोगायपृथक्कृतवन्तावित्यर्थः यद्यस्मात्हेऋतप्सू सत्यस्वरूपौयज्ञियहविर्भक्षयितारौवा हेअश्विनौ वांवनिनः उदकवतः उदकोपलक्षितहविष्मतो-

यज्ञस्य अन्तर्मध्येहविष्मान् प्रदेयहविषातद्वान् शुचिः शुद्धोयजमानोयजतेपूजयतियुवां तस्मादे-वमकुरुतं यद्वा यदैवंयजमानःकरोतितदेत्यर्थः तत्रदृष्टान्तः—वनिनोवनसंबन्धिवृक्षसमूहस्यान्त-र्मध्येह्वारोन चोरइव सयथाजागरूकोवर्तते तथायजमानोपीत्यर्थः.॥ ३ ॥

३. अश्विद्वय, तुमने गायों में दुग्ध स्थापित किया है। तुमने गायों के अधोदेश में पूर्ववर्त्ती पक्व दुग्ध स्थापित किया है। सत्यरूप अश्विद्वय, वन-वृक्षावली के बीच चोर की तरह सदा जागरूक विशुद्ध-स्वभाव और हविवाला यजमान हविवाले यज्ञ में तुम्हारी स्तुति करता है।

युवंहघर्मंमधुमन्तमत्रयेपोनक्षोदोंवृणीतमेषे ।
तद्वांनरावश्विनापश्वइष्टीरथ्येवचक्राप्रतियन्तिमध्वः ॥ ४ ॥

युवम् । ह । घर्मम् । मधुऽमन्तम् । अत्रये । अपः । न । क्षोदः ।
अवृणीतम् । एषे । तत् । वाम् । नरौ । अश्विना । पश्वःऽइष्टिः ।
रथ्याऽइव । चक्रा । प्रति । यन्ति । मध्वः ॥ ४ ॥

अत्रेतिहासमाहुः—प्रवर्ग्येणप्रचरन्तमत्रिंराक्षसास्तप्तेघर्मेपातयन् सचतप्यमानोश्विनौतुष्टाव तौचस्तुत्याहृष्टमनसावरक्षतामिति अपरेत्रौक्षिप्तमपालयतमित्याहुरिति हेअश्विनौ युवंयुवांमधु-मन्तंपयोघृतरूपाभ्यांमधुभ्यां तद्वन्तंघर्मंदीप्तंप्रवर्ग्यंएषेसौख्यमिच्छते अत्र येएतन्नाम्नेमहर्षये क्षोदः क्षोदांसिक्षोद्यमानानि अपोन उदकानीव अवृणीतं अवारयतं औष्ण्येशैत्यसुखंकृतवन्तौतप्तघर्म-सकाशाद्रक्षितवन्तावित्यर्थः यद्वा अत्रयेक्षोदः उदकनामैतत् तेनतत्स्थंशैत्यंलक्ष्यते अपःक्षोदो-न अपइतिषष्ठ्यर्थेद्वितीया उदकानांशैत्यंयथाभवतितद्वत् पक्षान्तरेतुघर्मंदीप्तमग्निंमधुमन्तं कृत्वा वृणीतंसुखयतमित्यर्थः तथाचमन्त्रान्तरं—तप्तंघर्ममोम्यावन्तमत्रयइति ।तत्तस्मात्यस्मादेवंतस्मात् हेनरौ नेतारौ नराकारौवा अश्विना अश्विनौवांयुवाभ्यांपश्वइष्टिः पशुरित्यग्नेर्नाम अग्निःपशु-रासीदित्यादिश्रुतेः । यद्वा पशुप्रियत्वात्पशुरित्युच्यते तस्याग्नेरिष्टिर्भवति अग्नौयागःसर्वोयुष्म-दर्थंप्रवर्ततइत्यर्थः यद्वा पशुसाध्योयागोयुवाभ्यांप्रवर्ततइतिशेषः आश्विनंधूम्रललाममालभेत योदुर्ब्राह्मणःसोमंपिपासेदित्यादिनाप्यश्विभ्यांपशुर्विहितः । तथामध्वामधुसदृशाःसोमरसाअ-पियुवाभ्यांप्रतियन्ति अभिगच्छन्ति तत्रदृष्टान्तः—रथ्येवचक्रा रथसंबन्धीनिचक्राचक्राणीव वानियथाप्रवणदेशमभिगच्छन्तितद्वत्॥ ४ ॥

४. अश्विद्वय, तुमने सहायता की इच्छावाले अत्रि मुनि के लिए दीप्त दुग्ध और घृत को जल-प्रवाह की तरह किया था; इसलिए हे नराकार अश्विद्वय, तुम्हारे लिए अग्नि में यज्ञ किया जाता है। निम्न-देश में रथ-चक्र की तरह सोमरस तुम्हारे लिए आता है।

अथपञ्चमी–

आवांदानायंववृतीयदस्रागोरोहेंणतौग्र्योनजिव्रिः ।
अपःक्षोणीसंचतेमाहिंनावांजूर्णोवामक्षुरंहसोयजत्रा ॥५॥२३॥

आ । वाम् । दानायं । ववृतीय । दस्रा । गोः । ओहेंन । तौग्र्यः ।
न । जिव्रिः । अपः । क्षोणी इतिं । सचते । माहिंना । वाम् ।
जूर्णः । वाम् । अक्षुः । अंहसः । यजत्रा ॥ ५ ॥ २३ ॥

हेदस्राशत्रूणामुपक्षपयितारावश्विनौ वांयुवयोर्दानाय अस्मदभिमताययुवाभ्यां वाहयितुं आववृतीय आवर्तयामियागदेशं वृतेरन्तर्भावितण्यर्थस्येदं केनसाधनेनेतितदुच्यते गोःस्तुतिरूपायावाचः ओहेनवहनेनसाधनेन यद्वा आवर्तनकालउच्यते गोर्गंत्र्याउषसोवहनेनजिव्रिः जीर्णोजयशीलोवातौग्र्योन तुग्राख्यस्यराज्ञःपुत्रोभुज्युरिव सयथाशत्रुभिःसंताड्यसमुद्रेपातितो-युवांपरितोष्यस्वोद्धारायस्वसमीपमानयततद्वदित्यर्थः इयमाख्यायिकातुग्रोहंभुज्युमंहसःपिपृथोनासत्याभुज्युमित्यादिषुप्रसिद्धाच किमाश्चर्यमहमावर्तयामीति किन्तु अपः क्षोणी अपइत्यन्तरिक्षनाम क्षोणी क्षोणीतिपृथिवीनाम द्यावापृथिव्यावपिवांयुवयोर्माहिनामाहात्म्येनयुवयोःप्रसादेनसर्वोपकारिण्याविति ख्यातिं सर्वप्रदेशव्यापित्वं वा सचते सेवतेप्रत्येकं यद्वा वांमाहिनायोयजमानोद्यावापृथिव्यौसचते किञ्च हेयजत्रायष्टव्यौवांयुवयोः प्रसादादयमृषिः जूर्णः जरयाजीर्णाङ्गःसन्नंहसःपापात् जरालक्षणात्प्रमुच्य अक्षुः चिरकालव्याप्तोदीर्घजीवीभूयात् यद्वा हेयजत्रा वांप्रसादात् जूर्णो जीर्णोयजमानः अंहसोदुरितस्यहन्त्रीरपः उक्तलक्षणानिसोमरसरूपाण्युदकानिक्षोणीक्षोण्यां सप्तम्यर्थेप्रगृह्यम् भूम्यांचिरकालं अक्षुर्व्याप्तःसन् महिनामाहात्म्येनसचते द्वितीयोवामित्ययमादरार्थः ॥ ५ ॥

५. अश्विनीकुमारो, बूढ़े तुग्र राजा के पुत्र की तरह मैं स्तुति-द्वारा अभिमत लाभ के लिए तुम्हें यज्ञ-देश में ले आऊँगा। तुम्हारी महिमा से द्यावा-पृथिवी परस्पर मिली हैं। यजनीय अश्विद्वय, यह जराजीर्ण ऋषि पापमुक्त होकर दीर्घ जीवन लाभ करें।

॥ इतिद्वितीयस्यचतुर्थेत्रयोविंशोवर्गः ॥२३॥

अथषष्ठी–

नियद्युवेथेनियुतःसुदानूउपस्वधाभिःसृजथःपुरंधिम् ।
प्रेषद्वेषद्वातोनसूरिरामहेददेसुव्रतोनवाजम् ॥ ६ ॥

१ ऋ० सं० १. ८. ८.।

नि । यत् । युवेथे इति । निऽयुतः । सुदानू इति सुऽदानू । उप ।
स्वधाभिः । सृजथः । पुरम्ऽधिम् । प्रेषत् । वेषत् । वातः । न । सूरिः ।
आ । महे । ददे । सुऽव्रतः । न । वाजम् ॥ ६ ॥

हेसुदानू शोभनदानावश्विनौ यत्यदानियुतोश्वान् नियुवेथेनियुआथेनियोजयथःताभिर-स्मद्यज्ञगमनायसंयुक्तोभवथः तदास्वधाभिरन्नैस्तत्कारणैरुदकैर्वापुरन्धिंबहूनांधात्रींपृथिवींउप-सृजथःउपसृष्टांकुरुतः एवंसति सूरिःस्तोतायोयजमानोवातोन वायुरिव तद्वत्क्षिप्रंयुवांप्रेषत् तर्पयतु वेषत् व्याप्नोतु कामयतांवा प्रीणातेर्वेतेश्चलेटिरूपे अनन्तरंसुव्रतोनं अतिप्रशस्तकृष्या-दिकर्मवानिव वाजमन्नंमहेमहत्त्वायअयंयजमानआददे आदत्तेस्वीकरोति आङोदोनास्यविहरणे इत्यात्मनेपदं लोपस्तआत्मनेपदेष्वितितलोपः यद्वा छान्दसेलिटिरूपम् स्वीकृत्यस्वमहत्त्वाययुवा-मेवतर्पयत्वित्यर्थः ॥ ६ ॥

६. शोभन दानवाले अश्विद्वय, जिस समय तुम नियुत नाम के घोड़ों को जोतते हो, उस समय अन्न से पृथिवी को भर देते हो; इसलिए वायु की तरह स्तोता शीघ्र तुम दोनों को तृप्त और व्याप्त करें। उत्तम कर्मवाले व्यक्ति की तरह स्तोता अपने महत्त्व के लिए अन्न स्वीकार करते हैं।

वयंचिद्धिवांजरितारःसत्याविपन्यामहेविपणिर्हितावान् ।
अधाचिद्धिष्माश्विनावनिन्द्यापाथोहिष्मावृषणावन्तिदेवम् ॥७॥

वयम् । चित् । हि । वाम् । जरितारः । सत्याः । विपन्यामहे ।
वि । पणिः । हितऽवान् । अध । चित् । हि । स्म । अश्विनौ ।
अनिन्द्या । पाथः । हि । स्म । वृषणौ । अन्तिऽदेवम् ॥ ७ ॥

वयंचिद्धि वयमपिजरितारः तवस्तोतारःसत्याःसत्यफलाःसन्तोविपन्यामहेविविधंस्तुमः पणिःपणाधारोद्रोणकलशोविहितवान् स्थापितरसवानासीत् यद्वा पणिर्वणिक्लुब्धकःअयष्टा-हितवान्नियतधनोधनाढ्योप्ययष्टा वि वियुज्यतां उपसर्गश्रुतेर्योग्यक्रियाध्याहारः अध अपिच चिद्धिष्मएतेत्रयःपूरणाः हेअश्विनौ अनिन्द्यामशस्यनामैतत् हेमशस्यौवृषणौ हेका-मानांवर्षितारौ युवां अन्तिदेवंदेवानामन्तिके पाथः सोमंपिबथःयद्वा अन्तिकेवर्तमानं देवान्प्रामु-वानं सोममितियोज्यम् ॥ ७ ॥

७. हम भी तुम्हारे स्तोता और सत्यप्रतिज्ञ होकर विभिन्न स्तव करते हैं। द्रोण-कलश स्थापित हुआ है। हे स्तुतिपात्र और अभीष्टवर्षी अश्विनीकुमारो, देवों के पास सोमपान करो।

अथाष्टमी–

युवांचिद्धिष्मांश्विनावनुद्यून्विरुंद्रस्यप्रस्रवंणस्यसातौ ।
अगस्त्योंनरांनृषुप्रशंस्तःकारांधुनीवचितयत्सहस्रैः ॥ ८॥

युवाम् । चित् । हि । स्म । अश्विनौ । अनु । द्यून् । विऽरुंद्रस्य ।
प्रऽस्रवंणस्य । सातौ । अगस्त्यः । नराम् । नृषु । प्रऽशंस्तः ।
कारांधुनी इव । चितयत् । सहस्रैः ॥ ८ ॥

हेअश्विनौ युवां चिद्धिष्मेतित्रयःपूरणाः अनुद्यून् प्रतिदिनंविरुद्रस्यविशिष्टोष्णरूपदुःख-द्रावणस्यविविधरोरूयमाणद्रवणवतोवाप्रस्रवणस्य वृष्ट्युदकसंस्त्यायस्य सातौलाभेनिमित्त-भूतेसति अगस्त्यएतन्नामामहर्षिःनरांनेतॄणांकर्मनिर्वाहकानांमनुष्याणांनृषुयेषुतादृशामनुष्याः सन्ति तेषु प्रशस्तः प्रशस्यतरोयंसहस्रैः अपरिमितैःस्तोत्रैःचितयत्चेतयति स्तुत्याप्रबोधयति तत्र दृष्टान्तः—काराधुनीव काराशब्दस्तस्यधूनयिता उत्पादयिताशंखादिः सइव यद्वैतदप्यगस्त्यवि विशेषणं कारःशब्दयिताहोत्रादिः तस्यधुनिः कंपयिता प्रेरकइव इवेतिसंप्रत्यर्थे अस्त्युपमा-र्थस्यसंप्रत्यर्थेप्रयोगइतिनिरुक्तम्[1] ॥ ८ ॥

८. अश्विनीकुमारो, कर्मनिर्वाहक लोगों में श्रेष्ठ अगस्त्य ऋषि ग्रीष्म के दुःख निवारक स्त्रोत की प्राप्ति के लिए, शब्द उत्पन्न करनेवाले शङ्ख आदि की तरह, हजार स्तुतियों-द्वारा तुम्हें प्रतिदिन जगाते हैं।

अथनवमी–

प्रयद्वहेंथेमहिनारथंस्यप्रस्पन्द्रायाथोमनुंषोनहोतां ।
धत्तंसूरिभ्यंउतवास्वश्व्यंनासंत्यारयिषाचंःस्याम ॥ ९ ॥

प्र । यत् । वहेंथे इति । महिना । रथंस्य । प्र । स्पन्द्रा । याथः ।
मनुंषः । न । होतां । धत्तम् । सूरिऽभ्यंः । उत । वा । सुऽअश्व्यम् ।
नासंत्या । रयिऽसाचंः । स्याम ॥ ९ ॥

हेअश्विनौ युवांरथस्यगमनसाधनस्यमहिनामहत्त्वेन यत् यस्मात्प्रवहेथे धारयेथेयज्ञं यद्वा रथस्यस्वर्गगमनसाधनस्ययागस्यधुरंवहतः तथाहेस्पन्द्रा स्पन्दनशीलौयुवां याथोगच्छथः स्व-

१ नि० ७. ३१. ।

स्थानंयज्ञारंभेआगच्छथः यज्ञसमाप्तौपुनर्गच्छथश्च तत्रदृष्टान्तः—मनुषोहोतान मनुष्यस्ययजमानस्य होतायथायज्ञप्रारंभे आगच्छति कर्मण्यप्रवृत्ते पुनर्निर्गच्छति तद्वत् आगमनसमये सूरिभ्यः स्तोतृभ्यः धत्तं धारयतं फलं उतवा स्वश्व्यंशोभनाश्वसमूहंधत्तं नासत्या सत्सुभवौ सत्यौ नसत्यौअसत्यौ नअसत्यौनासत्यौ हेतादृशौ त्वदनुग्रहाद्दयिसाचोधनसमवायिनः स्याम भवेम ॥ ९ ॥

९. अश्विनीकुमारो, तुम रथ की महिमा से यज्ञ धारण करो। गतिशील अश्विनीकुमारो, यजमान के होता की तरह तुम गमनागमन करो। स्तोताओं को बल दो, उत्तम घोड़े दो। फलतः हे नासत्यद्वय, हम धन प्राप्त करेंगे।

तंवांरथंवयमद्याहुंवेमस्तोमैरश्विनासुवितायनव्यम् ।
अरिष्टनेमिंपरिद्यामियानंविद्यामेषंवृजनंजीरदानुम् ॥ १०॥२४॥

तम् । वाम् । रथम् । वयम् । अद्य । हुवेम । स्तोमैः । अश्विना ।
सुवितार्य । नव्यम् । अरिष्टऽनेमिम् । परि । द्याम् । इयानम् ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ १० ॥ २४ ॥

हेअश्विनाअश्विनौ वांयुवयोःसवन्धिनंतंशीघ्रगमनेनस्तुत्यंरथंवयमगस्त्याअद्यास्मिन्सुत्येहनिहुवेम आह्वयेम केनसाधनेनेतिउच्यते स्तोमैःस्तोत्रैःकिमर्थंसुवितायसुष्ठुप्राप्तये कीदृशं नव्यं स्तुत्यंनूतनंवा तथाअरिष्टनेमिं अहिंसितचक्रवलयं द्यां परीयानंद्युलोकस्यपरितोगच्छन्तं विद्यामेत्यादिगतम् ॥ १० ॥

१०. अश्विद्वय, तुम्हारे स्तुतिपात्र, नये आकाशविहारी अभग्न चक्रवाले रथ की प्राप्ति के लिए स्तोत्र-द्वारा उसे बुलाते हैं, जिससे हम अन्न, बल और दीर्घायु प्राप्त कर सकें।

कदुप्रेष्ठाविति नवर्चं द्वितीयंसूक्तं आगस्त्यंत्रैष्टुभमाश्विनं कदुनवेत्यनुक्रान्तं प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगःपूर्वसूक्तएवोक्तः ॥

तत्रप्रथमा—

कदुप्रेष्ठाविषांरयीणामध्वर्यन्तायदुन्निनीथोअपाम् ।
अयंवांयज्ञोअकृतप्रशस्तिंवसुधितीअवितराजनानाम् ॥ १ ॥

कत् । ॐ इति । प्रेष्ठौ । इषाम् । रयीणाम् । अध्वर्यन्ता । यत् ।
उत्ऽनिनीथः । अपाम् । अयम् । वाम् । यज्ञः । अकृत ।
प्रऽशस्तिम् । वसुधिती इति वसुऽधिती । अवितारा । जनानाम् ॥१॥

हेअश्विनौ प्रेष्ठौप्रियतमौवांयुवांकदुकदा इषां इष्यन्तेइतिइषः तेषांइष्यमाणानामन्नानांरयीणां कर्मणिषष्ठ्यौ अन्नानिधनानिचउन्निनीथः ऊर्ध्वंप्रापयथः अध्वर्यंताअध्वरंपारयितुमिच्छन्तौयुवां अपांवृष्ट्युदकानांवृष्ट्युदकानिचोन्निनीथः उत्कृष्टं अधःप्रापयथइतियव तवकदाकस्मादेवमुच्यतइतिउच्यते अयंयज्ञोम्माभिरनुष्ठीयमानोवांयुवयोरेवप्रशस्तिंप्रशंसांस्तुतिमक्तकरोति यज्ञेशंसनीयानिशस्त्राणियुवामेवप्रशंसन्तीत्यर्थः यस्मादेवंतस्मात् हेवसुधिती वसुनोधनस्यधातारौ वस्तव्यकर्माणौ तथा हेजनानामवितारावुक्तलक्षणौयुवांकदान्नानांधनानांचदातारौभवथइति ॥ १ ॥

१. प्रियतम अश्विद्वय, तुम कब अन्न और धन को ऊपर के देश में ले जाओगे कि यज्ञ समाप्त करने की इच्छा करते हुए जल को नीचे गिराया जा सकेगा ? हे धनधारी के और मनुष्यों के आश्रयदाता अश्विद्वय, इस यज्ञ में तुम्हारी ही प्रशंसा की जाती है।

आवामश्वासःशुचयःपयस्पावातरंहसोदिव्यासोअत्याः ।
मनोजुवोवृषणोवीतपृष्ठाएहस्वराजोअश्विनावहन्तु ॥ २ ॥

आ । वाम् । अश्वासः । शुचयः । पयःऽपाः । वातऽरंहसः ।
दिव्यासः । अत्याः । मनःऽजुवः । वृषणः । वीतऽपृष्ठाः । आ । इह ।
स्वऽराजः । अश्विना । वहन्तु ॥ २ ॥

अश्विना अश्विनौशोभनाश्वयुक्तौ वांयुवां अश्वासः युष्मदीयाइहास्मिन्यज्ञेआवहन्तु प्रापयन्तु अवशिष्टान्यश्वविशेषणानि कीदृशास्ते शुचयः शुद्धादीप्तावा पयस्पाः वृष्ट्युदकस्य पातारःवातरंहसः वायुवेगाः दिव्याः दिविभवाः अत्याःअतनशीलाः मनोजुवःमनोजवाः वृषणोवर्षकायुवानइत्यर्थः वीतपृष्ठाःकान्तपृष्ठाः वपुष्मन्तइत्यर्थः स्वराजः स्वयमेवराजमानाः ईदृशाः वहन्तु ॥ २ ॥

२. अश्विद्वय, तुम्हारे दीप्तिशाली, वृष्टिपान करनेवाले, वायु की तरह वेगवाले, स्वर्गीय गतिशील, मन की तरह वेगवान् युवा और शोभन पृष्ठवाले अश्व तुम्हें इस यज्ञ में ले आयें।

आवांरथोवनिर्नप्रवत्वान्त्सृप्रवंन्धुरःसुवितायगम्याः ।
वृष्णःस्थातारामनसोजवीयानहंपूर्वोयजतोधिष्ण्यायः ॥ ३ ॥

आ । वाम् । रथः । अवनिः । न । प्रवत्वान् । सृप्रऽवन्धुरः ।
सुवितायं । गम्याः । वृष्णः । स्थातारा । मनसः । जवीयान् ।
अहम्ऽपूर्वः । यजतः । धिष्ण्या । यः ॥ ३ ॥

पूर्वमन्त्रेश्वव्याजेनाश्विनोरागमनमुक्तं अनेनरथव्याजेनोच्यते हेधिष्ण्याउन्नतस्थानार्हौ स्थातारास्वरथाधिष्ठानौ वांयुवयोर्योरथोस्तिससुवितायशोभनफलायागम्याः अस्मद्यज्ञमागच्छतु पुरुषव्यत्ययः कीदृशोरथइतिसविशेष्यते अवनिर्नंप्रवत्वान् भूमिरिवात्यन्तविस्तारवान्सूप्रवन्धुरः विस्तीर्णपुरोभागः वृष्णः वर्षकस्याश्वस्य मनसोपिजवीयान् मनोवेगवानित्यर्थः अहंपूर्वः अहंकारपूर्वः मनस्वीवात्युदारः यजतोयष्टव्यः ईदृशोरथआगच्छतु ॥ ३ ॥

३. हे ऊंचे स्थान के योग्य और रथासीन अश्विद्वय, भूमि की तरह अत्यन्त विस्तृत, उत्तम वन्धुरवाले, वर्षणसमर्थ, मन की तरह वेगवाले, अहंकारी और यजनीय रथ को यज्ञ में ले आइए।

इहेहजातासमवावशीतामरेपसातन्वा३नामभिःस्वैः।
जिष्णुर्वामन्यःसुमखस्यसूरिर्दिवोअन्यःसुभगःपुत्रऊहे ॥ ४ ॥

इहऽइह। जाता। सम्। अवावशीताम्। अरेपसा। तन्वा। नामऽभिः। स्वैः। जिष्णुः। वाम्। अन्यः। सुऽमखस्य। सूरिः। दिवः। अन्यः। सुऽभगः। पुत्रः। ऊहे ॥ ४ ॥

हेअश्विनौ युवांसमवावशीतांसहसम्यग्वा पुनःपुनः सूयेथेकामयेथांवायज्ञं पुरुषव्यत्यय कीदृशौयुवां इहेहजाता उभाभ्यामिहशब्दाभ्यांमध्यमोत्तमस्थानेउच्येते तयोःसंभूतौसूर्याचन्द्रमसावितियावत् सूर्याचन्द्रमसावित्येकइतिनिरुक्तम्। अरेपसाअपापौ आथर्वणस्यगुरोःशिरश्छेदनादिनापापलेपरहिताविति भावः आथर्वणायाश्विनादधीचेश्व्यंशिरःप्रत्यैरयतमित्यादि मैन्त्रवर्णात्। केनहेतुनेतिउच्यते—तन्वाशरीरेणशरीरसौन्दर्येणनिमित्तेन स्वैर्नामभिः स्वीयैर्माहात्म्यविशिष्टैः अश्विनौ नासत्यावित्यादिभिरपिरमणीयशरीरवत्त्वान्महिमोपेतनामवत्त्वाच्चहेतोःसंस्तूयेथेइत्यर्थः यद्वा अरेपसातन्वेतियोज्यं उक्तप्रकारेणगुरुशिरश्छेदादप्यपापेनशरीरेण तादृङ्महत्त्वख्यापनेनेतियावत् किञ्च वांयुवयोरन्यएकोमध्यमस्यान्तरिक्षस्यपुत्रः पुत्रस्थानीयः सोमः जिष्णुर्जयशीलः सुमखस्यशोभनस्ययज्ञस्य सूरिःप्रेरयितासन् ऊहे वहति विश्वंजगद्धारयति चन्द्रात्मनस्तस्योदयेसतिह्योषधिवनस्पत्यादयोवर्धन्ते अन्यः अपरः उत्तमस्थानोदिवोद्युलोकस्यपुत्रः पुत्रस्थानीयआदित्यः सुभगः शोभनरश्मिरूपधनः ऊहेवहतिकृत्स्नं एवंपृथक्जगन्निर्वाहकौमहानुभावौयुवांसहस्तूयेथे अत्रनिरुक्तम्—इहचेहचजातौसंस्तूयेथेपापेनालिप्यमानयातन्वा नामभिश्चस्वैर्जिष्णुर्वामन्यःसुमहतोबलस्येरयितामध्यमोदिवोन्यःसुभगःपुत्रऊह्यतआदित्यइति॥४॥

४. अश्विद्वय, तुमने सूर्य और चन्द्र के रूप से जन्म ग्रहण किया था। तुम पाप-शून्य हो। तुम्हारे शरीर-सौन्दर्य और नाम-महिमा के कारण मैं बार-बार तुम्हारी स्तुति करता हूँ। तुममें एक यज्ञ-प्रवर्त्तक होकर संसार को धारण करते हैं और दूसरे द्युलोक के पुत्र-रूप होकर विविध रश्मियों को धारण करते हुए संसार को धारण किये हुए हैं।

अथपञ्चमी–

प्रवांनिचेरुःककुहोवशाँअनुपिशङ्गरूपःसदनानिगम्याः ।
हरीअन्यस्यंपीपयंन्तवाजैर्मथ्नारजांस्यश्विनाविघोषैः ॥५॥२५॥

प्र । वाम् । निऽचेरुः । ककुहः । वशान् । अनु । पिशङ्गऽरूपः ।
सदनानि । गम्याः । हरी इति । अन्यस्य । पीपयन्त । वाजैः ।
मथ्ना । रजांसि । अश्विना । वि । घोषैः ॥ ५ ॥ २५ ॥

हेअश्विना अश्विनौ वांयुवयोर्मध्येअन्यस्यैकस्यककुहः श्रेष्ठः पिशङ्गरूपः हिरण्यरूपः पीतवर्णोवा बहुभिरक्षाद्यवयवैः निरूप्यमाणोवारथोवशान् अनुकामाननुलक्ष्ययथाकामं अस्मद्यज्ञागमनेच्छयेत्यर्थः यद्वा वशान्स्वाधीनाः ककुहः दिशः दिगन्तरालानुक्रमेणनीचैरुच्चैश्चरन् स्वस्थानाद्देवयजनाभिमुखंगच्छन्सदनानि अस्मद्यागगृहाणिप्रगम्याः प्रकर्षेणगच्छतु पुरुषव्यत्ययः अत्रयद्यप्यन्यस्येतिनोक्तं तथाप्युत्तरवाक्येतथोक्तत्वादत्रापिलक्ष्यते अन्यस्ययुवयोरन्यतमस्यहरी अश्वौ रजांसिलोकाः अत्रलोकशब्दोजनवाचकः तेयजमानरूपाजनाइत्यर्थः तेचमथ्नामथनेनालोडनेननिष्पादितैर्वाजैरन्नैरामिक्षादिरूपैर्घोषैः स्तुतिभिश्च आह्वानादिशब्दविशिष्टैर्वापीपयन्त आप्याययन्ति॥ ५ ॥

५. अश्विद्वय, तुममें से एक का श्रेष्ठ और पीतवर्ण रथ इच्छानुसार हमारे यज्ञ-गृह में आय और दूसरे के हरि नाम के अश्वों को मनुष्य लोग मथन-निष्पादित खाद्य और स्तुति से प्रसन्न करें।

॥ इतिद्वितीयस्यचतुर्थेपञ्चविंशोवर्गः ॥ २५ ॥

अथषष्ठी–

प्रवांशरद्वान्वृषभोननिष्षाट्पूर्वीरिषश्चरतिमध्वइष्णन् ।
एवैरन्यस्यंपीपयंन्तवाजैर्वेषन्तीरूर्ध्वानद्योनआगुः ॥ ६ ॥

प्र । वाम् । शरत्ऽवान् । वृषभः । न । निष्षाट् । पूर्वीः । इषः । चरति ।
मध्वः । इष्णन् । एवैः । अन्यस्य । पीपयन्त । वाजैः । वेषन्तीः ।
ऊर्ध्वाः । नद्यः । नः । आ । अगुः ॥ ६ ॥

हेअश्विनौ युवांयुवयोरन्यतमोमध्यमस्थानः शरद्वान् शरणवान्मेघः वृक्षपर्णादीनांविशरणवान् अथवावहुसंवत्सरः पूर्वतनोनित्यइत्यर्थः वृषभोनवर्षितैवेन्द्रः सइवशत्रूणांनिःषाट्निःसारयितासन् पूर्वीर्वह्वीः पुरातनीर्वाइषः अन्नानिसस्यादीन्युद्दिश्यप्रचरतिप्रकर्षेणगच्छति मध्यमस्थानश्चन्द्रइतिपक्षेशरद्वान्शरत्कालवान् तस्मिन्नृतौहिचन्द्रःसन्नद्धोभवति तेनचतृणगुल्मौषध्यादीनिवर्धन्ते सकिमर्थमेवंकरोतीतिउच्यते मध्वइष्णन् मधुनोमधुसदृशस्यहविषः कर्मणिषष्ठी हविरिच्छन्तदर्थमेवंकरोति तथान्यस्योत्तमादित्यस्यएवैः कामैः गमनैर्वानिमित्तभूतैः पीपयन्त आप्याययन्ति हविर्भिर्यजमानाः तुष्टेनतेनप्रेरिताः वेषन्तीः व्यापयन्तीः ऊर्ध्वाउन्नताउत्तीरानद्योन नदनशीलाय थानोस्मदर्थं आगुः आगच्छन्ति ॥ ६ ॥

६. अश्विद्वय, तुम्हारे बीच एक जन मेघों को विशीर्ण करते हैं। वे इन्द्र की तरह शत्रुओं को निकालते हुए हव्य की अभिलाषा से, बहुत अन्न-दान के लिए जाते हैं। दूसरे के गमन के लिए यजमान लोग हव्य-द्वारा उन्हें प्रसन्न करते हैं। उनके द्वारा भेजी हुई व्यापक और तट-लंघिनी नदियाँ हमारे पास आती हैं।

असर्जिवांस्थविंरावेधसागीर्बाह्ळेअश्विनात्रेधाक्षरन्ती ।
उपस्तुतावव्तंनाधमानंयामन्नयामञ्छृणुतंहवंमे ॥ ७ ॥

असर्जि । वाम् । स्थविरा । वेधसा । गीः । बाह्ळे । अश्विना ।
त्रेधा । क्षरन्ती । उपंऽस्तुतौ । अवतम् । नाधमानम् । यामन् ।
अयामन् । शृणुतम् । हवम् । मे ॥ ७ ॥

हेवेधसा विधातारावश्विनौ वांयुवयोः बाह्ळेदृढेरथैर्येनिमित्तभूतेसति गीःस्तुतिरूपावाक् असर्जिसृज्यते कीदृशीसा स्थविरा अत्यन्तंस्थिरा नित्यावेदमयी त्रेधामन्त्रादिभेदेनत्रिप्रकारा क्षरन्तीयुवां गच्छन्ती इदृशीस्तुतिःकृतेत्यर्थः तथाउपस्तुतौसन्तौनाधमानं अभिमतफलंयाचमानमवतंरक्षतंतर्पयतंवा किञ्च यामन्नयामन् गमनेअगमनेच मे हवमाह्वानंशृणुतम् ॥७॥

७. विधाता अश्विद्वय, तुम्हारी स्थिरता की प्राप्ति के लिए अत्यन्त स्थिर स्तुतियाँ बनाई जाती हैं। वह तीन तरह से तुम्हारे पास जाती हैं। तुम प्रशंसित होकर याचमान यजमान की रक्षा करो। जाकर या खड़े होकर उसका आह्वान सुनो।

उतस्यावांरुशतोवप्संसोगीस्त्रिबर्हिषिसदसिपिन्वतेनॄन् ।
वृषावांमेघोवृषणापीपायगोर्नसेकेमनुषोदशस्यन् ॥ ८ ॥
उत । स्या । वाम् । रुशतः । वप्संसः । गीः । त्रिऽबर्हिषि । सदसि ।
पिन्वते । नॄन् । वृषा । वाम् । मेघः । वृषणा । पीपाय । गोः ।
न । सेके । मनुषः । दशस्यन् ॥ ८ ॥

हेअश्विनौ वांयुवयोरुशतोदीप्तस्यवप्ससोरूपस्यैववपुषोवाख्यापयित्रीगीः स्तुतिवाक् त्रिबर्हिषित्रिधान्वास्तीर्णंबर्हिष्केसदसियागसदनेनॄन्कर्मनेतॄन् अस्मान्पिन्वतेआप्याययति आ-प्याययतुवोचितप्रदानादिना केनप्रकारेण उच्यते हेवृषणावर्षितारौकामानां वांयुवयोः स्वभूतो-मेघः सेक्ताजलदः प्रदानविशेषोवा वृषावर्षकःसन् मनुषोमनुष्यान्प्रतिदशस्यन्प्रयच्छन्पीपाय आप्याययति आप्यायनेदृष्टान्तः—गोर्नसेके उदकसेकइव सान्त्वनात्सेकउदकस्येव तद्यथा आ-प्याययतितद्वदित्यर्थः यद्वा नेतिसंप्रत्यर्थे गोरुदकस्यसेकेनिमित्तभूतेसतिपीपायेतिसंबन्धः ॥८॥

८. अश्विद्वय, तुम्हारी प्रदीप्त स्तुति कुशत्रय-युक्त यज्ञ-साधन-द्वारा यजमानों को प्रसन्न करे। अभीष्ट-वर्षिद्वय, तुम्हारा मेघ जल-वर्षण करते हुए जल-सेचन की तरह मनुष्यों को धन देकर प्रसन्न करे।

युवांपूषेवाश्विनापुरंन्धिरग्निमुषांनजरतेहविष्मान् ।
हुवेयद्वांवरिवस्यागृणानोविद्यामेषंवृजनंजीरदानुम् ॥ ९ ॥ २६॥

युवाम् । पूषाऽइव । अश्विना । पुरम्ऽधिः । अग्निम् । उषाम् । न । जरते । हविष्मान् । हुवे । यत् । वाम् । वरिवस्या । गृणानः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ९ ॥ २६॥

हेअश्विनौ युवांपुरन्धिर्बहुप्रज्ञः पूषेवपोषकइव हविष्मान्हविर्युक्तोजरतेस्तौति यद्वा पुरन्धिः बहूनांधारयित्रीपूषेवपृथिवीव द्वितीयार्थेप्रथमा तांयथास्तौतितद्वत् किमिव अग्निमुषांन अग्नि-मुषसंचयथातथायुवामपिप्रातरनुवाकाश्विनशस्त्रयोराश्विनक्रतुवदाग्नेयोषस्ययोरपिसद्भावादि-तिभावः कदेत्याह यत्यदावरिवस्यावरिवस्ययापरिचर्ययायुक्तोगृणानः स्तोतावांयुवांहुवेस्तौति तदायजमानोपिजवतइत्यर्थः विद्यामेत्यादिगतम् ॥ ९ ॥

९. अश्विद्वय, पूषा की तरह बहुप्रज्ञाशाली और हविष्मान् यजमान, अग्नि और उषा की तरह तुम्हारी स्तुति करता है। जिस समय पूजा-परायण स्तोता स्तुति करता है, उस समय यजमान भी स्तुति करता है, जिससे हम अन्न, बल और दीर्घ आयु प्राप्त कर सकें।

॥ इतिद्वितीयस्यचतुर्थेषड्विंशोवर्गः ॥ २६ ॥

अभूदिदमित्यष्टर्चंतृतीयंसूक्तमाश्विनंजागतं अवविद्धमितिषष्ठी तद्वान्नरानासत्यावित्यष्ट-मीचोभेत्रिष्टुभौ अभूदिदमष्टौपठचन्त्येत्रिष्टुभावित्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोर्जाग-तेछन्दस्यस्यविनियोगः—तथाचसूत्रितम् अभूदिदंयोवांपरिज्मेतित्रीणि ।

अभूदिदंवयुनमोषुभूषतारथोवृषण्वान्मदतामनीषिणः ।
धियंजिन्वाधिष्ण्याविश्पलावसूदिवोनपातासुकृतेशुचिव्रता ॥१॥

अभूत् । इदम् । वयुनम् । ओ इति । सु । भूषत । रथः । वृषण्ऽवान् ।
मदत । मनीषिणः । धियम्ऽजिन्वा । धिष्ण्या । विश्पलावसू इति ।
दिवः । नपाता । सुऽकृते । शुचिऽव्रता ॥ १ ॥

हेमनीषिणः मनस्विनोमेधाविनऋत्विजः अस्माकमिदंवयुनंप्रज्ञानमभूत् उत्पन्नं कीदृशंतदिति उच्यते वृषण्वान् अभिमतवर्षणवान् रथः अश्विनोःसंबन्धीगमनसाधनोरथः आगतइतिशेषः तत्स्थावश्विनौओषुभूषत ओइतिनिपातद्वयसमुदायात्मकैकोनिपातः सुष्ठ्वाभूषत अभिमुखाभवतस्तोतुं तादृशौमहानुभावावश्विनौमदत अन्तर्भावितण्यर्थोयं मादयतसंभावयत अश्विनौविशेष्येते सुकृते सुष्ठुकृतवते मह्यंधियंजिन्वा कर्मणोबुद्धेर्वाप्रीणयितारौधिष्ण्याधिषणार्हौस्तुत्यौ विश्पलावसू विशांप्रजानांअस्माकंपालयितृधनौविश्पलाख्यायाःछिन्नजङ्घायाः हिरण्मयजंघाप्रदानेनतथाभूतौ सद्योजंघामायसींविश्पलायाइत्यादिनिगमः । दिवः आदित्यस्यनपाता नप्तारौ नपातयितारौवा शुचिव्रता दीप्तकर्माणौ ईदृशावश्विनौमदत ॥ १ ॥

१. मनीषी ऋत्विको, हमारी ऐसी धारणा हो रही है कि अश्विनीकुमारों का अभीष्टवर्षी रथ उपस्थित है। उसके आगे जाकर उनकी प्रतीक्षा करो। वे पुण्यात्माओं के कर्म को करते हैं। वे स्तुतियोग्य हैं। उन्होंने विश्पला का भला किया था। वे स्वर्ग के नप्ता हैं। उनका कर्म शुचि है।

इन्द्रतमा हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा ।
पूर्णं रथं वहेथे मध्व आचितं तेन दाश्वांसमुप याथो अश्विना ॥ २ ॥
इन्द्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा । रथ्या ।
रथिऽतमा । पूर्णम् । रथम् । वहेथे इति । मध्वः । आऽचितम् । तेन ।
दाश्वांसम् । उप । याथः । अश्विना ॥ २ ॥

हेअश्विनौ युवामिन्द्रतमाहि ईश्वरतमौखलु एवंप्रतिविशेषणंहिःसंबंध्यः तथा धिष्ण्या स्तुत्यर्हौ मरुत्तमा मरुद्वद्वेगगामिनौमितरागिणौमितराविणौवा दस्रा उपक्षपयितारौशत्रूणां दंसिष्ठा अतिशयकर्माणौ रथ्यारथार्हौरथवन्तौ यथारथिनोनेतारः तेषांश्रेष्ठौरथीरध्वराणामितिनेतृपरतयाव्याख्यातत्वात् ईदृशौयुवांमध्वोमधुसदृशस्योदकस्यामृतस्यवापूर्णंपूरितं आचितंसर्वतः सन्नद्धंरथं वहेथे नयथः तेनोक्तगुणविशिष्टेनरथेन हेअश्विना अश्विनौउक्तगुणविशिष्टौ सन्तौ दाश्वांसंउपयाथः यज्ञमभिमामुथः ॥ २ ॥

२. अश्विद्वय, तुम अवश्य ही इन्द्रश्रेष्ठ, स्तुति-योग्य, मरुत्श्रेष्ठ, शत्रुनाशक, उत्कृष्टकर्मचारी, रथवान् और रथियों में उत्तम हो। तुम मधुपूर्ण हो। तुम चारों ओर सन्नद्ध रथ को ले जाते हो। उसी रथ पर कृपा करके हव्यदाता के पास जाओ।

किमत्रंदस्राकृणुथःकिमासाथेजनोयःकश्चिदहविर्महीयते।
अतिक्रमिष्टंजुरतंपणेरसुंज्योतिर्विप्रायकृणुतंवचस्यवे॥ ३ ॥

किम्। अत्र। दस्रा। कृणुथः। किम्। आसाथे इति। जनः।
यः। कः। चित्। अहविः। महीयते। अति। क्रमिष्टम्। जुरतम्।
पणेः। असुम्। ज्योतिः। विप्राय। कृणुतम्। वचस्यवे॥ ३ ॥

हेदस्रा उपक्षपयितारौयुवां अत्रास्मिन्मनुष्येकिंकृणुथः कुरुथः हविषोभावादितिभावः तत्रैवकिमासाथे किंतिष्ठथः अत्रेत्युक्तंकुत्रेत्याह—यःकश्चिज्जनोजन्मवान् अहविः यज्ञार्थहवीरहितोमहीयतेपूज्यतेस्वयंनयुष्मान्पूजयति तंजनमतिक्रमिष्टंपराभूयतिष्ठतं नकेवलमतिक्रममात्रं किन्तु पणेर्वणिग्भूतस्यलुब्धकस्यायष्टुः तस्यासुंप्राणंजुरतं आहिंसिष्टं अनीनशतं विप्रायमेधाविनेवचस्यवे वचसःस्तोत्ररूपस्ययुवाभ्यामिच्छतेमह्यंज्योतिःकृणुतं युष्मद्यजनविषयज्ञानंकुरुतम्॥ ३॥

३. अश्विद्वय, यहाँ क्या करते हो? यहाँ क्यों हो? हव्य-शून्य जो कोई व्यक्ति पूजनीय हुआ हो, उसे परास्त करो। पणि या अयाज्ञिक का प्राण नाश करो। मैं मेधावी की और तुम्हारी स्तुति का अभिलाषी हूँ। मुझे ज्योति दो।

जंभयतमभितोरायतःशुनोहतंमृधोविदथुस्तान्यश्विना।
वाचंवाचंजरितूरत्निनींकृतमुभाशंसंनासत्यावतंमम॥ ४॥

जंभयतम्। अभितः। रायतः। शुनः। हतम्। मृधः। विदथुः।
तानि। अश्विना। वाचम्ऽवाचम्। जरितुः। रत्निनीम्। कृतम्।
उभा। शंसम्। नासत्या। अवतम्। मम॥ ४ ॥

हेअश्विनौ रायतःनिन्दतः शब्दयतोस्मानहन्तुं आगच्छतोवा शुनः श्वसदृशानभितोजंभयतंनाशयतं तथामृधस्तेषांसङ्ग्रामान् सङ्ग्रामंकुर्वतोवा हतं मारयतं तानिहननोपायान् विदथुः जानीथः किञ्च जरितुर्युष्मान् स्तोतुर्वाचंवाचंतांतांस्तुतिलक्षणांवाचंरत्निनीं कृतंसर्वामपिस्तुतिंरमणीयफलवतीं कुरुतं हेनासत्या सत्यभूतौ युवामुभाउभौ ममशंसंमदीयांस्तुतिं अवतं रक्षतम्॥ ४ ॥ ४. अश्विद्वय, जो कुत्ते की तरह जघन्य शब्द करते हुए हमारे विनाश के लिए आते हैं, उन्हें नष्ट करो। वे लड़ाई करना चाहते हैं, उन्हें मार डालो। उन्हें मारने का उपाय तुम जानते हो। जो तुम्हारी स्तुति करता है, उसकी प्रत्येक कथा को रत्नवती करो। नासत्यद्वय, तुम दोनों मेरी स्तुति की रक्षा करो।

अथपञ्चमी–

युवमेतंचक्रथुःसिन्धुषुप्लवमात्मन्वन्तंपक्षिणंतौग्र्यायकम् ।
येनदेवत्रामनसानिरूहथुःसुपप्तनीपेतथुःक्षोदसोमहः ॥ ५ ॥२७॥

युवम् । एतम् । चक्रथुः । सिन्धुषु । प्लवम् । आत्मन्ऽवन्तम् । पक्षिणम् । तौग्र्याय । कम् । येन । देवऽत्रा । । मनसा । निःऽऊहथुः । सुऽपप्तनि । पेतथुः । क्षोदसः । महः ॥ ५ ॥ २७ ॥

हेअश्विनौ युवंयुवां सिन्धुषुसमुद्रोदकेषुएतंप्लवं प्रसिद्धप्लुतिसाधनं प्लवंनावं आत्मन्वन्तं दार्ढ्यवन्तं पक्षिणं पक्षवद्गतिसाधनरथवन्तं तौग्र्यायतुग्रनाम्नोराज्ञःपुत्राय भुज्युनाम्नेराज्ञेकंसुखकरंचक्रथुः तौग्र्योभुज्यूराजासमुद्रवर्तीससेनः परचक्रंप्रमथितुंप्रस्थितः तंप्रतीपबलान्यागत्यापातयन् सचप्रसादफलकराश्विनौस्तुत्वास्वात्मानंचररक्षेत्ययमितिहासोबहुधापूर्वंप्रपञ्चितः यद्वा कमितिपदपूरणः तस्यजलसञ्चारिरथस्य सहायभूतान्बहून्रथादीनकुरुतमित्यर्थः अयमर्थस्तुतमूहथुर्नौभिःश्वतस्रोनावस्त्रिभीरथैरित्यादिमन्त्रान्तरेषुप्रसिद्धः । येनयुष्मद्दत्तेनप्लवेनदेवत्रादेवेषुमध्येमनसानुग्रहयुक्त्याबुद्ध्यायेनमनसेतिवायोज्यं निरूहथुः निर्गमनंकुरुथः तथासुपप्तनिशोभनपतनंयथाभवति सुपतनौयुवांमहोमहतःक्षोदसः उदकनामैतत् उदकात्पेतथुः तदधःपतथ उत्तरीतुम् ॥ ५ ॥

५. अश्विद्वय, तुग्र राजा के पुत्र के लिए तुमने समुद्र-जल में प्रसिद्ध, दृढ़ और पक्ष-विशिष्ट नौका बनाई थी। देवों में तुमने ही अनुग्रह करके नौका-द्वारा उसको निकाला था। अनायास आकर तुमने महा-समुद्र से उसका उद्धार किया था।

॥ इतिद्वितीयस्यचतुर्थेसप्तविंशोवर्गः ॥ २७ ॥

अथषष्ठी–

अववि॑द्धंतौग्र्यम॒प्स्व१॒॑न्तरंनारंभणेतम॑सिप्रविद्धम् ।
चतस्रोनावोजठलस्यजुष्टाउदश्विभ्यामिषिताःपारयन्ति ॥ ६ ॥

अवऽविद्धम् । तौग्र्यम् । अप्ऽसु । अन्तः । अनारंभणे । तमसि । प्रऽविद्धम् । चतस्रः । नावः । जठलस्य । जुष्टाः । उत् । अश्विऽभ्याम् । इषिताः । पारयन्ति ॥ ६ ॥

---

१ ऋ० सं० १.८.८ ।

अप्स्वन्तर्मध्येअववविद्धंअवस्ताच्छत्रुभिःपातितं अनारंभणेआलंभनरहिते तमसितमोवत्तमः दृष्टिश्वासादिप्रतिबन्धकेजलमध्येप्रविद्धंप्रकर्षेणपीडितंतौग्र्यंभुज्युंजठलस्यजठरस्यजठरवदुदकधारकस्यमध्येजुष्टाः सेविताः यद्वा कर्मणिषष्ठी जठरंप्राप्ताः अन्तर्जलंप्रविष्टाः अश्विभ्यामिषिताः चतस्रोनावउत्पारयन्ति ऊर्ध्वंप्रापयन्ति ॥ ६ ॥

६. जल के बीच, निम्नमुख गिराया हुआ तुग्रपुत्र अवलम्बनरहित अन्धकार के बीच अतीव पीड़ित हुआ था। अश्विद्वय की प्रेरित जल के बीच प्रविष्ट चार नौकायें उसे मिली थीं।

कःस्विंद्वृक्षोनिष्ठितोमध्येअर्णसोयंतौग्र्योनाधितःपर्यषंस्वजत्।
पर्णामृगस्यंपतरोंरिवारभउदंश्विनाऊहथुःश्रोमंतायकम् ॥ ७ ॥

कः। स्वित्। वृक्षः। निःऽस्थितः। मध्ये। अर्णसः। यम्। तौग्र्यः। नाधितः। परिऽअसंस्वजत्। पर्णा। मृगस्यं। पतरोःऽइव। आऽरभें। उत्। अश्विना। ऊहथुः। श्रोमताय। कम् ॥ ७ ॥

कःस्विव कश्चिदनुग्राहकोवृक्षः वृक्षविकारोरथः विकारेप्रकृतिशब्दः यद्वा संस्तवाभिप्रायमेतत् स्तोत्राख्योवृक्षइत्यर्थः कीदृशोरथः निष्ठितः निश्चलंवर्तमानः कुत्रेतिउच्यते अर्णसः उदकस्यमध्येयंवृक्षंतौग्र्यः तुग्रपुत्रोभुज्युर्नाधितोयाचमानः पर्यषस्वजत् परिष्वङ्गमकरोत् आलम्बने दृष्टान्तः—पतरोः पतनशीलस्यमृगस्यमार्जयितुः शोधयितुर्हिंसकादेरारभे आलंबनायपर्णानीव तानियथा आलंबनायप्रभवन्ति तद्वत् हेअश्विनौ श्रोमतायकीर्तिमत्त्वायउदूहथुः ऊर्ध्वं प्रापयथः स्तुतिपक्षे स्तोत्राख्यंवृक्षमाश्रितवन्तंतमूहथुरित्यर्थः ॥ ७ ॥

७. तुग्रपुत्र ने याचमान होकर जल के मध्य जिस निश्चल वृक्ष का आलिंगन किया था, वह वृक्ष क्या है? अश्विद्वय, तुमने उसे सुरक्षित उठाकर विपुल कीर्त्ति प्राप्त की है।

अथाष्टमी—

तद्वांनरानासत्यावनुंष्याद्यद्वांमानांसउचथमवोचन्।
अस्मादद्यसदंसःसोम्यादाविद्यामेषंवृजनंजीरदानुम् ॥८॥२८॥

तत्। वाम्। नरा। नासत्यौ। अनु। स्यात्। यत्। वाम्। मानांसः। उचथम्। अवोचन्। अस्मात्। अद्य। सदंसः। सोम्यात्। आ। विद्याम। इषम्। वृजनम्। जीरऽदानुम् ॥ ८ ॥ २८ ॥

हेनरा नेतारौकर्मणोनराकारौवा हेनासत्या असत्यरहितौसत्यफलौवा वांयुवांतत्त्वादृशं स्तोत्रंअनुस्यात् अनुकूलंभवतु अनुभवतुवा वांतदित्युक्तंयदित्याह वांप्रतिमानासः पूजावन्तोस्मदीयाहोत्रादयोयत् उचथंस्तोत्रमवोचन् अकुर्वन् तद्वामनुष्यात् हेअश्विनौ अद्यास्मिन्प्रधानयागदिने अस्मादस्माभिः क्रियमाणात् सदसःसंबन्धिनः सोम्यात्सोमयागसंपादकात् आइत्यप्यर्थे अस्माभिर्यजमानैरद्यक्रियमाणादपिस्तोत्रात्प्रीणयतमिति विद्यामेतिगतम् ॥ ८ ॥

८. नराकर अश्विद्वय, तुम्हारे पूजकों ने जो स्तव किया है, उसे तुम ग्रहण करो। अश्विद्वय, आज यज्ञ के सोम-याग-सम्पादक स्तोत्र में व्रती बनो, जिससे हम अन्न, बल और धन प्राप्त करें।

॥ इतिद्वितीयस्यचतुर्थेष्टाविंशोवर्गः ॥ २८ ॥

तंयुञ्जाथामितिषळृचंचतुर्थंसूक्तंत्रैष्टुभमागस्त्यंआश्विनं अनुक्रमणिका—तंयुञ्जाथांषट्।

तत्रप्रथमा—

तंयुञ्जाथांमनसोयोजवीयान्त्रिवन्धुरोवृषणायस्त्रिचक्रः।
येनोपयाथःसुकृतोदुरोणंत्रिधातुनापतथोविर्नपर्णैः ॥ १ ॥

तम्। युञ्जाथाम्। मनसः। यः। जवीयान्। त्रिऽवन्धुरः। वृषणा। यः। त्रिऽचक्रः। येन। उपऽयाथः। सुऽकृतः। दुरोणम्। त्रिऽधातुना। पतथः। विः। न। पर्णैः ॥ १ ॥

हेवृषणा वर्षकौकामानांयुवांतंवक्ष्यमाणगुणविशिष्टंरथंयुञ्जाथांयोजयतं तमित्युक्तंकमित्याह योरथःत्रिवन्धुरः त्रिप्रकारसारथिस्थानः वन्धुरंरथिनःस्थानमित्याहुः आयाह्यर्वाङुपवन्धुरेष्ठाइत्यादिमन्त्रान्तरात्।[1] यश्च त्रिचक्रः चक्रत्रितयोपेतः पुनःसएवविशेष्यते येनरथेनोपयाथःउपागच्छथः किं सुकृतः शोभनसोमाख्यकर्मवतोयजमानस्यदुरोणं गृहनामैतत् यागगृहंयेनेत्युक्तंकेनेत्याह त्रिधातुनात्रिप्रकारस्थानोपेतेनसुवर्णरजतताम्रधातुत्रयोपेतेनवारथेन गमनेदृष्टान्तः—विर्नपर्णैः पक्षीपक्षैर्यथाशीघ्रमप्रयत्नेनगच्छति तद्वदुक्तलक्षणेनरथेनपतथः गच्छथः ॥ १ ॥

१. अभीष्टवर्षी अश्विद्वय, जो रथ मन की अपेक्षा भी वेगशाली है, जिसमें तीन सारथि-स्थान और तीन चक्र हैं, जो अभीष्टवर्षी और धातुत्रय-विशिष्ट है, जिस रथ पर चढ़कर जैसे पक्षी पक्षों के बल जाता है, वैसे ही तुम सुकृतकारी के घर जाते हो, उसी रथ को तैयार करो।

सुवृद्रथोवर्ततेयन्नभिक्षांयत्तिष्ठथःक्रतुमन्तानुपृक्षे।
वपुर्वपुष्यासचतामियंगीर्दिवोदुहित्रोषसासचेथे ॥ २ ॥

---

[1] ऋ० सं० ३. ३. ७।

सुऽवृत् । रथः । वर्तते । यन् । अभि । क्षाम् । यत् । तिष्ठथः ।
क्रतुऽमन्ता । अनु । पृक्षे । वपुः । वपुष्या । सचताम् । इयम् ।
गीः । दिवः । दुहित्रा । उषसा । सचेथे इति ॥ २ ॥

हेअश्विनौ युवयोरथः सुवृत्शोभनवर्तनः शोभनचक्रपरिभ्रमणः यन्गच्छन् क्षाममभिवर्तते देवयजनभूमिंप्रतिगच्छति यत्वयंरथंक्रतुमन्तासंकल्पवन्तौकर्मवन्तौवापृक्षे अन्ननामैतत् हविषि निमित्तभूतेसति अनु अधीत्यर्थे अधितिष्ठथः आश्रयथः तादृशोरथोदेवयजनंप्रत्यागतइत्यर्थः अनन्तरंवपुष्यायुष्मद्वपुषिहिताशरीरवर्धनीयंगीः इदानींक्रियमाणप्रकारास्तुतिरूपावाक् वपुः सचतांयुवांचदिवोद्युलोकस्यादित्यस्यवादुहित्रादुहितृस्थानीयया उषसा उषोदेवतयासचेथे यज्ञं सङ्गच्छेथे उषस्याश्विनयोःसमानकालत्वादितिभावः ॥ २ ॥

२. अश्विनीकुमारो, तुम संकल्पवान् होकर हव्य के लिए जिस रथ पर चढ़ते हो, वही तुम्हारा भली भाँति आवर्त्तनकारी रथ, देवयजन भूमि के सामने, जाता है। तुम्हारे शरीर की हितकारी स्तुति तुम्हारे साथ मिले। तुम द्युलोक की पुत्री उषा के साथ मिलो।

आतिष्ठतंसुवृतंयोरथोवामनुव्रतानिवर्ततेहविष्मान् ।
येनंनरानासत्येषयध्यैवर्तिर्याथस्तनंयायत्मनेच ॥ ३ ॥

आ । तिष्ठतम् । सुऽवृतम् । यः । रथः । वाम् । अनु । व्रतानि ।
वर्तते । हविष्मान् । येन । नरा । नासत्या । इषयध्यै । वर्तिः ।
याथः । तनयाय । त्मने । च ॥ ३ ॥

हेअश्विनौ वांयुवांसुवृतं शोभनवर्तनंरथं आतिष्ठतं आश्रयतं योरथोहविष्मान् षष्ठ्यर्थे प्रथमा हविष्मन्तोयजमानस्यव्रतानिकर्माण्यनुवर्तते यद्वा यजमानायदत्तहविषातद्वान्येनचरथेनहेनरानेतारौहेनासत्या असत्यरहितौ युवामिषयध्यै यज्ञंप्राप्तुमिच्छतमितिशेषः तेनरथेनवर्तिः गृहनामैतत् यजमानस्ययज्ञगृहं तनयाय पुत्रलाभायत्मनेआत्महितायचयाथः ॥ ३ ॥

३. अश्विद्वय, जो रथ हविवाले यजमान के कर्म का लक्ष्य करके जाता है, हे नराकार नासत्यद्वय, तुम जिस रथ से यज्ञ-शाला जाने की इच्छा करते हो, उसी अच्छी तरह आवर्त्तनकारी रथ पर चढ़कर यजमान के पुत्र और अपने हित की प्राप्ति के लिए यज्ञ-गृह में जाओ।

मावांवृकोमावृकीरादधर्षीन्मापरिवर्क्तमुतमातिधक्तम् ।
अयंवांभागोनिहितइयंगीर्दस्राविमेवांनिधयोमधूनाम् ॥ ४ ॥

मा । वाम् । वृकः । मा । वृकीः । आ । दधर्षीत् । मा । परि ।
वर्क्तम् । उत । मा । अति । धक्तम् । अयम् । वाम् । भागः ।
निऽहितः । इयम् । गीः । दस्रौ । इमे । वाम् । निऽधयः । मधूनाम् ॥ ४ ॥

हेदस्रौशत्रूणामुपक्षपयितारावश्विनौ वांयुवयोरनुग्रहादितिशेषः वृकोहिंसकोरण्यश्वादिर्मादधर्षीत् धर्षणंमाकार्षीन्मां तथावृकीः वृक्योहिंसकाःअन्याअपिमादधर्षीत् वचनव्यत्ययः धर्षणंमाकार्षुः युवामेववामादधर्षीदितियोज्यं तथा युवांमापरिवर्क्तं परितोमावर्जयतंमां उतअपिच मातिधक्तं अस्मानतिक्रम्यान्यस्मैमादत्तं किमर्थमेवमितिउच्यते वांयुवयोरर्थायभागोभजनीयोहविरंशोनिहितः तथेयंचगीः स्तुतिरूपावागपिनिहितेतिशेषः हेदस्रावश्विनौवांयुवाभ्यां इमे इमानिमधूनांसोमरसानांनिधयोनिधानानिस्थापितानि ॥ ४ ॥

४. अश्विद्वय, तुम्हारी कृपा से वृक और वृकी मुझे न रगड़ें। मुझे छोड़कर दूसरे को दान नहीं करना। अश्विनीकुमारो, यही तुम्हारा हव्य-भाग है, यही तुम्हारी स्तुति है, यही तुम्हारे लिए सोमरस का पात्र है।

युवांगोतमःपुरुमीळ्होअत्रिर्दस्राहवतेवसेहविष्मान् ।
दिशंनदिष्टामृजूयेवयन्तामेहवंनासत्योपयातम् ॥ ५ ॥
युवाम् । गोतमः । पुरुऽमीळ्हः । अत्रिः । दस्रा । हवते । अवसे ।
हविष्मान् । दिशम् । न । दिष्टाम् । ऋजुयाऽइव । यन्ता । आ ।
मे । हवम् । नासत्या । उप । यातम् ॥ ५ ॥

हेदस्रा दस्रौ अश्विनौयुवांगोतमश्चपुरुमीळ्हश्चअत्रिश्चमहर्षयश्चएतेष्वेकैकोहविष्मान्सन् अवसेयुष्मत्तर्पणाययुष्मद्रक्षणायवाहवते आह्वयति एवमहमपि आह्वयामि फलसाधनाह्वानेदृष्टान्तः—यन्ताउपगन्ता उपगन्तुकामः ऋजूयाइव द्वितीयायाआकारः ऋजुगामिनंमार्गज्ञमिवदिष्टांदिशंन गन्तव्यांअभिमतांदिशंप्रतियथातथावामपियथाध्वगामीस्वगन्तव्यस्यशीघ्रगमनायमार्गज्ञंऋजुगामिनमाह्वयतितद्वत् यद्वा ऋजूयाएव इवशब्दएवार्थे यंतागंताऋजुनैवमार्गेणदिष्टांदिशमिव तथायुष्मत्प्रीणनेनमार्गेणस्वाभिमतंफलंप्राप्नोति हेनासत्या अश्विनौ मेममहवमाह्वानं आलक्ष्योपयातं उपगच्छतम् ॥ ५ ॥

५. अश्विद्वय, जैसे मार्ग जानने के लिए, पथिक पथ-प्रदर्शक को बुलाता है, वैसे ही गौतम, पुरुमीढ़ और अत्रि हव्य ग्रहण करके तृप्त करने के लिए तुम्हें बुलाते हैं। अश्विद्वय, मेरे आह्वान के पास आओ।

अथषष्ठी–

अता॑रिष्म॒तम॑सस्पा॒रम॒स्यप्रति॑वां॒स्तोमो॑अश्विनावधायि ।
एहया॑तंप॒थिभि॑र्दे॑व॒यानै॑र्वि॒द्यामे॒षंवृ॒जनं॑जी॒रदा॑नुम् ॥ ६ ॥ २९ ॥

अता॑रिष्म । तम॑सः । पा॒रम् । अ॒स्य । प्रति॑ । वा॒म् । स्तोम॑ः ।
अ॒श्विनौ॒ । अ॒धा॒यि॒ । आ । इ॒ह । या॒त॒म् । प॒थिऽभि॑ः ।
दे॒व॒ऽयानै॑ः । वि॒द्याम॑ । इ॒षम् । वृ॒जन॑म् । जी॒रऽदा॑नुम् ॥ ६ ॥ २९ ॥

हेअश्विनौ युवयोःप्रसादादस्यतमसः तमनहेतोः श्रेयःप्रतिबन्धरूपस्यदुःखस्यपारंपर्यन्तभूमिं अतारिष्म उत्तीर्णाःस्मः हेअश्विनौ वांप्रतिस्तोमः स्तोत्रं अधायि अकारीत्यर्थः युवांदेवयानैर्देवगन्तव्यैर्मार्गैरिहास्मद्यज्ञे आयातं आगच्छतं शिष्टोव्याख्यातः ॥ ६ ॥

६. अश्विद्वय, तुम्हारे अनुग्रह से हम अन्धकार के पार चले जायँगे। तुम्हारे उद्देश्य से यह स्तुति बनाई गई है। देवों के गन्तव्य-पथ यज्ञ में आओ। वैसा होने पर हम अन्न, बल और दीर्घ आयु प्राप्त कर सकेंगे।

॥ इतिद्वितीयस्यचतुर्थेएकोनत्रिंशोवर्गः ॥ २९ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् ॥ पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १॥
इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेचतुर्थोध्यायः ॥ ४ ॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत्। निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥१॥

द्वितीयाष्टकमध्यस्थश्चतुर्थोध्यायआदरात्। व्याख्यातःसायणार्येणपञ्चमोव्याकरिष्यते ॥ २ ॥

तत्रतावामितीदंप्रथममण्डलस्यचतुर्विंशेनुवाकेपञ्चमंसूक्तम् पूर्वसूक्तेषळित्युक्तत्वात् सूक्तसंख्यानुवर्ततेइतिपरिभाषितत्वात्षळृचं ऋषिश्चान्यस्मादितिपरिभाषयागस्त्यं तथाश्विनंवात्युक्तत्वात्तुह्यादिपरिभाषयेदमप्याश्विनं अनादेशपरिभाषयात्रैष्टुभम् तावामित्यनुक्रान्तम् युवोरजांसीत्यादीनांपंचसूक्तानांतृतीयवर्जितानांमातरनुवाकाश्विनशस्त्रयोर्विनियोगउक्तः तत्रेदंपञ्चमं सूक्तम्।

ॐम् तावा॑म॒द्यताव॒परं॑हु॒वेमो॒च्छन्त्या॑मु॒षसि॒वह्नि॑रु॒क्थैः।
नास॑त्या॒कुह॑चि॒त्सन्ता॑व॒र्यो॑दि॒वोनपा॑तासु॒दास्त॑राय ॥ १ ॥

ॐम् ता। वा॒म्। अ॒द्य। तौ। अ॒पर॑म्। हु॒वे॒म॒। उ॒च्छन्त्या॑म्। उ॒षसि॑। वह्नि॑ः। उ॒क्थैः। नास॑त्या। कुह॑। चि॒त्। सन्तौ॑। अ॒र्यः। दि॒वः। नपा॑ता। सु॒दाः॑ऽत॑राय ॥ १ ॥

ता तारैक्षकत्वेनप्रसिद्धौवांयुवां अद्यास्मिन्यागदिनेहुवेम आह्वयामइत्याशीः तथा अपरं अपरस्मिन्नपिदिनेतौयुवांहुवेम अपरमित्येतदपरस्मिन्नित्यर्थेसमभिव्याहारात् अद्याचनोमृळयतापरंचेत्यादिमन्त्रान्तरेतथादर्शनाच्च अपरयागंमत्यपीतिवाकस्मिन्काले उषसि उषोदेवतायामुच्छन्त्यांतमोविवासयन्त्यांसत्यां उषःकालेहिमातरनुवाकाश्विनशस्त्रेप्रयुज्येते उक्तेकालेहेनासत्या असत्यरहितौ दिवोनपाता द्युलोकस्यनपातयितारौनप्तृस्थानीयौवाकुहचित्संतौ कुत्रचिद्देशेवर्तमानौयुवांवह्निः स्तुतेर्वोढा अर्यईरयितास्तुतेः ईश्वरोवाईदृशोहंहोतासुदास्तराय अत्यर्थंशोभनहविर्दात्रेयजमानाय तदर्थंतौयुवांउक्थैः शस्त्रैः हुवेमेतिसंबन्धः अत्राख्यातंपदमेकवचनतयानेतव्यं वह्निरर्यशब्दौवाबहुवचनत्वेननेतव्यौ अथवावाक्यद्वयंयस्माद्वह्निरर्योहोताउक्तगुणकौयुवांशंसति तस्माद्वयं यजमानास्तौयुवामाह्वयामइति॥ १ ॥

१. अन्धकार का विनाश करने के लिए उषा के आने पर हम आज के यज्ञ में और दूसरे दिन के यज्ञ में तुम्हें बुलाते हैं। अश्वनीकुमारो, तुम असत्यशून्य और द्युलोक के नेता हो। तुम जहां-कहीं रहो, स्तोता आर्य ऋग्वेदीय मंत्र-द्वारा, विशिष्ट दानशील यजमान के लिए, तुम्हारी स्तुति करता है।

अथद्वितीया—

अस्मेऊषुवृंषणामादयेथामुत्पणीँहंतमूर्म्यामदन्ता ।
श्रुतंमेअच्छोक्तिभिर्मतीनामेष्टानरानिचेतारा चकर्णैः ॥ २ ॥

अस्मे इति । ऊँ इति । सु । वृषणा । मादयेथाम् । उत् । पणीन् ।
हतम् । ऊर्म्या । मदन्ता । श्रुतम् । मे । अच्छोक्तिऽभिः । मतीनाम् ।
एष्टा । नरा । निऽचेतारा । च । कर्णैः ॥ २ ॥

हेवृषणा कामानांवर्षकावश्विनौ युवां अस्मेउ अस्मास्वेवसुमादयेथां सुष्ठुतृप्यतं अस्मभ्यं तर्पयतमभिमतम् तथापणीन्वणिजोलुब्धकानयष्टॄन् उत् उन्मूल्यहतंनाशयतम् कीदृशौयुवां ऊर्म्या रात्रिनामैतत् रात्रौमदन्ता माद्यन्तौ यद्वोर्मिरितिसोमनाम ऊर्मिर्यस्तेपवित्रआइत्यादिषुतथाप्रयोगात् अस्मदीयेनसोमेनमदन्तौतादृशौयुवांमेममाच्छोक्तिभिराभिमुख्यकरैर्निर्मलवेदवाक्यैरचिताः मतीनां कर्मणिषष्ठी मननसाधनाः स्तुतीःकर्णैराकर्णनसाधनैः श्रोत्रैः श्रुतंशृणुतं हेनरा नेतारौयुवांखलु एष्टा अन्वेष्टारावस्मत्स्तुतीनांतथाचनिचेतारालब्धानांतासांसञ्चयकर्तारौ निरित्येषसमित्येतस्यस्थाने यस्मादेवंविधौतस्माच्छृणुतमिति ॥ २ ॥

२. अभीष्टवर्षी अश्विनीकुमारो, सोमरस से बलवान् होकर तुम हमारी तृप्ति करो और पणियों का समूल नाश करो। हे नेतृद्वय, तुम्हें सामने लाने के लिए हम जो तृप्ति-प्रद स्तुति करते हैं, उसे सुनो; क्योंकि तुम लोग स्तुति के अन्वेषक और सञ्चय करनेवाले हो।

श्रियेपूंषन्निषुकृतेवदेवानासत्यावहतुंसूर्यायाः।
वच्यन्तेवांककुहाअप्सुजातायुगाजूर्णेववरुणस्यभूरेः ॥ ३ ॥

श्रिये । पूषन् । इषुकृताऽइव । देवा । नासत्या । वहतुम् । सूर्यायाः ।
वच्यन्ते । वाम् । ककुहाः । अप्ऽसु । जाताः । युगा । जूर्णाऽइव ।
वरुणस्य । भूरेः ॥ ३ ॥

सवितासूर्यः दुहितरंसूर्याख्यांप्रदातुमनाः देवानाहूयसामर्थ्यसमीक्षणायाजिंपरिकल्प्य इमांजेष्यतिसएतांकन्यकाम्प्रकसहस्रकूमंस्तोत्रंचलभेत इत्यकल्पयत् तामग्निःप्रथममजयत्

१ ऋ० सं० ७. १. ३८.।

तमन्वश्विनावपिजित्वाग्निंप्रधृष्यऋक्सहस्रंकन्यकांचालभेतां ततइन्द्रउषाश्चाजयतां तौचतैरग्न्यादिभिः प्रार्थितौस्वशस्त्रस्यकंचित्कंचिद्भागंतेभ्यःपरिकल्प्य सूर्यांस्वरथेधारयतामिति अयमितिहासोब्राह्मणे प्रजापतिर्वैसोमायराज्ञेइत्यत्राम्नातोस्माभिःप्रथमाष्टके आवांपतित्वंसख्यायेत्यत्रप्रपंचितःतत्राह—हेपूषन् पोषकसूर्य एतच्चन्द्रस्याप्युपलक्षणम् सूर्याचन्द्रमसोरेवाश्वित्वात् सूर्याचन्द्रमसावित्येकइतियास्केनोक्तत्वात् अतःपूषन्नित्युक्तेपोषकावश्विनावित्युक्तंभवति हेपोषकौ हेनासत्या असत्यरहितौदेवादेवौ युवांश्रियेश्रेयसेशस्त्रस्यकन्यायाश्चलाभायेत्यर्थः इषुकृतेव इवशब्दएवार्थे आजिधावनायेषुवच्छीघ्रमृजुगामिनौकृतावेवसन्तौ सूर्यायाः एतन्नामिकायाः सवितुःपुत्र्याः कर्मणिषष्ठी सूर्यांवहतुं रथेधारयितुमाजिमुदजयतामित्यर्थः यस्मादेवंतस्माद्दप्सुजाताः कर्मसुसंपादिताः ककुहाःशस्त्ररूपाः स्तुतयः भूरेः अविच्छिन्नप्रवाहस्यवरुणस्यफलप्रतिबन्धकपापनिवारकस्ययागस्यसिद्ध्यर्थंतत्संबन्धिन्योवांप्रतिवच्यन्ते उच्यन्तेहोत्रादिभिः युवामेवशस्त्रगतमन्त्रैर्यागकालेचस्तुवन्तीत्यर्थः युगाजूर्णेवजीर्णानियुगानीव इवशब्दःसंप्रत्यर्थे पुरातनाः यागकालायथातद्वदद्यतनाअपीत्यर्थः पूर्वकालेयथायुवामेवस्तुवन्ति तद्वदिदानीमपीतितात्पर्यम् ॥३॥

३. नासत्यद्वय, हे सूर्य-चन्द्र-रूपी अश्विनीकुमारो, कल्याणप्राप्ति के लिए, तीर की तरह, शीघ्रगामी होकर सूर्यतनया को ले जाओ। पूर्व युग की तरह यज्ञ-काल में सम्पादित स्तुति महान् वरुण की तुष्टि के लिए तुम्हें स्तुति करती है।

अस्मेसावांमाध्वीरातिरस्तुस्तोमंहिनोतंमान्यस्यकारोः ।
अनुयद्वांश्रवस्यासुदानूसुवीर्यायचर्षणयोमदन्ति ॥ ४ ॥

अस्मे इति । सा । वाम् । माध्वी इति । रातिः । अस्तु । स्तोमम् ।
हिनोतम् । मान्यस्य । कारोः । अनु । यत् । वाम् । श्रवस्या ।
सुदानूइतिसुऽदानू । सुऽवीर्याय । चर्षणयः । मदन्ति ॥ ४ ॥

हेमाध्वी मधुपूर्णपात्रयुक्तौअश्विनौ वांयुवयोःसंबन्धिनीसाप्रसिद्धारातिर्दानमस्मेअस्माकमस्तुभवतु तदर्थंमान्यस्यमाननीयस्यकारोः स्तोतुरगस्त्यस्यस्तोमंस्तुतिंहिनोतंप्रीणयतं हेसुदानूशोभनफलदानौ वांयुवांश्रवस्याकीर्तेरन्नस्यवाइच्छयायवयस्मात् सुवीर्यायजमानाय शोभनबलायवा चर्षणयोमनुष्याःऋत्विग्रूपाः अनुमदन्ति अनुक्रमेणमाद्यन्तियुवाभ्यांसहस्वयंवा ॥४॥

४. मधुपात्रवाले अश्विनीकुमारो, तुम कवि मान्य की स्तुति अंगीकार करो। तुम्हारा दान हमारे उद्देश्य से प्रवृत्त हो। शुभ-फल-प्रदाता अश्विनीकुमारो, अन्न की इच्छा से और वीर्यशाली यजमान के हित के लिए मनुष्य या पुरोहित तुम्हारे साथ हर्षयुक्त हों।

अथपञ्चमी—

एषवांस्तोमोअश्विनावकारिमानेभिर्मघवानासुवृक्ति ।
यातंवर्तिस्तनयायत्मनेचागस्त्येनासत्यामदन्ता ॥ ५ ॥

एषः । वाम् । स्तोमः । अश्विनौ । अकारि । मानेभिः । मघऽवाना । सुऽवृक्ति । यातम् । वर्तिः । तनयाय । त्मने । च । अगस्त्ये । नासत्या । मदन्ता ॥ ५ ॥

हेअश्विनौ हेमघवानाहविर्लक्षणान्नवन्तौ वांयुवाभ्यांएषस्तोमः स्तोत्रंसुवृक्तिसुष्टुपापवर्जनं यथाभवतितथा यद्वासुसमाप्ति अकारिकृतः कीदृशोयंमानेभिर्मानैः हविःप्रदानरूपैः सहितः हे-नासत्याअसत्यरहितौयुवां अगस्त्येएतन्नाम्निमहर्षौमयिमदन्तामाद्यन्तौ सन्तौ वर्तिर्गृहंयज्ञसंबन्धि यातंप्राप्नुतं किमर्थंतनयायपुत्रादिलाभाय त्मनेआत्मनेचहिताय ॥ ५ ॥

५. अन्नवान् अश्विनीकुमारो, तुम्हारे लिए हव्य के साथ यह पाप-विनाशी स्तोत्र रचित हुआ है। अश्विनीकुमारो, अगस्त्य के प्रति सन्तुष्ट होकर यजमान के पुत्रादि और अपने सुख-भोग के लिए यज्ञ-भूमि में आगमन करो।

अतारिष्मतमसस्पारमस्यप्रतिवांस्तोमोअश्विनावधायि ॥
एहयातंपथिभिर्देवयानैर्विद्यामेषंवृजनंजीरदानुम् ॥ ६ ॥ १ ॥

अतारिष्म । तमसः । पारम् । अस्य । प्रति । वाम् । स्तोमः । अश्विनौ । अधायि । आ । इह । यातम् । पथिऽभिः । देवऽयानैः । विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ६ ॥ १ ॥

अतारिष्मेतिषष्ठी व्याख्याता ॥ ६ ॥

६. अश्विनीकुमारो, तुम्हारी कृपा से हम अन्धकार को पार कर जायँगे। तुम्हारे उद्देश्य से यह स्तव रचित हुआ है। देवों के गन्तव्य पथ से यज्ञ में आओ, ताकि हम अन्न, बल और दीर्घ आयु प्राप्त करें।

कतरापूर्वेतिएकादशर्चंषष्ठंसूक्तं द्यावापृथिवीदेवताकं आगस्त्यंत्रैष्टुभं कतरैकादश द्या-वापृथिवीयमित्यनुक्रान्तम्. आभिप्लविकेषष्ठेहनिवैश्वदेवशस्त्रेद्यावापृथिव्यनिविद्धानमिदं तृतीय-स्येतिखण्डेसूत्रितम्—कतरापूर्वोषासानक्तेतिवैश्वदेवमिति महाव्रतेपिवैश्वदेवशस्त्रेइदमेवद्यावापृ-थिव्यनिविद्धानं उत्तमादाभिप्लविकात्तृतीयसवनमित्यतिदेशात् ।

तत्रप्रथमा—

कतरापूर्वाकतरापरायोःकथाजातेकवयःकोविवेद ।
विश्वंत्मनाबिभृतोयद्धनामविवर्तेतेअहनीचक्रियेव ॥ १ ॥

कतरा । पूर्वा । कतरा । अपरा । अयोः । कथा । जाते इति । कवयः । कः । वि । वेद । विश्वम् । त्मना । बिभृतः । यत् । ह । नाम । वि । वर्तेते इति । अहनी इति । चक्रियाऽइव ॥ १ ॥

अयोरनयोर्द्यावापृथिव्योर्मध्ये कतरापूर्वापूर्वमुत्पन्ना कतरावा अपरापश्चाद्भाविनी एवं पौर्वापर्यप्रश्नः उभयोरविनाभावेनसहैववर्तमानत्वादितिभावः तथाकथाकेनहेतुनाजातेकिमनयोरुत्पादकमित्यर्थः हेकवयः क्रान्तदर्शिनः अतीन्द्रियज्ञायूयंवदत कोविवेदपौर्वापर्यं कारणंचविशेषेणविविच्यवाजानाति नकेनापिज्ञायतइत्यर्थः अज्ञानेकारणमाह—यद्यस्मात्खलु हेतोर्नामप्रसिद्धम् विश्वंकृत्स्नमपिजगदविशेषेण त्मना आत्मनैव अन्यनैरपेक्ष्येणैवबिभृतोधारयः यद्वायद्धनामयत्किंचित्पदार्थजातमस्ति विश्वंतत्सर्वमात्मनाबिभृतः अनेनयत्कारणंब्रूमः तदप्याभ्यामेवध्रियतइतिकारणाभावःप्रतिपादितइति उत्तरेणपौर्वापर्याभावउच्यते अहनीअहोरात्रेएतयोः द्यावापृथिव्योः चक्रियेवचक्रयुक्तेइव विवर्तेते अत्रकतरापूर्वाकतरापरैनयोरित्यादिनिरुक्तंद्रष्टव्यम् ॥ १ ॥

१. कविगण, द्यु और पृथिवी में पहले कौन उत्पन्न हुआ है, पीछे कौन उत्पन्न हुआ है, किसलिए उत्पन्न हुए हैं, यह बात कौन जानता है ? वे दूसरे के ऊपर निर्भर होकर सारे संसार को धारण करते हैं और दिन तथा रात्रि की तरह चक्रवत् परिवर्त्तित होते रहते हैं।

भूरिंद्वेअचरन्तीचरन्तंपद्वन्तंगर्भमपदीदधाते ।
नित्यंनसूनुंपित्रोरुपस्थेद्यावारक्षतंपृथिवीनोअभ्वात् ॥ २ ॥

भूरिम् । द्वे इति । अचरन्ती इति । चरन्तम् । पत्ऽवन्तम् । गर्भम् । अपदी इति । दधाते इति । नित्यम् । न । सूनुम् । पित्रोः । उपऽस्थे । द्यावा । रक्षतम् । पृथिवी इति । नः । अभ्वात् ॥ २ ॥

अचरन्तीअविचलेद्वेएवेतेद्यावापृथिव्यौ भूरिंबहुतरंचरन्तंपद्वन्तंपादयुक्तंगर्भंगर्भवदाश्रितंकृत्स्नंप्राणिजातं अपदीस्वयंपादरहितेदधातेधारयतः अनयोर्मध्येखलुसर्वंजगत्क्षेमेणवर्तते धारणे-

दृष्टान्तः—पित्रोर्मातापित्रोरुपस्थेउत्संगेवर्तमानंनित्यंध्रुवंसूनुंन आत्मजंपुत्रमिव यथास्नेहेनवर्धय-न्तौधारयतोमातापितरौतद्वत् अथप्रत्यक्षेणाह—हेद्यावापृथिवीद्यावापृथिव्यौ इतरेतरापेक्षया-द्वित्वमुभयोः नोस्मानभ्वात्महतोभयहेतोःपापाद्रक्षतंपालयतं यद्वाअभ्वात् अभ्वंमहत् अत्य-र्थमित्यर्थः अभ्वेतिमहन्नाम द्वन्द्वेकृतद्यावादेशस्यद्यावापृथिवीशब्दस्यमध्येरक्षतमितिपदमयोग-श्छान्दसः आमन्त्रितस्याविद्यमानत्वेननिघाताभावः ॥ २ ॥

२. पाद-रहित और अविचल द्यावा-पृथिवी पादयुक्त तथा सचल गर्भस्थित प्राणियों को, माता-पिता की गोद में पुत्र की तरह, धारण करते हैं। हे द्यावा-पृथिवी, हमें महापाप से बचाओ।

अनेहोदात्रमदितेरनर्वंहुवेस्वर्वदवधंनमस्वत्।
तद्रोदसीजनयतंजरित्रेद्यावारक्षतंपृथिवीनोअभ्वात् ॥ ३ ॥

अनेहः। दात्रम्। अदितेः। अनर्वम्। हुवे। स्वः ऽवत्। अवधम्। नमस्वत्। तत्। रोदसी इति। जनयतम्। जरित्रे। द्यावा। रक्षतम्। पृथिवी इति। नः। अभ्वात् ॥ ३ ॥

अदितेः एतदन्तरिक्षस्याप्युपलक्षणं अखण्डनीयायाःपृथिव्यास्तादृशस्यान्तरिक्षस्य चसंबन्धिदात्रंधनंहुवे आह्वयामि स्पृहयामीत्यर्थः कीदृशंतद्धनं अनेहः अपापंदुःखरहितंसु-खात्मकं अनर्वं अनरणं अक्षीणमित्यर्थः स्वर्वत्फलभूतेनस्वर्गेणतद्वत् अवधं अहिंसितं नमस्वत् अन्नवदीदृशंधनंहुवे तदस्माभिःकांक्षितंउक्तलक्षणंधनं हेरोदसी द्यावापृथिव्यौ जरित्रेस्तोत्रेयज-मानायजनयतंउत्पादयतं द्यावेत्यादिव्याख्यातम् ॥ ३ ॥

३. हम अदिति से पापरहित, अक्षीण, हिंसा-रहित, अन्नयुक्त और स्वर्गतुल्य धन के लिए प्रार्थना करते हैं। द्यावा-पृथिवी, स्तोता यजमान के लिए, वही धन उत्पन्न करते हो। हे द्यावा-पृथिवी, हमें महापाप से बचाओ।

अतप्यमानेअवसावन्तीअनुष्याम्रोदसीदेवपुत्रे।
उभेदेवानामुभयेभिरह्नांद्यावारक्षतंपृथिवीनोअभ्वात् ॥ ४ ॥

अतप्यमाने इति। अवसा। अवन्ती इति। अनु। स्याम। रोदसी इति। देवपुत्रेइतिदेवऽपुत्रे। उभे इति। देवानाम्। उभयेभिः। अह्नाम्। द्यावा। रक्षतम्। पृथिवी इति। नः। अभ्वात् ॥ ४ ॥

अवसास्वतोधिकेनकेनचिदकृतेन अवनेनसमृद्धचा अतप्यमाने अनीश्वरे तपऐश्वर्यकर्म-अवसा अन्नेन अवन्तीतर्पयन्त्यौदेवपुत्रे देवाः व्य-णशब्दरूपम् यद्वाअतप्यमाने अन्यैरपीड्यमाने

वहर्तारोमनुष्याःपुत्रस्थानीयाययोः तादृश्यौलोकद्वयस्थामनुष्यादेवाश्चतदुपजीव्यत्वात्पुत्राइत्यु-च्यन्ते ईदृश्यौ उभेरोदसीद्यावापृथिव्यौदेवानामह्नां एतद्रात्रेरप्युपलक्षणम् द्योतमानानामह्नांरात्री-णांचसंबन्धिभिः उभयेभिरुभयविधैः शीतोष्णादिरूपैर्विलक्षणैर्धनैर्निमित्तभूतैः तेषांलाभाये-त्यर्थः तदर्थंयुवां अनुष्याम अनुभवेम शिष्टोव्याख्यातः ॥ ४ ॥

४. हम प्रकाशमान दिन और रात्रि के उभयविध धन के लिए दुःख-रहित और अन्न-द्वारा तृप्तिकारी द्यावा पृथिवी का अनुगमन कर सकें। हे द्यावापृथिवी, हमें महापाप से बचाओ।

संगच्छमानेयुवतीसमन्तेस्वसाराजामीपित्रोरुपस्थे।
अभिजिघ्रन्तीभुवनस्यनाभिंद्यावारक्षतंपृथिवीनोअभ्वात्॥५॥२॥

सङ्गच्छमाने इति सम्ऽगच्छमाने। युवती इति। समन्ते इति सम्ऽअन्ते। स्वसारा। जामी इति। पित्रोः। उपऽस्थे। अभिजिघ्रन्तीइत्यभिऽजिघ्रन्ती। भुवनस्य। नाभिम्। द्यावा। रक्षतम्। पृथिवी इति। नः। अभ्वात्॥ ५॥ २॥

सङ्गच्छमानेपरस्परमुपकारित्वेनसहयुज्यमाने वृष्टिहविषोश्चपरस्परंउपकार्योपकारकभावः यद्वा पूर्वंसंसृष्टेएवसत्यौ पश्चाद्वियुज्यवृष्टिहविषी अकुर्वन्त्यौपश्चान्मनुष्यैःप्रार्थितैर्देवैः विवाहिते सत्यौ संगते अभूतामित्याहुः अयमर्थोद्यावापृथिवीसहास्तामित्यादिब्राह्मणेसमाम्नातः युवतीनि-त्यतरुण्यौ मिश्रयन्त्यौवासर्वेषुभावेषु समन्ते समानान्तिके समानपर्यन्तेवा स्वसारापरस्परंस्वसृ-भूते जामीबन्धुभूते प्रजापतेःसकाशात्सहोत्पन्नत्वात्परस्परंजामित्वम् तथाचनिगमौ—दिवश्च-पृथिवीचान्तरिक्षमथोस्वः । यतोद्यावापृथिवीनिष्टतक्षुरिति । पित्रोःसर्वस्यपितृस्थानीययोः पालकयोः तयोरुपस्थे उत्सङ्गेस्थितं भुवनस्य भूतजातस्य नाभिंबन्धकमुदकं अभिजिघ्रन्ती अभिघ्राणंकुर्वन्त्यौ स्पृशन्त्यौ समानमेतदुदकमित्यादिमन्त्रवर्णादुभयोरुदकप्रदत्वंप्रसिद्धम् ईदृ-श्यौनोरक्षतम्॥ ५॥

५. परस्पर संसक्त, सदा तरुण, समान सीमा से संयुक्त, भगिनी-भूत और बन्धु-सदृश द्यावा-पृथिवी माता-पिता के क्रोड़स्थित और प्राणियों के नाभि-स्वरूप, जल का घ्राण करते हुए, हमें महापाप से बचायें।

॥ इतिद्वितीयस्यपञ्चमेद्वितीयोवर्गः॥ २॥

उ॒र्वीस॑द्म॑नीबृह॒तीऋ॒तेन॑हु॒वेदे॒वाना॒मव॑सा॒जनि॑त्री ।
द॒धाते॒येअ॒मृतं॑सु॒प्रती॑के॒द्यावा॒रक्ष॑तंपृथिवीनो॒अभ्वा॑त् ॥ ६ ॥

उ॒र्वी इति॑ । सद्म॑नी॒ इति॑ । बृ॒ह॒ती इति॑ । ऋ॒तेन॑ । हु॒वे । दे॒वाना॑म् । अव॑सा । जनि॑त्री॒ इति॑ । द॒धाते॒ इति॑ । ये इति॑ । अ॒मृत॑म् । सु॒प्रती॑के॒-इति॑सु॒ऽप्रती॑के । द्यावा॑ । रक्ष॑तम् । पृ॒थि॒वी॒ इति॑ । न॒ः । अभ्वा॑त् ॥ ६ ॥

उर्वी विस्तीर्णे सद्मनी सदनाधारभूते बृहती बृहत्यौ महानुभावे देवानामुपलक्षणमेतत् देवमनुष्यादीनां अवसाप्रीत्या निमित्तेनजनित्री वृष्टिसस्ययोर्जनित्र्यौ वृष्ट्यादेः देवानामवसा तर्पणेन निमित्तेन ऋतेनयज्ञेनच निमित्तभूतेन हुवेआह्वयामि देवानांहविरर्थमस्मद्यज्ञायेत्यर्थः येसुप्रतीकेशोभनरूपे अमृतमुदकं दधाते धारयतम् तेयुवामाह्वयामि शिष्टंस्पष्टम् ॥ ६ ॥

६. देवों की प्रसन्नता के लिए मैं विस्तीर्ण निवासभूत, महानुभाव और शस्यादि-समुत्पादक द्यावा-पृथिवी को यज्ञ के लिए बुलाता हूँ। इनका रूप आश्चर्य-जनक है और ये जल धारण करते हैं। द्यावा-पृथिवी, हमें महापाप से बचाओ।

उ॒र्वीपृ॒थ्वीब॑हु॒लेदू॒रेअ॑न्ते॒उप॑ब्रुवे॒नम॑सा॒य॒ज्ञेअ॒स्मिन् ।
द॒धाते॒येसु॒भगे॒सु॒प्रतू॑र्ती॒द्यावा॒रक्ष॑तंपृथिवीनो॒अभ्वा॑त् ॥ ७ ॥

उ॒र्वी इति॑ । पृ॒थ्वी इति॑ । ब॒हु॒ले इति॑ । दू॒रेअ॑न्ते॒इति॑दू॒रेऽअ॑न्ते । उप॑ । ब्रु॒वे । नम॑सा । य॒ज्ञे । अ॒स्मिन् । द॒धाते॒ इति॑ । ये इति॑ । सु॒भगे॒इति॑सु॒ऽभगे॑ । सु॒प्रतू॑र्ती॒ इति॑ सु॒ऽप्रतू॑र्ती । द्यावा॑ । रक्ष॑तम् । पृ॒थि॒वी॒ इति॑ । न॒ः । अभ्वा॑त् ॥ ७ ॥

उर्वीउर्व्यौ महत्यौपृथ्वी पृथिव्यौ बहुले अनेकप्रकारेणप्रथमाने बाह्याकारे दूरेअन्ते विप्रकृष्टान्तदेशेअपारेइत्यर्थः ईदृश्यौ युवामस्मिन्यज्ञे नमसानमःसाधनेनस्तोत्रेणउपब्रुवे उपेत्यब्रवीमि स्तौमीत्यर्थः पुनःकीदृश्यौ येसुभगे शोभनभाग्ये सुप्रतूर्ती सुप्रतरणे शोभनदाने दधातेविश्वं जगत् तेयुवामुपब्रुवेस्तौमि ॥ ७ ॥

७. महान्, पृथु, अनेक आकारों से विशिष्ट और अनन्त द्यावा-पृथिवी की यज्ञस्थल में मैं नमस्कार मंत्र-द्वारा, स्तुति करता हूँ। हे सौभाग्यवती और उद्धार-कुशला द्यावा-पृथिवी, तुम संसार को धारण करो और हमें महापाप से बचाओ।

अथाष्टमी–

देवान्वायच्चकृमाकच्चिदागःसखायंवासदमिज्जास्पतिंवा।
इयंधीर्भूयाअवयानमेषांद्यावारक्षतंपृथिवीनोअभ्वात् ॥ ८ ॥

देवान्। वा। यत्। चकृम। कत्। चित्। आगः। सखायम्।
वा। सदम्। इत्। जाःऽपतिम्। वा। इयम्। धीः। भूयाः।
अवऽयानम्। एषाम्। द्यावा। रक्षतम्। पृथिवी इति। नः।
अभ्वात् ॥ ८ ॥

हेद्यावापृथिव्यौ वयंदेवान्देवान्प्रतियत्कच्चित् आगोपराधंतत्तद्यागकालेतेषांतेषां अयागलक्षणंसदमित्सर्वदैवचकृमच कृतवन्तोवयं सखायंवाप्रियंमित्रंवाप्रतियच्चकृम जास्पतिं जाः पुत्र्यस्तासांपतिंजामातरंवाजायापतिंप्रतिदोषारोपणकलहोत्पादनादिरूपंयत्सर्वदैवचकृम एषामुक्तरूपाणांपापानां अवयानमपगमंकर्तुमियंधीर्युष्मत्स्तुतिरूपमिदंकर्मभूयाः भूयाद्भवतु द्यावेत्यादिगतम् अत्रसर्वत्रप्रकारान्तरेणमन्त्रमन्तरेणरक्षतंरक्षतमितिप्रार्थनं तयोरश्विन्यादिबहुमननासंभवादुचितमेव तस्मात्स्वस्थानेएवस्थिते अनुकूलेभवतमित्येवप्रार्थ्यते ॥८॥

८. हम देवों के पास जो सदा अपराध करते हैं, बन्धु और जामाता के प्रति जो सब अपराध करते हैं, हमारा वह यज्ञ उन सब पापों को दूर करे।

अथनवमी–

उभाशंसानर्यामामविष्टामुभेमामूतीअवसासचेताम् ।
भूरिचिदर्यःसुदास्तरायेषामदन्तइषयेमदेवाः ॥ ९ ॥

उभा। शंसा। नर्या। माम्। अविष्टाम्। उभे इति। माम्।
ऊती इति। अवसा। सचेताम्। भूरि। चित्। अर्यः।
सुदाःऽतराय। इषा। मदन्तः। इषयेम। देवाः ॥ ९ ॥

उभाशंसाद्यावापृथिव्योरुभयोर्विषयावुभावपिशंसौ नर्यानरेभ्योहितौ ईदृशयावुभयांश्रयेस्तुतीमामविष्टांरक्षतां यद्वा द्यावापृथिव्यभिमानिदेवयोरेवशंसशब्देनाभिधानात्पुंल्लिङ्गता तथाउभेऊतीरक्षिकेद्यावापृथिव्यौमामवसारक्षणेनसचेतांसेवेतां यद्वा प्राणिभ्योहितकरावुभावैहिकामुष्मिकविषयौशंसौमामविष्टांमामुतां तथोभेअप्यूतीतयोःसंबन्धिनोःअभिमानिदेवयोरवसास्मच्च पं-

णेननिमित्तेनसचेतां हेदेवाः द्यावापृथिव्योरन्तर्भूताः सर्वेपिदेवाः अर्यः स्तोतारोवयंसुदास्तराय अतिशयेनशोभनदातृत्वाय इषाऽन्नेनसोमलक्षणेनमदन्तः मादयन्तः सन्तोभूरिचित् चित्पूजायाम-भिपूजितंधनमिषयेमइच्छेम यद्वाअर्यइतिषष्ठ्यारूपं ईश्वरस्यराजादेरपिसुदास्तरायेत्यर्थः शि-ष्टंसमानम् ॥ ९ ॥

९. स्तुति-योग्य और मनुष्यों के हितकर द्यावा-पृथिवी मुझे, आश्रय-प्रदान करे। आश्रयदाता द्यावा-पृथिवी आश्रय देने के लिए मेरे साथ मिलें। देवो, हम तुम्हारे स्तोता हैं; अन्न-द्वारा तुम्हें तृप्त करते हुए प्रचुर दान के लिए प्रचुर अन्न चाहते हैं।

ऋतंदिवइतिद्वेद्यावापृथिवीयेपशौपुरोडाशहविषोनुवाक्ये अग्नीषोमावितिखण्डेसूत्रितम्-ऋतंदिवेतदवोचंपृथिव्याइतिद्वेइति ।

ऋतंदिवेतदवोचंपृथिव्याअभिश्रावायप्रथमंसुमेधाः ।
पातामवद्यादुरितादभीकेपितामाताचरक्षतामवोभिः ॥ १० ॥

ऋतम् । दिवे । तत् । अवोचम् । पृथिव्यै । अभिऽश्रावाय ।
प्रथमम् । सुऽमेधाः । पाताम् । अवद्यात् । दुःऽइतात् ।
अभीके । पिता । माता । च । रक्षताम् । अवःऽभिः ॥ १० ॥

सुमेधाः शोभनप्रज्ञोहंदिवेद्युदेवतायैपृथिव्यैपृथिवीदेवतायैतत्तत्प्रीतिकरंऋतंस्तोत्रंप्रथमं मु-ख्यनामैतत् प्रतमंप्रकृष्टतमंअवोचंब्रवीमि किमर्थं अभिश्रावाय अभितःसर्वतःश्रवणाय किञ्च पितापालकोद्युलोकः मातासस्यादेर्निर्मात्रीपृथिवीचोभेअवद्यान्निन्दितात् दुरितात् दुःखमापका-दंहसःसकाशात्पातां रक्षतां तथा अभीके अन्तिकनामैतत् समीपेएवावोभिरभिमततर्पणैः रक्ष-तांपालयताम् ॥ १० ॥

१०. मैं बुद्धिमान् हूँ। द्यावा-पृथिवी के उद्देश्य से चारों दिशाओं में प्रकाश के लिए मैंने अत्युत्तम स्तोत्र किया है। माता-पिता निन्दनीय पाप से हमें बचायें तथा हमें सदा पास में रखकर तृप्तिकर वस्तु-द्वारा पालित करें।

इदंद्यावापृथिवीसत्यमस्तुपितर्मातर्यदिहोपब्रुवेवाम् ।
भूतंदेवानामवमेअवोभिर्विद्यामेषंवृजनंजीरदानुम् ॥ ११ ॥ २ ॥

इदम् । द्यावापृथिवी इति । सत्यम् । अस्तु । पितः । मातः । यत् ।
इह । उपऽब्रुवे । वाम् । भूतम् । देवानाम् । अवमे इति । अवःऽभिः ।
२ विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥ २ ॥

हेद्यावापृथिवी द्यावापृथिव्यौ इदमस्माभिःक्रियमाणंस्तोत्रंसत्यमस्तु अवितथंभवतु फलवद्भवत्वित्यर्थः इदमित्युक्तंकिंतदित्याह—हेपितर्द्यौःहेमातःपृथिवि वांयुवांप्रतिइहास्मिन्यज्ञेयत्स्तोत्रमुपब्रुवे उपेत्यब्रवीमि तत्सत्यमस्तु देवानांस्तोतॄणामस्माकं अवमेअन्तिकनामैतत् नित्यसंनिहितेयुवां अवोभिः तर्पणैर्युक्तेभूतंभवतम् अवशिष्टंगतम् ॥ ११ ॥

११. हे माता और हे पिता, तुम्हारे लिए इस यज्ञ में मैंने जो स्तोत्र पढ़े हैं, उन्हें सार्थक करो। द्यावा-पृथिवी, आश्रय-दान-द्वारा तुम स्तोताओं के समीपवर्ती बनो, ताकि हम अन्न, बल और दीर्घ आयु प्राप्त करें।

॥ इतिद्वितीयस्यपञ्चमेतृतीयोवर्गः ॥ ३ ॥

आनइळाभिरितिसप्तमंसूक्तमेकादशर्चंआगस्त्यंत्रैष्टुभंवैश्वदेवं आनोवैश्वदेवमित्यनुक्रान्तम् विनियोगोलैङ्गिकः।

**आनइळाभिर्विदथेसुशस्तिविश्वानरःसवितादेवएतु।**
**अपियथायुवानोमत्सथानोविश्वंजगदभिपित्वेमनीषा ॥ १ ॥**

आ। नः। इळाभिः। विदथे। सुऽशस्ति। विश्वानरः ॥ सविता। देवः। एतु। अपि। यथा। युवानः। मत्सथ। नः। विश्वम्। जगत्। अभिऽपित्वे। मनीषा ॥ १ ॥

नोविदथेस्मदीयेयज्ञेसुशस्ति सुपोलुक् सुशस्तिभिः शोभनशंसनैःस्तुतिभिः इळाभिःप्रदेयैरन्नैःसह यद्वा इळाभिः तदाश्रितेपुताच्छब्द्यं भूमिस्थानाभिर्देवताभिःसहविश्वानरःसर्वप्राणिहितकार्यग्निःसवितापेरकआदित्यश्चदेवआएतुआगच्छतु हेयुवानोनित्यतरुणायज्ञस्य मिश्रयितारोवायूयं नोस्मान्अभिपित्वेअभिपतनीयेस्मद्यज्ञेमनीषामनीषयामनसईशितृत्वेनस्वेच्छयेत्यर्थः अपिःसंभावनायां अप्यस्मान्मत्सथ मादयथ तथाविश्वंजगत् एतत्स्थावरस्याप्युपलक्षणं यद्वाकृत्स्नंप्रपञ्चंमत्सथ तथास्मानपि यद्वा जगच्छब्दोयजमानरूपमनुष्यवाची सर्वानपियजमानान् यथामत्सथ तथेत्यर्थः ॥ १ ॥

१. अग्नि और सविता हमारी स्तुतियों के कारण भूस्थानीय देवों के साथ यज्ञ-स्थल में आयें। युवकगण, हमारे यज्ञ में इच्छापूर्वक आकर सारे जगत् की तरह हमें भी प्रसन्न करो।

वैश्वदेवेपशौआनोविश्वइत्येषाहविषःपुरोनुवाक्या आनोदेवानामुपवेतुशंसआनोविश्वआस्काागमन्तुदेवाइति।

सैषाद्वितीया—

आनोविश्वआस्क्रागमन्तुदेवामित्रोअर्यमावरुणःसजोषाः ।
भुवन्यथानोविश्वेवृधासःकरन्त्सुषाहाविथुरंनशवः ॥ २ ॥

आ । नः । विश्वे । आस्क्राः । गमन्तु । देवाः । मित्रः । अर्यमा ।
वरुणः । सऽजोषाः । भुवन् । यथा । नः । विश्वे । वृधासः । करन् ।
सुऽसहा । विथुरम् । न । शवः ॥ २ ॥

नोस्माकंयज्ञंविश्वेसर्वेदेवाःआस्क्राः शत्रूणामास्कन्दयितारः आक्रमितारोवा आगमन्तु आगच्छन्तु केते मित्रोर्यमावरुणश्च त्रयोपिसजोषाः समानप्रीतयःसन्तः आगच्छन्तु किन्तु विश्वे देवाः नोस्माकं वृधासोवर्धयितारः यथाभुवन्भवेयुः तथासुषाहा सुष्ठु शत्रूणामभिभवेननोस्मदीयंशवोन्नंविथुरंहीनं यथानकरन्नकुर्युः तथाआगच्छन्तु ॥ २ ॥

२. शत्रुओं के आक्रमणकर्त्ता मित्र, वरुण और अर्यमा ये सब समान प्रीति-युक्त होकर आगमन करें। हमारे सब वर्द्धयिता हों और शत्रुओं को परास्त करके, जिस प्रकार हम अन्नहीन न हों, ऐसा करें।

अथतृतीया—

प्रेष्ठंवोअतिथिंगृणीषेग्निंशस्तिभिस्तुर्वणिःसजोषाः ।
असद्यथानोवरुणःसुकीर्तिरिषश्चपर्षदरिगूर्तःसूरिः ॥ ३ ॥

प्रेष्ठम् । वः । अतिथिम् । गृणीषे । अग्निम् । शस्तिऽभिः ।
तुर्वणिः । सऽजोषाः । असत् । यथा । नः । वरुणः । सुऽकीर्तिः ।
इषः । च । पर्षत् । अरिऽगूर्तः । सूरिः ॥ ३ ॥

हेदेवाः वोयुष्माकंप्रेष्ठंप्रियतमंसर्वेषामाह्वातृत्वात् हविर्वहनाच्चाग्निर्देवानां प्रियतमः तमतिथिंगृणीषेगृणेस्तौमि व्यत्ययेनमध्यमः केनसाधनेन शस्तिभिःशंसनैःस्तुतिभिः कीदृशोहंतुर्वणिस्तूर्णवनिः शीघ्रंसंभक्ता सजोषाः युष्माभिः सहप्रीयमाणःयद्वैतेअग्निविशेषणे यस्तुर्वणिः शीघ्रंयज्ञस्यसंभक्ता सजोषाःयुष्माभिः सहप्रीयमाणःतमग्निंगृणीषे यथायेनप्रकारेणनोस्माकंवरुणः एतन्नामकोदेवःसुकीर्तिः शोभनकीर्तिमानसत् सुकीर्तिभिक्षेवरुणस्यभूरेरस्यादिमध्यवर्णोसुवरु-

णात्सुकीर्तिरंवेषणीया अरिगूर्तः अरिषुअदातृषुसदाशब्दितःअरीणां हननायोद्युक्तोवासूरिः प्रे-
रयितायंवरुणः इषश्चान्नानि पर्षद् पूरयेत् तथातमपिस्तुमइत्यर्थः ॥ ३ ॥

३. देवगण, मैं क्षिप्रकारी और तुम्हारी तरह प्रीति-युक्त होकर तुम्हारे श्रेष्ठ अतिथि (अग्नि) की स्तुति-मन्त्रों-द्वारा स्तुति करता हूँ। उत्तम कीर्तिवाले सूरि वरुण हमारे ही हों। वरुण शत्रुओं के प्रति हुंकार करते हुए अन्न-द्वारा हमें परिपूर्ण करें।

उपंवएषेनमंसाजिगीषोषासानक्तांसुदुघेवधेनुः ।
समानेअहन्विमिमानोअर्कंविषुरूपेपयंसिसस्मिन्नूधंन् ॥ ४ ॥

उपं । वः । आ । ईषे । नमंसा । जिगीषा । उषसानक्तां । सुदुघाऽइव । धेनुः । समाने । अहंन् । विऽमिमानः । अर्कम् । विषुंऽरूपे । पयंसि । सस्मिंन् । ऊधंन् ॥ ४ ॥

हेदेवाः वोयुष्माकंनमसाहविषानमस्कारेणवाउपउपेत्य जिगीषा पापानांजिगीषया आई-
षेइच्छामि इषगतावित्यस्यवेषतेर्वागत्याद्यर्थस्यलिटिउत्तमैकवचने इदंरूपं भजामि कस्मिन्का-
लेउषासानक्ताअहनिरात्रौच यद्वा अहोरात्रदेवतेअप्यभिगच्छामि गतौदृष्टान्तः—सुदुघाधेनुरि-
व सुदोग्ध्रीधेनुर्यथा दोहायदोग्धुर्गृहमागच्छति तद्वत् किंकुर्वन् सस्मिन्समानेऊधन्ऊधसि
उत्पन्नेविषुरूपेनानारूपेपयसिक्षीरघृतादिके अर्कमर्चनीयमन्नंचरुपुरोडाशादिकंविमिमानः वि-
विधंमिमानः कस्मिन्कालेसमानेअहन् षष्ठेहनिएकस्मिन्नेवाहनिसर्वदैवेत्यर्थः एकस्मिन्नेवा-
हनिसमानऊधस्युत्पन्ने नानारूपेपयसित्वदर्थंहविर्मिमानः उपगच्छामीत्यर्थः यद्वा सस्मिन्स-
र्वस्मिन्नूधसिफलाख्यक्षीरोत्पादकेयज्ञेनिमित्तभूतेसतिविषुरूपेपयसिनानारूपेसोमलक्षणोदकेअ-
र्कमन्नसाधनंस्तोत्रंविमिमानोहंयुष्मानभिगच्छामि ॥ ४ ॥

४. देवो, दिन-रात नमस्कार करते हुए, पाप-विजय के लिए, दुग्धवती धेनु की तरह तुम्हारे पास उपस्थित होते हैं। हम यथासमय अधः स्थान से एकमात्र उत्पन्न नाना रूप खाद्य द्रव्य मिश्रित करके लाये हैं।

उतनोहिर्बुध्न्योऽमयंस्कःशिशुंनपिप्युषीववेतिसिन्धुंः ।
येननपातमपांजुनामंमनोजुवोवृषणोयंवहन्ति ॥ ५ ॥ ४ ॥

उत । नः । अहिः । बुध्न्यः । मयः । करितिकः । शिशुम् । न । पिप्युषीऽइव । वेति । सिन्धुः । येनं । नपांतम् । अपाम् । जुनामं । मनःऽजुवः । वृषणः । यम् । वहन्ति ॥ ५ ॥ ४ ॥

उतअपिच नोस्माकमहिः अन्तरिक्षगामीअहन्तावाअहीनोवाअहन्यमानोवाएतन्नामको-देवः सएवबुध्न्यः बुध्नंबन्धकमन्तरिक्षं तदर्हतीतिबुध्न्योन्तरिक्षचारीएतन्नामकोदेवोमयः सुखंकः करोतु करोतेर्लङिरूपं किञ्च पिप्युषीव इवशब्दएवार्थःपूरणोवा अस्मान् रसेनाप्यायय-न्तीसिन्धुर्नामनदीवेतिआगच्छतु तत्रदृष्टान्तः—शिशुंन यथाशिशुं प्याययन्तीगौर्गच्छतितद्वद अपान्नपातं उदकानामपातयितारं वर्षकमेतन्नामकं यद्वोदकानांनप्तारंतृतीयंपुत्रंअद्भ्यओषधिव-नस्पतयः तेभ्योग्निरितिनप्तृत्वं तादृशमग्निंयेनजुनामस्तुतिभिःसंगछेम जुइतिसौत्रोधातुर्गत्यर्थः यंदेवं मनोजुवोमनोवेगः वृषणः वर्षकामेघाश्वावहन्तिससुखंकरोतु ॥ ५ ॥

५. अहिर्बुध्न नामक अन्तरिक्षचारी देव हमें सुख दें। सिन्धु, वत्स की तरह, हमें प्रसन्न करें। हम जल के नप्ता अग्निदेव स्तुति करते हुए प्राप्त हुए हैं। मन की तरह वेगशाली मेघ उन्हें ले जाते हैं।

॥ इतिद्वितीयस्यपञ्चमेचतुर्थोवर्गः ॥ ४ ॥

अथषष्ठी—

उतनईंत्वष्टागन्त्वच्छास्मत्सूरिभिरभिपित्वेसजोषाः ।
आवृत्रहेन्द्रश्चर्षणिप्रास्तुविष्टमोनरांनइहगम्याः ॥ ६ ॥

उत । नः । ईम् । त्वष्टा । आ । गन्तु । अच्छ । स्मत् । सूरिऽभिः ।
अभिऽपित्वे । सऽजोषाः । आ । वृत्रऽहा । इन्द्रः । चर्षणिऽप्राः ।
तुविःऽतमः । नराम् । नः । इह । गम्याः ॥ ६ ॥

उतापिचत्वष्टादेवोपिनोस्मान् अच्छअभिप्राप्तुं इदानीमेनंयज्ञंवाआगन्तु आगच्छतु आगत्य-चस्मद सहार्थेप्राशस्त्येवावर्तते अत्रप्रशंसायां प्रशस्तंयथातथा अभिपित्वेअभिगन्तव्येयज्ञेनिमि-त्तभूतेसतिसूरिभिःस्तोतृभिः ऋत्विग्भिः सजोषाः समानप्रीतिर्भवत्वितिशेषः तथावृत्रहावृत्रघा-तीइन्द्रः चर्षणिप्राः चर्षणयोमनुष्यायजमानाः कामैस्तेषांपूरकः तुविष्टमोबहुतमोमहत्तमः इहा-स्मिन्कर्मणिनरान्नृणांनोस्माकमुक्तगुणोपेतःसन्नागम्याः आगच्छतु ॥ ६ ॥

६. त्वष्टा हमारे सामने आयें। यज्ञ के कारण त्वष्टा स्तोताओं के साथ समान-प्रीति-सम्पन्न हों। अतीव विशाल, वृत्रघातक और मनुष्यों के अभीष्ट-पूरक इन्द्र हमारे यज्ञस्थल में आयें।

उतनईंमतयोश्वयोगाःशिशुंनगावस्तरुणंरिहन्ति ।
तमींगिरोजनयोनपत्नीःसुरभिष्टमंनरांनसन्त ॥ ७ ॥

उत । नः । ईम् । मतयः । अश्वऽयोगाः । शिशुम् । न । गावः ।
तरुणम् । रिहन्ति । तम् । ईम् । गिरः । जनयः । न । पत्नीः ।
सुरभिःऽतमम् । नराम् । नसन्त ॥ ७ ॥

उतअपिचईंएनंतरुणंनित्ययुवानमिन्द्रंनोस्माकंमतयः बुद्धयोश्वयोगाः अश्वसमानमाप्तयोरिहन्तिआस्वदयन्ति स्तुवन्तीत्यर्थः तत्रदृष्टान्तः—गावोदोग्ध्योधेनवः शिशुंन शिशुमिववत्समिव तंयथालिहन्तितद्वत् तदेवाह तमींतमेवैनंनरांनराणांयजमानानां सुरभिष्टमंअतिशयेनसुरभिंजनयः फलस्योत्पादयित्र्योगिरः स्तुतयोनसन्तव्याप्नुवन्ति नसतिर्व्याप्तिकर्मा तत्रदृष्टान्तः—जनयोन उत्पादयित्र्यः पत्नीः पत्न्यः पतिमिव ॥ ७ ॥

७. जैसे गायें बछड़ों को चाटती हैं, वैसे ही अश्वतुल्य हमारा मन तरुण इन्द्र की स्तुति करता है। जैसे स्त्रियाँ पति को प्राप्त कर सन्तानशाली होती हैं, वैसे ही हमारी स्तुति, अतिशय यशोयुक्त इन्द्र को प्राप्त कर फल उत्पन्न करती है।

उतनईंमरुतोवृद्धसेनाःस्मद्रोदसीसमनसःसदन्तु ।
पृषदश्वासोवनयोनरथारिशादसोमित्रयुजोनदेवाः ॥ ८॥

उत । नः । ईम् । मरुतः । वृद्धऽसेनाः । स्मत् । रोदसी इति ।
सऽमनसः । सदन्तु । पृषत्ऽअश्वासः । अवनयः । न । रथाः ।
रिशादसः । मित्रऽयुजः । न । देवाः ॥ ८ ॥

उतअपिचनोस्मदीयंईइदानीमेनंयागंवा मरुतःस्मत्सहसदन्तुगछन्तु कुतोदेशात्रोदसी रोदस्योः द्यावापृथिव्योःसकाशात् यद्वारोदस्यावपिगछन्ती कीदृशास्तेमरुतः वृद्धसेनाःप्रवृद्धबलाः समनसः समानमनस्काः पृषदश्वासः पृषद्वर्णाश्वाः पृषत्योमरुतामितियास्कः। अवनयोन यथैवनमनस्वभावाः रथारंहणस्वभावाः रथवन्तोवा मत्वर्थोलुप्यते यद्वा अवनयोरक्षकारथाइवस्थिताः रिशादसः रिशाःशत्रवःतेषामत्तारः मित्रयुजोदेवान मैत्रीयुक्ताव्यवहर्तारऋत्विजइव यद्वा मैत्रीयुक्ताअन्येदेवायथागच्छन्ति तद्वत् ॥ ८ ॥

८. अतीव बलशाली, समान-प्रीति-युक्त, पृषत् नाम के अश्व से सम्पन्न, अवनतस्वभाव और शत्रु-भक्षक मरुद्गण, मैत्रीवाले ऋषियों की तरह, द्यावा-पृथिवी के पास से एकत्र हमारे इस यज्ञ में आयें।

प्रनुयदेषांमहिनाचिकित्रेप्रयुंजतेप्रयुजस्तेसुवृक्ति ।
अधयदेषांसुदिनेनशरुर्विश्वमेरिणंप्रुषायन्तसेनाः ॥ ९ ॥

१ निघंटु. १. १५.

प्र । नु । यत् । एषाम् । महिना । चिकित्रे । प्र । युञ्जते ।
प्रऽयुजः । ते । सुऽवृक्ति । अध । यत् । एषाम् । सुऽदिने ।
न । शरुः । विश्वम् । आ । इरिणम् । प्रुषायन्त । सेनाः ॥ ९ ॥

एषांमरुतांमहिनामहिमा वृष्टिलक्षणोयद्यस्माद् प्रचिकित्रेप्रज्ञायते यद्वैषांमहत्त्वेनयुक्ता-नराः चिकित्रेजानन्त्यनुष्ठेयं नुइतिपूरणः ततस्तेज्ञातारः सुवृक्ति सुपोलुक् सुष्टुतीनांप्रयुजः प्रयो-गान्प्रयुञ्जते अधअथप्रयोगानन्तरं यद्यस्माद् एषांसेनाःवृष्ट्युत्पादकाः विश्वंसर्वंभुवनं इरिणं ऊषरप्रदेशं यथातथासर्वतः प्रुषायन्त उत्पादयन्ति तत्रदृष्टान्तः—सुदिनेमेघावरणादिरहितेदि-ने शरुर्न अन्धकारहिंसकःप्रकाशइव सयथासर्वमावृणोति तथामरुत्सेनाअवृष्ट्यासर्वमूषरंक-रोति यद्वामरुन्महिमावृष्टिर्भवति तदासस्यादिसमृद्धौसत्यांप्रयोगंकुर्वन्तियदायजन्ति तदामरु-त्सेनाः सर्वांमहीमुंदन्तीत्येवंमहानुभावामरुतइतितेषांस्तुतिः ॥ ९ ॥

९. मरुतों की महिमा प्रसिद्ध है; क्योंकि वे स्तुति का प्रयोग जानते हैं। अनन्तर, जैसे प्रकाश संसार को व्याप्त करता है, वैसे ही सुदिन में अन्धकार-विनाशक मरुतों की वृष्टि-प्रद सेना सारे अनुर्वर देशों को उत्पादिका शक्ति से सम्पन्न करती है।

प्रोअश्विनावर्वसेकृणुध्वंप्रपूषणंस्वतंवसोहिसन्ति ।
अद्वेषोविष्णुर्वातऋभुक्षाअच्छासुम्नायंववृतीयदेवान् ॥ १० ॥
प्रो इति । अश्विनौ । अवसे । कृणुध्वम् । प्र । पूषणम् । स्वऽतवसः ।
हि । सन्ति । अद्वेषः । विष्णुः । वातः । ऋभुक्षाः । अच्छ ।
सुम्नाय । ववृतीय । देवान् ॥ १० ॥

हेऋत्विजः अश्विनौएतन्नामकौदेवावुद्दिश्य अवसेस्मद्रक्षणायप्रोकृणुध्वं स्तुतिंप्रकर्षेणकृ-णुध्वं पूषणंहि पोषकमेतन्नामकंदेवमप्यवसे प्रकर्षेणस्तुतिं कृणुध्वं किञ्च येस्वतवसः स्वायत्त-बलाःसन्ति तानपिप्रकृणुध्वं केते अद्वेषः द्वेषरहितोविष्णुर्व्याप्तः एतन्नामकोदेवः प्रथममनाहूतो-पिनकुप्यतीतिवक्तुमद्वेषइत्युक्तं तथावातः सर्वत्रसंचारीवायुःऋभुक्षाः पतिरिन्द्रश्चएतानपिप्रकृणु-ध्वं अतोहं स्वायत्तबलान् सर्वानपिदेवान् सुम्नायसुखायअच्छ आभिमुख्येनववृतीयस्तोत्रैर-भिवर्तयेयम् ॥ १० ॥

१०. ऋत्विको, हमारी रक्षा के लिए अश्विनीकुमारों और पूषा की स्तुति करो। द्वेष-शून्य विष्णु, वायु और इन्द्र (ऋभुक्षा) नाम के स्वतंत्र बल-विशिष्ट देवों की स्तुति करो। सुख के लिए मैं सारे देवों को सामने लाऊँगा।

अथैकादशी–

इयंसावोअस्मेदीधितिर्यजत्राअपिप्राणीचसदनीचभूयाः ।
नियादेवेषुयततेवसूयुर्विद्यामेषंवृजनंजीरदानुम् ॥ ११ ॥ ५ ॥

इयम् । सा । वः । अस्मे इति । दीधितिः । यजत्राः । अपिऽप्राणी ।
च । सदनी । च । भूयाः । नि । या । देवेषु । यतते । वसुऽयुः ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ११ ॥ ५ ॥

हेयजत्राः यष्टव्यादेवाः वोयुष्मत्सबन्धिनीसाइयंप्रसिद्धादीधितिर्दीप्तिरस्मे अस्माकमपिप्राणीसर्वदाचेष्टयित्रीसदनीचनिवासवतीचभूयाः भूयाद्भवतु यादीधितिर्वसूयुः वसुमतीदेवेषुनियतते नियमेनप्रयत्नंकरोति तानपिप्रकाशितुंसैवभूयात् विद्यामेतिगतः ॥ ११ ॥

११. यजनीय देवो, तुम्हारी प्रसिद्ध ज्योति हमारे लिए प्राणदात्री और निवास-स्थान बने। तुम्हारी अन्नवती ज्योति देवों को प्रकाशित करे, ताकि हम अन्न, बल और दीर्घ आयु प्राप्त कर सकें।

॥ इतिद्वितीयस्यपञ्चमेपञ्चमोवर्गः ॥ ५ ॥

पितुंन्वित्येकादशर्चमष्टमंसूक्तंआगस्त्यमन्नदेवताकंगायत्रंआद्यानुष्टुब्गर्भोष्णिक् आद्यःपञ्चकस्त्वयोष्टकाअनुष्टुप्पुगर्भाइत्युक्तत्वात् तृतीयापञ्चमीषष्ठीसप्तम्येकादशीचेतिपञ्चानुष्टुभः तथाचानुक्रमणिका–पितुंन्वन्नस्तुतिर्गायत्रंत्वाद्यानुष्टुब्गर्भा तृतीयान्त्येअन्त्या बृहतीवा पञ्चम्याद्याश्चतस्रोनुष्टुभइतिविनियोगंशौनकआह–पितुंन्वित्युपतिष्ठेतनित्यमन्नमुपस्थितम् ।पूजयेदशनंनित्यंभुंजीयादविकुत्सयन् १ नास्यस्यादन्नजोव्याधिर्विषमप्यमृतंभवेत् । विषंचपीत्वैतत्सूक्तंजपेद्विषविनाशनं २ नावाग्यतस्तुभुञ्जीतनाशुचिर्नजुगुप्सितम् ।दद्याच्चपूजयेच्चैवजुहुयाच्चहविःसदा ३ क्षुद्भयंनास्यकिञ्चित्स्यान्नान्नजंव्याधिमाप्नुयात् इति ।

तत्रप्रथमा–

पितुंनुस्तोषंमहोधर्माणंतविषीम् ।
यस्यत्रितोव्योजसावृत्रंविपर्वमर्दयत् ॥ १ ॥

पितुम् । नु । स्तोषम् । महः । धर्माणम् । तविषीम् ।
यस्य । त्रितः । वि । ओजसा । वृत्रम् । विऽपर्वम् । अर्दयत् ॥ १ ॥

हेपितोअन्नसोमरूप तंतादृशंस्तुतंत्वात्वांमहानुभावंवचोभिः स्तुतिवाग्भिः वयंसुषूदिम क्षारयामोरसान् तत्रदृष्टान्तः—गावोनहव्या गावोयथाहवींषिउत्पादयन्ति तथा त्वत्सकाशात्सोमंसुषूदिम किमर्थंकीदृशंचेतिचेदुच्यते—देवेभ्यइन्द्रादिभ्यः तदर्थंत्वात्वांसधमादंतेषांसहमादयितारं नकेवलंदेवेभ्यएव किन्तुसधमादं अस्माभिःसहमादयितारं हुतशेषरूपं त्वात्वां अस्मभ्यमस्मदर्थमपि ॥ ११ ॥

११. पितु, गायों के पास जैसे हव्य गृहीत होता है, वैसे ही तुम्हारे पास स्तुति-द्वारा हम रस ग्रहण करते हैं। यह रस देवों को ही नहीं, हमें भी हृष्ट करता है।

॥ इतिद्वितीयस्यपञ्चमेसप्तमोवर्गः ॥ ७ ॥

समिद्धोअद्येत्येकादशर्चंनवमंसूक्तमागस्त्यं पूर्वंगायत्रंत्वित्युक्त्वादिदंगायत्रं समिद्धाग्नितनूनपादादयःएकादशप्रत्यृचंदेवताः यास्केनअर्थाकिंदेवताःप्रयाजाइत्युपक्रम्याग्नेयाः प्रयाजाऋतुदेवताः छन्दोदेवताः पशुदेवताः प्राणदेवताआत्मदेवताः इत्यादिनाबहूनपक्षानुपन्यस्यब्राह्मणानिचप्रदर्श्याग्नेयाएवेतिसिद्धान्तितं समिद्धआप्रियइत्यनुक्रान्तम् पशावगस्त्यानामेकादशप्रयाजरूपमिदमाप्रीसूक्तम्।

तत्रप्रथमा—

समिद्धोअद्यराजसिदेवोदेवैःसहस्रजित्। दूतोहव्याकविर्वह ॥१॥

सम्ऽइद्धः। अद्य। राजसि। देवः। देवैः। सहस्रऽजित्। दूतः। हव्या। कविः। वह ॥ १ ॥

हेअग्ने देवैर्ऋत्विग्भिः ऋत्विग्भिः समिद्धः सम्यग्दीपितोदेवः अतएवदीप्यमानः समिद्धैर्वादेवैःसहितः समिद्धःसन् अद्यास्मिन्यागदिनेराजसिईशिषे हेसहस्रजिद सहस्रस्यधनस्यैतत्संख्याकानांशत्रूणांवाजेतः ततः दूतः देवानांदूतवद् यज्ञादिवार्ताहरः आह्वातावा अग्निर्देवानांदूतआसीदितिश्रुतेः। कविः क्रान्तदर्शी ईदृशस्त्वंहव्याअस्मदीयानिहवींषिवह देवेभ्यः प्रापय ॥ १ ॥

१. अग्नि, ऋत्विकों-द्वारा भली भाँति आज समिद्ध नामक अग्नि सुशोभित होते हैं। हे सहस्रजित् देव, तुम कवि और दूत हो। तुम भली भाँति हव्य वहन करो।

अथद्वितीया—

तनूपात्तंयतेमध्वायज्ञःसमंज्यते। दधत्सहस्रिणीरिषः ॥ २ ॥

---

१ नि० ८.२१। २ तै० सं० २.५.८।

तनूऽनपात् । ऋतम् । यते । मध्वा । यज्ञः । सम् । अज्यते ।
दधत् । सहस्रिणीः । इषः ॥ २ ॥

तनूनपात् यज्ञशरीरस्यनपातयिता यद्वा आपोत्रतन्वउच्यन्तइत्युक्तत्वादपान्नपातयिता तासांनप्तावा अद्भ्यओषधयः ओषधीभ्योग्निरेतिनप्तृत्वं यज्ञःपूज्यः यज्ञनिर्वाहकत्वाद्वायज्ञः ईदृशोग्निः ऋतंयज्ञंयते गच्छते अनुतिष्ठतेयजमानायतदभिमतार्थं मध्वामधुरेणआज्यसोमादिद्रव्येणसमज्यते सम्यगक्तःक्रियते किंकुर्वन्नयं सहस्रिणीः एतत्संख्याकानि इषोन्नानिदधत् यजमानेभ्योधारयन् ॥ २ ॥

२. पूजनीय तनूनपात् नामक अग्नि हजार प्रकारों से अन्न धारण करके यजमान के लिए मधुर रस से युक्त द्रव्य में मिलते हैं।

आजुह्वानोनईड्योदेवाँआवक्षियज्ञियान् ।
अग्नेसहस्रसाअसि ॥ ३ ॥

आऽजुह्वानः । नः । ईड्यः । देवान् । आ । वक्षि । यज्ञियान् ।
अग्ने । सहस्रऽसाः । असि ॥ ३ ॥

हेअग्ने आजुह्वानः अस्माभिराहूयमानःसन्ईड्योस्माभिःस्तुत्यः इड्नामकः त्वन्नोस्मदर्थंयज्ञियान्यज्ञभाजोदेवान् आवक्षि आवह हेअग्ने त्वं सहस्रसाअसि अपरिमितधनस्यदातासि ॥ ३ ॥

३. हे इडच नामक अग्नि, तुम हमारे द्वारा आहूत होकर हमारे लिए यज्ञभागी देवों को बुलाओ। अग्नि, तुम असीम अन्न के दाता हो।

प्राचीनंबर्हिरोजसासहस्रवीरमस्तृणन् ।
यत्रादित्याविराजथ ॥ ४ ॥

प्राचीनम् । बर्हिः । ओजसा । सहस्रऽवीरम् । अस्तृणन् । यत्र ।
आदित्याः । विऽराजथ ॥ ४ ॥

प्राचीनंप्रागग्रं सहस्रवीरं सहस्रसंख्याकावीराः शत्रूणांविशेषेणईरयितारोदेवायस्यतत्तादृक् यद्वा अपरिमितावीराः पुत्रादयोयेनतादृक् बर्हिरोजसामन्त्रलक्षणबलेनोपेताऋत्विजःअस्तृणन् आच्छादयन् यत्रयस्मिन्बर्हिषि आदित्याःअदितेःपुत्रायूयं विराजथ विविधंराजध्वे तद्बर्हिरस्तृणन् ॥ ४ ॥

४. सहस्र वीरोंवाले और पूर्वाभिमुख में अग्र भाग से युक्त जिस अग्निरूप कुश पर आदित्य लोग बैठे हैं, उसे ऋत्विक् लोग, मंत्र के प्रभाव से, आच्छादित करते हैं।

अथपञ्चमी–

विराट्सम्राड्विभ्वीःप्रभ्वीर्बह्वीश्चभूयसीश्चयाः ।
दुरोघृतान्यक्षरन् ॥ ५ ॥ ८ ॥

विऽराट् । सम्ऽराट् । विऽभ्वीः । प्रऽभ्वीः । बह्वीः । च । भूयसीः ।
च । याः । दुरः । घृतानि । अक्षरन् ॥ ५ ॥ ८ ॥

विराट् विशेषेणराजतइति व्यत्ययेनैकवचनं सम्राट् सम्यगतिपूज्यतरंराजमानाः अत्रापिव्यत्ययेनैकवचनम् विभ्वीर्विभ्व्योविविधंभवित्र्यः प्रभ्वीःप्रभ्व्यः प्रकर्षेणभवित्र्यः बह्वीर्बह्व्यः भूयसीः लोकप्रसिद्धसंख्याभिर्भूयस्यश्चयाःदुरोयज्ञगृहद्वारःसन्ति ताघृतान्युदकानिप्राण्युपकारार्थमक्षरन्क्षरन्ति यद्वा बह्वीर्भूयसीरित्येतेसंख्यावचने शिष्टानितासांनामधेयानि ॥ ५ ॥

५. यज्ञशाला का विराट्, सम्राट्, विभु, प्रभु, बहु और भूयान् (अग्निरूप) द्वारा जल गिराता है।

॥ इतिद्वितीयस्यपञ्चमेष्टमोवर्गः ॥ ८ ॥

अथषष्ठी–

सुरुक्मेहिसुपेशसाधिंश्रियाविराजतः ।
उषासावेहसीदताम् ॥ ६ ॥

सुरुक्मे इति सुऽरुक्मे । हि । सुऽपेशसा । अधि । श्रिया ।
विऽराजतः । उषसौ । आ । इह । सीदताम् ॥ ६ ॥

सुरुक्मे शोभनदीप्ताभरणे हिप्रसिद्धे सुपेशसाशोभनरूपे ईदृश्यावहोरात्रदेवतेअधिअधिकं श्रियासौंदर्येणविराजतः विशेषेणदीप्येते हियोगादनिघातः तादृश्यावुषसौ एतद्रात्रेरप्युपलक्षणं उषःशब्दोदिवसस्योपलक्षकः रात्रिरुषाश्चोभे इहास्मिन्दिनेआसीदतां आगत्यतिष्ठतांआगच्छतांवा ॥ ६ ॥

६. दीप्त आभरण से युक्त और सुन्दर-रूप-संयुक्त अग्निरूप दिवा-रात्रि, अतीव शोभाशाली होकर विराजित होते हैं। वे यहाँ बैठें।

प्रथमाहिसुवाचसाहोताराधैव्याकवी ।
यज्ञंनोयक्षतामिमम् ॥ ७ ॥

प्रथमा । हि । सुऽवाचसा । होतारा । दैव्या । कवी इति ।
यज्ञम् । नः । यक्षताम् । इमम् ॥ ७ ॥

प्रथमा मुख्यनामैतत् प्रतमौप्रकृष्टतमौ हिप्रसिद्धौ सुवाचसाप्रियवचनौ दैव्यादेवार्हौ होतारादेवानामाह्वातारौहोमनिष्पादकौवा कवीमेधाविनावेतौनोस्मदीयमिमंयज्ञं यक्षतांयजतांगच्छतांवा ॥ ७ ॥

७. यह अत्युत्तम और प्रियभाषी अग्निरूप दैव होता तथा दिव्य कवि-द्वय हमारे यज्ञ में उपस्थित हों।

भारतीळेसरस्वतियावःसर्वाउपब्रुवे ।
तानश्चोदयतःश्रिये ॥ ८ ॥

भारति । इळे । सरस्वति । याः । वः । सर्वाः । उपऽब्रुवे ॥
ताः । नः । चोदयत । श्रिये ॥ ८ ॥

हेभारति भरतआदित्यःतस्यसंबन्धिनीभारती तादृशियुलोकदेवते हेइळेभूदेवि हेसरस्वति सरोवाउदकंवातद्वत्यन्तरिक्षदेवते तादृशिदेवि एताःक्षित्यादिदेवताः एतास्तिस्रः आदित्यप्रभावविशेषरूपाइत्याहुः यास्तिस्रः सर्वावोयुष्मानुपब्रुवे उपेत्यस्तौमि ताः यूयंनोस्मान्श्रियेसंपदे चोदयत प्रेरयत ॥ ८ ॥

८. हे अग्निरूपिणी भारती, सरस्वती और इला, मैं तुम सबको बुलाता हूँ। जैसे मैं सम्पत्तिशाली हो सकूँ, वैसा करो।

त्वष्टारूपाणिहिप्रभुःपशून्विश्वान्त्समानजे ।
तेषांनःस्फातिमायज ॥ ९ ॥

त्वष्टा । रूपाणि । हि । प्रऽभुः । पशून् । विश्वान् । सम्ऽआनजे ।
तेषाम् । नः । स्फातिम् । आ । यज ॥ ९ ॥

त्वष्टायज्ञसाधनपात्राभिमानीदेवोरूपाणियोनौसृष्टानिरेतांसिरूपाणिकर्तुंप्रभुर्हि हिशब्दः श्रुत्यन्तरप्रसिद्धिद्योतनार्थः योनौवैरेतसःसिक्तस्यत्वष्टारूपाणिविकरोतीतिश्रुतेः । सदेवोविश्वान्सर्वानपिपशूनस्मदीयान्गवादिकान्समानजे सम्यगनक्ति व्यक्तीकरोति संपूर्वादनक्तेर्लिटितस्मान्नुडितिनुट् अथप्रत्यक्षः तेषामक्तानांपशूनांस्फातिंवृद्धिंनोस्मदर्थमायज सर्वतःपूजय कुर्वित्यर्थः ॥ ९ ॥

९. अग्निरूप त्वष्टा रूप देने में समर्थ हैं। वह सारे पशुओं का रूप व्यक्त करते हैं। त्वष्टा, हमें बहुत पशु दो।

अहमगस्त्यः नुक्षिप्रंपितुंपालकमन्नंस्तोषंस्तौमि महोमहान्तंधर्माणंसर्वस्यधारकंतविषीं बलात्मकं यद्वा महतोलोकस्यधारकंयस्यान्नस्यौजसाबलेनसामर्थ्येनत्रितोविस्तीर्णतमः प्रख्यात-कीर्तिस्त्रिषुक्षित्यादिस्थानेषुतायमानोपीन्द्रः वृत्रंविपर्वंविच्छिन्नसन्धिकंयथातथाव्यर्दयत् हिं-सितवान् ॥ १ ॥

१. मैं क्षिप्रकारी होकर विशाल, सबके धारक और बलात्मक पितु (अन्न) की स्तुति करता हूँ। उनकी ही शक्ति से त्रितदेव या इन्द्र ने वृत्र की सन्धियाँ फाटकर उसका वध किया था।

स्वादोंपितोमधोंपितोवयंत्वांववृमहे।
अस्माकमविताभव ॥ २ ॥

स्वादो इति। पितो इति। मधो इति। पितो इति। वयम्। त्वा। ववृमहे। अस्माकम्। अविता। भव ॥ २ ॥

हेस्वादो आस्वादनीयपितोपालक मधोमाधुर्योपेतपितो हेपानसाधनान्न वयंत्वात्वांववृमहे सेवामहे अत्रसर्वत्रानानुदात्तानांपूर्वस्यासामान्यवचनत्वेनानिघातत्वम् अनुदात्तानांतुविशेषवचन-त्वान्निघातत्वं असकृत्पितुशब्दश्रवणंतस्यप्राशस्त्यज्ञापनार्थं हेपितो अस्माकमवितातर्पयिता भव ॥ २ ॥

२. हे स्वादु पितु, हे मधुर पितु, हम तुम्हारी सेवा करते हैं। तुम हमारी रक्षा करो।

उपंनःपितवाचंरशिवःशिवाभिरूतिभिः।
मयोभुरद्विषेण्यःसखांसुशेवोअद्वंयाः ॥ ३ ॥

उपं। नः। पितो इति। आ। चर। शिवः। शिवाभिः। ऊतिऽभिः। मयःऽभुः। अद्विषेण्यः। सखां। सुऽशेवः। अद्वयाः ॥ ३ ॥

हेपितो यतस्त्वंशिवः मङ्गलः अतः शिवाभिः मङ्गलयुक्ताभिःऊतिभीरक्षणैः नोस्मान्उप-समीपंआचरआगच्छ आगत्यचमयोभुः सुखस्यभावयिता अद्विषेण्यः अद्वेष्यरसः प्रियरसइ-त्यर्थः सखासखिवत्प्रियकारी सुशेवः अतएवसुष्ठुसुखकरः अद्वयाः द्वयरहितः उक्तगुणएव नतु तद्विपरीतोभवेत्यर्थः अथवादृष्टान्तवादोयं सुशेवः अद्वयाः मनःकर्मविसंवादरहितः सखायथा मयोभुरद्वेष्यश्चभवति तद्वत् त्वमपिभवेत्यर्थः ॥ ३ ॥

३. हे पितु, तुम मंगलमय हो। कल्याणवाही आश्रयदान-द्वारा हमारे पास आकर, हमें सुख दो। हमारे लिए तुम्हारा रस अप्रिय न हो। तुम हमारे लिए मित्र और अद्वितीय सुखकर बनो।

अथचतुर्थी—

तवत्येपितोरसारजांस्यनुविष्ठिताः ।
दिविवाताइवश्रिताः ॥ ४ ॥

तव । त्ये । पितो इति । रसाः । रजांसि । अनु । विऽस्थिताः ।
दिवि । वाताःऽइव । श्रिताः ॥ ४ ॥

हेपितो तव त्वत्संबन्धिनः त्येतेस्वाद्वम्लादिषड्रसाः रजांसिलोकान्लोकस्थानर्थाननुआनुकूल्येनविष्ठिताः विविधंस्थिताः विविधस्थितौदृष्टान्तः—दिविद्युलोकेन्तरिक्षेश्रितावाताइववायवः तेयथाव्याप्तास्तद्वत् ॥ ४ ॥

४. पितु, जैसे वायु अन्तरिक्ष का आश्रय किये हुए हैं, वैसे ही तुम्हारा रस सारे संसार के अनुकूल व्याप्त है।

अथपञ्चमी—

तवत्येपितोददतस्तवस्वादिष्ठतेपितो ।
प्रस्वाद्मानोरसानांतुविग्रीवाइवेरते ॥ ५ ॥ ६ ॥

तव । त्ये । पितो इति । ददतः । तव । स्वादिष्ठ । ते । पितो इति ।
प्र । स्वाद्मानः । रसानाम् । तुविग्रीवाःऽइव । ईरते ॥ ५ ॥ ६ ॥

हेपितो पालकान्न त्येतेत्वदर्थिनोनरास्तवभोक्तारोभवन्तीतिशेषः केतेनराः हेस्वादिष्ठस्वादुतम पितोपालक तवत्वदनुग्रहात्तेत्वांददतः प्रयच्छन्तोभवन्ति यद्वातेपितोइत्यादरार्थे अभ्यासेहिभूयांसमर्थंमन्यन्ते किञ्च तवरसानां स्वाद्वम्लादीनांषण्णांस्वाद्मानः स्वादयितारोभक्षयितारएवतुविग्रीवाइव तुवीतिबहुनाम प्रवृद्धग्रीवाएवप्रेरतेप्रकर्षेणगच्छन्ति संचरन्ति इवशब्दएवकारार्थःपूरणोवा भूलोकेअत्तारएवदृढाङ्गाभवन्तीतिप्रसिद्धं अनशनेहिग्रीवाअधोलंबते यद्वा तवरसानामत्तारः असंख्यातग्रीवाइवभवन्ति रसानांबाहुल्यादितिभावः एवंबहुरसोपेतमन्नमितितस्यस्तुतिः ॥५॥

५. स्वादुतम पितु, जो लोग तुम्हारी प्रार्थना करते हैं, वे भोक्ता हैं। पितु, तुम्हारी कृपा से वे तुम्हें दान देते हैं। तुम्हारे रस का आस्वादन करनेवालों की गर्दन ऊँची या मजबूत होती है।

॥ इतिद्वितीयस्यपञ्चमेषष्ठोवर्गः ॥ ६ ॥

अथषष्ठी—

त्वेपितोमहानांदेवानांमनोहितम् ।
अकारिचारुकेतुनातवाहिमवसावधीत् ॥ ६ ॥

त्वे इति । पितो इति । महानाम् । देवानाम् । मनः । हितम् ।
अकारि । चारु । केतुना । तव । अहिम् । अवसा । अवधीत् ॥ ६ ॥

हेपितो महानांपूज्यानांमहतांवादेवानामिन्द्रादीनांमनस्त्वेत्वयिहितंनिहितं अकारिकृतं अमृतंविहायत्वय्येववर्तते हेपितो तवचारुसमीचीनेनकेतुनात्वत्कृतेनप्रज्ञालक्षणेनअवसारक्षणेनअहिंमेघंवृत्रंवाअवधीत् हतवानिन्द्रः अन्नमयंहिसोम्यमनइतिश्रुतेः।अथवात्वत्केतुनाजगद्रक्षणेन निमित्तेनेतियोज्यं जगद्रक्षणार्थंहीन्द्रेणाहिर्भिद्यते ॥ ६ ॥

६. पितु, महान् देवों ने तुममें ही मन निहित किया है। पितु, तुम्हारी चारु बुद्धि और आश्रय-द्वारा ही अहि का वध किया गया था।

अथसप्तमी—

यददोपितोअजगन्विवस्वपर्वतानाम् ।
अत्राचिन्नोमधोपितोरंभक्षायगम्याः ॥ ७ ॥

यत् । अदः । पितो इति । अजगन् । विवस्व । पर्वतानाम् । अत्र ।
चित् । नः । मधो इति । पितोइति । अरम् । भक्षाय । गम्याः॥७॥

हेपितोअन्न त्वांयद्यदाविवस्व सुपोलुक् अन्त्यलोपश्छान्दसः विवासनवतांविद्युद्रूपप्रकाशनवतांउदकलक्षणधनवतांवापर्वतानांमेघानांसंबन्धिअदः प्रसिद्धंतदुदकं अजगन् अगमत् गच्छेत् अत्रचित् अस्मिन्कालेहेमधोहेपितोमाधुर्योपेतान्नत्वंनोस्मान्अरंअलंसंपूर्णभक्षायभक्षणायगम्याः गच्छसन्निहितोभव ॥ ७ ॥

७. जिस समय मेघ प्रसिद्ध जल को लाते हैं, उस समय हे मधुर पितु, हमारे सम्पूर्ण भोजन के लिए पास आना।

अथाष्टमी—

यदपामोषधीनांपरिंशमारिशामहे ।
वातापेपीवइद्भव ॥ ८ ॥

यत् । अपाम् । ओषधीनाम् । परिंशम् । आऽरिशामहे ।
वातापे । पीवः । इत् । भव ॥ ८ ॥

यद्येनअपामोषधीनांचसंबन्धिपरिंशंपरितःलेशं परितःसुखकरमन्नमारिशामहे आस्वादयामःभक्षयामः तेनान्नोदकसारेण हेवातापेवातेनप्राणेनाप्नोतिस्वनिर्वाहमितिवा तेनाप्यायत-

---

१ छान्दोग्योपनिषत् ।

इतिवावातापिशरीरं हेशरीर त्वंपीवइत्वआप्यायितएवभव अन्नोदकाभ्यांशरीरवृद्धिःप्रसिद्धा यद्वा यद्यप्यपामोषधीनांपरिंशलेशमास्वादयामः तथापिहेवातापे वातवत्सर्वव्यापकपितो त्वमल्पमपि पीवइवपीवएवभव ॥ ८ ॥

८. हम यथेष्ट जल और यव आदि ओषधियों को खाते हैं, इसलिए हे शरीर, तुम स्थूल बनो।

यत्तेंसोमगवांशिरोयवांशिरोभजांमहे ।
वातांपेपीवइद्भंव ॥ ९ ॥

यत् । ते । सोम । गोऽआंशिरः । यवंऽआशिरः । भजांमहे ।
वातांपे । पीवंः । इत् । भव ॥ ९ ॥

पूर्वमन्त्रसाम्येनस्तुत्वेदानींसोमलक्षणमन्नंस्तौति हेसोम तेतवयवयमंशंगवाशिरः गोविकारक्षीराद्याश्रपणद्रव्यं यवाशिरःयवविकाराश्रपणद्रव्यंभजामहे सेवामहे तेन हेवातापे शरीरपीवोभव ॥ ९ ॥

९. सोम, तुम्हारे यव आदि और दुग्ध आदि से मिश्रित अंश का हम भक्षण करते हैं। इसलिए हे शरीर, तुम स्थूल बनो।

अथदशमी—

करम्भओषधेभवपीवोंवृक्कउदारथिः ।
वातांपेपीवइद्भंव ॥ १० ॥

करम्भः । ओषधे । भव । पीवंः । वृक्कः । उदारथिः ।
वातांपे । पीवंः । इत् । भव ॥ १० ॥

करंभः यः करंभादिरूपःसक्तुपिंडोस्ति तदात्मकहेओषधेत्वंपीवः स्थौल्यवान्वृक्कः व्याधेर्वर्जयिताभव उदारथिः ऊर्ध्वगमनः इन्द्रियाणांउद्दीपयिताभव शिष्टोगतः ॥ १० ॥

१०. हे करम्भ ओषधि या सत्तुपिण्ड, तुम स्थूलता-सम्पादक, रोग-निवारक और इन्द्रियोद्दीपक बनो। हे शरीर, तुम स्थूल बनो।

तंत्वांवयंपितोवचोंभिर्गावोनहव्यासुषूदिम ।
देवेभ्यंस्त्वासधमादंमस्मभ्यंत्वासधमादंम् ॥ ११ ॥ ७ ॥

तम् । त्वा । वयम् । पितो इति । वचंःऽभिः । गावंः । न । हव्या । सुसूदिम ।
देवेभ्यंः । त्वा । सधऽमादंम् । अस्मभ्यंम् । त्वा । सधऽमादंम् ॥ ११ ॥ ७ ॥

अथदशमी—

उपत्मन्यावनस्पतेपाथोदेवेभ्यःसृज ।
अग्निर्हव्यानिसिष्वदत् ॥ १० ॥

उप । त्मन्या । वनस्पते । पाथः । देवेभ्यः । सृज ॥
अग्निः । हव्यानि । सिस्वदत् ॥ १० ॥

हेवनस्पतेयूपाभिमानिदेव त्मन्याआत्मनैवदेवेभ्योग्न्यादिभ्यःपाथः पशुरूपमन्नंउपसृज उत्पादय यूपाभावेपशुनियोजनाभावेनहविषोभावात् त्वय्येवंकृतवतिसतिअग्निर्हव्यानिहवींषि सिस्वदत् स्वादयतु स्वादूकरोतु ॥ १० ॥

१०. हे अग्निरूप वनस्पति, तुम देवों का पशु रूप अन्न उत्पन्न करो। अग्नि सब हव्यों को स्वादिष्ठ करें।

पुरोगाअग्निर्देवानांगायत्रेणसमंज्यते ।
स्वाहाकृतीषुरोचते ॥ ११ ॥९॥

पुरःऽगाः । अग्निः । देवानाम् । गायत्रेण । सम् । अज्यते ।
स्वाहाऽकृतीषु । रोचते ॥ ११ ॥ ९ ॥

अयमग्निर्देवानांपुरोगाः असुरयुद्धंप्रतिपुरोगामी यद्वा देवानांमध्येयज्ञंप्रत्यग्निरेवपुरोगामी अतएवाग्रणीत्वादेवाग्निशब्दोनिष्पन्नः अग्निःकस्मादग्रणीर्भवतीतिनिरुक्तम् । तादृशोयंगायत्रेण एतदुपलक्षितमन्त्रेणसमज्यते सम्यक्लक्ष्यते स्वाहाकृतीषुस्वाहाकारेषुसत्सुहविःषुदीयमानेषु रोचते अत्यर्थंदीप्यते एताःप्रयाजदेवताः यज्ञावयवाभिमानिन्यः तद्वारायज्ञएवस्तूयतइतिकेषांचिन्मतं अग्नेरेवनामान्तरमित्यन्ये ॥ ११ ॥

११. देवों के अग्रगामी अग्नि गायत्री छन्द से लक्षित हुआ करते हैं। स्वाहा देने के समय वे प्रदीप्त होते हैं।

॥ इतिद्वितीयस्यपञ्चमेनवमोवर्गः ॥ ९ ॥

अग्नेनयेतिदशमंसूक्तमष्टर्चमागस्त्यंत्रैष्टुभमाग्नेयं अग्नेनयाष्टावाग्नेयमित्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभेछन्दसिविनियोगः अथैतस्याइत्यत्राग्नेनयाग्नेबृहन्नित्यष्टा-

२ १ नि० ७. ११.।

नामुत्तमादुत्तमास्तिस्रउद्धरेदितिसूत्रितत्वात् अत्रशौनकः—उत्पथप्रतिपन्नोयोभ्रष्टोवापिपथः क्वचित्। पन्थानंप्रतिपद्येतकृत्वावाकर्मगर्हितम् ॥ १ ॥ अग्नेनयेतिसूक्तेनप्रत्यृचंजुहुयाद्घृतम्। जपेच्चप्रयतोनित्यमुपतिष्ठेतवानलमिति ॥ २ ॥ आद्याश्चतस्रःश्रवणाकर्मणिविनियुक्ताः श्रावण्यांपौर्णमास्यामित्यत्रसूत्रितम् अग्नेनयसुपथारायेअस्मानितिचतसृभिःप्रत्यृचंहुत्वेति आग्नेयेपशौवपापुरोडाशयोराद्येद्वेअनुवाक्ये तथाचसूत्रितम्—अग्नेनयसुपथारायेअस्मान्पाहिनोअग्नेपायुभिरजस्रैरिति आद्याग्रायणीयेष्टौआग्नेयस्यानुवाक्यासैवोदयनीयेयाज्या तदहःप्रायणीयेष्टिरित्यत्रसूत्रितम्—अग्नेनयसुपथारायेअस्मानादेवानामपिपंथामगन्मेतिविपरीताश्चयाज्यानुवाक्याइतिच।

तत्रसूक्तेप्रथमा—

अग्ने॒नय॑सु॒पथा॑रा॒येअ॒स्मान्विश्वा॑निदेववयु॒नानि॑वि॒द्वान्।
यु॒यो॒ध्य१॒॑स्मज्जु॑हुरा॒णमेनो॒भूयि॑ष्ठांते॒नम॑उक्तिंविधेम ॥ १ ॥

अग्ने॑। नय॑। सु॒ऽपथा॑। रा॒ये। अ॒स्मान्। विश्वा॑नि। दे॒व॒। व॒युना॑नि। वि॒द्वान्। यु॒यो॒धि। अ॒स्मत्। जु॒हु॒रा॒णम्। एनः॑। भूयि॑ष्ठाम्। ते॒। नमः॑ऽउक्तिम्। वि॒धे॒म ॥ १ ॥

हेअग्ने अङ्गनादिगुणविशिष्ट देवद्योतमान विश्वानिवयुनानिसर्वाणिप्रज्ञानानि अनेनैतदनुष्ठितमिदंप्रायणीयमितियदेतवज्ञानमस्ति तद्विद्वान्नित्यर्थः यतोविद्वान् अतस्त्वमस्मान्सुपथा शोभनेनमार्गेण रायेगन्तव्यायस्वर्गादिधनाय द्वितीयार्थेवाचतुर्थी प्रापणीयंरायंप्रतिनय तदर्थं जुहुराणंकुटिलकार्येनःपापंफलप्रतिबन्धरूपमस्मत् अस्मत्तोयुयोधिपृथक्कुरु तेतववयंभूयिष्ठांअतिप्रवृद्धांनमउक्तिंनमस्कारोक्तिंस्तुतिंविधेम परिचरेम कुर्मः ॥ १ ॥

१. दीप्तिविशिष्ट अग्नि, तुम सब प्रकार के ज्ञान जानते हो; इसलिए हमें सुमार्ग पर, धन की ओर ले जाओ। तुम कुटिल पाप को हमारे पास से ले जाओ। हम बार-बार तुम्हें प्रणाम करते हैं।

आयुष्कामेष्ट्यांअग्नेत्वंपारयेतिद्वेस्विष्टकृतोयाज्ये पाहिनइतिचतुर्थीअनुवाक्या पाहिनोअग्नेपायुभिरजस्रैरग्नेत्वंपारयानव्योअस्मानितिसंयाज्येइतिसूत्रितम् एतेएवस्वस्त्ययन्यामपिसंयाज्येइतिसूत्रितत्वात्।

सैषाद्वितीया—

अग्ने॒त्वंपा॑रया॒नव्यो॑अ॒स्मान्त्स्व॒स्तिभि॒रति॑दु॒र्गाणि॒विश्वा॑।
पूश्च॑पृ॒थ्वीब॑हु॒लान॑उ॒र्वीभवा॑तो॒कायत॑नयाय॒शंयोः ॥ २ ॥

अग्ने । त्वम् । पारय । नव्यः । अस्मान् । स्वस्तिऽभिः । अति ।
दुःऽगानि । विश्वा । पूः । च । पृथ्वी । बहुला । नः । उर्वी । भव ।
तोकाय । तनयाय । शम् । योः ॥ २ ॥

हेअग्ने त्वंनव्योनवतरःस्तुत्योवात्वमस्मान्यागानुष्ठातॄन्पारय कर्मसमापय्यातिपारय अति क्रामय केनसाधनेन स्वस्तिभिः अस्तिरभिपूजितःसुशब्दःशोभनवचनः अत्यन्तंपूजितैर्यज्ञादि-साधनैः कानि विश्वासर्वाणिदुर्गाणिदुर्गमनानिपापानिअनतिक्रमणीयानि दुरिताख्यानिअतिपार-य किञ्च नोस्माकंपृथ्वीपृथुतरापूश्चपुर्यपिभवत्वितिशेषः चशब्दोवक्ष्यमाणेनसहसमुच्चयार्थः पूरि-तिजात्येकवचनं पुराण्यपिभवंत्वित्यर्थः तथानोस्माकंउर्वीपृथ्व्यपिबहुलासस्यादिनाबहुतराभवतु त्वंतुतोकायअपत्याय तनयायपुत्राय तोकशब्दोपत्यसामान्यवचनः तनयशब्दःपुत्रवचनः शंसु-खंयोर्मिश्रयिताभव यद्वारोगाणांशमनंभयानांयावनंचभव कुर्वित्यर्थः ॥ २ ॥

२. अग्नि, तुम नये हो। स्तुति के कारण हमें तुम सारे दुर्गम पापों से मुक्त करो। हमारा नगर अतीव प्रशस्त हो। हमारी भूमि प्रशस्त हो। तुम हमारे पुत्रों और अपत्यों को सुख प्रदान करो।

अग्नेत्वमस्मद्युयोध्यमीवाअनंग्नित्राअभ्यमन्तकृष्टीः ।
पुनरस्मभ्यंसुवितायदेवक्षांविश्वेभिरमृतेभिर्यजत्र ॥ ३ ॥
अग्ने । त्वम् । अस्मत् । युयोधि । अमीवाः । अनंग्निऽत्राः । अभि ।
अमन्त । कृष्टीः । पुनः । अस्मभ्यम् । सुवितायं । देव । क्षाम् ।
विश्वेभिः । अमृतेभिः । यजत्र ॥ ३ ॥

हेअग्ने त्वंअमीवाः रोगान्अस्मत्अस्मत्तोयुयोधि व्यावर्तय याअनग्नित्राः अग्निनाअपालि-ताः कृष्टीः प्रजाःअभ्यमन्तअभिमिमते हिंसंतिअस्मान् यच्छब्दाध्याहारादनिघातः तायुयोधियु-ध्दतोवियोजयः यद्वा ताः अनग्नित्राः पापिन्यः कृष्टयः प्रजाः अभ्यमन्त त्वयाभ्यमितुंअभितोरोगैः प्रापयितुमर्हन्ति वयंतुनतादृशाः अतोस्मत्तोवियोजयेत्यर्थः नकेवलंवियोगमात्रं अपितुपुनःपुनरि-दंकर्तव्यं अस्मभ्यंअस्मदर्थंसुवितायशोभनफलाय हेयजत्रयष्टव्यदेवद्योतमानाग्ने विश्वेभिरमृते-भिः सर्वैरमरणधर्मभिः अन्यैर्यष्टव्यैर्देवैःसह क्षांपृथिवींदेवयजनलक्षणामागच्छेतिशेषः ॥ ३ ॥

३. अग्नि, तुम हमारे पास से सब रोग दूर करो। जो अग्निहोत्र नहीं करते या जो हमारे विद्रोही हैं, उन्हें भी हटाओ। देव, तुम हमें शोभन फल देने के लिए सारे मरण-रहित देवों के साथ यज्ञशाला में आओ।

पाहिनइत्यस्याविनियोगद्वयमग्नेत्वंपारयेत्यत्रोक्तं तथाग्नेयपशावेषैवहविषोनुवाक्या तथा-चसूत्रितं—पाहिनोअग्नेपायुभिरजस्रैःभवःशुक्रायभानवेभरध्वमिति ।

पाहिनोअग्नेपायुभिरजस्रैरुतप्रियेसदनआशुशुक्वान् ।
मातेभयंजरितारंयविष्ठनूनंविदन्मापरंसहस्वः ॥ ४ ॥

पाहि । नः । अग्ने । पायुऽभिः । अजस्रैः । उत । प्रिये । सदने ।
आ । शुशुक्वान् । मा । ते । भयम् । जरितारम् । यविष्ठ । नूनम् ।
विदत् । मा । अपरम् । सहस्वः ॥ ४ ॥

हेअग्ने नोस्मानजस्रैः अनवरतैरविच्छिन्नैःपायुभिः पालनप्रकारैः पाहिपालय उतअपिच प्रियेसदनेतवप्रियभूतेयागगृहे आसर्वतः शुशुक्वान्दीप्यमानोभवेतिशेषः किञ्च हेयविष्ठ युवतम तेतवजरितारं गरितारंस्तोतारंमांनूनमद्यभयंमाविदत् मालभतां माप्नोतु हेसहस्वःबलवन्नग्ने अपरमपरस्मिन्काले भयंमाविदत् अपरंमदन्यंवामाविदत् ॥ ४ ॥

४. अग्नि, तुम सतत आश्रय-दान-द्वारा हमें पालित करो। हमारे प्रिय यज्ञ-गृह में चारों ओर दीप्ति-युक्त बनो। युवक अग्नि, मैं तुम्हारा स्तोता हूँ। मुझे न आज भय उत्पन्न हो और न कभी पीछे।

अच्युतायभौमायैककपालपुरोडाशहोमेमानोअग्नइत्यनयाआशयमभिजुहोति तथाच सूत्रितम्—मानोअग्नेवसृजोअघायेत्येनमाशयेनाभिजुहोतीति ।

मानोअग्नेवसृजोअघायाविष्यवेरिपवेदुच्छुनायै ।
मादत्वतेदशतेमादतेनोमारीषतेसहसावन्परादाः ॥ ५ ॥ १० ॥

मा । नः । अग्ने । अव । सृजः । अघाय । अविष्यवे । रिपवे ।
दुच्छुनायै । मा । दत्वते । दशते । मा । अदते । नः । मा । रिषते ।
सहसाऽवन् । परा । दाः ॥ ५ ॥ १० ॥

हेअग्ने नोस्मान् अघायहिंसकायाविष्यवे अविष्यतिरत्तिकर्मा भक्षणेच्छवे दुच्छुनायै शुनंसुखंदुष्टसुखकारिणे दुःखंकारिणइत्यर्थः तस्मैरिपवेमावसृजः मात्याक्षीः तदधीनं माकुर्वित्यर्थः तथानोस्मान्दत्वते दंतवते दशतेखादते सर्पादयोमावसृजः तथानोस्मान् अदतेअदंतकायशृङ्गादिभिर्घातिने नावसृजथः तथारिषतेहिंसकायतस्कर राक्षसादये हेसहसावन् सहस्विन् मापरादाः पराभूतंमादेहि सर्वथानदेहीत्यर्थः ॥ ५ ॥

५. अग्नि, हमें अन्नग्रासी, हिंसक और शुभनाशक शत्रु के हाथ में नहीं समर्पण करना। हमें दन्त-विशिष्ट और दंशक सर्प आदि के हाथ में नहीं सौंपना; दन्त-शून्य शृंगादिवाले पशुओं को नहीं सौंपना। बलिष्ठ अग्नि, हिंसक और राक्षस आदि के हाथ भी हमें नहीं सौंपना।

विघ्त्वावाँऋतजातयंसद्गृणानोअग्नेतन्वे३वरूथम् ।
विश्वाद्रिरिक्षोरुतवानिनित्सोरभिह्रुतामसिहिदेवविष्पट् ॥ ६ ॥

वि । घ । त्वाऽवान् । ऋतऽजात । यंसत् । गृणानः । अग्ने ।
तन्वे । वरूथम् । विश्वात् । रिरिक्षोः । उत । वा । निनित्सोः ।
अभिऽह्रुताम् । असि । हि । देव । विष्पट् ॥ ६ ॥

हेऋतजात यज्ञार्थमुत्पन्नाग्ने वरूथंवरणीयं त्वांतन्वे शरीरपोषायगृणानःस्तुवन् त्वावान् त्वयादेवतयातद्वान् जनोविघयंसत् विमोचयतिखल्वात्मानं कस्मात्सकाशात् विश्वात्सर्वस्मात् रिरिक्षोर्हिंसितुमिच्छोश्चौरादेःसकाशात् उतवाअथवा निनित्सोः निन्दितुमिच्छतः हेदेव अभिह्रुतांआभिमुख्येनकुटिलंकुर्वतांद्विषां विष्पट् विशेषेणबाधकोसिहि अतस्त्वदनुग्रहादयंजनोवियंसत् ॥ ६ ॥

६. यज्ञोत्पन्न अग्निदेव, तुम वरणीय हो। शरीर पुष्टि के लिए स्तुति करते हुए लोग तुम्हें प्राप्त करके सारे हिंसक और निन्दक व्यक्तियों के हाथों से अपने को बचाते हैं। अग्नि, जो सामने कुटिल आचरण करते हैं, ऐसे दुष्ट का तुम दमन करो।

त्वंताँअग्नउभयान्विविद्वान्वेषिप्रपित्वेमनुषोयजत्र ।
अभिपित्वेमनवेशास्योभूर्मर्मृजेन्यउशिग्भिर्नाक्रः ॥ ७ ॥

त्वम् । तान् । अग्ने । उभयान् । वि । विद्वान् । वेषि । प्रऽपित्वे ।
मनुषः । यजत्र । अभिऽपित्वे । मनवे । शास्यः । भूः ।
मर्मृजेन्यः । उशिक्ऽभिः । न । अक्रः ॥ ७ ॥

हेयजत्रयष्टव्याग्ने त्वंतान् यष्टृनयष्टृंश्चोभयान् मनुषोमनुष्यान् विविविच्यविद्वान् जानन् प्रपित्वेसन्निहितएवकालेवेषि कामयसे यष्टृन् तथाकुर्वन्अक्रः आक्रमितात्वं मनवे षष्ठचर्थेचतुर्थी मनुष्यस्ययजमानस्यअभिपित्वे अभिप्राप्तकालेअभिगमनवतियज्ञेवाशास्योभूः शिक्षणीयोभव इदंकुर्विदंकुर्वितिविधेयोभव तत्रदृष्टान्तः—मर्मृजेन्यः शोधयितायजमानः उशिग्भिर्न कामयमानैर्ऋत्विग्भिरिव ॥ ७ ॥

७. यजनीय अग्नि, तुम यज्ञ करनेवाले और न करनेवाले लोगों को जानकर यज्ञकर्त्ता की ही कामना करो। आक्रमणकारी अग्नि, पवित्रताभिलाषी यजमान जैसे ऋत्विकों के लिए शिक्षणीय हैं, उसी प्रकार तुम भी, यथासमय, यजमान के शिक्षणीय हो।

अथाष्टमी—

अवोचामनिवचनान्यस्मिन्मानस्यसूनुःसहसानेअग्नौ ।
वयंसहस्रमृषिभिःसनेमविद्यामेषंवृजनंजीरदानुम् ॥ ८ ॥ ११ ॥

अवोचाम । निऽवचनानि । अस्मिन् । मानस्य । सूनुः ।
सहसाने । अग्नौ । वयम् । सहस्रम् । ऋषिऽभिः । सनेम ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥ ११ ॥

वयंअस्मिन्नग्नौनिवचनानिनियमपूर्वकाणिवचांसिस्तोत्ररूपाणिअवोचामब्रूमः अग्निर्विशेष्यते मानस्यसूनुः मीयतइतिमानोमन्त्रः तस्यसूनुरग्निः मन्त्रेणोत्पाद्यमानत्वात् सप्तम्यर्थेप्रथमा मानस्यसूनौ सहसानेशत्रूणामभिभवितरिअग्नौअवोचाम वयमेभिर्ऋषिभिरतीन्द्रियार्थप्रकाशकैर्मन्त्रैःसाधनैः सहस्रमपरिमितंधनं सनेम संभजेमहि विद्यामेतिगतम् ॥ ८ ॥

८. मंत्र-पुत्र और शत्रुनाशक इन अग्नि के लिए ये सारे स्तोत्र बनाये गये हैं। हम इन अतीन्द्रिय-प्रकाशक मंत्रों-द्वारा सहस्र धन प्राप्त करेंगे। हम अन्न, बल और दीर्घ आयु प्राप्त कर सकें।

॥ इतिद्वितीयस्यपञ्चमेएकादशोवर्गः ॥ ११ ॥

अनर्वाणमित्यष्टर्चमेकादशंसूक्तमागस्त्यंबार्हस्पत्यंत्रैष्टुभं अनर्वाणंबार्हस्पत्यमित्यनुक्रान्तम् श्रौतविनियोगोलैङ्गिकः अत्रशौनकः—स्नात्वाजपेदनर्वाणंनमस्कृत्यबृहस्पतिम् । वीरान्धनंचप्राप्नोतिसौश्लोक्यंचनियच्छतीति ।

तत्रप्रथमा—

अनर्वाणंवृषभंमन्द्रजिह्वंबृहस्पतिंवर्धयानव्यमर्कैः ।
गाथान्यःसुरुचोयस्यदेवाआश्रृण्वन्तिनवमानस्यमर्ताः ॥ १ ॥

अनर्वाणम् । वृषभम् । मन्द्रऽजिह्वम् । बृहस्पतिम् । वर्धय ।
नव्यम् । अर्कैः । गाथान्यः । सुऽरुचः । यस्य । देवाः ।
आऽश्रृण्वन्ति । नवमानस्य । मर्ताः ॥ १ ॥

हेहोतः नव्यंनवतरंस्तुत्यंवा तमनर्वाणं अगन्तारंस्तोतुरधीनमित्यर्थः वृषभंअपांफलानां वर्षितारंमन्द्रजिह्वंमादकवाचंबृहस्पतिं मन्त्रस्यपालयितारंएतन्नामकंदेवं अर्कैरर्चनसाधनैर्मन्त्रैर्वर्धय प्रवृद्धंकुरु सुरुचः शोभनदीप्तेर्नवमानस्यस्तूयमानस्य कर्मणिकर्तृप्रत्ययः यस्यबृहस्पतेः कर्मणिषष्ठ्यः रोचमानंस्तूयमानं गाथान्यः गाथेतिवाङ्नाम स्तुतिवचसोनेतारोदेवाव्यवहर्ता

रोमतांमनुष्याहोत्रादयः यद्वा नवमानस्यस्तुवानस्ययजमानस्यसंबन्धिनस्तेआश्रृण्वन्ति आ-श्रावयन्तिपुरातंबृहस्पतिंवर्धय अत्रानवंणमत्यृतमन्यस्मिन्नित्यादिनिरुक्तंद्रष्टव्यम् ॥ १ ॥

१. होता, अभीष्टवर्षी मिष्टजिह्व और स्तुतियोग्य बृहस्पति को पूजा-साधक मंत्रों-द्वारा वर्द्धित करो। वे स्तोता को नहीं त्यागते। दीप्तियुक्त और स्तूयमान बृहस्पति को गाथा-पाठक देवगण और मनुष्यगण स्तुति सुनाते हैं।

बार्हस्पत्येपशौ तमृत्वियेत्येषावपायाज्या सूत्रितश्च—बृहस्पतेअतियदर्योअर्हात्तमृत्वि-याउपवाचःसचन्तइति ।

सैषाद्वितीया—

तमृत्वियाउपवाचःसचन्तेसर्गोनयोदेवयतामसर्जि ।
बृहस्पतिःसह्यञ्जोवरांसिविभ्वाभवत्समृतेमातरिश्वा ॥ २ ॥

तम् । ऋत्वियाः । उप । वाचः । सचन्ते । सर्गः । न । यः ।
देवऽयताम् । असर्जि । बृहस्पतिः । सः । हि । अञ्जः । वरांसि ।
विऽभ्वा । अभवत् । सम् । ऋते । मातरिश्वा ॥ २ ॥

तंबृहस्पतिंऋत्वियाः वर्षर्तुसंबन्धिन्योवाचोमाध्यमिकाउपसचन्ते समीपेसेवन्ते यःसर्गो-न उदकस्यस्रष्टापि नशब्दोप्यर्थे देवयतांदेवानिच्छतांयजमानानां असर्जिफलं यद्वा देवत्वमि-च्छतांमनुष्याणांअसर्जिसृष्टवान् वृष्ट्युदकम् यद्वा ऋत्वियाः प्राप्तकालीनावाचः होत्रादिभिरि-तावाचः उपसचन्ते तंयःसर्गोन उदकसृष्टिरिव सः सएवबृहस्पतिः अञ्जोहि व्यञ्जकःखलु तस्मिन्वर्षतिसर्वेभवन्ति अतएवविभ्वाविभुर्व्याप्तोमातरिश्वावृष्टिनिर्मातर्यन्तरिक्षेचेष्टमानोवायुः सदृशोवावरांसिवरणीयानिवृष्ट्यादिफलानिसंपादयन् ऋतेउदकेनिमित्तभूतेसतिसमभवत् संभूतः अथवा अञ्जोयज्ञियानांव्यञ्जकोमातरिश्वाफलस्यनिर्मातरियज्ञेश्वसितावर्तमानः सबृहस्पतिः ऋतेयज्ञेनिमित्तभूतेसतिवरांसिवरणीयानिहवींषीच्छन् विभ्वाविभुः समभवत् ॥ २ ॥

२. वर्षा ऋतु-सम्बन्धिनी स्तुतियां सृजन-कर्त्तृ-रूप बृहस्पति के पास जाती हैं। वे देवाभिलाषियों को फल देते हैं। वे सारे विश्व को व्यक्त करते हैं। वे स्वर्गव्यापी मातरिश्वा की तरह वरणीय फल उत्पन्न करके यज्ञ के लिए सम्भूत हुए हैं।

उपस्तुतिंनमसउद्यतिंचश्लोकंयंसत्सवितेवप्रबाहू ।
अस्यक्रत्वाहन्योयोअस्तिमृगोनभीमोअरक्षसस्तुविष्मान् ॥ ३ ॥

---

१नि० ४. २७.।

उप॑ऽस्तुतिम् । नम॑सः । उत्ऽय॑तिम् । च॒ । श्लोक॑म् । य॒ंस॒त् ।
स॒वि॒ताऽइ॑व । प्र । बा॒हू इति॑ । अ॒स्य । क्रत्वा॑ । अ॒ह॒न्य॑ः ।
यः । अस्ति॑ । मृ॒गः । न । भी॒मः अ॒र॒क्षस॑ः । तुवि॑ष्मान् ॥ ३ ॥

अयंबृहस्पतिरुपस्तुतिंयजमानेनोपेत्यक्रियमाणांस्तुतिंनमसः हविर्लक्षणस्यान्नस्योद्यतिंउद्धारंचश्लोकंअन्योयोमन्त्रविशेषोस्तितंचप्रयंसत् प्रकर्षेणयततेस्वीकर्तुं यजमानोवातंसर्वंप्रयच्छत्यस्मै तत्रदृष्टान्तः—सवितेव सूर्यइव सयथास्तोत्रादिकंस्वीकरोतितद्वत् यजमानप्रदानपक्षे सविता सर्वस्यप्रसवितासूर्यइव सयथाबाहुभ्यः प्रकाशादिप्रयच्छतितद्वत् बाहूबाहुभ्यांयजमानोपीत्यर्थः तस्यमहत्त्वमाह—अरक्षसः स्वविरोधिरक्षोरहितस्यास्यबृहस्पतेः क्रत्वाकर्मणासामर्थ्येनाहन्योह्निसाधुर्यःसूर्योस्तिसभीमोमृगोन भयजनकःसिंहादिरिव भीमोभयहेतुस्तुविष्मान्बलवान्परिभ्रमतीतिशेषः यस्यमाहात्म्येनमन्त्राभिमानिनोबृहस्पतेःसामर्थ्यात्मन्देहाद्यसुरान्जित्वातितेजस्वीभवति तादृशोमहानुभावोयजमानदत्तंहविरादिकंस्वीकरोतीत्यर्थः ॥ ३ ॥

३. जैसे सूर्य किरणें प्रकाशित करने की चेष्टा करते हैं, वैसे ही बृहस्पति, यजमानों की स्तुति, अन्न, दान और मंत्रों के स्वीकार के लिए चेष्टा करते हैं। राक्षसों और शत्रुओं से शून्य बृहस्पति की शक्ति से दिवसकालीन सूर्य भयंकर जन्तु की तरह बलशाली होकर घूमते हैं।

अ॒स्यश्लोको॑दि॒वीय॑तेपृथि॒व्यामत्यो॒नयं॑सद्य॒क्ष॒भृद्विचे॑ताः ।
मृ॒गाणां॒नहे॒तयो॒यन्ति॒चेमा॒बृह॒स्पते॒रहि॑मायाँअ॒भिद्यून् ॥ ४ ॥
अ॒स्य । श्लोक॑ः । दि॒वि । ई॒य॒ते॒ । पृ॒थि॒व्याम् । अत्य॑ः ।
न । य॒ंस॒त् । य॒क्ष॒ऽभृत् । विऽचे॑ताः । मृ॒गाणा॑म् । न । हे॒तय॑ः ।
यन्ति॑ । च॒ । इ॒माः । बृ॒ह॒स्पते॑ः । अहि॑ऽमायान् । अ॒भि । द्यून् ॥ ४ ॥

अस्य बृहस्पतेः श्लोकः स्तुत्यात्मकाकीर्तिः गर्जितवाग्वा दिविद्योतमानेद्युलोकेपृथिव्यांचईयतेगच्छति व्याप्नोति योबृहस्पतिरत्योनअतनशीलआदित्यइव यक्षभृत्पूजितंहविरादिकंदधानः विचेताः विविधंचेतयिता प्राणिनांविशिष्टप्रज्ञायुक्तोवायंसत् नियच्छतिफलं किञ्चमृगाणां हन्तुमन्विष्यतां हेतयोनआयुधानीवास्यबृहस्पतेरिमाहेतयः हिंस्राण्यायुधानियन्तिगच्छन्तिच च्वाथोगेप्रथमेतिननिघातः अहिमायान्आगत्यहंत्योऽन्तरिक्षचारिण्योवामायायेषांवृत्रादीनांतानसुरान् द्यून्दिवसान् कालाध्वनोरितिद्वितीया तान्यायुधान्यभिलक्षयन्तिच उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ ४ ॥

४. भूलोक और द्युलोक में बृहस्पति की कीर्ति व्याप्त होती है। बृहस्पति सूर्य की तरह पूजित हव्य धारण करते हैं। वे प्राणियों में चैतन्य प्रदान करते और फल देते हैं। बृहस्पति का आयुध शिकारी

पुरुषों के आयुध की तरह है। उनका आयुध मायावियों के सामने प्रतिदिन दौड़ता है।

**येत्वादेवोस्त्रिकंमन्यमानाःपापाभद्रमुपजीवन्तिपज्राः।**

**नदूढ्येअनुददासिवामंबृहस्पतेचयसइत्पियारुम्॥ ५॥ १२॥**

**ये। त्वा। देव। उस्त्रिकम्। मन्यमानाः। पापाः। भद्रम्।**

**उपऽजीवन्ति। पज्राः। न। दुःऽढ्यै। अनु। ददासि।**

**वामम्। बृहस्पते। चयसे। इत्। पियारुम्॥ ५॥१२॥**

हेदेवबृहस्पते येपापाः पापबुद्धयः अल्पाः पज्राः हविर्लक्षणान्नवन्तः पापेनजीर्णावानराः भद्रंकल्याणंत्वात्वांउस्त्रिकं उस्त्रियेतिगोनाम कुत्सितामल्पक्षीरोत्स्राविणींगांजीर्णमनड्वाहंवामन्यमानाः उपजीवंति उपेत्यप्राणंति अल्पंयाचन्तइत्यर्थः दूढ्येदुर्धिये वचनव्यत्ययः दुर्बुद्धिभ्यस्तेभ्यो-वामंवननीयंधनंनानुददासि अनुकूलंनवितरसि हेबृहस्पतेदेव पियारुंसोमपानशीलंसोमेनयष्टारं महाफलंलिप्सुंचयसइत् गच्छस्येवअनुग्रहीतुं चयगतावित्यस्येदंरूपं यद्वा हेबृहस्पते पियारुंहिंसकं पीयतेर्हिंसाकर्मणइदंरूपं तंप्राणिहिंसकंचयसइत् हंस्येव बृहस्पतेयच्चातयसिदेवपीयुमितिनिरुक्तम्॥ ५॥

५. बृहस्पति, जो पापी लोग कल्याणवाही बृहस्पति को बूढ़ा बैल जानते हैं, उन्हें तुम वरणीय धन नहीं देना। बृहस्पतिदेव, जो सोम-यज्ञ करता है, उस पर तुम अवश्य कृपा रखते हो।

॥ इतिद्वितीयस्यपञ्चमेद्वादशोवर्गः॥ १२॥

अथषष्ठी—

**सुप्रैतुःसूयवसोनपन्थादुर्नियन्तुःपरिप्रीतोनमित्रः।**

**अनर्वाणोअभियेचक्षतेनोपीवृताअपोर्णुवन्तोअस्थुः॥ ६॥**

**सुऽप्रैतुः। सुऽयवसः। न। पन्थाः। दुःऽनियन्तुः। परिऽप्रीतः।**

**न। मित्रः। अनर्वाणः। अभि। ये। चक्षते। नः।**

**अपिऽवृताः। अपऽऊर्णुवन्तः। अस्थुः॥ ६॥**

हेबृहस्पते त्वंसुप्रैतुः सुष्ठुगन्तुः मनुष्यस्यसुयवसः शोभनान्नस्य पन्थान मार्गइव सुष्ठुयज्ञ-मार्गगामिनोगमनेसुयवसः पन्थाइवसुखकारीभवेत्यर्थः किञ्च दुर्नियन्तुः दुःखेननियमितुः राज्ञः

---

१ नि० ४. २५।

परिप्रीतः सर्वप्रकारेणसंतुष्टः द्वेषादिरहितः मित्रोनसुहृन्मंत्रीव सयथादुर्नयान्निवर्तयतितद्वत् त्व-मपितथास्मभ्यंकुर्वित्यर्थः सखिवदमार्गान्निवर्त्यमार्गेयज्ञादिरूपेयोजयित्वातत्रापिफलप्रदोभवे-त्यर्थः किञ्च अनर्वाणः अपापाः येनरानोस्मानभिआभिमुख्येनचक्षतेबोधयन्ति तेअपीवृताः अज्ञानेनावृताअपिअपोर्णुवन्तः अपगतावरणवन्तोज्ञानवन्तोऽस्थुः तिष्ठन्तु यद्वा अनर्वाणः त्वाम प्राप्नुवन्तोयेस्मद्विरोधिनोस्मान्अभिचक्षते अभिवदन्तिनिन्दन्ति तेपीवृताः आच्छादितारक्षि-ताअपिअपोर्णुवन्तः अपगतरक्षणाभवन्ति ॥ ६ ॥

६. बृहस्पति, तुम सुखगामी और सुखाद्य-विशिष्ट यजमान के मार्ग-रूप और दुष्टहन्ता राजा के बन्धु हो। जो हमारी निन्दा करते हैं, उनके सुरक्षित होने पर भी, उन्हें रक्षा-शून्य करो।

संयंस्तुभइत्येषाबार्हस्पत्येपशौपुरोडाशस्ययाज्या सूत्रितश्च—संयंस्तुभोवनयोनयन्त्येवापित्र-इति ॥

संयंस्तुभोवनयोनयन्तिसमुद्रंनस्रवतोरोधचक्राः ।
सविद्वाँउभयंचष्टेअन्तर्बृहस्पतिस्तरआपश्चगृध्रः ॥ ७ ॥

सम् । यम् । स्तुभः अवनयः । न । यन्ति । समुद्रम् । न । स्रवतः ।
रोधऽचक्राः । सः । विद्वान् । उभयम् । चष्टे । अन्तः ।
बृहस्पतिः । तरः । आपः । च । गृध्रः ॥ ७ ॥

यंबृहस्पतिंस्तुभः स्तोत्राणिअवनयोन सर्वाअवनयोभूमयोमनुष्यायथास्वामिनंकर्मप्रतिवा-संयन्ति सङ्गच्छन्तितद्वत् यथासमुद्रंरोधचक्राः नदीनामैतत् रोधनशीलानिचक्राणियासु तास्ता-दृश्यः कूलंक्रममाणावास्रवतोन स्रवन्त्योनद्योयथायन्ति तद्वत्सर्वाअपिस्तुतयः त्वामेवप्राप्नुवन्ति गृध्रः गर्धनशीलः वृष्टिमाकांक्षमाणः सबृहस्पतिः विद्वान्वक्ष्यमाणाभिज्ञस्तरः तरणंजलाभिवृद्धिं आपः उदकानिचोभयंअन्तर्मध्येस्थित्वाचष्टे पश्यति करोतीत्यर्थः ॥ ७ ॥

७. जैसे मनुष्य राजा से मिलता है, तटद्वयवर्त्तिनी नदी जैसे समुद्र में मिलती है, वैसे ही सारी स्तुतियां बृहस्पति में मिलती हैं। वे विद्वान् हैं। आकाशचारी पक्षी की तरह बृहस्पति-रूप से जल और तट, दोनों को देखते हैं। अथवा वृष्टिकामी अभिज्ञ बृहस्पति, मध्य में स्थित होकर तट और जल दोनों को उत्पन्न करते हैं।

एवामहस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभोधायिदेवः ।
सनःस्तुतोवीरवद्धातुगोमद्विद्यामेषंवृजनंजीरदानुम् ॥ ८ ॥ १३ ॥

एव । महः । तुविऽजातः । तुविष्मान् । बृहस्पतिः । वृषभः ।
धायि । देवः । सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् ।
विद्याम । इषम् । वृजनम् । जीरऽदानुम् ॥ ८ ॥ १३ ॥

महः महान् तुविजातः बह्वर्थमुत्पन्नः तुविष्मान्बलवान् वृषभोपांवर्षितादेवोबृहस्पतिरेवएवं स्तुतिप्रकारेणधायि धीयते स्तूयतइत्यर्थः सस्तुतोदेवोनोस्माकंवीरवत्पुत्राद्युपेतं गोमद्गोभिर्युक्तंफलंधातुधारयतु करोत्वित्यर्थः विद्यामेतिगतः ॥ ८ ॥

८. इसी रूप से बृहस्पति महान्, बलवान्, अभीष्टवर्षी, दीप्तिमान् होकर और बहुतों के उपकार के लिए उत्पन्न हुए हैं। उनका स्तव करने पर वे हमें वीर-विशिष्ट करें, ताकि हम अन्न, बल और दीर्घ आयु प्राप्त कर सकें।

कङ्कतइतिषोडशर्चेद्वादशंसूक्तं ऋषिरगस्त्यः अप्तृणसूर्यास्त्रयोदेवताः त्रिष्टुप्छन्दः सूर्येविषमित्याद्यास्तिस्रोमहापङ्क्तयः अष्टकौसप्तकः षट्कोदशकोनवकश्चेत्युक्तलक्षणोपेतत्वात् नवानामित्येषात्रयोदशीमहाबृहती चत्वारोष्टकाजागतश्चमहाबृहतीइतिह्युक्तं अत्रयद्यप्यक्षराणिन्यूनानि तथापिव्यूहेनपूरणीयानि अत्रानुक्रमणिका—कङ्कतःषोडशोपनिषदानुष्टुभमप्तृणसौर्यंविषशङ्कावानगस्त्यःप्राब्रवीद्दशम्याद्यास्तिस्रोमहापंक्तयोमहाबृहतीचेति उपनिषदितिरहस्यमित्यर्थः विषशङ्कायुक्तोगस्त्यः तत्परिहारायेदमुक्तवान् श्रौतस्यविशेषविनियोगोलैङ्गिकः अत्रशौनकः कङ्कतोनेतिसूक्तंतुविषार्तःप्रयतोजपेत् । विषंनक्रमतेचास्यसर्पाद्दृष्टिविषादपि ॥ १ ॥ यद्कीटलूतासुविषंदंष्ट्रिवृश्चिकतश्चयत्। मूलंचकृत्रिमंचैवजपन्सर्वमपोहतीति ॥ २ ॥

कङ्कतोनकङ्कतोथोसतीनकङ्कतः।
द्वावितिप्लुषीइतिन्य१दृष्टाअलिप्सत ॥ १ ॥

कङ्कतः। न। कङ्कतः। अथो इति। सतीनऽकङ्कतः।
द्वौ। इति। प्लुषी इति। इति। नि। अदृष्टाः। अलिप्सत ॥ १ ॥

कङ्कतः अल्पविषः कश्चिन्नकङ्कतः तद्विपरीतः अनल्पविषोमहारोगादिः तककतेर्गत्यर्थस्यवर्णव्यत्ययेनकङ्कतइतिसरन्भवति अथोअपिचसतीनकङ्कतः सतीनमित्युदकनाम सतीनंगहनमितितन्नामसुपाठात् उदकचारीअल्पविषवानकश्चिद्डुंडुभादिः एवंद्वावितिअल्पविषमहाविषभेदेनजलस्थलभेदेनवाद्विप्रकारौइतिप्लुषीइतिप्लोषणावितिप्रकारद्वैविध्यदाहकत्वयोःप्रतिपादनायेतिकारद्वयं तथाअदृष्टाअदृश्यमानरूपाः एतत्संज्ञकाश्चकेचित् विषधराएवमुक्तप्रकारायेसन्ति तेनूनंमांन्यलिप्सत निःशेषेणलिंपन्ति सर्वाण्यङ्गानिविषमावृणोति केनैवंकृतमितिनज्ञायतेइतिभावः ॥ १ ॥

१. अल्प विषवाले, महा विषवाले, जलीय अल्प विषवाले, दो प्रकार के, जलचर और स्थलचर, दाहक प्राणी तथा अदृश्य प्राणी मुझे विष-द्वारा अच्छी तरह लिप्त किये हुए हैं।

अथद्वितीया—

अदृष्टान्हन्त्यायत्यथोंहन्तिपरायती।
अथोंअवघ्नतीहन्त्यथोंपिनष्टिपिंषती ॥ २ ॥

अदृष्टान्। हन्ति। आऽयती। अथो इति। हन्ति। पराऽयती।
अथो इति। अवऽघ्नती। हन्ति। अथो इति। पिनष्टि। पिंषती ॥२॥

अनेनविषघ्न्योषधिःस्तूयते आयतीविषदष्टस्यसकाशमागच्छन्ती विषनिर्हरणसाधनौषधिः अदृष्टानदृश्यमानान् विषधरान्हन्तिहिनस्ति अथोअपिच परायतीपरागच्छन्ती संमार्जनसमये वाकूमवृत्ताहन्तिनाशयतिजलचरविषधरान् अथोअपिच अवघ्नती कर्मणिकर्तृप्रत्ययः अवहन्यमानौषधिः स्वगन्धेनहन्तिबहुविषान् यद्वा काचिदोषधिः दंशकान्मारयत्येव अथोअपिच पिंषतीपेषणंकर्त्रीदृषद्पिष्यमाणावौषधिःपिनष्टि चूर्णीकरोत्यल्पविषान् अथवासर्वेषुवाक्येष्वविशेषेणसर्वविषकारिणांनाशउक्तः ॥ २ ॥

२. जो औषध खाता है, वह अदृश्य विषधर प्राणी को विनष्ट करता है और प्रत्यावर्तन काल में उसे विनष्ट करता है। विनाश के समय नाश करता और पिसे जाने के समय पिसता है।

अथतृतीया—

शरासःकुशरासोदर्भासःसैर्याउत।
मौञ्जाअदृष्टावैरिणाःसर्वेसाकंन्यलिप्सत ॥ ३ ॥

शरासः। कुशरासः। दर्भासः। सैर्याः। उत। मौञ्जाः।
अदृष्टाः। वैरिणाः। सर्वे। साकम्। नि। अलिप्सत ॥ ३ ॥

अन्यांश्चविषहेतूनाह शरासः शरावेणुदण्डसदृशाअन्तश्छिद्रास्तृणविशेषाः कुशरासः कुत्सितशराः अल्पच्छिद्राः शरसदृशाः तृणविशेषाः दर्भासोदर्भाः कुशाः सैर्याः तटाकादिप्रान्तोद्भवाः तृणविशेषाः अश्ववालाइतिप्रसिद्धाः उतापिचमौञ्जाः मुञ्जाःप्रसिद्धाः वैरिणाः वीरणप्रकाराः एतेषुवर्तमानाः अदृष्टाः उक्तरूपाः सर्वेविषधराः साकंमिलित्वा न्यलिप्सत निलिप्तास्म ॥ ३ ॥

३. शर, कुशर, दर्भ, सैर्य, मुञ्ज, वीरण आदि घासों में छिपे विषधरगण मिलकर मुझे लिप्त करते हैं।

निगावोंगोष्ठेअंसदन्निमृगासोअविक्षत।
निकेतवोजनानांन्य१दृष्टाअलिप्सत ॥ ४ ॥

नि । गावः । गोऽस्थे । असदन् । नि । मृगासः । अविक्षत ।
नि । केतवः । जनानाम् । नि । अदृष्टाः । अलिप्सत ॥ ४ ॥

गावोगोष्ठेन्यसदन् निषीदन्ति मृगासोमृगाः न्यविक्षत निविष्टाः स्वस्वस्थानउपरताःजनानांप्राणिनांकेतवः प्रज्ञानानि उपसर्गश्रुतेर्योग्यक्रियाध्याहारः नीचान्यभवन् एतस्मिन्समयेअदृष्टाअदृश्यमानरूपाः सन्तोन्यलिप्सत निर्लिपन्तिविशेषेण ॥ ४ ॥

४. जिस समय गायें गोष्ठ में बैठी रहती हैं, जिस समय हरिण, अपने-अपने स्थानों पर, विश्राम करते हैं और जिस समय मनुष्य निद्रा में रहता है, उस समय अदृश्य विषधर मुझे लिप्त किये हुए हैं।

एतउत्येप्रत्यदृश्रन्प्रदोषंतस्करांइव ।
अदृष्टाविश्वदृष्टाःप्रतिबुद्धाअभूतन ॥ ५ ॥ १४ ॥

एते । ॐ इति । त्ये । प्रति । अदृश्रन् । प्रऽदोषम् । तस्कराःऽइव ।
अदृष्टाः । विश्वऽदृष्टाः । प्रतिऽबुद्धाः । अभूतन ॥ ५ ॥ १४ ॥

त्येतेएतेसर्पाःप्रत्यदृश्रन् प्रतिदृश्यन्ते रात्रौश्वासादिलिङ्गेन उःपूरणः यद्वा तेरात्रौहन्तारः दिवाएतेप्रतिदृश्यन्ते तत्रदृष्टान्तः—प्रदोषंरात्रिर्दोषारात्रिंप्रतितमसाभिभूतासुरात्रिषुतस्कराइव हिंसकाश्चोरादृश्यन्ते तथातद्वत् कीदृशास्ते अदृष्टाः अपरिदृश्यमानाः विश्वदृष्टाः विश्वंदृष्टंयैस्ते तादृशाः प्रतिदृश्यन्ते अतोहेनराः प्रतिबुद्धाअभूतन भवत ॥ ५ ॥

५. तस्कर की तरह उन सबको रात को देखा जाता है। वे, अदृश्य होने पर भी, सारे संसार को देखते हैं; इसलिए मनुष्य सावधान हो जायें।

अथषष्ठी—

द्यौर्वःपितापृथिवीमातासोमोभ्रातादितिःस्वसा ।
अदृष्टाविश्वदृष्टास्तिष्ठतेलयतासुकम् ॥ ६ ॥

द्यौः । वः । पिता । पृथिवी । माता । सोमः । भ्राता ।
अदितिः । स्वसा । अदृष्टाः । विश्वऽदृष्टाः । तिष्ठत ।
इलयत । सु । कम् ॥ ६ ॥

अतः परंविषचिकित्सा तत्रतावद् हेसर्पाः वोयुष्माकंद्यौः पिता पृथिवीमातासोमोभ्राता अदितिर्देवमातास्वसा एवंमहानुभावामहोरगाअदृष्टाः अन्यैरदृश्यमानरूपाः स्वयंतुविश्वदृष्टाः सर्वस्यदृष्टारोयूयंतिष्ठतस्वस्वस्थाने मांप्रतिमागच्छत सुसुतरांकंसुखंयथातथा इलयत ईरयतगच्छत सोमशब्देनसोमाधारोद्युलोकउच्यते पृथिव्यन्तरिक्षद्युस्थानस्थाःसर्पाःस्वस्वस्थानंप्रापुत अस्मद्बाधांमाकुरुतेत्यर्थः॥ ६॥

६. स्वर्ग पिता, पृथिवी माता, सोम भ्राता और अदिति भगिनी हैं। अदृष्ट-समदर्शी लोग, तुम लोग अपने-अपने स्थान पर रहो और यथासुख गमन करो।

येअंस्यायेअंग्याःसूचीकायेप्रंकङ्कृताः।
अदृष्टाःकिञ्चनेहवःसर्वैसाकंनिजस्यत॥ ७॥

ये। अंस्याः। ये। अंग्याः। सूचीकाः। ये। प्रऽकङ्कृताः।
अदृष्टाः। किम्। चन। इह। वः। सर्वे। साकम्।
नि। जस्यत॥ ७॥

येअंस्याः अंसार्हाः अंसगाः अंसेभवाः अंसाभ्यांखादन्तोवा तथायेअंग्याःअङ्गगाः अङ्गेनशरीरेणहन्तारोवालूतिकादयः सूचीकाः सूचीदृशः पुच्छरोमाणोवृश्चिकाद्याः येचप्रकङ्कताः प्रकृष्टविषाः प्रकृष्टगामिनोवामहोरगाः अदृष्टाः अदृश्यमानाः किञ्चन यत्किंचित्सर्पजातमस्ति इहास्मिन्समीपेवोयुष्माकंकिमस्ति अतःयूयंसर्वेसाकंसहनिजस्यत नितरांजस्यत मुञ्चतास्मान् जसुमोक्षणे दैवादिकः॥७॥

७. जो विषधर स्कन्धवाले हैं, जो अंगवाले (सर्प) हैं, जो सूचीवाले (वृश्चिकादि) हैं, जो अतीव विषधर हैं, वैसे अदृष्ट विषधरगण का यहाँ क्या काम है? तुम सब लोग हमारे पास से चले जाओ।

अथाष्टमी—

उत्पुरस्तात्सूर्यएतिविश्वदृष्टोअदृष्टहा।
अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्यः॥ ८॥

उत्। पुरस्तात्। सूर्यः। एति। विश्वऽदृष्टः। अदृष्टऽहा।
अदृष्टान्। सर्वान्। जंभयन्। सर्वाः। च। यातुऽधान्यः॥ ८॥

असौसूर्यः पुरस्तात्पूर्वस्यांदिशिउदुदेति कीदृशःसः विश्वदृष्टः विश्वैर्द्रष्टव्यायस्यसतादृशः अदृष्टहादृष्टाविषविशेषाः विषधरविशेषावा तेषांहन्ता यद्वा अदृष्टंदर्शनमज्ञानंअन्धकारस्त-

स्यहन्ता सूर्येउदितेसतिसर्वेविषधराः विषाणिवापलायन्ते किंकुर्वन्नुदेतीतिचेदुच्यते—सर्वान्अ-दृष्टान्अदृष्टव्यान्विषराक्षसादीन्जंभयन्हिंसयन् तथासर्वायातुधान्यश्चयातवोयातनाः तीव्रवे-दनाः तासांधात्रीरुत्पादयित्रीर्महोरगीराक्षसीर्वाजंभयन् पुरस्तादुदेति अतोस्मत्तोनिजस्यते-तिसंबन्धः ॥ ८ ॥

८. पूर्व दिशा में सूर्य उगते हैं, वे सारे संसार को देखते और अदृष्ट विषधरों का विनाश करते हैं। वे सारे अदृष्टों और यातुधानी (राक्षसी वा महोरगी) का विनाश करते हैं।

उदंपप्तदुसौसूर्यःपुरुविश्वानिजूर्वन् ।
आदित्यःपर्वतेभ्योविश्वदृष्टोअदृष्टहा ॥ ९ ॥

उत् । अपप्तत् । असौ । सूर्यः । पुरु । विश्वानि । जूर्वन् ।
आदित्यः । पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥ ९ ॥

असौपुरस्ताद्दृश्यमानःसूर्यः सर्वस्यप्रेरकआदित्यः उदपप्तत् ऊर्ध्वंगच्छति पततेर्लुङि पुमागमेरूपं किंकुर्वन् विश्वानिबहूनिविषाणि पुरुप्रभूतंजूर्वन्हिंसन् कीदृशोसौ पर्वतेभ्यः पर्ववद्भ्यः प्राणिभ्यः तेषामुपकाराय आदित्यः विषोदकादीनामदनशीलः विश्वदृष्टः विश्वंदृष्टंयेनतादृशः अदृष्टहा अदृष्टानांविषविशेषाणांहन्ता एवंमहानुभावः सूर्यऊर्ध्वमारोहति अतोविषशङ्कानकार्या॥९॥

९. सूर्य, बड़ी संख्या में, विषों का विनाश करते हुए, उदित होते हैं। सर्वदर्शी और अदृश्यों के विनाशक आदित्य जीवों के मंगल के लिए उदित होते हैं। अथदशमी—

सूर्येविषमासंजामिदृतिंसुरावतोगृहे ।
सोचिन्नुनमरातिनोवयंमरामारेअस्ययोजनंहरिष्ठामधुत्वामधु ।
लाचकार ॥ १० ॥ १५ ॥

सूर्ये । विषम् । आ । सजामि । दृतिम् । सुराऽवतः । गृहे ।
सः । चित् । नु । न । मराति । नो इति । वयम् । मराम । आरे ।
अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१०॥१५॥

आदित्यमण्डलेचतुर्थेनाङ्गुलिनाविषमादायमधुकृत्ययोजयित्वानिर्विषोभवेदितियदेतद्वि-षविद्यायामुक्तं तदिदमन्त्रोच्यते—अहंविषावृतोगस्त्यः सूर्येसर्वस्यप्रेरयितरिमधुविद्यारूपेसूर्यम-ण्डलेविषमावृत्यवर्तमानंसूर्येआसजामिआसक्तंकरोमि तत्रदृष्टान्तः—सुरावतोगृहेसुरानिर्मात-

सदने दृतिमिव चर्ममयसुरापात्रमिव यथातत्कर्तुर्नदोषायभवति तद्वद्विषमादित्यस्यनबाधकमित्यर्थः सोचिव् चित्पूजायां नुःप्रसिद्धौ पूज्यःससूर्यःखलुनमराति नम्रियते नोवयंमराम तदनुग्रहात्तत्रैवविषस्ययोजितत्वाद्वयमपिनम्रियामहै उभयोरमरणेकारणमाह—हरिष्ठाः हरयोश्वाः तेपुस्थितआदित्यः आरेदूरेअस्यविषस्ययोजनंप्रापणंचकार तदेवोच्यते हेविष त्वात्वांमधुअमृतंचकार विषस्यविषभावंदूरेपनोद्यामृतीचकारेति एषैवमधुलामधुदात्रीनिर्विषीकर्त्रीमधुविद्या यदेतदादित्यस्यमण्डलेविषयोजनं तेनचामृतीकरणंयदस्तिएषामधुविद्या ॥ १० ॥

१०. शौण्डिक के घर में चर्ममय सुरापात्र की तरह में सूर्यमण्डल में विष फेंकता हूँ। जैसे पूजनीय सूर्यदेव प्राण-त्याग नहीं करते, वैसे ही हम भी प्राण-त्याग नहीं करते। अश्व-द्वारा चालित होकर सूर्यदेव दूरस्थित विष को दूर करते हैं। विष, मधुविद्या तुम्हें अमृत में परिणत कर देती है।

इयत्तिकाशकुन्तिकासकाजघासतेविषम् । सोचिन्नुनमरातिनोवयंमरामारेअस्ययोजनंहरिष्ठामधुत्वामधुलाचकार ॥ ११ ॥

इयत्तिका । शकुन्तिका । सका । जघास । ते । विषम् ।
सो इति । चित् । नु । न । मराति । नो इति । वयम् । मराम । आरे ।
अस्य । योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ ११ ॥

इयत्तिकाइयत्तांकुर्वाणाइयत्तावतीवाबालेत्यर्थः शकुन्तिका शकुन्तः शकुनः तस्यस्त्रीतांकपिञ्जलीमाहुः सकासातेतवविषंजघास भक्षितवती साविषहर्त्रीतिप्रसिद्धा सोचिव् साउइतिनिपातसमुदायएकंपदं सापिशकुन्तिकानम्रियते नित्यप्रतिपक्षत्वाद्विषस्य शिष्टंव्याख्यातचरं अनेनविद्यायांयदेहावृतंविषंतस्यशकुनेभ्यआदित्यायचप्रदानमस्तीत्युक्तंभवति ॥ ११ ॥

११. जैसे क्षुद्र शकुन्तिका पक्षी ने तुम्हारा विष खाकर उगल दिया है, जैसे उसने प्राण-त्याग नहीं किया, वैसे ही हम भी प्राण-त्याग नहीं करेंगे। अश्व-द्वारा परिचालित होकर सूर्यदेव दूरस्थित विष को दूर करते हैं। विष, मधुविद्या तुम्हें अमृत में परिणत करती है।

त्रिःसप्तविष्पुलिङ्गकाविषस्यपुष्पमक्षन् ।
ताश्चिन्नुनमरन्तिनोवयंमरामारेअस्ययोजनंहरिष्ठामधु ।
त्वामधुलाचकार ॥ १२ ॥

त्रिः । सप्त । विष्पुलिङ्गकाः । विषस्य । पुष्पम् । अक्षन् । ताः ।
चित् । नु । न । मरन्ति । नो इति । वयम् । मराम । आरे । अस्य ।
योजनम् । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ १२ ॥

त्रिःसप्त त्रिगुणिताःसप्तसंख्याकाविष्पुलिङ्गकाः विविधाः ष्पुलिङ्गकाः सप्तसुजिह्वासुलोहितशुक्लकृष्णभेदैनैकविंशतिर्यासांताः यद्वा त्रिःसप्त एकविंशतिभेदाविष्पुलिङ्गकाः सूक्ष्मचटिकाविषप्रतिपक्षभूताः विषस्यास्मदावरकस्यपुष्पंपोषमक्षन् अदन्तु नाशयन्तु ताश्चनमरन्तिनवयमपि शिष्टमविशिष्टम् ॥ १२ ॥

१२. अग्नि की सातों जिह्वाओं में से प्रत्येक में श्वेत, लोहित और कृष्ण आदि तीन वर्ण अथवा २१ प्रकार के पक्षी विष की पुष्टि का विनाश करते हैं। वे कभी नहीं मरते; वैसे ही हम भी प्राण-त्याग नहीं करते। अश्व-द्वारा परिचालित होकर सूर्य दूरस्थित विष का अपनयन करते हैं। विष, मधुविद्या तुम्हें अमृत में परिणत करती है।

नवानांनवतीनांविषस्यरोपुंषीणाम्।
सर्वासामग्रभंनामारेअस्ययोजनंहरिष्ठामधुत्वामधुलाचकार॥ १३॥

नवानाम्। नवतीनाम्। विषस्य। रोपुंषीणाम्।
सर्वासाम्। अग्रभम्। नाम। आरे। अस्य। योजनम्। हरिऽस्थाः।
मधु। त्वा। मधुला। चकार॥ १३॥

नवानांनवतीनांनवाधिकानांनवतिसंख्याकानांनदीनां पुनःकीदृशीनां विषस्यास्मद्व्यापकस्यसर्वस्यविषस्यरोपुषीणां लोपयित्रीणांछेत्रीणांसर्वासामुक्तानांगङ्गादिनदीनांनामाग्रभं गृह्णामि संकीर्तयामि ग्रहेश्छान्दसेलुङि छान्दसश्चेर्लुक् हग्रहोर्भः अस्ययोजनमित्यादिगतम्॥ १३॥

१३. मैं सारी विष-नाशक निन्यानबे नदियों के नामों का कीर्तन करता हूँ। अश्व-द्वारा चालित होकर सूर्यदेव दूर-स्थित विष का अपनोदन करते हैं। विष, मधुविद्या तुम्हें अमृत बना देगी।

त्रिःसप्तमयूर्यःसप्तस्वसारोअग्रुवः।
तास्तेविषंविजभ्रिरउदकंकुंभिनीरिव॥ १४॥

त्रिः। सप्त। मयूर्यः। सप्त। स्वसारः। अग्रुवः।
ताः। ते। विषम्। वि। जभ्रिरे। उदकम्। कुंभिनीःऽइव॥ १४॥

त्रिःसप्त एकविंशतिसंख्याकाः मयूर्योमयूरस्त्रियः ताः विषकारिसर्पद्वेषिण्यइतिप्रसिद्धाः नागद्वेषिगरुडपक्षादुत्पन्नत्वात् तथासप्त एतत्संख्याकाः सर्पणस्वभावाःस्वसारः स्वयमेवसरणाः अग्रुवः नदीनामैतत् गंगाद्याःप्रसिद्धाःसप्तनद्यःसन्ति तास्ते हेदेह तवविषंविजभ्रिरे विशेषेणहरन्तु तत्रदृष्टान्तः—उदकंकुंभिनीः कुंभिन्यःकुंभवत्यः कुंभेनजलहारिण्यइव तायथातद्धरन्ति तद्वन्नद्योमयूर्यश्चातिप्रभूतंहरन्तु ॥१४॥ अथपञ्चदशी—

१४. जैसे स्त्रियाँ घड़े में जल ले जाती हैं, हे देह, वैसे ही २१ मयूरियाँ (पक्षी) और सात नदियाँ तुम्हारा विष दूर करें।

इयत्तकः कुषुंभकस्तकं भिनद्म्यश्मना ।
ततो विषं प्र वावृते पराचीरनु संवतः ॥ १५ ॥

इयत्तकः । कुषुंभकः । तकम् । भिनद्मि । अश्मना ।
ततः । विषम् । प्र । ववृते । पराचीः । अनु । सम्ऽवतः ॥ १५ ॥

इयत्तकःकुत्सितेयत्तः अल्पप्रमाणइत्यर्थः कुषुंभकःकुंपृथ्वीं सुंभति विलिखतीति सर्पाणांकुत्सितंसुंभयितानिग्रहीतावाकुषुम्भकोनकुलः सतेविषंहरत्विति शेषः यदिनतथासकरोति तकंकुत्सितंतन्नकुलमश्मनाभिनद्मि विदारयामि विषनिर्हरणप्रयोगे यावद्विषापगमंतंपाषाणानुघातमनुतिष्ठन्तितद्विदः तदिदमत्रोक्तं ततः एवं प्रयोगेसति विषंप्रवावृते विषावृतादेहाद्विषंप्रवर्तते निर्गच्छतु काःप्रति उच्यते पराचीः परागञ्चनवतीरतिदूरगाः संवतः संविभागवतीर्दिशःअनु अनुलक्षीकृत्यदिगन्तं प्रतिगच्छतु नमांप्रतिगच्छत्वित्यर्थः ॥ १५॥

१५. देह, यह छोटा-सा नकुल तुम्हारा विष दूर करे। यदि न करे, तो मैं इस कुत्सित जन्तु को लोष्ट्र-द्वारा मार डालूँगा। मेरे शरीर से विष दूर हो और दूर देश में चला जाय।

अध्यायोपाकरणोत्सर्गयोःकुषुंभकस्तदित्यन्त्याविनियुक्ता दधिसक्तून्जुहोतीत्युपक्रम्यकुषुम्भकस्तदब्रवीदितिसूत्रितत्वात् ।

कुषुंभकस्तदब्रवीद्गिरेः प्रवर्तमानकः ।
वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥ १६ ॥ १६ ॥

कुषुभकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः । वृश्चिकस्य ।
अरसम् । विषम् । अरसम् । वृश्चिक । ते । विषम् ॥ १६ ॥ १६ ॥

॥ इतिप्रथमंमण्डलम् ॥

एवंमहानुभावेनागस्त्यमहर्षिणोच्यमानेसति गिरेःसकाशात्प्रवर्तमानकः प्रवर्तमानोतिशीघ्रमभिगच्छन् कुषुंभकोनकुलः तदब्रवीत् तद्वाक्यमाचख्यौ किंतदितिउच्यते—वृश्चिकस्यैतद्विषं अरसं असारं बाधकंनभवतीत्यर्थः तथा लोकेपिसर्पदष्टमपिक्रिम्यादिदंशनमेव अतोनबाधइतिहिवदन्ति एवमभिवचनेनसोपिनिर्विषोभवत् अथतंवृश्चिकंप्रतिनकुलआह हेवृश्चिक तेविषमरसं अतस्त्वयाऽपिंकिंकरिष्यति तस्मात्परिहरेति यदैवमवादीत् तदाप्रभृतिवृश्चिकविषमसारमभवत् एषाविषनिर्हरिण्युपनिषत् ॥ १६ ॥

१६. पर्वत से आकर, उस समय, नकुल ने कहा—"वृश्चिक का विष रस-शून्य है।" हे वृश्चिक, तुम्हारा विष रसशून्य है।

॥ इतिप्रथमेमण्डलेचतुर्विंशोनुवाकः ॥२४॥

॥ प्रथमंमण्डलंसमाप्तम् ॥ १ ॥

## ॥ अथद्वितीयंमण्डलम् ॥

शार्तर्चिनंप्रथमंमण्डलंव्याख्यातम् अथगार्त्समदंद्वितीयंमण्डलंव्याख्यायते त्वमग्नेद्युभिरित्यादिकेद्वितीयेमण्डलेचत्वारोनुवाकाः तेषुप्रथमेनुवाके एकादशसूक्तानि तत्रत्वमग्नेद्युभिरितिषोडशर्चंप्रथमंसूक्तम् मण्डलद्रष्टागृत्समदऋषिः सचपूर्वमाङ्गिरसकुलेशुनहोत्रस्यपुत्रःसन्यज्ञकालेऽसुरैर्गृहीतः इन्द्रेणमोचितः पश्चात्तद्वचनेनैवभृगुकुलेशुनकपुत्रोगृत्समदनामाभूत् तथाचानुक्रमणिकायआङ्गिरसःशौनहोत्रोभूत्वाभार्गवःशौनकोभवत्सगृत्समदोद्वितीयंमण्डलमपश्यदिति । तथातस्यैवशौनकस्यवचनमृष्यनुक्रमणे त्वमग्नइतिगृत्समदःशौनकोभृगुतांगतःशौनहोत्रःप्रकृत्यातुयआंगिरसउच्यतइति । तस्मान्मण्डलद्रष्टाशौनकोगृत्समदऋषिः जगतीच्छन्दः मण्डलादिपरिभाषयाग्नेयं अत्रानुक्रमणिका—त्वमग्नेजागतंत्विति प्रातरनुवाकाश्विनशस्त्रयोर्जागतेछन्दसीदमादिसूक्तद्वयस्यविनियोगः त्वमग्नेद्युभिरितिसूक्तेइतिसूत्रितत्वात् उपाकरणोत्सर्जनयोरप्याद्याविनियुक्ता ।

तत्रप्रथमा—

त्वमग्नेद्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वंवनेभ्यस्त्वमोषधीभ्यस्त्वंनृणांनृपतेजायसेशुचिः ॥१॥

त्वम् । अग्ने । द्युऽभिः । त्वम् । आशुशुक्षणिः । त्वम् । अत्ऽभ्यः ।
त्वम् । अश्मनः । परि । त्वम् । वनेभ्यः । त्वम् । ओषधीभ्यः । त्वम् ।
नृणाम् । नृऽपते । जायसे । शुचिः ॥ १ ॥

हेअग्ने अग्रणीत्वादिगुणविशिष्ट हेनृणांनृपते नृणांमनुष्याणांमध्ये येनरोयष्टारःसन्ति तेषां विशेषेणपालयितः यद्वोभाभ्यांपदाभ्यांबहुत्वंनित्यस्वामित्वंचप्रतिपाद्यते सर्वेषामपिनराणांनित्यपालकेत्यर्थः नृणामित्यस्यनिघाताभावश्छान्दसः तादृश हेदेव त्वंद्युभिर्यागदिवसैः निमित्तभूतैर्जायसे यागार्थंमथनेनोत्पद्यसइत्यर्थः यद्वा तादृशैर्दिवसैः सहितोजायसे तत्तद्यागदिवसेषुप्रसिद्धोभवसीत्यर्थः तथात्वमाशुशुक्षणिः जायसे आसर्वतोदीप्यमानोभवसि आङ्उपपदेशुचदीप्तावित्येतस्यसन्नन्तस्यछान्दसमिदंरूपं यद्वा आशुशीघ्रंशुचद्दीप्तःसन् यतः संसेव्यसइतिआशुशुचंशोकंसनोतिददातिशत्रुभ्योदाहादिनेत्याशुशुक्षणिः तादृशोभवसि एवंसर्वत्रप्रतिविशेषणं जायसइतियोज्यं हेअग्ने त्वं अद्भ्योवृष्ट्युदकेभ्योजायसे वैद्युतरूपेणवाडवरूपेणवासमुद्रोदके-

भ्यः त्वंअश्मनोमेघात् पाषाणाद्वापरिजायसे योअश्मनोरन्तरग्निंजजानेतिहिमन्त्रांन्तरम् । त्वंवने भ्यःवृक्षादिसमूहेभ्योदावरूपेण त्वमोषधीभ्यःवैश्वानररूपेण एवंमहानुभावस्त्वं मथनेनोत्पन्नः सन्सर्वात्मकोभवसीत्यर्थः शुचिरेवजायसे यद्वा शुचिरादित्यरूपोजायसइत्यर्थः अन्नत्वमग्नेद्यु-भिरहोभिरित्यादिनिरुक्तमनुसन्धेयम् ॥ १ ॥

१. मनुष्यों के स्वामी अग्निदेव, यज्ञ-दिन में तुम उत्पन्न होओ। सर्वतः दीप्तिशाली होकर उत्पन्न होओ। पवित्र होकर उत्पन्न होओ। जल से उत्पन्न होओ। पाषाण से उत्पन्न होओ। वन से उत्पन्न होओ। ओषधि से उत्पन्न होओ।

तवाग्नेहोत्रंतवपोत्रमृत्वियंतवनेष्ट्रंत्वमग्निदृतायतः ।
तवप्रशास्त्रंत्वमध्वरीयसिब्रह्माचासिगृहपतिश्चनोदमे ॥ २ ॥

तव । अग्ने । होत्रम् । तव । पोत्रम् । ऋत्वियम् । तव । नेष्ट्रम् ।
त्वम् । अग्नित् । ऋतऽयतः । तव । प्रऽशास्त्रम् । त्वम् ।
अध्वरिऽयसि । ब्रह्मा । च । असि । गृहऽपतिः । च । नः । दमे ॥२॥

हेअग्ने होत्रं होतुःकर्मशस्त्रयाज्यादिलक्षणंयदस्तितदपितवैव त्वदर्थमित्यर्थः तथापोत्रं पोतुः कर्मयदस्ति तदपितवैव तथाऋत्वियंप्राप्तकालमार्त्विज्यंतवैवनेष्ट्रं नेष्टुःकर्मप्रस्थितयाज्यादिरूपं तव हेअग्ने त्वमग्निवआग्नीध्रश्चत्वमेवासि तथाऋतायतोयज्ञमिच्छतस्तवैवप्रशास्त्रं यत्प्रशास्तुर्मै-त्रावरुणस्यकर्मतव हेअग्ने त्वमध्वरीयसि अध्वरंयज्ञंकामयसेअध्वर्युर्भवसीत्यर्थः तथाध्वर्यु-शब्दव्युत्पत्तेः अध्वर्युरध्वरयुरध्वरंकामयतइतिवेतिहिनिरुक्तम्।तथाब्रह्माचब्राह्मणाच्छंस्यप्यसि तथानोदमेस्मद्यज्ञगृहेगृहपतिश्चासीति ॥ २ ॥

२. अग्निदेव, होता, पोता, ऋत्विक् और नेष्टा आदि का कार्य तुम्हारा ही कर्म है। तुम अग्नीध्र हो। जिस समय तुम यज्ञ की इच्छा करते हो, उस समय प्रशास्ता का कर्म भी तुम्हारा ही है। तुम्हीं अध्वर्यु और ब्रह्मा नाम के ऋषि हो। हमारे घर में तुम ही गृहपति हो।

अथतृतीया—

त्वमग्नइन्द्रोवृषभःसतामसित्वंविष्णुरुरुगायोनमस्यः ।
त्वंब्रह्मारयिविद्ब्रह्मणस्पतेत्वंविधर्तःसचसेपुरंध्या ॥ ३ ॥

---

१ ऋ० सं० २. ६. ६. । २ नि० ६. १. । ३ नि० १. ८. ।

त्वम् । अग्ने । इन्द्रः । वृषभः । सताम् । असि । त्वम् । विष्णुः ।
उरुऽगायः । नमस्यः । त्वम् । ब्रह्मा । रयिऽवित् । ब्रह्मणः । पते ।
त्वम् । विधर्तरिति विऽधर्तः । सचसे । पुरम्ऽध्या ॥ ३ ॥

हेअग्ने त्वंयतः सतांवृषभोवर्षितासि अतइन्द्रोसि यद्वा सतांसाधूनां इन्द्रोसि कामानांवर्षितासि त्वंविष्णुरसि यतउरुगायः बहुभिर्गीयमानः अतोनमस्यः नमस्कार्यश्चभवसि हेब्रह्मणस्पते परिवृढस्यकर्मणोमन्त्रस्यवापालयितःत्वं यतः रयिवित्धनवादिधनस्यवेत्ता अतोब्रह्मासि हेविधर्तः विविधकारक वैश्वानररूपाग्ने त्वंपुरन्ध्याबहुप्रकारयाबुद्ध्यासचसे सहवर्तसे सर्वदाबुद्ध्यास्तूयसइत्यर्थः ॥ ३ ॥

३. अग्निदेव; तुम साधुओं का मनोरथ पूर्ण करते हो; इसलिए तुम्हीं विष्णु हो, तुम बहुतों के स्तुतिपात्र हो; तुम नमस्कार के योग्य हो। धनवान् स्तुति के अधिपति, तुम मन्त्रों के स्वामी हो, तुम विविध पदार्थों की सृष्टि करते और विभिन्न बुद्धियों में रहते हो।

त्वमग्नेराजावरुणोधृतव्रतस्त्वंमित्रोभवसिदस्मईड्यः ।
त्वमर्यमासत्पतिर्यस्यसंभुजंत्वमंशोविदथेदेवभाजयुः ॥ ४ ॥
त्वम् । अग्ने । राजा । वरुणः । धृतऽव्रतः । त्वम् । मित्रः । भवसि ।
दस्मः । ईड्यः । त्वम् । अर्यमा । सत्ऽपतिः । यस्य । सम्ऽभुजम् ।
त्वम् । अंशः । विदथे । देव । भाजयुः ॥ ४ ॥

हेअग्ने त्वंयतोधृतव्रतः धारितकर्मासि अतोवरुणोराजासि यतोदस्मः शत्रूणामुपक्षपयिताईड्यःस्तुत्यश्च अतोत्वंमित्रः एतन्नामकोदेवोसि यतः त्वंसत्पतिः सतामभिमतप्रदानेनपालयिता अतः अर्यमाभवसि दातृत्वंचार्यम्णोलिङ्गं अर्यमेतितमाहुर्योददातीतियस्यार्यम्णोदानंसंभुजंसन्ततभुजंव्यापकंभवति यद्वा यस्यधनंसंभुजं सम्यग्भोगायसाधुग्रहीतॄणां तथात्वंअंशः सूर्यमूर्त्यन्तरभूतएतन्नामकोदेवोसि तादृशहेदेव विदथेस्मदीययज्ञे भाजयुः फलानांभाजयिताप्रापयितासि॥४॥

४. अग्नि, तुम धृतव्रत हो; इसलिए तुम राजा वरुण हो। तुम शत्रुओं के विनाशक और स्तुति-योग्य हो; इसलिए तुम मित्र हो। तुम साधुओं के रक्षक हो; इसलिए तुम अर्यमा हो। अर्यमा का दान सर्वव्यापी है। तुम अंश (सूर्य) हो। अग्निदेव, तुम हमारे यज्ञ में फलदान करो।

त्वमग्नेत्वष्टाविधतेसुवीर्यंतवग्नावोमित्रमहःसजात्यम् ।
त्वमाशुहेमाररिषेस्वश्व्यंत्वंनरांशर्धोअसिपुरूवसुः ॥ ५ ॥ १७ ॥

त्वम् । अग्ने । त्वष्टा । विधते । सुऽवीर्यम् । तव । ग्नावः । मित्रऽमहः ।
सुऽजात्यम् । त्वम् । । आशुऽहेमा । ररिषे । सुऽअश्व्यम् ।
त्वम् । नराम् । शर्धः । असि । पुरुऽवसुः ॥ ५ ॥ १७ ॥

हेअग्ने त्वष्टाफलस्यसाधुसंपादयितात्वं विधतेपरिचरतेजनाय सुवीर्यंशोभनवीर्यंधनं त-द्धेतुर्भवसि ग्नावः याः स्तुतिवाचःसन्ति तास्तव स्वभूताः हेमित्रमहः हितकारितेजः सजात्यं अस्माकंबान्धवंभजसइत्यर्थः हेअग्ने आशुहेमा आशुप्रेरयितात्वं स्वश्व्यंशोभनाश्वसमूहोपेतंफलं ररिषेददासि हेअग्ने पुरूवसुः प्रभूतधनस्त्वं नरांनराणां शर्धोबलस्थानीयोसि ॥ ५ ॥

५. अग्निदेव, तुम त्वष्टा हो। तुम अपने सेवक के वीर्यरूप हो। सारी स्तुतियाँ तुम्हारी ही हैं। तुम्हारा तेज हितकारी है। तुम हमारे बन्धु हो। तुम शीघ्र उत्साहित करते हो और हमें उत्तम अश्वयुक्त धन देते हो। तुम्हारे पास बहुत धन है। तुम मनुष्यों के बल हो।

॥ इतिद्वितीयस्यपञ्चमेसप्तदशोवर्गः ॥ १७ ॥

अथषष्ठी—

त्वमग्नेरुद्रोअसुरोमहोदिवस्त्वंशर्धोमारुतंपृक्षईशिषे ।
त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मना ॥ ६ ॥

त्वम् । अग्ने । रुद्रः । असुरः । महः । दिवः । त्वम् । शर्धः । मारुतम् ।
पृक्षः । ईशिषे । त्वम् । वातैः । अरुणैः । यासि । शम्ऽगयः ।
त्वम् । पूषा । विधतः । पासि । नु । त्मना ॥ ६ ॥

हेअग्ने त्वं महोदिवोमहतोद्युलोकात् उपलक्षणमेतत् लोकत्रयात् असुरः शत्रूणांनिरसिता रुद्रोसि रुद्दुःखं दुःखहेतुर्वापापादिः तस्यद्रावयिताएतन्नामकोदेवोसि रुद्रोवाएषयदग्निरित्यादि-ष्वग्नेरुद्रशब्देनव्यवहारात् यद्वा त्वंरुद्रः रौति मामनिष्टानरादुःखेपतिष्यन्तीतिरुद्रः तादृशोसि रुद्रोरौतीतिसतइतिनिरुक्तम्[1] । तथामहोमहतोदिवोद्युलोकस्यसंबन्धी असुरोसि असुर्बलंतस्यदा-ताआदित्यरूपश्चत्वमसि अग्नेर्द्युलोकसंबन्ध्यसुरत्वमुतवादिवोअसुरायमन्मेत्यादिषु तथात्वंमा-रुतंशर्धः मरुत्समूहरूपंबलमसि वायुरूपश्चत्वमसीत्यर्थः एवमग्न्यादित्यवायुरूपस्त्वंपृक्षोन्नस्य हविर्लक्षणस्य ईशिषे ईश्वरोभवसि यस्मादेवं तस्मात्त्वंवातैर्वायुसदृशैररुणैररुणवर्णैरश्वैः शङ्गयः सुखस्यगृहरूपआवासभूतःसन् यासिप्राप्नोषियागगृहं यद्वा अरुणैर्गमनशीलैर्वातैर्वायुभिरुपपन्नः

1 नि० १०. ५.

सन्यासिवने तथात्वंपूषासर्वस्यपोषकःसन् नुक्षिमं त्मना आत्मना अनुग्रहरूपयास्वबुद्धयैव विधतः परिचरतोयजमानान् पासि ॥ ६ ॥

६. अग्नि, तुम महान् आकाश के असुर रुद्र हो। तुम मरुतों के बलस्वरूप हो। तुम अन्न के ईश्वर हो। तुम सुख के आधार-स्वरूप हो। लोहित-वर्ण और वायु-सदृश अश्व पर जाते हो। तुम पूषा हो, तुम स्वयं कृपा करके परिचालक मनुष्यों की रक्षा करते हो।

त्वमंग्नेद्रविणोदाअरंकृतेत्वंदेवःसंविताररत्नधाअसि ।
त्वंभगोनृपतेवस्वईशिषेत्वंपायुर्दमेयस्तेविधत् ॥ ७ ॥

त्वम् । अग्ने । द्रविणःऽदाः । अरम्ऽकृते । त्वम् । देवः । सविता ।
रत्नऽधाः । असि । त्वम् । भगः । नृऽपते । वस्वः । ईशिषे । त्वम् ।
पायुः । दमे । यः । ते । अविधत् ॥ ७ ॥

हेअग्ने त्वं अरंकृतेत्वामलंकुर्वतेयजमानायद्रविणोदाः हिरण्यस्यदातासि देवोद्योतमानः सवितासर्वस्यसत्कर्मसुप्रेरकस्त्वंरत्नधा रमणीयानांधनानांमणिमुक्तादीनांधारयितासि तथा हेनृपते नृणांपालकाग्ने त्वंभगोभजनीयःसन् वस्वोवसुनोधनस्य ईशिषे समर्थोभवसिदातुं योयजमानोदमेयज्ञगृहेतेत्वांअविधत् परिचरति तस्यपायुः पालकस्त्वमसि ॥ ७ ॥

७. अग्नि, अलंकारकारी यजमान के लिए तुम स्वर्गदाता हो। तुम प्रकाशमान सूर्य और रत्नों के आधार स्वरूप हो। नृपति, तुम भजनीय धनदाता हो। यज्ञ-गृह में जो यजमान तुम्हारी सेवा करता है, उसकी तुम रक्षा करते हो।

त्वामंग्नेदमआविश्पतिंविशस्त्वांराजानंसुविदत्रंमृञ्जते ।
त्वंविश्वानिस्वनीकपत्यसेत्वंसहस्राणिशतादशप्रति ॥ ८ ॥

त्वाम् । अग्ने । दमे । आ । विश्पतिम् । विशः । त्वाम् । राजानम् ।
सुऽविदत्रम् । ऋञ्जते । त्वम् । विश्वानि । सुऽअनीक । पत्यसे ।
त्वम् । सहस्राणि । शता । दश । प्रति ॥ ८ ॥

हेअग्ने विश्पतिंयजमानानांपालकं त्वां विशः यजमानादमेस्वकीयेयज्ञगृहे आ आसादयन्ति उपसर्गवशाद्योग्यक्रियाध्याहारः तथाकृत्वाराजानंदीप्यमानं सुविदत्रंशोभनदानं अस्मदनुकूलचेतस्कंसुधनंवात्वांऋञ्जते प्रसाधयन्ति ऋञ्जतिःप्रसाधनकर्मेतियास्कः । यतएवं ततोहेस्वनी-

क शोभनज्वालारूपसेन त्वंविश्वानिसर्वाणिहवींषीतिशेषः षष्ठ्यर्थेद्वितीया विश्वेषांहविषामा-ज्यसोमपुरोडाशादीनां पत्यसे ईश्वरोभवसि ईश्वरनामैतत् इरज्यतिपत्यतइतितन्नामसुपाठात् यद्वा पतिभावमाचरसि त्वंतुसहस्राणिशताशतानिदशएतत्संख्याकानिप्रतिएतत्संख्याकानामभिमतसा-धनानांप्रतिनिधिरित्यर्थः प्रतिःप्रतिनिधिप्रतिदानयोरितिकर्मप्रवचनीयत्वं तैर्यत्फलंभवति त-त्त्वयालभ्यतइत्यर्थः ॥८॥

८, अग्नि, लोग अपने-अपने घर में तुम्हें प्राप्त करते और तुम्हें विभूषित करते हैं। तुम मनुष्यों के पालक, दीप्तिमान् और हमारे प्रति अनुग्रह-सम्पन्न हो। तुम्हारी सेवा अत्युत्तम है। तुम सारे हव्यों के ईश्वर हो। तुम हजारों, सैकड़ों और दसों फल देते हो।

त्वाम॑ग्ने पि॒तर॑मि॒ष्टिभि॒र्नर॒स्त्वां भ्रा॒त्राय॒ शम्या॑ तनू॒रुच॑म् ।
त्वं पु॒त्रो भ॑वसि॒ यस्तेऽवि॑ध॒त्त्वं सखा॑ सु॒शेवः॑ पास्या॒धृषः॑ ॥ ९ ॥

त्वाम् । अ॒ग्ने॒ । पि॒तर॑म् । इ॒ष्टिऽभिः॑ । नरः॑ । त्वाम् । भ्रा॒त्राय॑ । शम्या॑ । तनू॒ऽरुच॑म् । त्वम् । पु॒त्रः । भ॒व॒सि॒ । यः । ते॒ । अवि॑धत् । त्वम् । सखा॑ । सु॒ऽशेवः॑ । पा॒सि॒ । आ॒ऽधृषः॑ ॥ ९ ॥

हेअग्ने पितरंपालकंत्वांनरोनेतारोयजमानाः इष्टिभिरेषणसाधनैर्यागैर्यजन्तइतिशेषः पितृ-त्वपालनाययजन्तइत्यर्थः तथातनूरुचंशरीराणांदीपकंशरीरेषुदीप्यमानंवैश्वानरात्मनात्वांभ्रात्रा-यभ्रातृत्वायसौभ्रात्राय शम्या कर्मनामैतत् कर्मणायजन्तइतिशेषः यद्वोभयत्रवक्ष्यमाणेनाविधदि-त्यनेनसंबन्धः हेअग्ने योनरस्तेत्वांअविधत्परिचरति तस्यत्वंपुत्रोभवसि पुत्रवत्पालयिताभवसि तथात्वं सखासमानख्यानः सखिवद्धितकारी सुशेवः शेवइतिसुखनाम सुष्ठुसुखकारीसन् आधृषः आधर्षकात्मा पासिरक्षसि पितृत्वकामायपितृत्वेनभ्रातृत्वकामायभ्रातृत्वेनपुत्रत्वकामायपुत्रस्था-नीयोभवसि त्रिप्रकारेणरक्षसीत्यर्थः ॥ ९ ॥

९, अग्नि, यज्ञ-द्वारा लोग तुम्हें तृप्त करते हैं; क्योंकि तुम पिता हो। तुम्हारा भ्रातृत्व प्राप्त करने के लिए लोग कर्म-द्वारा तुम्हें तृप्त करते हैं। तुम भी उनका शरीर प्रदीप्त कर देते हो। जो तुम्हारी सेवा करता है, तुम उसके पुत्र हो। तुम सखा, शुभकर्त्ता और शत्रु-निवारक होकर रक्षा करो।

अथदशमी—

त्वम॑ग्न ऋ॒भुरा॒के न॑म॒स्य१॒॑स्त्वं वाज॑स्य क्षु॒मतो॑ रा॒य ई॑शिषे ।
त्वं वि भा॒स्यनु॑ दक्षि दा॒वने॒ त्वं वि॒शिक्षु॑रसि य॒ज्ञमा॒तनिः॑ ॥१०॥१८॥

---

१ नि० ६. २१.।

त्वम् । अग्ने । ऋभुः । आके । नमस्यः । त्वम् । वाजस्य । क्षुऽमतः ।
रायः । ईशिषे । त्वम् । वि । भासि । अनु । धक्षि । दावने । त्वम् ।
विऽशिक्षुः । असि । यज्ञम् । आऽतनिः ॥ १० ॥ १८ ॥

हेअग्ने त्वंऋभुः उरुभासमानोमेधावीवा त्वमाके अन्तिकेसन्निधावेव नमस्योनमस्कार्यः स्तुत्यइत्यर्थः इतरदेवतावन्मन्त्रप्रतिपाद्याकारेणस्तुत्योनभवसि किन्तुप्रत्यक्षइत्यर्थः तथात्वंक्षुमतः शब्दवतः सर्वत्रश्रूयमाणस्यवाजस्यान्नस्यरायोधनस्य ईशिषेस्वामीभवसि अतस्तद्देहीत्यर्थः हेअग्ने त्वंविभासिविशेषेणदीप्यसे तदर्थमनुअनुक्रमेणैव धक्षिदहसिकाष्ठादीन् दहेर्लटिसिपिरूपं संहितायांभष्भावाभावश्छान्दसः किमर्थमेवं दावनेछेदनायान्धकारस्य यद्वा हविषोदानवतेयजमानाय वा किञ्च त्वंयज्ञंविशिक्षुः विशेषेणशिक्षयितासाधयितासि नलोकाव्ययेतिषष्ठ्यानिषेधः तथा आतनिः फलस्यसर्वतोविस्तारयिता ॥ १० ॥

१०. अग्नि, तुम ऋभु हो। तुम प्रत्यक्ष स्तुति-योग्य हो। तुम सर्वत्र विश्रुत धन और अन्न के स्वामी हो। तुम अतीव उज्ज्वल हो। अंधकार के विनाश के लिए तुम धीरे-धीरे काष्ठ आदि का दहन करते हो। तुम भली भाँति यज्ञ का निर्वाह और उसके फल का विस्तार करते हो।

त्वमग्नेअदितिर्देवदाशुषेत्वंहोत्राभारतीवर्धसेगिरा ।
त्वमिळाशतहिमासिदक्षसेत्वंवृत्रहावसुपतेसरस्वती ॥ ११ ॥
त्वम् । अग्ने । अदितिः । देव । दाशुषे । त्वम् । होत्रा । भारती ।
वर्धसे । गिरा । त्वम् । इळा । शतऽहिमा । असि । दक्षसे । त्वम् ।
वृत्रऽहा । वसुऽपते । सरस्वती ॥ ११ ॥

हेअग्ने देव त्वंदाशुषेहविर्दत्तवतेयजमानायादितिरखण्डयिता परिपालयितासि यद्वा अदीनाभूमिरसि किञ्च त्वंहोत्राहोमनिष्पादिकाभारतीभरतस्यादित्यस्यसंबन्धिनीरश्मिरूपासतीगिरास्तुत्यावर्धसेप्रवृद्धोभवसि किञ्च त्वंशतहिमा हिमशब्दःकालोपलक्षकः अपरिमितकाला नित्या इळा भूमिरसि तादृशीसतीदक्षसेदानायसमर्थोभवसि तिङउत्तरत्वादनिघातः तथाहेवसुपतेधनपालक वृत्रहापापादेर्हन्तात्वंसरस्वती सरणवान्वायुःतत्संबन्धिनीएतन्नियामकामाध्यमिकावागसि आदित्याग्निवायूनांसंबन्धिन्योभारतीळासरस्वत्याख्यायास्तिस्रोदेव्यःसन्ति ताअपित्वमेवेत्यर्थः ॥ ११ ॥

११. अग्निदेव, तुम हव्यदाता के लिए अदिति हो। तुम होत्रा और भारती हो। स्तुति-द्वारा तुम वृद्धि प्राप्त करो। तुम सौ वर्षों की भूमि हो। तुम दान में समर्थ हो। हे धन-पालक, तुम वृत्रहन्ता और सरस्वती हो।

अथद्वादशी—

त्वमग्नेसुभृतउत्तमंवयस्तवस्पार्हेवर्णआसंदृशिश्रियः।
त्वंवाजःप्रतरणोबृहन्नसित्वंरयिर्बहुलोविश्वतस्पृथुः ॥ १२ ॥

त्वम्। अग्ने। सुऽभृतः। उत्ऽतमम्। वयः। तव। स्पार्हे। वर्णे। आ। सम्ऽदृशि। श्रियः। त्वम्। वाजः। प्रऽतरणः। बृहन्। असि। त्वम्। रयिः। बहुलः। विश्वतः। पृथुः॥ १२ ॥

हेअग्ने त्वंसुभृतः सुष्ठुपोषितःसन् उत्तमंनिरतिशयंवयः अन्नमायुष्यंवात्वमसि तत्संपादकोसीत्यर्थः तथातवस्पार्हेस्पृहणीयेवर्णेलोहितशुक्लादिलक्षणेसन्दृशिसम्यग्दर्शनीयेश्रियः ऐश्वर्याणिकान्तयोवाआश्रित्यवर्तन्ते उपसर्गश्रुतेर्योग्यक्रियाध्याहारः किञ्च त्वंवाजः अन्नंतत्साधकत्वात्ताच्छब्द्यं अन्नसाधकइत्यर्थः प्रतरणः प्रतारयितापापात् अतएवबृहन्महानसि तथात्वंरयिर्धनरूपोसि बहुलःसर्वविषयबाहुल्योपेतः विश्वतः सर्वतः पृथुः विस्तीर्णः प्रख्यातइत्यर्थः ॥१२॥

१२. अग्निदेव, अच्छी तरह पुष्ट होने पर तुम्हीं उत्तम अन्न हो। तुम्हारे स्पृहणीय और उत्तम वर्ण में ऐश्वर्य रहता है। तुम्हीं अन्न, त्राता, बृहत्, धन, बहुल और सर्वत्र विस्तीर्ण हो।

त्वामग्नआदित्यासआस्यं त्वांजिह्वांशुचयश्चक्रिरेकवे।
त्वांरातिषाचोअध्वरेषुसश्चिरेत्वेदेवाहविरदन्त्याहुतम् ॥ १३ ॥

त्वाम् ॥ अग्ने। आदित्यासः। आस्यम्। त्वाम्। जिह्वाम्। शुचयः। चक्रिरे। कवे। त्वाम्। रातिऽसाचः। अध्वरेषु। सश्चिरे। त्वे इति। देवाः। हविः। अदन्ति। आऽहुतम्॥ १३ ॥

हेअग्ने त्वांआदित्यासः अदितेःपुत्राइन्द्रादयः आस्यंस्वकीयंमुखंभक्षणपानादिसाधनं चक्रिरइतिवक्ष्यमाणेनसंबन्धः तथा हेकवे क्रान्तप्रज्ञ त्वामेवशुचयः शुद्धादीप्तावादेवाजिह्वांस्वकीयजिह्वास्थानीयमास्वादनसाधनंचक्रिरे त्वन्मुखेनैवभक्षयन्ति त्वज्जिह्वयैवास्वादयन्तीत्यर्थः तथा त्वामेवरातिषाचः रातिर्दानंदत्तंहविरादिधनंवा तेनसमवेताः देवाः अध्वरेषुयज्ञेषुसश्चिरे सेवन्ते त्वामेवप्रतीक्षन्ते विनात्वयास्वेषांहविर्भक्षणायोगात् एवंकृत्वात्वेत्वयिदेवाः सर्वे आहुतंसर्वतोदत्तंहविरदन्तिभक्षयन्ति एवंसर्वदेवोपकारिणंमहानुभावं स्तौमीत्यर्थः॥ १३ ॥

१३. अग्निदेव, आदित्यों ने तुम्हें मुख दिया है। हे कवि, पवित्र देवताओं ने तुम्हें जीभ दी है। दान के समय एकत्र देवता यज्ञ में तुम्हारी अपेक्षा करते और तुम्हें ही आहुति रूप में दिया हुआ हव्य भक्षण करते हैं।

त्वेअंग्नेविश्वेंअमृतांसोअद्रुहंआसादेवाहविरंदन्त्याहुंतम् ।
त्वयामर्तांसःस्वदन्तआसुतिंत्वंगर्भोंवीरुधांजज्ञिषेशुचिंः ॥ १४ ॥

त्वे इतिं । अग्ने । विश्वें । अमृतांसः । अद्रुहंः । आसा । देवाः । हविः ।
अदन्ति । आऽहुंतम् । त्वया । मर्तांसः । स्वदन्ते । आऽसुतिम् । त्वम् ।
गर्भः । वीरुधांम् । जज्ञिषे । शुचिंः ॥ १४ ॥

हेअग्ने त्वेत्वयि विश्वेसर्वे अमृतासः अमरणधर्माणःअद्रुहःअद्रोग्धारोदेवाआसात्वदीयेना-स्येनाहुतंहविरदन्ति भक्षयन्ति आस्यशब्दस्यतृतीयैकवचनेपद्दन्नोमासित्यादिनाआसन्नादेशः ऊडिदंपदादीतिविभक्तेरुदात्तत्वं तथा मर्तासोमनुष्याःअपित्वयासाधनभूतेनासुतिंरस-रूपमन्नादिकं स्वदन्ते आस्वादयन्ति त्वमेववीरुधांलतादीनांगर्भोगर्भस्थानीयः तेषांमध्येव-स्थानात् वसुः सर्वेषांनिवासभूतः शुचिः शुद्धःसन् जज्ञिषे उत्पादयसिसस्याद्यन्नम् ॥ १४ ॥

१४. अग्निदेव, सारे अमर और दोष-रहित देवगण तुम्हारे मुख में, आहुतिरूप में, प्रदत्त हवि का भक्षण करते हैं। मर्त्यगण भी तुम्हारे द्वारा अन्नादि का आस्वाद पाते हैं। तुम लता आदि के गर्भ (उत्ताप)-रूप हो। पवित्र होकर तुमने जन्म ग्रहण किया है।

त्वंतान्त्सञ्चप्रतिंचासिमज्मनाग्नेंसुजातप्रचंदेवरिच्यसे ।
पृक्षोयदत्रंमहिनावितेभुवदनुद्यावांपृथिवीरोदंसीउभे ॥ १५ ॥

त्वम् । तान् । सम् । च । प्रतिं । च । असि । मज्मनां । अग्नें । सुऽजात ।
प्र । च । देव । रिच्यसे । पृक्षः । यत् । अत्रं । महिना । वि । ते ।
भुवंत् । अनुं । द्यावांपृथिवी इतिं । रोदंसी इतिं । उभे इतिं ॥ १५॥

हेअग्ने त्वंमज्मनाबलेनतान् प्रसिद्धान्देवान् संचासि सङ्गच्छसि तैःसहितोपिभवसि तथा सामर्थ्येन प्रतिचासि प्रत्येकंतैर्विभिन्नःप्रतिनिधिर्वाभवसि प्रतिस्वीकारसमयेतैःसहितोभवसि वियुक्तश्चभवसीत्यर्थः हेसुजात शोभनजनन मन्त्रसहितमथनेनोत्पन्नत्वादग्नेःसुजन्मत्वं तादृशाग्ने हेदेव प्ररिच्यसेच तैर्बलेनचाधिकोभवसि आधिक्येकारणमाह यत्यस्मात्—अत्रास्मिन्यज्ञेपृक्षः सर्वमप्यन्नं व्यत्ययेनबहुवचनं तेतवैवविभुवत् समर्थंभवति महिनामाहात्म्येन यतोमहत्त्वमस्ति अतइत्यर्थः कुत्रेतितदुच्यते रोदसी सर्वनिरोदनस्वभावे उभेद्यावापृथिवीद्यावा-पृथिव्यावनुतेप्रततयोर्मध्येव्याप्तइत्यर्थः त्वयिहुतमन्नंत्वन्महत्त्वेनलोकत्रयेव्याप्तमित्यर्थः ॥१५॥

१५. अग्निदेव, बल-द्वारा तुम प्रसिद्ध देवों के साथ मिलो और उनसे पृथक् होओ। सुजात देव, तुम उनसे बलिष्ठ बनो; क्योंकि तुम्हारी ही महिमा से यह यज्ञ-स्थित अन्न शब्दायमान द्यावा-पृथिवी के बीच व्याप्त होता है।

अथषोडशी—

येस्तोतृभ्योगोअंग्रामश्वपेशसमग्नेरातिमुपसृजन्तिसूरयः।
अस्माञ्चतांश्चप्रहिनेषिवस्यआबृहद्वदेमविदथेसुवीराः ॥१६॥१९

ये । स्तोतृऽभ्यः । गोऽअंग्राम् । अश्वऽपेशसम् । अग्ने । रातिम् ।
उपऽसृजन्ति । सूरयः । अस्मान् । च । तान् । च । प्र । हि । नेषि ।
वस्यः । आ । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १६ ॥ १९ ॥

अनयाहोतास्तुतिनिगमव्याजेनाभिमतमाशास्ते हेअग्ने सूरयोमेधाविनः प्रेरयितारोवाये यजमानाः स्तोतृभ्यःस्तुतिकर्तृभ्योगोअग्रांगावोग्रगामिन्योयस्यास्तादृशींगोप्रमुखांअश्वपेशसं पेशइतिरूपनाम अश्वेननिरूपणीयांएतद्द्वयंप्राधान्याभिप्रायं गौश्चाश्वश्चाजाश्चेतिदक्षिणापरिगण- नेषुगवाश्वयोःप्राथम्यात् तादृशींरातिंउपसृजन्तिददते तान्यजमानानस्मांश्चर्त्विजोवस्वोवसी- यः श्रेष्ठंस्वर्गादिस्थानंआसर्वतः प्रहिणेषि प्रकर्षेणनयसिखलुनयेत्यर्थः हिप्रसिद्धौ वयंचसुवी- राशोभनपुत्रादिसहिताविदथेयज्ञेबृहत्प्रमहत्प्रमन्त्रजातंवदेम उच्चारयामः स्तुमइत्यर्थः ॥ १६ ॥

१६. अग्नि, जो मेधावी स्तोताओं को गौ और अश्व आदि दान करते हैं, उन्हें तथा हमें श्रेष्ठ स्थान में ले चलो। हम वीरों से युक्त होकर यज्ञ में विशाल मंत्र पढ़ेंगे।

॥ इतिद्वितीयस्यपञ्चमेएकोनविंशोवर्गः ॥ १९ ॥

यज्ञेनवर्धतेतित्रयोदशर्चंद्वितीयंसूक्तं मण्डलद्रष्टुर्गृत्समदस्यार्षं मण्डलादिष्वाग्नेयमितिप- रिभाषयाग्नेयं तुशब्दानुकर्षादिदमपिजागतम् यज्ञेनसप्तोनेत्यनुक्रान्तम् प्रातरनुवाकाश्विनशस्त्र- योर्जागतेछन्दस्यस्यविनियोगः सूत्रंतुपूर्वसूक्तएवोक्तम् तथाचतुर्विंशिकेतृतीयसवनेजातवेदस्य निविद्धानीयमिदं यज्ञेनवर्धतेत्याग्निमारुतमितिसूत्रितत्वात् पृष्ठ्याभिप्लवषडहयोर्द्वितीयेहन्यपि- जातवेदस्यनिविद्धानमिदम् चातुर्विंशिकंतृतीयसवनमिति चतुर्विंशादतिदिष्टत्वात्।

तत्रप्रथमा—

यज्ञेनवर्धतजातवेदसमग्निंयजध्वंहविषातनागिरा।
समिधानंसुप्रयसंस्वर्णरंद्युक्षंहोतारंवृजनेषुधूर्षदम् ॥ १ ॥

यज्ञेन । वर्धत । जातऽवेदसम् । अग्निम् । यजध्वम् । हविषा । तना ।
गिरा । सम्ऽइधानम् । सुऽप्रयसम् । स्वःऽनरम् । द्युक्षम् । होतारम् ।
वृजनेषु । धूःऽसदम् ॥ १ ॥

हेयजमानाऋत्विजोवा यूयं जातवेदसंजातानांवेदितारंजातधनंजातप्रज्ञंवाग्निं यज्ञेनयागेन वर्धतप्रवर्धयत सामान्येनोक्त्वाविशेषेणाह—हविषाचरुपुरोडाशादिनातनाविस्तृतयागिरास्तुत्या-चयजध्वं पूजयध्वं कीदृशंतं समिधानंसमिध्यमानं सुप्रयसंशोभनान्नं स्वर्नरंस्वर्गेनेतव्यायजमा-नायस्यतादृशं यद्वा स्वरितिसर्वपर्यायः स्तुतीनांनेतारः स्तोतारः बहुस्तोतारमित्यर्थः द्युक्षंदीप्तंद्यु-निवासिनंवाहोतारंहोमसंपादकं वृजनेषुबलेषुधूर्षदंबलस्यकर्तारमित्यर्थः अग्नेःपाटवेसतिशरीरं बलवद्भवतीतिप्रसिद्धम् ॥ १ ॥

१. अग्निदेव दीप्तिमान्, शोभन-अन्न-सम्पन्न, स्वर्गदाता उद्दीप्त, होम-निष्पादक और बलप्रदाता हैं। उन सर्वभूतज्ञ अग्नि को यज्ञ-द्वारा वर्द्धित करो और यज्ञ तथा विस्तृत स्तुति-द्वारा पूजा करो।

अभित्वानक्तीरुषसोववाशिरेग्नेवत्सनस्वसरेषुधेनवः ।
दिवइवेदरतिर्मानुषायुगाक्षपोभासिपुरुवारसंयतः ॥ २ ॥

अभि । त्वा । नक्तीः । उषसः । ववाशिरे । अग्ने । वत्सम् । न ।
स्वसरेषु । धेनवः । दिवःऽइव । इत् । अरतिः । मानुषा । युगा ।
आ । क्षपः । भासि । पुरुऽवार । सम्ऽयतः ॥ २ ॥

हेअग्ने त्वात्वांअभिप्रतिनक्तीः रात्रीः उषसः अहानिसर्वासुरात्रिषुसर्वेष्वप्यहस्सु यद्वा नक्तशब्दःसायंकालंलक्षयति सायंप्रातरग्निहोत्रस्यसद्भावाव सर्वेषुकालेषुसायंप्रातःकालेषु वा ववाशिरे आकांक्षन्तेयजमानायष्टुं यद्वा अहानिरात्रयश्चत्वामेवकामयन्ते होतुंकालेकर्मणश्चो-दनाव कालानांकामनमुपचर्यते तत्रदृष्टान्तः—स्वसरेषु स्वयंसरणशीलेष्वहस्सुसरणाधिकरणे-षुगोष्ठेषुवा धेनवोवत्संन वत्समिव किञ्च हेपुरुवार बहुभिर्वरणीयाग्ने संयतोनियतस्त्वं दिवइव द्युलोकस्येवअरतिः व्याप्तोविस्तृतः तत्रत्यानांदेवानांहविःप्रदानायैवसर्वत्रव्याप्तइत्यर्थः मानुषा मानुषाणांयजमानानांसंबन्धीनि युगायुगानि युगशब्दःकालोपलक्षकः प्रातरादिसवनानिसर्वे-षुसवनेषु अत्यन्तसंयोगेद्वितीया क्षपोइवरात्रीः सर्वासुरात्रिष्वपिआभासि समन्ताद्दीप्यसे ॥२॥

२. अग्निदेव, जैसे दिन में गायें बछड़े की इच्छा करती हैं, वैसे ही तुम्हें यजमान लोग दिन और रात्रि में चाहते हैं। अनेक के मान-नीय अग्निदेव, तुम संयत होकर द्युलोक में व्याप्त हो। मनुष्यों के यज्ञों में सदा रहते हो। रात में प्रदीप्त होते हो।

तंदेवाबुध्नेरजसःसुदंससंदिवस्पृथिव्योररतिंन्येरिरे ।
रथमिववेद्यंशुक्रशोचिषमग्निंमित्रंनक्षितिषुप्रशंस्यम् ॥ ३ ॥

तम् । देवाः । बुध्ने । रजसः । सुऽदंससम् । दिवःपृथिव्योः । अरतिम् ।
नि । एरिरे । रथम्ऽइव । वेद्यम् । शुक्रऽशोचिषम् । अग्निम् ।
मित्रम् । न । क्षितिषु । प्रऽशंस्यम् ॥ ३ ॥

तंप्रसिद्धमुक्तगुणविशिष्टमग्निं देवाःप्रसिद्धाव्यवहर्तारऋत्विजोवा रजसोरंजनात्मकस्यलोकस्यबुध्नेमूलेपृथिव्यांवेद्यामित्यर्थः तत्रन्येरिरेनितरामीरयन्ति व्यापारयन्तिस्वस्वहविर्लाभाय ऋत्विक्पक्षे स्तोत्रादिनानितरांगच्छन्तिभजन्ते कीदृशमित्याह सुदंससंशोभनदर्शनंदिवस्पृथिव्योः द्यावापृथिव्योः अरतिंईश्वरंगन्तारंव्याप्तंवा वेद्यंवेदोधनं तस्मैहितं रथमिवरथंयथास्वाभिमतलाभायाश्रयन्तेतद्वत् यद्वा रथमिवप्राप्तिसाधनत्वेनवर्तमानंवेद्यंवेदितव्यंशुक्रशोचिषंदीप्तवर्णअग्निंमित्रंन सखिवत् कार्यसाधकं यद्वा आदित्यमिव क्षितिषुयागभूमिषुमनुष्येषुवाप्रशंस्यंप्रकर्षेणस्तुत्यं एवंमहानुभावमग्निंन्येरिरइति ॥ ३ ॥

३. अग्नि सुदर्शन, द्यावा-पृथिवी के ईश्वर, धन-पूर्ण रथ के सदृश, दीप्तवर्ण, ज्वाला-स्वरूप, कार्यसाधक और यज्ञभूमि में प्रशंसित हैं। देवता लोग उन्हीं अग्नि को संसार के मूल देश में स्थापित करते हैं।

तमुक्षमाणंरजसिस्वआदमेचन्द्रमिवसुरुचंह्वारआदधुः ।
पृश्न्याःपतरंचितयन्तमक्षभिःपाथोनपायुंजनसीउभेअनु ॥ ४ ॥

तम् । उक्षमाणम् । रजसि । स्वे । आ । दमे । चन्द्रम्ऽइव ।
सुऽरुचम् । ह्वारे । आ । दधुः । पृश्न्याः । पतरम् । चितयन्तम् ।
अक्षऽभिः । पाथः । न । पायुम् । जनसी इति । उभे इति । अनु ॥ ४ ॥

तंस्तुत्यतरंरजस्यन्तरिक्षेआउक्षमाणंसर्वतःसिञ्चन्तंवृष्टिजलं रजसिपृथिव्यांवेद्यांघृतादिनाआसिच्यमानंवा स्वेस्वकीयेह्वारेविजनेदमेयागगृहेआदधुः आदधते कीदृशंतं चन्द्रमिवसुरुचं चन्द्रमितिहिरण्यनाम हिरण्यमिवशोभनदीप्तिं पश्चात्प्रवृद्धावस्थायांपृश्न्याःपतरंद्युलोकस्यान्तरिक्षस्यागन्तारं अक्षभिःस्वकीयैर्ज्वालारूपैःअवयवैःचितयंतं चेतयमानं पाथोनपायुं उदकमिवरक्षकं उभेजनसी सर्वस्यजनयित्र्यौद्यावापृथिव्यावनुव्याप्तंभूम्यांहोमाधारत्वेनस्थितत्वाद्धविःप्रापणायद्युलोकगामिनमितिभावः एवंरूपमग्निमादधते ॥ ४ ॥

४. अग्निदेव, अन्तरिक्ष वृष्टि-जल-दाता, चन्द्रमा की तरह दीप्ति-विशिष्ट, अन्तरिक्षगामी ज्वाला-द्वारा लोगों को चैतन्य देनेवाले, जल की तरह रक्षक और सबकी जनयित्री द्यावा-पृथिवी को व्याप्त करनेवाले हैं। उन्हीं अग्नि को उस विजन गृह में स्थापित किया गया है।

अथपञ्चमी—

सहोताविश्वंपरिभूत्वध्वरंतमुहव्यैर्मनुषऋञ्जतेगिरा।
हिरिशिप्रोवृधसानासुजर्भुरद्यौर्नस्तृभिश्चितयद्रोदसीअनु॥५॥२०॥

सः। होता। विश्वम्। परि। भूतु। अध्वरम्। तम्। ऊँ इति।
हव्यैः। मनुषः। ऋञ्जते। गिरा। हिरिऽशिप्रः। वृधसानासु।
जर्भुरत्। द्यौः। न। स्तृऽभिः। चितयत्। रोदसी इति। अनु॥५॥२०॥

सोग्निर्होताहोमनिष्पादकःसन्विश्वंसर्वंअध्वरंयागंपरिभूतु परितोभवतु तमुतमेवाग्निंहव्यैर्हविभिःगिरास्तुत्याच मनुषोमनुष्याऋञ्जते प्रसाधयन्ति ऋञ्जतिःप्रसाधनकर्मा हिरिशिप्रोहरणशीलहनुः दीप्तोष्णीषोवा शिप्राःशीर्षसुविततांहिण्ययीरित्यादिमन्त्रान्तरात्। वृधसानासुप्रवर्धमानास्वोषधीषुज्वालासुवाजर्भुरत् पूर्यमाणोयज्ञगन्ता शत्रंतंपदं यद्वा द्वितीयार्थेसप्तमी वर्धमानाओषधीर्जर्भुरत् पुनःपुनर्दहन्नित्यर्थः द्यौर्द्युलोकोन्तरिक्षंस्तृभिर्न नक्षत्रैरिवरोदसीअनुद्यावापृथिव्यावनुचितयत् चेतयति ज्वालाभिर्विस्फुलिङ्गैश्चभुवमन्तरिक्षंचव्याप्नोतीत्यर्थः॥५॥

५. होम-निष्पादक होकर अग्निदेव सारे यज्ञों को व्याप्त करें। मानवों ने हव्य और स्तुति-द्वारा उन्हें अलंकृत किया है। दाहक-शिखा-युक्त अग्नि वर्द्धमान ओषधियों के बीच जलकर, जैसे नक्षत्र आकाश में चमकते हैं, वैसे ही, द्यावा-पृथिवी को प्रकाशित करते हैं।

॥ इतिद्वितीयस्यपञ्चमेविंशोवर्गः॥ २०॥

अथषष्ठी—

सनोरेवत्समिधानःस्वस्तयेसंददस्वान्रयिमस्मासुदीदिहि।
आनःकृणुष्वसुवितायरोदसीअग्नेहव्यामनुषोदेववीतये॥६॥

सः। नः। रेवत्। सम्ऽइधानः। स्वस्तये। सम्ऽददस्वान्। रयिम्।
अस्मासु। दीदिहि। आ। नः। कृणुष्व। सुवितायं। रोदसी इति।
अग्ने। हव्या। मनुषः। देव। वीतये॥६॥

हेअग्ने सतादृशस्त्वंनोस्माकं स्वस्तये स्वस्तीत्यविनाशिनाम क्षेमायरेवत्रयिमत् रयिंधनं उपर्युपरिवृद्धिमत् दानयोग्यंवाधनंअस्मासुसंददस्वान् सम्यक्प्रयच्छन् समिधानोस्माभिःसम्यगिध्यमानःसन्दीदिहि दीप्यस्व यद्वा रेवदितिक्रियाविशेषणं राःधनंसमृद्धिमत्यथातथादीप्य-

१ ऋ० सं० ४. ३. १६.।

स्वेति तथाभूतःसन्नोस्मभ्यंसुविताय सुहिताय शोभनफलाय रोदसीद्यावापृथिव्यावाकृणुष्व सर्वतःकुरुष्व उभौलोकौभोगप्रदौकुर्वित्यर्थः किमर्थमितितदुच्यते हेदेवाग्ने मनुषोमनुष्यस्ययजमानस्य ममसंबन्धीनि हव्याहवींषिवीतयेदेवेभ्योभक्षणायपुनःपुनर्यागाद्यनुष्ठानायेत्यर्थः ॥ ६॥

६. अग्निदेव, हमारे मंगल के लिए क्रमागत और वर्द्धित धन देते हुए तुम प्रज्वलित होकर प्रकाशित होओ। अग्नि, द्यावा-पृथिवी में हमें फल दो। मनुष्यों-द्वारा प्रदत्त हव्य देवों के भक्षण के लिए लाया जाय।

दानोंअग्नेबृहतोदाःसंहस्रिणोंदुरोनवाजंश्रुत्याअपांवृधि ॥
प्राचीद्यावापृथिवीब्रह्मणाकृधिस्व१र्णशुक्रमुषसोविदिद्युतुः ॥७॥

दाः। नः। अग्ने। बृहतः। दाः। सहस्रिणः। दुरः। न। वाजम्। श्रुत्यै। अप। वृधि। प्राची इति। द्यावापृथिवी इति। ब्रह्मणा। कृधि। स्वः। न। शुक्रम्। उषसः। वि। दिद्युतुः ॥ ७ ॥

हेअग्ने नोस्मभ्यं बृहतोमहतः प्रभूतान्गवाश्वादिधनविशेषान् दाःदेहि तथासहस्रिणः सहस्रसंख्योपेतान् पुत्रभृत्यादीन्दाः देहि ददातेश्छान्दसेलुङिरूपम् वाक्यभेदादनिघातः श्रुत्यैकीर्त्यै वाजमन्नं दुरोनतस्य द्वाराण्यपि नशब्दश्चार्थे अपावृधि अपवृणु प्रेरयेत्यर्थः यद्वा द्वाराणीव तत्राप्त्युपायान्विशदयति तदर्थंद्यावापृथिवीब्रह्मणापरिवृढेनकर्मणाप्राचीप्रकृष्टाञ्चने अस्मदनुकूले कृधिकुरु स्वर्ण आदित्यइवयथाजगत्प्रकाशयति तद्वत् शुक्रंदीप्तंत्वामुषसः उषःकालाविदिद्युतुः विद्योतयन्ति उषःकालेह्यग्नयःप्रज्वाल्यन्ते ॥ ७ ॥

७. अग्नि, हमें यथेष्ट गौ, अश्व आदि तथा सहस्र-संख्यक पुत्र, पौत्र आदि दो। कीर्त्ति के लिए अन्न दो और अन्न का द्वार खोलो। उत्कृष्ट यज्ञ-द्वारा द्यावा-पृथिवी को हमारे अनुकूल करो। आदित्य की तरह उषायें तुम्हें प्रकाशित करती हैं।

सइंधानउषसोराम्याअनुस्व१र्णदीदेदरुषेणभानुना।
होत्राभिरग्निर्मनुषःस्वध्वरोराजाविशामतिथिश्चारुरायवे ॥ ८ ॥

सः। इधानः। उषसः। राम्याः। अनु। स्वः। न। दीदेत्। अरुषेण। भानुना। होत्राभिः। अग्निः। मनुषः। सुऽअध्वरः। राजा। विशाम्। अतिथिः। चारुः। आयवे ॥ ८ ॥

सोग्निःराम्यारमणहेतुभूताः उषसःअनुअनुलक्ष्यइधानः इध्यमानः दीपितःसन् अरुपेणरोचमानेनभानुनातेजसास्वर्णआदित्यइवदीदेव् दीप्यते सोग्निर्मनुषोमनुष्यस्यहोतुः होत्राभिःहोत्रेतिवाङ्नाम होमसाधनभूताभिःस्तुतिभिःस्तूयमानः स्वध्वरः शोभनयागोविशांप्रजानांराजाराजमानः स्वामीआयवे मनुष्याय यजमानायतदर्थं चारुः चरणशीलः अतिथिः अतिथिवत्पूज्योभवति ॥ ८ ॥

८. रमणीय उषा में अग्नि प्रज्वलित होकर, सूर्य की तरह, उज्ज्वल किरणों में देदीप्यमान होते हैं । मनुष्यों के होमसाधक, स्तुति-द्वारा स्तूयमान, उत्तम यज्ञवाले और प्रजाओं के स्वामी अग्नि यजमान के पास, प्रिय अतिथि की तरह, आते हैं ।

एवानोअग्नेअमृतेषुपूर्व्यधीष्पीपायबृहद्दिवेषुमानुषा ।
दुहानाधेनुर्वृजनेषुकारवेत्मनाशतिनंपुरुरूपमिषणि ॥ ९ ॥

एव । नः । अग्ने । अमृतेषु । पूर्व्य । धीः । पीपाय । बृहत्ऽदिवेषु । मानुषा । दुहाना । धेनुः । वृजनेषु । कारवे । त्मना । शतिनम् । पुरुऽरूपम् । इषणि ॥ ९ ॥

बृहद्दिवेषुमभूतद्युतिषुअमृतेषुदेवेषुमध्ये हेपूर्व्य पूर्वभाविन्नग्ने त्वांमानुषामनुष्याणांमध्ये नोस्मदीयाधीर्बुद्धिःस्तुतिकर्मवा एवएवंपीपायप्याययति यद्वा मानुषामनुष्यान् धीस्त्वदीया बुद्धिः कर्मवाप्याययतु तथात्वदीयाधीः वृजनेषुयज्ञेषुकारवेस्तोत्रेदुहाना धेनुः दोग्ध्रीधेनुरिव लुप्तोपममेतत् त्मनाआत्मनैव इषणिएषणायां सत्यां शतिनं अपरिमितसंख्याकं पुरुरूपंगवाश्वादिरूपेणनानारूपं धनसमूहं दुहानाभवति ॥ ९ ॥

९. अग्नि, तुम यथेष्ट द्युतिवाले हो। देवों के पूर्ववर्ती मनुष्यों की स्तुति तुम्हें आप्यायित करती है। दूधवाली गाय की तरह यह स्तुति यज्ञस्थित स्तोता की तरह स्वयं अपरिमित और विविध प्रकार धन प्रदान करती है।

वयमग्नेअर्वतावासुवीर्यंब्रह्मणावाचितयेमाजनाँअति ।
अस्माकंद्युम्नमधिपञ्चकृष्टिषूच्चास्व१र्णशुशुचीतदुष्टरम् ॥१०॥

वयम् । अग्ने । अर्वता । वा । सुऽवीर्यम् । ब्रह्मणा । वा । चितयेम । जनान् । अति । अस्माकम् । द्युम्नम् । अधि । पञ्च । कृष्टिषु । उच्चा । स्वः । न । शुशुचीत । दुस्तरम् ॥ १० ॥

हेअग्ने वयंयजमानाः सुवीर्यंशोभनसामर्थ्योपेतंयथातथा अर्वतावा अरणकुशलेनाश्वेन वाशब्दश्चार्थे ब्रह्मणावाअन्नेनचत्वद्दत्तेनजनानस्मत्समानानतिचितयेम अतिक्रम्यज्ञायेम-हि कर्मणिकर्तृप्रत्ययः यद्वा त्वद्दत्तेनान्नेनचसुवीर्यंचितयेम प्रकाशायतदर्थमस्माकंपञ्च पञ्चसुकृ-ष्टिषुजनेषुनिषादपञ्चमेषुचतुर्षुवर्णेषुउच्चाउच्चैःअतिप्रभूतं दुस्तरं अन्येनाप्राप्तंद्युम्नंधनं स्वर्ण सू-र्यइव अधि अधिकं शुशुचीतदीप्यतां अधीत्ययमनर्थकोवा ॥ १० ॥

१०. अग्नि, हम तुम्हारे लिए अन्न और अश्व से यथेष्ट सामर्थ्य प्राप्त करके सबको लांघ जायँगे और इससे, हमारी अनन्त और दूसरों के लिए अप्राप्य धनराशि सूर्य की तरह, पाँच वर्णों (चार वर्ण और पंचम निषाद) के ऊपर दीप्तिमान् होगी।

सनोबोधिसहस्यप्रशंस्योयस्मिन्त्सुजाताइषयन्तसूरयः।
यमग्नेयज्ञमुपयन्तिवाजिनोनित्येतोकेदीदिवांसंस्वेदमे ॥ ११ ॥

सः। नः। बोधि। सहस्य। प्रऽशंस्यः। यस्मिन्। सुऽजाताः। इषयन्त। सूरयः। यम्। अग्ने। यज्ञम्। उपऽयन्ति। वाजिनः। नित्ये। तोके। दीदिऽवांसम्। स्वे। दमे ॥ ११ ॥

हेअग्ने सहस्यशत्रूणामभिभवितः बलप्रभववा प्रशंस्यः स्तुत्यः सत्वंनोस्मदीयंस्तोत्रादिकं बोधिबुध्यस्व सइत्युक्तंकइत्याह—यस्मिन्नग्नौसुजाताः शोभनजननाः सूरयः स्तोतारऋत्विजः इषयन्त गमयन्तिस्तोत्राणि किञ्च हेअग्नेयज्ञंयजनीयंयंवाजिनोहविर्लक्षणान्नवन्तोयजमानानि-त्येतोकेऔरसेपुत्रेनिमित्तभूतेसति यद्वा तस्मिन्यथादीप्यतेपुत्रगृहेयथापितादीप्यतेतद्वत् स्वेदमे स्वकीयेयागगृहेसवनीयादिस्थानेदीदिवांसंदीप्यमानमुपयन्ति हविःस्तोत्रादिनासबोधीत्यन्व-यः ॥ ११ ॥

११. शत्रु-पराजेता अग्नि, तुम हमारी स्तुति के योग्य हो। हमारा स्तोत्र श्रवण करो। सुजन्मा स्तोता लोग तुम्हारे ही उद्देश्य से स्तुति करते हैं। अग्नि, रस और पुत्र की प्राप्ति के लिए हव्य-विशिष्ट यजमान के यागगृह में दीप्यमान और यजनीय अग्नि की पूजा की जाती है।

उभयासोजातवेदःस्यामतेस्तोतारोअग्नेसूरयश्चशर्मणि ॥
वस्वोरायःपुरुश्चन्द्रस्यभूयसःप्रजावतःस्वपत्यस्यशग्धिनः ॥ १२ ॥

उभयासः। जातऽवेदः। स्याम। ते। स्तोतारः। अग्ने। सूरयः। च। शर्मणि। वस्वः। रायः। पुरुऽचन्द्रस्य। भूयसः। प्रजाऽवतः। सुऽअपत्यस्य। शग्धि। नः ॥ १२ ॥

हेजातवेदः जातानांवेदितरग्ने स्तोतारः त्वांस्तुवन्तऋत्विजः सूरयोमेधाविनोयजमानाश्चेत्यु-भयासः उभयेवयंशर्मणिसुखेनिमित्तभूतेसति तेत्वत्संबन्धिनःस्याम भवेम यद्वा तेशर्मणिस्याम त्वंचनोस्माकंवस्वोनिवासहेतोर्वसिष्ठस्यरायोगवादिधनस्यपुरुश्चन्द्रस्य अतिशयेनाह्लादकस्यबहु-हिरण्योपेतस्यवाभूयसः प्रभूतस्यप्रजावतोभृत्याद्युपेतस्यपुत्रादिभोगपर्याप्तस्यवा स्वपत्यस्य शोनपुत्रस्य ईदृग्रूपंधनंनोस्मभ्यंशग्धि देहि दातुंशक्तोभवसि ॥ १२ ॥

१२. सर्वभूतज्ञ अग्नि, स्तोता और मेधावी यजमान---हम दोनों सुख-प्राप्ति के लिए तुम्हारे ही होंगे। हमारे निवास-हेतु, अतिशय आह्लादप्रद, प्रभूत और पुत्र-प्रपौत्र आदि से युक्त धन दो।

येस्तोतृभ्योगोअंग्रामश्वपेशसमग्नेरातिमुंपसृजन्तिसूरयः।
अस्माञ्चताँश्चप्रहिनेषिवस्यआबृहद्वदेमविदथेसुवीराः॥१३॥२१॥

ये। स्तोतृऽभ्यः। गोऽअंग्राम्। अश्वऽपेशसम्। अग्ने। रातिम्। उपऽसृजन्ति। सूरयः। अस्मान्। च। तान्। च। प्र। हि। नेषि। वस्यः। आ। बृहत्। वदेम। विदथे। सुऽवीराः॥ १३॥२१॥

येस्तोतृभ्यइतित्रयोदशीव्याख्याता ॥ १३ ॥

१३. अग्नि, जो मेधावी लोग स्तोताओं को गौ और अश्व आदि धन प्रदान करते हैं, उन्हें तथा हमें श्रेष्ठ स्थान में ले चलो। वीर-युक्त होकर हम यज्ञ में बृहत् मंत्र का उच्चारण करेंगे।

समिद्धोअग्निरित्येकादशर्चंतृतीयंसूक्तंगार्त्समदंत्रैष्टुभं सप्तमीजगती समिद्धोग्निर्नराशंसः तनूनपादादयएकादशप्रयाजदेवताः समिद्धएकादशाप्रंसप्तमीजगतीत्यनुक्रमणिका पशौशुन-कानामिदमाप्रीसूक्तं गृत्समदस्यापिशुनकत्वात् समिद्धोअग्निरितिशुनकानामितिहिसूत्रितम्।

तत्रप्रथमा—

समिद्धोअग्निर्निहितःपृथिव्यांप्रत्यङ्विश्वानिभुवनान्यस्थात्।
होतापावकःप्रदिवःसुमेधादेवोदेवान्यजत्वग्निरर्हन्॥ १ ॥

सम्ऽइद्धः। अग्निः। निऽहितः। पृथिव्याम्। प्रत्यङ्। विश्वानि। भुवनानि। अस्थात्। होता। पावकः। प्रऽदिवः। सुऽमेधाः। देवः। देवान्। यजतु। अग्निः। अर्हन्॥ १ ॥

पृथिव्यांवेदिलक्षणायांसमिद्धः सम्यक्दीप्तः एतन्नामकोग्निः निहितः स्थापितःसन् वि-श्वानिसर्वाणि भुवनानिभूतजातानिप्रत्यङ् अभिमुखःसन् अस्थात् तिष्ठति यथासर्वेजनाः प-

श्यन्ति तथा प्रवृद्धोभवदित्यर्थः किञ्च सोग्निर्होताहोमनिष्पादकोदेवानामाह्वातावापावकः शोधकः प्रदिवः पुराणः सुमेधाः शोभनप्रज्ञोदेवोद्योतमानः एवंमहानुभावोग्निः अर्हन् यागयोग्यः सन् देवान्यजतु अत्रयष्टव्यानिन्द्रादीन्पूजयतु ॥ १ ॥

१. वेदी पर निहित समिद्ध नामक अग्नि सारे गृह के सामने अवस्थित हैं। होम-निष्पादक, विशुद्धताकारी, प्राचीन, प्रजा-संयुक्त, द्योतमान और पूजा-योग्य अग्नि देवों की पूजा करें।

नराशंसःप्रतिधामान्यञ्जन्तिस्रोदिवःप्रतिमह्नास्वर्चिः ।
घृतप्रुषामनसाहव्यमुन्दन्मूर्धन्यज्ञस्यसमनक्तुदेवान् ॥ २ ॥

नराशंसः । प्रति । धामानि । अञ्जन् । तिस्रः । दिवः । प्रति । मह्ना । सुऽअर्चिः । घृतऽप्रुषा । मनसा । हव्यम् । उन्दन् । मूर्धन् । यज्ञस्य । सम् । अनक्तु । देवान् ॥ २ ॥

नराशंसः नरैर्नेतृभिर्ऋत्विग्भिः शंसनीयएतन्नामकोग्निः स्वर्चिः शोभनज्वालःसन् धामानिस्थानानिआहुत्यधिकरणानितेजांसिप्रतिप्रत्येकंमह्नास्वमहिम्ना अञ्जन्व्यक्तीकुर्वन् तिस्रोदिवः द्योतमानांस्त्रीन्भूम्यादिलोकांश्चप्रतिप्रत्येकमञ्जन् स्थित्याभूमिंप्रकाशेनान्तरिक्षंहविःप्रापणेनदिवमित्यभिप्रायः यद्वा लोकानांप्रत्येकंत्रित्वोपेतत्वात् तिस्रोदिवइत्यविरुद्धं तिस्रोदिवः पृथिवीस्तिस्रइत्यादिमन्त्रवर्णात् । त्रयोवाइमेत्रिवृतोलोकाइतिब्राह्मणाच्च[1] । तथाघृतप्रुषाघृतंसिञ्चता मनसाहव्यंउन्दन् क्लेदयन् स्निग्धीकुर्वन् यज्ञस्यमूर्धन् मूर्धनिमुखेहोमसमयेदेवान्यष्टव्यान् समनक्तु सम्यक्व्यक्तीकरोतु तर्पयत्वित्यर्थः ॥ २ ॥

२. नराशंस नामक अग्नि, सुन्दर ज्वाला से युक्त होकर, अपनी महिमा से, प्रत्येक आहुति-स्थल और प्रकाशमान तीनों लोकों को व्यक्त करते हुए, घी बरसाने की इच्छा से, हव्य स्निग्ध करके, यज्ञ के सामने देवों को प्रकाशित करें।

अथतृतीया–

ईळितोअग्नेमनसानोअर्हन्देवान्यक्षिमानुषात्पूर्वोअद्य ।
सआवहमरुतांशर्धोअच्युतमिन्द्रंनरोबर्हिषदंयजध्वम् ॥ ३ ॥

ईळितः । अग्ने । मनसा । नः । अर्हन् । देवान् । यक्षि । मानुषात् । पूर्वः । अद्य । सः । आ । वह । मरुताम् । शर्धः । अच्युतम् । इन्द्रम् । नरः । बर्हिऽसदम् । यजध्वम् ॥ ३ ॥

---

१ ऐ० ब्रा० २. १७.

हेअग्ने ईळितोस्माभिःस्तुतःसन् मनसास्मदनुरक्तेनदेवानांयागबुध्यावाअर्हन् यागयोग्यःसन् मानुषाद्धोतुःपूर्वः पूर्वभावी नोस्मदर्थमद्यास्मिन्दिनेदेवान्यष्टव्यान् यक्षि त्वमेवयजसि सताद्दशोयष्टात्वमावहआकारय कान् मरुतांशर्धोगणंअच्युतमक्षीणमिन्द्रंतदविनाभूतमिन्द्रमपि यद्वा मरुद्बलोपेतमिन्द्रंअनन्तरं हेनरोनेतारऋत्विजःबर्हिषदंबर्हिषिसीदन्तंतमिन्द्रंयजध्वम् पूजयध्वम् ॥ ३ ॥

३. इलित या इला नामक अग्निदेव, हम पर प्रसन्न चित्त से, यागकर्म के योग्य होकर, आज, हमारे लिए, मनुष्यों के पूर्ववर्त्ती होकर देवों का यज्ञ करो। मरुतों और अच्युत इन्द्र का सम्बोधन करो। ऋत्विक्को, कुश पर बैठे हुए इन्द्र का यज्ञ करो।

देवंबर्हिर्वर्धमानंसुवीरंस्तीर्णंरायेसुभरंवेद्यस्याम् ।
घृतेनाक्तंवसवःसीदतेदंविश्वेदेवाआदित्यायज्ञियासः ॥ ४ ॥

देवं । बर्हिः । वर्धमानम् । सुऽवीरम् । स्तीर्णम् । राये । सुऽभरम् । वेदी इति । अस्याम् । घृतेन । अक्तम् । वसवः । सीदत । इदम् । विश्वे । देवाः । आदित्याः । यज्ञियासः ॥ ४ ॥

हेबर्हिःदेव एतदभिमानिन्नग्ने वर्धमानं सुवीरं शोभन वीरसंपादकं सुभरंसुपूर्णंस्तीर्णं अस्मदीयैर्ऋत्विग्भिरास्तृतं भव किमर्थं रायेधनाय अस्यांवेदीवेद्यां सप्तम्यर्थेप्रगृह्यसंज्ञा संहितायां यणादेशश्छान्दसः घृतेनाज्येनाक्तमिदंस्निग्धंबर्हिःसीदत के हेवसवः एतन्नामकाः हेविश्वेसर्वे देवाः हेआदित्याः यज्ञियासोयज्ञार्हास्तेयूयमिदंबर्हिः सीदत अस्मिन्बर्हिषिनिषीदतेत्यर्थः ॥४॥

४. द्योतमान कुश-स्वरूप अग्नि, हमारे धन-लाभ के लिए, इस वेदी पर अच्छी तरह विस्तृत हो जाओ। तुम सदा बढ़नेवाले और वीर-प्रदाता हो। वसुओ, विश्वदेवो, यज्ञ-योग्य आदित्यो, तुम घी-लगाये कुश पर बैठो।

विश्रयन्तामुर्वियाहूयमानाद्वारोदेवीःसुप्रायणानमोभिः ।
व्यचस्वतीर्विप्रथन्तामजुर्यावर्णंपुनानायशसंसुवीरम् ॥ ५ ॥२२॥

वि । श्रयन्ताम् । उर्विया । हूयमानाः । द्वारः । देवीः । सुप्रऽअयनाः । नमःऽभिः । व्यचस्वतीः । वि । प्रथन्ताम् । अजुर्याः । वर्णम् । पुनानाः । यशसम् । सुऽवीरम् ॥ ५ ॥ २२ ॥

द्वारोदेवीः अग्नेर्द्वाराभिमानिन्योदेव्योविश्रयन्तां विविच्यश्रयन्तां विवृतापिधानाभवन्तु कीदृशस्ताः उर्विया उर्व्यःमहत्यः नमोभिर्नमस्कारोपेतैःस्तोत्रैर्हूयमानाः सुप्रायणाः

सुष्ठुप्रकर्षेणगन्तव्याः ईदृश्योदेव्योविश्रयन्तां किञ्च व्यचस्वतीः व्याप्तिमत्यः अजुर्याः अहिंस्याः अजननावा सुवीरंशोभनपुत्राद्युपेतं यशसंयशोयुक्तं वर्णं वर्णनीयंरूपविशेषं पुनानाः यजमानायशोधयित्र्यः संपादयित्र्योदेव्योविप्रथन्तां विशेषेणप्रख्याताभवन्तु ॥ ५ ॥

५. हे द्योतमान, द्वार-रूप अग्नि, तुम खुल जाओ। तुम महान् हो। लोग नमस्कार करते हुए तुम्हारे लिए हवन करते और सरलता से तुम्हारे पास जाते हैं। तुम व्यापक, अहिंसनीय, वीर-विशिष्ट, यशोयुक्त और वर्णनीय रूप के सम्पादक हो। तुम भली भाँति प्रसिद्ध होओ।

साध्वपांसिसनतानउक्षितेउषासानक्तावय्येवरण्विते ।
तन्तुंततंसंवयन्तीसमीचीयज्ञस्यपेशःसुदुघेपयस्वती ॥ ६ ॥

साधु । अपांसि । सनता । नः । उक्षिते इति । उषसानक्ता । वय्याःइव । रण्विते इति । तन्तुम् । ततम् । संवयन्ती इति समऽवयन्ती । समीची इति समऽईची । यज्ञस्य । पेशः । सुदुघे इति सुऽदुघे । पयस्वती इति ॥ ६ ॥

साधुसाधूनि नोस्मदीयानि अपांसि कर्माणि उद्दिश्य सनता सनातनेन अविच्छिन्न प्रवृत्तिकेनस्तोत्रादिना उक्षिते पूजिते यद्वा पुराणवाचीविभक्त्यन्तःसनच्छब्दोस्ति तस्यप्रथमाद्विवचनस्याकारः सनातने नित्येइत्यर्थः अस्मिन्पक्षे उक्षिते फलस्यसेचयित्र्यौ कर्तरिनिष्ठा उषासानक्ता अहोरात्रदेवते वय्याइव कुशलेइव रण्विते शब्दितेस्तुते परस्परंगच्छन्त्यौवा ततं विस्तृतं तन्तुं तन्तुस्थानीयं यज्ञावयवं संवयन्ती सम्यक् चित्रं सहवा वयन्त्यौ उत्पादयित्र्यौ समीची सम्यक्प्रवृत्तिके परस्परानुकूले किमर्थंसंवयन्ती यज्ञस्यानुष्ठीयमानस्यपेशोरूपंनिर्मातुमितिशेषः यज्ञंनिवर्तयितुं तदवयवानुक्रमेणानुष्ठापयित्र्यावित्यर्थः अहोरात्राभ्यांहियज्ञास्तन्यन्ते सुदुघे सुष्ठु फलस्यदोग्ध्र्यौ पयस्वती उदकवत्यौ अहोरात्राभ्यांखलुवृष्टिर्जायते एवंमहानुभावे अहोरात्रदेवते अस्मद्यज्ञं निर्वहतामित्यर्थः ॥ ६ ॥

६. हमें अच्छे कर्म-फल देनेवाली अग्नि-रूप उषायें रात्रि को वयन-चतुरा दो रमणियों की तरह, सहायता के लिए, परस्पर जाते-आते, यज्ञ का रूप बनाने के लिए, परस्पर अनुकूल होकर बड़े तन्तु का वयन करती हैं। वे अतीव फलदाता और जल-युक्त हैं।

दैव्याहोताराप्रथमाविदुष्टरऋजुयक्षतःसमृचावपुष्टरा ।
देवान्यजन्तावृतुथासमञ्जतोनाभापृथिव्याअधिसानुषुत्रिषु ॥७॥

दैव्या । होतारा । प्रथमा । विदुःऽतरा । ऋजु । यक्षतः । सम् ।
ऋचा । वपुःऽतरा । देवान् । यजन्तौ । ऋतुऽथा । सम् ।
अञ्जतः । नाभा । पृथिव्याः । अधि । सानुषु । त्रिषु ॥ ७ ॥

दैव्या दिविभवोदिव्योग्निः तस्माद्दिव्यादग्नेर्जातौ होताराआह्वातारौ देवानांहोमनिष्पादकौवाग्नी पार्थिवान्तरिक्ष्यौ प्रथमाप्रथमंयष्टव्यौ विदुष्टराविद्वत्तमौ वपुष्टराप्रकृष्टवपुषौदेवावृचा मन्त्रेण ऋजुअविकलं यथातथासम्यक्यक्षतः पूजयतः ऋतुथातत्तद्दतौ तत्रतत्रकाले देवान् यष्टव्यान् यजन्तौ देवौ पृथिव्याः नाभानाभौ उत्तरवेद्यां अधिउपरि त्रिषुसानुषुसमुच्छ्रितेषु प्रदेशेषुगार्हपत्यादिषु समञ्जतः समांक्तां अञ्जतेर्लेटयडागमः ॥ ७ ॥

७. अग्निरूप दिव्य दो होता पहले ही यज्ञ के योग्य हैं। वे सर्वापेक्षा विद्वान् और विशाल शरीर से संयुक्त हैं। वे मंत्र-द्वारा अच्छी तरह पूजा करते और यथासमय देवों के लिए यज्ञ करते हैं। वे पृथिवी की नाभिरूपिणी उत्तर-वेदी के गार्हपत्य आदि तीन अग्नियों के प्रति गमन करते हैं।

सरस्वतीसाधयन्तीधियंनइळादेवीभारतीविश्वतूर्तिः ।
तिस्रोदेवीःस्वधयाबर्हिरेदमच्छिद्रंपान्तुशरणंनिषद्य ॥ ८॥

सरस्वती । साधयन्ती । धियम् । नः । इळा । देवी । भारती ।
विश्वऽतूर्तिः । तिस्रः । देवीः । स्वधया । बर्हिः । आ । इदम् ।
अच्छिद्रम् । पान्तु । शरणम् । निऽसद्य ॥ ८ ॥

नोस्मदीयां धियंबुद्धिंयागंवासाधयन्ती निवर्तयन्ती सरस्वती इळाएतन्नामिकादेवीभारतीचविश्वतूर्तिर्विश्वानितूर्णानियस्याः सातादृशीसर्वविषयगतावाक् एतदुभयविशेषणं तिस्रोदेवीः एतास्तिस्रोदेव्यः स्वधयाअस्मद्दत्तहविषा निमित्तेनेदंबर्हिर्यज्ञं अच्छिद्रंयथातथापान्तु किंकृत्वा शरणंयागगृहं आनिषद्यआश्रित्य यद्वा स्वधयेदं बर्हिरिमंयज्ञमागत्यास्मदीयंशरणं गृहं निषद्याच्छिद्रंयथातथापान्तु ॥ ८ ॥

८. हमारे यज्ञ की निष्पादिका अग्निरूप सरस्वती, इळा और सर्वव्यापिका भारती, ये तीनों देवियां यागगृह का आश्रय करके, हव्य-लाभ के लिए, निर्दोषरूप से, हमारे यज्ञ का पालन करें।

अथपिशङ्गरूपइतिनवमीलाष्ट्रेपशौपुरोडाशस्ययाज्या पिशङ्गरूपःसुभरोवयोधाः प्रथमश्रावणंयशसंवयोधामितिसूत्रितत्वात् ।

सैषानवमी—

पिशङ्गरूपःसुभरोवयोधाःश्रुष्टीवीरोजायतेदेवकामः ।
प्रजांत्वष्टाविष्यंतुनाभिमस्मेअथादेवानामप्येतुपाथः ॥ ९ ॥

पिशङ्गऽरूपः । सुऽभरः । वयःऽधाः । श्रुष्टी । वीरः । जायते ।
देवऽकामः । प्रऽजाम् । त्वष्टा । वि । स्यतु । नाभिम् । अस्मे इति ।
अथ । देवानाम् । अपि । एतु । पाथः ॥ ९ ॥

पिशङ्गरूपःसुवर्णवर्णःनानारूपोवासुभरःशोभनयज्ञःशोभनभरणोवा वयोधावयसोन्नस्य धारयितादातावा श्रुष्टीक्षिप्रगुणः वीरोविविधमीरयिता देवकामः देवाःकाम्यन्तेयेनतादृशः पुत्रो-जायते जायतामुत्पाद्यतांत्वष्टुरनुग्रहाव सचत्वष्टाएतन्नामकोदेवोस्मेस्मभ्यंनाभिंकुलस्यबन्धिकांप्रजां पुत्रादिरूपांविष्यतु विमुञ्चतु वितरत्वित्यर्थः अथअपिचदेवानांसंबन्धिपाथोन्नमप्यस्मानेतु ग-च्छतु अपिःक्रिययावासंबध्यते गच्छत्वित्यर्थः ॥ ९ ॥

९. अग्नि-स्वरूप त्वष्टा की दया से हमारे पिशंग वर्ण, यज्ञकर्त्ता, अन्नदाता, क्षिप्रकर्त्ता, देवाभिलाषी और वीर पुत्र उत्पन्न हो। त्वष्टा हमें कुल-रक्षक संतान दें। देवों का अन्न हमारे पास आवे।

अथदशमी—

वनस्पतिरवसृजन्नुपस्थादग्निर्हविःसूदयातिप्रधीभिः ।
त्रिधासमक्तंनयतुप्रजानन्देवेभ्योदैव्यःशमितोपहव्यम् ॥ १० ॥

वनस्पतिः । अवऽसृजन् । उप । स्थात् । अग्निः । हविः । सूदयाति ।
प्र । धीभिः । त्रिधा । सम्ऽअक्तम् । नयतु । प्रऽजानन् । देवेभ्यः ।
दैव्यः । शमिता । उप । हव्यम् ॥ १० ॥

वनस्पतिःयूपाभिमानीएतन्नामकोग्निः अवसृजन्अस्मदीयंकर्मानुजानन्उपास्मत्समीपे स्थात्तिष्ठतु अग्निःपाकाधारोग्निश्चहविःपशुरूपंधीभिःकर्मविशेषैःपाकसाधनैः प्रप्रकर्षेणसू-दयातिक्षारयति अपाकाधिकपाकादिराहित्येनहविःपचतीत्यर्थः किञ्च दैव्योदेवसंबन्धीआहु-त्यधिकरणभूतोग्निःशमिताहविषःसंस्कर्ता यद्वा दैव्यः शमिताएतन्नामकोग्निः अग्निर्वैदेवानांश-

मितेतिश्रूयते । त्रिधा त्रिप्रकारंउपस्तरणावदानाभिघारणैःसमक्तंसम्यक्सिक्तंहव्यंहविःप्रजानन् विद्वान्नयनप्रकाराभिज्ञःसन् देवेभ्यउपनयतु समीपंप्रापयतु ॥ १० ॥

१०. वनस्पति-रूप अग्नि हमारे कर्म जानकर हमारे पास हैं। विशेष कर्म-द्वारा अग्नि भली भाँति हव्य पकाते हैं। दिव्य शमिता नाम के अग्नि तीन प्रकार से अच्छी तरह सिक्त हव्य को जानकर उसे देवों के निकट ले जायें।

घृतंमिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वंस्यधाम ।
अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥११॥२३॥

घृतम् । मिमिक्षे । घृतम् । अस्य । योनिः । घृते । श्रितः । घृतम् ।
ऊँ इति अस्य । धाम । अनुऽस्वधम् । आ । वह । मादयस्व ।
स्वाहाऽकृतम् । वृषभ । वक्षि । हव्यम् ॥ ११॥२३॥

अस्याग्नेर्घृतमाज्यंमिमिक्षे सिञ्चामि यतोस्यघृतं योनिःकारणं उत्पन्नोपिघृतेश्रितःआश्रितः अस्याग्नेर्घृतमेवधामतेजःघृतेनह्ययंदीप्यते इदानींसंबोध्योच्यते—हेअग्ने वृषभ फलस्यवर्षित-स्त्वंअनुष्वधंप्रतिहविःसर्वेष्वपिहविःषुदीयमानेषुआवह देवान्आहूयतान्मादयस्वप्रीणय वत-स्त्वंस्वाहाकृतंस्वाहाकारेणदत्तंहव्यंचरुपुरोडाशादि वक्षि वह ॥ ११ ॥

११. मैं अग्नि में घी डालता हूँ। घृत ही उनकी जन्मभूमि, आश्रय-स्थान और दीप्ति है। अभीष्टवर्षी अग्नि, हव्य देने के समय देवों को बुलाकर उनकी प्रसन्नता उत्पादन करो और अग्नि-रूप स्वाहाकार में प्रदत्त हव्य ले जाओ।

॥ इतिद्वितीयस्यपञ्चमेत्रयोविंशोवर्गः ॥ २३ ॥

हुवेवइतिनवर्चंचतुर्थंसूक्तं भार्गवःसोमाहुतिनामकऋषिः अग्निर्देवता त्रिष्टुप्छन्दः हुवेन-वसोमाहुतिर्भार्गवोहेत्यनुक्रमणिका प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभेछन्दसीदं सूत्रितञ्च—हुवे-वःसुद्योत्मानंनिहोताहोतृषदनइतिसूक्तेइति ।

तत्रप्रथमा—

हुवेवःसुद्योत्मानंसुवृक्तिंविशामग्निमतिथिंसुप्रयसम् ।
मित्रइवयोदिधिषाय्योभूद्देवआदेवेजनेजातवेदाः ॥ १ ॥

हुवे । वः । सुऽद्योत्मानम् । सुऽवृक्तिम् । विशाम् । अग्निम् ।
अतिथिम् । सुऽप्रयसम् । मित्रःऽइव । यः । दिधिषाय्यः । भूत् ।
देवः । आऽदेवे । जने । जातऽवेदाः ॥ १ ॥

हेयजमानाःवोयुष्मदर्थं अग्निंहुवेआह्वयामि कीदृशंतं सुद्योत्मानं सुष्ठुद्योतमानंसुवृक्तिं सुवर्जितंपापैः शोभनस्तुतिंवाविशांयजमानानांअतिथिं अतिथिवत्सदापूज्यंसुप्रयसंशोभनहविर्लक्षणान्नं किञ्चजातवेदाः जातानांवेदितायोदेवोग्निर्मित्रइव सखेवआदित्यइववादिधिषाय्यः धारयिता भूद्भवति कुत्रेतिउच्यते आदेवेदेवपर्यन्तेजनेमनुष्यप्रभृतिदेवपर्यन्तेषु तेषांधारकोभवदित्यर्थः ॥ १ ॥

१. यजमानो, मैं तुम्हारे लिए अतीव दीप्तियुक्त, निष्पाप, यजमानों के अतिथि-स्वरूप और हव्य-युक्त अग्नि को बुलाता हूँ। वे सर्व-भूतज्ञाता और मनुष्यों से देवों तक के धारणकर्त्ता हैं।

इमंविधन्तोअपांसधस्थेद्वितादधुर्भृगवोविक्ष्वा३यो: ।
एषविश्वान्यभ्यस्तुभूमादेवानामग्निररतिर्जीराश्वः ॥ २ ॥

इमम् । विधन्तः । अपाम् । सधऽस्थे । द्विता । अदधुः । भृगवः ।
विक्षु । आयोः । एषः । विश्वानि । अभि । अस्तु । भूम ।
देवानाम् । अग्निः । अरतिः । जीरऽअश्वः ॥ २ ॥

इममग्निंविधन्तः परिचरन्तोभृगवोस्मत्पूर्वेमहर्षयः अपांसधस्थेसहस्थानेन्तरिक्षेआयोर्मनुष्यस्ययजमानस्यस्वभूतासुविक्षुप्रजास्वृत्विक्षुतेषांमध्येचद्वितादृयोःस्थानात् अदधुः अधारयत् दधातेर्लुङिरूपं एषोग्निर्भूमभूम्नाअत्यर्थंविश्वानिभूतजातान्यस्मद्विरोधीन्यभ्यस्तुअभिभवतु सकीदृशः देवानामरतिरीश्वरः तेषांमध्येशीघ्रंअरणशीलोवास्मद्यागंप्रति तथाजीराश्वः क्षिप्राश्वः ॥ २ ॥

२. भृगुओं ने अग्नि की सेवा करके उन्हें जल के निवास-स्थान, अन्तरिक्ष और मानवों की संतानों के बीच स्थापित किया था। शीघ्रगामी अश्ववाले और देवों के स्वामी अग्नि हमारे समस्त विरोधी प्राणियों को पराभूत करें।

अग्निंदेवासोमानुषीषुविक्षुप्रियंधुःक्षेष्यन्तोनमित्रम् ।
सदीदयदुशतीरूर्म्याआदक्षाय्योयोदास्वतेदमआ ॥ ३ ॥

अग्निम् । देवासः । मानुषीषु । विक्षु । प्रियम् । धुः । क्षेष्यन्तः । न । मित्रम् । सः । दीदयत् । उशतीः । ऊर्म्याः । आ । दक्षाय्यः । यः । दास्वते । दमे । आ ॥ ३ ॥

देवासोदेवाः क्षेष्यन्तः स्वर्गंप्रतिगच्छन्तःसन्तः पूर्वंमानुषीषुमनुष्यसंबन्धिनीषुविक्षुम-जासु प्रियंदेवानांप्रीणयितारमग्निं धुः अधुः स्थापितवन्तः तत्रदृष्टान्तः—क्षेष्यन्तोमित्रंन रायंम-तिगच्छन्तोनरामित्रंप्रियंसखायंस्वगृहरक्षार्थंस्थापयन्ति तद्वत् एवंदेवैःस्थापितोयोग्निर्दास्वतेह-विर्दत्तवतेयजमानायतदर्थंदमेतदीयेयागगृहेआआहितः स्थापितः दक्षाय्यः समर्धयितादातावा सोग्निः उशतीः कामयमानाः ऊर्म्याः रात्रीः सर्वासुरात्रिषुआदीदयत् दीप्यतेसर्वतः सर्व-रात्रीरादीपयतिवा॥ ३ ॥

३. स्वर्ग जाते समय देवों ने, मित्र की तरह, अग्नि को मनुष्यों के बीच स्थापित किया था। वे अग्नि हव्यदाता यजमान के लिए, उसके योग्य गृह में स्थापित होकर, अपनी अभिलाषा करनेवाली रात्रियों में दीप्त होते हैं।

अस्यरण्वास्वस्येवपुष्टिःसंदृष्टिरस्यहियानस्यदक्षोः ।
वियोभरिभ्रदोषधीषुजिह्वामत्योनरथ्योदोधवीतिवारान् ॥ ४ ॥

अस्य । रण्वा । स्वस्यऽइव । पुष्टिः । सम्ऽदृष्टिः । अस्य । हियानस्य । धक्षोः । वि । यः । भरिभ्रत् । ओषधीषु । जिह्वाम् । अत्यः । न । रथ्यः । दोधवीति । वारान् ॥ ४ ॥

अस्याग्नेः पुष्टिः शरीरवृद्धिः रण्वारमणीयाशब्दयुक्तावा तत्रदृष्टान्तः—स्वस्यपुष्टिरिवय-थालोके स्वकीयापुष्टिः स्वस्मैरमणीयाभवतितद्वत् यद्वास्याग्नेःसंबन्धिनीपुष्टिः यथायजमानवि-षयारण्वातद्वत् किञ्च हियानस्यसमृद्धिंगच्छतोव्याप्नुवतोधक्षोः काष्ठान्दिधक्षोःदग्धुमिच्छोरस्या-ग्नेः सन्दृष्टिः सन्दर्शनाविर्भावोपिरण्वा योग्निरोषधीषुकाष्ठेषुजिह्वांज्वालां जात्येकवचनं ज्वालाः विभरिभ्रत् अत्यर्थंविहरतिकम्पयतीत्यर्थः हरतेर्यङ्लुगन्तत्वेनदाधर्त्यादिषुनिपातिताच्छ्लेटचडा-गमः यद्योगादनिघातः तत्रदृष्टान्तः—रथ्योरथार्होऽत्योन वाजीयथा वारान्दंशवारणसाधनान् बालान् दोधवीति कम्पयतितद्वत् योग्निर्ज्वालाःकम्पयति अस्याग्नेःपुष्टिःरण्वेति ॥ ४ ॥

४. अपने शरीर की पुष्टि करने के सदृश अग्नि के शरीर की पुष्टि करना भी रमणीय है। जिस समय अग्नि चारों ओर फैलते और काष्ठ को भस्म करते हैं, उस समय उनका शरीर अत्यन्त सुन्दर हो जाता है। जैसे रथ का अश्व बार-बार पूंछ कँपाता है, वैसे ही अग्नि भी काठों पर अपनी शिखा कँपाते हैं।

आयन्मेअभ्वंवनदःपनन्तोशिग्भ्योनामिमीतवर्णम् ।
सचित्रेणचिकितेरंसुभासाजुजुर्वाँयोमुहुरायुवाभूत् ॥ ५ ॥ २४॥

आ । यत् । मे । अभ्वम् । वनदः । पनन्त । उशिक्ऽभ्यः । न ।
अमिमीत । वर्णम् । सः । चित्रेण । चिकिते । रम्ऽसु । भासा ।
जुजुर्वान् । यः । मुहुः । आ । युवा । भूत् ॥ ५ ॥ २४ ॥

यद्यस्याभ्वं महत्त्वंमेममसंबन्धिनोवनदः संभक्तारः यद्वा वनदःअवनदः भृशंशब्दयन्तः स्तोतारः अवशब्दोभृशार्थवाचीतत्पूर्वान्नदेःक्विप् अवाप्योरित्यकारलोपः आपनन्त समन्तात्स्तुवन्ति सोग्निरुशिग्भ्योस्मदीयंरूपंकामयमानेभ्यः ऋत्विग्भ्योवर्णं स्वसदृशंरूपंनामिमीत नशब्दश्चार्थे निर्मिमीतेच रंसु रमणीयेष्वाज्यादिहविःषुनिमित्तेषु चित्रेणभासाकनकादिनानावर्णया दीप्त्याचिकिते विज्ञायते किञ्च योग्निःजुजुर्वान् जीर्णःसन् ज्वालोपशमेसएवमुहुःपुनःपुनःआयुवासर्वतोमिश्रयितातरुणोवाभूत् भवतिपुनराज्यादिसंयोगात् ॥ ५ ॥

५. मेरे सहयोगी स्तोता लोग अग्नि के महत्त्व की स्तुति करते हैं, वे आग्रही ऋत्विकों के पास अपना रूप प्रकाशित करते हैं। अग्नि रमणीय हव्य के लिए विचित्र किरणमाला से प्रकाशित होते हैं। अग्नि वृद्ध होकर भी बार-बार उसी क्षण युवा हो सकते हैं।

आयोवनातातृषाणोनभातिवार्णपथारथ्येवस्वानीत् ।
कृष्णाध्वातपूरण्वश्चिकेतद्यौरिवस्मयमानोनभोभिः ॥६॥
आ । यः । वना । ततृषाणः । न । भाति । वाः । न । पथा ।
रथ्याऽइव । स्वानीत् । कृष्णऽअध्वा । तपुः । रण्वः । चिकेत ।
द्यौःऽइव । स्मयमानः । नभःऽभिः ॥ ६ ॥

योग्निर्वनावनानिवृक्षसमूहान् ततृषाणोनतृषितइव त्वरमाणइत्यर्थः आभातिआभासयति ददहतीत्यर्थः यद्वा वनावनेआभाति किञ्चवार्णउदकमिव पथाप्रवणेनमार्गेणगच्छति तद्वद् इतस्ततोगच्छति रथ्येवरथस्यवोढाश्वइवस्वानीवशब्दयति यद्वा रथशब्दात्सोढर्थादेशः यथारथोयुद्धमार्गेणगच्छन्स्वनतितद्वद् किञ्च कृष्णाध्वाकृष्णवर्त्मा तपुस्तापकः रण्वोरमणीयः एवंभूतः सन् चिकेतज्ञायते प्रकाशतइत्यर्थः कइव नभोभिर्नक्षत्रैः स्मयमानः प्रकाशमानोद्यौरिवद्युलोकइव यद्वा नभोभिरन्तरिक्षप्रदेशविशेषैः स्मयमानः शोभमानोद्यौरादित्यइवनीलवर्णांतरिक्षचार्यादित्योयथाज्ञायतेतद्वव स्वसंचारेणकृष्णीभूतेमार्गेज्ञायते प्रकाशयतइत्यर्थः ॥ ६ ॥

६. तृषातुर की तरह जो अग्नि वनों को दग्ध करते हैं, जल की तरह इधर-उधर जाते हैं; रथवाहक अश्व की तरह शब्द करते हैं, वे कृष्ण-मार्ग और तापक होने पर भी नभोमण्डलवाले द्युलोक की तरह शोभन हैं।

अथसप्तमी—

सयोव्यस्थादभिदक्षदुर्वींपशुर्नैतिस्वयुरगोपाः ।
अग्निःशोचिष्माँअतसान्युष्णन्कृष्णव्यथिरस्वदयन्नभूम ॥ ७ ॥

सः । यः । वि । अस्थात् । अभि । धक्षत् । उर्वीम् । पशुः । न ।
एति । स्वऽयुः । अगोपाः । अग्निः । शोचिष्मान् । अतसानि ।
उष्णन् । कृष्णऽव्यथिः । अस्वदयत् । न । भूम ॥ ७ ॥

योग्निर्व्यस्थात् विविधंतिष्ठति व्याप्नोतिविश्वंतथायोग्निरुर्वींविस्तृतं पृथिवींसर्वांअभिधक्षत् आभिमुख्येनप्रवर्धमानोभवति उभेअपियच्छब्दयोगान्निहन्येते सोग्निःपशुर्नपशुरिव यथा जातःपशुः स्वच्छन्देनचरति तथास्वयुः स्वयमेवगच्छन् अगोपाः गोपरहितः नियामकवर्जितइत्यर्थः एतिगच्छति किंकुर्वन् शोचिष्मान्प्रकृष्टदीप्तिः कृष्णव्यथिः कृष्णवर्णप्रापादग्धाव्यथाकराःकण्टकादयोयेन तादृशःसन् भूमअत्यधिकंअस्वदयत् आस्वादयतीववृक्षगतान्रसानअतसानिसततानिनीरसानिवातरुगुल्मादीनिउष्णन्दहन्नेति ॥ ७ ॥

७. जो अग्नि विश्व को व्याप्त करते हैं, जो अग्नि विस्तृत पृथिवी पर बढ़ते हैं, जो अग्नि रक्षक-रहित पशु की तरह अपनी इच्छा से गमन कर विचरण करते हैं, वही दीप्तिमान् अग्नि सूखे वृक्ष आदि को जलाकर, व्यथाकारी कंटक आदि को दूरकर, अच्छी तरह रसास्वादन करते हैं।

अथाष्टमी—

नूतेपूर्वस्यावसोअधीतौतृतीयेविदथेमन्मशंसि ।
अस्मेअग्नेसंयद्वीरंबृहन्तंक्षुमन्तंवाजंस्वपत्यंरयिंदाः ॥ ८॥

नु । ते । पूर्वस्य । अवसः । अधिऽइतौ । तृतीये । विदथे ।
मन्म । शंसि । अस्मे इति । अग्ने । संयत्ऽवीरम् । बृहन्तम् ।
क्षुऽमन्तम् । वाजम् । सुऽअपत्यम् । रयिम् । दाः ॥ ८ ॥

हेअग्ने तेतवसंबन्धिनः पूर्वस्यपूर्वयागसमये कृतस्यावसोभिमततर्पणस्यअधीतौस्मरणे सति तत्स्मृत्यानु अद्यापितृतीयेविदथेयागेतृतीयसवने यद्वा प्रातरनुवाकसंबन्धिनांआग्नेयोषस्याश्विनानांमध्येअन्यतमेतृतीयेक्रतौ मन्ममननीयंस्तोत्रंशंसि अशंसि शस्यतेस्माभिः हेअग्ने त्वंचा-

स्मेअस्मभ्यंसंयद्वीरंसंयतोवीरायस्मिन्तादृशं बृहन्तंमहान्तं क्षुमन्तंशब्दवन्तंकीर्तिमन्तंवाजंउक्तल-क्षणमन्नं स्वपत्यंरयिंचदाःदेहि ॥ ८ ॥

८. अग्निदेव, तुमने पहले, प्रथम सवन में, जो रक्षा की थी, उसे हम आज भी स्मरण करके तृतीय सवन में मनोहर स्तोत्रों का उच्चारण करते हैं। अग्नि, तुम हमें वीर-विशिष्ट करो। तुम हमें महान् कीर्त्ति-मान् करो। हमें सुन्दर अपत्य और धन दो।

त्वयायथागृत्समदासोअग्नेगुहावन्वन्तउपराँअभिष्युः।
सुवीरासोअभिमातिषाहःस्मत्सूरिभ्योगृणतेतद्वयोधाः ॥९॥२५॥

त्वया। यथा। गृत्सऽमदासः। अग्ने। गुहा। वन्वन्तः। उपरान्। अभि। स्युरिति स्युः। सुऽवीरासः। अभिमातिऽसहः। स्मत्। सूरिऽभ्यः। गृणते। तत्। वयः। धाः ॥ ९ ॥ २५॥

हेअग्ने त्वयारक्षकेणवन्वन्तः त्वांसंभजंतः गृत्समदाऋषयः आत्मनिपारोक्ष्येणवचनं यथागुहागुहायांवर्तमानान् उपरानुपरमणसाधनानुपरिउत्कृष्टेवर्तमानान्वाधनविशेषानभिस्युः अभिभवेयुःस्वाधीनान्कुर्युः यद्वा गूढानुपरानुपरिअधिकत्वेनवर्तमानान्पापानभिस्युःअभिभवेयुः तथाकुर्वित्यर्थः कीदृशाः सुवीरासः शोभनपुत्राद्युपेताः अभिमातिसहः वैरिणांपापादीनांसोढारः किञ्च सूरिभ्योमेधाविभ्योयजमानेभ्योगृणते व्यत्ययेनैकवचनं शब्दयद्भ्यः स्तोतृभ्यः यद्वा सूरिभ्योयजमानेभ्योगृणतेस्तोत्रेचस्मत्सुमत्अतिप्रभूतंतत्तादृशंप्रसिद्धंवयोन्नंधाःधेहि॥९॥

९. अग्नि, गृत्समद-वंशीय ऋषि लोग तुम्हें रक्षक पाकर, छंद का पाठ करते हुए, गुहा में अवस्थित उत्कृष्ट स्थान पर वर्तमान धन-विशेष प्राप्त करेंगे। वे उत्तम पुत्र आदि को प्राप्त कर शत्रुओं को परास्त करेंगे। मेधावी और स्तुतिकारी यजमानों को बहुत अधिक और प्रसिद्ध धन दो।

॥ इतिद्वितीयस्यपञ्चमेपञ्चविंशोवर्गः ॥२५॥

होताजनिष्टेत्यष्टर्चंपञ्चमंसूक्तं सोमाहुतेरार्षमाग्नेयमानुष्टुभं होताष्टावानुष्टुभमित्यनुक्रान्तम् प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतावस्यविनियोगः सूत्रितञ्च—अग्नायोहोताजनिष्टेतिचतुर्विंशेहन्यपीदमेवाज्यंसूत्रितम्—चतुर्विंशेहोताजनिष्टेत्याऽज्यमिति आभिप्लविकेद्वितीयेहनीदमेवाज्यं द्वितीयस्यचतुर्विंशेनाज्यमित्यतिदिष्टत्वात्।

होताजनिष्टचेतनःपितापितृभ्यऊतये।
प्रयक्षञ्जेन्यंवसुशकेमवाजिनोयमम् ॥ १ ॥

होता । अजनिष्ट । चेतनः । पिता । पितृऽभ्यः । ऊतये ।
प्रऽयक्षन् । जेन्यम् । वसु । शकेम । वाजिनः । यमम् ॥ १ ॥

होताहोमनिष्पादकः चेतनः चेतयितास्मदनुष्ठितस्यपितापालकोस्मद्यज्ञस्यईदृशोग्निरजनिष्ट उत्पन्नः किमर्थंपितृभ्यःपालकेभ्योयजमानेभ्यः षष्ठ्यर्थेचतुर्थी तेषामूतयेरक्षणायच वयंचवाजिनः हविर्लक्षणान्नवन्तःसन्तः प्रयक्षंप्रकर्षेणपूज्यं जेन्यंजेतव्यं यमंयमयितव्यं वसुधनंशकेम शक्ताभूयास्म लब्धुमितिशेषः यद्वा वाजिनोन्नस्ययमंयमनंकर्तुंशकेमप्रयक्षंजेन्यंवसुधनमित्युपमानंउक्तलक्षणंधनमिवतद् यथावरोद्धुंशक्नुमस्तद्वद् ॥ १ ॥

१. होता, चैतन्यदाता और पिता अग्नि पितरों की रक्षा के लिए उत्पन्न हुए। हम भी हव्य-युक्त होकर अतीव पूजनीय, जीतने और रक्षा करने योग्य धन प्राप्त करने में समर्थ होंगे।

आयस्मिन्त्सप्तरश्मयस्तता यज्ञस्यनेतरि ।
मनुष्वद्दैव्यमष्टमंपोताविश्वंतदिन्वति ॥ २ ॥

आ । यस्मिन् । सप्त । रश्मयः । तताः । यज्ञस्य । नेतरि ।
मनुष्वत् । दैव्यम् । अष्टमम् । पोता । विश्वम् । तत् । इन्वति ॥ २ ॥

यज्ञस्यनेतरियागस्यनिर्वाहकेयस्मिन्नग्नौसप्तरश्मयः सप्तसंख्याकारश्मिवद्व्याप्ताहोत्रकाः आतताः स्वस्वकर्मभिःसर्वतोव्याप्ताभवन्ति सपोतापावकोदेवानांपोत्राख्यऋत्विग्रूपोवाग्निर्मनुष्वद् मनुष्यपोतृवद् दैव्यंदेवोयज्ञस्तत्संबन्धिअष्टममष्टर्त्विक्संबन्धितद्विश्वंकर्तव्यजातं सप्तहोत्रकैःसहस्वयमष्टमःसन्इन्वति व्याप्नोति यद्वा तदित्यस्यलिङ्गव्यत्ययः सपोतेतिसंबन्धः सप्तहोत्रकैः सहाष्टमोभूत्वातद्यज्ञंनिर्वहतीत्यर्थः ॥ २ ॥

२. यज्ञ-नेता अग्नि में सात रश्मियाँ विस्तृत हैं। देवों के पोता के समान, अग्नि मनुष्यों के पोता की तरह, यज्ञ के अष्टम स्थानीय होकर व्याप्त होते हैं।

अथतृतीया—

दधन्वेवायदीमनुवोचद्ब्रह्माणिवेरुतत् ।
परिविश्वानिकाव्यानेमिश्चक्रमिवाभवत् ॥ ३ ॥

दधन्वे । वा । यत् । ईम् । अनु । वोचत् । ब्रह्माणि । वेः । ऊँ इति । तत् । परि । विश्वानि । काव्या । नेमिः । चक्रम्ऽइव । अभवत् ॥ ३ ॥

पूर्वमन्त्रेहोत्रादिवत् स्वयमपियज्ञंनिर्वहतीत्युक्तं अत्रतुसर्वतत्तदात्मनास्थित्वास्वयमेवनिर्वहतीत्याह—वाअथवाईमेनंयज्ञंअनुलक्षीकृत्य यद्धविरादिकंदधन्वेधारयत्यध्वर्य्वादिरूपः यानिब्रह्माणिशस्त्रादीनिअनुवोचत् अनुवक्ति होत्रादिरूपः अत्रवाइत्येतद्योज्यं तत्सर्ववेः उवेरेवकामयते जानातिवास्वयमनुष्ठातुं अयमग्निर्विश्वानिसर्वाणिकाव्याकाव्यानिकवयोमेधाविनऋत्विजस्तत्संबन्धीनिकर्माणिपर्यभवत् परिभवतिस्वायत्तानिकरोति व्याप्नोतीत्यर्थः व्याप्तौदृष्टान्तः—नेमिः बहिर्वेष्टनवलयः चक्रमिवरथाङ्गंयथा कार्त्स्न्येनव्याप्नोतितद्वत् ॥ ३ ॥

३. अथवा इस यज्ञ में ऋत्विक्‌गण जो हव्यादि धारण करते, जो मंत्र आदि पढ़ते हैं, सो सब अग्निदेव जानते हैं।

अथचतुर्थी—

साकंहिशुचिनाशुचिःप्रशास्ताक्रतुनाजनि ।
विद्वाँअस्यव्रताध्रुवावयाइवानुरोहते ॥ ४ ॥

साकम् । हि । शुचिना । शुचिः । प्रऽशास्ता । क्रतुना । अजनि ।
विद्वान् । अस्य । व्रता । ध्रुवा । वयाःऽइव । अनु । रोहते ॥ ४ ॥

शुचिःस्वयंशोधकः प्रशास्तादेवानां एतन्नामकऋत्विक्प्रशासितावायज्ञविघ्नानां शुचिना क्रतुनाशोधकेनाग्निहोत्रादिकर्मणा साकंहिसहैवाजनिउत्पन्नःजातमात्रएवशुद्धः सर्वस्यप्रशास्ता चसन्नग्निहोत्रादिनिर्वोढाभवदित्यर्थः अस्याग्नेर्ध्रुवा ध्रुवाणि फलपर्यवसायीनि व्रताव्रतानि कर्माणि विद्वान् जानन् यजमानोवयाइवविस्तृताः शाखाइवानुरोहते क्रमेणानुतिष्ठति ॥ ४ ॥

४. पवित्र प्रशास्ता अग्नि पुण्य क्रतु के साथ उत्पन्न हुए हैं। जैसे लोग फल तोड़ने के लिए एक डाल से दूसरी डाल पर जाते हैं, वैसे ही यजमान, अग्नि के यज्ञ को अवश्य फलदाता समझकर, एक के अनन्तर दूसरा अनुष्ठान करता है।

अथपञ्चमी—

ताअस्यवर्णमायुवोनेष्टुःसचन्तधेनवः ।
कुवित्तिसृभ्यआवरंस्वसारोयाइदंययुः ॥ ५ ॥

ताः । अस्य । वर्णम् । आयुवः । नेष्टुः । सचन्त । धेनवः । कुवित् ।
तिसृऽभ्यः । आ । वरम् । स्वसारः । याः । इदम् । ययुः ॥ ५ ॥

याःवक्ष्यमाणलक्षणाअंगुलयः इदमनुष्ठीयमानं कर्मययुः प्राप्नुवन्ति अनुतिष्ठन्ति ताआयुवः गंत्र्यः व्याप्ताधेनवः प्रीणयित्र्यः स्वसारः स्वयंसारिण्योंगुलयोनेष्टुः हविर्याचितुः भक्ष-

यितुः शोधयितुः पोषयितुःनेतुर्वास्याग्नेः यद्वैतन्नामकऋत्विग्रूपस्य तिसृभ्यःआ गार्हपत्यादिमूर्तीनामपिवरंवर्णंकुवित् बहुकृत्वः सचन्त सेवन्तेपरिचरन्ति ॥ ५ ॥

५. जो अँगुलियाँ इस कार्य में लगी रहती हैं, वे इन नेष्टा अग्नि के लिए धेनु-स्वरूप हैं और इनकी सेवा करती हैं तथा अग्निरूप होकर इनके गार्हपत्य आदि तीन उत्कृष्ट रूपों की सेवा करती हैं।

यदीं॑मा॒तुरुप॒स्वसा॑घृ॒तंभर॒न्त्यस्थि॑त ।
तासा॑मध्व॒र्युराग॑तौ॒यवो॑वृ॒ष्टीव॑मोदते ॥ ६ ॥

यदि॑ । मा॒तुः । उप॑ । स्वसा॑ । घृ॒तम् । भर॑न्ती । अस्थि॑त । तासा॑म् ।
अ॒ध्व॒र्युः । आऽग॑तौ । यव॑ः । वृ॒ष्टीऽइ॑व । मो॑द॒ते॒ ॥ ६ ॥

यदियदामातुः सर्वस्यनिर्मातुर्भूम्याः वेदिलक्षणायाः स्वसा स्वसृस्थानीयाजुहूर्घृतंभरन्ती सती उपास्थित उपतिष्ठेदग्निं एकवचनमविवक्षितं जुहूपभृद्ध्रुवाः घृतंभरन्त्यः तिष्ठन्तीत्यर्थः तदातासां जुह्वादीनामागतौ यागायप्राप्तौ सत्यां अध्वर्युः एतन्नामकऋत्विग्रूपः अध्वरं कामयमानोवायमग्निः मोदते हृष्यति यवोवृष्टीव वृष्ट्यायथामोदते तद्वत् ॥ ६ ॥

६. जिस समय जुहू मातृ-रूपिणी वेदी के पास भगिनी के समान घृत-पूर्ण करके रक्खा जाता है, उस समय जैसे वृष्टि में यव पुष्ट होता है, वैसे ही अध्वर्युरूप अग्नि भी हृष्ट होते हैं।

स्वः॒स्वाय॒धाय॑से॒कृणु॒ताम्ऋ॒त्विगृ॒त्विज॑म् ।
स्तोमं॑य॒ज्ञंचाद॒रं॑व॒नेमा॑ररि॒मावयम् ॥ ७ ॥

स्वः । स्वाय॑ । धाय॑से । कृ॒णु॒ताम् । ऋ॒त्विक् । ऋ॒त्विज॑म् । स्तोम॑म् ।
य॒ज्ञम् । च॒ । आत् । अर॑म् । व॒नेम॑ । र॒रि॒म । व॒यम् ॥ ७ ॥

अयमग्निः स्वः स्वयमेवस्वाय स्वकीयाय धायसेकर्मणेहविषांधारणायवा ऋत्विक्होता जनिष्टेत्यादिनोक्तलक्षणोहोतृपोतृप्रशास्त्राद्यृत्विग्रूपःसन्ऋत्विजंआर्त्विज्यं भावप्रधानोयंनिर्देशः देवर्त्विग्रूपःसन् ऋत्विजंमानुषमार्त्विज्यंकृणुतांकरोतु वयंचतदनुग्रहात् आदनन्तरमेवस्तोत्रं यज्ञं चतदाश्रयं यागमपिअरंअलमत्यर्थंवनेम संभजेमहि ररिम ददेमहिचहविः यद्वा स्तोमंवनेमयज्ञं यज्ञयोग्यंहवीररिम ॥ ७ ॥

७. ये ऋत्विक्-रूप अग्नि अपने कर्म के लिए ऋत्विक् का कर्म करते हैं। हम भी, उसके अनन्तर ही, स्तोम, यज्ञ और हव्य प्रदान करेंगे।

यथा॑वि॒द्वाँअरं॒कर॒द्विश्वे॑भ्योयज॒तेभ्य॑ः ।
अ॒यमग्ने॒त्वेअपि॒यंय॒ज्ञंचकृ॒मावयम् ॥ ८ ॥ २६ ॥

यथा । विद्वान् । अरम् । करत् । विश्वेभ्यः । यजतेभ्यः । अयम् ।
अग्ने । त्वे इति । अपि । यम् । यज्ञम् । चकृम । वयम् ॥ ८ ॥ २६॥

हेअग्ने विद्वान् त्वन्माहात्म्याभिज्ञः प्रयोगज्ञोवा यजमानोवा यथाविश्वेभ्योयजतेभ्यः सर्वेभ्योयजनीयेभ्योदेवेभ्यःअरंपर्याप्तंकरत् कुर्यात् तथात्वमनुगृहाणेत्यर्थः वयमपियंयज्ञंयागविशेषंचकृमकुर्महेसयागस्त्वेअपि अपिरेवार्थे तवैव त्वत्मीत्यर्थः त्वमेवतस्मात्त्वंसर्वदेवार्थयागं तत्तद्वत्विग्रूपःसन् निर्वहेत्यर्थः ॥ ८ ॥

८. अग्नि, तुम्हारी महिमा जाननेवाला यजमान जैसे सारे देवों की भली भाँति तृप्ति कर सके, वैसा करो। हम जिस यज्ञ को करेंगे, वह भी, अग्नि, तुम्हारा ही है।

॥ इतिद्वितीयस्यपञ्चमेषड्विंशोवर्गः ॥ २६ ॥

इमांमइत्यष्टर्चंषष्ठंसूक्तं सोमाहुत्यार्षमाग्नेयंगायत्रं इमांमेगायत्रंहीत्यनुक्रान्तम् प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रेछन्दस्यस्यविनियोगः सूत्रितश्च—इमांमेअग्नेसमिधमिमामितित्रयाणामुत्तमामुद्धरेदिति अपराह्णिक्यामुपसदीमांमेअग्नेसमिधमितितिस्रऋचस्त्रिरभ्यस्तानवसामिधेन्यः कृत्वाविनियोक्तव्याः अथोपसदितिखण्डेसूत्रितं—इमांमेअग्नेसमिधमिमामितितुसामिधेन्यइति ।

तत्रप्रथमा—

इमांमेअग्नेसमिधमिमामुपसदंवनेः । इमाउषुश्रुधीगिरः ॥ १ ॥
इमाम् । मे । अग्ने । सम्ऽइधम् । इमाम् । उपऽसदम् । वनेरिति वनेः ।
इमाः । ऊँ इति । सु । श्रुधि । गिरः ॥ १ ॥

हेअग्नेमेमदीयामिमां आधीयमानांसमिधं इमामुपसदंउपसदनसाधनामाहुतिंउपसद्यागेक्रियमाणांवावनेः संभजेथाः तथेमाउ इमाअपिगिरः स्तुतीः सु सुष्ठुश्रुधि शृणु ॥१॥

१. अग्नि, तुम मेरी इस समिधा और आहुति का उपभोग करो; मेरी यह स्तुति सुनो।

अथद्वितीया—

अयातेअग्नेविधेमोर्जोनपादश्वमिष्टे । एनासूक्तेनसुजात ॥ २ ॥
अया । ते । अग्ने । विधेम । ऊर्जः । नपात् । अश्वम्ऽइष्टे ।
एना । सुऽउक्तेन । सुऽजात ॥ २ ॥

हेअग्ने तेत्वां अयाअनयाआहुत्याविधेम परिचरेम हेऊर्जोनपात बलस्यनप्तः तस्यनपातयितर्वा हेअश्वमिष्टेव्यापकयज्ञ यद्वा आशुक्रियमाणंकर्मोश्वंतदिच्छतीतिअश्वमिष्टिः संत्वरमाणाद्युपसदाचरन्ति तेकर्मभिःसमत्वरन्ततेतिस्रःसामिधेनीरनूच्यतिस्रोदेवताअयजन्नितिब्राह्मणं । तादृशाग्ने तेत्वांअनयाहुत्याविधेमपरिचरेमतथाहेसुजातशोभनजननएनाएतेनसूक्तेनस्तोत्रेणप्रीणयेमेतिशेषः यद्वा स्तुत्युपबृंहितेनविधेम॥ २ ॥

२. अग्नि, हम इस आहुति के द्वारा तुम्हारी सेवा करेंगे ! बलपुत्र, विस्तीर्ण-यज्ञशाली और सुजन्मा अग्नि, इस स्तुति से तुम्हें हम प्रसन्न करेंगे ।

तंत्वांगीर्भिर्गिर्वणसंद्रविणस्युंद्रविणोदः । सपर्येमसपर्यवः ॥ ३ ॥

तम् । त्वा । गीःऽभिः । गिर्वणसम् । द्रविणस्युम् । द्रविणःऽदः । सपर्येम । सपर्यवः ॥ ३ ॥

हेद्रविणोदः धनस्यदातः अग्ने तंतादृशंगिर्वणसं गीर्भिः स्तुतिभिर्वननीयंद्रविणस्युंहविर्लक्षणधनेच्छुंत्वात्वांसपर्यवः परिचरणकर्तारोवयंगीर्भिःस्तुतिभिःसपर्येम परिचरेम ॥ ३ ॥

३. धनद अग्नि, तुम स्तुति के योग्य और यज्ञ के अभिलाषी हो। हम तुम्हारे सेवक हैं। स्तुति-द्वारा तुम्हारी सेवा करेंगे।

सबोधिसूरिर्मघवावसुपतेवसुदावन् । युयोध्य१स्मद्द्वेषांसि ॥ ४ ॥

सः । बोधि । सूरिः । मघऽवा । वसुऽपते । वसुऽदावन् । युयोधि । अस्मत् । द्वेषांसि ॥ ४ ॥

वसुपतेधनपते वसुदावन् मघवाअन्नवान्सूरिर्विद्वान्प्रेरकोवा सउक्तलक्षणकस्त्वंबोधि बुद्ध्यस्व अस्मदीयंस्तोत्रं किञ्च हेअग्ने द्वेषांसिद्वेष्टॄनस्मदस्मत्तोयुयोधि पृथक्कुरु ॥ ४ ॥

४. अग्नि, तुम धनवान्, विद्वान् और धनद हो। उठो और हमारे शत्रुओं को दूर करो।

अथपञ्चमी–

सनोवृष्टिंदिवस्परिसनोवाजमनर्वाणम् । सनःसहस्रिणीरिषः ॥५॥

सः । नः । वृष्टिम् । दिवः । परि । सः । नः । वाजम् । अनर्वाणम् । सः । नः । सहस्रिणीः । इषः ॥ ५ ॥

---

१ ऐ० ब्रा० ३. ४५. ।

सः सएवाग्निः नोस्मदर्थंदिवस्परि द्युलोकादन्तरिक्षाद्वपरीतिपञ्चम्यर्थानुवादी वृष्टिंकरोतीतिविशेषः सएवनोस्मदर्थमनर्वाणमविचलमनल्पंवाजंबलंददातु तथासहस्रिणीः अपरिमितप्रकाराणि इषः अन्नानि सएवाग्निर्नोस्मभ्यंददातु ॥ ५ ॥

५. वही अग्नि, हमारे लिए, अन्तरिक्ष से वृष्टि प्रदान करते हैं। वे हमें महान् बल और अनन्त प्रकार के अन्न दें।

ई॒ळा॒नाया॒व॒स्य॒वे॒य॒वि॑ष्ठदू॒तनो॒गि॒रा । यजि॑ष्ठहोत॒राग॑हि ॥ ६ ॥

ई॒ळा॒नाय । अ॒व॒स्य॒वे॑ । यवि॑ष्ठ । दू॒त॒ । नः॒ । गि॒रा ।
यजि॑ष्ठ । हो॒तः॒ । आ । ग॒हि॒ ॥ ६ ॥

हेयविष्ठ युवतम दूत देवानांयज्ञादिसूचक यजिष्ठ अतिशयेनयष्टव्य होतः देवानामाह्वातरग्ने नोगिराअस्मदीययास्तुत्याईळानाय पूजयित्रे अवस्यवेस्वरक्षणमिच्छतेमदर्थं आगहि आगच्छ ॥६॥

६. तरुणतम देव-दूत, अतिशय यजनीय अग्नि, मैंने तुम्हारी स्तुति की है; इसलिए आओ। मैं तुम्हारा पूजक हूँ और तुम्हारा प्रश्रय चाहता हूँ।

अ॒न्तर्ह्य॑ग्न॒ईय॑से वि॒द्वाञ्जन्मो॒भया॑कवे । दू॒तोजन्ये॑व॒मित्र्यः॑ ॥ ७ ॥

अ॒न्तः । हि । अ॒ग्ने॒ । ईय॑से । वि॒द्वान् । जन्म॑ । उ॒भया॑ । क॒वे॒ ।
दू॒तः । जन्याः॑ऽइव । मित्र्यः॑ ॥ ७ ॥

हेकवे मेधाविन्नग्ने अन्तर्जनानांहृदयेईयसेहि गच्छसिजानासिवा हिः संहोतासेदुदूत्यंचिकित्वाँअंतरीयसइत्यादिमन्त्रान्तरप्रसिद्धिद्योतनार्थः कीदृशस्त्वं उभयाउभयविधानिजन्मजन्मानि यष्टृणांयजमानानांयष्टव्यानांदेवनांचसंबन्धीनि विद्वान्जानन्सन्ईयसइतिसंबन्धः तत्रदृष्टान्तः—जन्योजनेभ्योहितः मित्र्योविशेषेणमित्रेभ्योहितोदूतइव सयथाप्रजानांचित्तवृत्तिज्ञानायराज्ञामेरितः तासांमनोजानातितद्वत् त्वमप्यस्माकमन्तरीयसइत्यर्थः ॥ ७ ॥

७. मेधावी अग्नि, तुम मनुष्यों के हृदय को पहचानते हो; तुम उभयरूप जन्म जानते हो। तुम संसार और बन्धुओं के दूत-रूप हो।

सवि॒द्वाँआच॑पिप्रयो॒यक्षि॑चिकित्वआनु॒षक् ।
आचा॒स्मिन्त्स॑त्सिब॒र्हिषि॑ ॥ ८ ॥ २७ ॥

सः । वि॒द्वान् । आ । च॒ । पि॒प्र॒यः॒ । यक्षि॑ । चि॒कि॒त्वः॒ ।
आ॒नु॒षक् । आ । च॒ । अ॒स्मिन् । स॒त्सि॒ । ब॒र्हिषि॑ ॥ ८ ॥ २७ ॥

1 ऋ० सं० ३.५.८.।

हेअग्ने सत्वंविद्वान्विशेषाभिज्ञःसन् आचपिप्रयः सर्वतोस्मान्पूरयचकामैः हेचिकित्वश्चेत-नावान् आनुषक् अनुक्रमेणयक्षि यज देवान् आसत्सिआसीदचास्मिन्स्तीर्णेबर्हिषि ॥ ८ ॥

८. अग्नि, तुम विद्वान् हो। हमारी मनःकामना पूर्ण करो। तुम चैतन्यवाले हो। यथाक्रम तुम देवों का यज्ञ करो और कुश के ऊपर बैठो।

॥ इतिद्वितीयस्यपञ्चमेसप्तविंशोवर्गः ॥ २७ ॥

श्रेष्ठंयविष्ठेतिषड्चंसप्तमंसूक्तंसोमाहुत्यार्षमाग्नेयंगायत्रं प्रातरनुवाकाश्विनशस्त्रयोर्गायत्रे छन्दस्यस्यविनियोगःपूर्वसूक्तएवोक्तः श्रवणाकर्मण्याद्याविनियुक्ता।

श्रेष्ठंयविष्ठभारताग्नेद्युमन्तमाभर। वसोपुरुस्पृहंरयिम् ॥ १ ॥

श्रेष्ठम्। यविष्ठ। भारत। अग्ने। द्युऽमन्तम्। आ। भर।

वसो। इति। पुरुऽस्पृहम्। रयिम् ॥ १ ॥

हेअग्ने यविष्ठयुवतम हेभारत भरताऋत्विजः तेषांसंबन्धीभारतः अध्वर्य्वादिभिःमन्थ-नहविःस्तोत्रादिनाव्याभ्रियमाणत्वात् तादृश हेवसोवासकव्याप्तवा एवंरूपाग्ने श्रेष्ठंअतिप्रशस्यं द्युमन्तंदीप्तिमन्तंपुरुस्पृहंबहुभिरर्थिभिःस्पृहणीयंरयिंआभर आहर ॥ १ ॥

१. हे तरुणतम, भरणकर्ता और व्याप्त अग्नि, अतिशय प्रशंस-नीय, दीप्तिमान् और बहुजन-वाञ्छित धन ले आओ।

मानोअरातिरीशतदेवस्यमर्त्यस्यच। पर्षितस्याउतद्विषः ॥ २ ॥

मा। नः। अरातिः। ईशत। देवस्य। मर्त्यस्य। च।

पर्षि। तस्याः। उत। द्विषः ॥ २ ॥

हेअग्ने त्वदनुग्रहान्नोस्मानरातिः अदानंशत्रुत्वं यद्वा छंदस्यरातिशब्दःशत्रुवाचीस्त्री-लिङ्गोभवति अदाताशत्रुः माईशत पराभवितुंशक्तोमाभूत् माविषयीकुर्यात् अरातिर्विशेष्यते देव-स्यचमर्त्यस्यचसंबन्धिनी तैःकारिता उतअपिचतस्याउभयविधायाः द्विषः अस्मदरातेः पर्षि पूरय॥ २ ॥

२. अग्नि, मनुष्यों या देवों की शत्रुता हमें पराभूत न करे। हमें दोनों प्रकार के शत्रुओं से बचाओ।

विश्वाउतत्वयावयंधाराउदन्याइव। अतिगाहेमहिद्विषः ॥ ३ ॥

विश्वाः। उत। त्वया। वयम्। धाराः। उदन्याःऽइव।

अति। गाहेमहि। द्विषः ॥ ३ ॥

उतअपिचहेअग्ने वयंत्वदनुग्रहात्विश्वाद्विषः सर्वानपिद्वेष्टॄन्उदन्याधाराइवउदकसंबन्धिनी-र्धाराअल्पस्तुतीरिवत्मनाआत्मनैवअन्यनिरपेक्षेणातिगाहेमहि अभिक्रम्यगच्छेम॥ ३ ॥

३. अग्नि, जल की धारा की तरह हम सारे शत्रुओं को स्वयं ही लाँघ जायँगे।

अथचतुर्थी—

शुचिःपावकवन्द्योग्नेबृहद्विरोचसे। त्वंघृतेभिराहुतः ॥ ४ ॥

शुचिः। पावक। वन्द्यः। अग्ने। बृहत्। वि। रोचसे।

त्वम्। घृतेभिः। आऽहुतः ॥ ४ ॥

हेपावकशोधकाग्ने शुचिः शुद्धोवन्द्यः नमस्कार्यःसन् बृहत् महत् अत्यधिकंविरोचसे विविधंदीप्यसे यतस्त्वंघृतेभिः घृतैराहुतः समन्तात्सिक्तः अतोविरोचसे ॥ ४ ॥

४. अग्नि, तुम शुद्ध, पवित्रकर्त्ता और वन्दनीय हो। घृत-द्वारा आहूत होकर तुम अत्यन्त दीप्त हुए हो।

त्वंनोअसिभारताग्नेवशाभिरुक्षभिः। अष्टापदीभिराहुतः ॥५॥

त्वम्। नः। असि। भारत। अग्ने। वशाभिः। उक्षऽभिः।

अष्टाऽपदीभिः। आऽहुतः ॥५॥

हेभारत ऋत्विजांपुत्रस्थानीयाग्नेनोस्मदीयः त्वंवशाभिः वन्ध्याभिः गोभिः उक्षभिः सेक्तृभिर्बलीवर्दैःअष्टापदीभिर्गर्भिणीभिश्चाहुतः आराधितोसि ॥ ५ ॥

५. भरणकर्त्ता अग्नि, तुम हमारे हो। तुम वन्ध्या गौ, वृष और गर्भिणी गौ-द्वारा आहूत हुए हो।

द्र्वन्नःसर्पिरासुतिःप्रत्नोहोतावरेण्यः। सहसस्पुत्रोअद्भुतः ॥६॥२८॥

द्रुऽअन्नः। सर्पिःऽआसुतिः। प्रत्नः। होता। वरेण्यः।

सहसः। पुत्रः। अद्भुतः ॥ ६ ॥ २८ ॥

द्रुन्नः समिद्रूपान्नः सर्पिरासुतिः सर्पिरासूयतेआसिच्यतेयस्मिन्तादृशः प्रत्नःपुरातनः होताहोमनिष्पादकः वरेण्योवरणीयः सहसस्पुत्रः सहसोबलस्यपुत्रस्थानीयः बलेनोत्पन्नत्वात् अद्भुतआश्चर्यभूतोरमणीयइत्यर्थः एवंमहानुभावोग्निः मामनुजानात्वित्यर्थः ॥ ६ ॥

६. जिनका अन्न समिधा है, जिनमें घृत सिक्त होता है, वे ही पुरातन, हीमनिष्पादक, वरणीय और बल के पुत्र अग्नि अतीव रमणीय हैं।

॥ इतिद्वितीयस्यपञ्चमेष्टाविंशोवर्गः ॥ २८ ॥

वाजयन्निवेतिषड्चमष्टमंसूक्तं सोमाहुतेर्हेशब्दानुवृत्तस्याभावान्मण्डलद्रष्टागृत्समदऋषिः अग्निर्देवता हिशब्दाद्गायत्रीछन्दः अन्त्यानुष्टुप् वाजयन्निवान्त्यानुष्टुबित्यनुक्रान्तम् प्रातरनुवाकाश्विनशस्त्रयोस्तृतीयसूक्तत्वेनास्योच्चमावर्जितस्यविनियोगउक्तः।

तत्रप्रथमा—

वाजयन्निवनूरथान्योगाँअग्नेरुपस्तुहि । यशस्तमस्यमीळ्हुषः॥१॥

वाजयन्ऽइव । नु । रथान् । योगान् । अग्नेः । उप । स्तुहि ।

यशःऽतमस्य । मीळ्हुषः ॥ १ ॥

हेअन्तरात्मन् नुक्षिप्रंअग्नेर्योगानश्वान् उपस्तुहि कीदृशस्याग्नेः यशस्तमस्यप्रवृद्धयशसः त्वमर्थोलुप्यते मीळ्हुषः सेकुः फलस्य ईदृशस्ययोगान् स्तुहि होतरितिवासंबोध्यं स्तुतौदृष्टान्तः— वाजयन्निवअन्नमिच्छन् पुरुषइव सयथाअश्वान् गमनायस्तौतितद्वत् यद्वोकलक्षणस्याग्नेर्गमनसाधनान् रथान् स्तुहि ॥ १ ॥

१. होता, अन्नाभिलाषी पुरुष की तरह प्रभूत यशवाले और अभीष्टदाता अग्नि के अश्वों की स्तुति करो।

यःसुनीथोददाशुषेजुर्योजरयन्नरिम् । चारुप्रतीकआहुतः ॥ २ ॥

यः । सुऽनीथः । ददाशुषे । अजुर्यः । जरयन् । अरिम् ।

चारुऽप्रतीकः । आऽहुतः ॥ २ ॥

सुनीथःशोभननयनः अजुर्यः अजरणीयः अनभिभाव्यः चारुप्रतीकः शोभनोपक्रमोयोस्तिसोग्निः ददाशुषेहविर्दत्तवते यजमानायतदर्थं अरिंतस्यशत्रुं जरयन् नाशयन् आहुतः समन्तात् आराधितोभवति ॥ २ ॥

२. सुनेता, अजर और मनोहर गतिवाले अग्नि हविर्दाता यजमान के शत्रु-नाश के लिए आहूत हुए हैं।

यउश्रियादमेष्वादोषोषसिप्रशस्यते । यस्यव्रतंनमीयते ॥ ३ ॥

यः । ऊँ इति । श्रिया । दमेषु । आ । दोषा । उषसि ।

प्रऽशस्यते । यस्य । व्रतम् । न । मीयते ॥ ३ ॥

योग्निःश्रियाज्वालयायुक्तःसन्दमेषु गृहेषुआ आगत्य दोषारात्रिषु उषसि अहःसुच प्रशस्यते स्तूयते यस्याग्नेर्व्रतंकर्मनमीयते नहिंस्यते नक्षीयतेवा उःपूरणः ॥ ३ ॥

३. सुन्दर ज्वालावाले जो अग्नि गृह में आते हुए दिन-रात स्तुत होते हैं, उनका व्रत कभी नहीं क्षीण होता।

आयःस्वर्णभानुनाचित्रोविभात्यर्चिषा। अञ्जानोअजरैरभि ॥४॥

आ । यः । स्वः । न । भानुना । चित्रः । विऽभाति । अर्चिषा ।

अञ्जानः । अजरैः । अभि ॥ ४ ॥

योऽग्निश्चित्रः चायनीयः नानावर्णोवाअर्चिषाज्वालयारश्मिसमूहेन आविभाति सर्वतोभासते तत्रदृष्टान्तः—स्वर्नभानुना किरणेनसूर्यइव सयथाविभातितद्वत् किंकुर्वन् अजरैर्नित्यैः ज्वालासमूहैः अभिसर्वतःअञ्जानः व्यञ्जयन् प्रकाशयन् ॥ ४ ॥

४. जैसे किरण-रूप सूर्य प्रकाशित होते हैं, विचित्र अग्नि भी अजर शिखाओं-द्वारा चारों ओर प्रकाशित होकर वैसे ही रश्मियों-द्वारा सुशोभित होते हैं।

**अत्रिमनुस्वराज्यमग्निमुक्थानिवावृधुः। विश्वाअधिश्रियोदधे॥५॥**

**अत्रिम्। अनु। स्वऽराज्यम्। अग्निम्। उक्थानि। ववृधुः। विश्वाः। अधि। श्रियः। दधे॥ ५॥**

अत्रिंशत्रूणामत्तारं वाभक्षकं स्वराज्यं स्वयमेव राजमानंस्वाराज्यमनु अभिलक्ष्यवाग्निं उक्थानिशस्त्राणिववृधुः वर्धयन्ति सचाग्निर्विश्वाः सर्वाःश्रियःशोभाः अधिदधे अधिकं धारयति ॥ ५ ॥

५. शत्रुओं के विनाशक और स्वयं सुशोभित अग्नि के लिए सारे ऋङ् मन्त्र प्रयुक्त होते हैं। अग्नि ने सारी शोभायें धारण की हैं।

**अग्नेरिन्द्रस्यसोमस्यदेवानामूतिभिर्वयम्।**
**अरिष्यन्तःसचेमह्यभिष्यामपृतन्यतः॥ ६ ॥ २९ ॥**

**अग्नेः। इन्द्रस्य। सोमस्य। देवानाम्। ऊतिऽभिः। वयम्॥ अरिष्यन्तः। सचेमहि। अभि। स्याम। पृतन्यतः॥ ६ ॥ २९ ॥**

अरिष्यन्तः केनाप्यहिंस्यमानावयं अग्नेरिन्द्रस्यसोमस्यदेवानामन्येषामपिऊतिभीरक्षाभिः सचेमहि सङ्गच्छेमहि युक्ताभवेम तथारक्षायुक्तावयंपृतन्यतः पृतनामात्मनइच्छन्तः शत्रूनभिष्याम अभिभवेम पृतनाशब्दात्क्यचि कव्यध्वरपृतनस्यर्चिलोपइत्यवर्णलोपः ॥ ६ ॥

६. हमने अग्नि, इन्द्र, सोम और अन्य देवों का प्रश्रय प्राप्त किया है। हमारा कोई अनिष्ट नहीं कर सकता। हम शत्रुओं को जीतेंगे।

॥ इतिद्वितीयस्यपञ्चमेएकोनत्रिंशोवर्गः ॥ २९ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेपञ्चमोध्यायः ॥ ५ ॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योऽखिलंजगत्। निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम् ॥ १ ॥
वागीशाद्याःसुमनसःसर्वार्थानामुपक्रमे। यंनत्वाकृतकृत्याःस्युस्तंनमामिगजाननम् ॥ २ ॥

निहोतेतिषळ्चंनवमंसूक्तंगृत्समदस्यार्षं निहोतेत्यनुक्रान्तत्वात् अनुक्तत्वात्त्रिष्टुप् मण्डलादिपरिभाषयाग्निर्देवता प्रातरनुवाकाश्विनशस्त्रयोराग्नेयेक्रतौत्रैष्टुभेछन्दस्यस्यविनियोगः अथैतस्याइतिखण्डेसूत्रितम्—निहोताहोतृषदनइतिसूक्तेइति अग्निप्रणयनेआद्येऋचौविनियुक्ते पञ्चम्यांपौर्णमास्यामितिखण्डेसूत्रितम्—निहोताहोतृषदनेविदानइतिद्वेइति।

तस्मिन्सूक्तेप्रथमा—

ॐम् निहोताहोतृषदनेविदानस्त्वेषोदीदिवाँअसदत्सुदक्षः।
अदब्धव्रतप्रमतिर्वसिष्ठःसहस्रंभरःशुचिजिह्वोअग्निः ॥ १ ॥

नि। होता। होतृऽसदने। विदानः। त्वेषः। दीदिऽवान्।
असदत्। सुऽदक्षः। अदब्धव्रतऽप्रमतिः। वसिष्ठः। सहस्रम्ऽभरः।
शुचिऽजिह्वः। अग्निः ॥ १ ॥

गृत्समदःस्तौति होतादेवानामाह्वाताविदानोविद्वान् त्वेषः प्रवृद्धः दीदिवान् दीप्यमानः सुदक्षः शोभनबलः अदब्धव्रतप्रमतिः अदब्धानिअहिंसितानिव्रतानिकर्माणियस्याःसाअदब्धव्रतप्रमतिः प्रकृष्टाबुद्धिःयस्य सतथोक्तः वसिष्ठः सर्वस्यवासयितृतमः वासयतेस्तृजन्तस्यइष्ठनिरूपं सहस्रंभरः सहस्रस्यानेकविधस्यभर्ताविहरणेननानाविधरूपस्यधारकइत्यर्थः यद्वा सहस्रस्यसर्वस्यभर्ता तथाचवाजसनेयकम्—सर्वंवैसहस्रंसर्वंभरइत्येवतदाहेति। शुचिजिह्वः शुचिर्दीप्ताजिह्वाज्वालायस्यसतथोक्तः एवंभूतोग्निः होतृषदने होतात्रसीदतीतिहोतृषदनमुत्तरावेदी अधिकरणेल्युट् तत्रन्यसदत् नितरांसीदतु उक्तार्थेब्राह्मणम्—निहोताहोतृषदनेविदानइत्यग्निर्वैदेवानांहोतातस्यैतद्धोतृषदनंयदुत्तरवेदीनाभिस्त्वेषोदीदिवाँअसदत्सुदक्षइत्यासन्नोहिसतर्हिभवत्य-

दग्धव्रतप्रमतिर्वसिष्ठइत्यग्निर्वैदेवानांवसिष्ठःसहस्रंभरःशुचिजिह्वोअग्निरित्येषाहवाअस्यसहस्रंभ-रतायदेनमेकंसन्तंबहुधाविहरन्तीति ॥ १ ॥

१. अग्नि देवों के होता, विद्वान्, प्रज्वलित, दीप्तिमान्, प्रकृष्ट-बलशाली, अप्रतिहत, अनुग्रह-विशिष्ट, निवासदाता, सबके भरण-कर्त्ता और विशुद्ध शिखावाले हैं। होता के भवन में अग्नि अच्छी तरह बैठें।

त्वंदूतस्त्वमुनःपरस्पास्त्वंवस्यआवृषभप्रणेता ।
अग्नेतोकस्यनस्तनेतनूनामप्रयुच्छन्दीद्यद्बोधिगोपाः ॥ २ ॥

त्वम् । दूतः । त्वम् । ऊँ इति । नः । परःऽपाः । त्वम् । वस्यः । आ । वृषभ । प्रऽनेता । अग्ने । तोकस्य । नः । तने । तनूनाम् । अप्रऽयुच्छन् । दीद्यत् । बोधि । गोपाः ॥ २ ॥

हेवृषभ अभिमतफलवर्षक हेअग्ने त्वंदूतः अस्मदीययज्ञेदेवाह्वानार्थंदूतोभव त्वमुत्वमेवनोस्माकं परस्पाः आपद्भ्यः पारयितापाताचभव किञ्च त्वंवस्योवसुनोधनस्यआप्रणेताअस्मदाभिमुख्येनप्रापयिताभव अप्रयुच्छन्अप्रमाद्यन्दीद्यत्दीदयतिर्दीप्तिकर्मा शोभमानः त्वंनोस्माकं तोकस्यपुत्रस्यतने तनोतिविस्तारयतिकुलमितितनःपौत्रः तस्मिन्अस्मदीयानांतनूनांगोपाः गोपायितातथाचब्राह्मणम्—अग्निर्वैदेवानांगोपाअग्निमेवतत्सर्वतोगोप्तारंपरिदत्तआत्मनेचयजमानायचेति । तादृशस्त्वंचगोपायिताभवामीतिबोधिबुध्यस्व ॥ २ ॥

२. अभीष्ट-वर्षक अग्नि, तुम हमारे दूत बनो। हमें आपद् से बचाओ। हमें धन दो। प्रमाद-शून्य और दीप्तिशाली होकर हमारे और हमारे पुत्रों के रक्षक बनो। अग्नि, जागो।

विधेमतेपरमेजन्मन्नग्नेविधेमस्तोमैरवरेसधस्थे ।
यस्माद्योनेरुदारिथायजेतंप्रत्वेहवींषिजुहुरेसमिद्धे ॥ ३ ॥

विधेम । ते । परमे । जन्मन् । अग्ने । विधेम । स्तोमैः । अवरे । सधऽस्थे । यस्मात् । योनेः । उत् । आरिथ । यजे । तम् । प्र । त्वे इति । हवींषि । जुहुरे । सम्ऽइद्धे ॥ ३ ॥

हेअग्ने परमेउत्कृष्टेजन्मन्जायतेप्रादुर्भवत्यस्मिन्नितिजन्मस्थानंद्यौः तस्मिन्द्युलोकेवस्थि-तायतेतुभ्यंविधेम स्तुतिभिःपरिचरेम अवरेद्युलोकादधस्तनेसधस्थेन्तरिक्षेस्थितायतुभ्यंस्तोमैः

१ ऐ० ब्रा० १. २८. । २ ऐ० ब्रा० १. १. २८. ।

स्तोत्रैर्विधेम परिचरेम यद्यस्माद्योनेःपृथिवीरूपातस्थानात्त्वमुदारिथ उद्गतोसि प्रादुर्भूतोसि तं पृथिवीप्रदेशंयजेपूजयामि तत्रहिसमिद्धेसमिद्भिःसमिध्यमानेत्वेत्वयि हवींषिपुरोडाशादीनि प्रजुहुरेअध्वर्य्वादयः प्रजुह्वति जुहोतेर्लिटिरूपम् ॥ ३ ॥

३. अग्नि, हम तुम्हारे उत्तम जन्मस्थान में तुम्हारी सेवा करेंगे। जिस स्थान से तुम उद्‌गत हुए हो, उसकी भी पूजा करेंगे। वहाँ तुम्हारे प्रज्वलित होने पर अध्वर्यु लोग तुम्हें लक्ष्य कर हव्य प्रदान करते हैं।

अग्ने॒यज॑स्वह॒विषा॒यजी॑याञ्छ्रु॒ष्टीदे॒ष्णम॒भिगृ॑णीहि॒राधः॑ ।
त्वंह्यसि॑रयि॒पती॑रयी॒णांत्वंशु॒क्रस्य॒वच॑सोम॒नोता॑ ॥ ४ ॥

अग्ने॑ । यज॑स्व । ह॒विषा॑ । यजी॑यान् । श्रु॒ष्टी । दे॒ष्णम् । अ॒भि । गृ॒णी॒हि॒ । राधः॑ । त्वम् । हि । असि॑ । र॒यि॒ऽपतिः॑ । र॒यी॒णाम् । त्वम् । शु॒क्रस्य॑ । वच॑सः । म॒नोता॑ ॥ ४ ॥

हेअग्ने यजीयान् यष्टृतमस्त्वं हविषास्मद्दत्तेनयजस्व देवान्संयोजयदेष्णंदेयंराधोन्नंश्रुष्टी श्रुष्टोतिक्षिप्रनाम क्षिप्रंअभिगृणीहि देवानांपुरतः इदंस्वादुतरमिदंस्वादुतरमितिब्रूहि यद्वा श्रुष्टी-क्षिप्रकारी त्वंदेष्णंदेयंराधोधनंअभिगृणीहि अस्मदाभिमुख्येनब्रूहिप्रयच्छेत्यर्थः दानसामर्थ्यं-दर्शयति त्वंरयीणांधनानांमध्येरयिपतिः उत्तमधनस्यपतिरसिहि यद्वा रयीणांरयिपतिरित्य-त्रैकोरयिशब्दोनुवादः त्वंशुक्रस्यदीप्तस्यवचसः अस्मदीयस्यस्तोत्रस्यमनोताप्रज्ञाताभवसि यद्वा मानयिता ॥ ४ ॥

४. अग्निदेव, याज्ञिकों में तुम श्रेष्ठ हो। हव्य-द्वारा तुम यज्ञ करो। तत्पर होकर तुम देवों के पास हमारे दिये जाने योग्य अन्न की प्रशंसा करो। तुम धनों में उत्कृष्ट धन के अधिपति हो। तुम हमारे प्रदीप्त स्तोत्र को जानो।

उ॒भयं॑न्ते॒नक्षी॑यतेव॒स॒व्यं॑दि॒वेदि॑वे॒जाय॑मानस्यदस्म ।
कृ॒धिक्षु॒मन्तं॒जरि॒तार॑मग्नेकृ॒धिपतिं॑स्वप॒त्यस्य॑रा॒यः ॥ ५ ॥

उ॒भय॑म् । ते॒ । न । क्षी॒य॒ते॒ । व॒स॒व्य॑म् । दि॒वेऽदि॑वे । जाय॑मानस्य । द॒स्म॒ । कृ॒धि । क्षु॒ऽमन्त॑म् । ज॒रि॒तार॑म् । अग्ने॒ । कृ॒धि । पति॑म् । सु॒ऽअ॒प॒त्यस्य॑ । रा॒यः ॥ ५ ॥

दस्मदर्शनीयहेअग्ने दिवेदिवेप्रतिदिनमग्निहोत्रकालेजायमानस्यते तवउभयंवसव्यंदिव्यं भौमंचवसु वस्वादित्वात्स्वार्थिकोयप्रत्ययः तादृशमुभयंवसुनक्षीयते नहीयतेअस्योभयविधध-

नसद्भावेमघवर्णः त्वंह्यग्नेदिव्यस्यराजसित्वंपार्थिवस्ये त्यंत्रोक्तः। अतस्त्वंजरितारं तवस्तोत्रंकुर्वा-णमिमंयजमानंक्षुमन्तमन्नवन्तं कीर्तिमन्तंवाकृधिकुरु किञ्च स्वपत्यस्यशोभनापत्ययुक्तस्यरायो-धनस्यपतिं स्वामिनंकृधिकुरु ॥ ५ ॥

५. दर्शनीय अग्नि, तुम प्रतिदिन उत्पन्न होते हो। तुम्हारा दिव्य और पार्थिव धन नष्ट नहीं होता। फलतः तुम स्तोत्रकर्त्ता यजमान को अन्न-युक्त करो। उसे सुन्दर अपत्यवाले धन का स्वामी बनाओ।

साकमेधेपर्वणिपूर्वेद्युरनुसवनंतिस्रइष्टयःकर्तव्याः प्रथमायामग्नेरनीकवतःसैनानीकेनेति-याज्या तथाततःसाकमेधाइतिखण्डेसूत्रितम्—सैनानीकेनसुविदत्रोअस्मेइति।

सैषासूक्तेषष्ठी—

सैनानीकेनसुविदत्रोअस्मेयष्टादेवाँआयजिष्ठःस्वस्ति।
अदब्धोगोपाउतनःपरस्पाअग्नेद्युमदुतरेवद्दिदीहि ॥ ६ ॥ १ ॥

सः। एना। अनीकेन। सुऽविदत्रः। अस्मे। इति यष्टा। देवान्। आऽयजिष्ठः। स्वस्ति। अदब्धः। गोपाः। उत। नः। परःऽपाः। अग्ने। द्युऽमत्। उत। रेवत्। दिदीहि ॥ ६ ॥ १ ॥

हेअग्ने सतादृशस्त्वं एना अनेनानीकेन ज्वालासमूहेनयुक्तस्त्वं सुविदत्रः सुप्रज्ञः सुध-नोवास्मेअस्माकंभव देवान्यष्टा देवानांहविःप्रदानेनपूजकः आयजिष्ठः यष्टृतमः अदब्धः केनाप्यतिरस्कृतः गोपाःदेवानां गोपायिता उतापिचनोस्माकंपरस्पाः दुरितेभ्यःपारयिताचत्वं द्युमद्कान्तियुक्तं उतापिचरेवद् धनयुक्तंयथाभवतितथास्वस्तिदिदीहि क्षेमेणसर्वतोदीप्यस्व ॥६॥

६. अग्निदेव, तुम अपने दल के साथ हमारे प्रति अनुग्रह करो। तुम दोनों के याजक, सर्वापेक्षा उत्तम यज्ञकर्त्ता, देवों के रक्षक और हमारे पालक हो। कोई तुम्हारी हिंसा नहीं कर सकता। धन और कान्ति से युक्त होकर तुम चारों ओर देदीप्यमान बनो।

जोहूत्रइतिषळृचंदशमंसूक्तंगात्सँमदं त्रैष्टुभमाग्नेयं जोहूत्रइत्यनुक्रान्तत्वात् सूक्तवि-नियोगः पूर्वेणसहोक्तः।

अथतस्मिन्सूक्तेप्रथमा—

जोहूत्रोअग्निःप्रथमःपितेवेळस्पदेमनुषायत्समिद्धः।
श्रियंवसानोअमृतोविचेतामर्मृजेन्यःश्रवस्यःसवाजी ॥ १ ॥

---

१ ऋ० सं० २. २. १३.।

जोहूत्रः । अग्निः । प्रथमः । पिताऽइंव । इळः । पदे । मनुंषा ।
यत् । सम्ऽइंद्धः । श्रियंम् । वसानः । अमृतः । विऽचेंताः ।
मर्मृजेन्यः । श्रवस्यः ।सः । वाजी ॥ १ ॥

जोहूत्रः सर्वैर्यज्ञार्थंह्वातव्योहोतव्योवा ह्वयतेर्जुहोतेर्वारूपम् तादृशः प्रथमः अग्निर्वै-देवानामवमइत्याम्नानात् । मुख्योयोग्निः यत् यदाइळः इलायाःपदेउत्तरवेद्यात्मकेस्थाने मनु-षामनुष्येणयजमानेनसमिद्धःसोग्निः पितेवदेवानांहविःप्रापणेनपालकोभवति श्रियंदीप्तिंव-सानः आच्छादयन् अमृतः मरणधर्मरहितः विचेताःविविधप्रज्ञः श्रवस्यः श्रवइत्यन्ननाम तस्मै हितः वाजीबलवान् सोग्निर्मर्मृजेन्यः सर्वैःपरिचरणीयोभवति यङ्लुगन्तात् केन्यप्रत्ययः॥१॥

१. अग्नि सबसे प्रथम होतव्य और पिता के समान हैं। अग्नि मनुष्यों द्वारा यज्ञ-स्थान में प्रज्वालित हुए हैं। वह दीप्ति-पूर्ण, मरण-रहित, विभिन्न-प्रज्ञा-युक्त, अन्नवान्, बलवान् और सबके सेवनीय हैं।

श्रूयाअग्निश्चित्रभानुर्हवंमेविश्वाभिर्गीर्भिरमृतोविचेंताः ।
श्यावारथंवहतोरोहिंतावोतारुषाहचक्रेविभृंत्रः ॥ २ ॥

श्रुयाः । अग्निः । चित्रऽभानुः । हवंम् । मे । विश्वाभिः । गीःऽभिः ।
अमृतः । विऽचेंताः । श्यावा । रथंम् । वहतः । रोहिंता । वा । उत ।
अरुषा । अहं । चक्रे । विऽभृंत्रः ॥ २ ॥

अमृतोमरणधर्मरहितोविचेताविशिष्टप्रज्ञः चित्रभानुः विचित्रदीप्तिः चायनीयदीप्तिर्वा सोग्निः विश्वाभिर्गीर्भिः स्तुतिसाधनभूतैः सर्वैर्वाक्यैः क्रियमाणं मे मम हवं स्तोत्रंश्रूयाः शृणो-तु तस्याग्नेरथं श्यावाश्याववर्णौ अश्वौवहतः वाअपिवा रोहितारोहिद्वर्णौ उतापिच अरुषाआ-रोचमानावश्वौरथं वहतः रोहिद्वर्णयोरश्वयोःश्यावादिवर्णपरिग्रहःस्वेच्छयाभवति विभृत्रः नानास्थानेषु विहृतःचक्रेअहऋत्विग्भिरकारिखलु करोतेःकर्मणिलिट् ॥ २ ॥

२. अमर, विशिष्ट प्रज्ञावाले, विचित्र दीप्ति-युक्त अग्नि मेरे सब स्तुति-युक्त आह्वान सुनें। दो लाल घोड़े अग्नि का रथ वहन करते हैं। वे विविध स्थानों में जाते हैं।

अथतृतीया—

उत्तानायामजनयन्त्सुषूंतंभुवंदग्निःपुरुपेशांसुगर्भः ।
शिरिणायांचिदक्तुनामहोभिरपरीवृतोवसतिप्रचेंताः ॥ ३ ॥

---

ऐ० ब्रा० १. १.

उत्तानायाम् । अजनयन् । सुऽसूतम् । भुवत् । अग्निः । पुरुऽपेशासु । गर्भः । शिरिणायाम् । चित् । अक्तुना । महःऽभिः । अपरिऽवृतः । वसति । प्रऽचेताः ॥ ३ ॥

उत्तानायामुत्तानेशयायामरण्यांसुषूतंअग्निहोत्रार्थंसुष्ठुप्रेरितमग्निमजनयन् अध्वर्य्यवाद-यउदपादयन् सोग्निःपुरुपेशासु पेशइतिरूपनाम बहुरूपास्वोषधीषुगर्भोभुवत् अन्तर्वर्तमानत-यागर्भइवभवेत् भवतेर्लिङ्गिरूपं शिरिणायांचित्शीर्यतेस्यांभूतानीतिशिरिणारात्रिः तस्यामपिअ-क्तुनाअञ्जनादक्तुस्तमः तेनतमसाअपरिवृतःअसंस्पृष्टः अतएवमहोभिस्तेजोभिर्युक्तः प्रचेताः प्रकृष्टप्रज्ञःसन्वसति दीप्यमानोवर्तते ॥ ३ ॥

३. अध्वर्यु लोगों ने ऊर्ध्वमुख अरणि या काष्ठ में प्रेरित अग्नि को उत्पन्न किया है। अग्नि विविध ओषधियों में गर्भरूप से अवस्थित हैं। रात में उत्तम-ज्ञानवान् अग्नि, महादीप्ति-युक्त होकर वास करते हैं। उन्हें अन्धकार नहीं छिपा सकता।

जिघर्म्यग्निंहविषाघृतेनप्रतिक्षियन्तंभुवनानिविश्वा ।
पृथुंतिरश्चावयसाबृहन्तंव्यचिष्ठमन्नैरभसंदृशानम् ॥ ४ ॥

जिघर्मि । अग्निम् । हविषा । घृतेन । प्रतिऽक्षियन्तम् । भुवनानि । विश्वा । पृथुम् । तिरश्चा । वयसा । बृहन्तम् । व्यचिष्ठम् । अन्नैः । रभसम् । दृशानम् ॥ ४ ॥

विश्वासर्वाणिभुवनानिप्रतिक्षियन्तंवैश्वानरात्मनाधितिष्ठन्तं पृथुंमहान्तं तिरश्चासर्वतःप्रव-र्तमानेनवयसापेशसाबृहन्तंप्रवृद्धं अन्नैर्हविर्लक्षणैर्व्यचिष्ठंव्याप्तं रभसंबलवन्तंदृशानं एवंगुणवत्त-यादृश्यमानमग्निंपुरोडाशादिलक्षणेनहविषाघृतेनचजिघर्मि सिञ्चामि प्रतिक्षेषसर्वाणिभूतानिक्षेति पृथुंतिरश्चावयसाधूमेनबृहन्तंव्यचिष्ठमन्नैरभसंदृशानमित्यवकाशनवन्तमन्नैरत्रादंदीप्यमानमित्ये वदाविश्वतइत्यासर्वतःप्रत्यंचंजुहोमीत्येतदरक्षसेत्यहेळमानेनमनसेदंजुषेतेत्येतन्मर्यश्रीरितिमर्य-श्रीरित्येषस्पृहयद्वर्णोअग्निर्नाभिमृशइतिनैषमृशेतदीप्यमानोभवतीति ॥ ४ ॥

४. सारे भुवनों के अधिष्ठाता, महान्, सर्वत्रगामी, शरीरवान्, प्रवृद्ध हव्य-द्वारा व्याप्त, बलवान् और सबके दृश्यमान अग्नि की हम हव्य-घृत के द्वारा पूजा करते हैं।

आविश्वतःप्रत्यञ्चंजिघर्म्यरक्षसामनसातज्जुषेत ।
मर्यश्रीःस्पृहयद्वर्णोअग्निर्नाभिमृशेतन्वा३जर्भुराणः ॥ ५ ॥

आ । वि॒श्वतः॑ । प्र॒त्यञ्च॑म् । जि॒घ॒र्मि॒ । अ॒र॒क्षसा॑ । मन॑सा । तत् ।
जु॒षे॒त॒ । मर्य॑ऽश्रीः । स्पृ॒ह॒यत्ऽव॑र्णः । अ॒ग्निः । न । अ॒भि॒ऽमृशे॑ ।
त॒न्वा॑ । जर्भु॑राणः ॥ ५ ॥

विश्वतः सर्वत्रव्याप्यवर्तमानंप्रत्यंचंयज्ञंप्रत्यागच्छन्तं आग्नेयेनघृतेनआजिघर्मि आसि-ञ्चामि अरक्षसाबाधकरहितेनमनसास्तोत्रेणसहतदाज्यंजुषेत भवान्सेवेत मर्यश्रीः मर्त्यैर्मर्त्यैः श्र-यणीयोभजनीयः स्पृहयद्वर्णंयादृशंवर्णंयजमानःस्पृहयति तादृशवर्णोपेतः तन्वातेजसाजर्भु-राणः पूर्यमाणोग्निः नाभिमृशे अतितेजस्वितयाअभिमर्शनीयोनभवति अभिपूर्वान्मृशेःकृ-त्यार्थेकेन्प्रत्ययः ॥ ५ ॥

५. सर्वव्यापी और यज्ञ के अभिमुख आने की इच्छा करते हुए अग्नि को घृत-द्वारा हम सिक्त करते हैं। वे शान्त चित्त से उस घृत को ग्रहण करें। मनुष्यों के भजनीय और श्लाघनीय वर्णवाले अग्नि के पूर्ण प्रज्वलित होने पर उन्हें कोई छू नहीं सकता।

ज्ञे॒या भा॒गं स॑हसा॒नो वरे॑ण॒ त्वादू॑तासो मनु॒वद्व॑देम ।
अनू॑नम॒ग्निं जु॒ह्वा॑ वच॒स्या म॑धु॒पृचं॑ धन॒सा जो॑हवीमि ॥ ६ ॥ २ ॥
ज्ञे॒याः । भा॒गम् । स॒ह॒सा॒नः । वरे॑ण । त्वाऽदू॑तासः । म॒नु॒ऽवत् ।
व॒दे॒म॒ । अनू॑नम् । अ॒ग्निम् । जु॒ह्वा॑ । व॒च॒स्या । म॒धु॒ऽपृच॑म् ।
ध॒न॒ऽसाः । जो॒ह॒वी॒मि॒ ॥ ६ ॥ २ ॥

वरेणवारयत्यनेनशत्रूनितिवरंतेजः तेनसहमानः शत्रूनभिभवन्त्वंभागंभजनीयंस्तोत्रंज्ञे-याः जानीहि आशीर्लिङि वान्यस्यसंयोगादेरित्येत्वं त्वादूतासः त्वंदूतोयेषामसितेत्वादूतासः यद्वा त्वयाप्रेरितावयंमनुवन्मनुरिव वदेम स्तोत्रं ब्रूयाम जुह्वा हूयतेस्यामितिजुहूर्ज्वालापात्रविशेषोवा तयाअनूनंसंपूर्णंमधुपृचं मधुनाकर्मफलेनयजमानंसंयोजयन्तमग्निंधनसाः धनस्यसंभक्ताहंवच-स्यास्तुतिकामनयाजोहवीमि आह्वयामि॥ ६ ॥

६. अपने तेजोबल से शत्रुओं को पराजित करने के समय, हे अग्नि, तुम हमारी सम्भोग-योग्य स्तुति को जानो। तुम्हारा आश्रय पाकर हम मनु की तरह स्तोत्र करते हैं। उन बहुल-मधुस्पर्शी और धन-प्रद अग्नि का जुहू और स्तुति-द्वारा मैं आह्वान करता हूँ।

श्रुधीहवमित्येकविंशत्यृचमेकादशंसूक्तम् गार्त्समदं अत्रानुक्रमणिका श्रुधिसैकैन्द्रंविरा-ट्स्थानन्त्यमितेन्त्यामिति विराट्स्थानात्रिष्टुप् तल्लक्षणमनुक्रमण्यामुक्तम्—नवकौवैराजस्त्रैष्टुभश्च द्वौवावैराजौनवकस्त्रैष्टुभश्चविराट्स्थानेति । अन्त्यात्रिष्टुप् विशेषस्यानुक्तत्वात् इन्द्रोदेवता प्रथम-

स्यचतुर्थेहनिमरुत्वतीयशस्त्रेदंसूक्तेनिविद्धाने तत्रेदंतृतीयंसूक्तं चतुर्थेहनीतिखण्डेसूत्रितं—श्रुधी-
हवमिन्द्रमरुत्वाँइन्द्रेतिमरुत्वतीयमिति ।

श्रुधीहवंमिन्द्रमारिषण्यःस्यामंतेदावनेवसूनाम् ।
इमाहित्वामूर्जोवर्धयन्तिवसूयवःसिन्धवोनक्षरन्तः ॥ १ ॥

श्रुधि । हवम् । इन्द्र । मा । रिषण्यः । स्याम । ते । दावने ।
वसूनाम् । इमाः । हि । त्वाम् । ऊर्जः । वर्धयन्ति । वसुऽयवः ।
सिन्धवः । न । क्षरन्तः ॥ १ ॥

गृत्समदःस्तौति हेइन्द्र मेहवंमदीयमिदंस्तोत्रं श्रुधि शृणु मारिषण्यः माहिंसीः इदमल्पं नसाधीयइतिमानिराकार्षीः दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यतीतिनिपातितः वयंतेतववसूनांदा-वनेदानायस्यामपात्रभूताभवेम इमाः अस्माभिर्दत्तानिवसूयवः दातुर्यजमानस्यधनमिच्छन्ति छन्दसिपरेच्छायांक्यच् तादृशानिक्षरंतः स्रवन्तः सिन्धवइव घृतक्षरणोपेतानिऊर्जोहविर्लक्षणा-न्यन्नानि त्वांवर्धयन्तिहि ॥ १ ॥

१. इन्द्र, तुम मेरी स्तुति सुनो। तिरस्कार नहीं करना। हम तुम्हारे धन-दान के पात्र हैं। नदी की तरह प्रवाहशाली यह हव्य यजमान के लिए धनेच्छा करता है। यह तुम्हें वर्द्धित करे।

सृजोमहीरिन्द्रयाअपिन्वःपरिष्ठिताअहिनाशूरपूर्वीः ।
अमर्त्यंचिद्दासंमन्यमानमवाभिनदुक्थैर्वावृधानः ॥ २ ॥

सृजः । महीः । इन्द्र । याः । अपिन्वः । परिऽस्थिताः ।
अहिना । शूर । पूर्वीः । अमर्त्यम् । चित् । दासम् । मन्यमानम् ।
अव । अभिनत् । उक्थैः । वावृधानः ॥ २ ॥

शूरशत्रूणांहिंसक हेइन्द्र याअपोऽपिन्वः अवर्धयः पूर्वीः प्रभूतास्ताअहिनामेघेनवृत्रेण वापरिष्ठिताः अधिष्ठिताः आक्रान्ताः ततस्त्वंतस्मादहेःसकाशात्महीः महतीः अपः सृजः व्यसृजः उक्थैःशस्त्रैर्वावृधानोवर्धमानस्त्वंदासंसर्वस्योपक्षपयितारंअमर्त्यंचिन्मरणधर्मरहितमे-वात्मानंमन्यमानंतमसुरंअवाभिनत् अवाङ्मुखंयथाभवतितथाहिंसितवानित्यर्थः भिदिरुभिदारणे लङिसिपिरूपम् ॥ २ ॥

२. शूर इन्द्र, तुमने जो जल बरसाया था, वृत्र ने उसी प्रभूत जल पर आक्रमण किया था। तुमने उस जल को छोड़ दिया था। उस दस्यु या दास (वृत्र) ने अपने को अमर समझा था। स्तुति-द्वारा वर्द्धित होकर उसको तुमने नीचे पटक दिया।

उक्थेष्विन्नुशूरयेषुचाकन्स्तोमेष्विन्द्ररुद्रियेषुच।
तुभ्येदेतायासुमन्दसानःप्रवायवेसिस्रतेनशुभ्राः ॥ ३ ॥

उक्थेषु। इत्। नु। शूर। येषु। चाकन्। स्तोमेषु। इन्द्र।
रुद्रियेषु। च। तुभ्य। इत्। एताः। यासु। मन्दसानः। प्र।
वायवे। सिस्रते। न। शुभ्राः ॥ ३ ॥

हेशूरेन्द्र येषुहोत्रादिभिःक्रियमाणेषुशस्त्रेषुरुद्रियेषु रुद्रियंसुखं तत्साधनभूतेषु यद्वा रुद्राः स्तोतारः तत्कृतेषुउद्गातॄणांस्तोमेषुचनुक्षिप्रंचाकन् स्तुतीःकामयसे कमतेःकनतेर्वायङ्लुकिरूपम् इत्पूरणः यासुस्तोत्रशस्त्ररूपासुस्तुतिषुमन्दसानोहृष्यन्भवसिताएताःशुभ्राः दीप्यमानाः स्तुतयः वायवेअस्मदीयंयज्ञं प्रत्यागच्छते तुभ्येत् तुभ्यमेवप्रसिस्रते त्वदर्थमेवप्रसरन्ति नसम्प्रत्यर्थे ताअधुनासेवस्व ॥ ३ ॥

३. शूर इन्द्र, जिस सुखकर या रुद्रकृत उक्थ मंत्र और स्तोत्र की तुम इच्छा करते हो और जिसमें तुम्हें आनन्द मिलता है, वह सब शुभ्र और दीप्यमान स्तुति, यज्ञ के प्रति, तुम्हारे लिए प्रसूत होती है।

शुभ्रंनुतेशुष्मंवर्धयन्तःशुभ्रंवज्रंबाह्वोर्दधानाः।
शुभ्रस्त्वमिन्द्रवावृधानोअस्मेदासीर्विशःसूर्येणसह्याः ॥ ४ ॥

शुभ्रम्। नु। ते। शुष्मम्। वर्धयन्तः। शुभ्रम्। वज्रम्। बाह्वोः।
दधानाः। शुभ्रः। त्वम्। इन्द्र। ववृधानः। अस्मे इति। दासीः।
विशः। सूर्येण। सह्याः ॥ ४ ॥

हेइन्द्र तेतवशुभ्रंशोभनंशुष्मंबलंस्तोत्रैर्वर्धयन्तः शुभ्रंदीप्तंवज्रमायुधंनुक्षिप्रंतवबाह्वोर्दधानाः निदधानाः स्तूयमानोहीन्द्रोसुरवधायवज्रमादत्तइतीत्थंरूपेणायुधंदधानाभवामः वावृधानः स्तोत्रैर्वर्धमानः शुभ्रः तेजसायुक्तः त्वंअस्मेअस्माकंदासीः उपक्षपयित्रीः विशः आसुरीः प्रजाः सूर्येणसुष्ठुप्रेरकेणआयुधंहिप्रेरयति त्वंयुध्यस्वेति एवंरूपेणबाह्वोर्निहितेनवज्रेणसह्याः अभिभव सहतेर्ण्यत्ययेनलिङ्गिपरस्मैपदम् ॥ ४ ॥

४. इन्द्र, स्तोत्र-द्वारा हम तुम्हारा सुखकर बल वर्द्धित करते तथा तुम्हारे हाथों में दीप्त वज्र अर्पण करते हैं। वर्द्धित और तेजोयुक्त
२ होकर तुम दास लोगों को, सूर्य-रूप आयुध-द्वारा, पराभूत करते हो।

गुहाहितंगुह्यंगूळ्हमप्स्वपीवृतंमायिनंक्षियन्तम् ।
उतोअपोद्यांतस्तभ्वांसमहन्नहिंशूरवीर्येण ॥ ५ ॥ ३ ॥

गुहा । हितम् । गुह्यम् । गूळ्हम् । अप्ऽसु । अपिऽवृतम् ।
मायिनम् । क्षियन्तम् । उतो इति । अपः । द्याम् । तस्तभ्वांसम् ।
अहन् । अहिम् । शूर । वीर्येण ॥ ५ ॥ ३ ॥

हेशूरेन्द्र गुहागुहायांहितंनिहितं अतएवगुह्यं अप्रकाश्यंगूळ्हंगूढं अप्सुउदकेषुअपीवृतंतिरोहितं अत्रैकस्मिन्न तिरोधानरूपेर्थेपुनरुक्तयस्तिरोधानभूयस्त्वप्रतिपादनपराः अभ्यासेहिभूयानर्थो भवति यथाहोदर्शनीयाहोदर्शनीयेति तादृशंमायिनंमायाविनंअसुरंक्षियन्तं निवसंतं उतोअपिचअपोद्यां दिवंचतस्तभ्वांसं स्वसामर्थ्येनस्तंभयन्तं इत्थंभूतमहिमसुरंमेघंवावीर्येणसामर्थ्यभूतेन वज्रेण अहन् हतवानसि हनहिंसागंत्योरित्यस्यलङिरूपम् ॥ ५ ॥

५. शूर इन्द्र, गुहा में अवस्थित; अप्रकाश्य; लुक्कायित, तिरोहित और जल में अवस्थित जिस वृत्र ने अपनी शक्ति से अन्तरिक्ष और द्युलोक को विस्मित किया था, उसको वज्र-द्वारा तुमने विनष्ट किया था।

स्तवानुतंइन्द्रपूर्व्यामहान्युतस्तवामनूतनाकृतानि ।
स्तवावज्रंबाह्वोरुशन्तंस्तवाहरीसूर्यस्यकेतू ॥ ६ ॥

स्तव । नु । ते । इन्द्र । पूर्व्या । महानि । उत । स्तवाम । नूतना ।
कृतानि । स्तव । वज्रम् । बाह्वोः । उशन्तम् । स्तव । हरी इति ।
सूर्यस्य । केतू इति ॥ ६ ॥

हेइन्द्र पूर्व्यापुरातनानिमहानि महान्तितेतवकर्माणिनुक्षिप्रंस्तवस्तवाम उतअपिच नूतना अधुनातनानिकृतानिकर्माणिस्तवस्तवाम बाह्वोरुशन्तंदीप्यमानंवज्रंस्तवस्तवाम किञ्च सूर्यस्यसुष्ठुप्रेरकस्यसुवीर्यस्यवासूर्यात्मनोवाइन्द्रस्यकेतूप्रज्ञापकौ हरीएतन्नामकावश्वौ स्तव स्तवाम ष्टुञ्स्तुतौ तिङांतिङोभवन्तीतिउत्तमबहुवचनस्यमध्यमैकवचनादेशः बहुलंछन्दसीतिशपोलुगभावः ॥ ६ ॥

६. इन्द्र, हम तुम्हारी प्राचीन महत्कीर्तियों की स्तुति करते हैं तथा तुम्हारे आधुनिक कृतकर्मों की स्तुति करते हैं। तुम्हारे दोनों हाथों में दीप्यमान वज्र की स्तुति करते हैं। तुम सूर्यात्मा हो। तुम्हारे पताका-स्वरूप हरि नाम के अश्वों की हम स्तुति करते हैं।

हरीनुतंइन्द्रवाजयन्ताघृतश्चुतंस्वारमस्वार्ष्टाम् ।
विसंमनाभूमिरप्रथिष्टारंस्तपर्वतश्चित्सरिष्यन् ॥ ७ ॥

हरी इति । नु । ते । इन्द्र । वाजयन्ता । घृतऽश्चुतम् । स्वारम् ।
अस्वार्ष्टाम् । वि । समना । भूमिः । अप्रथिष्ट । अरंस्त ।
पर्वतः । चित् । सरिष्यन् ॥ ७ ॥

हेइन्द्र वाजयन्ता वेगंकुर्वन्तौ तत्करोतीतिणिच् तेतवहरीएतन्नामकावश्वौ घृतश्चुतंघृतस्योदकस्यच्यावयितारंस्वारंमेघध्वानिंनुक्षिप्रंअस्वार्ष्टां अशब्दयतांस्वरतिःशब्दकर्मा पाकंपचतीतिवदेकधातुरनुवादः लुङिरूपं समनासमस्थला यद्वा समनासर्वतोव्यप्रथिष्टगर्जनंश्रुत्वाममोपरिवृष्टिर्भवतीतिप्रथिताभूत् तथापर्वतश्चित्मेघोपिसरिष्यन् वर्षणार्थमितस्ततोगमिष्यन् अरंस्त अरमत रमतेर्लुङिरूपम् ॥ ७ ॥

७. इन्द्र, तुम्हारे शीघ्रगामी दोनों घोड़े जलवर्षी मेघध्वनि करते हैं। समतल पृथिवी मेघ-गर्जन सुनकर प्रसन्न हुई। मेघ ने भी इधर-उधर घूमकर शोभा प्राप्त की।

निपर्वतःसाद्यप्रयुच्छन्त्संमातृभिर्वावशानोअक्रान् ।
दूरेपारेवाणींवर्धयन्तइन्द्रेषितांधमनिंपप्रथन्नि ॥ ८ ॥

नि । पर्वतः । सादि । अप्रऽयुच्छन् । सम् । मातृऽभिः । वावशानः ।
अक्रान् । दूरे । पारे । वाणीम् । वर्धयन्तः । इन्द्रऽइषिताम् ।
धमनिम् । पप्रथन् । नि ॥ ८ ॥

अप्रयुच्छन्नप्रमाद्यन् वर्षणेसावधानःपर्वतोमेघःनिषादि नभसिनिषण्णआसीत् मातृभिरद्भिःमाध्यमिकाभिर्वाग्भिर्वासंवावशानःसहशब्दंकुर्वाणःअक्रान्अक्रमीत् इतस्ततःसञ्चारमकरोत् क्रमतेर्लङिबहुलंछन्दसीतिविकरणस्यलुक् दूरेपारेअतिदूरेन्तरिक्षेस्थितांवाणींमाध्यमिकांवाचंवर्धयन्तः स्तोत्रैःसमृद्धांकुर्वन्तःस्तोतारोमरुतोवाइन्द्रेषितामिन्द्रेणप्रेरितांधमनिंशब्दं कुर्वाणांतांवाचं नि नितरांपप्रथन् अप्रथयन् ॥ ८ ॥

८. प्रमाद-शून्य मेघ अन्तरिक्ष में आया और मातृ-भूत जल के साथ इधर-उधर घूमने लगा। मरुतों ने अत्यन्त दूर अन्तरिक्ष में अवस्थित शब्द को वर्द्धित करते हुए, इन्द्र-द्वारा प्रेरित उस शब्द को चारों ओर फैला दिया।

इन्द्रो॑म॒हांसिन्धु॑मा॒शया॑नंमाया॒विनं॑वृ॒त्रम॑स्फुर॒न्निः।
अरे॑जेतां॒रोद॑सीभिया॒नेकनि॑क्रदतो॒वृष्णो॑अस्य॒वज्रा॑त् ॥ ९ ॥

इन्द्रः॑। म॒हाम्। सिन्धु॑म्। आ॒ऽशया॑नम्। मा॒या॒ऽविन॑म्।
वृ॒त्रम्। अ॒स्फु॒र॒त्। निः। अरे॑जेताम्। रोद॑सी॒ इति॑। भि॒या॒ने
इति॑। कनि॑क्रदतः। वृष्णः॑। अ॒स्य॒। वज्रा॑त्॥ ९ ॥

बलवानिन्द्रः महांमहान्तंसिन्धुं स्यन्दतेइतस्ततःसञ्चरतीतिसिन्धुर्मेघः तमाशयानं तमधिष्ठायशयानंमायाविनंवृत्रमसुरं यद्वा सिन्धुरुदकंतदधिष्ठायशयानं वृत्रंवृणोत्याकाशमिति वृत्रोमेघः तंनिरस्फुरत् निरहन् वृष्णःवर्षकस्यअस्येन्द्रस्यकनिक्रदतः शब्दंकुर्वाणाद्वज्रात् भियानेभयंप्राप्तेरोदसीद्यावापृथिव्यौ अरेजेतां अकंपेतांदाधर्तिदर्धर्तीत्यादिनाकनिक्रदच्छब्दोनिपातितः॥ ९ ॥

९. बली इन्द्र ने इधर-उधर संचारी मेघ में अवस्थित मायावी वृत्र को मार गिराया। जलवर्षक इन्द्र के वज्र के व्यापक शब्द से भय पाकर द्यावा-पृथिवी कम्पित हुई।

अरो॑रवी॒द्वृष्णो॑अस्य॒वज्रोऽमा॑नुषं॒यन्मानु॑षो॒निजू॑र्वात्।
नि मा॒यिनो॑दान॒वस्य॑मा॒या अपा॑दयत्पपि॒वान्त्सु॒तस्य॑ ॥१०॥४॥

अरो॑रवीत्। वृष्णः॑। अ॒स्य॒। वज्रः॑। अमा॑नुषम्। यत्। मानु॑षः।
नि॒ऽजूर्वा॑त्। नि। मा॒यिनः॑। दा॒न॒वस्य॑। मा॒याः। अपा॑दयत्।
प॒पि॒ऽवान्। सु॒तस्य॑ ॥ १० ॥ ४ ॥

वृष्णः कामानांवर्षकस्येन्द्रस्यवज्रः अरोरवीत् भृशंशब्दमकरोत् कदेत्यपेक्षायामाह—यद्यदाअमानुषंमनुष्याणांरहितं यद्वा मानुषोहंनभवामीत्येवंमन्यमानं तमसुरं मानुषोमनुष्याणांहितकारी यद्वा मतिमानिन्द्रोनिजूर्वात् नितरांहिंस्यात् जिघांसतीत्यर्थः जूर्वतेहिंसाकर्मणोलेटिरूपं सुतस्याभिषुतंसोमंपपिवान्पीतवान्मायिनोमायाविनोदानवस्यदानुर्नामवृत्रमाता दानुःशयइत्यादिषुदृष्टत्वात् तस्याःपुत्रस्यवृत्रस्यमायाः वंचनानिन्यपादयत् न्यपातयत् बबाधइतियावत्॥ १०॥

१०. जिस समय मनुष्यों के हितकारी इन्द्र ने मनुष्यों के शत्रु वृत्र के विनाश की इच्छा की थी, उस समय अभीष्ट-वर्षक इन्द्र का वज्र बार-बार गर्जन करने लगा। इन्द्र ने अभिषुत सोमपान करके मायावी दानव की सारी माया को निपातित कर दिया था।

पिबांपिबेदिन्द्रशूरसोमंमन्दन्तुत्वामन्दिनःसुतासः।
पृणन्तस्तेकुक्षीवर्धयन्त्वित्थासुतःपौरइन्द्रमाव ॥ ११ ॥

पिबऽपिब । इत् । इन्द्र । शूर । सोमम् । मन्दन्तु । त्वा ।
मन्दिनः । सुतासः । पृणन्तः । ते । कुक्षी इति । वर्धयन्तु ।
इत्था । सुतः । पौरः । इन्द्रम् । आव ॥ ११ ॥

शूर बलवन् हेइन्द्र पिबपिबेत् अभिषुतमिमंसोमंपिबैव आदरार्थैषावीप्सा मन्दिनोमदकराः सुतासोभिषुताः सोमाः त्वामन्दतु त्वांमान्दयन्तु । मदिस्तुत्यादिषु व्यत्ययेनपरस्मैपदम् तेसोमास्तेतवकुक्षीउदरस्योभौपार्श्वौपृणन्तः पूरयन्तः सन्तः त्वांवर्धयन्तु इत्थाअनेनप्रकारेण पौरः उदरपूरकः सुतोभिषुतः सोमः इन्द्रंत्वामाव तर्पयतु अवतेस्तर्पणार्थस्यलिटिरूपम् ॥ ११ ॥

११. इन्द्र, तुम अभिषुत सोम पान करो। मददाता सोमरस तुम्हें आमोदित करे। सोमरस तुम्हारे उदर की पूर्ति करके तुम्हें प्रसन्न करे। इस प्रकार उदर-पूरक सोमरस इन्द्र को तृप्त करे।

त्वेइन्द्राप्यभूमविप्राधियंवनेमऋतयासपन्तः।
अवस्यवोधीमहिप्रशस्तिसद्यस्तेरायोदावनेस्याम ॥ १२ ॥

त्वे इति । इन्द्र । अपि । अभूम । विप्राः । धियम् । वनेम ।
ऋतऽया । सपन्तः । अवस्यवः । धीमहि । प्रऽशस्तिम् ।
सद्यः । ते । रायः । दावने । स्याम ॥ १२ ॥

हेइन्द्र विप्रामेधाविनोवयंत्वेत्वयित्वद्धृदयेअभूम अपिसानुनयप्रश्नेवर्तते तेतवहृदयेकिंवर्तामहइति ऋतयाऋतंकर्मफलंतत्कामनयासपन्तः त्वांपरिचरणाख्येनकर्मणास्पृशन्तोवयंधियं त्वदुद्देशेनक्रियमाणंकर्मवनेम संभजेमहि वनषणसंभक्तौ आशीर्लिङिलिङ्याशिष्यङित्यङ्प्रत्ययः किञ्च अवस्यवः त्वत्तोरक्षणमिच्छन्तः प्रशस्तिंशस्तिःशंसनं प्रकृष्टशंसनंस्तोत्रं धीमहि त्वयिनिदधीमहि ततः तेत्वदीयस्यरायोधनस्यदावनेदानायपात्रभूताः सद्यः स्याम इदानींभवेम ॥ १२ ॥

१२. इन्द्र हम मेधावी हैं। हम तुम्हारे अन्दर स्थान पावेंगे। कर्मफल की कामना से हम तुम्हारी सेवा करके यज्ञ करेंगे। तुम्हारा आश्रय पाने की इच्छा से हम तुम्हारी प्रशंसा का ध्यान करते हैं, ताकि हम इसी क्षण तुम्हारे धनवान के पात्र हो सकें।

स्यामतेतंइन्द्रयेतंऊतीअंवस्यवऊर्जंवर्धयंन्तः ।
शुष्मिन्तंमंयंचाकनामदेवास्मेरयिंरासिवीरवंन्तम् ॥१२ ॥

स्यामं । ते । ते । इन्द्र । ये । ते । ऊती । अवस्यवः । ऊर्जम् ।
वर्धयंन्तः । शुष्मिन्ऽतंमम् । यम् । चाकनाम । देव । अस्मे इतिं ।
रयिम् । रासि । वीरऽवंन्तम् ॥ १२ ॥

हेइन्द्र तेतवऊतीऊत्याप्रणयनेन अवतेःप्राप्त्यर्थस्यक्तिनिरूपम् तेतवअवस्यवोरक्षाकामाऊर्जंहविर्लक्षणमन्नंवर्धयन्तोभवन्ति येवयंतेतवस्यामत्वदधीनाभवेम देवद्योतमान हेइन्द्र शुष्मिन्तमं दानभोगायार्हतयाबलवत्तमम् यद्वा शत्रूणांशोषयितृतमंयंरयिंचाकनाम कामयामहे कनतेःकान्त्यर्थस्यय ङ्लुगन्तस्यलोटिरूपं वीरवन्तं पुत्रपौत्रैःसहितंतादृशंरयिमस्मे अस्मभ्यंरासि देहि॥ १२ ॥

१२. इन्द्र, तुम्हारे आश्रय-लाभ की इच्छा से जो तुम्हारा हव्य वर्द्धित करते हैं, हम भी उन्हीं की तरह तुम्हारे अधीन हो जायँ। द्युतिमान् इन्द्र, हम जिस धन की इच्छा करते हैं, तुम हमें सर्वापेक्षा बलवान् और वीर-पुत्र-युक्त वही धन दो।

रासिक्षयंरासिंमित्रमस्मेरासिशर्धइन्द्रमारुतंनः ।
सजोषसोयेचमन्दसानाःप्रवायवःपान्त्यग्रंणीतिम् ॥ १४ ॥

रासिं । क्षयंम् । रासिं । मित्रम् । अस्मे इतिं । रासिं शर्धः । इन्द्र ।
मारुतम् । नः । सऽजोषसः ये । च । मन्दसानाः । प्र । वायवः ।
पान्ति । अग्रंऽनीतिम् ॥ १४ ॥

हेइन्द्र क्षयं क्षियन्तिनिवसन्त्यत्रेतिक्षयोगृहं तदस्मभ्यंरासिदेहि तथामित्रं सखायं अस्मेअस्मभ्यंरासि वाक्यभेदादनिघातः मारुतं मरुतांदेवविशांसंबन्धिशर्धोबलंनोस्मभ्यंरासि एतेनमरुतामप्यागमनंप्रार्थ्यते येचमरुतः सजोषसः सहप्रीयमाणाः मन्दसानामदन्तोमोदमानावायवोयज्ञं प्रतिगन्तारःसन्तः अग्रणीतिं अग्रेनीयमानं सोमं प्रपांति प्रकर्षेणपिबन्ति तेषांशर्धइतिसमन्वयः यद्वा येचवायवोग्रेनीयमानं सोमंपिबन्ति तेषांवायूनां बलंरासि वायवइतिपूजायांबहुवचनं वायुर्हिसोमस्याग्रपातेति ॥ १४ ॥

१४. इन्द्र, तुम हमें गृह दो, बन्धु दो और महापुरुषों की तरह वीर्य दो, प्रसन्न-चित्त वायुगण अतीव आनन्दित होकर आगे लाया हुआ सोम पान करें।

व्यन्त्विन्नुयेषुंमन्दसानस्तृपत्सोमंपाहिद्रह्यदिन्द्र ।
अस्मान्सुपृत्स्वातरुत्रावर्धयोद्यांबृहद्भिरर्कैः ॥ १५ ॥५॥

व्यन्तु । इत् । नु । येषु । मन्दसानः । तृपत् । सोमम् । पाहि ।
द्रह्यत् । इन्द्र । अस्मान् । सु । पृत्ऽसु । आ । तरुत्र । अवर्धयः ।
द्याम् । बृहत्ऽभिः । अर्कैः ॥ १५ ॥ ५ ॥

हेइन्द्र येषुतवसहायभूतेषुमरुत्सु मन्दसानोमाद्यन्भवसि तेमरुतोनुक्षिप्रंव्यन्तु सोमंभक्षयन्तु इव इवार्थे द्रह्यत् दृंहतेरिदंरूपं आत्मानं दृढीकुर्वन् त्वंतृपत् तर्पयन्तमिमंसोमंपाहि पिब तरुत्र शत्रूणांहिंसकहेइन्द्र बृहद्भिर्बलवद्भिः अर्कैरर्चनीयैर्मरुद्भिःसहितस्त्वं आइतिचार्थे तेनास्मान् द्यांच सुसुष्ठुपृत्सुसङ्ग्रामेषु पशुपुत्रादिभिरस्मान् अस्मत्पालनेनचदिवमवर्धयः यद्वा येषुसोमेषुमन्दसानोमोदमानोभवसि तेसोमाव्यन्तु त्वांगच्छंतु शेषंपूर्ववत् ॥ १५ ॥

१५. इन्द्र, जिन मरुतों के सहायक होने पर तुम हृष्ट होते हो, वे शीघ्र सोमपान करें। तुम भी अपने को दृढ़ करके तृप्तिकर सोम पान करो। शत्रुनाशक इन्द्र, बलवान् और पूजनीय मरुतों के साथ तुम युद्ध में हमें वर्द्धित करो---द्युलोक को भी वर्द्धित करो।

बृहन्तइन्नुयेतेतरुत्रोक्थेभिर्वासुम्नमाविवासान् ।
स्तृणानासोबर्हिःपस्त्यावत्वोताइदिन्द्रवाजमग्मन् ॥ १६ ॥

बृहन्तः । इत् । नु । ये । ते । तरुत्र । उक्थेभिः । वा । सुम्नम् ।
आऽविवासान् । स्तृणानासः । बर्हिः । पस्त्यंऽवत् । त्वाऽऊताः ।
इत् । इन्द्र । वाजम् । अग्मन् ॥ १६ ॥

तरुत्रआपद्भिस्तारकहेइन्द्र येपुमांसः सुम्नं सुखकरं त्वामुक्थेभिः उक्थैः शस्त्रैः आविवासान्परिचरेयुः विवासतेर्लेटयडागमः तेइत् तएवपुमांसः नुक्षिप्रंअविलंबेनबृहन्तोमहान्तः भवन्ति वेतिपूरणः किंच बर्हिःस्तृणानासः वेद्यांबर्हिराच्छादयन्तः येत्वांपरिचरन्ति तेत्वोताइव त्वयारक्षिताःसन्तएवपस्त्यावत् गृहसहितंवाजमन्नमग्मन् गच्छन्ति ॥ १६ ॥

१६. अनिष्ट-निवारक इन्द्र, तुम सुख-प्रद हो। जो पुरुष उक्थ-द्वारा तुम्हारी सेवा करता है, वह शीघ्र ही महान् हो जाता है। जो कुश बिछाकर तुम्हारी सेवा करते हैं, वे तुम्हारा आश्रय प्राप्तकर गृह के साथ अन्न प्राप्त करते हैं।

उ॒ग्रेष्विन्नुशू॑रमन्दसा॒नस्त्रिक॑द्रुकेषुपाहि॒सोम॑मिन्द्र।
प्र॒दोधु॑व॒च्छ्मश्रु॑षुप्रीणा॒नोया॒हिहरि॑भ्यांसु॒तस्य॑पी॒तिम् ॥ १७ ॥

उ॒ग्रेषु॑। इत्। नु। शू॒र॒। म॒न्द॒सा॒नः। त्रिऽक॑द्रुकेषु। पा॒हि॒।
सोम॑म्। इ॒न्द्र॒। प्र॒ऽदोधु॑वत्। श्मश्रु॑षु। प्री॒णा॒नः। या॒हि।
हरि॑ऽभ्याम्। सु॒तस्य॑। पी॒तिम् ॥ १७ ॥

हेशूर बलवन्निन्द्र उग्रेषुउद्गूर्णेषुबहुस्तोत्रशस्त्रवत्सु त्रिकद्रुकेषुज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहस्सुमन्दसानोहृष्यन्नुक्षिप्रंसोमंपाहिपिब इदितिपूरणः ततः प्रीणानः सोमपानेनप्रीतोभवन् श्मश्रुषुलिप्तंसोमंप्रदोधुवत् धूञ्कम्पने यङ्लुगन्तस्यशतरिरूपम् पुनःपुनर्धुन्वन् सुतस्याभिषुतस्यपीतिंपानमुद्दिश्यहरिभ्यामश्वाभ्यांयुक्तःसन्याहिगच्छ ॥ १७ ॥

१७. शूर इन्द्र, तुम उग्र त्रिकद्रु दिन-विशेषों में अत्यन्त हृष्ट होकर सोमपान करो। अनन्तर प्रसन्न होकर और अपनी दाढ़ी-मूँछ में लगे सोम को झाड़कर सोमपान के लिए हरि नामक घोड़े पर चढ़कर आओ।

धि॒ष्वाशवः॑शूर॒येन॑वृ॒त्रम॒वाभि॑न॒द्दानु॑मौर्णवा॒भम्।
अपा॑वृणो॒र्ज्योति॑रा॒र्या॑य॒निस॑व्य॒तःसा॑दि॒दस्यु॑रिन्द्र ॥ १८ ॥

धि॒ष्व। शवः॑। शू॒र॒। येन॑। वृ॒त्रम्। अ॒वऽअभि॑नत्। दानु॑म्।
औ॒र्ण॒ऽवा॒भम्। अप॑। अ॒वृ॒णोः॒। ज्योतिः॑। आर्या॑य। नि। स॒व्य॒तः।
सा॒दि॒। दस्युः॑। इ॒न्द्र॒ ॥ १८ ॥

शूरहेइन्द्र शवस्तादृशंबलंधिष्वधारय दधातेर्लोटिबहुलंछन्दसीतिशपोलुक् छन्दस्युभयथेति वाआर्धधातुकत्वादिडागमः येनबलेनदानुंदानोःपुत्रंवृत्रं और्णवाभं ऊर्णनाभिः कीटविशेषः और्णवाभइत्युच्यते तमिवअवाभिनत् बिभेदिथ यद्वा और्णः ऊर्णनाभिः तदाभंतत्सदृशमित्यर्थः ततस्तमोरूपस्यहननादार्यायकर्मणामनुष्ठात्रेजनाय कुत्सायराजर्षयेवा ज्योतिः प्रकाशकमादित्यमपावृणोः उद्घाटितवानसि दस्युः कर्मणामुपक्षपयितासवृत्रः सव्यतः तवसव्यपार्श्वेनिषादि त्वयानितरांसन्नोबाधितोवर्तते ॥ १८ ॥

१८. इन्द्र, जिस बल के द्वारा तुमने दनु के पुत्र वृत्र को ऊर्णनाभि कीट की तरह विनष्ट किया था, वही बल धारण करो। आर्य के लिए तुमने ज्योति दी है। दस्यु तुम्हारे विरोधी हैं।

अथैकोनविंशी—

सनेम॒ये त॑ऊ॒तिभि॒स्तर॑न्तो॒विश्वा॒ःस्पृध॒आर्ये॑ण॒दस्यू॑न् ।
अ॒स्मभ्यं॒तत्त्वा॒ष्ट्रंवि॒श्वरू॑प॒मर॑न्धयःसा॒ख्यस्य॑त्रि॒ताय॑ ॥ १९ ॥

सने॑म । ये । ते॒ । ऊ॒तिऽभिः॑ । तर॑न्तः । विश्वाः॑ । स्पृधः॑ । आर्ये॑ण । दस्यू॑न् । अ॒स्मभ्य॑म् । तत् । त्वा॒ष्ट्रम् । वि॒श्वऽरू॑पम् । अर॑न्धयः । सा॒ख्यस्य॑ । त्रि॒ताय॑ ॥ १९ ॥

सनेम तान्पुरुषान्संभजेम येते तवोतिभिःपालनैः विश्वाः स्पृधःस्पर्धमानाःसर्वाविशःतरन्तःहिंसन्तः तथाआर्येणआर्यभावेनदस्यूनुपक्षपयितॄन्हिंसन्तोभवन्ति तदस्मभ्यंवशमानय किंतत्तदाह—त्वाष्ट्रंत्वष्टुःसुतंविश्वरूपमेतन्नामकमसुरंअरन्धयः रध्यतिर्वशगमने वशमानयः यद्वा तमसुरमवधीः रधहिंसासंराध्योः रधिजभोरचीतिनुम् इन्द्रः त्वाष्ट्रमवधीदित्ययमर्थः तैत्तिरीयके—विश्वरूपोवैत्वाष्ट्रइत्यत्रमहताप्रबंधेनप्रपञ्चितः । किञ्च साख्यस्यसखिभावस्यअनुपालनाय त्रितायमहर्षयेवशमानयः यद्वा सनेमतेवयंप्रवृद्धाभवेम येवयंतवरक्षाभिःस्पर्धमानाःप्रजादस्यूंश्च तरन्तोतिक्रामन्तोभवेम सनेमेतिवृद्ध्यर्थंआद्युदात्तः यथासनेममित्रावरुणासनन्तेइति । सकर्मकश्चेन्मध्योदात्तः सनेमवाजंतवेति । तरन्तः तॄप्लवनतरणयोः शतरिरूपं संज्ञावचनश्चेदन्तोदात्तः यथा तरन्तइवमहनेति ॥ १९ ॥

१९. इन्द्र, जिन लोगों ने तुम्हारा आश्रय प्राप्त करके सारे गर्वकारी मनुष्यों को अतिक्रम किया है और आर्यभाव-द्वारा दस्यु का अतिक्रम किया है, हम उनको भजते हैं। तुमने त्रित के बन्धुत्व के लिए त्वष्टा के पुत्र विश्वरूप का वध किया है। हमारे लिए भी वैसा ही करो।

अथविंशी—

अ॒स्यसु॑वा॒नस्य॑म॒न्दिन॑स्त्रि॒तस्य॒न्यर्बु॑दंवावृ॒धा॒नो अ॑स्तः ।
अव॑र्तय॒त्सूर्यो॒न च॒क्रंभि॒नद्व॒लमिन्द्रो॒अङ्गि॑रस्वान् ॥ २० ॥

अ॒स्य । सु॒वा॒नस्य॑ । म॒न्दिनः॑ । त्रि॒तस्य॑ । नि । अर्बु॑दम् । व॒वृ॒धा॒नः । अ॒स्त॒रित्य॑स्तः । अव॑र्तयत् । सूर्यः॑ । न । च॒क्रम् । भि॒नत् । व॒लम् । इन्द्रः॑ । अङ्गि॑रस्वान् ॥ २० ॥

१ तै० सं० २. ५. १. । २ ऋ० सं ५. ४. १९. । ३ ऋ० सं० ४. ३. २७. ।

मन्दिनोस्यमदकरमिमंसुवानस्यसुतवतःत्रितस्यतीर्णतमस्यमहर्षेरर्थंवावृधानः सोमेनव-र्धमानइन्द्रःअर्बुदंअंबूनिददातीतिअर्बुदोमेघः अनुस्वारस्यरेफश्छान्दसः यद्वा नामैतदअर्बुदा-ख्यमसुरंन्यस्तः स्तॄहिंसायामित्यस्यलङितिपि बहुलंछन्दसीतिविकरणस्यलुक् गुणेकृतेहल्ङ्या-दिनातिलोपः नितरामवधीत् महान्तंचिदर्बुदंनिक्रमीःपदेत्यादिषुअर्बुदवधःस्पष्टमुक्तः किंच अङ्गि-रस्वान् अङ्गिरोभिःसहितइन्द्रःअवर्तयत् असुरहननार्थंवज्रमभ्रामयत् सूर्योन यथासूर्यश्चक्रं भ्रामयति तद्वत् यद्वा यस्मादसुरात् भियासूर्यःस्वकीयंरथचक्रंनावर्तयतन्निषेधार्थीयोत्रनकारः वर्तयितुंनाशकत्तंबलंपणीनांप्रभुमसुरंभिनत् वज्रेणाभिनत् यद्वा द्विचक्रोहिपूर्वंसूर्यस्यरथःतस्यै-कंचक्रमिन्द्रेणापहृतं सूर्यइति सुपांसुलुगितिषष्ठ्येकवचनस्यसुः सूर्यस्यसंबन्धिअपहृतंतदेकं चक्रमवर्तयत् रक्षोहननार्थंअभ्रामयत् तेनचक्रेणबलमभिनच्च नश्चार्थे ॥ २० ॥

२०. इन हृष्ट और सुतवान् त्रित-द्वारा वर्धित होकर इन्द्र ने अर्बुद का विनाश किया था। जैसे सूर्य रथ-चक्र चलाते हैं, वैसे ही इन्द्र ने अंगिरा लोगों की सहायता प्राप्त करके वज्र को घुमाया था और बल को विनष्ट किया था।

अहर्गणेषुमाध्यन्दिनसवनेषुतायमानरूपेषुअच्छावाकस्यअहरहःशस्यसंज्ञकमभितष्टेवे-तिसूक्तम् नूनंसातइत्येषातस्यान्तेशंसनीया सूत्रितंच—नूनंसातइत्यन्तमुत्तममिति।

सैषासूक्तेएकविंशी—

नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रदक्षिणामघोनी।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः ॥२१॥६॥

नूनम्। सा। ते। प्रति। वरम्। जरित्रे। दुहीयत्। इन्द्र। दक्षिणा। मघोनी। शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुऽवीराः ॥ २१ ॥ ६ ॥

हेइन्द्र यादक्षिणादक्षमुत्साहनंकरोतीतिदक्षिणास्तोतृभ्योदेया सातेत्वत्संबन्धिनीमघोनी धनवतीजरित्रेस्तोत्रेवरंश्रेष्ठमभिमतमर्थंनूनंप्रतिदुहीयत् इदानींप्रतिदोग्धि संपादयतीत्यर्थः तादृ-शींदक्षिणांस्तोतृभ्योस्मभ्यंशिक्षप्रयच्छ किञ्च भगोभजनीयः त्वमातिधक् दहेर्दानार्थस्यलुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् नोस्मानतिक्रम्यअन्येभ्योदक्षिणांमादाः प्रथममस्मभ्यंदत्त्वापश्चादन्ये-भ्योदीयतामित्यर्थः यद्वा नोस्माकंकामान्माधक् माधाक्षीः अपेक्षितफलदानेनपूरयेत्यर्थः सुवी-

ऋ० सं० १. ४. १०.।

राःशोभनपुत्रपौत्राःसन्तोवयंविदथेस्मिन्यज्ञेबृहत्प्रभूतंस्तोत्रंवदेम त्वामुद्दिश्यब्रवाम अत्रसातेप्रतिदुग्धामितिप्रकृत्यवीरोवीरयत्यमित्रान्वेतेर्वास्याद्गतिकर्मणोवीरयतेर्वेत्यन्तंनिरुक्तमनुसन्धेयम् ॥ २१ ॥

२१. इन्द्र, तुम्हारी जो धनवती दक्षिणा स्तोता का मनोरथ पूरा करती है, उसे हमें दो। तुम भजनीय हो। हमें छोड़कर और किसी को भी नहीं देना। हम पुत्र-पौत्र-युक्त होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यषष्ठेषष्ठोवर्गः ॥ ६ ॥

॥ इतिगार्त्समदेमण्डलेप्रथमोनुवाकः ॥ १ ॥

द्वितीयेनुवाकेएकादशसूक्तानि तत्रयोजातइतिपञ्चदशर्चंप्रथमंसूक्तम् गार्त्समदंत्रैष्टुभमैन्द्रं संसवेनिष्केवल्येनिविद्धानीयस्यपुरस्ताद्योजातएवेतिशंस्येत् यदिपर्यायानितिखण्डेसूत्रितम्—योजातएवेतिनिष्केवल्यइति। आभिप्लविकेतृतीयेहनिनिष्केवल्येयोजातएवेतिनिविद्धानीयं सूत्रितञ्च—तृतीयस्यत्र्यर्यमायोजातएवेतिमध्यन्दिनइति। विश्वजितिमाध्यन्दिनसवनेमैत्रावरुणः स्वशस्त्रेप्राकृतात्सूक्तात्पूर्वंयोजातइतिसामसूक्तंशंसेत् विश्वजितोग्निंनरइतिखण्डेसूत्रितम्—सत्रामदासोयोजातएवाभूरेकइतिसामसूक्तानीति। अग्निष्टुन्निष्केवल्येनिविद्धानमिदं श्येनाजिरानामितिखण्डेसूत्रितम्—तिष्ठाहरीयोजातएवेतिमध्यन्दिनइति। महाव्रतेनिष्केवल्येयोजातएवेतिसूक्तं उरूइतिखण्डेसूत्रितम्—वनेनवायोन्यधायिचाकन्योजातएवप्रथमोमनस्वानिति। अत्रेतिहासोबृहद्देवतायामुक्तः—संयुज्यतपसात्मानमैन्द्रंबिभ्रन्महद्वपुः । अदृश्यतमुहूर्तेनदिविचव्योम्निचेहच ॥ १ ॥ तमिन्द्रइतिमत्वातुदैत्यौभीमपराक्रमौ। धुनिश्चचुमुरिश्चोभौसायुधावभिपेततुः ॥२ ॥ विदित्वासतयोर्भावमृषिःपापंचिकीर्षतोः । योजातइतिसूक्तेनकर्माण्यैन्द्राण्यकीर्तयत् ॥ ३ ॥ अन्येत्वन्यथावर्णयन्ति—पुराकिलेन्द्रादयोवैन्ययज्ञंसमाजग्मुः गृत्समदोपितत्रागत्यसदस्यासीत् दैत्याश्चेन्द्रजिघांसयातत्रसमागमन् तान्दृष्ट्वानिर्जगामेन्द्रोयज्ञाद्गृत्समदाकृतिः सचगृत्समदोवैन्येनपूजितोयज्ञवाटान्निरगच्छत् निर्गच्छंतंतमृषिंदृष्ट्वाअयमेवेन्द्रइतिमन्यमानास्तमसुराः परिवव्रुः नाहमिन्द्रस्तुच्छः किन्त्वेवंगुणोपेतः सइत्यनेनसूक्तेनतान्प्रत्युवाच । अपरेत्वेवंकथयन्ति—गृत्समदस्ययज्ञेप्रविष्टमेकाकिनमिन्द्रंज्ञात्वाअसुराःपरिवव्रुः सइन्द्रोगृत्समदरूपेणयज्ञवाटान्निर्गत्यस्वर्गंजगाम ततःअसुराः इन्द्रोविलम्बितइत्यन्तःप्रविश्यगृत्समदंदृष्ट्वा पूर्वमेवगृत्समदोगतः अयंत्विन्द्रोस्मद्भयाद्गृत्समदरूपेणास्तइति तंजगृहुः सतान्नाहमिन्द्रोयमित्यनेनसूक्तेन प्रत्युवाच अयमेवार्थोमहाभारतेप्रपञ्चितः ।

---

१ नि० १.७.।

तत्रैषासूक्तेप्रथमा—

योजातएवप्रथमोमनस्वान्देवोदेवान्क्रतुनापर्यभूषत् ।
यस्यशुष्माद्रोदसीअभ्यसेतांनृम्णस्यमह्नासजनासइन्द्रः ॥ १ ॥

यः । जातः । एव । प्रथमः । मनस्वान् । देवः । देवान् । क्रतुना ।
परिऽअभूषत् । यस्य । शुष्मात् । रोदसी इति । अभ्यसेताम् ।
नृम्णस्य । मह्ना । सः । जनासः । इन्द्रः ॥ १ ॥

गृत्समदोब्रूते—जनासोजनाः हेअसुराः यः जातएवजायमानएव सन्प्रथमः देवानांप्रधानभूतः मनस्वान् मनस्विनामग्रगण्यः देवोद्योतमानःसन् क्रतुनावृत्रवधादिलक्षणेनस्वकीयेनकर्मणादेवान्सर्वान्यागदेवान्पर्यभूषत रक्षकत्वेनपर्यग्रहीत भूषअलंकारे भौवादिः लङिरूपं यद्वा सर्वान् न्यान्देवान्पर्यभूषत पर्यभवत अत्यक्रामत अस्मिन्पक्षेभवतेर्व्यत्ययेनक्सः श्र्युकःकितीतीट्प्रतिषेधः यस्येन्द्रस्यशुष्मात्शारीरात बलात रोदसीद्यावापृथिव्यौअभ्यसेतां अबिभीतां भ्यसभये अनुदात्तेत भ्यसभयवेपनयोरितिनैरुक्ताः । अभ्यसेतांअवेपेतांवा तथाचमन्त्रान्तरम्—इमेचित्तवमन्यवेवेपेतेभियसामहीइति । नृम्णस्यसेनालक्षणस्यबलस्यमह्नामहत्त्वेनयुक्तः । सइन्द्रोनाहमिति अत्रनिरुक्तम्—योजातएवप्रथमोमनस्वीदेवोदेवान्क्रतुनाकर्मणापर्यभवत्पर्यगृह्णात्पर्यरक्षदत्यक्रामदितिवायस्यबलाद्द्यावापृथिव्यावप्यबिभीतांनृम्णस्यमह्नाबलस्यमहत्त्वेनसजनासइन्द्रइत्यृषेर्दृष्टार्थस्यप्रीतिर्भवत्याख्यानसंयुक्तेति ॥ १ ॥

१. मनुष्यो या असुरो, जो प्रकाशित हैं, जिन्होंने जन्म के साथ ही देवों में प्रधान और मनुष्यों में अग्रणी होकर वीरकर्म-द्वारा सारे देवों को विभूषित किया था, जिनके शरीर-बल से द्यावा-पृथिवी भीत हुई थी और जो महती सेना के नायक थे, वे ही इन्द्र हैं।

अथद्वितीया—

यःपृथिवींव्यथमानामदृंहद्यःपर्वतान्प्रकुपिताँअरम्णात् ।
योअन्तरिक्षंविममेवरीयोयोद्यामस्तभ्नात्सजनासइन्द्रः ॥ २ ॥

यः । पृथिवीम् । व्यथमानाम् । अदृंहत् । यः । पर्वतान् ।
प्रऽकुपितान् । अरम्णात् । यः । अन्तरिक्षम् । विऽममे । वरीयः ।
यः । द्याम् । अस्तभ्नात् । सः । जनासः । इन्द्रः ॥ २ ॥

---

१ नि० ३. २१. । २. ऋ० सं० १. ५. ३१. । ३ नि० १०. १०. ।

हेजनाः यः इन्द्रः व्यथमानांचलन्तींपृथिवींअदृंहत् शर्करादिभिर्दृढामकरोत् दृहदृहिवृद्धौ यश्चप्रकुपितान् इतस्ततश्चलितान् पक्षयुक्तान्पर्वतान्अरम्णात् नियमितवान् स्वेस्वेस्थानेस्थापितवान् अरम्णात् रमुक्रीडायां अन्तर्भावितण्यर्थस्यव्यत्ययेनश्नाप्रत्ययः यश्चवरीयउरुतममन्तरिक्षं विममे निर्ममे विस्तीर्णंचकारेत्यर्थः यश्चद्यांदिवमस्तभ्नात् तस्तंभ निरुद्धामकरोत् स्तंभुरोधनेइतिसौत्रोधातुः सएवेन्द्रोनाहमिति ॥ २ ॥

२. मनुष्यो या असुरो, जिन्होंने व्यथित पृथिवी को दृढ़ किया है, जिन्होंने प्रकुपित पर्वतों को नियमित किया है, जिन्होंने प्रकाण्ड अन्तरिक्ष को बनाया है और जिन्होंने द्युलोक को निस्तब्ध किया है, वे ही इन्द्र हैं।

योहत्वाहिमरिणात्सप्तसिन्धून्योगाउदाजदपधावलस्य ।
योअश्मनोरन्तरग्निंजजानसंवृक्समत्सुसजनासइन्द्रः ॥ ३ ॥

यः । हत्वा । अहिम् । अरिणात् । सप्त । सिन्धून् । यः । गाः ।
उत्ऽआजत् । अपऽधा । वलस्य । यः । अश्मनोः । अन्तः ।
अग्निम् । जजान । समऽवृक् । समत्ऽसु । सः । जनासः । इन्द्रः ॥३॥

यः अहिंमेघं हत्वा मेघहननंकृत्वासप्तसर्पणशीलाः सिन्धून् स्यन्दनशीलाअपः अरिणात् प्रैरयत् यद्वा सप्तगंगायमुनाद्यामुख्यानदीररिणात् रीङ्श्रवणे क्र्यादिः यश्चबलस्यबलनामकस्यासुरस्यअपधा तत्कर्तृकात्तिरोधानान्निरुद्धागाउदाजत् निरगमयत् अपधा अपपूर्वाद्दधातेरातश्चोपसर्गेइतिभावेअङ्प्रत्ययः सुपांसुलुगितिपञ्चम्याआकारः यश्चअश्मनोः अश्नुतेव्यामोत्यन्तरिक्षमित्यश्मामेघः अत्यन्तमृदुरूपयोर्मेघयोरन्तर्मध्येवैद्युतमग्निंजजान उत्पादयामास यश्चसमत्सु संभक्षयन्तियोद्धृणामायूंषीतिसमदःसङ्ग्रामाः तेषुसंवृक्हिनस्ति वृणक्तेर्हिंसार्थस्यक्विपिरूपं सइन्द्रोनाहमिति ॥ ३ ॥

३. मनुष्यो या असुरो, जिन्होंने वृत्र का विनाश करके सात नदियों को प्रवाहित किया है, जिन्होंने बल असुर-द्वारा रोकी हुई गायों का उद्धार किया था, जो दो मेघों के बीच से अग्नि को उत्पन्न करते हैं और जो समर-भूमि में शत्रुओं का नाश करते हैं, वे ही इन्द्र हैं।

येनेमाविश्वाच्यवनाकृतानियोदासंवर्णमधरंगुहाकः ।
श्वघ्नीवयोजिगीवाँल्लक्षमाददर्यःपुष्टानिसजनासइन्द्रः ॥ ४ ॥

येन । इमा । विश्वा । च्यवना । कृतानि । यः । दासम् । वर्णम् ।
अधरम् । गुहा । अकरित्यकः । श्वघ्नीऽइव । यः । जिगीवान् ।
लक्षम् । आदत् । अर्यः । पुष्टानि । सः । जनासः । इन्द्रः ॥ ४ ॥

येनेन्द्रेणइमा इमानिविश्वाच्यवना नश्वराणिभुवनानिकृतानि स्थिरीकृतानि यश्चदासंवर्णं शूद्रादिकं यद्वा दासमुपक्षपयितारंअधरंनिकृष्टमसुरंगुहागुहायांगूढस्थानेनरकेवाअकः अकार्षीत् करोतेर्लुङिमन्त्रेघसेत्यादिनाच्लेर्लुकिरूपं लक्षंलक्ष्यंजिगीवान् जिजयेक्सौ सन्लिटोर्जेरिति अभ्यासादुत्तरपदस्यकुत्वम् दीर्घश्छान्दसः जितवान् अर्यः अरेः षष्ठयेकवचनेछान्दसोयणादेशः शत्रोः संबन्धीनिपुष्टानिसमृद्धानिधनानिआदत् आदत्ते तत्रदृष्टान्तः—श्वघ्नीव श्वभिर्मृगान् हन्तीतिश्वघ्नीव्याधः यथाव्याधोजिघृक्षितंमृगंपरिगृह्णातितद्वत् ॥ ४ ॥

४. मनुष्यो या असुरो, जिन्होंने समस्त विश्व का निर्माण किया है, जिन्होंने दासों को निकृष्ट और गूढ़ स्थान में स्थापित किया है, जो लक्ष्य जीतकर व्याध की तरह शत्रु के सारे धन को ग्रहण करते हैं, वे ही इन्द्र हैं।

यंस्मापृच्छन्तिकुहसेतिघोरमुतेमाहुर्नैषोअस्तीत्येनम् ।
सोअर्यःपुष्टीर्विजइवामिनातिश्रदस्मैधत्तसजनासइन्द्रः ॥५॥७॥

यम् । स्म । पृच्छन्ति । कुह । सः । इति । घोरम् । उत । ईम् । आहुः । न । एषः । अस्ति । इति । एनम् । सः । अर्यः । पुष्टीः । विजःइव । आ । मिनाति । श्रत् । अस्मै । धत्त । सः । जनासः । इन्द्रः ॥५॥७॥

अपश्यन्तोजनाघोरंशत्रूणांघातकंयंपृच्छन्तिस्मकुहसेति सइन्द्रः कुत्रवर्ततइति सेति सोचिलोपेचेत्पादपूरणमितिसोर्लोपेगुणः नक्वचिदसौतिष्ठतीतिमन्यमानाजनाएनमिन्द्रमाहुः एषइन्द्रोनास्तीति तथाचमन्त्रे—नेन्द्रोअस्तीतिनेमउत्वआहेति । ईमितिपूरणः उतापिचसइन्द्रोविजइव इवशब्दएवार्थे उद्वेजकएवसन् अर्येरिःसंबन्धीनिपुष्टीः पोषकाणि गवाश्वादीनिधनानि आमिनाति सर्वतोहिनस्ति मीञ्हिंसायां मीनातेर्निगमेइतिह्रस्वः तस्मात् श्रदस्माइन्द्रायधत्तसइन्द्रोस्तीतिविश्वासमत्रकुरुत यद्यप्यसौविशेषतोस्माभिर्नदृश्यते तथापिअस्तीतिविश्वासंकुरुत एवंनिर्धारणमहिमोपेतःसइन्द्रोनाहमिति ॥ ५ ॥

५. मनुष्यो या असुरो, जिन भयंकर देव के सम्बन्ध में लोग जिज्ञासा करते हैं, वे कहाँ हैं? जिनके विषय में लोग बोलते हैं कि वे नहीं हैं और जो शासक की तरह शत्रुओं का सारा धन विनष्ट करते हैं। विश्वास करो, वे ही इन्द्र हैं।

॥ इतिद्वितीयस्यषष्ठेसप्तमोवर्गः ॥ ७ ॥

योरध्रस्यंचोदितायःकृशस्ययोब्रह्मणोनाधमानस्यकीरेः ।
युक्तग्राव्णोयोविताशुशिप्रःसुतसोमस्यसजनासइन्द्रः ॥ ६ ॥

यः । रध्रस्यं । चोदिता । यः । कृशस्यं । यः । ब्रह्मणंः ।
नाधमानस्य । कीरेः । युक्तऽग्राव्णः । यः । अविता । सुऽशिप्रः ।
सुतऽसोमस्य । सः । जनासः । इन्द्रः ॥ ६ ॥

यःरध्रस्य रधहिंसासंराध्योः समृद्धस्यचोदिताधनानां प्रेरयिताभवति यश्चकृशस्यचद-रिद्रस्यच यश्चनाधमानस्य नाथृनाधृयाञ्चोपतापैश्वर्याशीःषु याचमानस्यकीरेः करोतेःकीर्तय-तेर्वा स्तोतुः ब्रह्मणोब्राह्मणस्यच धनानांप्रेरयिता यश्चसुशिप्रःशोभनहनुः सुशीर्षकोवासन् यु-क्तग्राव्णः अभिषवार्थमुद्यतग्राव्णः सुतसोमस्याभिषुतसोमस्ययजमानस्याविता रक्षिताभववि सएवेन्द्रोनाहमिति ब्रह्मशब्दस्यत्वन्नपरत्वेह्याद्युदात्ततास्यात् तथाब्रह्मवन्वानोअजरंसुवीरमि-ति । अयंत्वन्तोदात्तःपठ्यतइतिनान्नपरः ॥ ६ ॥

६. मनुष्यो या असुरो, जो समृद्ध धन प्रदान करते हैं, जो दरिद्र याचक और स्तोता को धन देते हैं और जो शोभन हनु या केहुनीवाले होकर सोमाभिषव-कर्त्ता और हाथों में पत्थरवाले यजमान के रक्षक हैं, वे ही इन्द्र हैं।

यस्याश्वासःप्रदिशियस्यगावोयस्यग्रामायस्यविश्वेरथासः ।
यःसूर्यंयउषसंजजानयोअपांनेतासजनासइन्द्रः ॥ ७ ॥

यस्यं । अश्वासः । प्रऽदिशि । यस्यं । गावः । यस्यं । ग्रामाः ।
यस्यं । विश्वे । रथासः । यः । सूर्यम् । यः । उषसम् ।
जजान । यः । अपाम् । नेता । सः । जनासः । इन्द्रः ॥ ७ ॥

यस्यसर्वान्तर्यामितयावर्तमानस्यप्रदिशि प्रदेशनेनुशासने अश्वासोश्वावर्तन्ते यस्या-नुशासनेगावः यस्यानुशासनेग्रामाः ग्रसन्तेत्रेति ग्रामाजनपदाः यस्याज्ञायांविश्वेसर्वेरथासो-रथावर्तन्ते यश्चवृत्रंहत्वासूर्यंजजान जनयामास यश्चोषसं तथामन्त्रः—जजानसूर्यमुषसंसुदं-साइति । यश्चमेघभेदनद्वारा अपांनेताप्रेरकः सइन्द्रइत्यादिप्रसिद्धम् ॥ ७ ॥

७. मनुष्यो या असुरो, घोड़े, गायें, गाँव और रथ जिनकी आज्ञा के अधीन हैं, जो सूर्य और उषा को उत्पन्न करते हैं और जो जल प्रेरित करते हैं, वे ही इन्द्र हैं।

यंक्रन्दसीसंयतीविह्वयेतेपरेवरउभयाअमित्राः ।
समानंचिद्रथमातस्थिवांसानानाहवेतेसजनासइन्द्रः ॥ ८ ॥

यम् । क्रन्दसी इति । संयती इति सम्ऽयती । विह्वयेते इति विऽह्वयेते । परे । अवरे । उभयाः । अमित्राः । समानम् । चित् । रथम् । आतस्थिऽवांसा । नाना । हवेते इति । सः । जनासः । इन्द्रः ॥ ८ ॥

यंक्रन्दसीरोदसीशब्दंकुर्वाणेमानुषीदेवीचद्वेसेनेवासंयती परस्परंसङ्गच्छन्त्यौयमिन्द्रंविह्वयेते स्वरक्षार्थंविविधमाह्वयतः परेउत्कृष्टाः अवरेअधमाश्चोभयाः उभयविधाः अमित्राः शत्रवः यमाह्वयन्ति समानंइन्द्ररथसदृशंरथमातस्थिवांसाआस्थितौद्वौरथिनौचित् तमेवेन्द्रंनानापृथक्पृथक्हवेतेआह्वयेते यद्वा समानमेकरथमारूढाविन्द्राग्नीहवेतेयज्ञार्थंयजमानैःपृथगाहूयेते तयोरन्यतरः सइन्द्रोनाहमिति ॥ ८ ॥

८. मनुष्यो या असुरो, दो सेनाबल परस्पर मिलने पर जिन्हें बुलाते हैं, उत्तम-अधम दोनों प्रकार के शत्रु जिन्हें बुलाते हैं और एक ही तरह के रथों पर बैठे हुए दो मनुष्य जिन्हें नाना प्रकार से बुलाते हैं, वे ही इन्द्र हैं।

यस्मान्नऋतेविजयन्तेजनासोयंयुध्यमानाअवसेहवन्ते ।
योविश्वस्यप्रतिमानंबभूवयोअच्युतच्युत्सजनासइन्द्रः ॥ ९ ॥

यस्मात् । न । ऋते । विऽजयन्ते । जनासः । यम् । युध्यमानाः । अवसे । हवन्ते । यः । विश्वस्य । प्रतिऽमानम् । बभूव । यः । अच्युतऽच्युत् । सः । जनासः । इन्द्रः ॥ ९ ॥

यस्मादृते जनासोजनाः नविजयन्ते विजयंनप्राप्नुवन्ति अतः युध्यमानायुद्धंकुर्वाणाजनाअवसेस्वरक्षणाययंइन्द्रं हवन्तेआह्वयन्ति यश्चविश्वस्यसर्वस्यजगतः प्रतिमानंप्रतिनिधिर्बभूव यश्चाच्युतच्युत् अच्युतानांक्षयरहितानांपर्वतादीनांच्यावयितासइन्द्रइत्यादिमसिद्धम् ॥९॥

९. मनुष्यो या असुरो, जिनके न रहने से कोई विजयी नहीं हो सकता, युद्धकाल में, रक्षा के लिए जिन्हें लोग बुलाते हैं, जो सारे संसार के प्रतिनिधि हैं और जो क्षय-रहित पर्वतादि को भी नष्ट करते हैं, वे ही इन्द्र हैं।

अथदशमी–

यःशश्वतोमह्येनोदधानानमन्यमानाञ्छर्वाजघान।
यःशर्धतेनानुददातिशृध्यांयोदस्योर्हन्तासजनासइन्द्रः ॥ १०॥८॥

यः। शश्वतः। महि। एनः। दधानान्। अमन्यमानान्। शर्वा।
जघान। यः। शर्धते। न। अनुऽददाति। शृध्याम्। यः।
दस्योः। हन्ता। सः। जनासः। इन्द्रः॥ १०॥८॥

यः महिमहत् एनः पापंदधानान् शश्वतोबहूनअमन्यमानानआत्मानमजानतः इन्द्रम-पूजयतोवाजनान शर्वा शृणातिशत्रूननेनेतिशरुर्वज्रः तेनायुधेनजघान हन्तेर्लिटिरूपं यश्चश-र्धतेउत्साहंकुरुते अनात्मज्ञायजनायशृध्यां उत्साहनीयंकर्मनानुददाति नप्रयच्छति अनुपूर्वात् डुदाञ्दाने जौहोत्यादिकः अभ्यस्तानामादिरितितिङिचोदात्तवतीतिगतेर्निघातः यश्चदस्योरु-पक्षपयितुःशत्रोर्हन्ताघातकः सइन्द्रइत्यादिपूर्ववत् ॥ १० ॥

१०. मनुष्यो या असुरो, जिन्होंने वज्र-द्वारा अनेक महापापी अपूजकों का विनाश किया है, जो गर्वकारी मनुष्य को सिद्धि प्रदान करते हैं और जो दस्युओं के हन्ता हैं, वे ही इन्द्र हैं।

यःशंबरंपर्वतेषुक्षियन्तंचत्वारिंश्यांशरद्यन्वविन्दत्।
ओजायमानंयोअहिंजघानदानुंशयानंसजनासइन्द्रः॥ ११ ॥

यः। शंबरम्। पर्वतेषु। क्षियन्तम्। चत्वारिंश्याम्। शरदि।
अनुऽअविन्दत्। ओजायमानम्। यः। अहिम्। जघान।
दानुम्। शयानम्। सः। जनासः। इन्द्रः॥ ११ ॥

यःपर्वतेषुक्षियन्तंइन्द्रभियाबहून्संवत्सरान्प्रच्छन्नोभूत्वापर्वतगुहासुनिवसन्तंशंबरंएतन्ना-मकंमायाविनमसुरंचत्वारिंश्यांशरदि चत्वारिंशेसंवत्सरेअन्वविन्दत् अन्विष्यालभत लब्ध्वाचयः ओजायमानं कर्तुःक्यङ्सलोपश्च ओजसोप्सरसोनित्यमितिसकारलोपः बलमाचरन्तंअहिंआ-हन्तारं दानुंदानवं शयानंशंबरमसुरंजघान हतवान्सइन्द्रोनाहमिति ॥ ११ ॥

११. मनुष्यो या असुरो, जिन्होंने पर्वत में छिपे शम्बर असुर को चालीस वर्ष खोजकर प्राप्त किया था और जिन्होंने बल-प्रकाशक अहि नाम के सोये हुए दैत्य का विनाश किया था, वे ही इन्द्र हैं।

यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥

यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे ।
सप्त । सिन्धून् । यः । रौहिणम् । अस्फुरत् । वज्रऽबाहुः । द्याम् ।
आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥ १२ ॥

यः सप्तरश्मिः सप्तसंख्याकाः पर्जन्यारश्मयो यस्य ते च रश्मयः वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्चेत्येते ये च मे शिमिविद्विषः पर्जन्याः सप्तपृथिवीमभिवर्षन्ति वृष्टिभिरिति तैत्तिरीयारण्यके ह्याम्नाताः । वृषभो वर्षकः तुविष्मान्वृद्धिमान्बलवान्वा सप्त सर्पणस्वभावाः सिन्धूनपः सर्तवे सरणाय अवासृजत् अवसृष्टवान् यद्वा गंगाद्याः सप्तमुख्या नदीरवासृजत् यश्च वज्रबाहुः सन् द्यां दिवमारोहन् रौहिणमसुरं अस्फुरत् जघान स्फुर स्फुरणे तुदादिः ॥ १२ ॥

१२. मनुष्यो या असुरो, जो सप्त वर्ण या वराह, स्वपत, विद्युत्, महः, धूपि, स्वापि, गृहमेध आदि सात रश्मियोंवाले, अभीष्टवर्षी और बलवान् हैं, जिन्होंने सात नदियों को प्रवाहित किया है और जिन्होंने वज्र-बाहु होकर स्वर्ग जाने को तैयार रौहिण को विनष्ट किया था, वे ही इन्द्र हैं।

द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥

द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् ।
चित् । अस्य । पर्वताः । भयन्ते । यः । सोमऽपाः । निऽचितः ।
वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥ १३ ॥

अस्मै इन्द्राय द्यावापृथिवी इतरेतरापेक्षया द्विवचनं प्रमित्रयोर्वरुणयोरितिवत् नमेते चित् स्वयमेव प्रह्वीभवतः णम प्रह्वत्वे कर्मकर्तरि नदुहस्नुनमां यक्चिणाविति यकः प्रतिषेधः चिदपि च अस्येन्द्रस्य शुष्मात् बलात् पर्वता भयन्ते बिभ्यति यः सोमपाः सोमस्य पाता निचितः सर्वैः यद्वा अन्येभ्योपि देवेभ्यो दृढाङ्गः वज्रबाहुः वज्रसदृशबाहुः यश्च वज्रहस्तः वज्रयुक्तकरः स इन्द्र इत्यादि प्रसिद्धम् ॥ १३ ॥

१३. मनुष्यो या असुरो, द्यावा-पृथिवी उन्हें प्रणाम करती हैं। उनके बल के सामने पर्वत काँपते हैं और जो सोमपान-कर्त्ता, दृढ़ांग, वज्र-बाहु और वज्रयुक्त हैं, वे ही इन्द्र हैं।

अथचतुर्दशी—

यःसुन्वन्तमवतियःपचन्तंयःशंसन्तंयःशशमानमूती।
यस्यब्रह्मवर्धनंयस्यसोमोयस्येदंराधःसजनासइन्द्रः ॥ १४ ॥

यः । सुन्वन्तम् । अवति । यः । पचन्तम् । यः । शंसन्तम् । यः ।
शशमानम् । ऊती । यस्य । ब्रह्म । वर्धनम् । यस्य । सोमः ।
यस्य । इदम् । राधः । सः । जनासः । इन्द्रः ॥ १४ ॥

यः सुन्वन्तंसोमाभिषवंकुर्वन्तंयजमानमवतिरक्षति यश्चपुरोडाशादीनिहवींषिपचन्तंय-
श्चउतीऊतये सुपांसुलुगितिचतुर्थ्याःपूर्वसवर्णदीर्घः स्वरक्षायैशस्त्राणिशंसन्तंयश्चशशमानं
अवति स्तोत्रंकुर्वाणंरक्षति ब्रह्मपरिवृढंस्तोत्रंयस्यवर्धनंवृद्धिकरंभवति तथायस्यसोमोवृद्धिहे-
तुर्भवति यस्यचइदमस्मदीयंराधः पुरोडाशादिलक्षणमन्नंवृद्धिकरंभवति सइन्द्रइत्यादिमसिद्ध-
म् ॥ १४ ॥१४. मनुष्यो, जो सोमाभिषवकर्त्ता यजमान की रक्षा करते
हैं, जो पुरोडाश आदि पकानेवाले, स्तोता और स्तुतिपाठक यजमान
की रक्षा करते हैं और जिनके बर्द्धक स्तोत्र, सोम और हमारा अन्न
हैं, वे ही इन्द्र हैं।

यःसुन्वतेपचतेदुध्रआचिद्वाजंदर्दर्षिसकिलासिसत्यः।
वयन्तइन्द्रविश्वहप्रियासःसुवीरासोविदथमावदेम ॥ १५ ॥ ९ ॥

यः । सुन्वते । पचते । दुध्रः । आ । चित् । वाजम् । दर्दर्षि । सः ।
किल । असि । सत्यः । वयम् । ते । इन्द्र । विश्वह । प्रियासः ।
सुऽवीरासः । विदथम् । आ । वदेम ॥ १५ ॥ ९ ॥

इदानीमृषिः साक्षात्कृतमिन्द्रंप्रतिप्रब्रूते हेइन्द्र योदुध्रः दुर्धरःसन् सुन्वतेसोमाभिषवं
कुर्वतेपुरोडाशादिहवींषिपचतेयजमानायवाजमन्नंबलंवाआदर्दर्षि भृशंमापयसि सतादृशस्त्वंसत्यः
चित् यथार्थभूतएवासि नपुनर्नास्तीतिबुद्धियोग्योसि किलेतिप्रसिद्धौ तेतवप्रियासः सुवीरासः
कल्याणपुत्रपौत्राः सन्तोवयंविश्वह सर्वेष्वहस्सुविदथंस्तोत्रंआवदेम ब्रूयाम ॥ १५ ॥
१५. इन्द्र, दुर्धर्ष होकर सोमाभिषव-कर्त्ता और पाककारी
यजमान को अन्न प्रदान करते हो, इसलिए तुम्हीं सत्य हो। हम
प्रिय और वीर पुत्र-पौत्र आदि से युक्त होकर चिरकाल तक
तुम्हारे स्तोत्र का पाठ करेंगे।

ऋतुर्जनित्रीतित्रयोदशर्चंद्वितीयंसूक्तंगार्त्समदं ऋतुःसप्तोनांत्यात्रिष्टुबित्यनुक्रमणिका अस्मभ्यंतद्वसोइति त्रयोदशीत्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः इन्द्रोदेवता उक्थेतृतीयसवनेच्छावाकशस्त्रेअस्यसूक्तस्यविनियोगः सूत्रितश्च—ऋतुर्जनित्रीनूमर्तोभवामित्रइति दशरात्रेषष्ठेहन्यपितृतीयसवनेच्छावाकशस्त्रेएतत्सूक्तम् ऋतुर्जनित्रीतिनित्यान्यैकाहिकानीतिसूत्रितम्।

अथतस्मिन्सूक्तेप्रथमा—

ऋतुर्जनित्रीतस्याअपस्परिमक्षूजातआविशद्यासुवर्धते।
तदाहनाअभवत्पिप्युषीपयोंशोःपीयूषंप्रथमंतदुक्थ्यम् ॥ १ ॥

ऋतुः। जनित्री। तस्याः। अपः। परि। मक्षु। जातः। आ।
अविशत्। यासु। वर्धते। तत्। आहनाः। अभवत्। पिप्युषी।
पयः। अंशोः। पीयूषम्। प्रथमम्। तत्। उक्थ्यम् ॥ १ ॥

ऋतुर्वर्षाख्यःकालः जनित्री सोमस्यजनयित्रीजननीभवति तस्याःपरि तस्याः जनन्याः सकाशाज्जातः सोमः अपउदकानिमक्षुशीघ्रमाविशत् यास्वप्सुसोमोवर्धते ताअविशदित्यन्वयः तत्तस्मादप्सुप्रविष्टत्वात् सोमआहनाआहन्तव्योअभिषोतव्योभवति आहनाइतिसकारान्तमिदंपदम् तथाचमन्त्रवर्णः—येतेमदाआहनसोविहायसइति। याचांशुरूपासोमलता पयः सारभूतं पिप्युषीवर्धयन्त्यभवत् प्यायतेर्लिटिक्वसौलिडचङोश्चेतिपीभावः वसोःसम्प्रसारणं उगितश्चेति ङीप् अंशोस्तस्याः सोमलतायाः पीयूषंरसभूतंपयः उक्थंप्रशस्यं हविरिन्द्रस्यतत्प्रथमंमुख्यं भवति ॥ १ ॥

१. वर्षा-ऋतु सोम की माता है। उत्पन्न होकर सोम जल में बढ़ता है; इसलिए उसी में प्रवेश करता है। जो सोमलता जल की सारभूत होकर वृद्धि को प्राप्त होती है, वह अभिषव के उपयुक्त है। उसी सोमलता का पीयूष इन्द्र का हव्य है।

अथद्वितीया—

सध्रीमायन्तिपरिबिभ्रतीःपयोविश्वप्स्न्यायप्रभरन्तभोजनम्।
समानोअध्वाप्रवतामनुष्यदेयस्ताकृणोःप्रथमंसास्युक्थ्यः ॥ २ ॥

१ ऋ० सं० ७, २. ३३.।

स॒ध्री । ईम् । आ । य॒न्ति॒ । परि॑ । बिभ्र॑तीः । पय॑ः । वि॒श्व॑ऽप्स्न्या॑य ।
प्र । भ॒र॒न्त॒ । भोज॑नम् । स॒मा॒नः । अध्वा॑ । प्र॒ऽवता॑म् । अ॒नु॒ऽस्यदे॑ ।
यः । ता । अकृ॑णोः । प्र॒थ॒मम् । सः । अ॒सि॒ । उ॒क्थ्य॑ः ॥ २ ॥

सध्री अश्वतेर्लुक् छान्दसःसहस्यसध्रिरितिसध्यादेशः अन्तोदात्तत्वेननिपातितः सध्रीचीनाः पयउदकंपरिपरितोबिभ्रतीर्बिभ्राणाः ईंएतानद्यः आयन्तिसर्वतोगच्छन्ति तानद्योविश्वप्स्न्याय विश्वासामपामाश्रयभूतायसमुद्रायभोजनंभुज्यतइतिभोजनंपयः प्रभरन्त प्रकर्षेणसंपादयन्ति कुतएतत्तदाह प्रवतांप्रवणवतांनिम्नगानांपयसामनुष्यदे कृत्यार्थेतवैकेन्केन्यत्वनइतिकेन्प्रत्ययः अनुष्यन्दनीयोध्वामार्गः समानएकोहियस्ताताानिसोमोत्पादननदीप्रवर्तनादीनिकर्माणिप्रथमंपूर्वंअकृणोः अकरोः सतादृङ्महिमोपेतस्त्वंउक्थ्योसि सर्वैःप्रशस्योभवसि ॥ २ ॥

२. परस्पर मिली हुई उदक-वाहिनी नदियाँ चारों ओर बह रही हैं और सारे जलों के आश्रयभूत समुद्र को भोजन प्रदान करती हैं। निम्नगामी जल का गन्तव्य मार्ग एक ही है। इन्द्र, तुमने पहले ये सब काम किये हैं; इसलिए तुम स्तुति-योग्य हो।

अन्वेको॑वदति॒यद्ददा॑ति॒तद्रू॒पामि॒नन्तद॑पा॒एकईयते ।
विश्वा॒एक॑स्यवि॒नुद॑स्तितिक्षते॒यस्ताकृ॑णोःप्रथ॒मंसास्युक्थ्य॑ः ॥ ३॥
अनु॑ । एक॑ः । व॒द॒ति॒ । यत् । ददा॑ति । तत् । रू॒पा । मि॒नन् ।
तत्ऽअ॑पाः । एक॑ः । ई॒य॒ते॒ । विश्वा॑ः । एक॑स्य । वि॒ऽनुद॑ः ।
ति॒ति॒क्ष॒ते॒ । यः । ता । अकृ॑णोः । प्र॒थ॒मम् । सः । अ॒सि॒ । उ॒क्थ्य॑ः॥३॥

यजमानोयद्धविर्देवेभ्योददाति तदेकोहोतानुवदतियाज्यापुरोनुवाक्याभ्यां देवताःस्मारयति एकोध्वर्युः रूपा पश्वादीनांरूपाणिमिनन्हिंसन्तदपाः तद्विशसनाख्यमपःकर्मयस्यतादृशः सन्तर्वईयते देवयजनेसर्वत्रगच्छति एकस्याध्वर्योर्विश्वाविनुदः सर्वाणितत्कर्तृकाणिविक्षेपणरूपाणिकर्मवैगुण्यानितितिक्षते तद्योग्यप्रायश्चित्तकरणेनब्रह्मासहते गुप्तिज्किङ्भ्यःसन् क्षमायामिष्यते तानिहविःप्रदानादीनिकर्माणियस्त्वमकृणोरकरोः सत्वमुक्थ्योसि ॥ ३ ॥

३. एक यजमान जो दान करता है, दूसरा उसका अनुवाद करता है। एक जल पशुहिंसा करके, हिंसाकर्त्ता बनकर, जाता है, दूसरा सारे बुरे कर्मों का शोधन करता है। इन्द्र, तुमने पहले ये सब कर्म किये हैं; इसलिए तुम स्तुतिपात्र हो।

प्र॒जाभ्य॑ःपु॒ष्टिंवि॒भज॑न्तआसते॒र॒यिमि॑वपृ॒ष्ठंप्र॒भव॑न्तमाय॒ते ।
असि॑न्व॒न्दंष्ट्रैः॑पि॒तुर॑त्ति॒भोज॑नं॒यस्ताकृ॑णोःप्र॒थ॒मंसास्युक्थ्य॑ः ॥४॥

प्र॒ऽजाभ्यः॑ । पुष्टि॑म् । वि॒ऽभज॑न्तः । आ॒स॒ते । र॒यिम्ऽइ॑व । पृ॒ष्ठम् ।
प्र॒ऽभव॑न्तम् । आ॒ऽय॒ते । असि॑न्वन् । दंष्ट्रैः॑ । पि॒तुः । अ॒त्ति॒ ।
भोज॑नम् । यः । ता । अकृ॑णोः । प्र॒थ॒मम् । सः । अ॒सि॒ । उ॒क्थ्यः॑ ॥४॥

हेइन्द्र पुष्टिंत्वयादत्तंपोषकंधनंस्वकीयाभ्यः प्रजाभ्यः विभजन्तः अस्यैतावदस्यैतावदिति विभागंकुर्वन्तोगृहमेधिनआसते स्वस्वगृहेषुनिवसन्ति तत्रदृष्टान्तः—आयतेगृहंप्रत्यागच्छतेतिथये पृष्ठंधारकं प्रभवन्तं बहुभरणसमर्थं रयिमिवधनंयथाविभज्यप्रयच्छन्तितद्वत् असिन्वन्सेतुबन्धादिकंकर्मकुर्वन्लोकः पितुः पालयित्र्यादिवःसकाशात्आगतंभोजनमुदकंतत्कार्याओषधीः दंष्ट्रैर्दन्तैरत्तिभक्षयति यद्वा असिन्वन् अव्याप्रियमाणोग्निः पितुःपालकस्ययजमानस्यसंबन्धिभोजनंहविर्लक्षणमन्नंदंष्ट्रैर्दन्तरूपैर्ज्वालैरत्ति यस्ताकृणोरित्यादिसिद्धम् ॥ ४ ॥

४. इन्द्र, जैसे गृहस्थ लोग अभ्यागत अतिथि को प्रचुर धन देते हैं, वैसे ही तुम्हारा दिया धन प्रजाओं में विभक्त होकर रहता है। लोग पिता-द्वारा दिया भोजन दाँतों से खाते हैं। इन्द्र, तुमने पहले ये सब कार्य किये हैं; इसलिए स्तुति-योग्य हो।

अधा॑कृणोः पृथि॒वीं सं॒दृशे॑ दि॒वे यो धौ॒तीना॑महिह॒न्नारि॑णक्प॒थः ।
तं त्वा॒ स्तोमे॑भिरु॒दभि॒र्न वा॒जिनं॑ दे॒वं दे॒वा अ॑जन॒न्त्सास्यु॒क्थ्यः॑ ॥५॥१०॥

अध॑ । अ॒कृ॒णोः॒ । पृ॒थि॒वीम् । स॒म्ऽदृशे॑ । दि॒वे । यः । धौ॒ती॒नाम् ।
अ॒हि॒ऽह॒न् । अरि॑णक् । प॒थः । तम् । त्वा॒ । स्तोमे॑भिः । उ॒दऽभिः॑ ।
न । वा॒जिन॑म् । दे॒वम् । दे॒वाः । अ॒ज॒न॒न् । सः । अ॒सि॒ । उ॒क्थ्यः॑ ।५।१०।

हेइन्द्र अधापिचत्वंदिवेद्योतमानायसूर्यायपृथिवींचलितांसतींदृढीकृत्यसन्दृशेसन्दर्शनीयामकृणोरकरोः दृशेविख्येचेतिकेन्प्रत्ययान्तत्वेननिपातितः यश्चत्वं धौतीनांचलन्तीनांनदीनांपथः मार्गान्अरिणक्अरेचयः गन्तुंयोग्यानकरोरित्यर्थः रिचिर्विरेचने लङिसिप् तस्यहल्ङ्यादिनालोपः अहिहन्अहेर्वृत्रस्यमेघस्यवाहन्तः हेइन्द्र देवाःस्तोतारस्तंतादृशंदेवंत्वात्वांस्तोमेभिः स्तोत्रैरजनन् अवर्धयन् तत्रदृष्टान्तः—उदभिर्नवाजिनं यथावाजिनमश्वंउदभिः उदकैर्वर्धयन्ति तद्वत् पद्दन्नोमासित्यादिनाउदकस्यउदन्भावः शेषंसिद्धम् ॥ ५ ॥

५. इन्द्र, तुमने आकाश के लिए पृथिवी को दर्शनीय किया है। तुमने प्रवाहित नदियों का मार्ग गमन-योग्य किया है। वृत्र-हन्ता इन्द्र, जैसे जल के द्वारा अश्व को तृप्त करते हो, वैसे ही स्तोता लोग स्तोत्र-द्वारा तुम्हें तृप्त करते हैं।

अथषष्ठी—

योभोजनंचदयसेचवर्धनमार्द्रादाशुष्कंमधुमद्दुदोहिथ।
सशेवधिंनिदधिषेविवस्वतिविश्वस्यैकईशिषेसास्युक्थ्यः॥ ६॥

यः। भोजनम्। च। दयसे। च। वर्धनम्। आर्द्रात्। आ।
शुष्कम्। मधुऽमत्। दुदोहिथ। सः। शेवऽधिम्। नि। दधिषे।
विवस्वति। विश्वस्य। एकः। ईशिषे। सः। असि। उक्थ्यः॥ ६॥

हेइन्द्र यस्त्वंभोजनंभुज्यतेइतिभोजनमन्नादिच दयसे यजमानेभ्यःप्रयच्छसि दयदानगतिरक्षणहिंसाग्रहणेषु आत्मनेपदी किञ्च वर्धनंवृद्धिकरंधनंबलंवादयसे तथाआर्द्रात्काण्डाच्छुष्कमनार्द्रंव्रीह्यादिकं मधुमत्मधुररसोपेतंआदुदोहिथ दुग्धवानसि दुहेर्लिटिक्रादिनियमादिडागमः सतादृशस्त्वंविवस्वति तेपरिचरणंकुर्वाणेयजमानेशेवधिंधनसदनंनिदधिषे निदधासि किंबहुनाविश्वस्यसर्वस्यजगतः एकः अद्वितीयःएवसन् ईशिषे स्वामीभवसि ईशऐश्वर्ये ईशःसेइतीडागमः सइत्यादिसिद्धम्॥ ६॥

६. इन्द्र, तुम भोजन और वर्द्धमान धन देते हो और आर्द्र काण्ड से शुष्क और मधुर रसवाले शस्य आदि का दोहन करते हो। सेवक यजमान को तुम धन देते हो। संसार में तुम अद्वितीय हो। इन्द्र, तुम स्तुति-योग्य हो।

यःपुष्पिणीश्चप्रस्वश्चधर्मणाधिदानेव्य१वनीरधारयः।
यश्चासमाअजनोदिद्युतोदिवउरुरूर्वाँअभितःसास्युक्थ्यः॥ ७॥

यः। पुष्पिणीः। च। प्रऽस्वः। च। धर्मणा। अधि। दाने।
वि। अवनीः। अधारयः। यः। च। असमाः। अजनः। दिद्युतः।
दिवः। उरुः। ऊर्वान्। अभितः। सः। असि। उक्थ्यः॥७॥

हेइन्द्र यस्त्वं पुष्पिणीः पुष्पवतीश्चप्रस्वः प्रसूताः प्रसूयमानावा अवनीरवित्रीरोषधीः दानेधि दीयन्ते उपलूयन्तेसस्यान्यत्रेतिदानंक्षेत्रं अधिकरणेल्युट् तस्मिन्क्षेत्रे धर्मणा सकललक्षणेनकर्मणाच व्यधारयः न्यदधाः यश्चत्वंदिवोद्योतमानस्य सूर्यस्यअसमाः विषमाः नानाप्रकारादिद्युतः दीप्तीःरजनः अजनयः यद्वा दिवोनक्षत्राणि जनेर्लेङ्व्यत्ययेनशप् यश्चोरुः महांस्त्वं अभितः सर्वतः ऊर्वान् महतः प्राणिनिकायान् पर्वतान्वा अजनयः शिष्टंस्पष्टम्॥ ७॥

७. इन्द्र, कर्म-द्वारा तुमने खेत में फूल और फलवाली ओषधि की रक्षा की है। प्रकाशमान सूर्य की नाना प्रकार की ज्योति उत्पन्न की है। तुमने महान् होकर चारों ओर महान् प्राणियों को उत्पन्न किया है। तुम स्तुति-पात्र हो।

अथाष्टमी–

योनार्मरंसहवसुंनिहन्तवेपृक्षायचदासवेशायचावहः।
ऊर्जयन्त्याअपरिविष्टमास्यमुतैवाद्यपुरुकृत्सास्युक्थ्यः॥ ८॥

यः। नार्मरम्। सहऽवसुम्। निऽहन्तवे। पृक्षाय। च। दासऽवेशाय। च। अवहः। ऊर्जयन्त्याः। अपरिऽविष्टम्। आस्यम्। उत। एव। अद्य। पुरुऽकृत्। सः। असि। उक्थ्यः॥ ८॥

पुरुकृत् पुरूणांकर्मणांकर्तःहेइन्द्र यस्त्वं नार्मरंनॄन् मनुष्यान्मारयतीतिनृमरः कश्चिदसुरः तस्यापत्यंनार्मरः तं सहवसुं वसुनासहवर्ततइतिसहवसुः असुरनामैतत् एतन्नामकमसुरं निहन्तवे हन्तेस्तुमर्थेतवेन्प्रत्ययः तादौचनितीतिगतेःप्रकृतिस्वरत्वम् निहन्तुंऊर्जयन्त्याः बलवत्याः वज्रधारायाः अपरिविष्टंमलादिभिरव्याप्तंआस्यंअद्यैवअवहन्तमसुरंप्रापयः यद्वा ऊर्जयन्त्याः पिशाचिकायाः आस्यंप्रापयः किमर्थं पृक्षायतवहविर्लक्षणान्नलाभाय उतापिचदासवेशायदासानां दस्यूनांवेशायविनाशायच यद्वा अस्माकमन्नलाभायदस्युविनाशायच॥ ८॥

८. बहु-कर्म-कर्त्ता इन्द्र, तुमने हव्यप्राप्ति और दासों के विनाश के उद्देश्य से नृमर के पुत्र सहवसु का विनाश करने के लिए बलवती वज्रधारा का निर्मल मुख-प्रवेश इसको दिया था। तुम स्तुति-योग्य हो।

शतंवायस्यदशसाकमाद्यएकस्यश्रुष्टौयद्धचोदमाविथ।
अरज्जौदस्यून्त्समुनब्दभीतयेसुप्राव्योअभवःसास्युक्थ्यः॥ ९॥

शतम्। वा। यस्य। दश। साकम्। आ। अद्यः। एकस्य। श्रुष्टौ। यत्। ह। चोदम्। आविथ। अरज्जौ। दस्यून्। सम्। उनप्। दभीतये। सुप्रऽअव्यः। अभवः। सः। असि। उक्थ्यः॥९॥

हेइन्द्र एकस्यएकाकिनःश्रेष्ठस्यवायस्यतेश्रुष्टौसुखनिमित्तेतदर्थंशतंदश दशशतानिहरयः साकंसहवाहनार्थंभवन्ति तथाचमन्त्रवर्णः–इन्द्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेति[1]। वाअपिच यश्चआअद्यः सर्वेषांसर्वतः उपजीव्यः नतस्येशेयंनाद्याद्यद्वैनंनाद्युरितिहिश्रुतिः। यद्ध यश्च त्वंचोदंस्तोतॄणांप्रेरकंयजमानंआविथ रक्षितवानसि किञ्च यस्त्वंअरज्जौरज्जुव-

1 ऋ० सं. ४. ७. ३३.।

जितेबन्धनागारेदस्यूनुपक्षपयित्वन् दभीतयेदभीतिर्नामकश्चिदृषिः तदर्थंसमुनप् हिंसितवानसि उभ्नातेर्हिंसाकर्मणोलङिव्यत्ययेनश्नम् हल्ङ्यादिनासिपोलोपः अडभावश्छान्दसः किञ्च सुप्राव्यः सुखेनसर्वैरुपसर्पणीयोभवः शिष्टंसिद्धम् ॥ ९ ॥

९. इन्द्र, तुम एक हो। तुम्हारे सुख के लिए दस सौ घोड़े हैं। तुमने दभीति ऋषि के लिए रज्जुरहित दस्युओं का विनाश किया था। तुम सबके प्राप्य हो; इसलिए स्तुति-योग्य हो।

विश्वेदनुरोधनाअस्यपौंस्यंददुरस्मैदधिरेकृत्नवेधनम्।
षळस्तभ्नाविष्टिरःपञ्चसंदृशःपरिपरोअभवःसास्युक्थ्यः ॥१०॥११॥

विश्वाः। इत्। अनु। रोधनाः। अस्य। पौंस्यम्। ददुः। अस्मै। दधिरे। कृत्नवे। धनम्। षट्। अस्तभ्नाः। विऽस्तिरः। पञ्च। सम्ऽदृशः। परि। परः। अभवः। सः। असि। उक्थ्यः ॥१०॥११॥

विश्वेत् सुपांसुलुगितिजसआकारः सर्वाएवरोधनाः रोधस्वत्योनद्यः अस्येन्द्रस्यपौंस्यंपुंसोभावःपौंस्यं वीर्यमितियावत् अनु तद्वीर्यमनुवर्तन्ते अस्मैइन्द्रायददुः हविर्लक्षणमन्नंयजमानाःप्रयच्छन्ति किञ्च कृत्नवेकर्मणांकर्त्रेइन्द्रायधनंदधिरे सर्वेजनाधारयन्ति तथाचमन्त्रः—इन्द्रायद्यावओषधीरुतापोरयिंरक्षन्तिजीरयोवनानीति[1]। विष्टिरोविस्तीर्णः षट्संख्याकाऊर्वीः ताश्चद्यौश्चपृथिवीचाहश्चरात्रिश्चापश्चौषधयइत्येवंरूपाः ताअस्तभ्नाः नियमितवानसि सन्दृशः सम्यक्पश्यन्तीतिसन्दृशोजनाः पञ्चसन्दृशः पञ्चजनान्परिसर्वतः परः पारयितापालयितावा अभवः भवसि गतमन्यत् ॥ १० ॥

१०. सारी नदियाँ इन्द्र की शक्ति का अनुवर्त्तन करती हैं। यजमान लोग इन्द्र को अन्न प्रदान करते हैं और सब लोग कर्मकर्त्ता इन्द्र के लिए धन धारण करते हैं। तुमने विशाल द्यु, पृथ्वी, दिन-रात्रि, जल और ओषधि नाम के छः स्थानों को निश्चित किया है। पंचजन के पालक हो। इन्द्र, तुम सबके स्तुति-पात्र हो।

सुप्रवाचनंतववीरवीर्यं[1]यदेकेनक्रतुनाविन्दसेवसु।
जातूष्ठिरस्यप्रवयःसहस्वतोयाचकर्थसेन्द्रविश्वास्युक्थ्यः ॥ ११॥

सुऽप्रवाचनम्। तव। वीर। वीर्यम्। यत्। एकेन। क्रतुना। विन्दसे। वसु। जातूऽस्थिरस्य। प्र। वयः। सहस्वतः। या। चकर्थ। सः। इन्द्र। विश्वा। असि। उक्थ्यः ॥ ११ ॥

---

१ ऋ० सं० ३. ३. १६.।

वीर बलवन् हेइन्द्र तववीर्यंसामर्थ्यंसुप्रवाचनंसुष्ठुमवचनीयं सर्वैःश्लाघनीयमित्यर्थः किंत-
त् एकेनक्रतुनाकर्मणावसुविन्दसे शत्रूणांधनंलभसे विद्लृलाभे तुदादिःस्वरितेत् यद्वा तदीयंधनं
स्तोतॄन् प्रापयसि इतियत् तवप्रशस्यमित्यर्थः किञ्च सहस्वतोबलवतोजातूष्ठिरस्यएतन्नामकः
कश्चित्तस्यवयोन्नंप्रादाः यद्वा जातूष्ठिरस्यजातुकदाचित् सर्वदास्थिरस्यसहस्वतः बलवतोय-
ज्ञादेःकर्मणः संबन्धिवयोहविर्लक्षणमन्नंप्रविन्दसइतिसमन्वयः यायानीमानिअन्याविश्वासर्वा-
णिकर्माणिचकर्थ कृतवानसि सताादृशस्त्वंउक्थ्यः सर्वैःप्रशंसनोयोसि भवसि ॥ ११ ॥

११. तुम्हारा वीर्य सबके लिए श्लाघनीय है। तुमने एक कर्म-द्वारा शत्रुओं का धन प्राप्त किया है। तुमने बलिष्ठ जातुष्ठिर को अन्न दिया है। चूंकि ये सब कार्य तुमने किये हैं; इसलिए तुम सबके स्तुति-पात्र हो।

अरमयःसरपसस्तरायकंतुर्वीतयेचवय्यायचस्रुतिम्।
नीचासन्तमुदनयःपरावृजंप्रान्धंश्रोणंश्रवयन्त्सास्युक्थ्यः ॥१२॥

अरमयः। सरऽपसः। तराय। कम्। तुर्वीतये। च। वय्याय। च।
स्रुतिम्। नीचा। सन्तम्। उत्। अनयः। पराऽवृजम्। प्र।
अन्धम्। श्रोणम्। श्रवयन्। सः। असि। उक्थ्यः ॥ १२ ॥

हेइन्द्र सरपसः सरणमपःकर्मयासांताः सरपसः शकन्ध्वादित्वात्पररूपत्वम् ताअपः कंसु-
खेन तराय तरणायअरमयः अक्रीडयः किञ्च तुर्वीतयेतुर्वीतिनामकश्चिद्राजर्षिः तस्मैवय्यायच
वय्योनामकश्चित् तस्मै ताभ्यांस्रुतिंसरणं प्रतिअरमयः तौहिजलपूर्णांमहानदींदृष्ट्वातरायतरोतुम-
समर्थावास्तां तौचत्वयातारितौ परावृजं परितः पापानिवृणक्तिदहतीतिपरावृक् कश्चिदृषिः तम-
प्सुनिमग्नंतथानीचानीचंसन्तंउदनयः आपद्भ्यःऊर्ध्वंनीतवानसि किञ्च अन्धंसन्तं श्रोणंपङ्गुंसन्तं
चक्षुर्दानादपङ्गुकरणाच्चउदनयः किंकुर्वन् प्रकर्षेणश्रवयन् आत्मानंकीर्तिमन्तं कुर्वन् उदनयइ-
तिसमन्वयः सइत्यादिसिद्धम् ॥ १२ ॥

१२. इन्द्र, सरलता से प्रवाहशील जल के पार जाने के लिए तुमने तुर्वीति और वय्य को मार्ग दे दिया था। तुमने अन्धे और पंगु, परावृज को तल से उद्धार करके अपने को कीर्त्तिशाली बनाया है; इसलिए तुम स्तुति-योग्य हो।

अस्मभ्यंतद्वसोदानायराधःसमर्थयस्वबहुतेवसव्यम्।
इन्द्रयच्चित्रंश्रवस्याअनुद्यून्बृहद्वदेमविदथेसुवीराः ॥ १३ ॥ १२॥

अस्मभ्यम् । तत् । वसो इति । दानाय । राधः । सम् । अर्थयस्व ।
बहु । ते । वसव्यम् । इन्द्र । यत् । चित्रम् । श्रवस्याः । अनु ।
द्यून् । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १३ ॥१२॥

वसो सर्वस्यवासकवसुमन्वा हेइन्द्र स्तोतृभ्योस्मभ्यंतद्राधोधनंदानायउपलक्षणमेतत् भोगायचसमर्थयस्व देहि अस्मान्सङ्गमयेत्यर्थः अर्थयाचने चुरादिरदन्तआत्मनेपदी तेत्वत्तद्बहुप्रभूतंवसव्यंवस्वेववसव्यंवस्वादित्वात्स्वार्थिकोयत् तादृशंप्रभूतंधनमस्तिखलु चित्रंचायनीयं यद्धनंअनुद्यून् अन्वहंकालाध्वनोरितिद्वितीया श्रवस्याः भोग्यमिच्छेः अन्तर्णीतण्यर्थत्वादकर्मकत्वम् यथारोदितीति सत्वन्यः द्वेह्यत्रकर्मणीउद्देश्यकर्मचविधेयकर्मान्तर्भूतम् उद्देश्यकर्मणासकर्मकोभविष्यति यथामाणवकः पुत्रीयतीतिभाष्येउदाहृतम् श्रवःशब्दाच्छन्दसिपरेच्छायांक्यच् तदन्तस्यलेटचडागमेरूपम् सुवीराः कल्याणपुत्रपौत्राःसन्तोवयंविदथेस्मिन् यज्ञेबृहत्प्रभूतंशस्त्रादिकंवाक्यंवदेम ॥ १३ ॥

१३. निवास-दाता इन्द्र, हमें भोग के लिए धन दो। तुम्हारा वह धन प्रभूत, वासयोग्य और विचित्र है। हम प्रतिदिन उस धन के भोग की इच्छा करते हैं। हम उत्तम पुत्र-पौत्र प्राप्त करके इस यज्ञ में प्रभूत स्तोत्र का पाठ करेंगे।

॥ इतिद्वितीयस्यषष्ठेद्वादशोवर्गः ॥ १२ ॥

अध्वर्यवोभरतेतिद्वादशर्चंतृतीयंसूक्तम् गार्त्समदंत्रैष्टुभमैन्द्रं अध्वर्यवोद्वादशेत्यनुक्रान्तम सूक्तविनियोगोलैङ्गिकः अतिरात्रेप्रथमेपर्यायेहोतुःशस्त्रयाज्याअध्वर्यवइत्येषा अध्वर्यवोभरतेन्द्रायसोममितियाज्येतिसूत्रितम् ।

तस्मिन्सूक्तेप्रथमा—

अध्वर्यवोभरतेन्द्रायसोममामत्रेभिःसिञ्चतामद्यमन्धः ।
कामीहिवीरःसदमस्यपीतिंजुहोतवृष्णेतदिदेषवष्टि ॥ १ ॥

अध्वर्यवः । भरत । इन्द्राय । सोमम् । आ । अमत्रेभिः । सिञ्चत ।
मद्यम् । अन्धः । कामी । हि । वीरः । सदम् । अस्य । पीतिम् ।
जुहोत । वृष्णे । तत् । इत् । एषः । वष्टि ॥ १ ॥

गृत्समदोब्रूते अध्वर्यवः अध्वरस्यनेतारः अध्वरंयजमानायेच्छन्तः कव्यध्वरपृतनस्यचिलोपइत्यकारलोपः अत्रयास्कः—अध्वर्युरध्वरयुरध्वरंयुनक्त्यध्वरस्यनेताध्वरंकामयतइति। हेअध्वर्यवः इन्द्रायदेवायसोमंहविर्धानादुत्तरवेदिंप्रतिभरतहरत आमन्त्रितस्याविद्यमानत्वादनिघातः हत्वाअमत्रेभिः अमासहअदंत्यत्रहोत्रादयइतिअमत्राणिचमसाः तैः मद्यंमदकरमन्धः सोमलक्षणमन्नंआसिञ्चतअग्नौप्रक्षिपत अत्रयास्कः—आसिञ्चतामत्रैर्मदनीयमन्धोमत्रंपात्रममाअस्मिन्नदंन्तीति। वीरःसइन्द्रः अस्यसोमस्यपीतिंपानंप्रतिसदंसदैवकामीहि कामयमानोहि तस्मात्वृष्णेवर्षित्रे इन्द्रायसोमंजुहोतजुहुत हुदानादनयोः लोटि तप्तनप्तनथनाश्चेतितबादेशः एषइन्द्रः तदित् तदेवसोमद्रव्यंवष्टि कामयते॥ १॥

१. अध्वर्युगण, इन्द्र के लिए सोम ले आओ। चमस के द्वारा मादक अन्न अग्नि में फेंको। वीर इन्द्र सदा सोमपान के अभिलाषी रहते हैं। अभीष्टवर्षी इन्द्र के लिए सोम प्रदान करो। इन्द्र उसे चाहते हैं।

अध्वर्यवोयोअपोवव्रिवांसंवृत्रंजघानाशन्येववृक्षम्।
तस्माएतंभरततद्वशायँएषइन्द्रोअर्हतिपीतिमस्य॥ २॥

अध्वर्यवः। यः। अपः। वव्रिऽवांसम्। वृत्रम्। जघान।
अशन्याऽइव। वृक्षम्। तस्मै। एतम्। भरत। तत्ऽवशाय।
एषः। इन्द्रः। अर्हति। पीतिम्। अस्य॥ २॥

हेअध्वर्यवः यइन्द्रः अपउदकानिवव्रिवांसंआवृत्यस्थितंवृत्रं वृणोत्याकाशमितिवृत्रोमेघः तंमेघंवज्रेणजघानहतवान् अशन्येव यथाअशन्यावैद्युताग्निनावृक्षंदहतितद्वत् तस्मैतद्वशायसोमकामायतस्माइन्द्रायएतंसोमंभरत उत्तरवेदिंप्रतिहरत एषइन्द्रः अस्यसोमस्यपीतिंपानमर्हति॥२॥

२. अध्वर्युगण, जिन इन्द्र ने जल को आच्छादित करनेवाले वृत्र का वज्रद्वारा वृक्ष की तरह विनाश किया है, उन्हीं सोमाभिलाषी इन्द्र के लिए सोम ले आओ। इन्द्रदेव सोमपान के उपयुक्त पात्र हैं।

अथतृतीया—

अध्वर्यवोयोदृभीकंजघानयोगाउदाजदपहिवलंवः।
तस्माएतमन्तरिक्षेनवातमिन्द्रंसोमैरोर्णुतजूर्नवस्त्रैः॥ ३॥

---

१ नि० १.८.। २ नि० ५.१.।

अध्वर्यवः । यः । दृभीकम् । जघान॑ । यः । गाः । उत्ऽआज॑त् ।
अप॑ । हि । वलम् । वरिति॒ वः । तस्मै॑ । एतम् । अन्तरि॑क्षे । न ।
वात॑म् । इन्द्र॑म् । सोमैः॑ । आ । ऊर्णुत । जूः । न । वस्त्रैः॑ ॥ ३ ॥

हेअध्वर्यवः यइन्द्रः दृभीकं सर्वानविदारयति भियंकरोतीतिदृभीकोनामासुरः तमसुरंजघान यश्चवलासुरेण निरुद्धागाउदाजत् निरगमयत् ततश्चतमेववलमसुरंअपवः अपावृणोत् हिंसितवानित्यर्थः हि प्रसिद्धः वृणोतेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् हल्ङ्याब्भ्यादिनातिपोलोपः तस्माइन्द्रायएतं सोमं अन्तरिक्षेवातंन वातमिव धाराभिर्व्याप्तंकुरुत तदेवाह सोमैरिन्द्रंआऊर्णुत सर्वतआच्छादयत ऊर्णुञ्आच्छादने आदादिकः लोटिरूपम् तत्रदृष्टान्तः—जूःन जीर्णोयथावस्त्रैरङ्गमाच्छादयति तद्वत् ॥ ३ ॥

३. अध्वर्युगण, जिन इन्द्र ने दृभीक का विनाश किया था, जिन्होंने बल असुर-द्वारा अवरुद्ध गायों का उद्धार करके उसे विनष्ट किया था, उन्हीं इन्द्र के लिए, जैसे वायु अन्तरिक्ष में व्याप्त है, वैसे ही, सोम को सर्वत्र व्याप्त करो। जैसे जीर्ण को वस्त्र के द्वारा आच्छादित किया जाता है, वैसे ही सोम-द्वारा इन्द्र को आच्छादित करो।

अध्व॑र्यवो॒यउर॑णंज॒घान॒नव॑च॒ख्वांसं॑नव॒तिंच॑बा॒हून् ।
योअर्बु॑द॒मव॑नी॒चाब॑बा॒धेतमिन्द्रं॒सोम॑स्यभृ॒थेहि॑नोत ॥ ४ ॥

अध्व॑र्यवः । यः । उर॑णम् । ज॒घान॑ । नव॑ । च॒ख्वांस॑म् । न॒व॒तिम् ।
च॒ । बा॒हून् । यः । अर्बु॑दम् । अव॑ । नी॒चा । ब॒बा॒धे । तम् ।
इन्द्र॑म् । सोम॑स्य । भृ॒थे । हि॒नो॒त ॥ ४ ॥

हेअध्वर्यवः यइन्द्रः नवनवतिंचएकोनशतंबाहून् चख्वांसं चष्टेरिदंरूपं यद्वा खनतेःक्वसौरूपं जनेलोपः छान्दसंरूपं सर्वस्यदर्शयन्तम् यद्वा आत्मनोदेहेनिखातवन्तं उरणं एतन्नामकमसुरं जघान यश्चअर्बुदं एतन्नामकमसुरंचनीचाधोमुखंकृत्वाअवबबाधेतमेनमिन्द्रंसोमस्यभृथे सोमंबिभ्रति पात्रेहिनोतवर्धयत यद्वा सोमस्यभृथेभरणेसंपादनेसतिहिनोत स्तोत्रैःप्रीणयत हिगतिवृद्ध्योः स्वादिः ॥ ४ ॥

४. अध्वर्युगण, जिन इन्द्र ने निन्नानबे बाहु दिखानेवाले उरण का विनाश किया था तथा अर्बुद को अधोमुख करके विनष्ट किया था, सोम तैयार होने पर उन्हीं इन्द्र को प्रसन्न करो।

अध्व॑र्यवो॒यः॒स्वश्नं॑ज॒घान॒यः॒शुष्ण॑म॒शुषं॒योव्यं॑सम् ।
यः॒पिप्रुं॒नमु॑चिं॒योरु॑धि॒क्रांतस्मा॒इन्द्रा॒यान्ध॑सोजुहोत ॥ ५ ॥

अध्वर्यवः। यः। सु। अश्नम्। जघान। यः। शुष्णम्। अशुषम्।
यः। विऽअंसम्। यः। पिप्रुम्। नमुंचिम्। यः। रुधिक्राम्।
तस्मै। इन्द्राय। अन्धसः।। जुहोत ॥ ५ ॥

हेअध्वर्यवः यइन्द्रः अश्नंअश्नाति भक्षयति प्राणिजातमिति यद्वा अश्नुते स्वतेजसासर्वं व्याप्नोतीतिअश्नः कश्चिदसुरः तमसुरंसुसुष्ठुजघान यःअशुषंकेनाप्यशोषणीयंशुष्णमसुरं यश्च तं असुरंव्यंसंअंसहीनंकृत्वाजघान यश्चपिप्रुंतेजसाजगद्व्याप्यवर्तमानंएतन्नामकमसुरंनमुचिंचासुरं जघान यश्च तैत्तिरीयके—नमुचिमासुरंनालभतेतिप्रकृत्यफेनेनशिरउदवर्तयदित्यन्तेनवाक्यसन्दर्भेणनमुचिवधःप्रपञ्चितः। तथामन्त्रश्च—अपांफेनेननमुचेःशिरइन्द्रोदवर्तयइति। रुधिक्रांएतन्नामकमसुरंयश्चजघानतस्माइन्द्रायअन्धसोहविर्लक्षणान्यन्नानिजुहोतजुहुत ॥ ५ ॥

५. अध्वर्युगण, जिन इन्द्र ने सरलता से अश्न का विनाश किया था, जिन्होंने अशोषणीय शुष्ण को स्कन्धहीन करके मार डाला था, जिन्होंने पिप्रु, नमुचि और रुधिक्रा का विनाश किया था, उन्हीं इन्द्र के लिए अन्न प्रदान करो।

अध्वर्यवोयःशतंशम्बरस्यपुरोबिभेदाश्मनेवपूर्वीः।
योवर्चिनःशतमिन्द्रःसहस्रमपावपद्भरतासोमंमस्मै ॥ ६ ॥ १३ ॥

अध्वर्यवः। यः। शतम्। शंबरस्य। पुरः। बिभेद। अश्मनाऽइव।
पूर्वीः। यः। वर्चिनः। शतम्। इन्द्रः। सहस्रम्। अपऽअवपत्।
भरत। सोमम्। अस्मै ॥ ६ ॥ १३ ॥

हेअध्वर्यवः यइन्द्रः शंबरस्यमायाविनोसुरस्यपूर्वीः पुरातनीः शतंपुरः पुरीः अश्मनेवअश्मसदृशेनवज्रेणबिभेद यश्चेन्द्रोवर्चिनः वर्चदीप्तौ गमेरिनिरितिविधीयमानइनिर्बहुलवचनादस्माद्भवति यद्वा नामैतत् तस्यासुरस्यशतंसहस्रंएतत्संख्याकानपरिमितान्वीरान्पुत्रान् अपावपत् युगपदेवभूम्यामपातयत् तथाचमन्त्रवर्णः—शतंवर्चिनःसहस्रंचसाकंहथोअप्रत्यसुरस्यवीरानिति। अस्मैइन्द्रायसोमंभरत ॥ ६ ॥

६. अध्वर्युगण, जिन इन्द्र ने प्रस्तर के सदृश वज्र-द्वारा शम्बर की अतीव प्राचीन नगरियों को छिन्न-भिन्न किया था, जिन्होंने वर्ची के सौ हज़ार पुत्रों को भूमिशायी किया था, उन्हीं इन्द्र के लिए सोम ले आओ।

॥ इतिद्वितीयस्यषष्ठेत्रयोदशोवर्गः ॥ १३ ॥

अध्वर्यवो॒ यः श॒तमा स॒हस्रं॒ भूम्या॑ उ॒पस्थेऽव॑पज्ज॒घ॒न्वान् ।
कुत्स॑स्या॒योर॑तिथि॒ग्वस्य॑ वी॒रान्न्यावृ॑ण॒ग्भर॑ता॒ सोम॑मस्मै ॥ ७ ॥

अध्व॑र्यवः । यः । श॒तम् । आ । स॒हस्र॑म् । भूम्याः॑ । उ॒पऽस्थे॑ ।
अव॑पत् । ज॒घ॒न्वान् । कुत्स॑स्य । आ॒योः । अ॒ति॒थि॒ऽग्वस्य॑ ।
वी॒रान् । नि । अवृ॑णक् । भर॑त । सोम॑म् । अ॒स्मै॒ ॥ ७ ॥

हेअध्वर्यवः आजघन्वान् पूर्वंशत्रून्हतवान् यइन्द्रः शतं सहस्रमसुरान् भूम्याउपस्थे उत्सङ्गेअवपत् एकैकेनप्रकारेणापातयत् किञ्च यःकुत्सस्यएतन्नामकस्यराजर्षेः आयोः पौरूरवस्यराजर्षेः अतिथिग्वस्यदिवोदासस्य एतेषांत्रयाणांवीरानभिगन्तॄन् प्रतिद्वन्द्विनः शुष्णादीनसुरान् न्यावृणक् वृणक्तिर्हिंसाकर्मा अवधीत् तथाचमन्त्रवर्णः—त्वंकुत्संशुष्णहत्ये ष्वाविथारन्धयोतिथिग्वायशंबरमिति । तादृशायास्मै इन्द्राय सोमं भरत ॥ ७ ॥

७. अध्वर्युगण, जिन शत्रुहन्ता इन्द्र ने भूमि की गोद में सौ हज़ार असुरों को मार गिराया था, जिन इन्द्र ने कुत्स, आयु और अतिथिग्व के प्रतिद्वन्द्वियों का वध किया था, उनके लिए सोम ले आओ।

अध्व॑र्यवो॒ यन्नरः॑ का॒मया॑ध्वे श्रु॒ष्टी वह॑न्तो नशथा॒ तदिन्द्रे॑ ।
गभ॑स्तिपूतं भरत श्रु॒ताये॑न्द्रा॑य॒ सोमं॑ यज्यवो जुहोत ॥ ८ ॥

अध्व॑र्यवः । यत् । न॒रः॒ । का॒मया॑ध्वे । श्रु॒ष्टी । वह॑न्तः । न॒श॒थ॒ ।
तत् । इन्द्रे॑ । गभ॑स्तिऽपूतम् । भ॒र॒त । श्रु॒ताय॑ । इन्द्रा॑य । सोम॑म् ।
य॒ज्य॒वः॒ । जु॒हो॒त॒ ॥ ८ ॥

नरः कर्मणांनेतारःहेअध्वर्यवः यदभिलषितमर्थंकामयाध्वे कामयतेर्लेटचडागमः श्रुष्टी क्षिप्रं इन्द्रेसोमंवहन्तः प्रापयन्तोयूयंतदभिलषितंफलंनशथप्राप्नुत श्रुतायलोकेप्रसिद्धायेन्द्राय-गभस्तिपूतंहस्ताभ्यांमार्जनदोहनादिभिःशोधितंसोमंभरत उत्तरवेदिंप्रतिहरत ततोयज्यवः यागंकुर्वाणाहेअध्वर्यवः आहृतंसोममिन्द्रायजुहोतजुहुत अग्नौप्रक्षिपत ॥ ८ ॥

८. नेता अध्वर्युगण, तुम जो चाहते हो, वह इन्द्र को सोम प्रदान करने पर तुरत मिल जायगा। प्रसिद्ध इन्द्र के लिए हस्त-द्वारा शोधित सोम ले आओ। हे याज्ञिकगण, इन्द्र के लिए वह प्रदान करो।

अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ।
जुषाणो हस्त्यमभि वावशे व इन्द्राय सोमं मदिरं जुहोत ॥ ९ ॥

अध्वर्यवः । कर्तन । श्रुष्टिम् । अस्मै । वने । निऽपूतम् । वने । उत् । नयध्वम् । जुषाणः । हस्त्यम् । अभि । वावशे । वः । इन्द्राय । सोमम् । मदिरम् । जुहोत ॥ ९ ॥

हेअध्वर्यवः अस्माइन्द्रायसोमंश्रुष्टिंसुखकरंकर्तनकुरुत करोतेर्लोटिबहुलंछन्दसीतिविकरणस्यलुक् तप्तनप्तनथनाश्चेतितनबादेशः आमन्त्रितस्याविद्यमानत्वान्ननिघातः किञ्च वनेसंभजनीयेवनेउदकेनिपूतमाप्यायनेनशोधितंसोममुन्नयध्वंऊर्ध्वंनयत यद्वा वनेतद्विकारेचमसेनिपूतंदशापवित्रेणशोधितंसोमं वनेचमसे उन्नयध्वं जुषाणः प्रीयमाणः सइन्द्रः वोयुष्माकंहस्त्यंहस्ताभ्यामभिषुतंसोमंअभिवावशे कामयते वशकान्तौ यङ्लुगन्तस्यलटिव्यत्ययेनात्मनेपदं लोपस्तआत्मनेपदेष्वितितलोपः मदिरंमदकरमिमंसोमंइन्द्रायजुहोत इन्द्रोद्देशेनाग्नौप्रक्षिपत ॥ ९ ॥

९. अध्वर्युगण, इन्द्र के लिए सुखकर सोम तैयार करो। संभोगयोग्य जल में शोधित सोम ऊपर ले आओ। इन्द्र प्रसन्न होकर तुम्हारे हाथों से तैयार किया हुआ सोम चाहते हैं। इन्द्र के लिए तुम लोग मदकारक सोम प्रदान करो।

अध्वर्यवः पयसोधर्यथा गोः सोमेभिरीं पृणता भोजमिन्द्रम् ।
वेदाहमस्य निभृतं म एतद्दित्सन्तं भूयो यजतश्चिकेत ॥ १० ॥

अध्वर्यवः । पयसा । ऊधः । यथा । गोः । सोमेभिः । ईम् । पृणत । भोजम् । इन्द्रम् । वेद । अहम् । अस्य । निऽभृतम् । मे । एतत् । दित्सन्तम् । भूयः । यजतः । चिकेत ॥ १० ॥

हेअध्वर्यवः यथागोरूधःपयसापूर्णंतद्वदीमेनंभोजंफलस्यदातारंरक्षितारंचेन्द्रंसोमेभिः सोमैः पृणतपूरयत मेमदीयस्यास्यसोमस्यएतदएतंनिभृतंगूढंसुखसाधनस्वभावमहमेववेदजानामि इतिपूर्वंनपरस्मैकथितं तथापियुष्मभ्यंब्रवीमीत्येवंदित्सन्तंसोमंदातुमिच्छन्तंयजमानंयजतोयष्टव्यइन्द्रोभूयोतिशयेनचिकेतजानाति दित्सतं डुदाञ्दाने इच्छायांसन् सनिमीमाघ्वितिआकारस्यइसादेशः अत्रलोपोभ्यासस्येत्यभ्यासलोपः सःस्यार्धधातुकइतिसकारस्यतत्वम् ॥ १० ॥

१०. अध्वर्युगण, गाय का अधोदेश जैसे दुग्ध से पूर्ण रहता है, वैसे ही इन फल-प्रदाता इन्द्र को सोम-द्वारा पूर्ण करो। सोम का गूढ़ स्वभाव मैं जानता हूँ। यजनीय इन्द्र सोमप्रद यजमान को अच्छी तरह जानते हैं।

अथैकादशी—

अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य क्षम्यस्य राजा।
तमूर्दरं न पृणता यवेनेन्द्रं सोमेभिस्तदपो वो अस्तु ॥ ११ ॥

अध्वर्यवः। यः। दिव्यस्य। वस्वः। यः। पार्थिवस्य। क्षम्यस्य।
राजा। तम्। ऊर्दरम्। न। पृणत। यवेन। इन्द्रम्। सोमेभिः।
तत्। अपः। वः। अस्तु ॥ ११ ॥

हेअध्वर्यवः यइन्द्रः दिव्यस्यद्युलोकार्हस्यवस्वोवसुनोराजाभवति यश्चपार्थिवस्य पृथिवीशब्देनविस्तीर्णमन्तरिक्षमुच्यते तत्रत्यंधनंपार्थिवं तस्यराजा यश्चक्षम्यस्यक्षमाभूमिः तत्रत्यंधनंक्षम्यंतस्यचराजाभवति तमेवंविधमिन्द्रंसोमेभिःसोमैः पृणतपूरयत तत्रदृष्टान्तः—ऊर्दरंन ऊर्ध्वंदीर्णमूर्दरंकुसूलं यथायवेनपूर्णंतद्वदिन्द्रंपूरयतेति तव तादृशंसोमादिनेन्द्रोदरपूरणलक्षणमपःकर्म वोयुष्माकमस्तु ॥ ११ ॥

११. अध्वर्युगण, इन्द्रदेव, स्वर्ग, पृथिवी और अन्तरिक्ष के धन के राजा हैं। जैसे यव (जौ) से धान्य रखने का स्थान पूर्ण किया जाता है, वैसे ही सोम-द्वारा इन्द्र को पूर्ण करो। यह कार्य तुम लोगों के द्वारा पूर्ण हो।

अस्मभ्यं तद्वसो दानाय राधः समर्थयस्व बहु ते वसव्यम्।
इन्द्र यच्चित्रं श्रवस्या अनु द्यून्बृहद्वदेम विदथे सुवीराः ॥ १२ ॥१४॥

अस्मभ्यम्। तत्। वसो इति। दानाय। राधः। सम्। अर्थयस्व।
बहु। ते। वसव्यम्। इन्द्र। यत्। चित्रम्। श्रवस्याः। अनु।
द्यून्। बृहत्। वदेम। विदथे। सुवीराः ॥ १२ ॥ १४ ॥

अस्मभ्यंतदिति एषाऋग्व्याख्याता ॥ १२ ॥

१२. निवास-प्रद इन्द्र, हमें भोग के लिए धन प्रदान करो। तुम्हारा वह धन प्रभूत, वास-योग्य और विचित्र है। हम प्रतिदिन उसी धन को भोग करने की इच्छा करते हैं। इस उत्तम पुत्र-पौत्र प्राप्त करके इस यज्ञ में प्रभूत स्तोत्र का पाठ करेंगे।

प्रघान्वस्येतिदशर्चंचतुर्थंसूक्तम् गार्त्समदंत्रैष्टुभमैन्द्रम् अत्रानुक्रमणिका—प्रघदशेति। द-
२ शरात्रे षष्ठेहनिनिष्केवल्येत्रीणिसूक्तानि तत्रेदंद्वितीयं षष्ठस्येतिखण्डेसूत्रितम्—एन्द्रयाहुपनः

प्रघान्वस्याभूरेकइतिनिष्केवल्यमिति त्र्येकमामकेनिष्केवल्येप्रघान्वस्येत्येषासूक्तमुखीया उ-शनसः स्तोमेनेतिखण्डेसूत्रितम्—त्र्यर्यमामनुषोदेवताताप्रघान्वस्यमहतोमहानीति ।

सैषासूक्तेप्रथमा—

प्रघा॒न्वस्य॑मह॒तोम॒हानि॑स॒त्यास॒त्यस्य॒कर॑णानिवोचम् ।
त्रिक॑द्रुकेष्वपिबत्सु॒तस्या॒स्यमदे॒अहि॒मिन्द्रो॑जघान । १ ॥

प्र । घ॒ । नु । अ॒स्य॒ । म॒ह॒तः । म॒हानि॑ । स॒त्या । स॒त्यस्य॑ ।
कर॑णानि । वो॒च॒म् । त्रिऽक॑द्रुकेषु । अ॒पि॒ब॒त् । सु॒तस्य॑ । अ॒स्य ।
मदे॑ । अहि॑म् । इन्द्रः॑ । ज॒घा॒न॒ ॥ १ ॥

गृत्समदोब्रूते महतोबलवतः सत्यस्य सत्यसंकल्पस्यास्येन्द्रस्य सत्या सत्यानियथार्थानि म-हानिमहान्तिकरणानि अस्मिन् सूक्तेवक्ष्यमाणानिकर्माणिनुअद्यप्रवोचं प्रकर्षेणब्रवीमि वचपरि-भाषणे छन्दसिलुङ्लङ्लिटइतिवर्तमानेलुङि अस्यतिवक्तिख्यातिभ्योङ् वचउम् घेतिप्रसिद्धौ कानितानिउच्यन्ते त्रिकद्रुकेषुज्योतिर्गौरायुरित्येवंरूपेष्वाभिप्लविकेष्वहस्सु सुतस्याभिषुतंसोमं इन्द्रोपिबत् ततःपीतस्यास्यसोमस्यमदेहर्षेसंजातेसति इन्द्रः अहिंवृत्रमसुरंजघानहतवान् ॥ १ ॥

१. मैं बलवान् हूँ। सत्य-संकल्प इन्द्र की यथार्थ और महती कीत्तियों का वर्णन करता हूँ। इन्द्र ने त्रिकद्र यज्ञ में सोमपान किया है। सोमजन्य प्रसन्नता होने पर इन्द्र ने अहि का वध किया।

अथद्वितीया—

अ॒वं॒शेद्याम॑स्तभायद्बृ॒हन्त॒मारोद॑सीअपृणद॒न्तरि॑क्षम् ।
सधा॑रयत्पृथि॒वीं॑प॒प्रथ॑च्च॒सोम॑स्य॒तामद॒इन्द्र॑श्चकार ॥ २ ॥

अ॒वं॒शे । द्याम् । अ॒स्त॒भा॒य॒त् । बृ॒हन्त॑म् । आ । रोद॑सी॒ इति॑ ।
अ॒पृ॒ण॒त् । अ॒न्तरि॑क्षम् । सः । धा॒र॒य॒त् । पृ॒थि॒वीम् । प॒प्रथ॑त् ।
च॒ । सोम॑स्य । ता । मदे॑ । इन्द्रः॑ । च॒का॒र॒ ॥ २ ॥

अवंशेआकाशेद्यांद्योतमानंसूर्यंद्युलोकंवा अस्तभायत् इन्द्रः अस्तभात् अनवलंबनस्यत-स्यावस्थापनमकरोदित्यर्थः स्तंभुइतिसौत्रोधातुः क्र्यादिः लङिव्यत्ययोबहुलमितिअहावपि

शायजादेशः बृहंतंमहदन्तरिक्षं रोदसीद्यावापृथिव्यौचआअपृणव स्वतेजसापूरितवान् किञ्च सइन्द्रः पृथिवींविस्तीर्णांभूमिंधारयद् अधारयव तथा पप्रथच्च एनांभूमिंअप्रथयव प्रथप्रख्याने ण्यन्तस्यलुङिचङिरूपम् चङ्यन्यतरस्यामितिमध्योदात्तत्वं सोमस्यमदेहर्षेसञ्जातेसति ता तानीमानिकर्माणीन्द्रश्चकार ॥ २ ॥

२. आकाश में इन्द्र ने द्युलोक को रोक रक्खा है। द्यावा-पृथिवी और अन्तरिक्ष को अपने तेज से पूर्ण किया है। विस्तीर्ण पृथिवी को धारण किया है और उसे प्रसिद्ध किया है। सोमजन्य हर्ष उत्पन्न होने पर इन्द्र ने यह सब काम किया था।

सद्मेवप्राचोविमिमायमानैर्वज्रेणखान्यतृणन्नदीनाम् ।
वृथासृजत्पथिभिर्दीर्घयाथैःसोमस्यतामदइन्द्रश्चकार ॥ ३ ॥

सद्मऽइव । प्राचः । वि । मिमाय । मानैः । वज्रेण । खानि ।
अतृणत् । नदीनाम् । वृथा । असृजत् । पथिऽभिः । दीर्घऽयाथैः ।
सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ३ ॥

सद्मेव यथायज्ञगृहान्मानैः षट्त्रिंशत्प्रक्रमप्राचीत्येवंरूपैःपरिमाणैः प्राक्प्रवणान्कुर्वन्ति तद्वत्सिन्धून्लोकान्वानृजून्मानैःपरिमाणैः प्राचः प्राङ्मुखान्विमिमाय इन्द्रोविशेषेणनिर्मितवान् तथानदीनांखानिनिर्गमनद्वाराणिवज्रेणचअतृणवअखनव तृहिहिंसानादरयोः रुधादिलङ् तथाचमन्त्रः—इन्द्रोअस्माँअरदद्वज्रबाहुरिति । तथादीर्घयाथैः बहुकालंगन्तव्यैः पथिभिर्मार्गैः वृथासृजव अनायासेनतानद्योःसृष्टवान् सोमस्येतिसिद्धार्थइति ॥ ३ ॥

३. यज्ञ-गृह की तरह इन्द्र ने माप करके, सारे संसार को पूर्वाभिमुख करके बनाया है। उन्होंने वज्र-द्वारा नदी के निकलनेवाले दरवाजों को खोल दिया। उन्होंने अनायास ही दीर्घ काल तक जाने योग्य मार्गों से नदियों को प्रेरित किया था। सोमजन्य हर्ष उत्पन्न होने पर इन्द्र ने यह सब काम किया था।

सप्रवोळ्हून्परिगत्यादभीतेर्विश्वमधागायुधमिद्धेअग्नौ ।
सङ्गोभिरश्वैरसृजद्रथेभिःसोमस्यतामदइन्द्रश्चकार ॥ ४ ॥

सः । प्रऽवोळ्हून् । परिऽगत्य । दभीतेः । विश्वम् । अधाक् ।
आयुधम् । इद्धे । अग्नौ । सम् । गोभिः । अश्वैः । असृजत् ।
रथेभिः । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ४ ॥

---

१ ऋ० सं० ३. २. १३.।

माक्किलचुमुरिधुनिप्रभृतयोसुराः दभीतेःपुरंसंरुध्यतंपरिगृह्यतस्मात्पुराच्चिरगुरितिकथा सइन्द्रः दभीतेः दभीतिर्नामकश्चिद्राजर्षिः तस्यप्रवोळ्हन्प्रवोढ्रून् सहिवहोरोदवर्णस्येत्योत्वम् प्रकर्षेणतंदभीतिंवहतस्तानसुरान्मध्येमार्गंपरिगत्यतेषांविश्वंसर्वमायुधमिद्धेइन्नौदीप्यमानेवह्नौअ-धाक्अधाक्षीव दहेर्लुङि मन्त्रेघसेत्यादिनाच्लेर्लुक् पश्चात्तंदभीतिंगोभिरश्वैरथेभिः रथैश्वसमसृ-जव् संयोजितवान् सोमस्येत्यादिसिद्धमिति ॥ ४ ॥

४. जो असुर दभीति ऋषि को उनके नगर के बाहर ले जा रहे थे, मार्ग में उपस्थित होकर इन्द्र ने उनके सारे आयुधों को दीप्यमान अग्नि में दग्ध कर डाला। अनन्तर दभीति को अनेक गायें, घोड़े और रथ दिये। सोमजन्य हर्ष के उत्पन्न होने पर इन्द्र ने यह सब काम किया था।

अतिमूर्तिनाम्न्येकाहेमरुत्वतीयेसूक्तमुखीया अतिमूर्तिनेतिखण्डेसूत्रितम्—सईंमहींधुनि-मेतोररम्णादिति।

सईंमहींधुनिमेतोरंरम्णात्सोअस्नातॄनपारयत्स्वस्ति।
तउत्स्नायंरयिमभिप्रतस्थुःसोमस्यतामदइन्द्रश्चकार ॥ ५ ॥१५॥

सः। ईम्। महीम्। धुनिम्। एतोः। अरम्णात्। सः। अस्नातॄन्। अपारयत्। स्वस्ति। ते। उत्ऽस्नाय। रयिम्। अभि। प्र। तस्थुः। सोमस्य। ता। मदे। इन्द्रः। चकार ॥ ५॥ १५॥

सइन्द्रः ईमेनांमहींमहतीं धुनिं धुनोतिरस्तोतॄणांपापानीतिधुनिः परुष्णीनदी तां एतोः ईश्व-रपदासन्निधानेपि तोसुन्प्रत्ययः ऋषीणांगमनार्थंअरम्णाव् उपाशमयव् महाजलांनदींअल्पोद-कामकरोदित्यर्थः सइन्द्रः अस्नातॄन् स्नातुमशक्तान् तरणासमर्थानृषीन् स्वस्तिक्षेमेणअपारयव् तेमहर्षयः उत्स्नायतांनदीमुत्तीर्यंयंरयिमपेक्ष्यगच्छन्ति तंरयिंअभिलक्ष्यप्रतस्थुः प्रतस्थिरे शि-ष्टंसिद्धम् ॥ ५ ॥

५. उन इन्द्र ने धुनि, इरावती या परुष्णी नामक महानदी को, पार जाने के लिए, शान्त किया था। नदी के पार जाने में असमर्थ लोगों को निरापद पार किया था। वे नदी पार होकर धन को लक्ष्य करके गये थे। सोमजन्य हर्ष उत्पन्न होने पर इन्द्र ने यह सब काम किया था।

अथषष्ठी—

सोदञ्चंसिन्धुमरिणान्महित्वावज्रेणानउषसःसंपिपेष।
अजवसोजविनीभिर्विवृश्चन्त्सोमस्यतामदइन्द्रश्चकार ॥ ६ ॥

सः । उद॑ञ्चम् । सिन्धु॑म् । अ॒रि॒णा॒त् । म॒हि॒ऽत्वा । वज्रे॑ण । अनः॑ ।
उ॒षसः॑ । सम् । पि॒पे॒ष॒ । अ॒ज॒वसः॑ । ज॒विनी॑भिः । वि॒ऽवृ॒श्चन् ।
सोम॑स्य । ता । मदे॑ । इन्द्रः॑ । च॒का॒र॒ ॥ ६ ॥

सइन्द्रः सिन्धुंप्राञ्चंसन्तंमहित्वास्वकीयेनमहिम्नाउदञ्चमरिणात् उदङ्मुखमकरोत् सिन्धुशब्दः छन्दसिपुँल्लिङ्गः उषसः उषोदेव्याः अनः शकटंवज्रेणसंपिपेष चूर्णीचकार एतच्चदिवश्चिद्घादुहितरमित्यत्रस्पष्टंवक्ष्यते किंकुर्वन् अजवसः जवहीनादुर्बलाःसेनाःजविनीभिः जवयुक्ताभिः सेनाभिः विवृश्चन् विशेषेणभिन्दन् पिपेषेतिसमन्वयः ओव्रश्चूछेदने शतरिग्रहिज्यादिनासंप्रसारणं शिष्टंस्पष्टम् ॥ ६ ॥

६. अपनी महिमा से इन्द्र ने सिन्धु को उत्तर-वाहिनी किया है। वेगवती सेना के द्वारा, दुर्बल सेना को भिन्न करके वज्र-द्वारा उषा के रथ को चूर्ण किया था। सोमजन्य हर्ष उत्पन्न होने पर इन्द्र ने यह सब काम किया था।

सवि॒द्वाँ अ॑पगो॒हं क॒नीना॑मा॒विर्भव॒न्नुद॑तिष्ठत्परा॒वृक् ।
प्रति॑ श्रो॒णः स्था॒द्व्य१नग॑चष्ट॒ सोम॑स्य॒ता मद॒ इन्द्र॑श्चकार ॥ ७ ॥

सः । वि॒द्वान् । अ॒प॒ऽगो॒हम् । क॒नीना॑म् । आ॒विः । भव॑न् । उत् ।
अ॒ति॒ष्ठ॒त् । प॒रा॒ऽवृक् । प्रति॑ । श्रो॒णः । स्था॒त् । वि । अ॒नक् ।
अ॒च॒ष्ट॒ । सोम॑स्य । ता । मदे॑ । इन्द्रः॑ । च॒का॒र॒ ॥ ७ ॥

पुराकिलकन्यकाःचक्षुर्हीनंपादहीनंपरावृजंजिघृक्षुष्र्षिंदृष्ट्वाभिदुद्रुवुः ततःसऋषिः इन्द्रंस्तुत्वाचक्षुःपादंचलेभे तदेतदाह सःकनीनांकन्यकानांअपगोहंअपगोहनंतिरोभावं विद्वान् परावृगृषिः आविर्भवन् सर्वेषांप्रत्यक्षोभवन् उदतिष्ठत् श्रोणः पूर्वंपङ्गुरिदानींइन्द्रस्यप्रसादाद्विभग्नजानुः ताः कन्याः प्रतिस्थात् पूर्वमन्धः अधुनाचक्षुर्लाभाद्व्यचष्ट ताःकन्यकाःविशेषेणपश्यतिस्म तानीमानिकर्माणि सइन्द्रश्चकार ॥ ७ ॥

७. अपने ब्याह के लिए आई हुई कन्याओं का आगमन जानकर परावृज ऋषि सबके सामने ही उठकर खड़े हो गये। पंगु होने पर भी कन्याओं के प्रति दौड़े; चक्षुहीन होने पर भी उन्हें देखा; क्योंकि स्तुति से प्रसन्न होकर इन्द्र ने उन्हें पैर और आँखें दे दी थीं। सोमजन्य हर्ष होने पर इन्द्र ने यह सब किया था।

भि॒नद्व॒लमङ्गि॑रोभिर्गृणा॒नो वि पर्व॑तस्य दृंहि॒तान्यै॑रत् ।
रि॒णग्रोधां॑सि कृ॒त्रिमा॑ण्येषां॒ सोम॑स्य॒ता मद॒ इन्द्र॑श्चकार ॥ ८ ॥

१४ ऋ० सं० ३. ६. २९.।

भिनत् । वलम् । अङ्गिरःऽभिः । गृणानः । वि । पर्वतस्य । दृंहितानि ।
ऐरत् । रिणक् । रोधांसि । कृत्रिमाणि । एषाम् । सोमस्य ।
ता । मदे । इन्द्रः । चकार ॥ ८ ॥

अङ्गिरोभिर्गृणानः स्तूयमानः सइन्द्रः वलंवलनामकमसुरंभिनत् अभिनत् तथागवांनिरोधकस्यपर्वतस्यदृंहितानिशिलाभिर्दृढीकृतानिद्वाराणि व्यैरत् उद्घाटितवान् तदेवाह एषांपर्वतानां कृत्रिमाणिक्रिययानिर्वृत्तानिरोधांसिनिरुद्धानिद्वाराणिरिणक् उदघाटयत् गतमन्यत् ॥ ८ ॥

८. अङ्गिरा लोगों की स्तुति करने पर इन्द्र ने बल को विदीर्ण किया था। पर्वत के सुदृढ़ द्वार को खोला था। इनकी कृत्रिम रुकावट को भी हटाया था। सोमजन्य हर्ष उत्पन्न होने पर इन्द्र ने यह सब काम किया था।

अतिमूर्तिनाम्न्येकाहे निष्केवल्येसूक्तमुखीयास्वप्नेनेत्येषा सूत्रितम्—स्वप्नेनाभ्युप्याचुमुरिंधुनिंचेतिसूक्तमुखीयेति ।

स्वप्नेनाभ्युप्याचुमुरिंधुनिंचजघन्थदस्युंप्रदभीतिमावः ।
रंभीचिदत्रविविदेहिरण्यंसोमस्यतामदइन्द्रश्चकार ॥ ९ ॥

स्वप्नेन । अभिऽउप्य । चुमुरिम् । धुनिम् । च । जघन्थ ।
दस्युम् । प्र । दभीतिम् । आवः । रंभी । चित् । अत्र । विविदे ।
हिरण्यम् । सोमस्य । ता । मदे । इन्द्रः । चकार ॥ ९ ॥

सत्वंदस्युंसर्वस्योपक्षपयितारंचुमुरिंधुनिंच एतन्नामानावसुरौस्वप्नेनदीर्घनिद्रयाअभ्युप्य संयोज्यजघंथहतवानसि ततस्ताभ्यांयुध्यमानंदभीतिंराजर्षिंप्रावः रक्षितवानसि तथाचमन्त्रवर्णः—त्वंनिदस्युंचुमुरिंधुनिंचास्वापयोदभीतयेसुहन्त्विति । आवः अवतेरक्षणार्थस्यलङिसिपिरूपम् रंभीचिद्वेत्रधारीचास्यदौवारिकः अत्रास्मिन्युद्धेतयोरसुरयोर्हिरण्यंधनंविविदेलेभे विद्लृलाभे स्वरितेव तानीमानिकर्माणिसोमस्यमदेसतिचकारेति ॥ ९ ॥

९. इन्द्र, तुमने चुमुरि और धुनि नाम के असुरों को दीर्घ निद्रा में प्रसिद्ध करके विनष्ट किया था। दभीति नामक राजर्षि की रक्षा की थी। उनके वेत्रधारी दौवारिक ने भी शत्रु का हिरण्य प्राप्त किया था। सोमजन्य हर्ष उत्पन्न होने पर इन्द्र ने यह सब काम किया था।

नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रदक्षिणामघोनी ।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः ॥ १० ॥ १७ ॥

१ ऋ० सं० ५. २. २९.

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र ।
दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् ।
भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १०॥१६॥

एषाक्रग्व्याख्याता ॥ १० ॥

१०. इन्द्र, तुम्हारी जो धनवती दक्षिणा स्तुतिकारी का मनोरथ पूरा करती है, वही दक्षिणा तुम हमें प्रदान करो । तुम भजनीय हो, हमें छोड़कर और किसी को नहीं देना। हम पुत्र-पौत्रों से युक्त होकर इस यज्ञ में प्रभूत स्तुति करेंगे ।

॥ इतिद्वितीयस्यषष्ठेषोडशोवर्गः ॥ १६॥

प्रवःसतामितिनवर्चंपञ्चमंसूक्तंगार्त्समदमैन्द्रम् अत्रानुक्रमणिका—प्रवोनवान्त्याविष्टुबिति नवमीत्रिष्टुप् शिष्टास्त्रिष्टुबन्तपरिभाषयाजगत्यः तृतीयेपर्यायेच्छावाकशस्त्रेप्रवःसतामितिसूक्तम् अतिरात्रेइतिखण्डेसूत्रितम्—प्रवःसतांप्रोद्रोणेहरयःकर्मोग्मन्नितियाज्येति ।

प्रवःसतांज्येष्ठतमायसुष्टुतिमग्नाविवसमिधानेहविर्भरे ।
इन्द्रमजुर्यंजरयन्तमुक्षितंसनाद्युवानमवसेहवामहे ॥ १ ॥

प्र । वः । सताम् । ज्येष्ठऽतमाय । सुऽस्तुतिम् । अग्नौऽइंव ।
सम्ऽइधाने । हविः । भरे । इन्द्रम् । अजुर्यम् । जरयन्तम् । उक्षितम् ।
सनात् । युवानम् । अवसे । हवामहे ॥ १ ॥

गृत्समदोब्रूते हेयजमानाः वोयुष्मदर्थंसतांमहतांदेवानांज्येष्ठतमायअतिशयेनश्रेष्ठायइन्द्रायतदर्थंअग्नाविवसमिधाने इवशब्दएवार्थः दीप्यमानएवाग्नौहविःभभरे संपादयामि ततः परंसुष्टुतिंशोभनांस्तुतिंकरोमि भरेति भृञ्भरणे ञित्त्वादुभयपदी लटिरूपं अजुर्यमजरणीयंजरयन्तंसर्वमन्यजरयन्तं उक्षितंसोमेनसिक्तंसनात्सनातनंयुवानंनित्यतरुणंतादृशमिन्द्रमवसेस्माकंरक्षणायतस्यतर्पणायवा हवामहे आह्वयामः ॥ १ ॥

१. तुम्हारे उपकार के लिए देवों में ज्येष्ठतम इन्द्र के लिए दीप्यमान अग्नि में हम हव्य प्रदान करते हैं। अनन्तर उनकी मनोहर स्तुति करते हैं। अपनी रक्षा के लिए स्वयं जरा-रहित, सारे संसार को जरा देनेवाले, सोमसिक्त, सनातन और तरुण-वयस्क इन्द्र को हम बुलाते हैं ।

यस्मादिन्द्राद्बृहतःकिंचनेमृतेविश्वान्यस्मिन्त्संभृताधिवीर्या ।
जठरेसोमंतन्वीऽसहोमहोहस्तेवज्रंभरतिशीर्षणिक्रतुम् ॥ २ ॥

यस्मात् । इन्द्रात् । बृहतः । किम् । चन । ईम् । ऋते । विश्वानि ।
अस्मिन् । सम्ऽभृता । अधि । वीर्या । जठरे । सोमम् । तन्वि ।
सहः । महः । हस्ते । वज्रम् । भरति । शीर्षणि । क्रतुम् ॥ २॥

बृहतोमहतः यस्मादिन्द्रादृतेकिमपिईमिदंजगवचननास्तीत्यर्थः चेतिनेतिनिपातद्वयसमुदायश्चनेति चेतिचिदित्यर्थे नेतिनिषिद्धार्थे ऐकपद्यंतुसांप्रदायिकं उक्तार्थेमन्त्रः—नेन्द्रादृतेपवते-धामकिञ्चनेति । यद्वा इन्द्रादृतेईमिदंजगत्किंचनक्षुद्रमत्यल्पमित्यर्थः कुतएतत्तदेवोच्यते—अस्मिन्निन्द्रेविश्वानिसर्वाणिवीर्यावीर्याणिसामर्थ्यानिअधिसंभृताधिकंसंभृतान्यासुते यश्चेन्द्रोजठरेस्वोदरेसोममभिषुतंसोमरसंभरतिबिभर्ति किञ्च तन्वि तन्वांस्वकीयेसर्वस्मिन्शरीरेसहोबलंमहस्तेजश्चबिभर्ति हस्तेवज्रमायुधंबिभर्ति शीर्षणिशिरसिक्रतुंविज्ञानंभरतिबिभर्ति यद्वृत्तयोगादनिघातः वाक्यभेदाद्वानिघाताभावः शीर्षणि शीर्षश्छन्दसीति ॥ २ ॥

२. विराट् इन्द्र के बिना संसार नहीं है । जिन इन्द्र में सारी शक्तियाँ हैं, वही इन्द्र उदर में सोमरस धारण करते हैं। उनके शरीर में बल और तेज है। उनके हाथ में वज्र और मस्तक में ज्ञान है।

नक्षोणीभ्यांपरिभ्वेतइन्द्रियंनसमुद्रैःपर्वतैरिन्द्रतेरथः ।
नतेवज्रमन्वश्नोतिकश्चनयदाशुभिःपतसियोजनापुरु ॥ ३ ॥

न । क्षोणीभ्याम् । परिऽभ्वे । ते । इन्द्रियम् । न । समुद्रैः । पर्वतैः ।
इन्द्र । ते । रथः । न । ते । वज्रम् । अनु । अश्नोति । कः । चन ।
यत् । आशुऽभिः । पतसि । योजना । पुरु ॥ ३ ॥

हेइन्द्र तेतवइन्द्रियंबलंक्षोणीभ्यांद्यावापृथिवीभ्यांनपरिभ्वे नपरिभवनीयंकृत्यार्थेतवैकेन्केन्यत्वनइतिकेन्प्रत्ययः उदात्तस्वरितयोरितिस्वरितत्वं किञ्च तेरथः समुद्रैः पर्वतैश्चनपरिभवनीयः तेवज्रमायुधंकश्चनपुमान्नान्वश्नोति नव्यामोतिपरिभवितुं अशूव्याप्तौव्यत्ययेनपरस्मैपदम् यद्यदाऽसुरवधार्थंदिग्विजयकाले आशुभिः शीघ्रगामिभिरश्वैः पुरुपुरूणिबहूनियोजनायोजनानिपतसि गच्छसि तदातवबलादिनपरिभवनीयमितिसमन्वयः ॥ ३ ॥

३. इन्द्र, जब कि तुम शीघ्रगामी अश्व पर चढ़कर अनेक योजन जाते हो, तब द्यावा-पृथिवी तुम्हारे बल को पराजित नहीं कर सकतीं। समुद्र और पर्वत तुम्हारे रथ का परिभव नहीं कर सकते । कोई भी व्यक्ति तुम्हारे बल का परिभव नहीं कर सकता।

अथचतुर्थी—

विश्वेह्य॑स्मैयज॒ताय॑धृ॒ष्णवे॒क्रतुं॒भर॑न्तिवृष॒भाय॒सश्च॑ते ।
वृषा॑यजस्वह॒विषा॒विदु॒ष्टर॒ःपिबे॑न्द्र॒सोमं॑वृष॒भेण॑भा॒नुना॑ ॥ ४ ॥

विश्वे॑ । हि । अ॒स्मै । य॒ज॒ताय॑ । धृ॒ष्णवे॑ । क्रतु॑म् । भर॑न्ति ।
वृ॒ष॒भाय॑ । सश्च॑ते । वृषा॑ । य॒ज॒स्व॒ । ह॒विषा॑ । वि॒दुः॒ऽतर॑ः । पिब॑ ।
इ॒न्द्र॒ । सोम॑म् । वृ॒ष॒भेण॑ । भा॒नुना॑ ॥ ४ ॥

हेयजमान विश्वेसर्वेजनाः यजतायसर्वैर्यजनीयायधृष्णवेशत्रूणांधर्षणशीलाय वृषभायकामानांवर्षित्रेसश्चतेसज्जमानायस्तुत्यादिकर्मवत्सुस्तोतृषुएतादृशायास्माइन्द्रायक्रतुंयज्ञादिलक्षणंकर्मभरन्तिहि हरन्तिखलु प्रणयन्तीत्यर्थः भरन्ति हियोगादनिघातः यस्मादेवंतस्माद्वृषासोमरससेचनसमर्थः विदुष्टरः विद्वच्छब्दात्तरपिछान्दसंसंप्रसारणं शासिवसिघसीनांचेतिसंहितायांषत्वम् विद्वत्तरस्त्वंहविषातमिन्द्रंयजस्व इदानीमिन्द्रंसंबोध्यआह—हेइन्द्र वृषभेणकामानांवर्षकेणभानुनादीप्यमानेनाग्निनासहसोमंपिब ॥ ४ ॥

४. सब लोग यजनीय, शत्रुनाशक, अभीष्टवर्षी और सदा सज्जित इन्द्र का यज्ञ करते हैं। तुम सोमदाता और विद्वान् हो। इन्द्र के लिए तुम भी यज्ञ करो। इन्द्र, अभीष्टवर्षी और दीप्यमान अग्नि के साथ सोमपान करो।

अथपञ्चमी—

वृष्ण॒ःकोश॑ःपवते॒मध्व॑ऊ॒र्मिर्वृ॑ष॒भान्ना॑यवृष॒भाय॒पात॑वे ।
वृष॑णाध्व॒र्यूवृ॑ष॒भासो॒अद्र॑यो॒वृष॑ण॒ंसोमं॑वृष॒भाय॑सुष्वति ॥५॥१७॥

वृष्ण॑ः । कोश॑ः । प॒व॒ते॒ । मध्व॑ः । ऊ॒र्मिः । वृ॒ष॒भऽअ॑न्नाय । वृ॒ष॒भाय॑ ।
पात॑वे । वृष॑णा । अ॒ध्व॒र्यू इति॑ । वृ॒ष॒भास॑ः । अद्र॑यः । वृष॑णम् ।
सोम॑म् । वृ॒ष॒भाय॑ । सु॒स्व॒ति॒ ॥ ५ ॥ १७ ॥

हेइन्द्र वृष्णः फलस्यवर्षितुः मध्वः मदकरस्यसोमस्यकोशोरसः ऊर्मिः अनुष्ठातॄणां पातॄणांचप्रेरकःसन् पवतेगच्छति पवगतौ अनुदात्तेत् किमर्थं वृषभान्नाय बलवर्षकानिअन्नानि यस्यसतथोक्तः तादृशायवृषभायकामानांवर्षित्रे इन्द्रायपातवेपानार्थंपवतइतिसमन्वयः किञ्च वृषणासोमरससेचनसमर्थौअध्वर्यूअध्वर्युप्रतिप्रस्थातारौवृषभासः वर्षकाअद्रयोभिषवग्रावा-

णश्ववृषणंस्वर्गादिफलस्यसेक्तारं सोमंवृषभायदेवानांश्रेष्ठायतुभ्यंसुष्वति सुन्वन्ति सुनोतेर्लटिब-हुलंछन्दसीतिविकरणस्यश्लुः अदभ्यस्तादितिझेरदादेशः ॥ ५ ॥

५. अभीष्टवर्षी और मादक सोमरस अनुष्ठाताओं के लिए उत्तेजक होकर बलप्रद, अन्न-विशिष्ट और अभीष्टवर्षी इन्द्र के पाने के लिए जाता है। सोमरसप्रद अध्वर्युद्वय और अभीष्टवर्षी अभिषव-प्रस्तर अभीष्ट-वर्षी सोम का, तुम्हारे लिए अभिषवण करते हैं। तुम भी अभीष्ट-वर्षी हो।

वृषातेवज्रउततेवृषारथोवृषणाहरीवृषभाण्यायुधा ।
वृष्णोमदस्यवृषभत्वमीशिषइन्द्रसोमस्यवृषभस्यतृप्णुहि ॥ ६ ॥

वृषा । ते । वज्रः । उत । ते । वृषा । रथः । वृषणा । हरी इति । वृषभाणि । आयुधा । वृष्णः । मदस्य । वृषभ । त्वम् । ईशिषे । इन्द्र । सोमस्य । वृषभस्य । तृप्णुहि ॥ ६ ॥

वृषभ कामानांवर्षक हेइन्द्र तेतववज्रः वृषाकामवर्षकः तथातेरथोपिवृषा तेहरीएतन्नाम-कावश्वौवृषणावर्षकौतवआयुधावज्रव्यतिरिक्तान्यायुधान्यपिवृषभाणि वृष्णोवर्षकस्यमदस्य मदकरस्यसोमस्यत्वमेवईशिषे स्वामीभवसि हेइन्द्र वृषभस्यवर्षकेणसोमस्यसोमेनतृप्णुहि तृप्तो-भव तृपप्रीणने स्वादिः क्षुभ्नादिषु नृमन तृप्नोतीतिपठितं तथापिसर्वेविधोनांछन्दसिविकल्पित-त्वादत्रणत्वप्रतिषेधोनभवति ॥ ६ ॥

६. अभीष्टवर्षी इन्द्र, तुम्हारे वज्र, रथ हरिनाम के अश्व और तुम्हारे सारे हथियार अभीष्टवर्षी हैं। तुम भी मादक और अभीष्ट-वर्षी सोम के अधिकारी हो। इन्द्र, अभीष्टवर्षी सोम से तुम भी तृप्त बनो।

प्रतेनावंनसमनेवचस्युवंब्रह्मणायामिसवनेषुदाधृषिः ।
कुविन्नोअस्यवचसोनिबोधिषदिन्द्रमुत्संनवसुनःसिचामहे ॥ ७ ॥

प्र । ते । नावम् । न । समने । वचस्युवम् । ब्रह्मणा । यामि । सवनेषु । दधृषिः । कुवित् । नः । अस्य । वचसः । निऽबोधिषत् । इन्द्रम् । उत्सम् । न । वसुनः । सिचामहे ॥ ७ ॥

दाधृषिः त्वत्प्रसादात् शत्रूणांधर्षकोहं समनेसंग्रामेवचस्युवं अमि तन्वादित्वादुवङादेशः स्ता-नमिच्छन्तंनावंन नावमिव आपद्भ्यस्तारकं तेत्वांसवनेषुत्रिषुब्रह्मणास्तोत्रेणप्रयामिप्राप्नोमि कि-ञ्च नोस्माकंअस्यवचसः स्तुतिलक्षणमेतद्वाक्यं कुविद्बहुनिबोधिषत् इन्द्रोनितरांबुध्यतां बुधअ-

वगमने लिटिसिब्बहुलमितिसिप् कुविद्योगादनिघातः तिङ्ङिचोदात्तवतीतिगतेर्निघातः वयंचउत्सं न जलस्यनिधानभूतंकूपमिव वसुनोनिधानभूतमिन्द्रंसिचामहे सोमैर्नसिंचामः सिचिर्क्षरणे स्वरितेत् आगमानुशासनस्यानित्यत्वान्नुमभावः ॥ ७ ॥

७. तुम शत्रुनाशक हो। तुम संग्राम में स्तोत्राभिलाषी और नौका की तरह उद्धारक हो। यज्ञ-काल में मैं स्तोत्र करते-करते तुम्हारे पास जाता हूँ। इन्द्र, हमारे इस स्तुतिवाक्य को अच्छी तरह जानो, हम कूप की तरह दानाधार इन्द्र को सिक्त करेंगे।

पुरासंबाधादभ्यावंवृत्स्वनोधेनुर्नवत्संयवसस्यपिप्युषीं ।
सकृत्सुतेसुमतिभिःशतक्रतोसंपत्नीभिर्नवृषणोनसीमहि ॥ ८ ॥

पुरा । सम्ऽबाधात् । अभि । आ । ववृत्स्व । नः । धेनुः । न । वत्सम् ।
यवसस्य । पिप्युषी । सकृत् । सु । ते । सुमतिऽभिः । शतक्रतो
इति शतऽक्रतो । सम् । पत्नीभिः । न । वृषणः । नसीमहि ॥ ८ ॥

हेइन्द्र संबाधात् शत्रुजन्यात्संबाधात्पुरानोस्मान् अभ्याववृत्स्व आवर्तय यथासंबाधोस्मान् नस्पृशति तथाकुर्वित्यर्थः तत्रदृष्टान्तः—धेनुर्नवत्सं यथायवसस्यघासेनपिप्युषी आप्यायिता धेनुर्वत्संक्षुद्बाधात्परावर्तयति तद्वत् हेशतक्रतो वयंसुमतिभिः त्वद्विषयैःशोभनैःस्तोत्रैः सकृदपि सुनसीमहि सुष्ठुव्याप्येमहि तत्रदृष्टान्तः—वृषणोन सेक्तारोयुवानःयथापत्नीभिर्व्याप्यन्तेतद्वत् ॥ ८ ॥

८. जैसे तृण खाकर तृप्त गाय वत्स को लौटाती है, वैसे ही हे इन्द्र, हमें अनिष्ट से पहले ही लौटा दो। शतक्रतु, जैसे पत्नियाँ युवा को व्याप्त करती हैं, वैसे ही हम सुन्दर स्तोत्र-द्वारा एक बार तुम्हें व्याप्त करेंगे।

नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रदक्षिणामघोनी ।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः ॥ ९ ॥ १८ ॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र ।
दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् ।
भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ९ ॥ १८ ॥

नूनंसातइतिव्याख्याता ॥ ९ ॥

९. इन्द्र, तुम्हारी जो धनवती दक्षिणा स्तोता को सारे मनोरथ प्रदान करती है, वह दक्षिणा तुम हमें प्रदान करो। तुम भजनीय हो। हमें छोड़कर अन्य को नहीं देना। हम पुत्र-पौत्र-युक्त होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

तदस्माइतिनवर्चंषष्ठंसूक्तंगार्त्समदमैन्द्रं अत्रानुक्रमणिका तदस्मैद्विस्त्रिष्टुबन्तमिति अन्त्ये-द्वेत्रिष्टुभे शिष्टाःसप्तजगत्यः अतिरात्रेद्वितीयेपर्यायेअच्छावाकशस्त्रे तदस्माइतिसूक्तम् अतिरात्रे-पर्यायाणामितिखण्डेसूत्रितम् तदस्मैनव्यमस्यपिबयस्यजजानइन्द्रेतियाज्येति ।

तदस्मैनव्यमङ्गिरस्वदर्चतशुष्माय‍दस्यप्रत्नथोदीरते ।
विश्वायद्गोत्रासहसापरीवृतामदेसोमस्यदृंहितान्यैरयत् ॥ १ ॥

तत् । अस्मै । नव्यम् । अङ्गिरस्वत् । अर्चत । शुष्माः । यत् ।
अस्य । प्रत्नऽथा । उत्ऽईरते । विश्वा । यत् । गोत्रा । सहसा ।
परिऽवृता । मदे । सोमस्य । दृंहितानि । ऐरयत् ॥ १ ॥

गृत्समदोब्रूते हेस्तोतारः नव्यंनवतरमन्येष्वदृष्टपूर्वंतत्तादृशंस्तोत्रमङ्गिरस्वत् अङ्गिरसइवा-स्माइन्द्रायार्चतब्रूत यद्यस्माज्जातमात्रस्यास्येन्द्रस्य शुष्माः शत्रूणांशोषकाणितेजांसिप्रत्नथा प्रत्नपूर्वविश्वेमात्थाल्छन्दसीतिइवार्थेथाल्प्रत्ययः प्रत्नानि पुरातनानीव उदीरते उद्गच्छ-न्ति ईरगतौ अनुदात्तेत् तिङिचोदात्तवतीतिगतेर्निघातः यद्यस्माच्च विश्वासर्वान् गोत्रामेघान् गाः उदकानित्रायन्तेरक्षन्तीतिगोत्रामेघाः परीवृतावृत्रेणाक्रान्तान् सर्वत्रसुपोडादेशः तान्दृं-हितानितेनदृढीकृतान्मेघान् सोमस्यमदे हर्षेसञ्जातेसति सहसाबलेनऐरयत् उदघाटयत् मेघभेदनेनापःप्रेरयामासेत्यर्थः यद्वा विश्वा सर्वाणिपरीवृता वृत्रासुरेणाक्रान्तानिदृंहितानि पर्वतबिले निरुद्धानि गोत्रा इनित्रकट्यचश्चेतिसमूहार्थेत्रप्रत्ययः गवांवृन्दानि सहसाऐरयत् तस्माद्बिलान्निरगमयत् तस्मादर्चतेतिसमन्वयः ऐरयत् ईरगतौ ण्यन्तस्यलङिरूपं यद्वृत्तयो-गादनिघातः ॥ १ ॥

१. स्तोताओ, तुम लोग अङ्गिरा लोगों की तरह नई स्तुति-द्वारा इन्द्र की उपासना करो; क्योंकि इन्द्र का शोषक तेज पूर्वकाल की तरह उदित होता है। सोमजनित हर्ष के उत्पन्न होने पर इन्द्र ने वृत्र-द्वारा आक्रान्त सारी मेघराशि को उद्घाटित किया था।

सभूतुयोहप्रथमायधायसओजोमिमानोमहिमानमातिरत् ।
शूरोयोयुत्सुतन्वंपरिव्यतशीर्षणिद्यांमहिनाप्रत्यमुञ्चत ॥ २ ॥

सः । भूतु । यः । ह । प्रथमाय । धायसे । ओजः । मिमानः ।
महिमानम् । आ । अतिरत् । शूरः । यः । युत्ऽसु । तन्वम् ।
परिऽव्यत । शीर्षणि । द्याम् । महिना । प्रति । अमुञ्चत ॥ २ ॥

सइन्द्रोभूतुभवतु वर्धतामित्यर्थः यइन्द्रः ओजस्तेजोबलंमिमानः कुर्वाणःसन् प्रथमाय प्राथमिकायधायसे धेट्पाने सोमपानायमहिमानमातिरत् अवर्धयत् तिरतेर्व्यत्ययेनशः यद्यो-

गादनिघातः शूरः शत्रूणांशातयितायइन्द्रः युत्सुयुद्धेषुतन्वंस्वकीयंशरीरंपरिव्यत वर्मणापरिवीतमकरोत् सइन्द्रोमहिनास्वकीयेनमहिम्नाशीर्षणिस्वशिरसिद्यांप्रत्यमुञ्चत अधारयत्॥ २ ॥

२. जिन इन्द्र ने बल का प्रकाश करके प्रथम सोमपान के लिए अपनी महिमा को बढ़ाया है और जिन शत्रुहन्ता इन्द्र ने युद्धकाल में अपने शरीर को सुरक्षित रखा था, वे ही इन्द्र प्रसन्न हों। उन्होंने अपनी महिमा से अपने मस्तक पर द्युलोक को धारण किया था।

अधाकृणोःप्रथमंवीर्यंमहद्यदस्याग्रेब्रह्मणाशुष्ममैरयः ।
रथेष्ठेनहर्यश्वेनविच्युताःप्रजीरयःसिस्रतेसध्र्यक्पृथक् ॥ ३ ॥

अध । अकृणोः । प्रथमम् । वीर्यम् । महत् । यत् । अस्य ।
अग्रे । ब्रह्मणा । शुष्मम् । ऐरयः । रथेऽस्थेन । हरिऽअश्वेन ।
विऽच्युताः । प्र । जीरयः । सिस्रते । सध्र्यक् । पृथक् ॥ ३ ॥

अधापिच हेइन्द्र त्वंप्रथमंमुख्यंमहद्वीर्यंसामर्थ्यमकृणोरकरोः किंतत् ब्रह्मणास्तोत्रेण स्तुतिसाधनभूतेनवेदवाक्येनास्यवीर्यम्यस्तोतुर्जनस्याग्रेपुरतः यत्शुष्मंशत्रूणांशोषकंबलमैरयः उदगमयः जीरयोजरयितारोबाधकाअसुराः रथेष्ठेनरथस्थितेनहर्यश्वेनत्वयाविच्युताः स्वस्थानात् च्यावितासन्तः सध्र्यक्सध्रीचीनाः परस्परंसंगताः पृथक्भीत्यावियुक्तासन्तः प्रसिस्रते प्रकर्षेणधावंति स्रुगतौ जुहोत्यादिः बहुलंछन्दसीत्यभ्यासस्येत्वं सध्र्यगितिसहस्यसध्रिरितिसध्र्यादेशः अद्रिसध्र्योरन्तोदात्तत्वेननिपातनादुदात्तस्वरितयोरितियणःस्वरितत्वम्॥ ३ ॥

३. इन्द्र, तुमने अपना महावीर्य प्रकट किया है; क्योंकि स्तोत्र-द्वारा प्रसन्न होकर तुमने शत्रु-विनाशक बल प्रकट किया है। तुम्हारे रथस्थित हरि नामक अश्वों के द्वारा स्वस्थान से विच्युत होकर अनिष्टकारी लोगों में से कुछ दल बाँधकर और कुछ अलग-अलग होकर भाग गये हैं।

अधायोविश्वाभुवनाभिमज्मनेशानकृत्प्रवयाअभ्यवर्धत ।
आद्रोदसीज्योतिषावह्निरातनोत्सीव्यंतमांसिदुधितासमव्ययत् ॥४॥

अध । यः । विश्वा । भुवना । अभि । मज्मना । ईशानऽकृत् ।
प्रऽवयाः । अभि । अवर्धत । आत् । रोदसी इति । ज्योतिषा । वह्निः ।
आ । अतनोत् । सीव्यन् । तमांसि । दुधिता । सम् । अव्ययत् ॥४॥

अधापिचप्रवयाः प्रवृद्धान्नः पुरातनोवायइन्द्रः विश्वाभुवनासर्वान् लोकान् मज्मनाबलेनअभिअभिभूयईशानकृत् आत्मानंसर्वस्याधिपतिंकुर्वन् यद्वा अग्न्यादीन्देवान् तत्तल्लोकाधिपतीन्कुर्वन् अभ्यवर्धत सर्वतःप्रवृद्धोभवत् आदनन्तरं वह्निः जगतांवोढासइन्द्रः ज्योतिषास्वीये-

नतेजसारोदसी द्यावापृथिव्यावातनोत्व्यामोत् किञ्च तमांसितमोरूपाणि रक्षांसिदुधितादुःस्था-निदुर्गतानिसीव्यन् विस्तारयन् समव्ययत् आवृणोत् जगद्व्याप्यवर्ततइत्यर्थः ॥ ४ ॥

४. बहुत अन्नवाले इन्द्र अपने बल से सारे भुवनों को अभिभूत करके और अपने को सबका अधिपति करके वर्द्धित हुए हैं। अनन्तर संसार के वाहक इन्द्र ने द्यावा-पृथिवी को व्याप्त किया है। इन्द्र ने दुःस्थित तमोराशि को चारों ओर फेंकते हुए संसार को व्याप्त किया है।

सप्राचीनान्पर्वतान्दृंहदोजसाधराचीनमकृणोदपामपः ।
अधारयत्पृथिवींविश्वधायसमस्तभ्नान्माययाद्यामवस्रसः ॥५॥१९॥

सः । प्राचीनान् । पर्वतान् । दृंहत् । ओजसा । अधराचीनम् ।
अकृणोत् । अपाम् । अपः । अधारयत् । पृथिवीम् । विश्वऽधा-
यसम् । अस्तभ्नात् । मायया । द्याम् । अवऽस्रसः ॥ ५॥ १९ ॥

सइन्द्रः प्राचीनान् इतस्ततःप्रकर्षेणाञ्चतोगच्छतः सपक्षान् पर्वतान् ओजसाबलेन दृंहत् पक्षच्छेदंकृत्वाभूमौदृढीचकार अचलानकरोदित्यर्थः अपांमेघस्थितानामुदकानामपः स्यन्दन-लक्षणंकर्मअधराचीनंअधः प्रदेशमञ्चतिगच्छतीत्यधराचीनं तादृशमकृणोत् मेघभेदनंकृत्वाअ-पोभूमावपातयदित्यर्थः किञ्च विश्वधायसंविश्वस्यधात्रींपृथिवींबलेनाधारयत् माययाप्रज्ञया उपायेनद्यांद्युलोकंअवस्रसः स्रंसुगतौ संपदादिलक्षणोभावेक्विप् अवपतनादस्तभ्नात् ॥ ५ ॥

५. इन्द्र ने इधर-उधर घूमनेवाले पर्वतों को अपने बल से अचल किया है। मेघ-स्थित जलराशि को नीचे गिराया है। उन्होंने संसार-धारयित्री पृथिवी को अपने बल से धारण किया है और बुद्धि-बल से द्युलोक को पतन से बचाया है।

सास्माअरंबाहुभ्यांयंपिताकृणोद्विश्वस्मादाजनुषोवेदसस्परि ।
येनापृथिव्यांनिक्रिविंशयध्यैवज्रेणहत्व्यवृणक्तुविष्वणिः ॥ ६ ॥

सः । अस्मै । अरम् । बाहुऽभ्याम् । यम् । पिता । अकृणोत् ।
विश्वस्मात् । आ । जनुषः । वेदसः । परि । येन । पृथिव्याम् ।
नि । क्रिविम् । शयध्यै । वज्रेण । हत्वी । अवृणक् । तुविऽस्वनिः ।६।

सतादृशइन्द्रः अस्मैजगते अरमलं पर्याप्तोबभूव रक्षकत्वेनस्वामीबभूवेत्यर्थः पितास-र्वस्यपालकः प्रजापतिः विश्वस्मात् सर्वस्माज्जनुषोजनात् परिततोप्युत्कृष्टाद्वेदसोज्ञानात्तद्विशिष्टं बाहुभ्यांस्वकीयाभ्यांबाहुभ्यांयमाकृणोत् तुविष्वणिः बहुकीर्तिः महास्वनोवासइन्द्रः येनज्ञाने-नक्रिविंएतन्नामानमसुरं वज्रेणहत्वी स्नात्व्यादयश्चेतित्वी हत्वा ताडयित्वा पृथिव्यांभूमौशयध्यै शयनायदीर्घनिद्रायैन्यवृणक् वृणक्तिर्हिंसाकर्मा न्यवधीत् ॥ ६ ॥

६. इन्द्र, इस संसार के लिए पर्याप्त हुए हैं। वे सबके रक्षक हैं। उन्होंने सारे जीवों की अपेक्षा उत्कृष्ट ज्ञान-बल से अपने हाथों संसार को निर्माण किया है। विविध-कीर्तिमान् इन्द्र ने इस ज्ञान से क्रिवि को वज्र द्वारा मारते हुए पृथिवी पर लेटकर रहने के लिए बाधित किया था।

अमाजूरिवपित्रोःसचासतीसमानादासदसस्त्वामियेभगम्।
कृधिप्रकेतमुपमास्याभरदद्धिभागंतन्वोयेनमामहः ॥ ७ ॥

अमाजूःऽइव। पित्रोः। सचा। सती। समानात्। आ।
सदसः। त्वाम्। इये। भगम्। कृधि। प्रऽकेतम्। उप। मासि।
आ। भर। दद्धि। भागम्। तन्वः। येन। ममहः ॥ ७ ॥

हेइन्द्र अमाजूःइव यावज्जीवंगृहेएवजीर्यन्ती पित्रोःसचा मातापितृभ्यांसहभवन्ती तयोः शुश्रूषणपरापतिमलभमानासतीदुहिता समानादात्मनःपित्रोश्चसाधारणावसदसोगृहात् अधिकरणेचोपसंख्यानमितिपञ्चमी गृहउपस्थायैवयथाभागंयाचतितथास्तोताहंभगंभजनीयं धनं त्वामिये ईगत्यादिषु लिटचुत्तमइतिव्यत्ययेनात्मनेपदं इयङादेशः त्वांयाचे तत्रदेयंधनंप्रकेतंप्रकर्षेणज्ञातव्यंविश्वजनीयंकृधिकुरु तत्रउपमासि एतावदिदंधनमितिकुरु आभर तत्रधनंसंपादय भागंभजनीयंधनंतन्वः शरीरायमह्यमितियावत् दद्धिदेहि येनधनेन ममहः स्तोतॄनिमान्आपूजयसि ॥ ७ ॥

७. इन्द्र, जैसे आमरण माता-पिता के साथ रहनेवाली पुत्री अपने पितृ-कुल से ही अंश के लिए प्रार्थना करती है, वैसे ही मैं तुम्हारे पास धन की याचना करता हूँ। उस धन को तुम सबके पास प्रकट करो, उस धन को मापो और उसे सम्पादित करो। मेरे शरीर के भोगने योग्य धन दो। इस धन से स्तोताओं को सम्मानित करो।

भोजंत्वामिन्द्रवयंहुवेमददिष्ट्वमिन्द्रापांसिवाजान्।
अविड्ढीन्द्रचित्रयानऊतीकृधिवृषन्निन्द्रवस्यसोनः ॥ ८ ॥

भोजम्। त्वाम्। इन्द्र। वयम्। हुवेम। ददिः। त्वम्। इन्द्र।
अपांसि। वाजान्। अविड्ढि। इन्द्र। चित्रया। नः। ऊती।
कृधि। वृषन्। इन्द्र। वस्यसः। नः ॥ ८ ॥

हेइन्द्र भोजंपालयितारंभोजयितारंवात्वांवयंहुवेम ह्वयतेर्लिङिबहुलंछन्दसीतिसंप्रसारणम् हेइन्द्र त्वंअपांसिकर्माणिवाजानन्नानिददिः दाणूदाने आदृगमहनजनइतिकिप्रत्ययः लिड्वद्भावादभ्यासादिकार्यम् नलोकाव्ययनिष्ठेतिषष्ठीप्रतिषेधः दाताखलु हेइन्द्र चित्रयानानाप्रकारयाऊतीऊत्यापालनेननोस्मानविड्ढिरक्ष वृषन्कामानांवर्षकहेइन्द्र नोस्मान्वस्यसः अतिशयेनवसुमतः कृधिकुरु ॥ ८ ॥

८. इन्द्र, तुम पालक हो। हम तुम्हें बुलाते हैं। तुम कर्म और अन्न के दाता हो। नाना प्रकार से आश्रय प्रदान कर तुम हमें बचाओ। अभीष्टवर्षी इन्द्र, तुम हमें अत्यन्त धनशाली करो।

नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रदक्षिणामघोनी।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः॥९॥२०॥

नूनम्। सा। ते। प्रति। वरम्। जरित्रे। दुहीयत्। इन्द्र। दक्षिणा। मघोनी। शिक्ष। स्तोतृऽभ्यः। मा। अति। धक्। भगः। नः। बृहत्। वदेम। विदथे। सुऽवीराः॥ ९॥ २०॥

नूनंसातइतिव्याख्याता॥ ९॥

९. इन्द्र, तुम्हारी जो धनवती दक्षिणा स्तोता को सारे मनोरथ प्रदान करती है, वही दक्षिणा तुम हमें दो। तुम भजनीय हो। हमें छोड़कर अन्य किसी को नहीं देना। हम पुत्र-पौत्र से संयुक्त होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

प्रातारथइतिनवर्चंसप्तमंसूक्तं गार्त्समदंत्रैष्टुभमैन्द्रं प्रातरित्यनुक्रान्तम् लैङ्गिकोविनियोगः।

तस्मिन्सूक्तेप्रथमा—

प्रातारथोनवोयोजिसस्निश्चतुर्युगस्त्रिकशःसप्तरश्मिः।
दशारित्रोमनुष्यःस्वर्षाःसइष्टिभिर्मतिभीरंह्योभूत्॥ १॥

प्रातरिति। रथः। नवः। योजि। सस्निः। चतुःऽयुगः। त्रिऽकशः। सप्तऽरश्मिः। दशऽअरित्रः। मनुष्यः। स्वःऽसाः। सः। इष्टिऽभिः। मतिऽभिः। रंह्यः। भूत्॥ १॥

रथोरंहणाद्रथोयज्ञः सचनवोनूयतेस्तूयतेत्रेतिनवःस्तुतिमान् सस्निः स्नाशौचे आदृगमहनेतिकिन्प्रत्ययः शुद्धः एवंविधोयज्ञः प्रातः प्रातःकालेयोजि अयोज्यस्माभिः चतुर्युगः युज्यन्तइतियुगानिग्रावाणः चत्वारियुगानियस्यसतथोक्तः अध्वर्य्वाद्यृत्विगभिप्रायंवा त्रिकशः तिस्रः कशावाचोमन्द्रमध्यमोत्कृष्टरूपायस्यसतथोक्तः सवनत्रयाभिप्रायंवा सप्तरश्मिः अश्नुवते व्याप्नुवन्ति कर्माणीतिरश्मयः छन्दांसिसप्तसंख्याकानिगायत्र्यादीनिच्छन्दांसियस्यसतथोक्तः दशारित्रः अरिभ्यः पापेभ्यस्त्रायन्तइतिअरित्राग्रहाः दशसंख्याकाग्रहायस्यसतादृशः चमसाध्वर्य्वभिप्रायंवा मनुष्योमनुष्याणांहितः स्वर्षाः स्वर्गस्यदाता सएवंविधोयज्ञः इष्टिभिः प्रायणीयातिथ्यादिभिः मतिभिर्मननीयैःस्तोत्रैःरंह्यः शब्दनीयोभूदभूत् यद्वा नवोभिनवः सस्निः स-

नोतेर्द्विर्वचनादि कामानांदातारथः रमन्तेस्मिन्निति रथः स्यन्दनः प्रातःसवनेचसोमपानार्थंयोजि अश्वैरयोजि कीदृशःचतुर्युगः त्रिकशः तिस्रःकशायस्यसतथोक्तः सप्तरश्मिः सप्तरज्जुः दशारित्रोदशवक्तः मनुष्यः मनुष्यहितः स्वर्षाः स्वर्गस्यसङ्गमयिताइन्द्ररथः इष्टिभिःयागैर्मतिभिः स्तोत्रैश्चव्याप्तव्योभवति ॥ १ ॥

१. स्तुतियोग्य और विशुद्ध यज्ञ प्रातःकाल प्रारम्भ हुआ है। इस यज्ञ में चार पत्थर, तीन प्रकार के स्वर, सात प्रकार के छन्द और दस प्रकार के पात्र हैं। यह मनुष्यों के लिए हितकर और स्वर्ग-प्रदाता है। यह मनोहर स्तुति और होम आदि के द्वारा प्रसिद्ध होगा।

साास्मा अरंप्रथमंसद्वितीयमुतोतृतीयंमनुषःसहोता ।
अन्यस्यागर्भमन्यऊंजनन्तसोअन्येभिःसचतेजेन्योवृषा ॥ २ ॥

सः । अस्मै । अरम् । प्रथमम् । सः । द्वितीयम् । उतो इति । तृतीयम् । मनुषः । सः । होता । अन्यस्याः । गर्भम् । अन्ये । ऊँ इति । जनन्त । सः । अन्येभिः । सचते । जेन्यः । वृषा ॥ २ ॥

सयज्ञः सोमोवाअस्माइन्द्रायप्रथमंप्रातःसवनेअरंपर्याप्तोभूत् सचद्वितीयं माध्यन्दिनेसवनेपर्याप्तोभूत् उतोअपिचसतृतीयं तृतीयेसवनेपर्याप्तोभूत् सर्वत्रकालाध्वनोरितिद्वितीया सयज्ञः सोमोवामनुषोमनुष्यस्यहोताशुभानांवोढाभवति किञ्च अन्येऋत्विजः अन्यस्याः पृथिव्याः वेदात्मिकायावाचोवागर्भसन्तं सोमंयज्ञं वाजनन्त अजनयन्त उत्पसिद्ध्यर्थः वृषाअभिमतफलवर्षकः जेन्योजयसमर्थः सयज्ञः सोमोवाअन्येभिः अन्यैरिन्द्रादिभिःदेवैःसचते सङ्गच्छते सचसमवाये अनुदात्तेत् ॥ २ ॥

२. यह यज्ञ इन इन्द्र के लिए प्रथम, द्वितीय और तृतीय सवन में यथेष्ट हुआ। यह मानवों के लिए शुभ फल ले आता है। दूसरे ऋत्विक् लोग भी दूसरे सिद्ध वाक्यों का गर्भ उत्पन्न करते हैं। अभीष्टवर्षी और जयशील यज्ञ अन्य देवों के साथ मिलित होता है।

हरीनुकंरथइंद्रस्ययोजमायैसूक्तेनवचसानवेन ।
मोषुत्वामत्रबहवोहिविप्रानिरीरमन्यजमानासोअन्ये ॥ ३ ॥

हरी इति । नु । कम् । रथे । इन्द्रस्य । योजम् । आऽयै । सुऽउक्तेन ।
२ वचसा । नवेन । मो इति । सु । त्वाम् । अत्र । बहवः । हि । विप्राः । नि । रीरमन् । यजमानासः । अन्ये ॥ ३ ॥

इन्द्रस्यसंबन्धिनिरथे हरीएतन्नामकावश्वौनुक्षिप्रंकंसुखेनआयैगमनायनवेनअन्यैरकृत पूर्वेणवचसावेदात्मकेनसूक्तेनसाधनेनयोजंयुनज्मि युजिर्योगे लुङि इरितोवेतिच्लेरङादेशः अत्रास्मिन्यज्ञेबहवोविप्रामेधाविनः स्तोतारोभवंतिहि तथापिअन्येमद्यतिरिक्तायजमानासोयजमानाः त्वां सु सुष्ठु मोनिरीरमन् नितरांमारमयन्तु अतोस्मदीयंयज्ञमागत्यसोमंपिबेतिभावः रीरमन् रमतेर्ण्यन्तस्यलुङिचङिसन्वद्भावादभ्यासस्येत्वदीर्घौ वाक्यभेदादत्र हियोगाभावेननिघातः॥ ३ ॥

३. इन्द्र के रथ में नये स्तोत्रों के द्वारा शीघ्र जाने के लिए हरिनाम के अश्वों को जोड़ा जाता है। इस यज्ञ में अनेक मेधावी स्तोता हैं। दूसरे यजमान लोग तुम्हें अच्छी तरह तृप्त नहीं कर सकते।

आद्वाभ्यांहरिभ्यामिन्द्रयाह्याचतुर्भिराषड्भिर्हूयमानः।
आष्टाभिर्दशभिःसोमपेयमयंसुतःसुमखमामृधस्कः ॥ ४ ॥

आ। द्वाभ्याम्। हरिऽभ्याम्। इन्द्र। याहि। आ। चतुःऽभिः।
आ। षट्ऽभिः। हूयमानः। आ। अष्टाभिः। दशऽभिः। सोमऽपेयम्।
अयम्। सुतः। सुऽमख। मा। मृधः। करिति कः॥ ४ ॥

हेइन्द्र होतृभिराहूयमानस्त्वं द्वाभ्यांहरिभ्यामश्वाभ्यामिमंयज्ञंप्रति सोमपानार्थमायाहि चतुर्भिर्हरिभिरायाहि तथाषड्भिरागच्छ सोमपेयं पापाने कर्मणिअचोयत् ईयतीतीत्वं पातव्यंसोमंप्रतिअष्टाभिरश्वैरायाहि अष्टनोदीर्घादितिविभक्तेरुदात्तत्वं दशभिर्हरिभिरागच्छ सुमख सुयज्ञ सुधनवा हेइन्द्र अयंसोमस्त्वदर्थंसुतः अभिषुतः अतोयज्ञस्यमृधोहिंसाः माकः माकार्षीः करोतेर्लुङिमन्त्रेघसेत्यादिनाच्लेर्लुक् गुणेकृते हल्ङ्यादिनासिपोलोपः-यद्यपीन्द्रस्यद्वावेवहरीतथापितयोर्विभूतिभेदान्नानात्वं अतोश्वबहुत्वमविरुद्धम् ॥ ४ ॥

४. इन्द्र, तुम बुलाये जाकर दो, चार, छः, आठ अथवा दस हरि नामक घोड़ों के द्वारा सोमपान के लिए आओ। शोभन धनवाले इन्द्र, यह सोम तुम्हारे लिए प्रस्तुत हुआ है। तुम उसे नष्ट नहीं करना।

अथपञ्चमी—

आविंशत्यात्रिंशतायाह्यर्वाङाचत्वारिंशताहरिभिर्युजानः।
आपञ्चाशतासुरथेभिरिन्द्राषष्ट्यासप्तत्यासोमपेयम् ॥ ५ ॥ २१॥

आ। विंशत्या। त्रिंशता। याहि। अर्वाङ्। आ। चत्वारिंशता।
हरिऽभिः। युजानः। आ। पञ्चाशता। सुऽरथेभिः। इन्द्र।
आ। षष्ट्या। सप्तत्या। सोमऽपेयम्॥ ५॥ २१ ॥

हेइन्द्र सोमपेयंपातव्यंसोमंप्रतिअर्वाङस्मदभिमुखःसन्विंशत्याविंशतिसंख्याकैरश्वैरायाहि त्रिंशतात्रिंशत्संख्याकैर्हरिभिरागच्छ चत्वारिंशताचत्वारिंशत्संख्याकैर्हरिभिर्युंजानोयुज्यमानस्त्वंसोमपानंप्रत्यायाहि सुरथेभिः सुरंहणैः सुगमनैः पञ्चाशताहरिभिरायाहि तथाषष्ट्याषष्टिसंख्याकैर्हरिभिः सप्तत्याएतत्संख्याकैर्हरिभिः सोमपानंप्रत्यागच्छ ॥ ५ ॥

५. इन्द्र, तुम उत्तम गतिवाले बीस, तीस, चालीस, पचास, साठ अथवा सत्तर घोड़ों के द्वारा हमारे सामने सोमपान के लिए आओ।

॥ इतिद्वितीयस्यषष्ठेएकविंशोवर्गः ॥ २१ ॥

आशीत्यानवत्यायाह्यर्वाङाशतेनहरिभिरुह्यमानः।
अयंहितेशुनहोत्रेषुसोमइन्द्रत्वायापरिषिक्तोमदाय ॥ ६ ॥

आ। अशीत्या। नवत्या। याहि। अर्वाङ्। आ। शतेन। हरिऽभिः। उह्यमानः। अयम्। हि। ते। शुनऽहोत्रेषु। सोमः। इन्द्र। त्वाऽया। परिऽसिक्तः। मदाय ॥ ६ ॥

अशीत्या अशीतिसंख्याकैरश्वैः सोमपानार्थमर्वाङस्मदभिमुखःसन्आयाहि नवत्याएतत्संख्याकैरश्वैरागच्छ शतेनशतसंख्याकैर्हरिभिरुह्यमानोधार्यमाणस्त्वंआयाहि हेइन्द्र हियस्मात्तेमदायहर्षायशुनहोत्रेषु सुखेनहूयतेसोमोयेभिरितिशुनहोत्राःपात्रविशेषाः तेषुअयंसोमः त्वाया त्वत्कामनयापरिषिक्तः ॥ ६ ॥

६. इन्द्र, अस्सी, नब्बे अथवा सौ अश्वों के द्वारा ढोये जाकर हमारे सामने आओ; क्योंकि इन्द्र तुम्हारे लिए तुम्हारे आनन्द के लिए पात्र में सोम रखा हुआ है।

अथसप्तमी—

ममब्रह्मेन्द्रयाह्यच्छाविश्वाहरीधुरिधिष्वारथस्य।
पुरुत्राहिविहव्योबभूथास्मिञ्छूरसवनेमादयस्व ॥ ७ ॥

मम। ब्रह्म। इन्द्र। याहि। अच्छ। विश्वा। हरी इति। धुरि। धिष्व। रथस्य। पुरुऽत्रा। हि। विऽहव्यः। बभूथ। अस्मिन्। शूर। सवने। मादयस्व ॥ ७ ॥

हेइन्द्र ममब्रह्मअस्मदीयामेवस्तुतिमच्छाभिलक्ष्यायाहि विश्वाव्याप्तौहरीरथस्यधुरियुगप्रान्तेधिष्व संयोजय पुरुत्रापुरुभिर्बहुभिर्यजमानैः त्वंविहव्योविविधंह्वातव्योबभूथ बभूविथ

बभूथाततंथजगृम्मववर्थेतिनिपातनादिड्भावः हिप्रसिद्धः हेशूर अस्मिन्त्सवनेयज्ञेमादयस्व सोमपानेनहृष्टोभव ॥ ७ ॥

७. इन्द्र, मेरी स्तुति के सामने आओ। जगद्व्यापी दोनों अश्वों को रथ के अग्रभाग में संयोजित करो। बहु-संख्यक यजमान तुम्हें बुलाते हैं। शूर, तुम इस यज्ञ में हृष्ट होओ।

नमइन्द्रेणसख्यंवियोषदस्मभ्यमस्यदक्षिणादुहीत ।
उपज्येष्ठेवरूथेगभस्तौप्रायेप्रायेजिगीवांसःस्याम ॥ ८ ॥

न । मे । इन्द्रेण । सख्यम् । वि । योषत् । अस्मभ्यम् । अस्य । दक्षिणा । दुहीत । उप । ज्येष्ठे । वरूथे । गभस्तौ । प्रायेऽप्राये । जिगीवांसः । स्याम ॥ ८ ॥

इन्द्रेणसहमेममसख्यंयष्टुयष्टव्यलक्षणंसख्यंनवियोषव् कदाचिदपिनवियुज्यतां यौतेर्लेटिसिब्बहुलमितिसिप् अडागमः अस्येन्द्रस्यदक्षिणाइन्द्रकर्तृकं दानमस्मभ्यंदुहीत अभिमतफलं दुग्धां दुहेर्लिङिरूपं ज्येष्ठेअतिशयेनप्रशस्येवरूथे आपदांवारकेवरणीयेवागभस्तौ बाहौउपसमीपेवर्तिनः स्याम इन्द्रस्यहस्तस्पर्शयोग्याभवेमेत्यर्थः किञ्च प्रायेप्राये सोमपानार्थमिन्द्रस्ययज्ञशालायांप्रवेशेप्रवेशे जिगीवांसः शत्रूणांजेतारोभवेम यद्वा प्रायेप्रायेप्रकर्षेणईयतेगम्यतेयोद्धृभिरितिप्रायंयुद्धं तस्मिन्युद्धेजिगीवांसः शत्रूञ्जितवन्तोभवेम ॥ ८ ॥

८. इन्द्र के साथ मेरी मैत्री वियुक्त न हो। इन्द्र की यह दक्षिणा हमें अभिमत फल प्रदान करे। हम इन्द्र के प्रशंसनीय और आपद् को हटानेवाले दोनों हाथों के पास अवस्थिति करते हैं। प्रत्येक युद्ध में हम विजयी बनें।

नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रदक्षिणामघोनी ।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः॥ ९॥२२॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ९ ॥ २२ ॥

नूनंसातइतिव्याख्याता ॥ ९ ॥

९. इन्द्र, तुम्हारी जो धनवती दक्षिणा स्तोता के मनोरथ पूर्ण करती है, वही दक्षिणा हमें प्रदान करो। तुम भजनीय हो। हमें छोड़कर दूसरे को दक्षिणा नहीं देना। हम पुत्र-पौत्र-युक्त होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यषष्ठेद्वाविंशोवर्गः ॥ २२ ॥

अपाय्यस्येतिनवर्चमष्टमंसूक्तंगार्त्समदंत्रैष्टुभमैन्द्रम् अपायीत्यनुक्रान्तम् लैङ्गिकः सूक्तविनियोगः द्वितीयेपर्यायेहोतृशस्त्रयाज्या अपाय्यस्यान्धसोमदायेतियाज्येसूत्रितम् ।

अपा॑य्यस्यान्ध॑सो॒मदा॑य॒मनी॑षिणः सु॒वा॒नस्य॒प्रय॑सः ।
यस्मि॒न्निन्द्रः॑ प्र॒दिवि॑वावृ॒धा॒नओको॑द॒धेब्र॑ह्म॒ण्यन्त॑श्च॒नरः॑ ॥ १ ॥

अपा॑यि । अ॒स्य । अन्ध॑सः । मदा॑य । मनी॑षिणः । सु॒वा॒नस्य॑ । प्रय॑सः । यस्मि॑न् । इन्द्रः॑ । प्र॒ऽदिवि॑ । व॒वृ॒धा॒नः । ओकः॑ । द॒धे । ब्र॒ह्म॒ण्यन्तः॑ । च॒ । नरः॑ ॥ १ ॥

सुवानस्यसोमाभिषवंकुर्वाणस्यमनीषिणः प्राज्ञस्ययजमानस्यसंबन्धिनः प्रयसः प्रीङ् तर्पणे असुन् प्रीतिकरस्यअस्यसोमलक्षणस्यान्धसः अन्नस्यमदायअपायि एतदन्नमिन्द्रेणपीतं इत्यर्थः यद्वा अपायीतिपातेर्व्यत्ययोबहुलमितिचिण्कर्तरिभवति छन्दसिलुङ्लङ्लिटइतिलोडर्थेलुङ् प्रीतिकरस्यान्धसः मदायअपायि शेषविवक्षयाकर्मणिषष्ठी इन्द्रः सोमंपिबतु प्रदिविपुराणेयस्मिन्सोमलक्षणेन्धसिवावृधानोवर्धमानइन्द्रःओकोदधे सेव्यतयानिवासंचकार किञ्च ब्रह्मण्यन्तः इन्द्रायस्तोत्रमिच्छन्तः नरः कर्मणांनेतारऋत्विजः यस्मिन्निवासंदधिरे तदेतदपायीति पूर्वेणान्वयः ॥ १ ॥

१. सोमाभिषवकर्त्ता मनीषी यजमान का मादक अन्न, आनन्द के लिए, इन्द्र भक्षण करें। इस प्राचीन अन्न में वर्द्धमान होकर इन्द्र इसमें निवास करते हैं। इन्द्र के स्तोत्राभिलाषी ऋत्विक् भी इसमें निवास कर चुके हैं।

अथद्वितीया—

अ॒स्यम॒न्दा॒नोमध्वो॒वज्र॑ह॒स्तोऽहि॒मिन्द्रो॑अर्णो॒वृतं॒विवृ॑श्चत् ।
प्रयद्वयो॒नस्वस॑रा॒ण्यच्छा॒प्रयां॑सिचन॒दीना॒ंचक्र॑मन्त ॥ २ ॥

अ॒स्य । म॒न्दा॒नः । मध्वः॑ । वज्र॑ऽहस्तः । अहि॑म् । इन्द्रः॑ । अ॒र्णः॒ऽवृत॑म् । वि । वृ॒श्च॒त् । प्र । यत् । वयः॑ । न । स्वस॑राणि । अच्छ॑ । प्रयां॑सि । च॒ । न॒दीना॑म् । चक्र॑मन्त ॥ २ ॥

अस्यमध्वः तृतीयार्थेषष्ठी अनेनमदकरेणसोमेनमन्दानोहृष्यन्वज्रहस्तः वज्रयुक्तोहस्तोयस्यसइन्द्रः अर्णोवृतंउदकस्यावरकंउदकेनावृतंवा अहिंवृत्रंमेघंवाविवृश्चत् विशेषेणाच्छिनत् ओव्रश्चूछेदने तौदादिकः लङि ग्रहिज्यादिनासंप्रसारणम् किञ्च यद्यदाअहिभेदनेजाते नदीनांप्रयांसिप्रीणयितॄणिजलानिअच्छसमुद्रमभिलक्ष्यप्रचक्रमन्त गन्तुमुपाक्रमन् तत्रदृष्टान्तः— वयोन यथापक्षिणःस्वसराणि सुष्ठुअर्यन्तेप्राप्यन्तेइतिस्वराणिस्वसराणि कुलायाः तानभिलक्ष्य गच्छन्तितद्वत् ॥ २ ॥

२. इस मदकर सोम से आनन्द-निमग्न होकर इन्द्र ने हाथों में वज्र धारण करके जल के आवरक अहि का छेदन किया था। उस समय प्रसन्नतादायक जल-राशि, जैसे पक्षिगण पुष्करिणी के सामने जाते हैं, वैसे ही समुद्र के सामने जाने लगी।

अथतृतीया—

समाहिनइन्द्रोअर्णोअपांप्रैरयदहिहाच्छासमुद्रम् ।
अजनयत्सूर्यंविददाअक्तुनाह्नांवयुनानिसाधत् ॥ ३ ॥

सः । माहिनः । इन्द्रः । अर्णः । अपाम् । प्र । ऐरयत् । अहिऽहा ।
अच्छ । समुद्रम् । अजनयत् । सूर्यम् । विदत् । गाः । अक्तुना ।
अह्नाम् । वयुनानि । साधत् ॥ ३ ॥

माहिनोमहनीयःपूजनीयः यद्वा महिमोपेतः अहिहाअहिंमेघंहतवानिन्द्रःब्रह्मभ्रूणवृत्रेषुक्विप् बहुलंछन्दसीतिभूतकालेक्विप् सइन्द्रःअपामर्णःऋगतौ स्रोतोलक्षणंप्रवाहंसमुद्रमच्छाभिलक्ष्यप्रैरयत् किञ्च सइन्द्रः अङ्गिरसांबिलान्तर्वर्तिनीनामावृतानांगवांलाभायसूर्यमजनयत् ततःगाः पणिभिरपहृतागाः विददलभत विदिर्लाभे लुङिइरितोवेतिच्लेरङादेशः वाक्यभेदादनिघातः वथाक्तुनातेजसाअह्नांदिवसानांवयुनानिप्रज्ञानानिप्रकाशान्साधत्असाधयत् ॥ ३ ॥

३. अहिहन्ता और पूजनीय इन्द्र ने जल-प्रवाह को समुद्र के सामने प्रेरित किया। उन्होंने समुद्र को उत्पन्न करके गायें प्राप्त कीं तथा तेजोबल से दिवसों को प्रकाशित किया।

सोअप्रतीनिमनवेपुरूणीन्द्रोदाशद्दाशुषेहन्तिवृत्रम् ।
सद्योयोनृभ्योअतसाय्योभूत्पस्पृधानेभ्यःसूर्यस्यसातौ ॥ ४ ॥

सः । अप्रतीनि । मनवे । पुरूणि । इन्द्रः । दाशत् । दाशुषे ।
हन्ति । वृत्रम् । सद्यः । यः । नृऽभ्यः । अतसाय्यः । भूत् ।
पस्पृधानेभ्यः । सूर्यस्य । सातौ ॥ ४ ॥

सइन्द्रोदाशुषेहविर्दत्तवतेमनवेमनुष्यायजमानायपुरूणिबहूनिअप्रतीन्युत्कृष्टानिधनानि दाशत्ददाति किञ्च वृत्रमसुरंहन्ति कीदृशः यइन्द्रःसूर्यस्यसातौ सातिःसंभजनं सूर्यसंभजनविषयभूतेपस्पृधानेभ्यः अहमेवप्रथमंसूर्यंप्राप्नुयामितिस्पर्धमानेभ्यः नृभ्यः स्तोतृभ्यः सद्यस्तदानीमेवअतसाय्यस्तत्प्राप्तिहेतुभूतःसन् समाश्रयणीयोभूत्अभूत् यद्वा सूर्यस्यसातौ षोन्तकर्मणि अधिकरणेक्तिन् सूर्यस्यसंबन्धिनियुद्धेपस्पृधानेभ्यः सूर्येणसहस्पर्धमानेभ्यःअतसाय्योभूत् सततंगमनीयोभवत् ॥ ४ ॥

४. इन्द्र ने हव्यदाता मनुष्य को यजमान के लिए बहुसंख्यक उत्कृष्ट धन दान किया। वृत्र का विनाश किया। सूर्य की प्राप्ति के लिए स्तोताओं में विरोध उपस्थित होने पर इन्द्र आश्रयदाता हुए थे।

अथपञ्चमी–

सस्मुन्वतइन्द्रःसूर्यमादेवोरिणङ्मर्त्यायस्तवान् ।
आयद्रयिंगुहदवद्यमस्मैभरदंशंनैतशोदशस्यन् ॥ ५ ॥ २३ ॥

सः । सुन्वते । इन्द्रः । सूर्यम् । आ । देवः । रिणक् । मर्त्याय ।
स्तवान् । आ । यत् । रयिम् । गुहत्ऽअवद्यम् । अस्मै । भरत् ।
अंशम् । न । एतशः । दशस्यन् ॥ ५ ॥ २३ ॥

स्तवान्एतशेनस्तूयमानः देवोद्योतमानःसइन्द्रः सुन्वतेसोमाभिषवंकुर्वतेमर्त्यायमनुष्यायएतशायसूर्यमारिणक् एतशेनस्पर्धमानंसूर्यंबलेनारेचयत् तथाचनिगमः—प्रैतशंसूर्येपस्पृधानंसौवश्व्येसुष्विमावदिंद्रईति । यद्यस्मात्एतशः सौवश्व्योराजादशस्यन्यजमानः अस्माइन्द्रायगुहदवद्यंप्रच्छन्नावद्यंरयिंसोमरूपमाभरत् सम्पादयामास तत्रदृष्टान्तः—अंशंन यथापिता अंशं भागंपुत्रायभरतितद्वत् ॥ ५ ॥

५. इन्द्र की स्तुति करने पर प्रकाशमान इन्द्र सोमाभिषवकर्त्ता मनुष्य एतश के लिए सूर्य को लाये थे; क्योंकि जैसे पिता पुत्र को धन प्रदान करता है, वैसे ही यज्ञकाल में एतश ने इन्द्र को प्रच्छन्न और अमूल्य सोम प्रदान किया था। ॥ इतिद्वितीयस्यषष्ठेत्रयोविंशोवर्गः ॥ २३ ॥

सरन्धयत्सदिवःसारथयेशुष्णमशुषंकुयवंकुत्साय ।
दिवोदासायनवतिंचनवेन्द्रःपुरोव्यैरच्छम्बरस्य ॥ ६ ॥

सः । रन्धयत् । सऽदिवः । सारथये । शुष्णम् । अशुषम् ।
कुयवम् । कुत्साय । दिवःऽदासाय । नवतिम् । च । नव । इन्द्रः ।
पुरः । वि । ऐरत् । शम्बरस्य ॥ ६ ॥

सदिवः दीप्तियुक्तः सइन्द्रः सारथये आत्मनःसारथ्यंकुर्वतेकुत्सायराजर्षयेशुष्णंशोषयतिसर्वमितिशुष्णः कश्चिदसुरः तमशुषंनकेनापिशोषणीयंकुयवंएतन्नामानमसुरंरन्धयत् रध्यतिर्वशगमने वशमनयत् यद्वा रधहिंसासंराध्योरित्यस्यण्यन्तस्यरधिजभोरचीतिनुम् अवधीत् किञ्च सइन्द्रः दिवोदासायएतन्नामकायराज्ञेशंबरस्यासुरस्यनवनवतिंपुरः व्यैरत् विदारितवान् ॥ ६ ॥ अपने सारथि राजर्षि कुत्स के लिए दीप्तियुक्त इन्द्र ने शुष्ण, अशुष और कुयव को वशीभूत किया था और दिवोदास के लिए शम्बर के निन्नानबे नगरों को भग्न किया था। ६.

---

१ ऋ. सं. १. ४. २९.।

अथसप्तमी—

एवातइन्द्रोचथमहेमश्रवस्यानत्मनावाजयन्तः।
अश्यामतत्साप्तमाशुषाणाननमोवधरदेवस्यपीयोः ॥ ७ ॥

एव। ते। इन्द्र। उचथम्। अहेम। श्रवस्या। न। त्मना।
वाजयन्तः। अश्याम। तत्। साप्तम्। आशुषाणाः। ननमः।
वधः। अदेवस्य। पीयोः ॥ ७ ॥

हेइन्द्र श्रवस्या सुपांसुलुगितितृतीयायाःपूर्वसवर्णदीर्घः अन्नेच्छयावाजयन्तः त्वांबलिनंकुर्वन्तः यद्वा श्रवस्यायशःकामनया वाजयन्तोन्नमिच्छन्तः इच्छायामपिणिचूदृश्यते अश्वायन्तोगव्यन्तोवाजयन्तइतिक्यजन्तत्वेचित्प्रातिपदिकस्यान्तोदात्तत्वंस्यात् वाजयन्तः शतक्रतुमितियथा तादृशावयंतेएव तुभ्यमेव उचथंस्तोत्रं त्मना आत्मनास्वयमेव न अहेम इदानींमापयेम अहिगतौ नसम्प्रत्यर्थे आशुषाणाः अश्नोतेःकानचिव्यत्ययोबहुलमितिश्लिटचपिविकरणद्वयं उप्रत्ययः त्वामश्नुवानाः वयंतदभिलषितं तत्साप्तंसप्तपुरुषसंबन्धि साप्तपदीनंसख्यं अश्याम व्याप्नुयाम अदेवस्य देवानिन्द्रादीनजानतः पीयोः पीयतिहिंसाकर्मा हिंसकस्यासुरस्यवधः वध्यन्तेशत्रवोनेनेतिवधरायुधंननमः तत्रअधोनमय ननमः णमुप्रह्वत्वे ण्यंतस्यलुङिचङिरूपं मितांह्रस्वइतिह्रस्वः ॥ ७ ॥

७. इन्द्र, अन्न की अभिलाषा से हम तुम्हें बलवान् करके तुम्हारी स्तुति करते हैं। तुम्हें प्राप्त करके हम सप्तपदी सख्यता का लाभ करें। देवशून्य पीयु के विरोध में तुम वज्र फेंको।

एवातेगृत्समदाःशूरमन्मावस्यवोनवयुनानितक्षुः।
ब्रह्मण्यन्तइन्द्रतेनवीयइषमूर्जंसुक्षितिंसुम्नमश्युः ॥ ८ ॥

एव। ते। गृत्सऽमदाः। शूर। मन्म। अवस्यवः। न। वयुनानि।
तक्षुः। ब्रह्मण्यन्तः। इन्द्र। ते। नवीयः। इषम्। ऊर्जम्।
सुऽक्षितिम्। सुम्नम्। अश्युः ॥ ८ ॥

शूरबलवन् हेइन्द्र गृत्समदाः अत्रयास्कः—गृत्समदोगृत्समदनः गृत्सइतिमेधाविनाम गृणातेःस्तुतिकर्मणइति। तथाविधाःमन्ममननीयं स्तोत्रंतेएवतुभ्यमेव तक्षुः ततक्षुःचक्रुःतत्रदृष्टा-

१ नि० ९.५।

न्तः—अवस्यवोन अवः गत्यर्थादवतेरसुनिरूपमवइति अवोगमनमिच्छन्तः पुमांसोवयुनानि मार्गान् यथाकुर्वन्तितद्वत् किञ्च नवीयः सुपांसुलुगितिषष्ठ्यालुक् नवीयसोनवतरस्यते तवब्रह्मण्यन्तः स्तोत्रंकर्तुमिच्छन्तः गृत्समदाः सुक्षितिमिषं शोभननिवासोपेतमन्नंऊर्जंबलं सुम्नं सुखं चाश्युः प्राप्नुयुः एकस्मिन्गृत्समदेबहुवचनंपरोक्षनिर्देशश्च ॥ ८ ॥

८. बलिष्ठ इन्द्र, जैसे गमनाभिलाषी पथिक मार्ग साफ़ करता है, वैसे ही गृत्समदगण तुम्हारे लिए मनोरम स्तुति की रचना करते हैं। तुम सर्वापेक्षा नूतन हो। तुम्हारे स्तोत्राभिलाषी गृत्समदगण अन्न, बल, गृह और सुख प्राप्त करें।

नूनंसातेप्रतिवरंजरित्रेदुंहीयदिन्द्रदक्षिणामघोनी ।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः ॥९॥२४॥

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र । दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् । भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ९ ॥ २४ ॥

ननंसातइतिसिद्धार्था ॥ ९ ॥

९. इन्द्र, तुम्हारी जो धनवती दक्षिणा स्तोता के सारे मनोरथ पूर्ण करती है, वही दक्षिणा हमें दो। भजनीय तुम हो। हमें छोड़कर अन्य किसी को नहीं देना। हम पुत्र और पौत्र से युक्त होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यषष्ठेचतुर्विंशोवर्गः ॥ २४ ॥

वयंतेवयइतिनवर्चंनवमंसूक्तम् गार्त्समदंत्रैष्टुभमैन्द्रम् वयन्तइत्यनुक्रान्तम् सूक्तविनियोगोलिङ्गादवधार्यताम् ।

वयंतेवयइन्द्रविद्धिषुणःप्रभरामहेवाजयुर्नरथम् ।
विपन्यवोदीध्यतोमनीषासुम्नमियक्षन्तस्त्वावतोनॄन् ॥ १ ॥

वयम् । ते । वयः । इन्द्र । विद्धि । सु । नः । प्र । भरामहे । वाजऽयुः । न । रथम् । विपन्यवः । दीध्यतः । मनीषा । सुम्नम् । इयक्षन्तः । त्वाऽवतः । नॄन् ॥ १ ॥

हेइन्द्र तेतुभ्यंवयंवयः सोमलक्षणमन्नं प्रभरामहे प्रकर्षेणसंपादयामः तत्रदृष्टान्तः—वाजयुर्नयथान्नमात्मनइच्छन्पुमान्रथंशकटंसंपादयतितद्वत् एवंहविःसंपादकान्नोस्मान् सुसुष्ठु वि-

द्विजानीहि विदेर्ज्ञानार्थस्यलोटिरूपं वाक्यादित्वादनिघातः किंकुर्वन्तोवयं विपन्यवः तवस्तोत्रं कुर्वाणाः मनीषामनसईषयास्तुत्यादीध्यतोदीप्यमानाः दीधीङ्दीप्तिदेवनयोः व्यत्ययेनशतृ त्वावतः युष्मदस्मद्भ्यांछन्दसिसादृश्यउपसंख्यानमितिवतुप् त्वत्सदृशान् नॄन् नेतॄन् अग्न्यादीन्सुम्नं सुखमियक्षन्तः याचमानाः यद्वा सुम्नंसुखेननॄन् नेतॄन्अग्न्यादीन् देवान् इयक्षन्तः इयक्षतिर्गतिकर्मा हविषातान्प्राप्नुवन्तोवयंभरामहइतिसमन्वयः ॥ १ ॥

१. इन्द्र, जिस प्रकार अन्नाभिलाषी व्यक्ति रथ तैयार करता है, उसी प्रकार हम भी तुम्हारे लिए अन्न तैयार करते हैं। तुम हमें अच्छी तरह जानते हो। हम स्तुति द्वारा तुम्हें दीप्यमान करते हैं। हम तुम्हारे जैसे पुरुष से सुख माँगते हैं।

त्वंनइन्द्रत्वाभिरूतीत्वायतोअभिष्टिपासिजनान् ।
त्वमिनोदाशुषोवरूतेत्थाधीरभियोनक्षतित्वा ॥ २ ॥

त्वम् । नः । इन्द्र । त्वाभिः । ऊती । त्वाऽयतः । अभिष्टिऽपा ।
असि । जनान् । त्वम् । इनः । दाशुषः । वरूता । इत्थाऽधीः ।
अभि । यः । नक्षति । त्वा ॥ २ ॥

हेइन्द्र त्वंत्वाभिःत्वदीयाभिरूती ऊतिभिः पालनादिभिःनोस्मान् पाहि किञ्च त्वायतः सुपआत्मनःक्यच् शतुरनुमइतिविभक्तेरुदात्तत्वं त्वत्कामान् जनान् अभिष्टिपा सुपांसुलुगितिसोराकारः अभिष्टयोभिगन्तारः शत्रवः तेभ्यः पातारक्षकोसिभवसि दाशुषोहविर्दत्तवतोयजमानस्यत्वमिनः ईश्वरःखलु वरूता ग्रसितस्कभितेतिनिपातनादीकारस्यऊकारः बाधकानांनिवारकोसि किञ्च त्वंतस्यस्तोतुरित्थाधीः एवंविधोपद्रवोपशमरूपकर्मासि यस्त्वात्वामभिनक्षति हविषापरिचरति ॥ २ ॥

२. इन्द्र, तुम हमारा पालन करते हुए हमारी रक्षा करो। जो तुम्हें चाहते हैं, उनकी, तुम शत्रुओं से, रक्षा करते हो। तुम हव्यदाता यजमान के ईश्वर और उसके शत्रु को दूर करनेवाले हो। हव्य द्वारा जो तुम्हारी सेवा करता है, उसके लिए तुम यह सब कर्म करते हो।

सनोयुवेन्द्रोजोहूत्रःसखाशिवोनरामस्तुपाता ।
यःशंसन्तंयःशशमानमूतीपचन्तंचस्तुवन्तंचप्रणेषत् ॥ ३ ॥

सः । नः । युवा । इन्द्रः । जोहूत्रः । सखा । शिवः । नराम् ।
अस्तु । पाता । यः । शंसन्तम् । यः । शशमानम् । ऊती ।
पचन्तम् । च । स्तुवन्तम् । च । प्रऽनेषत् ॥ ३ ॥

युवातरुणोयष्टॄणांपापस्यशमयितावा जोहूत्रः स्तोतृभिराह्वातव्यः होतव्योवासखासखिभूतः सुखकरः सइन्द्रः नरांनृशब्दस्यामिछान्दसोगुणः नरशब्दस्यवाआमि आगमानुशासनस्यानित्यत्वान्नुडभावः कर्मनेतॄणां नोस्माकंपाताअस्तु पालकोभवतु यःशस्त्राणिशंसन्तंयश्च शशमानं शशस्तुतगतौ क्रियाःकुर्वाणं पुरोडाशादिहवींषिपचन्तं स्तुवन्तंचसामभिः स्तोत्रं कुर्वाणंस्तुतशस्त्रयोः प्रगीताप्रगीतमन्त्रसाध्यत्वेनभेदस्यप्रतिपादितत्वादत्रपृथङ्निर्देशः एवंयजमानंऊती ऊत्यारक्षणेनप्रणेषत् नयतेर्लेटि सिब्बहुलमितिसिप् अडागमः तिङ्ङचोदात्तवतीतिगतेर्निघातः कर्मणांपारंप्रापयत् ॥ ३ ॥

३. हम यज्ञ-कार्य करते हैं। तरुण वयस्क, आह्वान-योग्य, मित्र-तुल्य और सुखदाता इन्द्र हमारी रक्षा करें। जो स्तोत्र का उच्चारण करता है, क्रिया का समाधान करता है, हव्य का पाक करता है और स्तुति करता है, उसे आश्रय देकर इन्द्र कर्म के पार ले जाते हैं।

तमुस्तुषइन्द्रंतंगृणीषेयस्मिन्पुरावावृधुःशाशदुश्च ।
सवस्वःकामंपीपरदियानोब्रह्मण्यतोनूतनस्यायोः ॥ ४ ॥

तम् । ऊँ इति । स्तुषे । इन्द्रम् । तम् । गृणीषे । यस्मिन् । पुरा । ववृधुः । शाशदुः । च । सः । वस्वः । कामम् । पीपरत् । इयानः । ब्रह्मण्यतः । नूतनस्य । आयोः ॥ ४ ॥

तमुतमेवेन्द्रंस्तुषेस्तौमि तथातमिन्द्रंगृणीषेशंसामि उभयत्रपुरुषव्यत्ययः यस्मिन्निन्द्रेपुरापूर्वेस्तोतारोवावृधुःप्रवृद्धाअभवन् शाशदुश्च शत्रून्हिंसितवन्तश्च शदॢशातने लिटि तुजादीनामित्यभ्यासस्यदीर्घः इयानः स्तोतृभिर्याच्यमानः सइन्द्रः ब्रह्मण्यतः स्तोत्रमिच्छतोनूतनस्यायोर्मनुष्यस्ययजमानस्यवस्वः वसुनःकाममभिलाषंपीपरत् अभिलषितफलदानेनपूरयतु ॥ ४ ॥

४. मैं उन्हीं इन्द्र की स्तुति करता हूँ, उन्हीं की प्रशंसा करता हूँ। उनके स्तोता पहले वर्द्धित हुए थे और उन्होंने शत्रुओं का विनाश किया था। इन्द्र के निकट प्रार्थना करने पर इन्द्र स्तोत्राभिलाषी नये यजमान की धनेच्छा को पूर्ण करते हैं।

सोअङ्गिरसामुचथाजुजुष्वान्ब्रह्मातूतोदिन्द्रोगातुमिष्णन् ।
मुष्णन्नुषसःसूर्येणस्तवानश्नस्यचिच्छिश्नथत्पूर्व्याणि ॥ ५ ॥ २५ ॥

सः । अङ्गिरसाम् । उचथा । जुजुष्वान् । ब्रह्म । तूतोत् । इन्द्रः । गातुम् । इष्णन् । मुष्णन् । उषसः । सूर्येण । स्तवान् । अश्नस्य । चित् । शिश्नथत् । पूर्व्याणि ॥ ५ ॥ २५ ॥

अङ्गिरसांसंबन्धीनिउचथाउक्थानिजुजुष्वान् जुषीप्रीतिसेवनयोरित्यस्यलिटिक्कसौरूपं सेवमानःसइन्द्रः गातुंपणिभिरुपद्रुतानामङ्गिरसांमार्गमिष्णनप्रेरयन् ब्रह्म तेषां स्तोत्रंकामप्रदानेन तूतोव् तुवृद्धावित्यस्यलङि बहुलंछन्दसीतिविकरणस्यश्लुः अवर्धयत् किञ्च स्तवान् स्तोतृभिः स्तूयमानःसूर्येणस्वात्मभूतेनउषसोमुष्णन्अपहरन् उदितेहिसूर्येउषसोव्यावर्तन्ते तादृशः सइन्द्रः अश्नस्य अश्नुतेस्वतेजसासर्वंजगदित्यश्नःकश्चिदसुरः तस्यपूर्व्याणिपुरातनानि पुराणिबलानिवा शिश्नथत् अश्नथयत् शिथिलीचकार चित्पूरणः ॥ ५ ॥

५. अंगिरा लोगों के मंत्रों-द्वारा प्रसन्न होकर इन्द्र ने उन्हें गायें लाने का मार्ग दिखा दिया था और उनकी स्तुति भी पूर्ण की थी। स्तोताओं की स्तुति करने पर इन्द्र ने, सूर्य के द्वारा उषा का अपहरण करके, अश्न के प्राचीन नगरों को विनष्ट किया था।

अथषष्ठी—

सहंश्रुतइन्द्रोनामदेवऊर्ध्वोभुवन्मनुषेदस्मतमः ।
अवप्रियमर्शसानस्यसाह्वाञ्छिरोभरद्दासस्यस्वधावान् ॥ ६ ॥

सः । ह । श्रुतः । इन्द्रः । नाम । देवः । ऊर्ध्वः । भुवत् । मनुषे । दस्मऽतमः । अव । प्रियम् । अर्शसानस्य । सह्वान् । शिरः । भरत् । दासस्य । स्वधाऽवान् ॥ ६ ॥

देवोद्योतमानः श्रुतः कीर्तिमान्अतएवदस्मतमः सर्वैरतिशयेनदर्शनीयः सइन्द्रः मनुषेमनोरर्थंउर्ध्वोभुवत् कामप्रदानेप्रवृत्तेउदङ्मुखोभवतु नामप्रसिद्धौ हेतिपूरणः तदुच्यते साह्वान् शत्रूनभिभवन्स्वधावान्बलवानिन्द्रः अर्शसानस्यलोकंबाधमानस्यदासस्यएतन्नामकस्यासुरस्यप्रियंशिरः अवभरत् अधःपातयतु हरतेर्लेट्यडागमः हृग्रहोर्भः ॥ ६ ॥

६. द्युतिमान्, कीर्त्तिमान् और अतीव दर्शनीय इन्द्र, मनुष्य के लिए सदा तैयार रहते हैं। शत्रुहन्ता और बलवान् इन्द्र संसार के अनिष्टकर्त्ता दास का प्रिय मस्तक नीचे फेंकते हैं।

सवृत्रहेन्द्रःकृष्णयोनीःपुरन्दरोदासीरैरयद्वि ।
अजनयन्मनवेक्षामपश्चसत्राशंसंयजमानस्यतूतोत् ॥ ७ ॥

सः । वृत्रऽहा । इन्द्रः । कृष्णऽयोनीः । पुरम्ऽदरः । दासीः । ऐरयत् । वि । अजनयत् । मनवे । क्षाम् । अपः । च । सत्रा । शंसम् । यजमानस्य । तूतोत् ॥ ७ ॥

वृत्रहावृत्रस्यहन्तापुरन्दरः शंबरपुरांदारयितासइन्द्रः कृष्णयोनीर्निकृष्टजातीःदासीरुपक्षपयित्रीरासुरीःसेनाः व्यैरयत् व्यनुदत् किञ्च मनवेमनोरर्थंक्षांपृथिवीमपउदकानिचअजनयत् यजमानस्यसत्रामहान्तंशंसमभिलाषंतूतोत् कामप्रदानेनपूरयतु तुवृद्धाविति सौत्रोधातुः शपःश्लुः तुजादित्वाद्दीर्घः यद्वा सत्रामहत् शंसंशंसनीयंशस्त्रंकामप्रदानेनवर्धयतु यद्वा कृष्णयोनीः कृष्णाख्येनासुरेणनिषिक्तरेतस्काः दासीर्भार्याव्यैरयत् व्यनुदत् तथामन्त्रः—यःकृष्णगर्भानिरहन्नृजिश्वनेति ॥ ७ ॥

७. वृत्रहन्ता और पुरनाशन इन्द्र ने कृष्णजन्मा दाससेना का विनाश किया है। मनु के लिए पृथिवी और जल की सृष्टि की है। वह यजमान का उच्चाभिलाष पूरण करें।

तस्मैतवस्य१मनुदायिसत्रेन्द्रायदेवेभिरर्णसातौ ।
प्रतियर्दस्यवज्रंबाह्वोर्धुर्हत्वीदस्यून्पुरआयसीर्नितारीत् ॥ ८ ॥

तस्मै । तवस्यम् । अनु । दायि । सत्रा । इन्द्राय । देवेभिः ।
अर्णऽसातौ । प्रति । यत् । अस्य । वज्रम् । बाह्वोः । धुः । हत्वी ।
दस्यून् । पुरः । आयसीः । नि । तारीत् ॥ ८ ॥

देवेभिर्देवनशीलैः स्तोतृभिः अर्णसातौ उदकलाभेनिमित्ते तस्माइन्द्रायतवस्यंतवसे बलायहितं बलवर्धनंहविः सत्रासन्ततं सर्वेष्वहस्सुअनुअनुक्रमेणसवनत्रयेदायिअदायि यद्वा तवस्यंयद्बलं प्रवृद्धायदीयते तत्तवस्यं देवेभिर्देवैरुदकभजने अनुक्रमेणतद्बलंतस्माइन्द्रायादायि तथामन्त्रः—अनुतेदायिमहइन्द्रियायेति। यद्यदाअस्येन्द्रस्यबाह्वोर्वज्रंप्रतिधुः स्तोतारोसुरवधसूचकेनस्तोत्रेणप्रतिनिदधुः स्तूयमानोहीन्द्रोदस्युवधार्थं वज्रमादत्ते दधुः दधातेर्लुङि गातिस्थेतिसिचोलुक् आतइतिझेर्जुस् ततस्तेनवज्रेणदस्यूनसुरान् हत्वीहत्वा तदीयाआयसीरयोमयीः पुरोनितारीत् नितरामनाशयत् ॥ ८ ॥

८. स्तोताओं ने जल-प्राप्ति के लिए उन इन्द्र के लिए सदा बलवर्द्धक अन्न प्रदान किया है। जिस समय इन्द्र के हाथ में वज्र दिया गया, उस समय उन्होंने उसके द्वारा दस्युओं का हनन करके उनकी लौहमयी पुरी को ध्वस्त किया था।

अथनवमी—

नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रदक्षिणामघोनी ।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः ॥९॥२६॥

---

१ ऋ० सं० १. ७. १२. । २ ऋ० सं० ४. ६. २०. ।

नूनम् । सा । ते । प्रति । वरम् । जरित्रे । दुहीयत् । इन्द्र ।
दक्षिणा । मघोनी । शिक्ष । स्तोतृऽभ्यः । मा । अति । धक् ।
भगः । नः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ ९ ॥ २६ ॥

नूनंसावइतिव्याख्याता ॥ ९ ॥

९. इन्द्र, तुम्हारी धनवती दक्षिणा स्तोता के सारे मनोरथ पूर्ण करती है। उसी दक्षिणा को हमें दो। तुम भजनीय हो। हमें अतिक्रम करके अन्य किसी को नहीं देना । पुत्र और पौत्र से युक्त होकर हम इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यषष्ठेषड्विंशोवर्गः ॥ २६ ॥

विश्वजितइतिषळ्चंदशमंसूक्तं गार्त्समदमैन्द्रं अन्त्यात्रिष्टुप् शिष्टाःपञ्चजगत्यः तृतीये-पर्यायेहोतुःशस्त्रएतत्सूक्तं सूत्रितञ्च—विश्वजितेतिष्ठाहरीरथआयुज्यमानेतियाज्याइति ।

विश्वजितेधनजितेस्वर्जितेसत्राजितेनृजितउर्वराजिते ।
अश्वजितेगोजितेअब्जितेभरेन्द्रायसोमंयजतायहर्यतम् ॥ १ ॥

विश्वऽजिते । धनऽजिते । स्वःऽजिते । सत्राऽजिते । नृऽजिते ।
उर्वराऽजिते । अश्वऽजिते । गोऽजिते । अप्ऽजिते । भर । इन्द्राय ।
सोमम् । यजताय । हर्यतम् ॥ १ ॥

हेअध्वर्यो इन्द्राय सोमंभर संपादय कीदृशायविश्वजिते सर्वस्यजेत्रे तदेवप्रपञ्चयति—धनजिते शत्रुविजयेनतदीयधनानांजेत्रे स्वर्जिते स्वर्गस्यजेत्रे अधिपतये सत्राजिते सत्रासन्तवं जयशीलायमहतोजेत्रेवा नृजिते नृणांनायकानांजेत्रे उर्वराजिते उर्वरासर्वसस्याढ्याभूः तस्याजेत्रे अश्वजिते गोजितेबलेनापहृतानांगवांजेत्रे अब्जिते वृत्रेणाक्रान्तानामपांजेत्रे यजताय यजनीयाय तस्माइन्द्रायहर्यतं हर्यगतिकान्त्योः भृमृदृशीत्यादिनाकर्मण्यतच् कमनीयं स्पृहणीयंवा सोमंभरेतिसमन्वयः ॥ १ ॥

१. धनजयी, स्वर्गजयी, सदाजयी, मनुष्यजयी, उर्वरा भूमिजयी, अश्वजयी, गोजयी, जलजयी—अतएव सर्वजयी और यजनीय इन्द्र को लक्ष्य करके वांछनीय सोम ले आओ।

नूनंसातेप्रतिवरंजरित्रेदुहीयदिन्द्रदक्षिणामघोनी ।
शिक्षास्तोतृभ्योमातिधग्भगोनोबृहद्वदेमविदथेसुवीराः ॥९॥२६॥

---

१ ऋ० सं० १. ७. १२.। २ ऋ० सं० ४. ६. २०.।

अभिऽभुवे । अभिऽभङ्गाय । वन्वते । अषाह्ळाय । सहमानाय । वेधसे । तुविऽग्रये । वह्नये । दुस्तरीतवे । सत्राऽसहे । नमः । इन्द्राय । वोचत ॥ २ ॥

अभिभुवे सर्वस्याभिभवित्रे अभिभङ्गायअसुराणांभञ्जकाय वन्वतेवनषणसंभक्तौ व्यत्ययेनउप्रत्ययः शत्रूणांधनानांसंभक्त्रे अषाह्ळाय सहेःकर्मणि निष्ठा उत्वाभावश्छान्दसः शत्रुभिरनभिभूतायसहमानायसर्वंसहायवेधसे सर्वस्यविधात्रेतुविग्रये पूर्णग्रीवाय यद्वा गॄशब्दे औणादिकःकर्मणिकप्रत्ययः तुविभिर्बहुभिःस्तोतव्यायवह्नयेसर्वस्यवोढ्रेदुष्टरीतवेअन्यैर्दुस्तरायदुर्हिंसायवासत्रासहेसर्वदाभिभवित्रेमहतोभिभवित्रेवा एवंविधायेन्द्रायनमःनमःशब्दपूर्वकंस्तोत्रंवोचत हेस्तोतारोयूयंब्रूत ब्रूञोलुङि ब्रुवोवचिः अस्यतिवक्तिख्यातिभ्योङित्यङादेशः वचउमित्युम् गुणः ॥ २ ॥

२. सबके पराजय-कर्त्ता, विमर्दक, भोक्ता, अजेय, सर्वसह, पूर्णग्रीव, सर्वविधाता, सर्ववोढ़ा, दूसरों के लिए दुर्द्धर्ष और सर्वदा जयशील इन्द्र को लक्ष्य करके नमः शब्द का उच्चारण करते हुए स्तुति करो।

सत्रासाहोजनभक्षोजनंसहश्च्यवनोयुध्मोअनुजोषमुक्षितः । वृतंचयःसहुरिर्विक्ष्वारितइन्द्रस्यवोचंप्रकृतानिवीर्या ॥ ३ ॥

सत्राऽसहः । जनऽभक्षः । जनम्ऽसहः । च्यवनः । युध्मः । अनु । जोषम् । उक्षितः । वृतम्ऽचयः । सहुरिः । विक्षु । आरितः । इन्द्रस्य । वोचम् । प्र । कृतानि । वीर्या ॥ ३ ॥

सत्रासाहः बहूनामभिभविताजनभक्षः जनानांयजमानानांकामप्रदानेनसंभक्ता तैःसंभजनीयइतिवा जनंसहःबलिनांजनानामभिभविता च्यवनःशत्रूणांच्यावयितास्वस्थानात् युध्मः योद्धा जोषमनुप्रीतिमनुउक्षितः सिक्तःसोमेन वृतंचयःवृतस्याभीष्टस्याचेतासंचेतादातेत्यर्थः यद्वा वर्ततेपुनःपुनरभिमुखमागच्छतीतिवृतःशत्रुः तंचयतेहिनस्तीतिवृतञ्चयः चयतिर्हिंसाकर्मा तथाचब्राह्मणं—योवैभागिनंभागान्नुदतेचयतेवैनंसयदिवैनंनचयतेथपुत्रमथपौत्रंचयतेत्वेवैनमिति सहुरिः जसिसहोरुरिन्निति उरिन्प्रत्ययः अभिभविताशत्रूणांविक्षुप्रजासुआरितः पालकत्वेनप्रापितोभवति तादृशस्येन्द्रस्यकृतानि वृत्रहननादिरूपाणि वीर्यासामर्थ्यानिप्रवोचं प्रकर्षेणवदामि ॥ ३ ॥

३. बहुतों के पराजयकर्त्ता, लोगों के भजनीय, बलवानों के विजेता, शत्रुनिवारक, योद्धा, हर्षंकर-सोम-सिक्त, शत्रुहिंसक, शत्रुओं के अभिभवकर्त्ता और प्रजापालक इन्द्र के उत्कृष्ट वीर-कर्म की सब स्तुति करते हैं।

अनानुदोवृषभोदोधंतोवधोगम्भीरऋष्वोअसमष्टकाव्यः ।
रध्रचोदःश्नथनोवीळितस्पृथुरिन्द्रःसुयज्ञउषसःस्वंर्जनत् ॥ ४ ॥

अनुनुऽदः । वृषभः । दोधतः । वधः । गम्भीरः । ऋष्वः ।
असमष्टऽकाव्यः । रध्रऽचोदः । श्नथनः । वीळितः । पृथुः ।
इन्द्रः । सुऽयज्ञः । उषसः । स्वः । जनत् ॥ ४ ॥

अननुदः अनुपश्चाद्ददातीत्यनुदः आतश्चोपसर्गेइतिकर्तरिकः सनास्तियस्यसतथोक्तः प्रभूतधनदानेनास्यसमानोनास्तीत्यर्थः अतएववृषभः कामानांवर्षितादोधतः दुधिर्हिंसाकर्मा हिंसकस्यासुरस्यवधः हन्ता गंभीरः महत्त्वेनगांभीर्योपेतः ऋष्वः महान् यद्वा दर्शनीयः सर्वैः असमष्टकाव्यः अशूव्याप्तौ कर्मणिनिष्ठा उदित्त्वादिड्विकल्पः नञूसमासः अन्यैरव्याप्तकर्मा रध्रचोदः रधहिंसासंराध्योः रध्राणांसमृद्धानांप्रेरकः यद्वा शत्रूणांहिंसकानांनोदकः श्नथनः शत्रूणांबलापहारेणशातयिता वीळितोदृढाङ्गः पृथुः स्वतेजसाजगद्व्याप्यवर्तमानः सुयज्ञः सुकर्माएतादृशइन्द्रः उषसः स्वः सूर्यज्योतिः स्वःसूर्यइतिहिब्राह्मणम्। सूर्यंचजनत् प्रादुश्चकार ॥ ४ ॥

४. अतुलदान-सम्पन्न, अभीष्टवर्षी, हिंसकों के हन्ता, गंभीर, दर्शनीय, कर्म में अपराजेय, समृद्ध लोगों के उत्साहदाता, शत्रुओं के कर्त्तनकारी, दृढ़ाङ्ग, जगद्व्यापी और सुन्दर-यज्ञ-बिशिष्ट इन्द्र ने उषा से सूर्य को उत्पन्न किया है।

यज्ञेनंगातुमप्तुरोविविद्रिरेधियोहिन्वानाउशिजोमनीषिणः ।
अभिस्वरांनिषदागाअवस्यवइन्द्रेहिन्वानाद्रविणान्याशत ॥ ५ ॥

यज्ञेन । गातुम् । अप्ऽतुरः । विविद्रिरे । धियः । हिन्वानाः ।
उशिजः । मनीषिणः । अभिऽस्वरा । निऽसदा । गाः । अवस्यवः ।
इन्द्रे । हिन्वानाः । द्रविणानि । आशत ॥ ५ ॥

धियोहिन्वानाः स्तुतीरिन्द्रेप्रेरयन्तः उशिजः इन्द्रंकामयमानाः मनीषिणोमेधाविनोङ्गिरसः अप्तुरः अपांप्रेरकाः इन्द्राद्गातुंगवांमार्गंयज्ञेनतपसाविविद्रिरे लेभिरे ततः अवस्यवः रक्षणमिच्छन्तः इन्द्रे गाः स्तुतीर्हिन्वानाः हिगतिवृद्ध्योः स्वादिः प्रेरयन्तः तेङ्गिरसः अभिस्वराअभितः स्वरः स्वरणंशब्दनंयस्यतेनस्तोत्रेणनिषदाउपसदनेनचद्रविणानिगोधनानिआशत आप्नुवन् अश्नोतेर्लुङि बहुलंछन्दसीतिविकरणस्यलुक् ॥ ५ ॥

५. इन्द्र के स्तोता, इन्द्राभिलाषी और मनीषी अङ्गिरा लोगों ने यज्ञ-द्वारा जल-प्रेरक इन्द्र के पास चुराई हुई गायों का मार्ग जाना। अनन्तर रक्षा के अभिलाषी इन्द्र के स्तोता अङ्गिरा लोगों ने स्तोत्र और पूजा के द्वारा गोधन प्राप्त किया ।

अथषष्ठी—

इन्द्रश्रेष्ठानिद्रविणानिधेहिचित्तिंदक्षस्यसुभगत्वमस्मे ।
पोषंरयीणामरिष्टिंतनूनांस्वाद्मानंवाचःसुदिनत्वमह्नाम् ॥६॥२७॥

इन्द्र । श्रेष्ठानि । द्रविणानि । धेहि । चित्तिम् । दक्षस्य ।
सुभगऽत्वम् । अस्मे इति । पोषम् । रयीणाम् । अरिष्टिम् । तनूनाम् ।
स्वाद्मानम् । वाचः । सुदिनऽत्वम् । अह्नाम् ॥ ६ ॥ २७ ॥

हेइन्द्र श्रेष्ठान्युत्तमानिद्रविणानिधनानिअस्मभ्यंधेहि निधेहि दक्षस्य दक्षेर्भावेघञ् कर्मकरणसामर्थ्यस्यचित्तिंख्यातिंधेहि अस्मेअस्मभ्यंसुभगत्वंशोभनधनत्वंसौभाग्यंवानिधेहि रयीणांत्वयादत्तानांधनानांपोषंसमृद्धिंधेहि तनूनामङ्गानां यद्वा तायतेएभिःकुलमितितन्वः पुत्राः तनोतेः करणेउप्रत्ययः तेषामरिष्टिंअहिंसांधेहि तथास्मदीयायावाचः स्वाद्मानंस्वादुतांअह्नांसुदिनत्वंशोभनदिनत्वंचधेहि येषुहीन्द्रादयोदेवाइज्यन्ते तानिसुदिनानि तेषांभावःसुदिनत्वम् ॥६॥

६. इन्द्र, हमें उत्तम धन दो। हमें निपुणता की प्रसिद्धि दो। हमें सौभाग्य दो। हमारा धन बढ़ा दो। हमारे शरीर की रक्षा करो। बातों में मीठापन दो। दिन को सुदिन करो।

॥ इतिद्वितीयस्यषष्ठेसप्तविंशोवर्गः ॥ २७ ॥

त्रिकद्रुकेष्वितिचतुर्ऋचमेकादशंसूक्तं गार्त्समदमैन्द्रं अत्रेयमनुक्रमणिका त्रिकद्रुकेषुचतुष्कमष्ट्याद्यतिशाक्वरमन्त्याष्टिर्वेति आद्या अष्टिच्छन्दाः चतुःषष्ट्यक्षरा अवशिष्टाःषष्ट्यक्षराः अतिशक्वर्यः अन्त्याष्टिर्वा षोडशिशस्त्रे त्रिकद्रुकेष्वितितृचः सूत्रितम्—त्रिकद्रुकेषुमहिषोयवाशिरंमोष्वस्मैपुरोरथमितितृचावातिच्छन्दसाविति अविवाक्येहनिमरुत्वतीयेप्रतिपत्तृचस्यत्रिकद्रुकेष्वितिप्रथमा दशमेहनीतिखण्डेसूत्रितम्—आत्वारथंयथोतयइत्येतस्याःस्थानेत्रिकद्रुकेषुमहिषोयवाशिरमिति इतिआश्वमेधिकेमध्यमेहनिमरुत्वतीयेआद्या तस्यविशेषान्वक्ष्यामइतिखण्डेसूत्रितम्—त्रिकद्रुकेषुमहिषोयवाशिरमिति मरुत्वतीयस्यप्रतिपदिति महाव्रतेपिमाध्यन्दिनेसवनेब्राह्मणाच्छंसिनःस्तोत्रियस्तृचः त्रिकद्रुकेषुमहिषोयवाशिरमितिस्तोत्रियइतिसूत्रितम् ।

तस्मिन्सूक्तेप्रथमा—

त्रिकद्रुकेषुमहिषोयवाशिरंतुविशुष्मस्तृपत्सोममपिबद्विष्णुनासुतंयथावशत् ।
२ सईंममादमहिकर्मकर्तवेमहामुरुंसैनंसश्चद्देवोदेवंसत्यमिन्द्रंसत्यइन्दुः ॥१॥

त्रिऽकंद्रुकेषु । मुहिषः । यवंऽआशिरम् । तुविऽशुष्मंः । तृपत् ।
सोमंम् । अपिबत् । विष्णुंना । सुतम् । यथां । अवंशत् । सः । ईम् ।
ममाद । महिं । कर्म । कर्तवे । महाम् । उरुम् । सः । एनम् ।
सश्चत् । देवः । देवम् । सत्यम् । इन्द्रंम् । सत्यः । इन्दुंः ॥ १ ॥

गृत्समदोब्रूते महिषः महान्पूज्यः तुविशुष्मः बहुबलः तृपत् तृपप्रीणनेतुदादिः आगमानुशासनस्यानित्यत्वान्नुमभावः तृप्यन्निन्द्रः त्रिकद्रुकेषुज्योतिर्गौरायुरित्येतन्नामकेषुआभिप्लविकेष्वहस्सुसुतमभिषुतंयवाशिरंयवमयैःसक्तुभिर्मिश्रितं आङ्पूर्वस्यश्रीणातेःक्विपिअपस्पृधेथामित्यादिनाशिरइत्यादेशः तंसोमंविष्णुनासहापिबत् यथा वशत् पूर्वंयथा तं सोममकामयतत-थापिबत् वशकान्तौ बहुलंछन्दसीतिशपोलुगभावः पीतः ससोमः महांमहान्तमुरुंतेजसाविस्तीर्णंईमेनमिन्द्रं ममादअमादयत् किमर्थं महिमहद्वृत्रहननादिलक्षणं कर्मकर्तवेकर्तुं सत्यंयथार्थभूतः इन्दुः स्रवन् देवोदीप्यमानः ससोमः सत्यंयथार्थंभूतं देवंसोमंकामयमानमेनमिन्द्रं सश्चत् सश्चतिर्व्याप्तिकर्मा व्याप्नोतु ॥ १ ॥

१. पूजनीय, बहुबलशाली और तृप्तिकर इन्द्र ने जैसी पहले इच्छा की थी, वैसे ही त्रिकद्रु को यव मिलाया। अभिषुत सोम विष्णु के साथ पान करें। महान् सोम ने तेजस्वी इन्द्र को महान् कार्य की सिद्धि के लिए प्रसन्न किया था। सत्य और दीप्यमान सोम सत्य और प्रकाशमान इन्द्र को व्याप्त करे।

अध॒त्विषी॑माँ अ॒भ्योज॑सा॒क्रिविं॑यु॒धाभ॑व॒दारोद॑सीअपृणदस्य॒म॒ज्मना॒प्रवा॑वृधे ।
अध॑त्ता॒न्यंज॒ठरे॒प्रेम॑रिच्यत॒सैनं॑सश्च॒द्देवोदे॒वंस॒त्यमिन्द्रं॑स॒त्यइन्दुः॑॥२॥

अर्ध । त्विषिंऽमान् । अुभि । ओजसा । क्रिविम् । युधा ।
अभवत् । आ । रोदंसी इतिं । अपृणत् । अस्य । मज्मनां ।
प्र । वुवृधे । अधत्त । अन्यम् । जठरे । प्र । ईम् । अरिच्यत ।
सः । एनम् । सुश्चत् । देवः । देवम् । सत्यम् । इन्द्रम् । सत्यः ।
इन्दुः ॥ २ ॥

अधअथ सोमपानानन्तरं त्विषीमान्दीप्तिमानिन्द्रः ओजसाबलेनक्रिविं तन्नामासुरंयुधा-युद्धेनअभ्यभवत् अभिभूतवान् किञ्च सइन्द्रःरोदसीद्यावापृथिव्यौ आपृणत् स्वतेजसासमन्तात्पूरयामास तथाअस्यपीतस्यसोमस्यमज्मना बलेनप्रवावृधे प्रकर्षेणवर्धते यद्वा अस्यक्रिवेरसुर-

स्यमज्मनासारेणरोदसीअपूरयत् सइन्द्रः सोमंद्वेधाविभज्यान्यंभागंस्वकीयेजठरेअधत्त ईमेनमपरं भागंदेवेभ्यः प्रारिच्यत प्रारेचयत् एतेनार्धमिन्द्रायअर्धमन्येभ्योदेवेभ्यइत्युक्तंभवति तथा तैत्तिरीयकम्—यत्सर्वेषामर्धमिन्द्रःप्रतितस्मादिन्द्रोदेवतानांभूयिष्ठभाक्तमइति ॥ २ ॥

२. दीप्तिमान इन्द्र ने अपने बल से युद्ध-द्वारा क्रिवि को जीता था। अपने तेज से इन्द्र ने द्यावा-पृथिवी को चारों ओर से पूर्ण किया था। वे सोम के बल से बहुत बढ़े हैं। इन्द्र ने एक भाग अपने पेट में धारण करके अन्य भाग को देवों को प्रदान किया। सत्य और दीप्यमान सोम सत्य और द्योतमान इन्द्र को व्याप्त करे।

साकंजातःक्रतुंनासाकमोजंसाववक्षिथ-
साकंवृद्धोवीर्यैःसासहिर्मृधोविचर्षणिः।
दाताराधःस्तुवतेकाम्यंवसुसैनंसश्चद्देवोदेवंसत्यमिन्द्रंसत्यइन्दुः ॥३॥

साकम्। जातः। क्रतुना। साकम्। ओजसा। ववक्षिथ।
साकम्। वृद्धः। वीर्यैः। ससहिः। मृधः। विऽचर्षणिः। दाता।
राधः। स्तुवते। काम्यम्। वसु। सः। एनम्। सश्चत्। देवः।
देवम्। सत्यम्। इन्द्रम्। सत्यः। इन्दुः ॥ ३ ॥

क्रतुनाकर्मणाप्रज्ञयावासाकं सहजातः साकमोजसाबलेनसहववक्षिथ विश्वंवोढुमिच्छसि वहेःसन्नंतस्यलिटिमन्त्रत्वादाम्रभवति किञ्च त्वंवीर्यैः शत्रुहननादिलक्षणैःपराक्रमैःसाकं सह वृद्धः प्रवृद्धः मृधोहिंसकान्संग्रामान्वासासहिः नलोकाव्ययेतिषष्ठीप्रतिषेधः तेषामभिभविता विचर्षणिः पुण्यकृतोऽपुण्यकृतश्चविशेषेणद्रष्टा स्तुवतेस्तोत्रंकुर्वाणाययजमानायराधः साधकं काम्यं प्रार्थनीयं वसुधनं दातासन्ववक्षिथेतिसमन्वयः सैनमितिपरोक्षनिर्देशः सिद्धार्थश्च ॥३॥

३. इन्द्र, तुम यज्ञ के साथ सबल उत्पन्न हुए हो। तुम सब ले जाने की इच्छा करते हो। तुमने पराक्रम के साथ बढ़कर हिंसकों को जीता है। तुम सत्य और असत् के विचारक हो। तुम स्तोता को कर्मसाधक और वाञ्छनीय धन दो। सत्य और द्योतमान सोम सत्य और प्रकाशमान इन्द्र को व्याप्त करे।

तवत्यंनर्यंनृतोपइन्द्रप्रथमंपूर्व्यंदिविप्रवाच्यंकृतम्।
यद्देवस्यशवसाप्रारिणाअसुंरिणन्नपः।
भुवद्विश्वमभ्यादेवमोजसाविदादूर्जंशतक्रतुर्विदादिषम् ॥ ४॥२८॥

१ तै० सं० ५. ४. ८.।

तवं । त्यत् । नर्यंम् । नृतो इति । अपः । इन्द्र । प्रथमम् । पूर्व्यम् ।
दिवि । प्रऽवाच्यम् । कृतम् । यत् । देवस्यं । शवसा । प्र ।
अरिणाः । असुम् । रिणन् । अपः । भुवत् । विश्वम् । अभि ।
अदेवम् । ओजसा । विदात् । ऊर्जम् । शतऽक्रतुः । विदात् ।
इषम् ॥ ४ ॥ २८॥

नृतोसर्वेषांनर्तयितः हेइन्द्र नर्यंनराणांहितकरंप्रथमंप्रततं प्रथमंप्रततमितियास्कः । पूर्व्यं पूर्वकालभवंत्वयाकृतं तवत्यत् तवअपःकर्म दिविस्वर्गलोकेप्रवाच्यंप्रकर्षेणवक्तव्यं श्लाघनीय-मित्यर्थः किंतत् देवस्यविजिगीषोरसुरस्यशवसाबलेनअसुंप्राणंरिणन्हिंसन्त्वंअपः तेननि-रुद्धान्युदकानि प्रारिणाः प्रैरयः इतियदेतत्कर्मतत्प्रवाच्यमितिसमन्वयः परोक्षनिर्देशोवशिष्टः सइन्द्रः विश्वंव्याप्तंअदेवंतमोरूपमसुरंओजसाबलेनअभिभुवत् अभिभवतु किञ्च शतक्रतुरिन्द्रः ऊर्जंबलंविदात् लभतु इषंहविर्लक्षणमन्नंचविदात् विदिर्लाभे शविकरणी लेटचाडागमः ॥ ४ ॥

४. इन्द्र, तुम सबको नचानेवाले हो। तुमने जो पूर्वकाल में मनुष्यों के हितकर कर्म को किया था, वह द्युलोक में श्लाघनीय हुआ है। अपने पराक्रम से तुमने देव (वृत्र) की प्राण-हिंसा करके उसके द्वारा जल को बहा दिया था। इन्द्र ने अपने बल से वृत्र या अदेव को परास्त किया। शतक्रतु बल और अन्न जानें।

॥ इतिद्वितीयस्यषष्ठेष्टाविंशोवर्गः ॥ २८ ॥

॥ इतिगार्त्समदेद्वितीयेमण्डलेद्वितीयोनुवाकः ॥ २ ॥

तृतीयेनुवाकेदशसूक्तानि तत्रेदमेकोनविंशत्यृचंगार्त्समदंप्रथमंसूक्तं अत्रेयमनुक्रमणिका गणानामेकोनाब्राह्मणस्पत्यंहबार्हस्पत्यास्तुदृष्टलिङ्गाःपञ्चदश्यन्तेत्रिष्टुभावितिपञ्चदशीएको-नविंशीचत्रिष्टुभौ शिष्टाजगत्यः यासुबृहस्पतिशब्दःश्रूयतेताबार्हस्पत्याः शिष्टाब्राह्मणस्पत्याः प्रवर्ग्येभिष्टवएतत्सूक्तं स्पृष्ट्वोदकमितिखण्डेसूत्रितम्—गणानांत्वाप्रथश्चयस्येति ।

तस्मिन्सूक्तेप्रथमा—

गणानांत्वागणपतिंहवामहेकविंकवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनम् ॥१॥

१ नि० २, २२, ।

गणानाम् । त्वा । गणऽपतिम् । हवामहे । कविम् । कवीनाम् ।
उपमश्रवःऽतमम् । ज्येष्ठऽराजम् । ब्रह्मणाम् । ब्रह्मणः । पते ।
आ । नः । शृण्वन् । ऊतिऽभिः । सीद । सदनम् ॥ १ ॥

हेब्रह्मणस्पते ब्रह्मणोन्नस्यपरिवृढस्यकर्मणोवापतेपालयितः गणानांदेवादिगणानांसंबन्धिनंगणपतिंस्वीयानांपतिंकवीनांक्रान्तदर्शिनांकविंउपमश्रवस्तमं उपमीयतेनयेत्युपमा सर्वेषामन्नानामुपमानंश्रवोन्नंयस्यसतथोक्तः अतिशयेनोपमश्रवाः उपमश्रवस्तमः माङ्माने आतश्चोपसर्गे करणेअङ्प्रत्ययः ङ्यापोःसंज्ञाछन्दसोरितिह्रस्वत्वम् ज्येष्ठराजं ज्येष्ठाःप्रशस्यतमाः तेषांमध्येराजन्तं ब्रह्मणांमन्त्राणांस्वामिनंत्वात्वांहवामहे अस्मिन्कर्मण्याह्वयामः किञ्च नोस्माकं स्तुतीः आशृण्वन् त्वंऊतिभिः पालनैर्हेतुभूतैः सादनंसीदंत्यस्मिन्निति सदनंयज्ञगृहमासीदोपविश ॥ १ ॥

१. हे ब्रह्मणस्पति, तुम देवों में गणपति और कवियों में कवि हो। तुम्हारा अन्न सर्वोच्च और उपमान-भूत है। तुम प्रशंसनीय लोगों में राजा और मंत्रों के स्वामी हो। हम तुम्हें बुलाते हैं। तुम हमारी स्तुति सुनकर आश्रय प्रदान करने के लिए यज्ञगृह में बैठो।

देवाश्चित्तेअसुर्यप्रचेतसोबृहस्पतेयज्ञियंभागमानशुः ।
उस्राइवसूर्योज्योतिषामहोविश्वेषामिज्जनिताब्रह्मणामसि ॥२॥

देवाः । चित् । ते । असुर्य । प्रऽचेतसः । बृहस्पते । यज्ञियम् ।
भागम् । आनशुः । उस्राःऽइव । सूर्यः । ज्योतिषा । महः ।
विश्वेषाम् । इत् । जनिता । ब्रह्मणाम् । असि ॥ २ ॥

असुर्य असुराणांहन्तः हेबृहस्पते प्रचेतसः प्रकृष्टज्ञानाः तेत्वदीयादेवाश्चित् देवाअपि यज्ञियंयज्ञार्हंभागमानशुः प्राप्नुवन् यद्वा प्रचेतसइतिबृहस्पतेर्विशेषणं प्रकृष्टज्ञानवतस्तेतवसंबन्धिनोदेवाइतियोजनीयं यद्वा प्रचेतसः विभक्तिपरिणामः प्रचेतसित्वयिसतिदेवाः यज्ञियं भागमानशिरे कर्मविघ्नकारिणामसुराणां रक्षोघ्नमन्त्रैरपाकरणात् नवैब्रह्मणवद्रिष्यतीतिश्रवणात् । ज्योतिषातेजसामहः मंहनीयः सूर्यउस्राइव उस्राः किरणाः स्फायितंचीत्यादिनारक्प्रत्ययः यथाकिरणान्जनयति तथाविश्वेषां सर्वेषांब्रह्मणांमन्त्राणां जनितेत् जनयितैवासि जनितामन्त्रेइतिनिपातनाण्णिलोपः ॥ २ ॥

२. असुरहन्ता और प्रकृष्ट ज्ञानी बृहस्पति, देवों ने तुम्हारा यज्ञीय भाग प्राप्त किया है। जैसे ज्योति-द्वारा पूजनीय सूर्य किरण उत्पन्न करते हैं, वैसे ही तुम सब मंत्र उत्पन्न करो।

अथतृतीया—

आविबाध्यांपरिरापस्तमांसिचज्योतिष्मन्तंरथमृतस्यंतिष्ठसि ।
बृहस्पतेभीममंमित्रदम्भंनंरक्षोहणंगोत्रभिदंस्वर्विदंम् ॥ ३ ॥

आ । विऽबाध्यं । परिऽरपंः । तमांसि । च । ज्योतिंष्मन्तम् । रथंम् ।
ऋतस्यं । तिष्ठसि । बृहंस्पते । भीमम् । अमित्रऽदम्भंनम् ।
रक्षःऽहनंम् । गोत्रऽभिदंम् । स्वःऽविदंम् ॥ ३ ॥

हेबृहस्पते परिरपः परितःरपःपापरूपंरक्षः यद्वा रपलपव्यक्तायांवाचि क्विप् परिवदतोनिन्दकान् तमांसिचविबाध्यतेजसानिराकृत्य ज्योतिष्मंतंज्योतिषातद्वन्तं ऋतस्ययज्ञस्यप्रापकं भीमंशत्रूणांभयंकरं अमित्रदंभनं शत्रूणां हिंसकं तदेवाह रक्षोहणं रक्षसांहन्तारं गोत्रभिदं मेघानांभेत्तारं स्वर्विदं स्वर्गस्यलंभकंरथमातिष्ठसि अधितिष्ठसि ॥ ३ ॥

३. बृहस्पति, चारों तरफ़ से निन्दकों और अन्धकारों को दूर करके, तुम ज्योतिर्मान् यज्ञ-प्रापक, भयानक, शत्रुहिंसक, राक्षसनाशक, मेघ-भेदक और स्वर्गप्रदायक रथ में चढ़े हो।

सुनीतिभिर्नयसित्रायंसेजनंयस्तुभ्यंदाशान्नतमंहोअश्नवत् ।
ब्रह्मद्विषस्तपंनोमन्युमीरंसिबृहस्पतेमहितत्तेमहित्वनम् ॥ ४ ॥

सुनीतिऽभिः । नयसि । त्रायंसे । जनंम् । यः । तुभ्यंम् । दाशात् ।
न । तम् । अंहः । अश्नवत् । ब्रह्मऽद्विषंः । तपंनः । मन्युऽमीः ।
असि । बृहंस्पते । महिं । तत् । ते । महिऽत्वनम् ॥ ४ ॥

हेबृहस्पते सुनीतिभिः शोभनानीतयोयेषुतेसुनीतयः सन्मार्गाःतैर्जनंनयसि अपेक्षितफलंप्रापयसि त्रायसेजनमापद्भ्योरक्षसिच किञ्च योयजमानःतुभ्यं हविर्लक्षणमन्नंदाशात् प्रयच्छेत् दाश्रृदाने लेटचाडागमः तमंहः पापंपापरूपदारिद्र्यं वानाश्नवत् नप्राप्नुयात् अश्नोतेर्लेटिव्यत्ययेनपरस्मैपदं अडागमः ब्रह्मद्विषः ब्राह्मणानांमन्त्राणांवाद्वेष्टुः तपनः तापकोसि किञ्च मन्युमीः मन्योःक्रोधस्यपरेषांज्ञानस्यवाहिंसकोसि मीञ्हिंसायां क्विप् तेतवतत्तादृशं महिमहत्प्रभूतं महित्वनं माहात्म्यमस्ति ॥ ४ ॥

४. बृहस्पति, जो तुम्हें हव्य देता है, उसे तुम सन्मार्ग में ले जाते हो। उसे बचाते हो। उसे पाप नहीं लगता। तुम्हारा ऐसा माहात्म्य है कि तुम मंत्र-द्वेषियों के सन्तापक और क्रोधी के हिंसक हो।

अथपञ्चमी-

नतमंहोनदुरितंकुतश्चननारांतयस्तितिरुर्नद्वयाविनः ।
विश्वाइदस्माध्वरसोविबाधसेयंसुगोपारक्षसिब्रह्मणस्पते॥५॥२१॥

न । तम् । अंहः । न । दुःऽइतम् । कुतः । चन । न । अरांतयः ।
तितिरुः । न । द्वयाविनः । विश्वाः । इत् । अस्मात् । ध्वरसः ।
वि । बाधसे । यम् । सुऽगोपाः । रक्षसि । ब्रह्मणः । पते ॥ ५ ॥२१॥

हेब्रह्मणस्पते सुगोपाः सुष्ठुपालयितात्वंयंजनंरक्षसि पालयसि तंजनंअंहः आहन्तव्यं दुःखंनबाधते दुरितंतत्कारणंपापंचनबाधते अरातयः हिंसकाः तंजनंकुतश्चन सर्वासुदिक्षुन तितिरुः तिरतिर्हिंसाकर्मा लिट् नहिंसन्ति तथाद्वयाविनःमनस्यन्यक्रियायांचान्यदित्येतद्द्वयं येषामस्तितेद्वयाविनोवञ्चकाः तेपितंजनंनबाधन्ते किञ्चअस्माद ध्वरसोहिंसिकाः विश्वाः सर्वाः सेनाः वदर्थंविबाधसेइव विशेषेणबाधसएव ॥ ५ ॥

५. सुरक्षक ब्रह्मणस्पति, जिसकी तुम रक्षा करते हो उसे कोई दुःख कष्ट नहीं दे सकता, पाप उसे कष्ट नहीं दे सकता। शत्रु लोग उसे किसी तरह मार नहीं सकते, ठग उसे सता नहीं सकते। उसके लिए तुम सारे हिंसकों को दूर कर दो।

त्वंनोगोपाःपथिकृद्विचक्षणस्तवव्रतायमतिभिर्जरामहे ।
बृहस्पतेयोनोअभिह्वरोदधेस्वातंमर्मर्तुदुच्छुनाहरस्वती ॥ ६ ॥

त्वम् । नः । गोपाः । पथिऽकृत् । विऽचक्षणः । तव । व्रताय ।
मतिऽभिः । जरामहे । बृहस्पते । यः । नः । अभि । ह्वरः । दधे ।
स्वा । तम् । मर्मर्तु । दुच्छुना । हरस्वती ॥ ६ ॥

हेबृहस्पते त्वंनोस्माकं गोपाः पालयिता पथिकृत्सन्मार्गकृच्चभवसि विचक्षणः विशेषेण द्रष्टासर्वज्ञस्त्वं तवव्रतायत्वत्संबन्धिनेयज्ञाय मतिभिःस्तोत्रैःजरामहे स्तुमः जरतिःस्तुतिकर्मा यःपुमान्नोस्मानभिअभिलक्ष्यह्वरः ह्वकौटिल्येभावेअसुन् कौटिल्यंदधेविदधाति तंस्वास्वी-यादुच्छुनादुर्बुद्धिः हरस्वती वेगवतीसती मर्मर्तु मारयतु मृङ्माणत्यागे अन्तर्भावितण्यर्थस्य यङ्लुकिलोटिरूपम् ॥ ६ ॥

६. बृहस्पति, तुम हमारे रक्षक, सन्मार्गदाता और विलक्षण हो। तुम्हारे यज्ञ के लिए स्तोत्र-द्वारा हम स्तुति करते हैं। जो हमारे प्रति कुटिल आचरण करता है, उसकी दुर्बुद्धि वेगवती होकर उसे शीघ्र विनष्ट करे।

उतवायोनोमर्चयादनागसोरातीवामर्तःसानुकोवृकः ।
बृहस्पतेअपतंवर्तयापथःसुगंनोअस्यैदेववीतयेकृधि ॥ ७ ॥

उत । वा । यः । नः । मर्चयात् । अनागसः । अरातिऽवा । मर्तः । सानुकः । वृकः । बृहस्पते । अप । तम् । वर्तय । पथः । सुऽगम् । नः । अस्यै । देवऽवीतये । कृधि ॥ ७ ॥

उतवाअपिचहेबृहस्पते अरातीवाअभिमुखमागमनवान् सानुकः समुच्छ्रितः सानुसमुच्छ्रितमितियास्कः । वृकः वृकआदाने धनादीनामादाता योमर्तोमनुष्यः अनागसोपराधहीनान्नोस्मान्मर्चयात् मर्चयतिर्हिंसाकर्मा हिंस्यात् तंमर्तं पथोवैदिकान्मार्गादपवर्तय निवर्तय नोस्माकं अस्यैदेववीतये देवानांवीतिंसोमभक्षणमर्चयतीतिदेववीतिर्यज्ञः अस्यै देववीतयेअस्मै यज्ञायनोस्माकंसुगंसुष्ठुगन्तव्यंमार्गंकृधिकुरु यज्ञानुष्ठानायसुमतिंदेहीत्यर्थः ॥ ७ ॥

७. बृहस्पति, जो गर्वोन्मत्त और सर्वग्रासी व्यक्ति हमारे सामने आकर हमारी हिंसा करता है, उसे सन्मार्ग से हटा दो। और यज्ञ के लिए हमारा पथ सुगम कर दो।

त्रातारंत्वातनूनांहवामहेवस्पतरधिवक्तारमस्मयुम् ।
बृहस्पतेदेवनिदोनिबर्हयमादुरेवाउत्तरंसुम्नमुन्नशन् ॥ ८ ॥

त्रातारम् । त्वा । तनूनाम् । हवामहे । अवऽस्पर्तः । अधिऽवक्तारम् । अस्मऽयुम् । बृहस्पते । देवऽनिदः । नि । बर्हय । मा । दुःऽएवाः । उत्ऽतरम् । सुम्नम् । उत् । नशन् ॥ ८ ॥

अवस्पर्तः उपद्रवेभ्यः पारयितः यद्वा अवसारक्षणेनआपद्भ्यः पारयितः हेबृहस्पते तनूनामङ्गानां पुत्रादीनांवात्रातारंपालयितारंअधिवक्तारं अस्मासुपक्षपातेनअधिकंवक्तारं अस्मयुं हविःप्रदानस्मान् कामयमानं त्वात्वांहवामहे अस्मिन्कर्मणिआह्वयामः किञ्च देवनिदोदेवनिन्दकानसुरान्निबर्हय विनाशय दुरेवाः दुष्टगमनादुर्बुद्धयः शत्रवः उत्तरंउत्कृष्टतरं सुम्नंसुखंमाउन्नशन् माव्याप्नुवन्तु ॥ ८ ॥

८. बृहस्पति, तुम सबको उपद्रव से बचाओ। तुम हमारे पौत्र आदि का पालन करो। हमारे लिए मीठे वचन बोलो और हमारे प्रति प्रसन्न होओ। हम तुम्हें बुलाते हैं। तुम देव-निन्दकों का विनाश करो। दुर्बुद्धि लोग उत्कृष्ट सुख न पायें।

अथनवमी—

त्वयावयंसुवृधाब्रह्मणस्पतेस्पार्हावसुमनुष्यादंदीमहि ।
यानोदूरेतळितोयाअरातयोभिसन्तिजम्भयाताअनप्नसः ॥ ९ ॥

त्वया । वयम् । सुऽवृधा । ब्रह्मणः । पते । स्पार्हा । वसु । मनुष्या ।
आ । दुदीमहि । याः । नः । दूरे । तळितः । याः । अरातयः । अभि ।
सन्ति । जम्भय । ताः । अनप्नसः ॥ ९ ॥

हेब्रह्मणस्पते सुवृधासुष्टुवर्धयित्रा त्वयाहेतुनावयं स्पार्हास्पृहणीयानिवसुधनानिमनुष्या सुपांसुलुगितिचतुर्थीबहुवचनस्याकारः मनुष्येभ्योदातृभ्यः आददीमहि गृह्णीमहि आङोदोनास्यविहरणेइत्यात्मनेपदम् दूरेदूरदेशेयाअरातयः याश्चतळितोन्तिकेअरातयः नोस्मानभिसन्ति अभिभवन्ति अनप्नसः कर्महीनान् ताः अरातीः तान्शत्रून्जंभय नाशय जभिनाशनेचुरादिः अत्रनिरुक्तम्—त्वयावयंसुवर्धयित्राब्रह्मणस्पतेस्पृहणीयानिवसूनिमनुष्येभ्यआददीमहियाश्चनोदूरेतळितोयाश्चान्तिकेरातयोदानकर्माणोवादानप्रज्ञावाजंभयताअनप्नसोमइतिरूपनामेति[1] ॥ ९ ॥

९. ब्रह्मणस्पति, तुम्हारे द्वारा वर्द्धित होने पर मनुष्यों के पास से हम स्पृहणीय धन प्राप्त करें। दूर या पास हमारे जो शत्रु हमें पराजित करते हैं, उन यज्ञहीन शत्रुओं को विनष्ट करो।

अथदशमी—

त्वयावयमुत्तमंधीमहेवयोबृहस्पतेपप्रिणासस्निनायुजा ।
मानोदुःशंसोअभिदिप्सुरीशतप्रसुशंसामतिभिस्तारिषीमहि ॥१०॥२०॥

त्वया । वयम् । उत्ऽतमम् । धीमहे । वयः । बृहस्पते । पप्रिणा ।
सस्निना । युजा । मा । नः । दुःऽशंसः । अभिऽदिप्सुः । ईशत ।
प्र । सुऽशंसाः । मतिऽभिः । तारिषीमहि ॥ १० ॥ २० ॥

हेबृहस्पते पप्रिणा पृपालनपूरणयोः आदृगमहनेतिकिन्प्रत्ययः छान्दसोयणादेशः कामानांपूरकेण सस्निनाशुद्धेनयुजासहायेनत्वयाहेतुनाउत्तमंवयोहविर्लक्षणमन्नंवयंधीमहे धारयामः धीधारणे दैवादिकः दुःशंसःदुःशंसनीयः अभिदिप्सुः अभिदंभितुंअभिभवितुमिच्छुः पुरुषः नो-

1 नि० ३. ११.।

स्माकंमाईशत मा ईशिष्ट ईश्वरोमाभवतु ईशऐश्वर्येलेटचडागमः वयंमतिभिः स्तोत्रैः सुशंसाः शोभनशंसनेोपेताः सन्तः प्रतारिषीमहि प्रकर्षेणवर्धेमहि ॥ १० ॥

१०. बृहस्पति, तुम मनोरथ के पूरयिता और पवित्र हो। तुम्हारी सहायता पाकर उत्कृष्ट अन्न प्राप्त करेंगे। जो दुष्ट हमें पराजित करना चाहता है, वह हमारा अधिपति न हो। हम उत्कृष्ट स्तुति-द्वारा पुण्यवान् होकर उन्नति करें।

अनानुदोवृषभोजग्मिराहवंनिष्टप्ताशत्रुंपृतनासुसासहिः।
असिसत्यऋणयाब्रह्मणस्पतउग्रस्यचिद्दमितावीळुहर्षिणः ॥११॥

अननुऽदः। वृषभः। जग्मिः। आऽहवम्। निःऽतप्ता। शत्रुम्। पृतनासु। ससहिः। असि। सत्यः। ऋणऽयाः। ब्रह्मणः। पते। उग्रस्य। चित्। दमिता। वीळुऽहर्षिणः॥ ११ ॥

हेब्रह्मणस्पते अनानुदः अनुपश्चाद्ददातीत्यनुदः सयस्यनास्तीत्यननुदः दात्रन्तरशून्यइत्यर्थः अतएववृषभः कामानांवर्षिताआहवंआहूयतेत्रेतिआहवोयुद्धं आङियुद्धइतिअप्प्रत्ययः संप्रसारणंच तद्युद्धंजग्मिःगन्ता आदृगमहनेतिकिन्प्रत्ययः लिड्वद्भावादाहवमित्यत्रषष्ठीप्रतिषेधः शत्रुंशातयितारं निष्टप्तानितरांतस्यतापकः तृन्नन्तत्वात्षष्ठीप्रतिषेधः निसस्तपतावनासेवनेइतिषत्वम् तादौचनितीतिगतेःस्वरः पृतनासुसङ्ग्रामेषुसासहिः शत्रूणामभिभविता एतादृशस्त्वं सत्यः सत्यपराक्रमः सत्यप्रज्ञोवासि ऋणयाः ऋणस्ययावयित्रासि युमिश्रणामिश्रणयोः ण्यन्तस्यक्विपिणिलोपेलोपोव्योर्वलीतिवलोपः किञ्च उग्रस्यचित् ओजस्विनोपि दमिताउपशमयितावीळुहर्षिणः दृढहर्षस्यकामुकस्यनास्तिकस्यदमयितासि ॥ ११ ॥

११. ब्रह्मणस्पति, तुम्हारे दान की उपमा नहीं है। तुम अभीष्ट-वर्षी हो। युद्ध में जाकर तुम शत्रुओं को सन्ताप देते और उन्हें विनष्ट करते हो। तुम्हारा पराक्रम सत्य है। तुम ऋण का परिशोध करते हो। तुम उग्र हो और मदोन्मत्त व्यक्तियों का दमन करते हो।

अदेवेनमनसायोरिषण्यतिशासामुग्रोमन्यमानोजिघांसति।
बृहस्पतेमाप्रणक्तस्यनोवधोनिकर्ममन्युंदुरेवस्यशर्धतः ॥ १२ ॥

अदेवेन। मनसा। यः। रिषण्यति। शासाम्। उग्रः। मन्यमानः। जिघांसति। बृहस्पते। मा। प्रणक्। तस्य। नः। वधः। नि। कर्म। मन्युम्। दुःऽएवस्य। शर्धतः॥ १२ ॥

यःपुमान् अदेवेनदेवानमन्यमानेन यद्वाआसुरवृत्तिविशिष्टेनमनसास्मान् रिषण्यति हिनस्ति दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यतीतिनिपातितः यश्चोग्रः पापचित्तः मन्यमानः आत्मानं बहुमन्यमानः पुमान्शासां उक्थस्यशंसितारं यद्वा अस्माकमाशंसांशासितॄणां उग्र इतिवायोजनीयं अस्मान् जिघांसतिहन्तुमिच्छति हन्तेःसनिअज्झनगमांसनीतिदीर्घः हेबृहस्पते तस्यवधः वध्यतेनेनेतिवधआयुधं नोस्मान् मापृणक् मासंपर्कयतु पृचीसंपर्के श्नम्विकरणी व्यत्ययेनअमागमः चादिलोपेइतिननिघातः व्यत्ययेनाद्युदात्तः किञ्च दुरेवस्यदुष्टगमनस्यशर्धतोबलवतः यद्वा दुष्टाभिसन्धेःवेगंकुर्वतः तस्यमन्युं क्रोधंज्ञानंवानिकर्म त्वत्प्रसादान्निराकुर्मश्च ॥ १२ ॥

१२. जो व्यक्ति देवशून्य मन से हमारी हिंसा करता है और जो उग्र आत्माभिमानी हमारा वध करने की इच्छा करता है, हे बृहस्पति, उसका आयुध हमें न छू सके। हम वैसे बलवान् और दुष्ट शत्रु का क्रोध नाश करने में समर्थ हों।

भरेषुहव्योनमसोपसद्योगन्तावाजेषुसनिताधनंधनम् ।
विश्वाइदर्योअभिदिप्स्वोमृधोबृहस्पतिर्विववर्हारथाँइव ॥ १३ ॥

भरेषु । हव्यः । नमसा । उपऽसद्यः । गन्ता । वाजेषु । सनिता ।
धनम्ऽधनम् । विश्वाः । इत् । अर्यः । अभिऽदिप्स्वः । मृधः ।
बृहस्पतिः । वि । ववर्ह । रथान्ऽइव ॥ १२ ॥

सबृहस्पतिः भरेषुसङ्ग्रामेषुहव्यः योद्धृभिःस्वरक्षणार्थमाह्वातव्यः नमसोपसद्यः सर्वैर्नमसोपसदनीयः किञ्च वाजेषुगन्तासंग्रामेषुरक्षार्थंगमनशीलः तथाधनंधनंसनितासंभक्तादातावा तृन्नन्तत्वात्षष्ठीप्रतिषेधः तथाअर्यः स्वामीबृहस्पतिः अभिदिप्स्वः अभिभवनेच्छावतीः विश्वाइव सर्वाएवमृधः हिंसकाः सेनारथानिवयुद्धेवेगेनपरकीयान् रथानिवविववर्ह विशेषेण शिथिलीचकार यद्वा इवशब्दाश्चार्थे रथांश्चविववर्ह लडर्थेलिट् ॥ १३ ॥

१३. युद्ध-काल में बृहस्पति आह्वान-योग्य और नमस्कार-पूर्वक उपासना-योग्य हैं। वे युद्ध में जाते हैं। सब प्रकार का धन देते हैं। सबके स्वामी बृहस्पति विजिगीषावाली सारी हिंसक सेनाओं को रथ की तरह, निहत और विध्वस्त करते हैं।

तेजिष्ठयातपनीरक्षसस्तपयेत्वानिदेदधिरेवृष्टवीर्यम् ।
आविस्तत्कृष्वयदसत्तउक्थ्यं१बृहस्पतेविपरिरापोअर्दय ॥ १४ ॥

तेजिष्ठया । तपनी । रक्षसः । तप । ये । त्वा । निदे । दधिरे ।
दृष्टऽवीर्यम् । आविः । तत् । कृष्व । यत् । असत् । ते । उक्थ्यम् ।
बृहस्पते । वि । परिऽरपः । अर्दय ॥ १४ ॥

हेबृहस्पते तेजिष्ठयातिशयेनतिग्मया तपनीतापकारिण्याहेत्यारक्षसोराक्षसांस्तप तापय येराक्षसाः दृष्टवीर्यंयुद्धेषुदृष्टपराक्रमं त्वात्वांनिदेनिन्दायाविषयंदधिरे कृतवन्तः तान्तापयेतिसमन्वयः तेतवउक्थ्यंसर्वैःप्रशंसनीयंयद्वीर्यमसत्पूर्वमासीत् तदधुनाआविष्कृष्व प्रकटीकुरु तेनचवीर्येणपरिरापः परिवदतोनिन्दकानसुरान् व्यर्दय विशेषेणबाधस्व ॥ १४ ॥

१४. बृहस्पति, अतीव तीक्ष्ण और सन्तापक हेति आयुध से राक्षसों को सन्तप्त करो। इन्हीं राक्षसों ने, तुम्हारे पराक्रम के प्रभूत होने पर भी, तुम्हारी निन्दा की थी। पूर्वकाल में तुम्हारा जो प्रशंसनीय वीर्य था, इस समय उसका आविष्कार करो और उसके द्वारा निन्दकों का विनाश करो।

बार्हस्पत्येपशौएषाहविषोनुवाक्या प्रदानानामितिखण्डेसूत्रितम्—बृहस्पतेअतियदर्योअर्हात्त्मृत्वियाउपवाचःसचन्तइति एषैवाश्विनशस्त्रेपरिधानीया सूत्रितञ्च—बृहस्पतेअतियदर्योअर्हादितिपरिधानीयेति ।

बृहस्पतेअतियदर्योअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ।
यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ १५ ॥ ३१ ॥

बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युऽमत् । विऽभाति ।
क्रतुऽमत् । जनेषु । यत् । दीदयत् । शवसा । ऋतऽप्रजात । तत् ।
अस्मासु । द्रविणम् । धेहि । चित्रम् ॥ १५ ॥ ३१ ॥

ऋतप्रजात सत्येनोत्पन्नहेबृहस्पते अर्यःश्रेष्ठोब्राह्मणः सर्वान्कामानतिअतीत्ययद्ब्रह्मवर्चसं तेजः अर्हात्पूजयेत् अर्हपूजायां लेट्याडागमः जनेषुब्राह्मणेषुद्युमत् दीप्तियुक्तंक्रतुमत् ज्ञानोपेतंयद्ब्रह्मवर्चसंविभाति विशेषेणदीप्यते यच्चशवसाबलेनस्वाश्रयंजनंदीदयत् दीदयतिर्दीप्तिकर्मा दीपयति चित्रंचायनीयंतद्ब्रह्मवर्चसरूपंद्रविणंअस्मासुधेहिनिधेहि यद्वा अर्यउदारोपि त्वयादत्तंधनंअतीवार्हात् श्रद्दधीत यच्चत्वद्दत्तंधनंजनेषुतवस्तोत्रंकुर्वाणेषुदीप्तियुक्तंकर्मसाधनंचविभाति यच्चधनं शवसान्नादिसमृद्ध्यादीदयत् स्वाश्रयंदीपयति तादृशं धनमस्मासुधेहि तथाच ब्राह्मणम्—बृहस्पतेअतियदर्योअर्हादित्येतयापरिदध्यात्तेजस्कामोब्रह्मवर्चसकामोतीववान्यान्ब्र-

ह्मवर्चसमर्हतिद्युमदितिद्युमदिववैब्रह्मवर्चसंविभातीतिवीववैब्रह्मवर्चसंभातियद्दीदयच्छवसऋतप्र-
जातेतिदीदायेववैब्रह्मवर्चसंतदस्मासुद्रविणंधेहिचित्रमितिचित्रमिववैब्रह्मवर्चसंब्रह्मवर्चसीब्रह्मय-
शसीभवंतीति ॥ १५ ॥

१५. यज्ञजात बृहस्पति, जिस धन की आर्य लोग पूजा करते हैं, जो दीप्ति और यज्ञवाला धन लोगों में शोभा पाता है, जो धन अपने तेज से दीप्तिवाला है; वही विचित्र धन या ब्रह्मचर्य तेज हमें दो।

॥ इतिद्वितीयस्यषष्ठेएकत्रिंशोवर्गः ॥ ३१ ॥

अथषोडशी—

मानः॑स्ते॒नेभ्यो॒येअ॒भिद्रु॒हस्प॒देनि॑रा॒मिणो॑रि॒पवो॒न्नेषु जागृ॒धुः ।
आदे॒वाना॒मोह॑ते॒विव्रयो॑हृ॒दिबृह॑स्पते॒नप॒रःसाम्नो॑विदुः ॥ १६ ॥

मा । नः॒ । स्ते॒नेभ्यः॑ । ये । अ॒भि । द्रु॒हः । प॒दे । नि॒रा॒मिणः॑ ।
रि॒पवः॑ । अन्ने॑षु । जा॒गृ॒धुः । आ । दे॒वाना॑म् । ओह॑ते । वि । व्रयः॑ ।
हृ॒दि । बृह॑स्पते । न । प॒रः । साम्नः॑ । वि॒दुः ॥ १६ ॥

हेबृहस्पते नोस्मान्स्तेनेभ्यः स्त्यानमस्तियेषुइतिस्तेनाश्चौराः तेभ्योमादाः तान्दर्शयति
येचौराद्द्रुहः प्राणद्रोहस्यपदेस्थानेनिरामिणः नितरांरमणशीलाः रिपवः हिंसकाःसन्तः अ-
न्नेषुपरकोयेषु अभिजागृधुः अभिकांक्षन्ति गृधुअभिकांक्षायां लिटिरूपं येचदेवानांविव्रयः वि-
विशेषेणवर्जनं व्रीव्लीइतिधातूवर्जनेवर्तेते यएवंविद्वान्दक्षिणांप्रतिगृह्णातिनैनंदक्षिणाव्लीनाती-
तिएकस्यवर्जनार्थेदृष्टत्वादपरस्यापिवर्जनार्थत्वम् तत्हृदिस्वकीयेहृदयेआओहतेआवहन्ति दे-
वानांयागान्स्तुतींश्चनकरवामेतिमन्यन्तइतियावत् तेभ्योस्मान्मादाइतिसमन्वयः येपुमांसः सा-
म्नः साममयात्त्वत्तः परः परस्तादन्यदुत्कृष्टंसामयद्रक्षोघ्नं सामवैरक्षोहमितिश्रुतेः । नविदुर्न-
जानन्ति किन्तु सर्वसाधकंसामत्वामेवविदुषोस्मान् स्तेनेभ्योमादाः ॥ १६ ॥

१६. बृहस्पति, जो चोर द्रोह करने में प्रसन्न होते हैं, जो शत्रु हैं, जो दूसरे का धन चाहते हैं, जो अपने मन से सर्वांशतः देवों का बहिष्कार करने की इच्छा करते हैं और जो राक्षसनाशक साम-स्तुति नहीं जानते, उनके हाथ में हमें नहीं देना।

विश्वे॑भ्यो॒हित्वा॒भुव॑नेभ्य॒स्परि॒त्वष्टाज॑न॒त्साम्नः॑साम्नः॒क॒विः ।
सऋ॑ण॒चिदृ॑ण॒याब्रह्म॑ण॒स्पति॑र्द्रु॒होह॒न्तामृ॒तस्य॑धर्त॒रि ॥ १७ ॥

---

१ ऐ० ब्रा० ४. ११. । २ तै० सं० ६. ६. ३. ।

विश्वेभ्यः । हि । त्वा । भुवनेभ्यः । परि ।
त्वष्टा । अजनत् । साम्नःऽसाम्नः । कविः ।
सः । ऋणऽचित् । ऋणऽयाः । ब्रह्मणः । पतिः । द्रुहः । हन्ता ।
महः । ऋतस्य । धर्तरि ॥ १७ ॥

हेब्रह्मणस्पते त्वष्टाप्रजापतिः विश्वेभ्योभुवनेभ्यस्परिसर्वेभ्योभूतजातेभ्यः उत्कृष्टंत्वात्वां अजनद्धि अजीजनवखलु ततस्त्वंसाम्नःसाम्नः सर्वस्यापिसाम्नःकविः कुशब्दे अचइरितिइप्रत्ययः उच्चारयिताकर्तासि यद्वा कविःक्रान्तदर्शीत्वष्टासाम्नःसाम्नः सर्वस्यापिसाम्नःसारेण त्वामजीजनव किञ्च सब्रह्मणस्पतिः महोमहतऋतस्ययज्ञस्यधर्तरि धारकेयजमानेऋणचिव स्तोतृकामभृणमिवचिनोतीतिऋणचिव किञ्च ऋणयाः पापरूपस्यऋणस्ययावयितापृथक्कर्ताचद्रुहः कर्मणोद्रोग्धुरसुरस्यहन्ताभवेति ॥ १७ ॥

१७. बृहस्पति, त्वष्टा ने तुम्हें सर्वश्रेष्ठ उत्पन्न किया है; इसलिए तुम सारे सामों के उच्चारण-कर्त्ता हो। यज्ञ आरम्भ करने पर ब्रह्मणस्पति उसका सारा ऋण स्वीकार करते और ऋण का परिशोध करते हैं। वे द्रोहकारी का विनाश करते हैं।

तवश्रियेव्यंजिहीतपर्वतोगवांगोत्रमुदसृजोयदङ्गिरः ।
इन्द्रेणयुजातमसापरीवृतंबृहस्पतेनिरपामौब्जोअर्णवम् ॥ १८ ॥

तव । श्रिये । वि । अजिहीत । पर्वतः । गवाम् । गोत्रम् ।
उत्ऽअसृजः । यत् । अङ्गिरः । इन्द्रेण । युजा । तमसा । परिऽवृतम् ।
बृहस्पते । निः । अपाम् । औब्जः । अर्णवम् ॥ १८ ॥

अङ्गिरः आङ्गिरसहेबृहस्पते गवामावारकोवलेनाधिष्ठितः पर्वतः तवश्रियेआश्रयणार्थं व्यजिहीत विवृतद्वारतामगच्छव ततस्त्वंयद्यदागोत्रं इनित्रकटयचश्चेतिसमूहार्थेत्रप्रत्ययः गवां समूहमुदसृजोनिरगमयः तदाइन्द्रेणयुजासहायेनयुक्तस्त्वंतमसावृत्रासुरेणपरीवृतंपरितआक्रान्तंअपामर्णवस्थानभूतं मेघंनिरौब्जः नितरामधोमुखमकार्षीः ॥ १८ ॥

१८. अङ्गिरोवंशीय बृहस्पति, पर्वतों ने गायों को छिपाया था। तुम्हारी सम्पद् के लिए जिस समय वह उद्घाटित हुआ और तुमने गायों को बाहर किया, उस समय इन्द्र को सहायक पाकर तुमने वृत्र-द्वारा आक्रान्त जलाधारभूत जल-राशि को नीचे किया था।

ब्रह्मणस्पतेत्वमस्ययन्तासूक्तस्यबोधितनयंचजिन्व ।
विश्वंतद्भद्रंयदवन्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ १९ ॥ ३२ ॥

ब्रह्मणः। पते। त्वम्। अस्य। यन्ता। सुऽउक्तस्य। बोधि।
तनयम्। च। जिन्व। विश्वम्। तत्। भद्रम्। यत्। अवन्ति।
देवाः। बृहत्। वदेम। विदथे। सुऽवीराः॥ १९॥ ३२॥

हेब्रह्मणस्पते ब्रह्मणांस्तोत्राणामधिपते अस्यजगतोयन्तानियामकस्त्वं सूक्तस्यअस्मदीयमिदं ब्राह्मणस्पत्यंसूक्तंबोधि बुध्यस्व त्वंतनयंपुत्रपौत्रादिलक्षणंसन्तानंचजिन्व जिविःप्रीणनार्थः लोटिरूपम् प्रीणय भवादृशादेवायदवन्तिरक्षन्ति तत्तादृशंविश्वंसर्वंभद्रंकल्याणंभवति अतोवयं विदथेस्मिन् यज्ञेसुवीराः शोभनपुत्रपौत्राःसन्तः बृहत्प्रभूतमिदंस्तोत्रंवदेमब्रूयाम॥ १९॥

१९. ब्रह्मणस्पति, तुम इस संसार के नियामक हो। इस सूक्त को जानो। हमारी सन्ततियों को प्रसन्न करो। देवता लोग जिसकी रक्षा करते हैं, वह भली भाँति कल्याणवाहक है। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यषष्ठेद्वात्रिंशोवर्गः॥ ३२॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन्। पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः॥ १॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेणसायणाचार्येणविरचिते माधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेषष्ठोध्यायः॥ ६॥

---

## ॥ श्रीगणेशायनमः ॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत् ॥ निर्ममेतमहंवन्देविद्यातीर्थंमहेश्वरम् ॥ १ ॥

अथऋषिच्छन्दोदेवताविनियोगपुरःसरंसप्तमो व्याख्यायते गार्त्समदस्यद्वितीयमण्डलस्य तृतीयेनुवाकेदशसूक्तानि तत्रैकंसूक्तं व्याःकृतम् सेमामितिषोळशर्चंद्वितीयंसूक्तम् अत्रानुक्रम्यते—सेमांषोळशान्त्यात्रिष्टुप्द्वादशीचसैन्द्रीचेति मण्डलद्रष्टागृत्समदऋषिः द्वादशीषोडश्यौत्रिष्टुभौ शिष्टाचतुर्दशजगत्यः ब्राह्मणस्पत्यंहेत्युक्तत्वात् तुह्यादिपरिभाषयाइदमादीनित्रीणिसूक्तानिब्राह्मणस्पत्यानि अस्यसूक्तस्यद्वादशीऐन्द्रीइन्द्रदेवत्या चशब्दात् ब्राह्मणस्पत्याच सामान्यविनियोगःपूर्वमेवोक्तः विशेषस्तुलिङ्गादवगन्तव्यः ।

ओम् सेमामविड्ढिप्रभृतिंयईशिषेयाविधेमनवयामहागिरा ।
यथानोमीढ्वान्स्तवतेसखातवबृहस्पतेसीषधःसोतनोमतिम् ॥ १ ॥

सः । इमाम् । अविड्ढि । प्रऽभृतिम् । यः । ईशिषे । अया ।
विधेम । नवया । महा । गिरा । यथा । नः । मीढ्वान् । स्तवते ।
सखा । तव । बृहस्पते । सीसधः । सः । उत । नः । मतिम् ॥ १ ॥

हेबृहस्पते यस्त्वंईशिषेसर्वस्यजगतईश्वरोभवसि सत्वंइमामस्मदीयांप्रभृतिंप्रकर्षेणभृतां स्तुतिंअविड्ढिप्राप्नुहि अवतेःप्राप्त्यर्थस्यलोट्येतद्रूपम् वयंचत्वांअयाअनयाछान्दसोवर्णलोपः नवयानूतनयाप्रत्यग्रयामहामहत्यागिरावेदरूपयास्तुतिलक्षणयावाचाविधेमपरिचरेम विधतिःपरिचरणकर्मा उतअपिचनोस्माकं मध्येमीढ्वान्सेक्तास्तुतेर्वर्षिता कर्तेतियावत् तवसखामित्रभूतः सन् यथायेनप्रकारेणयत्कामनयास्तवतेत्वांस्तौति हेबृहस्पते बृहतोब्रह्मणोमन्त्रस्यस्वामिन् सत्वं नोस्माकंमतिं तदभिमतंफलंसीषधः साधय छान्दसेलुङिचङिएतद्रूपम् ॥ १ ॥

१. ब्रह्मणस्पति, तुम सारे संसार के स्वामी हो। हमारे द्वारा भली भाँति की गई स्तुति को ग्रहण करो। हम तुम्हारी, इस नवीन और बृहत् स्तुति के द्वारा, सेवा करते हैं। हमें अभिमत फल प्रदान करो; क्योंकि, बृहस्पति, हम तुम्हारे बन्धु हैं। हमारा स्तोता तुम्हारी स्तुति करता है।

अथद्वितीया

योनन्त्वान्यनमन्न्योजंसोतादर्दर्मन्युनाशम्बंराणिवि ।
प्राच्यांवयदच्युताब्रह्मंणस्पतिराचाविंशद्वसुंमन्तंविपर्वंतम् ॥ २॥

यः । नन्त्वांनि । अनंमत् । नि । ओजंसा । उत । अदर्दः । मन्युना ।
शम्बंराणि । वि । प्र । अच्यवयत् । अच्युंता । ब्रह्मंणः । पतिः ।
आ । च । अविंशत् । वसुंऽमन्तम् । वि । पर्वंतम् ॥ २ ॥

योब्रह्मणस्पतिः नन्त्वानि नमनीयानिराक्षसादीनिओजसाबलेनन्यनमत् नितरामनमयत् प्रह्वीभूतान्यकरोत् उतअपिच सब्रह्मणस्पतिर्मन्युना मनुनाक्रोधेनवा मन्युर्मन्यतेर्दीप्तिकर्मणःक्रोधकर्मणोवधकर्मणोवेतियास्कः । शंबराणि मेघनामैतत् मेघान्व्यदर्दः वर्षणार्थंविदारितवान् दृविदारणेइत्यस्माद्यङ्लुगन्ताल्लङ्चेतद्रूपम् तदनन्तरंअच्युताअच्युतानिनैश्चल्येनमेघेवस्थितान्युदकानि प्राच्यावयत् प्रकर्षेणगमयत् मेघान्निरगमयदित्यर्थः तथावसुमंतंगोरूपधनवन्तं पर्वतंबलनाम्नासुरेणबिलद्वारेपिधानार्थंनिहितं शिलोच्चयंआचआभिमुख्येनचेत् चशब्दश्चेदर्थः समुच्चयार्थत्वेतुचवायोगेप्रथमेतिपूर्वस्याच्यावयदित्यस्याद्युदात्तत्वंस्यात् अस्यचसर्वानुदात्तत्वं चेदर्थेतु निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधःसिध्यति व्यविशत् विशेषेणप्रविशति तदानींतद्गोरूपंधनं प्राप्नोदित्यर्थः ॥ २ ॥

२. बृहस्पति, अपनी सामर्थ्य से, तुमने तिरस्करणीयों का तिरस्कार किया था, क्रोध-परवश होकर शम्बर को विदीर्ण किया था, निश्चल जल को चालित किया था और गोधनपूर्ण पर्वत में प्रवेश किया था।

अथतृतीया—

तद्देवानांदेवतंमायकर्त्वमश्रंथ्नन्दृळ्हाव्रंदन्तवीळिता ।
उद्गाआंजदभिनद्ब्रह्मंणावलमगूहत्तमोव्यंचक्षयत्स्वंः ॥ ३ ॥

तत् । देवानाम् । देवऽतंमाय । कर्त्वम् । अश्रंथ्नन् । दृळ्हा ।
अव्रंदन्त । वीळिता । उत् । गाः । आजत् । अभिंनत् । ब्रह्मंणा ।
२ वलम् । अगूहत् । तमः । वि । अचक्षयत् । स्वः१रितिस्वंः ॥ ३ ॥

१ नि० १०. २९.।

देवानामिन्द्रादीनांमध्येदेवतमाय अतिशयेनदानादिगुणयुक्ताय षष्ठ्यर्थेचतुर्थी ईदृशस्य ब्रह्मणस्पतेस्तत्कर्त्रैकर्तव्यंकर्म किंपुनस्तदितिचेदुच्यते—दृह्ला दृढानिपर्वतादीनि अश्रथन् श्रंथविमोचनप्रतिहर्षणयोः अस्यबलेनश्रथितानि विश्लिष्टान्यभूवन् तथावीळितावीळितानिसंस्तंभितानिदृढीकृतानिवृक्षादीनि वीळयतिश्चव्रीडयतिश्चसंस्तंभकर्माणावितियास्कः। अव्रदन्त मृदून्यभवन् व्रदतिर्मृदूभावकर्मा अपिचसब्रह्मणस्पतिः बलेनापहृतागाः उदाजत् अजगतिक्षेपणयोः देवान्प्रत्युदगमयत् तथाब्रह्मणाआत्मीयेनमन्त्रेणबलंसर्वस्यावरकमसुरंअभिनत् मन्त्रसामर्थ्येनाभैत्सीत् तदनन्तरंबलेनोत्पादितंतमः ध्वान्तंअगूहत् गुहूसंवरणे गूढमदृश्यमकरोत् तदनन्तरं स्वरादित्यंव्यचक्षयत् तमसोनिराकरणेनतत्स्थमदर्शयत् चष्टिःपश्यतिकर्मा ॥ ३ ॥

३. देव-श्रेष्ठ देव बृहस्पति के कार्य से सुदृढ़ पर्वत शिथिल हुआ था और स्थिर वृक्ष भग्न हुआ था। उन्होंने गायों का उद्धार किया था। मंत्र-द्वारा बलासुर को भिन्न किया था। अन्धकार को अदृश्य किया था। आदित्य को प्रकट किया था।

अश्मास्यमवतंब्रह्मणस्पतिर्मधुधारमभियमोजसातृणत्।
तमेवविश्वेपपिरेस्वर्दृशोबहुसाकंसिसिचुरुत्समुद्रिणम् ॥ ४ ॥

अश्मऽआस्यम्। अवतम्। ब्रह्मणः। पतिः। मधुऽधारम्। अभि। यम्। ओजसा। अतृणत्। तम्। एव। विश्वे। पपिरे। स्वःऽदृशः। बहु। साकम्। सिसिचुः। उत्सम्। उद्रिणम् ॥ ४ ॥

ब्रह्मणस्पतिः ब्रह्मणोमन्त्रस्यपतिः पालयितादेवः अश्मास्यं अश्मवदृढतरास्यम् यास्कस्त्वाह—अशनवन्तमास्यन्दनवन्तमिति। व्यापनवन्तम् आसेचनवन्तमितितस्यार्थः मधुधारं मधुर्मादयित्री उदकधारायस्यतादृशम् अवतंअवस्तात्ततंविस्तृतं यंमेघंओजसाबलेनअभ्यतृण त् उतृदिर्हिंसानादरयोः अहिंसीत् वर्षणार्थमवधीदित्यर्थः तमेवमेघंविश्वेसर्वेस्वर्दृशः स्वरादित्यः तस्यसंबन्धिनोद्रष्टारोरश्मयः पपिरे घर्मकालेपिबन्ति मेघेनवृष्टस्योदकस्यपानात्तमेवपिबन्तीत्युच्यते तेचरश्मयोवर्षासुउत्सं उत्सेचनवन्तंउद्रिणंउदकवन्तंमेघंसाकंसहयुगपदेवबहुसिसिचुः घर्मकालेयत्पीतं ततोपिबहुतरंसहस्रगुणितं सिञ्चन्तीत्यर्थः ॥ ४ ॥

४. बृहस्पति ने पत्थर की तरह दृढ़ मुखवाले, मधुर जल से पूर्ण और निम्न अवनत जिस मेघ का, बल-प्रयोग द्वारा, वध किया था, उसका आदित्य-किरणों ने जलपान किया था और उन्होंने ही जलधारामय वृष्टि का सिंचन किया था।

सनाताकाचिद्भुवनाभवीत्वामाद्भिःशरद्भिर्दुरोवरन्तवः।
अयंतन्ताचरतोअन्यदन्यदिद्याचकारवयुनाब्रह्मणस्पतिः ॥५॥१॥

---

१ नि० ५. १६. । २ नि० १०. १३. ।

सनां । ता । का । चित् । भुवना । भवीत्वा । मात्ऽभिः ।
शरत्ऽभिः । दुरः । वरन्त । वः । अयतन्ता । चरतः । अन्यत्ऽअन्यत् ।
इत् । या । चकार । वयुना । ब्रह्मणः । पतिः ॥ ५ ॥ १ ॥

हेऋत्विग्यजमानाः वोयुष्मदर्थंसना सनातनानि ता तानिकाचित् कानिचित् ब्रह्मणस्पतेः प्रज्ञानानि भुवनाभुवनानां सुपांसुलुगितिषष्ठ्यालुक् भुवनानामुदकानां भवीत्वा भाव्यानां दुरोद्वाराणिमाद्भिः मासैः पद्दन्नित्यादिनामासशब्दस्यमासभावः स्वतवस्मासोषसांचइष्यते इतितत्वम् शरद्भिः संवत्सरैश्चवरंत विवृण्वन्ति तत्कालेवर्षणार्थंमेघद्वाराण्युद्घाटयन्तीत्यर्थः कानिपुनस्तानि ब्रह्मणस्पतिर्यायानि वयुना ज्ञाननामैतत् ज्ञानानिमन्त्रविषयाणिचकार कृतवान् तदनन्तरं अयतन्ता अयतमानौ अप्रयत्नौ उभौलोकौद्यौश्च पृथिवीच अन्यदन्यदित् अन्यदन्यदेवपृथिवीवृष्टिजलं दिव्यमुदकंद्यौः उदककार्यं हविर्लक्षणं पार्थिवमन्नं एवं परस्परव्यतिहारेणचरतोभुञ्जाते चरगतिभक्षणयोः ॥ ५ ॥

५. ऋत्विको, तुम्हारे ही लिए बृहस्पति के सनातन और विचित्र प्रज्ञान ने महीने-महीने और साल-साल होनेवाली वर्षा का द्वार उद्घाटित किया था। बृहस्पति ने ऐसे प्रज्ञानों को मंत्र-विषयक किया था। चेष्टा करके द्यावा-पृथिवी परस्पर सुख बढ़ाती हैं।

अभिनक्षन्तोअभियेतमानशुर्निधिंपणीनांपरमंगुहाहितम् ।
तेविद्वांसःप्रतिचक्ष्यानृतापुनर्यतउआयन्तदुदीयुराविशम् ॥ ६ ॥
अभिऽनक्षन्तः । अभि । ये । तम् । आनशुः । निऽधिम् । पणीनाम्
परमम् । गुहा । हितम् । ते । विद्वांसः । प्रतिऽचक्ष्य । अनृता । पुनः ।
यतः । ऊँ इति । आयन् । तत् । उत् । ईयुः । आऽविशम् ॥ ६ ॥

गोसमूहेपणिभिरसुरैरपहृतेसति पणीनांस्थानं सरमाख्ययादेवशुन्याज्ञात्वा ब्रह्मणस्पतिनासृष्टाअङ्गिरसस्तत्स्थानंप्राप्य गोसमूहं पणिभिर्निर्मितामायाश्चदृष्ट्वा असुरनिवासस्थानं स्वहस्तोद्भूतेनाग्निनादग्ध्वा प्रत्यागच्छन् तदेतदृचेनोच्यते अभिनक्षन्तः अभितोगच्छन्तोयेङ्गिरसःतंनिधिगोसमूहरूपं निधानं धनं परममुत्कृष्टं पणानां तृतीयार्थेषष्ठी पणिभिः गुहागुहायां हितंनिहितं स्थापितं अभ्यानशुः अभिलक्ष्यानशिरे प्राप्तवन्तः विद्वांसोभिज्ञास्तेङ्गिरसः अनृताअनृतानिअसुरैः कृतामायाः प्रतिचक्ष्यदृष्ट्वा आविशं आवेष्टुंप्रवेष्टुंयतउयतएव स्थानादायन् अच्छगन् तत्स्थानं पुनरुदीयुः उदगच्छन् उत्कर्षेणप्राप्ताः ॥ ६ ॥

६. विज्ञ अङ्गिरा लोगों ने, चारों ओर खोजते हुए, पणियों के दुर्ग में छिपाये हुए परमधन को प्राप्त किया था। माया का दर्शन करके वे जिस स्थान से गये थे, फिर वहीं गये।

ऋतावानः प्रतिचक्ष्यानृता पुनरात आ तस्थुः कवयो महस्पथः ।
ते बाहुभ्यां धमितमग्निमश्मनि नकिः षो अस्त्यरणो जहुर्हि तम् ॥७॥

ऋतऽवानः । प्रतिऽचक्ष्य । अनृता । पुनः । आ । अतः । आ ।
तस्थुः । कवयः । महः । पथः । ते । बाहुऽभ्याम् । धमितम् ।
अग्निम् । अश्मनि । नकिः । सः । अस्ति । अरणः । जहुः । हि । तम् ॥७॥

ऋतावानः ऋतमिति सत्यनामधेयं तद्वन्तः कवयः क्रान्तदर्शिनः सर्वज्ञा अङ्गिरसः अनृता अनृतानि प्रतिचक्ष्य पूर्वोक्तप्रकारेण दृष्ट्वा अतः अस्मात् स्थानात् पुनराजिगमिषवः महस्पथो महतो मार्गान् प्रति आतस्थुः अवतस्थिरे अवतिष्ठमानाश्च ते बाहुभ्यां हस्ताभ्यां धमितं मन्थनेनोत्पादितं प्रज्वालितं तमग्निं अश्मनि पणीनां निवासभूते शिलोच्चये जहुर्हि दग्धुं त्यक्तवन्तः खलु अरणः अरमयिता दाहेन दुःखकारी सोऽग्निः पूर्वं तत्र नकिरस्ति न विद्यते अविद्यमानमग्निं स्वसामर्थ्यादुत्पाद्य तत्र प्रचिक्षिपुरित्यर्थः ॥ ७ ॥

७. सत्यवादी और सर्वज्ञाता अङ्गिरा लोग माया का दर्शन करके पुनः प्रधान मार्ग से उसी ओर गये। उन्होंने हाथों से जलाये अग्नि को पर्वत पर फेंका। पहले वे ध्वंसक अग्नि वहाँ नहीं थे।

ऋतज्येन क्षिप्रेण ब्रह्मणस्पतिर्यत्र वष्टि प्र तदश्नोति धन्वना ।
तस्य साध्वीरिषवो याभिरस्यति नृचक्षसो दृशये कर्णयोनयः ॥८॥

ऋतऽज्येन । क्षिप्रेण । ब्रह्मणः । पतिः । यत्र । वष्टि । प्र । तत् ।
अश्नोति । धन्वना । तस्य । साध्वीः । इषवः । याभिः । अस्यति ।
नृऽचक्षसः । दृशये । कर्णऽयोनयः ॥ ८ ॥

ऋतज्येन ऋतं सत्यमेव ज्या यस्य तेन क्षिप्रेण इषूणां क्षेपकेण धन्वना धारणभूतेन धनुषा यः ब्रह्मणस्पतिः ब्रह्मणो मन्त्रस्य पालयिता देवः यत्र यस्मिन्विषये वष्टि कामयते तत् प्राश्नोति प्रकर्षेण व्याप्नोति अश्नोतेर्व्यत्ययेन परस्मैपदम् तस्य धनुषः साध्वीः साधिकास्ता इषवो भवन्ति याभिरिषुभिः ब्रह्मणस्पतिरस्यति राक्षसादीन् क्षिपति कीदृश्यस्ताः नृचक्षसः नॄन्पश्यतः उपलक्षणमेतत् सर्वज्ञस्य ब्रह्मणस्पतेः दृशये दर्शनाय ज्ञानाय जाताः कर्णयोनयः श्रोत्रेन्द्रियेण ग्राह्यमन्त्रपूता आकर्णकृष्टा वा बाणाः ब्रह्मणस्पतिर्मन्त्रैरेव सर्वं साधयतीति भावः ॥ ८ ॥

८. बृहस्पति वाण-क्षेपक और सत्यरूप ज्यावाले हैं। वे जो चाहते हैं, धनुष के द्वारा प्राप्त कर लेते हैं। जिस वाण को वे फेंकते हैं, वह कार्य-साधन में कुशल है। वे वाण दर्शनार्थ उत्पन्न हुए हैं। कर्ण ही उनका उत्पत्ति-स्थान है।

अथनवमी–

सस॑ंन॒यः॒सवि॑न॒यः॒पु॒रोहि॑तः॒सस॒ुष्टु॑तः॒सयु॒धिब्रह्म॒ण॒स्पति॑ः ।
चा॒क्ष्मोयद्वाज॒ंभर॑तेम॒तीधनादित्सूर्य॑स्तपतितप्य॒तुर्वृथा॑ ॥ ९ ॥

सः । स॒म्ऽन॒यः । सः । वि॒ऽन॒यः । पु॒रःऽहि॑तः । सः । सुऽस्तु॑तः । सः ।
यु॒धि । ब्रह्म॑णः । पति॑ः । चा॒क्ष्मः । यत् । वाज॑म् । भर॑ते । म॒ती ।
धना॑ । आत् । इत् । सूर्य॑ः । त॒प॒ति॒ । त॒प्य॒तुः । वृथा॑ ॥ ९ ॥

पुरोहितोदेवैःपुरतोत्रस्थापितः सब्रह्मणस्पतिः संनयः विश्लिष्टानांमन्त्रैःसंगमयिताभ-वति विनयः संगतानांविविधंनेतापृथक्कर्तापिसएव तथा ससुष्टुतः शोभनंस्तोतृभिःस्तुतश्च भवति तथायुधिसंग्रामेसस्तोतॄणामनुग्रहाय प्रादुर्भवतीतिशेषः यद्यदाचाक्ष्मः चष्टेः क्षमतेर्वा-सर्वस्यद्रष्टासर्वसहोवा ब्रह्मणस्पतिः वाजमन्नंमतीमननीयंप्रशस्तंधनाधनंचस्तोतॄणामर्थायभरते बिभर्ति वृष्टिद्वारापोषयति आदित्अनन्तरमेवतप्यतुस्तापकःसूर्यः वृथा अनायासवचनमेतत् अनायासेनतपतिदीप्यते ब्रह्मणस्पतिनादत्तैरन्नैर्धनैश्चयज्ञस्यसिद्धत्वात्स्वयंकेवलंहवींषिभुञ्जान-एववर्ततइत्यर्थः ॥ ९ ॥

९. ब्रह्मणस्पति पुरोहित हैं। वे सारे पदार्थों को पृथक् और एकत्र करते हैं। सब उनकी स्तुति करते हैं। वे युद्ध में प्रकट होते हैं। सर्वदर्शी बृहस्पति जिस समय अन्न और धन धारण करते हैं, उस समय अनायास सूर्य उगते हैं।

अथदशमी–

वि॒भु॒प्र॒भुप्र॒थ॒मंमे॒हना॑वतो॒बृह॒स्पते॑ःसु॒वि॒दत्रा॑णि॒राध्या॑ ।
इ॒मासा॒तानि॒वे॒न्यस्य॑वा॒जिनो॒येन॒जना॑उ॒भये॑भु॒ञ्जतेविश॑ः॥१०॥२॥

वि॒ऽभु । प्र॒ऽभु । प्र॒थ॒मम् । मे॒हना॑ऽवतः । बृह॒स्पते॑ः । सु॒ऽवि॒दत्रा॑णि ।
राध्या॑ । इ॒मा । सा॒तानि॑ । वे॒न्यस्य॑ । वा॒जिन॑ः । येन॑ । जना॑ः । उ॒भये॑ ।
भु॒ञ्जते॑ । विश॑ः ॥ १० ॥ २ ॥

विभुविभूनिव्याप्तानि प्रभुप्रभूणिप्रौढानि प्रथमं प्रथमानिमुख्यानि एवंभूतानिमेहनावतः वर्षणवतोवृष्टिप्रदस्यबृहस्पतेः बृहतोमन्त्रस्यपालयितुः संबन्धीनिसुविदत्राणि विद्लृलाभे सुविदेः कत्रन् सुष्ठुलब्धव्यानि सुविदत्रंधनंभवतीतियास्कः । राध्याराध्यानिसम्यक्साधनीयानिप्राप्त-व्यानीतियावत् इमासातानीमानिधनानिवेन्यस्यकमनीयस्यवाजिनो न्नवतोबृहस्पतेः तृतीयार्थे

षष्ठी बृहस्पतिनादत्तानियेनधनेनउभयेउभयविधाजनाः स्तोतारोयजमानाश्चदेवामनुष्याश्चवा विशोनिविष्टाः सन्तोभुञ्जते भोगानूलभन्ते तत्सर्वंबृहस्पतिनादत्तमित्यर्थः ॥ १० ॥

१०. वृष्टिदाता बृहस्पति का धन चारों ओर व्याप्त, प्रापणीय, प्रभूत और उत्तम है। कमनीय और अन्नवान् बृहस्पति ने यह सारा धन दान किया है। दोनों प्रकार के मनुष्य (यजमान और स्तोता) ध्यानावस्थित चित्त से इस धन का उपभोग करते हैं।

॥ इतिद्वितीयस्यसप्तमेद्वितीयोवर्गः ॥ २ ॥

योवरेवृजनेविश्वथाविभुर्महामुरण्वःशवसावक्षिथ।
सदेवोदेवान्प्रतिपप्रथेपृथुविश्वेदुतापरिभूर्ब्रह्मणस्पतिः ॥ ११ ॥

यः। अवरे। वृजने। विश्वऽथा। विऽभुः। महाम्। ऊँ इति।
रण्वः। शवसा। ववक्षिथ। सः। देवः। देवान्। प्रति। पप्रथे। पृथु।
विश्वा। इत्। ऊँ इति। ता। परिऽभूः। ब्रह्मणः। पतिः ॥ ११ ॥

विश्वथासर्वप्रकारेणविभुर्व्याप्तः रण्वोरमयिता स्तोतव्योवायोब्रह्मणस्पतिः अवरेनिकृष्टे वृजनेवर्जनहेतुभूतेबलेवर्तमानंदुर्बलमितियावत् महामुमहान्तंच छान्दसोवर्णलोपः उभयविधंस्तोतारंशवसाआत्मीयेनबलेन ववक्षिथ वोढुमिच्छति सर्वदावहतीतियावत् वहतेःसन्नन्तस्यलिट्येतद्रूपं पुरुषव्यत्ययः सदेवोदानादिगुणयुक्तः देवान्प्रतिसर्वेषांदेवानांप्रतिनिधिःसन्पृथुपप्रथे अत्यन्तंप्रथते यशसाविस्तीर्णोभवतीतियावत् यस्मादेवंतस्मात् विश्वेदुसर्वाण्येवतातानिसर्वाणि भूतजातानिपरिभूः परिभवन् अभिभवन्वर्ततइतिशेषः ॥ ११ ॥

११. चारों ओर व्याप्त और स्तवनीय ब्रह्मणस्पति अतीव और महान् बली, दोनों प्रकार के स्तोताओं की, अपने शक्ति से, रक्षा करते हैं। दानादि गुणवाले बृहस्पति देवों के प्रतिनिधि रूप से सर्वत्र अत्यन्त विख्यात हैं। इसी लिए वे सारे प्राणियों के स्वामी भी हुए हैं।

विश्वंसत्यंमघवानायुवोरिदापश्चनप्रमिनन्तिव्रतंवाम्।
अच्छेन्द्राब्रह्मणस्पतीहविर्नोन्नंयुजेववाजिनाजिगातम् ॥ १२ ॥

विश्वम्। सत्यम्। मघऽवाना। युवोः। इत्। आपः। चन। प्र।
मिनन्ति। व्रतम्। वाम्। अच्छ। इन्द्राब्रह्मणस्पतीइति। हविः।
नः। अन्नम्। युजाऽइव। वाजिना। जिगातम् ॥ १२ ॥

हेमघवाना मघमितिधननाम तद्वन्ताविन्द्राब्रह्मणस्पती युवोरित युवयोरेव विश्वंसर्वं स्तोत्रं सत्यंयथार्थं स्तुत्यायद्‌गुणजातं प्रतिपाद्यते तत्सर्वंयुवयोर्विद्यमानमेव नत्वारोपितमित्यर्थः तथाचनेत्येतत्पदद्वयसमुदायः ऐकपद्यंत्वाध्यापकसाम्प्रदायिकं यद्येवशब्दस्यपूर्वपदेन आपश्चआपोपिउपलक्षणमेतत् एतदुपलक्षितानिसर्वाण्यपिभूतानिवांयुवयोर्व्रतं कर्मनप्रमिनन्तिनहिंसन्ति मीञ्‌हिंसायाम् क्रैयादिकः मीनातेर्निगमइतिह्रस्वत्वम् हेइन्द्राब्रह्मणस्पती नोस्माकंहविरच्छाभिमुख्येन जिगातंगच्छतम् आगच्छतमितियावत् जिगातिर्गतिकर्मा जौहोत्यादिकः तत्रदृष्टान्तः—युजेववाजिना युजारथेनियुक्तौवाजिनौ वेजनवन्तावश्वौअन्नंघासं प्रतियथास्वयमेवशीघ्रंगछतस्तद्वत् शीघ्रमागच्छतमित्यर्थः युजेवेत्यत्रसुपांसुलुगितिप्रथमाद्विवचनस्याकारः तृतीयायांहिसावेकाचइतिविभक्तेरुदात्तत्वम्॥ १२ ॥

१२. इन्द्र और ब्रह्मणस्पति, तुम धनवान् हो। सारा सत्य तुम्हारा ही है। तुम्हारे व्रत को जल नहीं मार सकता जैसे रथ में जुते हुए घोड़े खाद्य के सामने दौड़ते हैं, वैसे ही तुम भी हमारे हव्य के लिए दौड़ो।

अथत्रयोदशी—

उताशिष्ठाअनुंशृण्वन्तिवह्नयःसभेयोविप्रोभरतेमतीधना।
वीळुद्वेषाअनुवशांऋणमाददिःसहवाजीसमिथेब्रह्मणस्पतिः॥ १३॥

उत। आशिष्ठाः। अनु। शृण्वन्ति। वह्नयः। सभेयः। विप्रः। भरते। मती। धना। वीळुऽद्वेषाः। अनु। वशा। ऋणम्। आऽददिः। सः। ह। वाजी। समऽइथे। ब्रह्मणः। पतिः॥ १३॥

उतअपिचआशिष्ठाः आशुतराः शीघ्रगामिनोवह्नयः अश्वनामैतत् वोढारोब्रह्मणस्पतेरश्वाअनुशृण्वन्ति अस्माभिःकृतंस्तोत्रं अनुक्रमेणशृण्वन्ति यद्वा ब्रह्मणस्पतिना कृतमनुशासनं शृण्वन्ति अतस्ते तमस्मदीयंयज्ञं प्रापयन्त्वितिशेषः सभेयः सभायांसाधुः ढश्छन्दसीतिढः विप्रोमेधावीअध्वर्युर्होतावामतीमत्यामननीयेनस्तोत्रेण सुपांसुलुगितिपूर्वसवर्णदीर्घः धनाहविर्लक्षणानिधनानितस्मै ब्रह्मणस्पतये भरतेबिभर्ति संपादयतीतियावत् यद्वा स्तोत्रेणधनानिभरते बिभर्तिपोषयति अतोवीळुद्वेषाःवीळून् दृढान् प्रबलान् राक्षसादीन् द्वेष्टीति तादृशोब्रह्मणस्पतिः वशावशायागोः सुपांसुलुगितिषष्ठ्यालुक् ऋत्यकइतिप्रकृतिभावः ऋणंअस्माभिर्यज्वभिः प्रदेयं अवदानात्मकं अनुअनुक्रमेणाददिरादाताभवत्वितिशेषः अवदानस्य ऋण-

त्वंचतैत्तिरीयेत्रिभिर्ऋणवाजायतेब्रह्मचर्येणऋषिभ्यइत्यादिनास्पष्टमाम्नातम्. । यद्वा अनुरानुगुण्ये वशावशस्यकामस्याभिलाषस्यानुगुणंआदाताभवत्वितियोज्यम् हशब्दःप्रसिद्धौ सखलु ब्रह्मणस्पतिः समिथे संयन्ति सङ्गच्छन्तेस्मिन्नाहुतिभिर्देवाइतिसमिथोयज्ञः तस्मिन्वाजी अन्नवान् तस्माद्धविषआदाताभवत्वित्यर्थः ॥ १३ ॥

१३. ब्रह्मणस्पति के वेगवान् घोड़े हमारा स्तोत्र सुनते हैं। मेधावी और सभ्य अध्वर्यु, मनोरम स्तोत्र-द्वारा, हव्य प्रदान करते हैं। पराक्रमियों के दमनकारी ब्रह्मणस्पति हमारे पास इच्छानुसार ऋण स्वीकार करते हैं। अन्नवान् ब्रह्मणस्पति युद्ध में हव्य ग्रहण करें।

ब्रह्मणस्पतेरभवद्यथावशंसत्योमन्युर्महिकर्माकरिष्यतः।
योगाउदाजत्सदिवेविचाभजन्महीवरीतिःशवसासरत्पृथक् ॥ १४ ॥

ब्रह्मणः। पतेः। अभवत्। यथाऽवशम्। सत्यः। मन्युः। महि। कर्म। करिष्यतः। यः। गाः। उत्ऽआजत्। सः। दिवे। वि। च। अभजत्। महीऽइव। रीतिः। शवसा। असरत्। पृथक् ॥ १४ ॥

महिमहत्कर्मकरिष्यतः ब्रह्मणस्पतेः मन्युः मननसाधनोमन्त्रः क्रोधोवायथावशं यथाकामंसत्यःअवितथोभवत् सयथाकामयतेतथाकरोतीत्यर्थः योब्रह्मणस्पतिः पणिभिरपहृतागाः उदाजत् उदगमयत् गुहायानिरगमयदित्यर्थः सब्रह्मणस्पतिः दिवेद्युलोकायतन्नत्येभ्योदेवेभ्यइत्यर्थः व्यभजच्च तागाविभक्ताश्चाकरोत् सचगोसमूहः महीवरीतिः महतीस्तुतिरिव रीङ्स्रवणे यथागंगादीनांस्रोतः विभक्तंसत् निम्नदेशाभिमुखंप्रसरति तथाशवसाआत्मीयेनबलेन तत्तद्देवगृहंपृथक्विभिन्नंअसरत् अगच्छत् ॥ १४ ॥

१४. जिस समय ब्रह्मणस्पति किसी महान् कर्म में प्रवृत्त होते हैं, उस समय उनका मंत्र उनकी अभिलाषा के अनुसार सफल होता है। जिन्होंने गायों को बाहर किया है, उन्होंने द्युलोक के लिए उनका भाग किया है। महान् स्रोत की तरह गायें, अपने बल से, अलग-अलग गई हैं।

ब्रह्मणस्पतेसुयमस्यविश्वहारायःस्यामरथ्योवयस्वतः।
वीरेषुवीराँउपपृङ्ग्धिनस्त्वंयदीशानोब्रह्मणावेषिमेहवम् ॥ १५ ॥

ब्रह्मणः। पते। सुऽयमस्य। विश्वहा। रायः। स्याम। रथ्यः। वयस्वतः। वीरेषु। वीरान्। उप। पृङ्ग्धि। नः। त्वम्। यत्। ईशानः। ब्रह्मणा। वेषि। मे। हवम् ॥ १५ ॥

१ तै० सं० ६. ३.१०।

हेब्रह्मणस्पते मन्त्राधिपते सुयमस्यसुष्ठुनियन्तव्यस्य वयस्वतोन्नयुक्तस्य रायोधनस्यविश्वहा विश्वेषुसर्वेष्वहस्सुरथ्योधिपतयः स्यामभूयास्म रथाएषांसन्तीतिरथ्यः छन्दसीवनिपाविति मत्वर्थीयोयः ईकारः अपिच नोस्माकंवीरेषुवीर्यान्जातेष्वस्मदीयेषुपुत्रेषुवीरान्पुत्रान्त्वंउपपृंग्धि संपृक्तान्कुरु उत्पादय पृचीसंपर्के रौधादिकः वयंपौत्रानपिलभेमहीतियावत् यद्यतः ईशानः सर्वस्येश्वरस्त्वं ब्रह्मणा अन्ननामैतत् हविर्लक्षणेनान्नेनसह मेहवम् मदीयंस्तुतिलक्षणमाह्वानं वेषि कामयसे वीगतिप्रजनकान्त्यशनखादनेषु अतोमयोक्तंकुर्वित्यर्थः ॥ १५ ॥

१५. ब्रह्मणस्पति, हम सब समय उत्कृष्ट नियम और अन्नवाले धन के अधिपति हों। तुम हमारे वीर पुत्र को पौत्र दो; क्योंकि तुम सबके ईश्वर हो। हमारी स्तुति और अन्न को चाहो।

ब्रह्मणस्पतेत्वमस्ययन्तासूक्तस्यबोधितनयंचजिन्व ।
विश्वंतद्भद्रंयदवन्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ १६ ॥ ३ ॥

ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सुऽउक्तस्य । बोधि । तनयम् । च । जिन्व । विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥ १६ ॥ ३ ॥

हेब्रह्मणस्पते यन्तासर्वस्यजगतोनियन्तात्वं अस्यसूक्तस्यइदंसूक्तं क्रियाग्रहणंकर्तव्यमिति कर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी बोधि बुध्यस्व बुध्वातनयंपुत्रंचास्मभ्यं जिन्व प्रेरय जिविःप्रीणनार्थः अत्रप्रेरणेवर्तते धातूनामनेकार्थत्वात् यद्भद्रंकल्याणं देवाःसर्वे अवन्तिरक्षन्ति विश्वं सर्वं तद्भद्रंचजिन्वेतिशेषः वयंचसुवीराः शोभनैःवीरैः पुत्रपौत्रादिभिरुपेताःसन्तः बृहत्प्रौढं स्तोत्रं विदथेविदन्ति यष्टव्यतयास्मिन्देवान् जानन्तीतिविदथोयज्ञः तस्मिन्वदेम ब्रूयाम ॥ १६ ॥

१६. ब्रह्मणपति, तुम इस संसार के नियामक हो। तुम इस सूक्त को जानो। तुम हमारी सन्ततियों को प्रसन्न करो। देवता लोग जिसकी रक्षा करते हैं, वह कल्याणवाही है। पुत्र और पौत्रवाले होकर हम इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यसप्तमेतृतीयोवर्गः ॥ ३ ॥

इन्धानइतिपञ्चर्चंतृतीयंसूक्तं गार्त्समदं जागतंब्राह्मणस्पत्यम् तथाचानुक्रान्तम्—इन्धानः पञ्चजागतन्त्विति लैङ्गिकोविनियोगः।

इन्धानोअग्निंवनवद्वनुष्यतःकृतब्रह्माशूशुवद्रातहव्यइत् ।
जातेनजातमतिसप्रसंसृतेयंयंयुजंकृणुतेब्रह्मणस्पतिः ॥ १ ॥

इन्धा॑नः । अ॒ग्निम् । व॒न॒व॒त् । व॒नु॒ष्य॒तः । कृ॒तऽब्र॑ह्मा ।

शू॒शु॒व॒त् । रा॒तऽह॑व्यः । इत् । जा॒तेन॑ । जा॒तम् । अति॑ । सः ।

प्र । स॒र्सृ॒ते॒ । यम्ऽय॑म् । यु॒ज॑म् । कृ॒णु॒ते । ब्रह्म॑णः । पति॑ः ॥ १ ॥

अग्निमिन्धानः ब्रह्मणस्पतेर्यागार्थंअग्निंप्रज्वलयन्यजमानः वनुष्यतोहिंसिष्यतोहिंसां कुर्वतोवाशत्रून्वनवत् वनुयाद्धिंस्यात् वनुष्यतिर्हन्तिकर्मेतियास्कः । इदितिचार्थे किञ्च कृत-ब्रह्मा ब्रह्मस्तोत्रंकृतंयेनसतथोक्तः रातहव्यः रातंदत्तंहव्यंहविर्येन एवंभूतःसन् शूशुवत् वर्धते टु-ओश्विगतिवृद्ध्योः अस्माण्णयन्ताल्लुङिरूपम् तथासयजमानः जातेनपुत्रेणजातंउत्पादितंस्वस्य पौत्रं अतिप्रसर्स्रते अतीत्यभृशंप्रसरति पौत्रमपिपश्यन्चिरकालंजीवेदित्यर्थः सर्तेर्यङ्लुगन्ताद्व्य-त्ययेनात्मनेपदम् यंयंयजमानंब्रह्मणस्पतिः स्तोत्रहविषोःस्वीकरणेनयुजं सखायं कृणुतेकुरुते ससमानएवभवतीत्यर्थः ॥ १ ॥

१. अग्नि को प्रज्वलित करके यजमान शत्रुओं की हिंसा कर सके। स्तोत्र पढ़ते और हव्य दान करते हुए यजमान समृद्धि प्राप्त कर सके। जिस यजमान को सखा कहकर ब्रह्मणस्पति ग्रहण करते हैं, वह पुत्र के पुत्र से भी अधिक जीवित रहता है।

वी॒रेभि॑र्वी॒रान्व॑नवद्वनुष्य॒तो गोभी॑ र॒यिं प॑प्रथ॒द्बोध॑ति॒ त्मना॑ ।

तो॒कं च॒ तस्य॒ तन॑यं च वर्धते॒ यंयं॑ यु॒जं कृ॑णु॒ते ब्रह्म॑ण॒स्पति॑ः ॥ २ ॥

वी॒रेभि॑ः । वी॒रान् । व॒न॒व॒त् । व॒नु॒ष्य॒तः । गोभि॑ः । र॒यिम् ।

प॒प्र॒थ॒त् । बोध॑ति । त्मना॑ । तो॒कम् । च॒ । तस्य॑ । तन॑यम् । च॒ ।

व॒र्ध॒ते॒ । यम्ऽय॑म् । यु॒ज॑म् । कृ॒णु॒ते । ब्रह्म॑णः । पति॑ः ॥ २ ॥

सयजमानः वीरेभिः वीरैरात्मीयैःपुत्रैः वनुष्यतोहिंसतः वीरान् शत्रुपुत्रान्वनवद्वनुयात् हिंस्यात् अपिच गोभिःसहितंरयिंधनंपप्रथत् प्रथयति विस्तारयति प्रथयतेर्लुङिचङ्येतद्रूपम् तथात्मनाआत्मनैवबोधति सर्वंजानाति अनन्याधीनज्ञानोभवतीत्यर्थः किञ्च तस्ययजमानस्य तोकंपुत्रः तनयं विभक्तिव्यत्ययः तनयस्तत्पुत्रश्चवर्धते प्रवृद्धोभवति तदातोकंतनयं पुत्रंपौत्रंचब्र-ह्मणस्पतिर्वर्धयति वृधिरन्तर्भावितण्यर्थोद्रष्टव्यः अन्यद्गतम् ॥ २ ॥

२. यजमान वीर पुत्रों के द्वारा शत्रुओं के वीर पुत्रों को मारे। वह गोधन के लिए विख्यात हुआ है और स्वयं सब समझ सकता है। बृहस्पति जिस यजमान को सखा कहकर ग्रहण करते हैं, उसका पुत्र और पौत्र भी समृद्धि प्राप्त करता है।

सिन्धुर्न क्षोदः शिमीवाँ ऋघायतो वृषेव वध्रींरभि वष्ट्योजसा।
अग्नेरिव प्रसितिर्नाह वर्तवे यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ३ ॥

सिन्धुः । न । क्षोदः । शिमीऽवान् । ऋघायतः । वृषाऽइव ।
वध्रीन् । अभि । वष्टि । ओजसा । अग्नेःऽइव । प्रऽसितिः । न । अह ।
वर्तवे । यम्ऽयम् । युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ३ ॥

सिन्धुः स्यन्दनशीलानदीक्षोदोन क्षुद्यमानंकूलंयथाभिनत्तितथा शिमीवान् शिमीतिकर्मनाम ब्रह्मणस्पतेःपरिचरणात्मनाकर्मणायुक्तोयजमानः ऋघायतोहिंसतःशत्रून् ओजसाबलेनअभिवष्टि हन्तुमभितःकामयते वशकान्तौ इदमपरंनिदर्शनम् वृषेववध्रीन् वध्रयोनिष्पिष्टमुष्कानिर्वीर्याबलीवर्दाः तान् यथावृषासेचनसमर्थः सवीर्योवृषभोभिभवति तद्वच्छत्रूनभिभवतीत्यर्थः अपिचासौअग्नेरिवप्रसितिः प्रसीयतेबध्यतेनयेतिप्रसितिर्ज्वाला षिञ्बन्धने करणेक्तिन् यथा अग्नेर्ज्वालाअप्रतिहतप्रसराएवमपिनवर्तवेवारयितुंनिवर्तयितुंवानैवशक्यते अहशब्दोवधारणे वृणोतेरन्तर्भावितण्यर्थाद् वर्ततेर्वातुमर्थेतवेन्प्रत्ययः अन्यद्गतम् ॥ ३ ॥

३. जैसे नदी तट को तोड़ती है, साँड़ जैसे बैलों को पराजित करता है, वैसे ही बृहस्पति की सेवा करनेवाला यजमान अपनी शक्ति से शत्रुओं को पराभूत करता है। जैसे अग्नि-शिखा का निवारण नहीं किया जाता, वैसे ही ब्रह्मणस्पति जिस यजमान को सखा कहकर ग्रहण करते हैं, उसका भी निवारण नहीं किया जा सकता।

तस्मा अर्षन्ति दिव्या असश्चतः स सत्वभिः प्रथमो गोषु गच्छति।
अनिभृष्टतविषिर्हन्त्योजसा यंयं युजं कृणुते ब्रह्मणस्पतिः ॥ ४ ॥

तस्मै । अर्षन्ति । दिव्याः । असश्चतः । सः । सत्वऽभिः । प्रथमः ।
गोषु । गच्छति । अनिभृष्टऽतविषिः । हन्ति । ओजसा । यम्ऽयम् ।
युजम् । कृणुते । ब्रह्मणः । पतिः ॥ ४ ॥

तस्मैयजमानायदिव्यादिविभवावृष्टिलक्षणाः आपः असश्चतः असज्यमानाः अनिरुद्धाः सत्यः अर्षंतिगच्छन्ति प्राप्नुवन्ति अर्तेर्लेटिरूपम् तथासयजमानःसत्वभिः सत्वानःसाधकाःपरिचारकाः तैः सहितः प्रथमोन्येभ्योयजमानेभ्यः पूर्वभावीसन् गोषुगच्छति गवादिधनंप्राप्नोतीत्यर्थः किञ्च अनिभृष्टतविषिः तविषीतिबलनाम अनिभृष्टापरैरबाधितातविषीबलंयस्यतादृशः सन् ओजसाबलेनहन्तिशत्रून् ॥ ४ ॥

४. जिस यजमान को बृहस्पति सखा कहकर ग्रहण करते हैं, उसके पास, अप्रतिहत निर्झरिणी होकर, स्वर्गीय जल आता है। परिचर्या-

कारियों में भी वही सबसे पहले गोधन प्राप्त करता है। उसका बल अनिवार्य है। वह बल-द्वारा शत्रुओं का विनाश करता है।

तस्मा॒इद्विश्वे॒धुनयन्त॒सिन्ध॒वोऽच्छि॑द्रा॒शर्म॑दधिरे॒पु॒रूणि॑।
दे॒वानां॑सु॒म्ने॒सु॒भग॒:सएध॑ते॒यंयं॒युजं॑कृणु॒तेब्रह्म॑ण॒स्पति॑:॥ ५ ॥ ४ ॥

तस्मै॑। इत्। विश्वे॑। धु॒न॒य॒न्त॒। सिन्ध॑वः। अच्छि॑द्रा। शर्म॑।
द॒धि॒रे॒। पु॒रूणि॑। दे॒वाना॑म्। सु॒म्ने। सु॒ऽभग॑ः। सः। ए॒ध॒ते॒।
यम्ऽयम्। यु॒जम्। कृ॒णु॒ते। ब्रह्म॑णः। पति॑ः॥ ५ ॥ ४ ॥

तस्माइत् तस्माएवयजमानायविश्वेसिन्धवः सर्वाःस्यन्दनशीलानद्यः धुनयन्त चलयन्ति एतदभीष्टफलसिद्ध्यर्थंप्रवहन्तीत्यर्थः तथाअच्छिद्राअच्छिद्राणि छिद्ररहितानिसन्ततानि पुरूणिबहूनिशर्मशर्माणिसुखानिदधिरे तस्माएवधार्यन्ते यद्वा शर्मेतिगृहनाम छिद्ररहितानिबहूनि सदनानिधार्यन्ते सयजमानः सुभगः शोभनधनः देवानांसुम्ने देवैःप्रत्तेसुखेवर्तमानःसन्एधते वर्धते शिष्टंस्पष्टम् ॥ ५ ॥

५. जिस यजमान को सखा रूप से ब्रह्मणस्पति ग्रहण करते हैं, उसकी ओर सारी नदियाँ प्रवाहित होती हैं। वह सदा नानाविध सुख का उपभोग करता है। वह सौभाग्यशाली है। वह देवों-द्वारा प्रदत्त सुख तथा समृद्धि पाता है।

॥ इतिद्वितीयस्यसप्तमेचतुर्थोवर्गः ॥ ४ ॥

ऋजुरितिचतुर्ऋचंचतुर्थंसूक्तं गृत्समदस्यार्षंजागतंब्राह्मणस्पत्यम् तथाचानुक्रान्तम्-ऋजुश्चतुष्कमिति गतोविनियोगः।

ऋ॒जुरिच्छंसो॑व॒नव॑द्वनुष्य॒तोदे॑व॒यन्निददे॑वयन्तम॒भ्य॑सत्।
सु॒प्रा॒वीरिद्व॑नवत्पृ॒त्सुदु॒ष्टरं॒यज्वेदय॑ज्यो॒र्विभ॑जाति॒भोज॑नम्॥ १ ॥

ऋ॒जुः। इत्। शंसः॑। व॒न॒व॒त्। व॒नु॒ष्य॒तः। दे॒व॒ऽयन्। इत्।
अदे॑वऽयन्तम्। अ॒भि। अ॒स॒त्। सु॒प्र॒ऽअ॒वीः। इत्। व॒न॒व॒त्। पृ॒त्ऽसु।
दु॒स्तर॑म्। यज्वा॑। इत्। अय॑ज्योः। वि। भ॒जा॒ति॒। भोज॑नम्॥ १ ॥

ऋजुरितिआर्जवयुक्तएव यद्वा ऋजतिःप्रसाधनकर्मा स्तोत्राणांप्रसाधकएवशंसः ब्रह्मणस्पतेःस्तोता वनुष्यतोहिंसतः शत्रून्वनवत् वनुयात् हिंस्यात् वनोतेर्हन्तिकर्मणएतद्रूपम् यथा देवयन्नित् देवंदानादिगुणयुक्तंब्रह्मणस्पतिमात्मनइच्छन्नेव अदेवयन्तं तद्विपरीतंपुरुषंअभ्यसत्

अभिभवेत् अस्तेर्लेट्यचेतद्रूपम् तथासुप्रावीरित् अवतेस्तृप्त्यर्थादौणादिकईकारप्रत्ययः सुष्ठुप्रक-र्षेणब्रह्मणस्पतेस्तर्पयितैव पृत्सुपृतनासुसङ्ग्रामेषुदुस्तरंतरीतुमशक्यंवनवद्विंहिंस्याद् तथायज्वेद् ब्रह्मणस्पतिंहविषाइष्टवानेव अयज्योः अयज्वनः भोजनंभोगसाधनंविभजाति विशेषेणभजेत इत्यर्थः ॥ १ ॥

१. ब्रह्मणस्पति का सरल स्तोता शत्रुओं का विनाश कर डाले। देवाकांक्षी अदेवाकांक्षी को पराभूत कर डाले। जो बृहस्पति को अच्छी तरह तृप्त करता है, वह युद्ध में दुर्धर्ष शत्रुओं का विनाश करता है। यज्ञपरायण अयाज्ञिक के धन का उपभोग कर सके।

यजंस्ववीरप्रविंहिमनायतोभद्रंमनंःकृणुष्ववृत्रतूर्ये।
हविष्कृंणुष्वसुभगोयथासंसिब्रह्मंणस्पतेरवआवृंणीमहे ॥ २ ॥

यजंस्व। वीर। प्र। विहि। मनायतः। भद्रम्। मनंः। कृणुष्व।
वृत्रऽतूर्ये। हविः। कृणुष्व। सुऽभगंः। यथा। असंसि। ब्रह्मंणः।
पतेः। अवंः। आ। वृणीमहे ॥ २ ॥

ऋषिरात्मीयंपुरुषंशास्ति हेवीर विशेषेण स्तुतीनांप्रेरक सखे यजस्व ब्रह्मणस्पतिं स्तुत्यापूज-य मनायतः मनइवशीघ्रंप्रवर्तमानान्हिंसकान् यद्वा अभिमन्यमानान्शत्रून्प्रति प्रविहि प्रकर्षे-णयुद्धार्थंगच्छ वीगत्यादिषु छान्दसोह्रस्वः वृत्रतूर्ये वृत्राणामावरकाणांशत्रूणांहिंसाहेतुभूतेसङ्ग्रा-मेभद्रंकल्याणंधाष्टर्योपेतंमनः कृणुष्वकुरुष्व ब्रह्मणस्पतेरनुग्रहात्त्वैवजयोभविष्यति तथाब्रह्म-णस्पतयेहविश्चरुपुरोडाशादिकं कृणुष्वकुरु यथात्वंसुभगः शोभनधनोअससिभवेः अस्तेर्लेटच-डागमः ब्रह्मणस्पतेर्योगेनत्वंशोभनधनोभविष्यसीतियावत् अपिच वयंब्रह्मणस्पतेरवोरक्षणंआ आभिमुख्येनवृणीमहे प्रार्थयामहे ॥ २ ॥

२. वीर, तुम ब्रह्मणस्पति की स्तुति करो। अभिमानी शत्रुओं के विरुद्ध यात्रा करो। शत्रुओं के साथ संग्राम में मन को दृढ़ करो। ब्रह्मणस्पति के लिए हव्य तैयार करो। वैसा करने पर तुम उत्तम धन पाओगे। हम ब्रह्मणस्पति के पास से रक्षा चाहते हैं।

सइज्जनेंनसविशासजन्मंनासपुत्रैर्वाजंभरतेधनानृभिः।
देवानांयःपितरंमाविवांसतिश्रद्धामंनाहविषाब्रह्मंणस्पतिम् ॥ ३॥

सः। इत्। जनेंन। सः। विशा। सः। जन्मंना। सः। पुत्रैः। वाजंम्।
भरते। धनां। नृऽभिः। देवानांम्। यः। पितरंम्। आऽविवांसति।
श्रद्धाऽमंनाः। हविषां। ब्रह्मंणः। पतिम् ॥ ३ ॥

योयजमानःश्रद्धामनाः श्रद्धामनसियस्यतादृशःसन् देवानांपितरं पालयितारं ब्रह्मणस्पतिंहविषाचरुपुरोडाशादिना आविवासति परिचरति विवासतिःपरिचरणकर्मा सइत् सएवयजमानः जनेनजातेनसर्वेणलोकेनवाजमन्नंभरतेबिभर्ति संभरतिवा सएवविशाप्रजया आत्मीयेनबन्धुजनेन वाजंभरते सएवजन्मना सएवपुत्रैरात्मीयैरपत्यैर्वाजंभरते तथानृभिर्नेतृभिरन्यैः परिचारकैः धनाधनानिभरते बिभर्तिसंपादयतिवा ब्रह्मणस्पतिमिष्टवतोयजमानस्यसर्वेतोजनाअन्नधनयोः साधकाभवन्तीतियावत् ॥ ३ ॥

३. जो यजमान श्रद्धावान् होकर देवों के पिता ब्रह्मणस्पति की हव्य-द्वारा परिचर्या करता है, वह अपने मनुष्य और आत्मीय, अपने पुत्र और अन्यान्य परिचारकों के साथ अन्न और धन प्राप्त करता है।

योअस्मैहव्यैर्घृतवद्भिरविधत्प्रतंप्राचानयतिब्रह्मणस्पतिः।
उरुष्यतीमंहसोरक्षतीरिषोंऽहोश्चिदस्माउरुचक्रिरद्भुतः॥ ४॥५॥

यः। अस्मै। हव्यैः। घृतवत्ऽभिः। अविधत्। प्र। तम्। प्राचा। नयति। ब्रह्मणः। पतिः। उरुष्यति। ईम्। अंहसः। रक्षति। रिषः। अंहोः। चित्। अस्मै। उरुऽचक्रिः। अद्भुतः॥ ४॥ ५॥

योयजमानः अस्मैब्रह्मणस्पतये क्रियाग्रहणंकर्तव्यमितिकर्मणःसंप्रदानत्वाच्चतुर्थी इमंब्रह्मणस्पतिंघृतवद्भिः उपस्तरणाभिघारणात्मकेनाज्येनोपेतैर्हव्यैर्हविर्भिः अविधत् परिचरति विधविधाने तौदादिकः अयंपरिचरणकर्मसुपठितः तंयजमानं ब्रह्मणस्पतिः प्राचाप्राचीनेनऋजुनामार्गेण प्रणयति प्रकृष्टंफलंप्रापयति अपिचईमेनं अंहसःपापात् उरुष्यतिरक्षति उरुष्यतीरक्षाकर्मेतियास्कः। तथारिषोहिंसकादेनंरक्षति अंहोश्चित् अवृत्तेर्दारिद्र्यात् यद्वा आगत्यहंतुरपिरक्षति अपिचास्मै यजमानायअद्भुतः महन्नामैतत् आचार्यभूतोमहान्ब्रह्मणस्पतिः उरुचक्रिः उरोर्विस्तीर्णस्योपकारस्यकर्ताभवति॥ ४ ॥

४. जो ब्रह्मणस्पति की परिचर्या घृत-युक्त हव्य से करता है, उसे ब्रह्मणस्पति प्राचीन सरल मार्ग से ले जाते हैं। उसे वे पाप, शत्रु और दरिद्रता से बचाते हैं। आश्चर्यरूप ब्रह्मणस्पति उसका महान् उपकार करते हैं।

॥ इतिद्वितीयस्यसप्तमेपञ्चमोवर्गः॥ ५॥

इमागिरइतिसप्तदशर्चंपञ्चमंसूक्तम् गृत्समदपुत्रस्यकूर्मस्यार्षं गृत्समदस्यैववात्रैष्टुभमादित्यदेवताकम् तथाचानुक्रान्तम्—इमागिररुयूनाकूर्मोगार्त्समदोहिवादित्यमिति सूक्तविनियोगोलैङ्गिकः आदित्यदेवताकेपशौपुरोडाशस्यइमागिरइत्येकानुवाक्या अग्नीषोमावितिखण्डेसूत्रितम्—इमागिरआदित्येभ्योघृतस्नूस्तआदित्यासउरवोगभीराइति।

सैषासूक्तेप्रथमा—

इमागिरंआदित्येभ्योघृतस्नूःसनाद्राजभ्योजुह्वाजुहोमि ।
शृणोतुमित्रोअर्यमाभगोनस्तुविजातोवरुणोदक्षोअंशः ॥ १ ॥

इमाः । गिरः । आदित्येभ्यः । घृतऽस्नूः । सनात् । राजऽभ्यः ।
जुह्वा । जुहोमि । शृणोतु । मित्रः । अर्यमा । भगः । नः । तुविऽजातः ।
वरुणः । दक्षः । अंशः ॥ १ ॥

आदित्येभ्यः अदितेःपुत्रेभ्यः राजभ्यःराजमानेभ्यःईश्वरेभ्योवामित्रादिभ्यः घृतस्नूः घृतप्रस्राविणीः घृतंक्षरन्तीः इमागिरः स्तुतिलक्षणावाचः सनात् सर्वदाजुह्वा वाङ्मैतत् वागिन्द्रियेण जुहोमि प्रयच्छामि करोमीतियावत् यद्वा जुहूस्थानीयत्वेनघृतंक्षरन्ति वाग्रूपाणिहवींषिजुहोमि आदित्यानुद्दिश्यत्यजामि मन्त्राणांपयोघृतादिक्षरणेहेतुत्वंच यद्दचोधीतेपयसःकुल्याअस्येत्यादिनातैत्तिरीयेस्पष्टमाम्नातम् नोस्मदीयास्तागिरः मित्रादयः प्रत्येकंशृणोतु तेचतैत्तिरीयेअष्टौपुत्रासोअदितेरित्युपक्रम्यस्पष्टमनुक्रान्ताः मित्रश्चवरुणश्चधाताचार्यमाचअंशुश्चभगश्चइन्द्रश्चविवस्वांश्चेत्येतइति मित्रःप्रमीतेस्त्रायकः यद्वा सर्वेषांस्निग्धः अरीन्यच्छति नियच्छतीत्यर्यमाभगोभजनीयोदेवः तुविजातः तुवीतिबहुनाम बहुषुदेशेष्वनुग्रहार्थंप्रादुर्भूतः वरुणविशेषणमेतत्पापस्यनिवारणाद्वरुणः दक्षःसमर्थः एतच्चांशस्यविशेषणम् ॥ १ ॥

१. मैं जुहू-द्वारा, सर्वदा शोभन आदित्यों को लक्ष्य कर घृतस्राविणी स्तुति अर्पण करता हूँ। मित्र, अर्यमा, भग, बहुव्यापक वरुण, दक्ष और अंश मेरी स्तुति सुनें।

पूर्वोक्तएवपशौ इमंस्तोममित्येषावपायागस्ययाज्या सूत्रितंच—इमंस्तोमंसक्रतवोमेअद्यतिस्रोभूमीर्धारयन्त्रीँरुतद्यूनिति ।

सैषासूक्तेद्वितीया—

इमंस्तोमंसक्रंतवोमेअद्यमित्रोअर्यमावरुणोजुषन्त ।
आदित्यासःशुचयोधारपूताअवृजिनाअनवद्याअरिष्टाः ॥ २ ॥

इमम् । स्तोमम् । सऽक्रंतवः । मे । अद्य । मित्रः । अर्यमा । वरुणः ।
जुषन्त । आदित्यासः । शुचयः । धारऽपूताः । अवृजिनाः ।
अनवद्याः । अरिष्टाः ॥ २ ॥

---

१ तै० आ० अष्टमप्रपाठके । २ तै० आ० प्रथमप्रपाठके

इमंमेस्मदीयंस्तोमंस्तोत्रंसक्रतवः समानकर्माणःसमानप्रज्ञावामित्रादयः अद्येदानींजुषन्त जुषन्ताम् सेवन्ताम् कीदृशास्तेआदित्यासः अदितेःपुत्राःशुचयोदीप्यमानाः धारपूताः उदकधाराभिःक्षालिताइवपूताः निर्मलाइत्यर्थः अवृजिनाः वृजीवर्जने अवर्जितारःसर्वानुग्राहकाइत्यर्थः अनवद्याः अवद्येनगर्ह्येणपापेनरहिताः अरिष्टाः केनाप्यहिंसिताः ॥ २ ॥

२. दीप्तिमान्, वृष्टिपूत, अनुग्रहपरायण, अनिन्दनीय, हिंसा-रहित और एकविध कर्मकर्त्ता मित्र, अर्यमा और वरुणनामक आदित्य आज मेरे इस स्तोत्र का उपभोग करें ।

तस्मिन्नेवपशौतआदित्यासइतिहविषोनुवाक्या सूत्रंतुपूर्वमेवोदाहृतम् ।

तआदित्यासउरवोगभीराअदब्धासोदिप्संतोभूर्यक्षाः ।
अन्तःपश्यन्तिवृजिनोतसाधुसर्वंराजभ्यःपरमाचिदन्ति ॥ ३ ॥

ते । आदित्यासः । उरवः । गभीराः । अदब्धासः । दिप्संन्तः ।
भूरिऽअक्षाः । अन्तरिति । पश्यन्ति । वृजिना । उत । साधु ।
सर्वम् । राजऽभ्यः । परमा । चित् । अन्ति ॥ ३ ॥

तआदित्यासः अदितेःपुत्राः उरवोमहान्तः गभीराः गांभीर्योपेताः अदब्धासः शत्रुभिरहिंसिताःसन्तः दिप्सन्तः शत्रून्दंभितुं हिंसितुमिच्छन्तः दंभुदंभे अस्मादिच्छासनि सनीवन्तर्धेतीडभावपक्षेदंभइच्चेतीकारः दंभेर्हल्ग्रहणस्यजातिवाचकत्वात्सिद्धमितिसनःकित्त्वे अनुनासिकलोपः तथाभूर्यक्षाः भूरीणिबहून्यक्षीणिचक्षूंषियेषांतेतथोक्ताः बहुतेजसोवा बहुव्रीहौसक्थ्यक्ष्णोरितिषच्समासान्तः एवंभूताआदित्याः अन्तः मध्येप्राणिनांहृदिमेरकतयावर्तमानाःसन्तः वृजिनावृजिनानिपापानि उत अपिच साधुसाधूनिपुण्यानिच प्राणिभिःकृतानिपश्यन्ति जानन्ति परमाचित् परमाणिदूरदेशावस्थितान्यपिसर्वंसर्वाणिदृश्यमानानि राजभ्यः राज्ञामीश्वराणामादित्यानां अन्ति अन्तिकेसमीपेवर्ततइतिशेषः कादिलोपोबहुलमित्यन्तिकशब्दस्य कादिलोपः ॥ ३ ॥

३. महान्, गंभीर, दुर्दमनीय, दमनकारी और बहुवृष्टिवाले आदित्य-गण प्राणियों का अन्तःकरण देखते हैं । दूर-देश-स्थित पदार्थ भी आदित्यों के पास निकट हैं ।

साग्निचित्येक्रतौदीक्षणीयायां आदित्ययागस्यधारयन्तइत्यादिकेद्वेयाज्यानुवाक्ये अतएवभुवद्वद्भुवनपतिविशेषणविशिष्टादित्ययागेपि तथाचदीक्षणीयायामितिखण्डेसूत्रितम्—धारयन्तआदित्यासोजगत्स्थाइतिद्वेएतेएवभुवद्वद्भ्योभुवनपतिभ्योवेति ।

तयोराद्यासूक्तेचतुर्थी—

धारयन्तआदित्यासोजगत्स्थादेवाविश्वस्यभुवनस्यगोपाः ।
दीर्घाधियोरक्षमाणाअसुर्यमृतावानश्चयमानाऋणानि ॥ ४ ॥

धारयन्तः । आदित्यासः । जगत् । स्थाः । देवाः । विश्वस्य ।
भुवनस्य । गोपाः । दीर्घऽधियः । रक्षमाणाः । असुर्यम् ।
ऋतऽवानः । चयमानाः । ऋणानि ॥ ४ ॥

जगज्जङ्गमं स्थाः स्थावरंच तिष्ठतेःकर्तर्यसुन् एतदुभयविधंभूतजातं धारयन्तः अवस्थापयन्तः देवाः दानादिगुणयुक्ताः विश्वस्यभुवनस्यसर्वस्यलोकस्यगोपाः गोपयितारोरक्षकाः दीर्घाधियः दीर्घाणिधियःकर्माणिज्ञानानिवायेषांताट्टशाः अन्येषामपिदृश्यतइतिपूर्वपदस्यदीर्घः असुर्यं असवःप्राणाः तेनचतद्धेतुभूताः आपोलक्ष्यन्ते अपांतद्धेतुत्वंच छान्दोग्येस्पष्टमाम्नातम्—आपोमयःप्राणइति असुमुदकंरातिददातीत्यसुरोमेघः तत्रभवं मेघान्तर्वर्तमानमुदकंरक्षमाणाः तत्तत्कालेवृष्ट्युत्पादनायरक्षन्तः असुरशब्दाद्भवेछन्दसीतियत् ऋतावानः सत्यवन्तो यज्ञवन्तोवा छन्दसीवनिपाविितिमत्वर्थीयोवनिप् पूर्ववद्दीर्घः ऋणानिस्तोतृभिः अन्येभ्यः प्रदेयानिहविर्द्रव्याणिचयमानाः अपगमयन्तः चयगतौ भौवादिकोनुदात्तेत् एवंगुणविशिष्टामहानुभावाः आदित्यासः आदित्याः अस्मदधीनाभवन्त्वितिशेषः ॥ ४ ॥

४. आदित्यगण स्थावर और जंगम को अवस्थापित करते और सारे भुवनों की रक्षा करते हैं। वे बहुयज्ञवाले और असूर्य अथवा प्राण के हेतुभूत जल की रक्षा करते हैं। वे सत्यवाले और ऋण-परिशोधक हैं।

अथपञ्चमी—

विद्यामादित्याअवसोवोअस्ययदर्यमन्भयआचिन्मयोभु ।
युष्माकंमित्रावरुणाप्रणीतौपरिश्वभ्रेवदुरितानिवृज्याम् ॥५॥६॥

विद्याम् । आदित्याः । अवसः । वः । अस्य । यत् । अर्यमन् । भये ।
आ । चित् । मयःऽभु । युष्माकम् । मित्रावरुणा । प्रऽनीतौ । परि ।
श्वभ्राऽइव । दुःऽइतानि । वृज्याम् ॥ ५ ॥ ६ ॥

हेआदित्याः अदितेःपुत्राः वोयुष्माकं अस्यावसः कर्मणिषष्ठी इदंरक्षणं विद्याम लभेम भयेराक्षसादिभ्यः आआगतेसति यद्युष्मदीयंरक्षणम् चिच्छब्दश्चार्थे मयोभु मयसःसुखस्यभावयितृच तदिदंलभेमेत्यन्वयः हेअर्यमन् हे मित्रावरुणौ युष्माकंप्रणीतौ अस्मद्विषये प्रकृष्टेनयनेसति श्वभ्रेवश्वभ्राणीवस्थातुमयोग्यानिगर्तवन्तिस्थलानीवदुरितानिपापानिपरिवृज्यां परित्यजेयं वृजीवर्जने बहुलंछन्दसीतिविकरणस्यलुक् ॥ ५ ॥

५. आदित्यगण, हम तुम्हारा आश्रय प्राप्त करें। भय आने पर तुम्हारा आश्रय सुख प्रदान करता है। हे अर्यमा, मित्र और वरुण, तुम्हारा अनुसरण करके मैं गड्ढों की तरह पापों को दूर कर दूँ।

सुगोहिवोअर्यमन्मित्रपन्थाअनृक्षरोवरुणसाधुरस्ति ।
तेनादित्याअधिवोचतानोयच्छतानोदुष्परिहन्तुशर्म ॥ ६ ॥

सुऽगः । हि । वः । अर्यमन् । मित्र । पन्थाः । अनृक्षरः । वरुण । साधुः । अस्ति । तेन । आदित्याः । अधि । वोचत । नः । यच्छत । नः । दुःऽपरिहन्तु । शर्म ॥ ६ ॥

हेअर्यमन् मित्र वरुण वोयुष्माकंसुगः सुखेनगन्तव्यः अनृक्षरः ऋक्षरःकण्टकऋच्छतेरिति तद्रहितः साधुः साधकः शोभनोवा एवंगुणविशिष्टः पन्थामार्गोस्तिहि विद्यतेखलु अतस्तेपथाअस्मान् शोभनं नयतेतिशेषः हेआदित्याः नोस्माकं अधिवोचत अधिवचनं पक्षपातेनवचनं कुरुत अपिनोस्मभ्यंदुष्परिहन्तु दुःखेनपरिहन्तुं विनाशयितुमशक्यंशर्मसुखंयच्छत दत्त दाण्दाने शपिपाघ्रेत्यादिनायच्छादेशः ॥ ६ ॥

६. अर्यमा, मित्र और वरुण, तुम्हारा मार्ग सुगम, कण्टक-रहित और सुन्दर है। आदित्यगण, उसी मार्ग से तुम हमें ले जाओ, मीठे वचन बोलो और अविनाशी सुख दो।

अथसप्तमी—

पिपर्तुनोअदितीराजपुत्रातिद्वेषांस्यर्यमासुगेभिः ।
बृहन्मित्रस्यवरुणस्यशर्मोपस्यामपुरुवीराअरिष्टाः ॥ ७ ॥

पिपर्तु । नः । अदितिः । राजऽपुत्रा । अति । द्वेषांसि । अर्यमा । सुऽगेभिः । बृहत् । मित्रस्य । वरुणस्य । शर्म । उप । स्याम । पुरुऽवीराः । अरिष्टाः ॥ ७ ॥

राजपुत्रा राजानोराजमानामित्रादयःपुत्रायस्याः तादृशी अदितिरदीना अखण्डनीयावादेवीनोस्मान् द्वेषांसिद्वेष्टृणिरक्षांसि अतिपिपर्तु अतिपारयतु अतिक्रम्यतद्रहितंदेशंप्रापयत्वित्यर्थः अर्यमाचसुगेभिः सुष्ठुगन्तव्यैर्मार्गैरस्मान्पारयतु अपिचवयंपुरुवीराः बहुभिःवीरैःपुत्रादिभिरुपेताःअरिष्टाः केनाप्यहिंसिताश्चसन्तः मित्रस्यवरुणस्यचबृहत्परिवृढंशर्मसुखंउपस्याम उपगताभवेम ॥ ७ ॥

७. राजमाता अदिति शत्रुओं को लाँघकर हमें दूसरे देश में ले जायें। अर्यमा हमें सुगम मार्ग में ले जायें। हम बहुवीर-युक्त और अहिंसक होकर मित्र और वरुण का सुख प्राप्त करें।

पूर्वोक्तेपशौतिस्रोभूमीरितिपुरोडाशस्ययाज्या सूत्रंपूर्वमेवोदाहृतम्।

तिस्रोभूमीर्धारयन्त्रीँरुतद्यून्त्रीणिव्रताविदथेअन्तरेषाम्।
ऋतेनादित्यामहिवोमहित्वंतदर्यमन्वरुणमित्रचारु ॥ ८ ॥

तिस्रः। भूमीः। धारयन्। त्रीन्। उत। द्यून्। त्रीणि। व्रता।
विदथे। अन्तः। एषाम्। ऋतेन। आदित्याः। महि। वः।
महिऽत्वम्। तत्। अर्यमन्। वरुण। मित्र। चारु ॥ ८ ॥

तिस्रोभूमीः अत्रभूमिशब्दोलोकत्रयेवर्तते योद्वितीयस्यांतृतीयस्यांपृथिव्यामित्यत्रयथा पृथिवीशब्दः भूम्यन्तरिक्षस्वर्गांस्त्रीन्लोकान्आदित्याः धारयन् वृष्टिप्रदानादिनाधारयन्ति उत अपिच द्यून्दीप्तान्ततउपरितनान्महरादिकानपित्रीन् लोकान्धारयन्ति यद्वा दीप्तान्अग्निंवायुंसूर्यं चधारयन्ति अपिचैषामादित्यानांविदथेयज्ञेअन्तर्मध्येत्रीणिव्रतासवनत्रयनिष्पाद्यानित्रीणिकर्माणिसन्ति यद्वा एषांलोकानामंतर्मध्येविदथेयज्ञेनिमित्तभूतेसति एषामादित्यानांत्रीणिकर्माणिरसादानधारणविसर्जनलक्षणानिसन्ति उत्तरोर्धर्चःप्रत्यक्षकृतः हेआदित्याः ऋतेनसत्येनयज्ञेन वामहिमहत्प्रभूतंवोयुष्माकंमहित्वंमहत्त्वंयन्महाभाग्यं हेअर्यमन् वरुण मित्र तन्महाभाग्यंचारुशोभनंसर्वोत्कृष्टमित्यर्थः॥ ८ ॥

८. ये पृथिवी, अन्तरिक्ष और स्वर्ग तथा मर्त्य, जन और सत्य-लोकों को धारण करते हैं। इनके यज्ञ में तीन व्रत (तीन सवन) हैं। आदित्यगण, यज्ञ द्वारा तुम्हारी महिमा श्रेष्ठ हुई है। अर्यमा, मित्र और वरुण तुम्हारा वह महत्त्व सुन्दर है।

अथनवमी—

त्रीरोचनादिव्याधारयन्तहिरण्ययाःशुचयोधारपूताः।
अस्वमजोअनिमिषाअदब्धाउरुशंसाऋजवेमर्त्याय ॥ ९ ॥

त्री । रोचना । दिव्या । धारयन्त । हिरण्ययाः । शुचयः ।
धारऽपूताः । अस्वप्नऽजः । अनिऽमिषाः । अदब्धाः । उरुऽशंसाः ।
ऋजवे । मर्त्याय ॥ ९ ॥

त्रीरोचनात्रीणिरोचनानिरोचमानान्यग्न्यादीनितेजांसि दिव्यादिव्यानिदिविभवानिधारयन्त आदित्याअवस्थापयन् किमर्थं ऋजवेऋजीकायउपार्जकायस्तोत्राणां मर्त्यायमनुष्यायभोगसिद्ध्यर्थमितियावत् कीदृशाआदित्याः हिरण्ययाः हिरण्मयाः हिरण्यालंकृतसर्वाङ्गाः यद्वा हितरमणीयवेषाः शुचयोदीप्यमानाः धारपूताः उदकधारयाक्षालिताइवनिर्मलाः अस्वप्नजः असञ्जातस्वप्नाः सुपांसुलुगितिजसःसुः अपरआह अस्वप्नजः अस्वपन्तः विगतनिद्राः स्वपितृषोर्नजिङ्गितिनजिङ्प्रत्ययइति तदेतत्पदकारस्यानभिमतम् अनिमिषाः निमेषरहिताः अदब्धाः असुरादिभिरहिंसिताः उरुशंसाः उरुभिर्बहुभिःशंसनीयाः स्तोतव्याः एवंगुणविशिष्टाअधारयन्तेत्यन्वयः ॥ ९ ॥

९. स्वर्णालङ्कार-भूषित, दीप्तिमान्, वृष्टिपूत, निद्रारहित, अनिमेषमयम, हिंसारहित और सबके स्तुतियोग्य आदित्यगण सरल-स्वभाव संसार के लिए तीन प्रकार (अग्नि, वायु और सूर्य) के स्वर्गीय तेज धारण करते हैं।

त्वंविश्वेषांवरुणासिराजायेचदेवाअसुरयेचमर्ताः ।
शतंनोरास्वशरदोविचक्षेऽश्यामायूंषिसुधितानिपूर्वा ॥ १० ॥ ७ ॥

त्वम् । विश्वेषाम् । वरुण । असि । राजा । ये । च । देवाः । असुर ।
ये । च । मर्ताः । शतम् । नः । रास्व । शरदः । विऽचक्षे । अश्याम ।
आयूंषि । सुऽधितानि । पूर्वा ॥ १० ॥ ७ ॥

हेअसुर शत्रूणांक्षेपकवरुण त्वंविश्वेषांसर्वेषांराजासि केषां येचदेवाःदेवजनाः येचमर्तामरणधर्माणोमनुष्याः तेषामित्यर्थः अतस्त्वंनोस्मभ्यंशतंशरदः शतसंख्याकान्संवत्सरान्विचक्षे विशेषेणदर्शनायरास्वप्रयच्छ रादाने व्यत्ययेनात्मनेपदम् वयंचपूर्वापूर्वैःदेवैः सुधितानिसुष्ठुहितानिशतसंवत्सरलक्षणान्यायूंषिअश्याम व्याप्नुयाम सुधितवसुधितनेमधितधिष्वधिषीयचेतिनिपात्यते गतिरनन्तरइतिगतेःप्रकृतिस्वरत्वम् सुपांसुलुगितितृतीयायाडादेशः ॥ १० ॥

१०. असुर वरुण, तुम देवता हो या मनुष्य, सबके राजा हो। हमें सौ वर्ष देखने दो, ताकि हम पूर्वजों की उपभुक्त आयु को प्राप्त कर सकें।

आदित्यदेवताकेपशौनदक्षिणेत्येषाहविषोयाज्या सूत्रितश्च—तिस्रोभूमीर्धारयन्त्रींरुत-घून्नदक्षिणाविचिकितेनसव्येति ।

नदक्षिणाविचिकितेनसव्यानप्राचीनमादित्यानोतपश्चा।
पाक्याचिद्वसवोधीर्याचिद्युष्मानीतोअभयंज्योतिरश्याम्॥११॥

न। दक्षिणा। वि। चिकिते। न। सव्या। न। प्राचीनम्।
आदित्याः। न। उत। पश्चा। पाक्या। चित्। वसवः। धीर्या।
चित्। युष्माऽनीतः। अभयम्। ज्योतिः। अश्याम्॥ ११॥

हेआदित्याः दक्षिणादक्षिणोभागः नविचिकिते मयानविज्ञायते सव्यासव्योवामभागोपिनज्ञायते उभयत्रसुपांसुलुगितिसोराजादेशः तथाप्राचीनं पुरस्तादपिनज्ञायते विभाषाञ्चेरदिक्स्त्रियामितिस्वार्थेखः उतअपिच पश्चा पश्चात्पृष्ठभागेपिनज्ञायते नैशेनतमसाआवृतत्वात् आन्तरादज्ञानाद्वा पश्चपश्चाचच्छन्दसीतिनिपात्यते किंबहुना पाक्याचित् पाक्यःपक्वव्योपरिपक्वज्ञानोपि डुपचष्पाके ऋहलोर्ण्यत् तित्स्वरितः धीर्याचित् धीरेनेतव्यत्वेनभवोधीर्यःकातरः भवेछन्दसीतियत् कातरोपि उभयत्रसुपांसुलुगितिआकारः हेवसवोवासयितारआदित्याः युष्मानीतः युष्माभिर्नीतः शोभनेनमार्गेणप्रापितःसन् अभयं भयरहितं ज्योतिः सौरंतेजः आन्तरंवा ज्ञानात्मकं अश्यां प्राप्नुयाम्॥ ११॥

११. वास-प्रदाता आदित्यो, हम न तो दाहिने जानते, न बायें जानते, न सामने जानते और न पीछे जानते हैं। मैं अपरिपक्व-बुद्धि और अतीव कातर हूँ। मुझे तुम ले जाओगे, तो मैं निर्भय ज्योति को प्राप्त करूँगा।

योराजभ्यऋतनिभ्योददाशयंवर्धयन्तिपुष्टयश्चनित्याः।
सरेवान्यातिप्रथमोरथेनवसुदावाविदथेषुप्रशस्तः॥ १२॥

यः। राजऽभ्यः। ऋतनिऽभ्यः। ददाश। यम्। वर्धयन्ति। पुष्टयः।
च। नित्याः। सः। रेवान्। याति। प्रथमः। रथेन। वसुऽदावा।
विदथेषु। प्रऽशस्तः॥ १२॥

योयजमानः राजभ्योराजमानेभ्यः ऋतनिभ्यः ऋतस्ययज्ञस्यसत्यस्यवानेतृभ्यः आदित्येभ्योददाश चरुपुरोडाशादिकंददाति यंयजमानं पुष्टयः पोषकाः नित्याः शाश्वताः आदित्याश्चवर्धयन्ति सयजमानोरेवान् धनवान्प्रथमः प्रथितः प्रख्यातः वसुदावा वसूनांधनानां दातासन्प्रशस्तः सर्वैःप्रशस्यमानः विदथेषुवेद्येषुलब्धव्येषुगृहेषुरथेनवाहनेनयातिगच्छति॥ १२॥

१२. यज्ञ के नायक और राजा आदित्यों को जो हव्य प्रदान करता है, उनका नित्य अनुग्रह जिसकी पुष्टि करता है, वही व्यक्ति धनवान्, विख्यात, वदान्य और प्रशंसित होकर तथा रथ पर चढ़कर यज्ञस्थल में जाता है।

शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ १३ ॥

शुचिः । अपः । सुऽयवसाः । अदब्धः । उप । क्षेति । वृद्धऽवयाः ।
सुऽवीरः । नकिः । तम् । घ्नन्ति । अन्तितः । न । दूरात् । यः ।
आदित्यानाम् । भवति । प्रऽनीतौ ॥ १३ ॥

स यजमानः शुचिर्दीप्यमानः शुद्धो वा अदब्धः सपत्नैरबाधितः वृद्धवयाः प्रभूतान्नः सुवीरः शोभनपुत्रश्च सन् सूयवसाः शोभनसस्यान्यपः वृष्टिलक्षणान्युदकानि उपक्षेति उपनिवसति सर्वदा सुसस्यानामपां च समीपे निवसतीत्यर्थः तथा नकिर्नैव च तं घ्नन्ति हिंसन्ति अंतितो न अन्तिकात्समीपदेशाच्च दूराद्विप्रकृष्टाच्च देशादागता बाधकाः अन्तिकस्य तसिलादिलोपइतिलोपः यो यजमानः आदित्यानां अदितेः पुत्राणां मित्रादीनां प्रणीतौ प्रकृष्टेन नयने प्रापणे भवति वर्तते स इति पूर्वत्र संबन्धः ॥ १३ ॥

१३. वह दीप्तिमान्, हिंसा-रहित, प्रचुर-अन्नशाली और सुपुत्रवान् होकर उत्तम शस्यवाले जल के पास निवास करता है। जो आदित्यों का अनुसरण करता है, उसका दूर या निकट का शत्रु वध नहीं कर सकता।

अदिते मित्र वरुणोत मृळ यद्वो वयं चकृमा कच्चिदागः ।
उर्वश्यामभयं ज्योतिरिन्द्र मा नो दीर्घा अभि नशन्तमिस्राः ॥ १४ ॥

अदिते । मित्र । वरुण । उत । मृळ । यत् । वः । वयम् । चकृम ।
कत् । चित् । आगः । उरु । अश्याम् । अभयम् । ज्योतिः । इन्द्र ।
मा । नः । दीर्घाः । अभि । नशन् । तमिस्राः ॥ १४ ॥

उत अपि च हे अदिते मित्र वरुण आमन्त्रितं पूर्वमविद्यमानवदिति पूर्वपूर्वस्यामन्त्रितस्याविद्यमानवद्भावात्सर्वेषां षाष्ठिकमामन्त्रितस्येत्याद्युदात्तत्वम् यूयं प्रत्येकं मृळ अस्माकमुपरि दयां कुरु रक्षेत्यर्थः यद्वयं यद्यपि वयं वो युष्माकं कच्चित् किञ्चिदागोपराधं चकृम अकर्म तथापि मृळेत्यर्थः हे इन्द्र परमैश्वर्योपेतादित्य उरु विस्तीर्णं अभयं भयरहितं ज्योतिस्त्वदीयं प्रकाशं ज्ञानात्मकं वा अश्यां अहं प्राप्नुयाम् दीर्घा विस्तृतास्तमिस्रास्तमसा युक्ता निशाः ज्योत्स्नातमिस्राशृङ्गिणेतिनिपात्यते ता नोस्मान् माभिनशन् आभिमुख्येन व्याप्नुवन्तु ॥ १४ ॥

१४. अदिति, मित्र, वरुण, हम यदि तुम्हारे पास कोई अपराध करें, तो कृपा कर उसका मार्जन कर डालो। इन्द्र, हम विस्तीर्ण और निर्भय ज्योति प्राप्त कर सकें। अन्धकारमयी रजनी हमें छिपा न सके।

अथपञ्चदशी–

उभेअस्मैपीपयतःसमीचीदिवोवृष्टिंसुभगोनामपुष्यन् ।
उभाक्षयावाजयन्यातिपृत्सूभावर्धौभवतःसाधूअस्मै ॥ १५ ॥

उभे इति । अस्मै । पीपयतः । समीची इति सम्ऽईची ।
दिवः । वृष्टिम् । सुऽभगः । नाम । पुष्यन् । उभा । क्षयौ ।
आऽजयन् । याति । पृत्ऽसु । उभौ । अर्धौ । भवतः । साधू इति ।
अस्मै ॥ १५ ॥

यआदित्यानांभवतिप्रणीताविवितिव्यवहितोप्यनेनेदंशब्देनपरामृश्यते अस्मैयजमानायसमीची सङ्गच्छमानेउभेद्यावापृथिव्यौपीपयतः प्याययतः कामान्वर्धयतः प्यायीवृद्धौ अस्माण्यन्ताच्छान्दसोलुङ् व्यत्ययेनतसस्तामादेशाभावः धातोःपीभावश्च सचसुभगः शोभनधनः दिवोद्युलोकादागतांवृष्टिंपुष्यन्नवर्धयन्भवति नामेतिप्रसिद्धिर्द्योत्यते किञ्च पृत्सुपृतनासुसङ्ग्रामेषुआजयन्शत्रूनाभिमुख्येनाभिभवन् उभाक्षयाउभौनिवासौ क्षियंति निवसन्त्यस्मिन्निति क्षयोनिवासस्थानं पुंसिसंज्ञायांघःप्रायेणेतिअधिकरणेघः क्षयोनिवासेइत्याद्युदात्तत्वं तौपरैरनाक्रान्तं स्वकीयंनिवासस्थानम् आत्मनापहृतंपरकीयंनिवासस्थानंचयातिगच्छति तथास्मैयजमानाय उभावर्धौजगतोभागौचराचरात्मकौमर्त्यामर्त्यात्मकौवासाधूसाधकौभवतः ॥ १५ ॥

१५. जो आदित्यों का अनुसरण करता है, उसको द्यावा-पृथिवी एकत्र होकर पुष्टि करती हैं। वह सौभाग्यशाली है और स्वर्गीय जल प्राप्त करके समृद्धि पाता है। युद्धकाल में वह शत्रुओं को पराजित करके अपने और शत्रु के निवास-स्थान पर जाता है। संसार का आधा भाग ही उसका मंगल-जनक है।

यावोमायाअभिद्रुहेयजत्राःपाशाआदित्यारिपवेविचृत्ताः ।
अश्वीवताँअतियेषंरथेनारिष्टाउरावाशर्मन्त्स्याम ॥ १६ ॥

याः । वः । मायाः । अभिऽद्रुहे । यजत्राः । पाशाः । आदित्याः ।
रिपवे । विऽचृत्ताः । अश्वीऽइव । तान् । अति । येषम् । रथेन ।
अरिष्टाः । उरौ । आ । शर्मन् । स्याम ॥ १६ ॥

हेयजत्राः यष्टव्याआदित्याः वोयुष्माकंयाःमायाः अभिद्रुहे अभिद्रोहंकुर्वतेराक्षसादये-निर्मिताः येचपाशाः रिपवेशत्रवेविचृत्ताः चृतीहिंसाग्रन्थनयोः प्रसारिताइत्यर्थः तान्पाशान् मायाश्चरथेनअतियेषं अतीत्यप्रयतेयं अतितरेयमित्यर्थः तत्रदृष्टान्तः—अश्वीव यथाशोभनाश्वः कश्चित्पुरुषः दुस्तरान्मार्गान्शीघ्रमतिक्रामति तद्वत् येष्टृप्रयत्ने भौवादिकोनुदात्तेत् छान्दसो-लङ् व्यत्ययेनपरस्मैपदम् तथावयंअरिष्टाः शत्रुभिरहिंसिताःसन्तः उरौविस्तीर्णेशर्मन् शर्मे-तिगृहनाम त्वयादत्तेसुखेगृहेवाआसमन्तावस्याम वर्तमानाभवेम॥ १६॥

१६. पूजनीय आदित्यगण, द्रोहकारियों के लिए तुम्हारी जो माया बनाई गई है और जो पाश शत्रुओं के लिए प्रथित हुआ है, हम उनको अश्वारोही पुरुष की तरह अनायास लाँघ जायें। हम हिंसाशून्य होकर परम सुख में निवास करें।

माहंमघोनोवरुणप्रियस्यभूरिदाव्नआविदंशूनमापेः।
मारायोराजन्त्सुयमादवस्थांबृहद्वदेमविदथेसुवीराः ॥ १७ ॥८॥

मा। अहम्। मघोनः। वरुण। प्रियस्य। भूरिऽदाव्नः। आ। विदम्। शूनम्। आपेः। मा। रायः। राजन्। सुऽयमात्। अव। स्थाम्। बृहत्। वदेम। विदथे। सुऽवीराः॥ १७॥ ८॥

हेवरुण मघोनोधनवतः प्रियस्यानुकूलस्यभूरिदाव्नः भूरेर्बहुलस्यदातुरहंमाआविदं माआ-वेदयानि आवेदनंविज्ञापनंमाकरवाणि किंतदनावेद्यं आपेर्ज्ञातेः शूनंशून्यंदारिद्र्यम् वर्णलो-पश्छान्दसः यद्वा शूनंगतंमापंदारिद्र्यम् टुओश्विगतिवृद्ध्योः श्वीदितोनिष्ठायामितीट्प्रतिषेधः यजादित्वात्संप्रसारणम् ओदितश्चेतिनकारः वृषादित्वादाद्युदात्तत्वम् एतदुक्तंभवति अस्मदी-याः पुत्रादयः क्षुधिताइतिप्रभुसमीपेभिधाययाचमानोमाभूवमिति हेराजन्सुयमात् सुष्ठुनियम्यते-नेनपुरुषोगृहइतिसुयमः ईषद्दुःसुष्विवितिखल् तादृशाद्रायोधनान्मावस्थांअवयुत्यस्थितोमाभूवं वयंसुवीराः शोभनपुत्राविदथेयज्ञेगृहेवावर्तमानाःसन्तोबृहत् प्रौढंस्तोत्रं वदेम उच्चारयाम॥ १७॥

१७. वरुण, मुझे किसी धनी और प्रभूत-दानशील व्यक्ति के पास जाति की दरिद्रता की बात न कहनी पड़े। राजन्, मुझे आवश्यक धन का अभाव न हो। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यसप्तमेष्टमोवर्गः॥ ८॥

इदमित्येकादशर्चंषष्ठंसूक्तम् अत्रानुक्रम्यते—इदमेकादशवारुणमिति पूर्वसूक्ते कूर्मोगार्त्स-मदोहिवेत्युक्तत्वादस्योत्तरस्यचकूर्मोगृत्समदोवाऋषिः त्रिष्टुप्छन्दः वरुणोदेवता विनियोगोलैङ्गि-कः अत्रकेचिदाहुः इदमेकादशर्चंतुवारुणंभयपापनुत्। ऋणदारिद्र्यदुःस्वप्ननाशनंचेतिशुश्रुमेति।

तत्रैषाप्रथमा—

इदंकवेरादित्यस्यस्वराजोविश्वानिसान्त्यभ्यस्तुमह्ना ।
अतियोमन्द्रोयजथायदेवःसुकीर्तिंभिक्षेवरुणस्यभूरेः ॥ १ ॥

इदम् । कवेः । आदित्यस्य । स्वऽराजः । विश्वानि । सन्ति ।
अभि । अस्तु । मह्ना । अति । यः । मन्द्रः । यजथाय । देवः ।
सुऽकीर्तिम् । भिक्षे । वरुणस्य । भूरेः ॥ १ ॥

कवेः क्रान्तदर्शिनआदित्यस्य अदितेःपुत्रस्य स्वराजः स्वयमेवराजमानस्येश्वरस्यवा वरुणस्येदंहविःस्तोत्रंवा यजमानःकरोतीतिशेषः सचविश्वानिसर्वाणिसंति द्वितीयभावविकारभांजिभूतजातानिमह्नामहिम्नावरुणप्रसादाल्लब्धेनअभ्यस्तु अभिभवतु योदेवोद्योतमानोवरुणः यजथाययष्ट्रेपुरुषायअतिअतिशयेनमन्द्रः स्तुत्योहर्षयितावाभवति तस्यभूरेर्भर्तुर्वरुणस्यसुकीर्तिंशोभनांस्तुतिं भिक्षेप्रार्थये यद्वा वरुणस्येतितृतीयार्थेषष्ठी तेनवरुणेनदातव्यांशोभनांकीर्तिं अहंयाचे ॥ १ ॥

१. कवि और स्वयं सुशोभित वरुण के लिए यह हव्य है। वे अपनी महिमा के द्वारा सारे भूतों को पराजित करते हैं। प्रकाशमान स्वामी वरुण यजमान को प्रसन्नता प्रदान करते हैं। मैं उनकी स्तुति की प्रार्थना करता हूँ।

तवव्रतेसुभगासःस्यामस्वाध्योवरुणतुष्टुवांसः ।
उपायनउषसांगोमतीनामग्नयोनजरमाणाअनुद्यून् ॥ २ ॥

तव । व्रते । सुऽभगासः । स्याम । सुऽआध्यः । वरुण । तुस्तुऽवांसः ।
उपऽअयने । उषसाम् । गोऽमतीनाम् । अग्नयः । न ।
जरमाणाः । अनु । द्यून् ॥ २ ॥

हेवरुण स्वाध्यः शोभनाध्यानाः तुष्टुवांसः स्तुतवन्तोवयं तवव्रतेत्वदीयेपरिचरणाख्ये कर्मणिवर्तमानाः सुभगासःस्याम शोभनधनाभवेम अपिचगोमतीनांरश्मिभिर्युक्तानामुषसांउपायने उपागमनेसति अग्नयोन यथाअग्नयोग्निहोत्रादिकर्मार्थंसमिध्यन्ते एवमनुद्यून् अनुदिवंजरमाणाः स्तुवन्तोवयंदीप्यमानाभवेम ॥ २ ॥

२. वरुण, हम भली भाँति तुम्हारी स्तुति, ध्यान और परिचर्या करके सौभाग्यशाली हो सकें। किरण-युक्ता उषा के आने पर अग्नि की तरह हम प्रतिदिन तुम्हारी स्तुति करके प्रकाशमान हों।

अथतृतीया—

तवस्यामपुरुवीरस्यशर्मन्नुरुशंसस्यवरुणप्रणेतः ।
यूयंनःपुत्राअदितेरदब्धाअभिक्षमध्वंयुज्यायदेवाः ॥ ३ ॥

तव । स्याम । पुरुऽवीरस्य । शर्मन् । उरुऽशंसस्य । वरुण । प्रनेतरिति प्रऽनेतः । यूयम् । नः । पुत्राः । अदितेः । अदब्धाः । अभि । क्षमध्वम् । युज्याय । देवाः ॥ ३ ॥

हेप्रणेतः सर्वस्यजगतः प्रकर्षेणनेतः वरुण पुरुवीरस्यपुरुभिर्बहुभिःवीरैरुपेतस्य यद्वा पुरूणांबहूनांशत्रूणांविशेषेणप्रेरकस्य उरुशंसस्यउरुभिर्बहुभिःस्तूयमानस्यतवशर्मन्शर्मणिसुखे गृहेवा स्याम अदितेःपुत्राःमित्रादयः परमपिच्छन्दसीतिपरस्यषष्ठ्यन्तस्यपूर्वामन्त्रिताङ्गवद्भावेनानुप्रवेशात्पदद्वयसमुदायस्याष्टमिकंसर्वानुदात्तत्वम् अदब्धाशत्रुभिरहिंसिताः एवंभूताहेदेवाः यूयंनोस्मान्कृतापराधान् युज्यायसख्यायअभिक्षमध्वं अस्माभिःकृतमपराधंसहध्वम् ॥ ३ ॥

३. विश्व-नायक वरुण, तुम कितने ही वीरोंवाले हो, बहुत लोग तुम्हारी स्तुति करते हैं। हम तुम्हारे घर में निवास कर सकें। हिंसा-शून्य और दीप्तिमान् अदिति के पुत्रो, तुम हमारी मैत्री के लिए हमारे अपराध को मिटा दो।

प्रसीमादित्योअसृजद्विधर्ताँऋतंसिन्धवोवरुणस्ययन्ति ।
नश्राम्यन्तिनविमुचन्त्येतेवयोनपप्तूरघुयापरिज्मन् ॥ ४ ॥

प्र । सीम् । आदित्यः । असृजत् । विऽधर्ता । ऋतम् । सिन्धवः । वरुणस्य । यन्ति । न । श्राम्यन्ति । न । वि । मुचन्ति । एते । वयः । न । पप्तुः । रघुऽया । परिऽज्मन् ॥ ४ ॥

विधर्ता सेतुरिवजलस्यविधारयिता आदित्यःअदितेःपुत्रोवरुणः ऋतंविधारणहेतुभूतंसत्यम् यद्वा नदीनामुपादानभूतमुदकम् सींसर्वतः प्रासृजत् प्रकर्षेणसृष्टवान् अणोप्रगृह्यस्यानुनासिकइत्याकारःसानुनासिकः तेनवरुणस्यतेन सिन्धवः स्यन्दनशीलानद्योयन्तिगच्छन्ति प्रवहन्ति एतेसिन्धवः नश्राम्यन्तिनप्राप्नुवन्ति नविमुचन्ति उपरतानभवन्ति अनलसाः सर्वदैकरूपेण प्रवहन्तीत्यर्थः एतदेवोच्यते-वयोन वयः पक्षिणइवरघुयाः लघुवर्गाः शीघ्रगामिनः परिज्मन् परिज्मनिभूम्यांपप्तुःपतंतिगच्छन्ति पतृगतौ लिट्युसितनिपत्योश्छन्दसीत्युपधालोपः स्थानिवद्भावात् द्विर्वचनादि रघुयाइत्यत्रसुपांसुलुगितिजसोयाजदेशः ॥ ४ ॥

४. विश्व-धारक और अदिति वरुण ने अच्छी तरह जल की सृष्टि की है। वरुण की महिमा से नदियां प्रवाहित होती हैं। ये कभी

विश्राम नहीं करतीं, लौटती भी नहीं। ये पक्षियों की तरह वेग के साथ पृथिवी पर जाती हैं।

विमच्छ्रथायरशनामिवागऋध्यामतेवरुणखामृतस्य।
मातन्तुश्छेदिवयतोधियंमेमामात्राशार्यपसःपुरऋतोः ॥ ५ ॥ ९ ॥

वि। मत्। श्रथय। रशनाम्ऽइव। आगः। ऋध्याम। ते। वरुण। खाम्। ऋतस्य। मा। तन्तुः। छेदि। वयतः। धियम्। मे। मा। मात्रा। शारि। अपसः। पुरा। ऋतोः ॥ ५ ॥ ९ ॥

हेवरुण मत् मत्सकाशात् रशनामिवरज्जुमिवआगः विहिताननुष्ठानजनितं पापं विश्रथय शिथिलीकुरु विमोचयेत्यर्थः तेत्वत्संबन्धिनऋतस्योदकस्यपूर्णांखांनदीं खाइतिनदीनाम तां ऋध्याम लभेमहि अपिच धियंकर्म वयतः संतन्वतोमेममतन्तुःकर्मसन्ततिः माछेदि छिन्नोमाभूत् नैरन्तर्येणास्त्वित्यर्थः तथाऋतोः समाप्तिकालात् पुरापूर्वंअपसः कर्मणः मात्राशरीरं प्राच्योदीच्यांगलक्षणं माशारि शीर्णंविकलंमाभूत् शॄहिंसायां कर्मणिलुङ् पुरऋतोरित्यत्रऋत्यकइतिप्रकृतिभावः ॥ ५ ॥

५. वरुण, मेरे पाप ने मुझे रस्सी की तरह बाँध रखा है; मुझे छुड़ाओ। हम तुम्हारी जलपूर्ण नदी प्राप्त करें। बुनने के समय हमारा तन्तु कभी टूटने न पावे। असमय में यज्ञ की मात्रा कभी विफल न हो।

॥ इतिद्वितीयस्यसप्तमेनवमोवर्गः ॥ ९ ॥

अथषष्ठी—

अपोसुम्यक्षवरुणभियसंमत्सम्राळृतावोनुमागृभाय।
दामेववत्साद्विमुमुग्ध्यंहोनहित्वदारेनिमिषश्चनेशे ॥ ६ ॥

अपो इति। सु। म्यक्ष। वरुण। भियसम्। मत्। सम्ऽराट्। ऋतऽवः। अनु। मा। गृभाय। दामऽइव। वत्सात्। वि। मुमुग्धि। अंहः। नहि। त्वत्। आरे। निऽमिषः। चन। ईशे ॥ ६ ॥

हेवरुण भियसं भयं मत् मत्तः सुसुष्ठुअपोम्यक्षअपगमय हेसम्राट्सम्यग्राजमान हेऋतावः सत्यवन् यज्ञवन्वावरुण मामां अनुगृभाय अनुगृहाण छन्दसिशायजपीतिश्नःशायजादेशः ह्रग्रहोर्भइतिभत्वम् अपिच दामेववत्सात् यथादोग्धावत्ससकाशात् बन्धनींरज्जुंविमुञ्चति तथा अंहःपापंमत्सकाशाद्विमुमुग्धि विमुञ्च छान्दसःशपःश्लुः पृथक्कुरु त्वदारेत्वत्तोदूरदेशेवर्तमानः

त्वदन्यइत्यर्थः त्वत्तोन्यःकश्चित् निमिषश्चन निमेषस्यापि अक्षिपक्ष्मचलनस्यापि नहिईशे नेष्टे त्वमेवईश्वरइत्यर्थः लोपस्तआत्मनेपदेष्वितितलोपः ॥ ६ ॥

६. वरुण, मेरे पास से भय को दूर कर दो। हे सम्राट् और सत्यवान् मुझ पर कृपा करो। जैसे रस्सी से बछड़े को छुड़ाया जाता है, वैसे ही पाप से मुझे बचाओ; क्योंकि तुमसे अलग होकर कोई एक पल के लिए भी आधिपत्य नहीं कर सकता।

मानोवधैर्वरुणयेतइष्टावेनःकृण्वन्तमसुरभ्रीणन्ति ।
माज्योतिषःप्रवसथानिगन्मविषूमृधःशिश्रथोजीवसेनः ॥ ७ ॥

मा । नः । वधैः । वरुण । ये । ते । इष्टौ । एनः । कृण्वन्तम् । असुर । भ्रीणन्ति । मा । ज्योतिषः । प्रऽवसथानि । गन्म । वि । सु । मृधः । शिश्रथः । जीवसे । नः ॥ ७ ॥

हेवरुण नोस्मान्वधैः हननसाधनैरायुधैर्माहिंसीरितिशेषः हेअसुर पापकृतांनिरसितः ते त्वदीयेइष्टौयज्ञेएनः विहिताननुष्ठानेनजनितंपापंकृण्वन्तंकुर्वन्तंपुरुषंयेवधाभ्रीणन्ति हिंसन्ति तैरितिपूर्वत्रसंबन्धः भ्रीणृहिंसायां क्रैयादिकः अपिच ज्योतिषः गृहेवर्तमानादग्नेःसौरप्रकाशाद्वाप्रवसथानिप्रवासान्मागन्म मागच्छाम सर्वदागृहेवर्तमानः सूर्यंपश्यंश्चिरकालंजीवेयमित्यर्थः गमेर्लुङिमन्त्रेघसेतिच्लेर्लुक् तथानोस्माकंजीवसेजीवनायमृधोहिंसकान् सुसुष्ठुविशिश्रथः विश्लेषय बाधस्वेत्यर्थः ॥ ७ ॥

७. असुर वरुण, तुम्हारे यज्ञ में अपराध करनेवालों को जो आयुध मारते हैं, वे हमें न मारें। हम प्रकाश से निर्वासित न हों। हमारे जीवन के लिए हिंसक को हटाओ।

नमःपुरातेवरुणोतनूनमुतापरंतुविजातब्रवाम ।
त्वेहिकंपर्वतेनश्रितान्यप्रच्युतानिदूळभव्रतानि ॥ ८ ॥

नमः । पुरा । ते । वरुण । उत । नूनम् । उत । अपरम् । तुविऽजात । ब्रवाम । त्वे इति । हि । कम् । पर्वते । न । श्रितानि । अप्रऽच्युतानि । दुःऽदभ । व्रतानि ॥ ८ ॥

हेवरुण पुरापूर्वस्मिन्काले तेतुभ्यंनमः नमस्कारप्रतिपादकं नमइतिशब्दमवादिष्म उतअपिचनूनमद्यापिब्रवाम उतअपिच हे तुविजात बहुप्रदेशेषुप्रादुर्भूत वरुण अपरं आगामिन्यपिकालेनमःशब्दंब्रवाम उच्चारयाम कस्मादितिचेदुच्यते—दूळभ दुर्दभ दंभितुंहिंसितुमशक्य

दुरोदाशनाशदभ्ध्येविर्तिरेफस्योत्वमुत्तरपदादेष्टुत्वंच कमित्येतत्पदपूरणम् हियस्मात् त्वेत्वयि पर्वतेन शिलोच्चयेइव अच्युतानि अन्यैः प्रच्यावयितुमशक्यानि व्रतानिकर्माणिविधरणानि श्रितानि आश्रितानि तस्मादित्यर्थः ॥ ८ ॥

८. हे बहुस्थानोत्पन्न वरुण, हम भूत, वर्त्तमान और भविष्यत् समयों में तुम्हारे लिए नमस्कार करेंगे; क्योंकि हे अहिंसनीय वरुण, पर्वत की तरह तुममें सारे अच्युत कर्म आश्रित हैं।

परऋणासावीरधमत्कृतानिमाहंराजन्नन्यकृतेनभोजम्।
अव्युष्टाइन्नुभूयसीरुषासआनोजीवान्वरुणतासुशाधि ॥ ९ ॥

परा। ऋणा। सावीः। अधं। मत्ऽकृतानि। मा। अहम्।
राजन्। अन्यऽकृतेन। भोजम्। अविंऽउष्टाः। इत्। नु।
भूयसीः। उषसः। आ। नः। जीवान्। वरुण। तासुं। शाधि ॥ ९ ॥

हेवरुण ऋणाऋणानिपित्रादिभिः कृतान्यस्माभिर्देयानिपरासावीः परासुव पराचीनंप्रेरय षूप्रेरणे छान्दसोलुङ् अधअधुनामत्कृतानिमयानिष्पादितानिऋणानिपरासुव अपिच हेराजन् स्वामिन् वरुणअहंअन्यकृतेनअन्यैरर्जितेनधनेनमाभोजंभोगमालभेयम् किंकारणमितिचेदुच्यते—भूयसीः भूयस्योबहुतराः उषसः अव्युष्टाइव नुसत्यंअव्युष्टाएवअपररात्रेषूत्थायऋणानि चिन्तयतोजाग्रतोममव्युष्टाअप्यव्युष्टकल्पाआसन् हेवरुण तासूषस्सुनोस्मान् जीवान् जीवनवतः आशाधि आसमन्तादनुशिष्टान्कुरु ऋणान्यपहृत्यभोगपर्याप्तंधनंप्रयच्छेत्यर्थः ॥ ९ ॥

९. वरुण, पूर्वजों ने जो ऋण किया था, उसका परिशोध करो। इस समय मैं जो ऋण करता हूँ, उसका भी परिशोध करो; ताकि वरुण, मुझे दूसरे का उपार्जित धन भोग करने की आवश्यकता न हो। ऋण के कारण ऋणकर्त्ता के लिए मानो अनेक उषाओं का उदय ही नहीं हुआ। वरुण, हम उन सारी उषाओं में जीवित रहें, ऐसी आज्ञा करो।

योमेराजन्युज्योवासखावास्वप्नेभयंभीरवेमह्यमाह।
स्तेनोवायोदिप्सतिनोवृकोवात्वंतस्माद्वरुणपाह्यस्मान् ॥ १० ॥

यः। मे। राजन्। युज्यः। वा। सखा। वा। स्वप्ने। भयम्।
भीरवे। मह्यम्। आह। स्तेनः। वा। यः। दिप्सति। नः। वृकः।
वा। त्वम्। तस्मात्। वरुण। पाहि। अस्मान् ॥ १० ॥

हेराजन्वरुण मेमदीयोयुज्योयोजनसमर्थः पित्रादिर्वासखासमानख्यानोबान्धवोवा स्वप्नेदृष्टंस्वद्विषयंभयंभीरवेभयशीलायमह्यंयआहब्रूते तथास्तेनश्चौरोवावृकोरण्यश्वावा योनो-

स्मान्नदिप्सतिजिघांसति सनीवंतर्धेतिविकल्पनादिडभावः दम्भइच्चेतीत्वम् हेवरुण त्वंतस्मा-त्सर्वस्माद्स्मान्पाहिरक्ष॥ १० ॥

१०. राजा वरुण, मैं भीरु हूँ। मुझसे जो बन्धु लोग स्वप्न की भयंकर बातें कहते हैं, उनसे मुझे बचाओ। तस्कर या वृक मुझे मारना चाहता है। उससे मुझे बचाओ।

माहंमघोनोवरुणप्रियस्यंभूरिदाव्नआविंदंशूनंमापेः।
मारायोराजन्त्सुयमादवंस्थांबृहद्वदेमविदथेंसुवीराः ॥११॥१०॥

मा। अहम्। मघोनः। वरुण। प्रियस्य। भूरिऽदाव्नः। आ। विदम्। शूनम्। आपेः। मा। रायः। राजन्। सुऽयमात्। अव। स्थाम्। बृहत्। वदेम। विदथे। सुऽवीराः॥ ११ ॥१०॥

हेवरुण प्रियस्यभूरिदाव्नः भूरेर्धनस्यदातुर्धनवतआप्तस्यपुरतः पुत्रादेर्दारिद्र्यंअहंमाअवि-दं माआवेदयानि ज्ञापयानि हेराजन् सुष्टुनियामकाद्धनात् अवयुत्यस्थितोमाभूवंशोभनपुत्राः यज्ञेगृहेवावर्तमानाः प्रौढंस्तोत्रंउच्चारयामः॥ ११ ॥

११. वरुण, मुझे किसी धनी और प्रभूत-दानशील व्यक्ति के पास जाति की दरिद्रता की बात न कहनी पड़े। राजन्, मुझे आवश्यक धन का अभाव न हो। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

धृतव्रताइतिसप्तर्चंसप्तमंसूक्तंगार्त्समदस्यकूर्मस्यगृत्समदस्यवार्षम् त्रैष्टुभं वैश्वदेवम् त-थाचानुक्रान्तम्—धृतव्रताःसप्तवैश्वदेवमिति गतोविनियोगः।

तत्रप्रथमा—

धृतव्रताआदित्याइषिराआरेमत्कर्तरहसूरिवागः।
शृण्वतोवोवरुणमित्रदेवाभद्रस्यंविद्वाँअवसेहुवेवः॥ १ ॥

धृतऽव्रताः। आदित्याः। इषिराः। आरे। मत्। कर्त। रहसूःऽइव। आगः। शृण्वतः। वः। वरुण। मित्र। देवाः। भद्रस्य। विद्वान्। अवसे। हुवे। वः॥ १ ॥

हेधृतव्रताः धृतकर्माणः आदित्याः अदितेःपुत्राः इषिराः गमनशीलाः सर्वैरन्वेषणीयाः प्रार्थनीयावा हेविश्वेदेवाः मदारेमत्तोदूरदेशेआगः विहितानुष्ठानादिजनितंपापंकर्तकुरुत क-रोतेश्छान्दसोविकरणस्यलुक् तप्तनप्तनथनाश्चेतितबादेशः तत्रदृष्टान्तः—रहसूरिव रहसिअन्यैर-

ज्ञातेप्रदेशेसूयतइतिरहसूःव्यभिचारिणी सायथागर्भंपातयित्वादूरदेशेपरित्यजतिवत्तद्वव हेवरुण मित्र देवाः वोयुष्मदीयस्यभद्रस्ययुष्माभिःकरणीयंश्रेयोविद्वान् जानन्नहंश्रृण्वतः मत्कृतानि स्तोत्राणिश्रोत्रेणजानतोवोयुष्मान्अवसे रक्षणार्थंहुवेआह्वयामि ॥ १ ॥

१. हे व्रतकारी, शीघ्र गमनशील और सबके प्रार्थनीय आदित्यो, गुप्तप्रसविनी स्त्री के गर्भ की तरह मेरा अपराध दूर देश में फेंक दो। मित्र और वरुण, तुम्हारे मंगल-कार्य को मैं जानकर, रक्षा के लिए, तुम्हें बुलाता हूँ। तुम हमारी स्तुति सुनो।

यूयंदेवाःप्रमतिर्यूयमोजोयूयंद्वेषांसिसनुतर्युयोत ।
अभिक्षत्तारोअभिचक्षमध्वमद्याचनोमृळयतापरंच ॥ २ ॥

यूयम् । देवाः । प्रऽमंतिः । यूयम् । ओजः । यूयम् । द्वेषांसि । सनुतः । युयोत । अभिऽक्षत्तारः । अभि । च । क्षमध्वम् । अद्य । च । नः । मृळयत । अपरम् । च ॥ २ ॥

हेदेवाः प्रमतिः प्रकृष्टामतिर्यस्यपित्रादेस्तादृशोपियूयमेव तथाओजोबलमपियूयमेव अपिचयूयंद्वेषांसिद्वेष्टॄणि रक्षःपिशाचादीनि सनुतरित्यव्ययम् अन्तर्हितनामैतत् अन्तर्हितेप्रदेशेयुयोतपृथक्कुरुत युमिश्रणामिश्रणयोः छान्दसःशपःश्लुः पूर्ववत्तस्यतबादेशः अभिक्षत्तारः अभितः शत्रूणांहिंसितारोयूयं अभिचक्षमध्वं अभिभवतचशत्रून् अद्यास्मिन्दिनेचनोस्मान्मृळयत सुखयत अपरंचअपरमपिकालंआगामिन्यपिकाले अस्मान्मृळयत ॥ २ ॥

२. देवगण, तुम्हीं अनुग्राहक और बल हो। तुम द्वेषियों को हमारे पास से अलग करो। शत्रु-हिंसक, शत्रुओं को पराजित करो। वर्त्तमान और भविष्यत् में हमें सुखी करो।

किमूनुवःकृणवामापरेणकिंसनेनवसवआप्येन ।
यूयंनोमित्रावरुणादितेचस्वस्तिमिन्द्रामरुतोदधात ॥ ३ ॥

किम् । ऊँ इति । नु । वः । कृणवाम । अपरेण । किम् । सनेन । वसवः । आप्येन । यूयम् । नः । मित्रावरुणा । अदिते । च । स्वस्तिम् । इन्द्रामरुतः । दधात ॥ ३ ॥

हेदेवाः वोयुष्माकंनुअद्येदानींकिमुकृणवाम किंखलुकर्तुंशक्नवाम नकिमपीत्यर्थः तथाअपरेणअपरकालभाविनाकर्मणाकिंकर्तुंशक्ताः तथाहेवसवोवासयितारोदेवाः सनेनसनातनेन आप्येन आप्तव्येनकर्मणायुष्माकंकिंकर्तुंशक्ताः सर्वदापियुष्मदनुगुणंपरिचरणंकर्तुंनशक्ताइत्यर्थः हे

मित्रावरुणौ हेअदिते हेइन्द्रामरुतः देवताद्वन्द्वेचेतिपूर्वपदस्यानङ् तेचसर्वेयूयंस्वस्तिंअविनाशंनो-
स्मभ्यं दधात धत्तप्रयच्छत लोटितस्यतबादेशेङित्त्वाभावेनातोलोपाभावः ॥ ३ ॥

३. देवगण, अब और पीछे तुम्हारा कौन कार्य हम सिद्ध कर सकेंगे? वसु और सनातन प्राप्तव्य कार्य-द्वारा हम तुम्हारा कौन कार्य सिद्ध कर सकेंगे? मित्रावरुण, अदिति, इन्द्र और मरुद्गण, तुम हमारा मंगल करो। अथचतुर्थी—

हयेदेवायूयमिदापयःस्थतेमृळतनाधमानायमह्यम्।
मावोरथोमध्यमवाळृतेभून्मायुष्मावत्स्वापिषुश्रमिष्म ॥ ४ ॥

हये। देवाः। यूयम्। इत्। आपयः। स्थ। ते। मृळत।
नाधमानाय। मह्यम्। मा। वः। रथः। मध्यमऽवाट्। ऋते।
भूत्। मा। युष्माऽवत्ऽसु। आपिषु। श्रमिष्म ॥ ४ ॥

हयेदेवाः छान्दसोवर्णोपजनः हेदेवाः यूयमित् यूयमेवआपयः धनस्यप्रापयितारोबन्धवः स्थ भवथ तेयूयंनाधमानायअभिमतंफलंयाचमानायमह्यंस्तोत्रेमृळतसुखयत तथावोयुष्माकंरथःऋतेस्मदीयेयज्ञेनिमित्तभूतेमध्यमवाट्माभूत् मध्यमेनमन्दगमनेनवाहकोमाभूत् शीघ्रंयुष्मान्वहत्वित्यर्थः वयंयुष्मावत्सुयुष्मत्सदृशेष्वापिषुबन्धुषुसत्सुमाश्रमिष्म श्रान्तामाभूम वतुप्प्रकरणेयुष्मदस्मद्भ्यांछन्दसिसादृश्यउपसंख्यानमितिवतुप् आसर्वनाम्नइत्यात्वम् ॥ ४ ॥

४. देवगण, तुम्हीं हमारे बन्धु हो। हम तुम्हारी प्रार्थना करते हैं। कृपा करो। हमारे यज्ञ में आने में तुम्हारा रथ मन्द-गति न हो। तुम्हारे समान बन्धु पाकर हम श्रान्त न हों।

प्रवएकोमिमयभूर्यागोयन्मापितेवकितवंशशास।
आरेपाशाआरेअघानिदेवामामाधिपुत्रेविमिवग्रभीष्ट ॥ ५ ॥

प्र। वः। एकः। मिमय। भूरि। आगः। यत्। मा। पिताऽइव।
कितवम्। शशास। आरे। पाशाः। आरे। अघानि। देवाः। मा।
मा। अधि। पुत्रे। विम्ऽइव। ग्रभीष्ट ॥ ५ ॥

हेदेवाः वोयुष्माकंमध्येअहमेकःसन् भूरिबहुलंआगः पापंप्रमिमयअहंप्रकर्षेणाहिंसिषं कथमस्माकंमध्येत्वमेव इतिचेदुच्यते—यद्यस्मात् मामांपितेवकितवं यथाअपथप्रवृत्तंपुत्रंपितानुशास्तितथाशशास अनुशिष्टंचकृद्धे शासुअनुशिष्टावित्यस्माल्लिटिमध्यमस्यरूपम् अपिच हेदेवाः युष्मदीयाः पाशाः आरेअस्मत्तोदूरदेशेसन्तु अघानिपापानिचआरेसन्तुमामाअधिपुत्रे अधिःसप्तम्यर्थानुवादी पुत्रेपश्यतिसतिपितरंसंतंविमिवपक्षिणमिवव्याधः माग्रभीष्ट मागृह्णीध्वम् माङिलुङि ह्रग्रहोर्भइतिभत्वम् ॥ ५ ॥

५. देवगण, तुम लोगों के बीच एक मनुष्य होकर मैंने अनेक विध पाप नष्ट कर डाले। जैसे पिता कुमार्गगामी पुत्र को उपदेश देता है, वैसे तुमने मुझे उपदेश दिया है। देवो, सारे पाश और पाप दूर हों। जैसे व्याध बच्चे के सामने पक्षी को मारता है, वैसे ही मुझे नहीं मारना।

अर्वाञ्चोअद्याभवतायजत्राआवोहार्दिभयमानोव्ययेयम्।
त्राध्वंनोदेवानिजुरोवृकस्यत्राध्वंकर्तादवपदोयजत्राः॥ ६ ॥

अर्वाञ्चः। अद्य। भवत। यजत्राः। आ। वः। हार्दि। भयमानः। व्ययेयम्। त्राध्वम्। नः। देवाः। निःजुरः। वृकस्य। त्राध्वम्। कर्तात्। अवऽपदः। यजत्राः॥ ६ ॥

हेयजत्राः यष्टव्यादेवाः अद्येदानीमर्वाञ्चोस्मदभिमुखाभवत वोयुष्माकंहार्दिहृद्यवस्थितंर-क्षणंभयमानोबिभ्यदहंआव्ययेयं आभिमुख्येनप्राप्नुयाम् व्ययगतौ भौवादिकः हेदेवाः वृकस्य तस्करस्यआरण्यशुनोवा संबन्धिनः निजुरोनिहननात् जूरीहिंसार्थः अस्मात्संपदादिलक्षणो-भावेक्विप् छान्दसोह्रस्वः नोस्मान् त्राध्वं त्रायध्वम् तथा हेयजत्राः अवपदःआपदः कर्तात्वकर्तुः सकाशात्त्राध्वं त्रायध्वम्॥ ६ ॥

६. पूजनीय देवो, आज हमारे सामने आओ। मैं डरकर तुम्हारे हृदयावस्थित आश्रय को प्राप्त करूँ। देवो, वृक के हाथ से मारे जाने से हमें बचाओ। पूजनीयो, जो हमें आपद् में फेंक देता है, उसके हाथ से हमें बचाओ।

माहंमघोनोवरुणप्रियस्यभूरिदाव्नआविदंशूनमापेः।
मारायोराजन्त्सुयमादवस्थांबृहद्वदेमविदथेसुवीराः॥ ७॥ ११॥

मा। अहम्। मघोनः। वरुण। प्रियस्य। भूरिऽदाव्नः। आ। विदम्। शूनम्। आपेः। मा। रायः। राजन्। सुऽयमात्। अव। स्थाम्। बृहत्। वदेम। विदथे। सुऽवीराः॥ ७॥ ११॥

व्याख्यातेयम्॥ ७ ॥

७. वरुण, मुझे किसी धनी और प्रभूत-दानशील व्यक्ति से अपनी जाति की दरिद्रता की बात न कहनी पड़े। राजन्, मुझे नियमित या आवश्यक धन का अभाव न हो। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करेंगे। ॥ इतिद्वितीयस्यसप्तमेएकादशोवर्गः॥ ११ ॥

ऋतंदेवायेत्येकादशर्चमष्टमंसूक्तम् गार्त्समदं अन्त्याजगती शिष्टास्त्रिष्टुभः प्रहिक्रतुमित्ये-षाइन्द्रासोमदेवताका सरस्वतित्वमस्मानित्यर्धर्चःसारस्वतः योनःसनुत्यइत्येषाबार्हस्पत्या अन्त्यामारुती शिष्टाऐन्द्र्यः तथाचानुक्रान्तम्—ऋतमेकादशजगत्यन्तंषष्ठचैन्द्रासोमीसरस्वति-त्वमितिसारस्वतोर्धर्चोयोनोबार्हस्पत्यातंवोमारुतीति गतोविनियोगः।

तत्रैषा प्रथमा—

ऋतंदेवायंकृण्वतेसवित्रइन्द्रायाहिघ्नेनरमन्तआपः।
अहंरहर्यात्यक्तुरपांकियात्याप्रथमःसर्गआसाम् ॥ १ ॥

ऋतम्। देवाय। कृण्वते। सवित्रे। इन्द्राय। अहिऽघ्ने। न।
रमन्ते। आपः। अहःऽअहः। याति। अक्तुः। अपाम्। कियति।
आ। प्रथमः। सर्गः। आसाम् ॥ १ ॥

ऋतमुदकंवृष्टिलक्षणंकृण्वतेकुर्वतेदेवायद्योतमानायसवित्रेसर्वस्यप्रेरकायअहिघ्नेअहिंवृत्रं हतवतेइन्द्राययागार्थम् आपोनरमन्ते तस्माद्धेतोर्भीत्यानोपरताभवंति तस्मात् व्यत्ययेनचतुर्थी अपितुतासामपांअक्तुः सेचकंस्रोतः अहरहः प्रत्यहंयातिगच्छति आसांप्रथमःसर्गः प्राथमिकंजन्म कियात्याकियतिकालेनिष्पन्नं आकारःप्रश्ने किंशब्दआक्षेपे यावतिकालेताअजायन्तसकालःकियान् किंपरिमाणंतस्यकालस्य नकिमपिनित्याएवहिताइत्यर्थः ॥ १ ॥

१. वृष्टिकारी, द्युतिमान्, सबके प्रेरक और वृत्र-नाशक इन्द्र के यज्ञ के लिए कभी जल नहीं रुकता, उसका स्रोत प्रतिदिन चला करता है। कभी उसकी पहली सृष्टि हुई थी?

योवृत्रायसिनमत्राभरिष्यत्प्रतंजनित्रीविदुषंउवाच।
पथोरदन्तीरनुजोषमस्मैदिवेदिवेधुनयोयन्त्यर्थम् ॥ २ ॥

यः। वृत्राय। सिनम्। अत्र। अभरिष्यत्। प्र। तम्। जनित्री।
विदुषे। उवाच। पथः। रदन्तीः। अनु। जोषम्। अस्मै। दिवेऽदिवे।
धुनयः। यन्ति। अर्थम् ॥ २ ॥

यःपुरुषोवृत्रायासुरायसिनमन्नंअत्रपाकस्थाने आहर्तुमभरिष्यत् संपादितवान् तंपुरुषंजनित्रीजनयित्रीइन्द्रस्यमाताअदितिः विदुषेअभिज्ञायेन्द्रायप्रोवाच प्रोक्तवती प्रवचनस्यहननार्थत्वात् तंवृत्रंहतवानितिशेषः अपिचास्मैअस्येन्द्रस्यानुजोषमनुकामंइच्छामनुसृत्यपथोमार्गान्रदन्तीर्विलिखन्त्योधुनयोनद्यः दिवेदिवेप्रतिदिवसंअर्थंअर्तव्यंगन्तव्यंसमुद्रंप्रतियंतिगच्छन्ति ॥ २ ॥

२. जिस व्यक्ति ने वृत्र को अन्न प्रदान किया था, उसकी बात माता अदिति ने इन्द्र से कह दी थी। इन्द्र की इच्छा के अनुसार नदियाँ अपना मार्ग बनाती हुई प्रतिदिन समुद्र की ओर जाती हैं।

अथतृतीया—

ऊर्ध्वोह्यस्थादध्यन्तरिक्षेधावृत्रायप्रवधंजभार।
मिहंवसानउपहीमदुद्रोत्तिग्मायुधोअजयच्छत्रुमिन्द्रः॥ ३ ॥

ऊर्ध्वः। हि। अस्थात्। अधि। अन्तरिक्षे। अध। वृत्राय। प्र।
वधम्। जभार। मिहम्। वसानः। उप। हि। ईम्। अदुद्रोत्।
तिग्मऽआयुधः। अजयत्। शत्रुम्। इन्द्रः॥ ३ ॥

हिर्हेतौ यस्मादयंवृत्रः अन्तरिक्षेऊर्ध्वःसन् सर्वमावृत्याध्यस्थात् अधिष्ठितोभूत् अधअ-
तःकारणात्वृत्रायवृत्रंमतिवधंहननसाधनं वज्रंइन्द्रः प्रजभार प्रचिक्षेप हृग्रहोर्भः सहिखलुवृत्रो-
मिहंवृष्टेःसेक्तारंमेघंवसानः आच्छादयन् ईमेनमिन्द्रंउपादुद्रोत् उपागमत् द्रुद्रुगतौ लङिछान्दसः
शपःश्लुः तिग्मायुधः तीक्ष्णायुधः इन्द्रः शत्रुंशातयितारंतंवृत्रंअजयत् जितवान्॥ ३ ॥

३. चूंकि अन्तरिक्ष में उठकर वृत्र ने सारे पदार्थों को घेर डाला था; इसलिए इन्द्र ने उसके ऊपर वज्र फेंका। वृष्टि-प्रद मेघ से आच्छादित होकर वृत्र इन्द्र के सामने दौड़ा था। उसी समय तीक्ष्णायुधधारी इन्द्र ने उसको पराजित किया था।

बृहस्पतेतपुषाश्नेवविध्यवृकद्वरसोअसुरस्यवीरान्।
यथाजघन्थधृषतापुराचिदेवाजहिशत्रुमस्माकमिन्द्र॥ ४ ॥

बृहस्पते। तपुषा। अश्नाऽइव। विध्य। वृकऽद्वरसः। असुरस्य।
वीरान्। यथा। जघन्थ। धृषता। पुरा। चित्। एव। जहि।
शत्रुम्। अस्माकम्। इन्द्र॥ ४ ॥

हेबृहस्पते बृहतांपरिवृढानांपालयितरिन्द्र तपुषातापकेनदीप्तेनवज्रेणअश्नेवअशन्याइव
वृकद्वरसः संवृतद्वारस्यासुरस्यवीरान्पुत्रान् यद्वा संवृतद्वारान् असुरस्यवीरान्विध्य ताडय
वृणोतेः सृवृभूशुषिमुषिभ्यःकिदितिकर्मणिकन्प्रत्ययः द्रुगतौ अस्मादौणादिकोऽसन्प्रत्ययः वृका-
णि संवृतानि द्वरांसि द्वाराणियेषां बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वम् हेइन्द्र पुराचित् पुरापिधृषता
धर्षकेणवज्रेणयथाजघन्थ त्वंहतवानेव एवमेवास्माकंशत्रुंजहि नाशय हन्तेर्जइतिहौजा-
देशः॥ ४ ॥ बृहस्पति, वज्र के समान दीप्त अस्त्र से वृक-द्वारा असुर के पुत्रों को छेदो। इन्द्र, जैसे प्राचीन समय में तुमने शक्ति-द्वारा शत्रुओं को जीता था, उसी प्रकार इस समय हमारे शत्रुओं का विनाश करो।

अथपञ्चमी–

अवक्षिपदिवोअश्मानमुच्चायेनशत्रुंमन्दसानोनिजूर्वाः ।
तोकस्यसातौतनयस्यभूरेरस्माँअर्धंकृणुतादिन्द्रगोनाम् ॥५॥१२॥

अव । क्षिप । दिवः । अश्मानम् । उच्चा । येन । शत्रुम् ।
मन्दसानः । निऽजूर्वाः । तोकस्य । सातौ । तनयस्य । भूरेः ।
अस्मान् । अर्धम् । कृणुतात् । इन्द्र । गोनाम् ॥ ५ ॥ १२ ॥

हेइन्द्र दिवोनभसःसकाशादश्मानं अश्मवत्कठिनं वज्रंउच्चाउच्चैर्वर्तमानस्त्वंअवक्षिपअस्मदीयान् शत्रूनुद्दिश्यावस्ताद् क्षिप येनवज्रेणमन्दसानः स्तोतृभिःस्तूयमानःसन् शत्रुंनिजूर्वाः न्यहिंसीः जुर्वीहिंसार्थः लेटयाडागमः तथातोकस्यपुत्रस्यभूरेर्भर्तव्यस्यपौत्रस्यसातौ संभजने निमित्ते सप्तम्येषासंभजनार्था तथाहेइन्द्र गोनांगवांसंभजनार्थंचास्मानअस्माकं विभक्तिव्यत्ययः अर्धं समृद्धिंकृणुतात्कुरु गोःपादान्तेइतिगोशब्दस्यामोनुडागमः ॥ ५ ॥

५. इन्द्र, तुम ऊपर रहते हो। स्तोताओं के स्तव करने पर तुमने जिसके द्वारा शत्रु का विनाश किया था, वही पत्थर की तरह कठिन वज्र द्युलोक से निम्नाभिमुख फेंको। जिससे हम लोग यथेष्ट पुत्र, पौत्र और गोधन प्राप्त कर सकें, वैसी ही हमें तुम समृद्धि दो।

॥ इतिद्वितीयस्यसप्तमेद्वादशोवर्गः ॥ १२ ॥

प्रहिक्रतुंवृहथोयंवनुथोरध्रस्यस्थोयजमानस्यचोदौ ।
इन्द्रासोमायुवमस्माँअविष्टमस्मिन्भयस्थेकृणुतमुलोकम् ॥ ६ ॥

प्र । हि । क्रतुम् । वृहथः । यम् । वनुथः । रध्रस्य । स्थः ।
यजमानस्य । चोदौ । इन्द्रासोमा । युवम् । अस्मान् । अविष्टम् ।
अस्मिन् । भयऽस्थे । कृणुतम् । ऊँ इति । लोकम् ॥ ६ ॥

हेइन्द्रासोमा इन्द्रासोमौ यंवैरिणंवनुथोहिंसथः वनुष्यतिर्हन्तिकर्मेतियास्कः । तंक्रतुंद्वेषस्यकर्तारंप्रहिवृहथः प्रकर्षेणोद्यच्छथःखलु उन्मूलयथइत्यर्थः वृहूउद्यमने तौदादिकः तथारध्रस्यराधकस्ययजमानस्यचोदौशत्रूणांप्रेरकौस्थोभवथः तथा हेइन्द्रासोमौ युवंयुवांअस्मानअविष्टमवतं अस्मिन्भयस्थे भयस्थानेयुद्धे घञर्थेकविधानमित्यधिकरणेकप्रत्ययः मरुद्वृधादित्वात्पूर्वपदान्तोदात्तत्वम् लोकंभयरहितंस्थानंकृणुतंकुरुतम् उइतिपदपूरणः ॥ ६ ॥

६. इन्द्र और सोम, जिसकी तुम हिंसा करते हो, उस द्वेषी को उन्मूलित करो। यजमानों को शत्रुओं के विरुद्ध प्रेरित करो। इन्द्र और सोम, तुम मेरी रक्षा करो। इस भय-स्थान में भय-शून्य स्थान बनाओ।

१ नि० ५. २.

अथसप्तमी-

नमातमन्नश्रमन्नोततन्द्रन्नवोचाममासुनोतेतिसोमम्म् ।
योमेपृणाद्योददद्योनिबोधाद्योमासुन्वन्तमुपगोभिरायत् ॥ ७ ॥

न । मा । तमत् । न । श्रमत् । न । उत । तन्द्रत् । न । वोचाम । मा ।
सुनोत । इति । सोमम् । यः । मे । पृणात् । यः । ददत् । यः ।
निऽबोधात् । यः । मा । सुन्वन्तम् । उप । गोभिः । आ । अयत् ॥ ७ ॥

सइन्द्रोमामांनतमत् नतमयतु नग्लपयतु तथानश्रमत् श्रान्तंमाकरोतु तमुग्लाने श्रमुतपसि-खेदेच अनयोर्हेतुमण्ण्यन्तयोर्लेटचडागमः छन्दस्युभयथेतिशपआर्धधातुकत्वाण्णेरनिटीतिणि-लोपः उतअपिचमांनतन्द्रत् नतन्द्रयेत् तन्द्राआलस्येनयुक्तंमाकरोतु तन्द्रीशब्दात्तत्करोतीति णिच् णाविष्ठवत्प्रातिपदिकस्येतिटिलोपः अन्यत्पूर्ववत् इन्द्रयागायसोमंमासुनोत माभिषुणु-तेति अन्यान्यजमानान्प्रतिनवोचाम नब्रवाम वक्तेश्छान्दसोलुङ् सुनोतेत्यत्र तप्तनप्तनथनाश्चेति तस्यतबादेशः तस्यपित्त्वेनङित्त्वाभावाद्गुणः यइन्द्रोमेममपृणात् कामान्पूरयेत् यश्चददत् अभी-ष्टंफलंदद्यात् यश्चनिबोधात् अस्मदीयंस्तोत्रंयागंवाअवगच्छेत् यइन्द्रःसुन्वन्तंसोममभिषुण्वन्तं मामांअस्मभ्यंदातव्यैर्गोभिःसहउपायत् उपागच्छेत् सइन्द्रइतिपूर्वत्रान्वयः पृणादित्यादिषुले-टचाडागमः ॥ ७ ॥

७. इन्द्र मुझे क्लेश न दें, श्रान्त न करें, आलसी न बनावें। हम कभी यह न कहें कि सोमाभिषव न करो। इन्द्र मेरी अभिलाषा पूर्ण करते, अभीष्ट दान करते, यज्ञ को जानते और गो-समूह लेकर अभिषवकर्त्ता के पास उपस्थित होते हैं।

अथाष्टमी-

सरस्वतित्वमस्माँअविड्ढिमरुत्वतीधृषतीजेषिशत्रून् ।
त्यंचिच्छर्धन्तंतविषीयमाणमिन्द्रोहन्तिवृषभंशण्डिकानाम् ॥ ८ ॥

सरस्वति । त्वम् । अस्मान् । अविड्ढि । मरुत्वती । धृषती ।
जेषि । शत्रून् । त्यम् । चित् । शर्धन्तम् । तविषीऽयमाणम् ।
इन्द्रः । हन्ति । वृषभम् । शण्डिकानाम् ॥ ८ ॥

हेसरस्वति सरणवतिदेवि त्वंअस्मानस्तोतॄन् अविड्ढि रक्ष रक्षार्थस्यावतेर्लेटचेतद्रूपम् त-थामरुत्वतीमरुद्भिर्युक्तामध्यमस्थानाहिवाक्सरस्वतीमरुतश्चमध्यमस्थानस्थाः अतस्तद्वतीसती धृषतीधर्षयन्तीशत्रून्दशातयितॄन्वैरिणोजेषिजय जयतेश्छान्दसःशपःश्लुः किञ्चायमिन्द्रः त्यंचित्

यमप्यसुरंहन्तिहतवान् व्यत्ययेनभूतार्थेलट् कीदृशं शर्धन्तं प्रसहनशीलं शृधुप्रसहने तविषीयमाणंतविषीबलमिवाचरन्तं सर्वस्यभंजनेशक्तं शण्डिकानां शण्डामर्कावसुरपुरोहितौ शण्डवंश्यानांमध्येवृषभंप्रधानम् ॥ ८ ॥

८. सरस्वती, तुम हमें बचाओ। मरुतों के साथ इकट्ठे होकर दृढ़तापूर्वक शत्रुओं को जीतो। इन्द्र ने शूराभिमानी और स्पर्द्धावान् शण्डिकों के प्रधान (शण्डामर्क) को मारा था।

योनः॒सनु॑त्यउ॒तवा॑जिघ॒त्नुर॑भि॒ख्याय॒तंति॒गि॒तेन॑विध्य ।
बृह॑स्पत॒आयु॑धैर्जे॒षि॒शत्रू॑न्द्रु॒हेरीष॑न्तं॒परि॑धेहिराजन् ॥ ९ ॥

यः । न॒ः । सनु॑त्यः । उ॒त । वा॒ । जि॒घ॒त्नुः । अ॒भि॒ऽख्याय॑ । तम् ।
ति॒गि॒तेन॑ । वि॒ध्य॒ । बृह॑स्पते । आयु॑धैः । जे॒षि॒ । शत्रू॑न् ।
द्रु॒हे । रिष॑न्तम् । परि॑ । धे॒हि॒ । रा॒ज॒न् ॥ ९ ॥

हेबृहस्पते योनोस्माकंसनुत्यः सनुतरित्यंतर्हितनाम अन्तर्हितेदेशेभवश्चोरः सगर्भसयूथसनुताद्यव उतवाअपिवा योजिघत्नुर्जिघांसुर्भवति तमभिख्यायसंवीक्ष्यतिगितेनतीक्ष्णेनायुधेनविध्यताडय यथास्मदीयान् शत्रून् आयुधैरायोधनसाधनैरिष्वादिभिर्जेषिजय तथा हेराजन्राजमानबृहस्पते द्रुहेद्रोग्ध्रेशत्रवेरिषन्तंहिंसन्तंवज्रं परिधेहि परितोधारय प्रक्षिपेत्यर्थः ॥ ९ ॥

९. बृहस्पति, जो अन्तर्हित देश में छिपकर हमारा प्राण-नाश करने का अभिलाषी है, उसे खोजकर तीखे हथियार से छेदो। आयुध से हमारे शत्रुओं को जीतो। राजा बृहस्पति, द्रोहकारियों के विरुद्ध प्राण-नाशक वज्र चारों ओर फेंको।

अ॒स्माके॑भि॒ः सत्व॑भिः शूर॒ शूरै॑र्वी॒र्या॑कृधि॒ यानि॑ते॒कर्त्वा॑नि ।
ज्योग॑भूवन्ननु॑धूपितासो ह॒त्वीतेषा॒माभ॑रानो॒वसू॑नि ॥ १० ॥

अ॒स्माके॑भिः । सत्व॑ऽभिः । शू॒र॒ । शूरैः॑ । वी॒र्या॑ । कृ॒धि॒ । यानि॑ ।
ते॒ । कर्त्वा॑नि । ज्योक् । अ॒भू॒व॒न् । अनु॑ऽधूपितासः । ह॒त्वी । तेषा॑म् ।
आ । भर । नः । वसू॑नि ॥ १० ॥

हेशूर शौर्यवन्निन्द्र अस्माकेभिरास्माकीनैःसत्वभिः परेषांसादकैः शूरैः शौर्योपेतैर्भटैः तानिवीर्या वीर्याणि वीरकर्माणिकृधिकुरु यानितेत्वयाकर्त्वानिकरणीयानि कृत्यार्थेतवैकेनितिकरोतेस्त्वन्प्रत्ययः ज्योक्चिरकालंअनुधूपितासः धूपायमानहृदयामदीयाःशत्रवोभूवन्नासन् हत्वीतान् हत्वा स्नात्व्यादयश्चेतीकारः तेषांशत्रूणां वसूनिधनानिनोस्मभ्यंआभरआहर ॥ १० ॥

१०. शूर इन्द्र, हमारे शत्रु-हन्ता वीरों के साथ अपने सम्पादनीय वीर-कार्यों को सम्पन्न करो। हमारे शत्रु बहुत दिनों से गर्वपूर्ण हो रहे हैं। उनका विनाश कर उनका धन हमें दो।

अथैकादशी—

तंवःशर्धंमारुतंसुम्नयुर्गिरोपब्रुवेनमसादैव्यंजनम् ।
यथारयिंसर्ववीरंनशामहाअपत्यसाचंश्रुत्यंदिवेदिवे ॥ ११॥१३॥

तम् । वः । शर्धम् । मारुतम् । सुम्नऽयुः । गिरा । उप । ब्रुवे । नमसा । दैव्यम् । जनम् । यथा । रयिम् । सर्वऽवीरम् । नशामहै । अपत्यऽसाचम् । श्रुत्यम् । दिवेऽदिवे ॥ ११ ॥१३॥

हेमरुतः वोयुष्माकंशर्धं बलंमारुतंमरुत्समूहरूपंदैव्यंदेवेनेन्द्रेण संबद्धंजनं प्रादुर्भूतंएवं गुणविशिष्टंतंबलं नमसानमस्कारेणहविषावागिरास्तोत्रेण सुम्नयुःसुखेच्छुरहंउपब्रुवेस्तौमि यथा येनप्रकारेणवयंसर्ववीरंसर्वैःवीरैर्विशेषेणशत्रूणांप्रेरकैर्भटैरुपेतं अपत्यसाचंअपत्यैरपतनहेतुभूतैः पुत्रादिभिरुपेतं श्रुत्यंश्रवणीयंप्रशस्यभूतं रयिंदिवेदिवेप्रतिदिवसंनशामहै व्यामवाम नशतिर्व्याप्तिकर्मा लेटचाडागमः वैतोन्यत्रेत्यैकारः ॥ ११ ॥

११. मरुतो, हम सुख की अभिलाषा से स्तुति और नमस्कार-द्वारा तुम्हारे दैव और प्रादुर्भूत तथा एकत्र बल की स्तुति करते हैं, ताकि उसके द्वारा हम प्रतिदिन वीर अपत्यवाले होकर प्रशंसनीय धन का उपयोग कर सकें।

॥ इतिद्वितीयस्यसप्तमेत्रयोदशोवर्गः ॥ १३ ॥

अस्माकमितिसप्तर्चंनवमंसूक्तम् गृत्समदस्यार्षंवैश्वदेवं अन्त्यात्रिष्टुप् शिष्टाजगत्यः तथाचानुक्रान्तम्—अस्माकंसप्तवैश्वदेवंत्रिष्टुबन्तमिति विनियोगोलैङ्गिकः ।

तत्रप्रथमा—

अस्माकंमित्रावरुणावतंरथमादित्यैरुद्रैर्वसुभिःसचाभुवा ।
प्रयद्वयोनपप्तन्वस्मनस्परिश्रवस्यवोहृषीवन्तोवनर्षदः ॥ १ ॥

अस्माकम् । मित्रावरुणा । अवतम् । रथम् । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा । प्र । यत् । वयः । न । पप्तन् । वस्मनः । परि । श्रवस्यवः । हृषीऽवन्तः । वनऽसदः ॥ १ ॥

मित्रावरुणा हेमित्रावरुणौ आदित्यैः धात्रर्यमादिभिर्द्वादशभिः रुद्रैः एकादशसंख्याकैः वसुभिः धरोध्रुवइत्यादिभिरष्टसंख्याकैः एवंत्रिभिर्देवगणैः सचाभुवासहभवन्तौसहवर्तमानौयुवां अस्माकं रथंअन्नलाभाय प्रवृत्तंअवतम् यद्यदास्मदीयारथाः वस्मनःपरिवसन्त्यस्मिन्निति व-

स्मनिवासस्थानं औणादिकोमनिन् तस्मात् स्थानात्परिउपरिदेशान्तरे पञ्चम्याःपरावध्यर्थे-इतिसत्वम् अध्यर्थउपर्यर्थइतिवृत्तिः वयोन पक्षिणइव प्रपप्तन् प्रपतन्ति प्रकर्षेणगच्छन्ति पते-श्छान्दसेलुङि लृदित्वात् च्लेरङादेशः पतःपुमितिपुमागमः कीदृशावयः श्रवस्यवोन्नकामाः हृषी-वन्तः मात्तहर्षाः वनर्षदः वनेवृक्षादौनिषण्णाः सांहितिकश्छान्दसोरेफोपजनः ॥ १ ॥

१. जिस समय हमारा रथ अन्नाभिलाषी, मदमत्त और वन-निषण्ण पक्षियों की तरह निवास-स्थान से दूसरे स्थान को जाता है, उस समय हे मित्र और वरुण, तुम लोग आदित्य, रुद्र और वसुओं के साथ मिलकर उसकी रक्षा करते हो।

अधस्मानउदवतासजोषसोरथंदेवासोअभिविक्षुवाजयुम् ।
यदाशवःपद्याभिस्तित्रतोरजःपृथिव्याःसानौजङ्घनन्तपाणिभिः ॥२॥

अध । स्म । नः । उत् । अवत । सऽजोषसः । रथम् । देवासः ।
अभि । विक्षु । वाजऽयुम् । यत् । आशवः । पद्याभिः । तित्रतः ।
रजः । पृथिव्याः । सानौ । जङ्घनन्त । पाणिऽभिः ॥ २ ॥

हेसजोषसः समानंप्रीयमाणाः देवासोदेवाः अधअधुनानोस्माकंवाजयुं वाजमन्नंकामय-मानंगतिविशेषयुक्तंवारथं विक्षुप्रजासुजनपदेषु अभिअभिमुखंउदवतउद्गमयत अवतिरत्रग-त्यर्थः स्मेतिपूरणः यद्यदास्मिन्रथेयुक्ताः आशवोव्यापनशीलाअश्वाः पद्याभिः पादसाध्याभिः गतिभिःरजोरञ्जकंमार्गंतित्रतः तरन्तः तरतेःशतरि बहुलंछन्दसीतिशपःश्लुः बहुलंछन्दसीत्य-भ्यासस्येत्वम् अभ्यस्तानामादिरित्याद्युदात्तत्वम् पृथिव्याःप्रथितायाः भूमेः सानौसमुच्छ्रितेप्र-देशेपाणिभिःपाण्युपलक्षितैः पादैः जघनन्त अत्यर्थंगच्छन्ति हन्तेर्यङ्लुगन्ताच्छान्दसोलङ् व्य-त्ययेनात्मनेपदम् बहुलंछन्दसीतिशपोलुगभावः ॥ २ ॥

२. समान प्रीतिवाले देवो, इस समय हमारे रथ की रक्षा करो। वह अन्न खोजने के लिए देश में गया है। इस रथ में जोते हुए घोड़े कदम से मार्ग तय करते और विस्तीर्ण भूमि के उन्नत प्रदेश पर आघात करते हैं। अथतृतीया—

उतस्यनइन्द्रोविश्वचर्षणिर्दिवःशर्धेनमारुतेनसुक्रतुः ।
अनुनुस्थात्यवृकाभिरूतिभीरथंमहेसनयेवाजसातये ॥ ३ ॥

उत । स्यः । नः । इन्द्रः । विश्वऽचर्षणिः । दिवः । शर्धेन ।
मारुतेन । सुऽक्रतुः । अनु । नु । स्थाति । अवृकाभिः । ऊतिऽभिः ।
रथम् । महे । सनये । वाजऽसातये ॥ ३ ॥

उतअपिचविश्वस्यचर्षणिः विश्वस्यसर्वस्यद्रष्टा यद्वा विश्वेचर्षणयोमनुष्यायस्यपरिचारकाः अथवाविश्वेसर्वेलोकाः चर्षणयोद्रष्टव्यायेन बहुव्रीहौविश्वंसंज्ञायामितिपूर्वपदान्तोदात्तत्वम् मारुतेनमरुत्समूहरूपेणशर्धेनबलेनसहसुक्रतुः शोभनकर्माशोभनप्रज्ञोवा स्यःसइन्द्रः अवृकाभिः हिंसकरहिताभिः ऊतिभीरक्षाभिःसहितःसन् दिवोद्युलोकादागत्यनुअद्यनोस्माकंरथंअनुस्थातिआनुगुण्येनाधितिष्ठतु छान्दसःशपोलुक् किमर्थं महे सनये महतेधनाय तथावाजसातये वाजस्यान्नस्य सातयेसंभजनार्थम् ॥ ३ ॥

३. अथवा––सर्वदर्शी इन्द्र मरुतों के पराक्रम से उक्त कर्म सम्पन्न करके, स्वर्गलोक से आते हुए, हिंसा-शून्य आश्रय के द्वारा महाधन और अन्न-प्राप्ति के लिए हमारे रथ के अनुकूल हों।

उतस्यदेवोभुवनस्यसक्षणिस्त्वष्टाग्नाभिःसजोषाजूजुवद्रथम् ।
इळाभगोबृहद्दिवोतरोदसीपूषापुरंन्धिरश्विनावधापती ॥ ४ ॥

उत । स्यः । देवः । भुवनस्य । सक्षणिः । त्वष्टा । ग्नाभिः ।
सऽजोषाः । जूजुवत् । रथम् । इळा । भगः । बृहत्ऽदिवा ।
उत । रोदसी इति । पूषा । पुरम्ऽधिः । अश्विनौ । अध ।
पती इति ॥ ४ ॥

उतअपिच स्यःसदेवोदानादिगुणयुक्तः भुवनस्यभूतजातस्यसक्षणिः सचनीयः सेव्यः ग्नाभिर्देवपत्नीभिः छंदांसिवैग्नाइतितैत्तिरीयकम्। गायत्र्यादीनिच्छन्दांसिचदेवपत्न्यइत्युक्तम सजोषाःसमानप्रीतिः एवंगुणविशिष्टस्त्वष्टाअस्मदीयंरथंजूजुवत् प्रेरयतु जुइतिसौत्रोधातुर्गत्यर्थः अस्माण्ण्यन्ताल्लुङिरूपम् तथा इळातिसृणांदेवीनामाद्याइडाख्यादेवीचरथंप्रेरयतु बृहद्दिवा बृहन्महद्दीव्यतिद्योततइतिबृहद्दिवः इगुपधलक्षणःकः सुपांसुलुगितिविभक्तेराकारः तादृशोभगश्चप्रेरयतु उतअपिचरोदसीद्यावापृथिव्यौपुरंधिर्बहुधीः पूषापोषकोदेवश्चअधशब्दश्चार्थे पती सूर्यायाभर्तारौअश्विनौचएतेसर्वेअस्मदीयंरथंप्रेरयन्त्वित्यर्थः ॥ ४ ॥

४. अथवा––संसार के सेवनीय वे त्वष्टा देव, देवपत्नियों के साथ, प्रीतियुक्त होकर हमारे रथ को चलावें। इला, महादीप्तिमान् भग, द्यावा-पृथिवी, बहुधी पूषा और सूर्या के स्वामी दोनों अश्विनीकुमार हमारा यह रथ चलायें।

अथपञ्चमी–

उतत्येदेवीसुभगेमिथूदृशोपासानक्ताजगंतामपीजुवा ।
स्तुषेयद्वांपृथिविनव्यसावचःस्थातुश्चवयस्त्रिवयाउपस्तिरे ॥ ५ ॥

उत । त्ये इति । देवी इति । सुभगे इति सुऽभगे ।
मिथुऽदृशा । उषसानक्ता । जगताम् । अपिऽजुवा । स्तुषे ।
यत् । वाम् । पृथिवि । नव्यसा । वचः । स्थातुः । च । वयः ।
त्रिऽवयाः । उपऽस्तिरे ॥ ५ ॥

उतअपिच त्ये वेप्रसिद्धे देवी देव्यौ देवनशीले सुभगेशोभनधनेमिथूदृशा मिथःपरस्परंपश्यन्त्यौ एवंभूतेउषासानक्ता उषाश्चरात्रिश्च जगतांजङ्गमानांअपीजुवाप्रेरयित्र्यौभवतः तस्मादस्मदीयमपिरथंप्रेरयताम् उत्तरोर्धर्चोद्यावापृथिव्यःप्रत्यक्षकृतः हेपृथिवि वांयुवां त्वांदिवंच नव्यसा नवीयसानवतरेणप्रशस्येनवा वचः वचसा सुपांसुलुगितितृतीयायालुक् यद्यदास्तुषेस्तुवे उत्तमस्यव्यत्ययेनमध्यमः तदानींस्थातुः स्थावरस्यव्रीह्यादेःसबन्धिवयोन्नंचरुपुरोडाशादिलक्षणं त्रिवयाः वयइत्यन्ननाम त्रीणिओषधिपशुसोमात्मकानि हविर्लक्षणान्यन्नानियस्यतादृशोहंउपस्तिरे उपस्तृणामिआज्येनोपस्तरणाभिघारणपूर्वकंप्रयच्छामीत्यर्थः स्तृञ्आच्छादने लट्युत्तमे छान्दसोविकरणस्यलुक् अत्रत्यश्चशब्दश्चणितिनिपातान्तरंपादपूरणम् ऋतइद्धातोरितीत्वं निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः ॥ ५ ॥

५. अथवा—प्रसिद्ध, द्युतिमती, सुभगा, परस्पर-दर्शिनी और जीवों की प्रेरयित्री उषा और रात्रि हमारा रथ चलायें। हे आकाश और पृथिवी, तुम दोनों की, नये स्तोत्र से स्तुति करता हूँ। स्थावर व्रीहि आदि अन्न देता हूँ। ओषधि, सोम और पशु—मेरे तीन प्रकार के अन्न हैं।

उतवःशंसमुशिजामिवश्मस्यहिर्बुध्न्योजएकपादुत ।
त्रितऋभुक्षाःसविताचनोदधेपान्नपादाशुहेमाधियाशमि ॥ ६ ॥
उत । वः । शंसम् । उशिजाम्ऽइव । श्मसि । अहिः । बुध्न्यः ।
अजः । एकऽपात् । उत । त्रितः । ऋभुक्षाः । सविता । चनः ।
दधे । अपाम् । नपात् । आशुऽहेमा । धिया । शमि ॥ ६ ॥

उतअपिच हेदेवाः उशिजामिव इवेतिसंप्रत्यर्थीयः अस्मत्तः स्तुतिं कामयमानानांवोयुष्माकंशंसंस्तुतिंसंप्रतिश्मसि उश्मसि कामयामहे वशकान्तौ इदन्तोमसिः ग्रहिज्यादिनासम्प्रसारणम् छान्दसोवर्णलोपः उतअपिच अहिर्बुध्न्यः बुध्नमन्तरिक्षम् तत्रभवोऽहिनामादेवः अजएकपाव् नजायतइत्यजः एकएवपद्यतेगच्छतीत्येकपात् अजएकपावसंज्ञकः सूर्यः त्रितस्तीर्णतमः ऋभुक्षाः उरुक्षयः उरुनिवासः ऋभूणांनिवासयितावा इन्द्रश्चसवितासर्वस्यप्रसविताचनोन्नंदधे विदधातु अस्मभ्यंकरोतु तथा आशुहेमाशीघ्रगामी हिगतावित्यस्मादन्येभ्योपिदृश्यन्तइतिमनिन् तादृशः अपांनपात् अपांपौत्रीयस्थानीयोग्निः अद्भ्यओषधिवनस्पतयोजायन्ते ओषधिवनस्पतिभ्यश्चायमग्निर्जायते इत्यग्नेरपांपौत्रत्वम् सचधियास्तुत्याशमि शमीतिकर्मनाम यज्ञकर्मणिमितोभ-

वर्तितिशेषः यद्वा धियाकर्मणाअस्मदीयेनपरिचरणलक्षणेनशमि शंसुखंतन्निमित्तंभवर्तिविशेषः ॥ ६ ॥

६. देवगण, तुम हमारी स्तुति की इच्छा करो। हम तुम्हारी स्तुति करने की इच्छा करते हैं। अन्तरिक्ष-जात अहि देवता (अहिर्बुध्न्य), सूर्य (अज एकपात्), त्रित, उरुनिवास इन्द्र (ऋभुक्षा) और सविता हमें अन्न प्रदान करें। शीघ्रगामी जल-नप्ता (अग्नि) हमारी स्तुति से प्रसन्न हों।

अथसप्तमी—

एतावोंवश्म्युद्यंतायजत्राअतंक्षन्नायवोनव्यंसेसम् ।
श्रवस्यवोवाजंचकानाःसप्तिर्नरथ्योअहंधीतिमंश्याः ॥ ७ ॥१४॥

एता । वः । वश्मि । उत्ऽयंता । यजत्राः । अतंक्षन् । आयवः । नव्यंसे । सम् । श्रवस्यवः । वाजम् । चकानाः । सप्तिः । न । रथ्यः । अहं । धीतिम् । अश्याः ॥ ७ ॥ १४ ॥

हेयजत्राःयजनीयाविश्वेदेवाः वोयुष्मदीयानिएताएतानिउद्यताउद्यतानिवचांसिवश्मिकामये नव्यसेनवतरायस्तुत्यतमाययुष्मद्गणायआयवोमत्प्रभृतयोमनुष्याः कामितानिस्तोत्राणिसमतक्षन् समस्कुर्वन्किमिच्छन्तः श्रवस्यवःश्रवणीयंयशोन्नंवाआत्मनइच्छन्तः वाजंबलंचकानाः कामयमानाः कनीदीप्तिकान्तिगतिषु लिटःकानचूरथ्योरथसंबन्धीसप्तिर्न सर्पणशीलोश्वइवयुष्मद्गणः धीतिमस्मदीयंकर्मअश्याः प्राप्नोतु अहपूरणः अशूव्याप्तौ व्यत्ययेनपरस्मैपदमध्यमौ बहुलंछन्दसीतिविकरणस्यलुक् ॥ ७ ॥

७. यजनीय विश्वदेवगण, हम तुम्हारी स्तुति करने की इच्छा करते हैं। तुम सर्वापेक्षा स्तुति-योग्य हो। अन्न और बल के अभिलाषी मनुष्यों ने तुम्हारे लिए स्तुति बनाई है। रथ के अश्व की तरह तुम्हारा बल हमारे लिए आये।

॥ इतिद्वितीयस्यसप्तमेचतुर्दशोवर्गः ॥ १४ ॥

अस्यमइत्यष्टर्चंदशमंसूक्तम् गृत्समदस्यार्षम् पञ्चाद्यास्तिस्रोनुष्टुभः शिष्टाःपञ्चजगत्यः प्रथमाद्यावापृथिवीया ततोद्वेऐन्द्यौत्वाष्ट्र्यौवा ततोद्वेराकादेवत्ये द्वेसिनीवालीदेवत्ये अन्त्यागुंग्वादिषड्देवताका तथाचानुक्रान्तम्—अस्यमेष्टौजागतंत्र्यनुष्टुबन्तंद्यावापृथिव्येकाद्वेऐन्द्यौत्वाष्ट्र्यौवाद्वेद्वेराकासिनीवाल्योरन्त्यालिङ्गोक्तदेवतेति । आभिप्लविकेचतुर्थेहनिवैश्वदेवशस्त्रेआद्यस्तृचोद्यावापृथिवीयनिविद्धानः तथाचसूत्रितम्—अस्यमेद्यावापृथिवीइतितिस्रस्ततंमेअपइतिवैश्वदेवमिति ।

तत्रैषाप्रथमा—

अस्यमेंद्यावापृथिवीऋतायतोभूतमंवित्रीवचंसःसिषांसतः।
ययोरायुःप्रतरंतेइदंपुरउपंस्तुतेवसूयुर्वांमहोदंधे ॥ १ ॥

अस्य। मे। द्यावापृथिवी इति। ऋतऽयतः। भूतम्। अवित्री इति। वचंसः। सिसांसतः। ययोः। आयुः। प्रऽतरम्। ते इति। इदम्। पुरः। उपंस्तुते इत्युपंऽस्तुते। वसुऽयुः। वाम्। महः। दधे ॥ १ ॥

द्यावापृथिवीहेद्यावापृथिव्यौ ऋतायतःऋतंयज्ञमात्मनइच्छतः सिषासतः युवांसंभक्तुमिच्छतःवचसः वक्तीतिवचाः स्तोताअस्तुन स्तोतुरस्यमेममअवित्रीअवित्र्यौपालयित्र्यौभूतंभवतम् ययोर्द्यावापृथिव्योरायुरन्नं प्रतरंप्रकृष्टतरमुत्पद्यतइतिशेषः इदमिदानींतेद्यावापृथिव्यौ उपस्तुते तत्रतत्रस्थितैःस्तोतृभिः स्तुते वां युवां वसूयुः धनकामोहंमहोमहतः विभक्तिव्यत्ययः महतास्तोत्रेणपुरोदधे पुरस्करोमि ॥ १ ॥

१. द्यावा-पृथिवी, जो स्तोता यज्ञ और तुम्हें प्रसन्न करने की इच्छा करता है, उसके तुम आश्रयदाता होओ। तुम्हारा अन्न सर्वापेक्षा उत्कृष्ट है। सभी द्यावा-पृथिवी की स्तुति करते हैं। अन्नकामी होकर मैं महास्तोत्र-द्वारा तुम्हारा स्तव करूँगा।

अथद्वितीया—

मानोगुह्यारिपआयोरहंन्दभन्मानआभ्योरीरधोदुच्छुनाभ्यः।
मानोवियौःसख्याविद्धितस्यंनःसुम्नायतामनंसातत्त्वेमहे ॥ २ ॥

मा। नः। गुह्याः। रिपः। आयोः। अहंन्। दभन्। मा। नः। आभ्यः। रीरधः। दुच्छुनाभ्यः। मा। नः। वि। यौः। सख्या। विद्धि। तस्यं। नः। सुम्नऽयता। मनंसा। तत्। त्वा। ईमहे ॥२ ॥

हेइन्द्रत्वष्टर्वा आयोर्मनुष्यस्यशत्रुभूतस्यगुह्याः गोप्याः ज्ञातुमशक्याः रिपोहिंसारूपाः मायाः नोस्मान्अहन् उपलक्षणमेतत् अहर्निरात्रौचमादभन्माहिंसिषुः तथानोस्मान्आभ्योदुच्छुनाभ्यः शुनमितिसुखनाम दुःशुनादुच्छुनाः दुःखकारिणीभ्यः शत्रुसेनाभ्यः नोस्मान्मारीरधः वशंमानैषीः रध्यतिर्वशगमनइतियास्कः। रधहिंसासंराध्योः अस्माण्णयन्ताल्लुङिचङिरूप-

१ नि० ६. ३२.

म् अपिच नोस्माकंसख्या सख्यानिसंखित्वानिमावियौः त्वयावियुक्तानिमाकार्षीः अपितुनो-स्माकंतस्यतवसखित्वंसुम्नायता सुखमस्माकमिच्छतामनसाविद्धिजानीहि क्रियाग्रहणंकर्तव्य-मितिकर्मणःसंप्रदानत्वाच्चतुर्थ्यर्थेषष्ठी तव त्वा तादृशंत्वां ईमहे अभिमतफलंयाचामहे सुपांसुलु-गितिवच्छन्दादुत्तरस्याविभक्तेर्लुक् ॥ २ ॥

२. इन्द्र, शत्रु की गुप्त माया हमें दिन या रात में मारने न पाये। हमें कष्ट-दात्री शत्रु-सेना के वश में नहीं करना। हमारी मैत्री नहीं छुड़ाना। हृदय में हमारे सुख की आकांक्षा करके हमारी मित्रता की स्मृति करना। तुम्हारे पास हम यही कामना करते हैं।

अहेळतामनसाश्रुष्टिमावहदुहानांधेनुंपिप्युषीमसश्चतम्।
पद्याभिराशुंवचसाचवाजिनंत्वांहिनोमिपुरुहूतविश्वहा ॥ ३ ॥

अहेळता। मनसा। श्रुष्टिम्। आ। वह। दुहानाम्। धेनुम्।
पिप्युषीम्। असश्चतम्। पद्याभिः। आशुम्। वचसा। च।
वाजिनम्। त्वाम्। हिनोमि। पुरुऽहूत। विश्वहा ॥ ३ ॥

हेइन्द्रत्वष्टर्वा अहेळताअक्रुध्यतामनसाश्रुष्टिंसुखकरींदुहानांदोग्ध्रींपिप्युषींप्रवृद्धांपीनां प्यायीवृद्धौ लिटःक्वसुः लिड्यङोश्चेतिपीभावः उगितश्चेतिङीप् सम्प्रसारणमितिसंप्रसारणम् शासिवसिघसीनांचेतिषत्वम् असश्चतं असक्तावयवांएवंभूतांधेनुंगांआवहआभिमुख्येनप्रापय अपिचहेपुरुहूत बहुभिराहूतेन्द्रत्वष्टर्वा पद्याभिः पादगतिभिः आशुंव्यापनशीलं वचसावाचाच वाजिनंवेगवंतंत्वांविश्वहासर्वेष्वहस्सुहिनोमिस्तुतिभिःप्रेरयामि हिगतौवृद्धौच ॥ ३ ॥

३. इन्द्र, प्रसन्न चित्त से सुखकरी, दुग्धवती, मोटी और मज़बूत गाय को ले आना। इन्द्र, तुम्हें सब बुलाते हैं। तुम बहुत ज़ोर चलते हो। तुम द्रुतभाषी हो। मैं दिन-रात तुम्हारी स्तुति करता हूँ।

पत्नीसंयाजेषुगृहपतेःप्राक्राकासिनीवाल्यौयष्टव्ये तत्रराकायागस्यराकामहमित्यादि-केयाज्यानुवाक्ये सूत्रितंच—राकामहंसिनीवालिकुहूमहमितिद्वेद्वेयाज्यानुवाक्येइति तथाआग्नि-मारुतेप्येतेधाय्ये सूत्रितश्च—राकामहमितिद्वेइति।

तयोराद्यात्रचतुर्थी—

राकामहंसुहवांसुष्टुतीहुवेश्रृणोतुनःसुभगाबोधतुत्मना।
सीव्यत्वपःसूच्याच्छिद्यमानयाददातुवीरंशतदायमुक्थ्यम् ॥ ४॥

राकाम्। अहम्। सुऽहवाम्। सुऽस्तुती। हुवे। श्रृणोतु। नः।
सुऽभगा। बोधतु। त्मना। सीव्यतु। अपः। सूच्या। अच्छि-
द्यमानया। ददातु। वीरम्। शतऽदायम्। उक्थ्यम् ॥ ४ ॥

संपूर्णचन्द्रापौर्णमासीराका तांदेवींसुहवां स्वाह्वानांआह्वानप्रयोजनकारिणींसुष्टुतीशोभनयास्तुत्याअहंहुवेआह्वयामि सुष्टुतिशब्दात्तृतीयैकवचनस्यसुपांसुलुगितिपूर्वसवर्णईकारः साच सुभगाशोभनधनानोस्माकमाह्वानंश्रृणोतु श्रुत्वाचत्मनाआत्मनास्वयमेवबोधतु अस्मदभिप्रायं बुध्यतां बुध्वाच अपःकर्मपुत्रोत्पादनलक्षणंसूच्यासूचीस्थानीययाअच्छिद्यमानयाअवच्छिन्नयानुग्रहबुद्ध्यासीव्यतु संतनोतु यथावस्त्रादिकंसूच्यास्यूतंचिरंतिष्ठति एवमिदंकरोतु कृत्वाच वीरंविक्रांतं शतदायं बहुधनंबहुप्रदंवाउक्थ्यंप्रशस्यंपुत्रंददातु ॥ ४ ॥

४. मैं उत्कृष्ट स्तोत्र-द्वारा आह्वान-योग्य राका वा पूर्णिमा रात्रि देवी को बुलाता हूँ। वे सुभग हैं, हमारा आह्वान सुनें। वे स्वयं हमारा अभिप्राय जानकर अच्छेद्य सूची के द्वारा हमारे कर्म को बुनें। वे अक्रान्त बहुधनवान् और वीर्यवान् पुत्र प्रदान करें।

यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ।
ताभिर्नोअद्यसुमनाउपागहिसहस्रपोषंसुभगेरराणा ॥ ५ ॥

याः । ते । राके । सुऽमतयः । सुऽपेशसः । याभिः । ददासि । दाशुषे ।
वसूनि । ताभिः । नः । अद्य । सुऽमनाः । उपऽआगहि ।
सहस्रऽपोषम् । सुऽभगे । रराणा ॥ ५ ॥

हेराकेदेवि सुपेशसः शोभनरूपास्तेतवयाःसुमतयः शोभनबुद्धयः याभिर्मतिभिः दाशुषेहविर्दत्तवतेयजमानायवसूनिधनानिददासि प्रयच्छसि अद्येदानींताभिर्मतिभिः सहितात्वंसुमनाः शोभनमनाभूत्वानोस्मान् उपागहि उपागच्छ गमेश्छान्दसःशपोलुक् अनुदात्तोपदेशेत्यादिनानुनासिकलोपः असिद्धवदत्राभादित्यस्यासिद्धत्वादेर्लुगभावः किंकुर्वती हेसुभगेशोभनधने सहस्रपोषंसहस्रसंख्याकस्यधनस्यपुष्टिंरराणाददती रादाने व्यत्ययेनशानच् छान्दसःशपःश्लुः अभ्यस्तानामादिरित्याद्युदात्तत्वम् ॥ ५ ॥

५. राका देवी, तुम जिस सुन्दर अनुग्रह से हव्यदाता को धन देती हो, आज प्रसन्न चित्त से उसी अनुग्रह के साथ पधारो। शोभन-भाग्यवती, हजारों प्रकार से तुम हमारी पुष्टि करती हो।

सिनीवाल्यायागेसिनीवालीत्यादिकेद्वेयाज्यानुवाक्ये सूत्रंपूर्वमुदाहृतम्
तत्रानुवाक्या सूक्तेषष्ठी—

सिनीवालिपृथुष्टुकेयादेवानामसिस्वसा ।
जुषस्वहव्यमाहुतंप्रजांदेविदिदिड्ढिनः ॥ ६ ॥

सिनीवालि । पृथुऽस्तुके । या । देवानाम् । असि । स्वसा ।
जुषस्व । हव्यम् । आऽहुतम् । प्रऽजाम् । देवि । दिदिड्ढि । नः ॥ ६ ॥

दृष्टचन्द्रामावास्यासिनीवाली हेसिनीवालि पृथुष्टुके पृथुजघनेपृथुसंहतकेशेवा यात्वंदेवानांस्वसासि स्वयंसञ्चारिणीभगिनीवाभवसि सात्वंआहुतं आभिमुख्येनाग्नौप्रक्षिप्तंहव्यंअस्मदीयं हविर्जुषस्वसेवस्व किञ्च हेदेवि सिनीवालि नोस्माकंप्रजांपुत्रादिकांदिदिड्ढि उपचिनु अतिसर्जयवा देहीत्यर्थः दिहउपचये लोटिछांदसःशपःश्लुः दिशअतिसर्जनेइत्यस्माद्वा ॥ ६ ॥

६. हे स्थूल-जाता सिनीवाली ! (अमावास्या), तुम देवों की भगिनी हो। प्रदत्त हव्य की सेवा करो। हमें अपत्य दो।

याសुबाहुःस्वङ्गुरिःसुषूमाबहुसूवरी ।
तस्यैविश्पत्न्यैहविःसिनीवाल्यैजुहोतन ॥ ७ ॥

या । सुऽबाहुः । सुऽअङ्गुरिः । सुऽसूमा । बहुऽसूवरी ।
तस्यै । विश्पत्न्यै । हविः । सिनीवाल्यै । जुहोतन ॥ ७ ॥

यासिनीवाली सुबाहुः शोभनबाहुः स्वङ्गुरिः शोभनाङ्गुलिः सुषूमा सुष्ठुप्रसवित्री षूङ्प्राणिप्रसवे अन्येभ्योपिदृश्यन्तइतिमनिन् कृदुत्तरपदप्रकृतिस्वरत्वम् बहुसूवरी बह्वीनांप्रजानांसवित्री तेनैवसूत्रेणक्वनिप् वनोरचेतिङीब्रेफौ कृदुत्तरपदप्रकृतिस्वरत्वम् तस्यैसिनीवाल्यैविश्पत्न्यैविशांपालयित्र्यै विभाषासपूर्वस्येतिपत्युर्नकारान्तादेशः अयस्मयादित्वेनभत्वाद्विशोजश्त्वाभावः परादिश्छन्दसिबहुलमित्युत्तरपदाद्युदात्तत्वम् हेऋत्विग्यजमानाः हविर्जुहोतन जुहुत तप्तनप्तनथनाश्चेतितनबादेशः ॥ ७ ॥

७. सिनीवाली (अमावस्या वा देवपत्नी) सुबाहु, सुन्दर अँगुलियोंवाली, सुप्रसविनी और बहुप्रसवित्री हैं। उन्हीं लोक-रक्षिका देवी को लक्ष्य करके हव्य दो। अथाष्टमी—

यागुङ्गूर्यासिनीवालीयाराकायासरस्वती ।
इन्द्राणीमह्वऊतयेवरुणानींस्वस्तये ॥ ८ ॥ १५ ॥

या । गुङ्गूः । या । सिनीवाली । या । राका । या । सरस्वती ।
इन्द्राणीम् । अह्वे । ऊतये । वरुणानीम् । स्वस्तये ॥ ८ ॥ १५ ॥

अत्रगुङ्गूशब्देनराकासिनीवाल्योःसाहचर्यात्कुहूरुच्यते यागुङ्गूः कुहूस्तामह्वे आह्वयामि एवमुत्तरत्रापियोज्यम् तथा यासरस्वतीतांदेवींअह्वे इन्द्राणीमिन्द्रस्यपत्नींऊतयेरक्षणार्थंअह्वे आह्वयामि तथावरुणानींवरुणस्यपत्नींस्वस्तयेअविनाशायाह्वयामि इन्द्रवरुणेत्यादिनाङीष् आनुगागमश्च ॥ ८ ॥

८. जो गुङ्गू, कुहू अथवा देवपत्नी हैं, जो सिनीवाली, राका और सरस्वती हैं, उन्हें मैं बुलाता हूँ। मैं आश्रय के लिए इन्द्राणी और सुख के लिए वरुणानी को बुलाता हूँ।

॥ इतिद्वितीयस्यसप्तमेपञ्चदशोवर्गः ॥ १५ ॥ ॥ इतिद्वितीयेमण्डलेतृतीयोनुवाकः ॥ ३ ॥

चतुर्थेनुवाकेएकादशसूक्तानि तत्रातेपितरितिपञ्चदशर्चंप्रथमंसूक्तम् गृत्समदस्यार्षंत्रैष्टुभंरौद्रम् अनुक्रान्तञ्च—आतेपञ्चोनारौद्रमिति शूलगवादिरुद्रयज्ञेषुअनेनसूक्तेनप्रतीचींदिगुपस्थेया सूत्रितञ्च—कद्रुद्रायेमारुद्रायातेपितरिमारुद्रायस्थिरधन्वनइतिसर्वरुद्रयज्ञेषुदिशामुपस्थानइति। रुद्रदेवत्येपशौआतेपितरितिहविषोनुवाक्या सूत्रितञ्च—आतेपितर्मरुतांसुम्नमेतुप्रबभ्रवेवृषभायश्वितीचइतिविस्रइति। अत्रशौनकः—चतुर्दशीमुपोष्यैकांकृष्णस्यजुहुयाच्चरुम्।आतेसूक्तेनरौद्रेणप्रत्यृचंवाग्यतःशुचिः ॥ १ ॥ पूर्वमाज्याहुतीर्हुत्वाथोपस्थायचशङ्करम् । हविःशेषेणवर्तेतनैकान्तरमतन्द्रितः ॥ २ ॥ पूर्णेमासेजयेन्मृत्युंरोगैश्चपरिमुच्यतइति ।

सैषासूक्तेप्रथमा—

आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्यसंदृशोयुयोथाः ।
अभिनोवीरोअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिः ॥ १ ॥

आ । ते । पितः । मरुताम् । सुम्नम् । एतु । मा । नः । सूर्यस्य । सम्ऽदृशः । युयोथाः । अभि । नः । वीरः । अर्वति । क्षमेत । प्र । जायेमहि । रुद्र । प्रऽजाभिः ॥ १ ॥

हेमरुतांपितः मरुत्संज्ञानांदेवानामुत्पादकरुद्र परमपिच्छन्दसीतिषष्ठ्चन्तस्यपूर्वामन्त्रिताङ्गवद्भावात्सर्वानुदात्तत्वम् तेत्वदीयं अस्मभ्यं दातव्यं सुम्नंसुखं आएतुआगच्छतु रुद्रस्य च मरुतांपितृत्वमिदंपित्रेमरुतामित्यत्राख्यायिकामुखेनावादिष्म तथात्वंनोस्मान् सूर्यस्य संदृशः सन्दर्शनान्मायुयोथाः माथृपक्कार्षीः युमिश्रणामिश्रणयोः लङिच्छान्दसःशपःश्लुः छन्दस्युभयथेत्यार्धधातुकत्वेनङित्त्वाभावाद्गुणः अर्वतिशत्रौ भ्रातव्योवाअर्वेतिश्रुतेः । नोस्माकंवीरः वीर्यवान् पुत्रादिः अभिक्षमेत अभिभवतु यद्वा शत्रौ वीरस्त्वं नोस्मान् अभिक्षमेथाः अस्मान्कृतापराधान् अभिक्षमस्व हेरुद्र प्रजाभिः पुत्रपौत्रादिभिः प्रजायेमहि प्रभूताःस्याम॥१॥

१. मरुतों के पिता रुद्र, तुम्हारा दिया हुआ सुख हमारे पास आये। सूर्य-दर्शन से हमें अलग नहीं करना। हमारे वीर पुत्र शत्रुओं को पराजित करें। रुद्र, हम पुत्रों और पौत्रों में अनेक हो जायें।

अथद्वितीया—

त्वादत्तेभीरुद्रशंतमेभिःशतंहिमाअशीयभेषजेभिः ।
व्य१स्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीः ॥ २ ॥

---

१ तै० स० ६. ३. ८. ।

त्वाऽदत्तेभिः । रुद्र । शम्ऽतमेभिः । शतम् । हिमाः । अशीय ।
भेषजेभिः । वि । अस्मत् । द्वेषः । विऽतरम् । वि । अंहः ।
वि । अमीवाः । चातयस्व । विषूचीः ॥ २ ॥

हेरुद्र त्वादत्तेभिः त्वयादत्तैः शन्तमेभिः अतिशयेनसुखकरैर्भेषजेभिः भेषजैरौषधैः शतं हिमाः शतंहेमन्तान् शतंसंवत्सरान् अशीय व्याप्नुयाम् अश्नोतेर्लिङि छान्दसोविकरणस्यलुक् अपिच अस्मदस्मत्तः द्वेषोद्वेष्टॄन् विचातयस्व विनाशय तथा अंहः पापंवितरमत्यन्तं विचातयस्व अमीवाः रोगान् विषूचीःविषुनानाअञ्चतीः कृत्स्नशरीरव्यापकान् रोगान् विचातयस्व अस्मत्तः पृथक्कृत्यविनाशय ॥ २ ॥

२. रुद्र, हम तुम्हारी दी हुई सुखकारी ओषधि के द्वारा सौ वर्ष जीवित रहें। हमारे शत्रुओं का विनाश करो, हमारा पाप सर्वांशतः दूर कर दो। सर्वशरीरव्यापी व्याधि को भी दूर करो।

श्रेष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसांवज्रबाहो ।
पर्षिणःपारमंहसःस्वस्तिविश्वाअभीतीरपसोयुयोधि ॥ ३ ॥

श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसाम् ।
वज्रबाहो इति वज्रऽबाहो । पर्षि । नः । पारम् । अंहसः ।
स्वस्ति । विश्वाः । अभिऽईतीः । रपसः । युयोधि ॥ ३ ॥

हेरुद्र जातस्योत्पन्नस्यसर्वस्यजगतोमध्ये श्रियाऐश्वर्येणश्रेष्ठःप्रशस्यतमोसिभवसि तथा हेवज्रबाहो आयुधहस्तरुद्र तवसां प्रवृद्धानांमध्येतवस्तमः अतिशयेनप्रवृद्धोसि सत्वं नोस्मान् अंहसः पापस्य पारंतीरं स्वस्तिक्षेमेणपर्षिपारय तथा रपसः पापस्य विश्वाः सर्वाः अभीतीरभिगमनानियुयोधिपृथक्कुरु यौतेश्छान्दसःशपःश्लुः वाछन्दसीत्यपित्त्वस्यविकल्पनात् ङित्त्वाभावे अङितश्चेतिहेर्धिः ॥ ३ ॥

३. रुद्र, ऐश्वर्य में तुम सबसे श्रेष्ठ हो। हे वज्रबाहु, प्रवृद्धों में तुम अतीव प्रवृद्ध हो। हमें पाप के उस पार ले चलो, हमारे पास पाप न आने पाये। अथचतुर्थी—

मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती ।
उन्नोवीराँअर्पयभेषजेभिर्भिषक्तमंत्वाभिषजांशृणोमि ॥ ४ ॥

मा। त्वा। रुद्र। चुक्रुधाम। नम॑:ऽभिः। मा। दुः॑ऽस्तुती। वृषभ।
मा। सऽहू॑ती। उत्। नः। वीरान्। अर्पय। भेषजेभिः।
भिषक्ऽतमम्। त्वा। भिषजा॑म्। शृणोमि ॥ ४ ॥

हेरुद्र त्वात्वांनमोभिः अयथाक्रियमाणैर्नमस्कारैः हविर्भिर्वा माचुक्रुधाम माक्रोधयाम क्रुद्धंमाकार्ष्म क्रुधकोपे अस्माण्ण्यन्ताल्लुङिचङिरूपम् हेवृषभ कामानांवर्षितः दुष्टुती दुःस्तुत्या अशोभनयास्तुत्या माचुक्रुधामेत्येव तथा सहूती सहूत्या विसदृशैरन्यैर्देवैः सहाह्वानेनमाक्रोधयाम श्रेष्ठोहि स्वस्मादन्यूनेनसहाह्वानेक्रुद्धोभवति सत्वंनोस्माकंवीरान्पुत्रान् भेषजेभिः त्वदीयैर्भेषजैरौषधैः उदर्पय उत्कृष्टंसंयोजय हेरुद्र त्वा त्वांभिषजांचिकित्साभिज्ञानांमध्येभिषक्तमं अतिशयेनभैषज्यस्यकर्तारं शृणोमि प्रथमोदंव्योभिषगितिचमन्त्रान्तरेप्युक्तम् ॥ ४ ॥

४. अभीष्टवर्षी रुद्र, हम अन्याय्य नमस्कार, अन्याय्य स्तुति अथवा विसदृश देवों के सत्य आह्वान-द्वारा तुम्हें क्रुद्ध न करें। हमारे पुत्रों को ओषधि-द्वारा परिपुष्ट करो। मैंने सुना है, तुम वैद्यों में सर्वश्रेष्ठ हो।

हवी॑मभि॒र्हव॑ते॒यो ह॒विर्भि॒रव॒स्तोमे॑भी रु॒द्रंदि॑षीय।
ऋ॒दू॒दर॑:सु॒हवो॒मानो॑ अ॒स्यैब॒भ्रुः सु॒शिप्रो॒रीरधन्म॒नायै॑ ॥ ५ ॥ १६ ॥

हवी॑मऽभिः। हव॑ते। यः। ह॒विःऽभिः। अव। स्तोमे॑भिः।
रु॒द्रम्। दि॒षीय। ऋ॒दू॒दर॑:। सु॒ऽहव॑:। मा। नः। अ॒स्यै।
ब॒भ्रुः। सु॒ऽशिप्र॑:। रीरधत्। म॒नायै॑ ॥ ५ ॥ १६ ॥

योरुद्रः हविर्भिश्चरुपुरोडाशादिभिः सहितंहवीमभिराह्वानैः स्तुतिलक्षणैः हवते आहूयते स्तूयते व्यत्ययेनकर्मणिकर्तृप्रत्ययः बहुलंछन्दसीतिह्वयतेःसम्प्रसारणम् तंरुद्रंस्तोमेभिः स्तोत्रैरवदिषीय अवखण्डयामि पृथक्करोमि अपगतक्रोधंकरोमीतियावत् दोअवखण्डने व्यत्ययेनात्मनेपदं बहुलंछन्दसीतीत्वम् ऋदूदरः ऋदूदरोमृदूदरइतियास्कः। सुहवः शोभनाह्वानः बभ्रुः भर्तासर्वस्य बभ्रुवर्णोवा सुशिप्रःशिप्रेहनूनासिकेवा शोभनशिप्रः एवंगुणविशिष्टःसरुद्रः अस्यैमनायै हन्मीति मन्यमानाबुद्धिर्मना तस्यै नोस्मान् मारीरधत् मावशंनैषीत् रधहिंसासंराध्योः अस्माण्ण्यन्ताल्लुङिचङिरूपम रध्यतिर्वशगमनइतियास्कः ॥ ५ ॥

५. जो रुद्रदेव हव्य के साथ आह्वान-द्वारा आहूत होते हैं, उनका, स्तोत्र-द्वारा, मैं क्रोध दूर करूँगा। कोमलोदर, शोभन आह्वानवाले, बभ्रु (पीत) वर्ण और सुनासिक रुद्र हमें न मारें।

॥ इतिद्वितीयस्यसप्तमंषोडशोवर्गः ॥ १६ ॥

---

१ तै० सं० ४. ५. १.। २ नि० ६. ४.। ३ नि० ६. ३२.

अथषष्ठी—

उन्मांममन्दवृषभोमरुत्वान्त्वक्षीयसावयसानाधमानम् ।
घृणीवच्छायामरपाअशीयाविवासेयंरुद्रस्यंसुम्नम् ॥६॥

उत् । मा । ममन्द । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा ।
नाधमानम् । घृणिऽइव । छायाम् । अरपाः । अशीय । आ ।
विवासेयम् । रुद्रस्यं । सुम्नम् ॥ ६॥

वृषभः कामानांवर्षिता मरुत्वान्मरुद्भिःपुत्रैर्युक्तोरुद्रः नाधमानंयाचमानं मामांत्वक्षीयसादीप्तेनवयसान्नेनउन्ममन्द उत्कर्षेणतर्पयतु अपिचाहंघृणीव छायां यथासूर्यकिरणतप्तः छायांप्रविशति एवंरुद्रस्यसुम्नं सुखंअरपाःअपापःसन् अशीयव्याप्नुयां तदर्थंतंरुद्रमाविवासेयं परिचरेयं विवासतिःपरिचरणकर्मा ॥ ६ ॥

६. मैं प्रार्थना करता हूँ कि अभीष्टवर्षी और मरुत्वाले रुद्र मुझे दीप्त अन्न-द्वारा तृप्त करें। जैसे धूप का मारा मनुष्य छाया को आश्रित करता है, वैसे ही मैं भी पाप-शून्य होकर रुद्रदत्त सुख प्राप्त करूँगा। मैं रुद्र की परिचर्या करूँगा।

क्व१स्यतेरुद्रमृळयाकुर्हस्तोयोअस्तिभेषजोजलाषः ।
अपभर्तारपसोदैव्यस्याभीनुमांवृषभचक्षमीथाः ॥ ७ ॥

क्व । स्यः । ते । रुद्र । मृळयाकुः । हस्तः । यः । अस्ति । भेषजः ।
जलाषः । अपऽभर्ता । रपसः । दैव्यस्य । अभि । नु । मा । वृषभ ।
चक्षमीथाः ॥ ७ ॥

हेरुद्र तेतवमृळयाकुः सुखयिता स्यः सहस्तः क्वकुत्रवर्तते योहस्तःभेषजःभैषज्यरुवजलाषः सर्वेषांसुखकरोस्तिभवति सहस्तोविद्यतेएव तेनहस्तेनमांरक्षेतिभावः अपिच हेवृषभ कामानांवर्षितः दैव्यस्यदेवकृतस्यरपसःपापस्यअपभर्ताअपहर्ताविनाशयिताभूत्वा कृतापराधं मामांनुक्षिप्रंअभिचक्षमीथाः अभिक्षमस्व क्षमूषसहने लङिछान्दसःशपःश्लुः बहुलंछन्दसीतिइडागमः ॥ ७ ॥

७. रुद्र, तुम्हारा वह सुखदाता हाथ कहाँ है, जिससे तुम दवा तैयार करके सबको सुखी करते हो। अभीष्टवर्षी रुद्र, दैव-पाप के विघातक होकर तुम मुझे शीघ्र क्षमा करो।

रुद्रदेवत्येपशौ वपापुरोडाशहविषांक्रमेणप्रबभ्रवइत्याद्यास्तिस्रोयाज्याः सूत्रितश्च—प्रबभ्रवेवृषभायश्वितीचइतितिस्रआपश्चातार्नासत्यापुरस्तादिति ।

तत्राद्यासूक्तेऽष्टमी–

प्रबभ्रवेंवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि ।
नमस्याकल्मलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनाम ॥ ८ ॥

प्र । बभ्रवे । वृषभार्य । श्वितीचे । महः । महीम् । सुऽस्तुतिम् ।
ईरयामि । नमस्य । कल्मलीकिनम् । नमःऽभिः । गृणीमसि ।
त्वेषम् । रुद्रस्य । नाम ॥ ८ ॥

बभ्रवेविश्वस्यभर्त्रेबभ्रुवर्णायवा वृषभायकामानांवर्षित्रे तद्भूतमसहकारिणेवा श्वितीचेश्वै-त्यमश्चते श्वितावर्णे औणादिकइन्प्रत्ययः श्वितीमश्चतीति अञ्चतेर्ऋत्विगित्यादिनाक्विन्प्रत्ययः चतुर्थ्येकवचनेअचइत्यकारलोपेचाविति दीर्घत्वम् उदात्तनिवृत्तिस्वरेणविभक्तेरुदात्तत्वम् एवं गुणविशिष्टायरुद्रायमहोमहींमहतोपिमहतींसुष्टुतिंशोभनस्तुतिंप्रेरयामि प्रकर्षेणोच्चारयामि हे-स्तोतः कल्मलीकिनं ज्वलतोनामधेयमेतत् ज्वलन्तं कलयत्यपगमयतिमलमितिकल्मलीकंतेजः तद्वन्तंरुद्रं नमोभिर्नमस्कारैर्हविर्भिर्वानमस्यपूजय वयंच रुद्रस्यमहादेवस्यत्वेषंदीप्तंनामगृणीम-सि गृणीमः संकीर्तयामः गृशब्दे क्रैयादिकः इदन्तोमसिः प्वादीनांह्रस्वः ॥ ८ ॥

८. बभ्रुवर्ण, अभीष्टवर्षी और श्वेत आभावाले रुद्र को लक्ष्य करके अतीव महती स्तुति का हम उच्चारण करते हैं। हे स्तोता, नमस्कार-द्वारा तेजस्वी रुद्र की पूजा करो। हम उनके उज्ज्वल नाम का संकीर्त्तन करते हैं।

स्थिरेभिरङ्गैःपुरुरूपउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः ।
ईशानादस्यभुवनस्यभूरेर्नवाउयोषद्रुद्रादसुर्यम् ॥ ९ ॥

स्थिरेभिः । अङ्गैः । पुरुऽरूपः । उग्रः । बभ्रुः । शुक्रेभिः ।
पिपिशे । हिरण्यैः ॥ ईशानात् । अस्य । भुवनस्य । भूरेः ।
न । वै । ऊँ इति । योषत् । रुद्रात् । असुर्यम् ॥ ९ ॥

स्थिरेभिः स्थिरैर्दृढैरङ्गैः अवयवैर्युक्तः पुरुरूपः अष्टमूर्त्यात्मकैर्बहुभीरूपैरुपेतः उग्रउ-द्गूर्णस्तेजस्वी बभ्रुर्भर्ताबभ्रुवर्णोवारुद्रः शुक्रेभिःदीप्तैः हिरण्यैर्हिरण्मयैः हितरमणीयैर्वाअलङ्का-रैः पिपिशेदीप्यते पिशअवयवे कर्मणिलिट् ईशानादीश्वरात् अस्यभुवनस्य भूतजातस्यभूरे-र्भर्तुः रुद्रात् असुर्यंअसुक्षेपणेअसेरुरन् असुरः क्षेप्ता तत्रसाधुः असुर्यंबलंनवाउयोषत् नैवपृथ-ग्भवति योतेर्लेटचडागमः सिब्बहुलंलेटीतिसिप् ॥ ९ ॥

९. दृढाङ्ग, बहुरूप, उग्र और बभ्रुवर्ण रुद्र दीप्त और हिरण्मय अलंकार से सुशोभित होते हैं। रुद्र सारे भुवनों के अधिपति और भर्त्ता हैं। उनका बल अलग नहीं होता।

अथदशमी—

अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपम् ।
अर्हन्निदंदयसेविश्वमभ्वंनवाओजीयोरुद्रत्वदस्ति ॥ १०॥१७॥

अर्हन् । बिभर्षि । सायकानि । धन्व । अर्हन् । निष्कम् ।
यजतम् । विश्वऽरूपम् । अर्हन् । इदम् । दयसे । विश्वम् ।
अभ्वम् । न । वै । ओजीयः । रुद्र । त्वत् । अस्ति ॥ १० ॥ १७ ॥

हेरुद्र त्वंअर्हन्अर्होयोग्यएवसन्सायकानिशरान्धन्वधनुश्चबिभर्षिधारयसि तथाअर्हन्ने-वयजतंयजनीयंपूजनीयंविश्वरूपं बहुविधरूपयुक्तंनिष्कंहारंबिभर्षि तथाअर्हन्नेवइदंविश्वंस-र्वंअभ्वं महन्नामैतत् अतिविस्तृतंजगद्दयसेरक्षसि देङ्रक्षणे हेरुद्र त्वत्त्वत्तोन्यत्किंचित् ओ-जीयः ओजस्वितरंबलवत्तरंनवाअस्ति नखलुविद्यते अतस्त्वमेवोक्तव्यापारेषुयोज्यइत्यर्थः ओ-जस्शब्दान्मत्वर्थीयोविनिः अतआतिशायनिकइष्ठन् विन्मतोर्लुक् टेरितिटिलोपः ॥ १० ॥

१०. पूजायोग्य रुद्र, तुम धनुर्बाणधारी हो । पूजार्ह, तुम नाना रूपोंवाले हो और तुमने पूजनीय निष्क को धारण किया है । अर्चनार्ह, तुम सारे व्यापक संसार की रक्षा करते हो । तुम्हारी अपेक्षा अधिक बली कोई नहीं है ।

॥ इतिद्वितीयस्यसप्तमेसप्तदशोवर्गः ॥ १७ ॥

प्रयाणेभृगस्यामनोज्ञावाचःश्रुत्वास्तुहिश्रुतमित्येतांजपेत् सूत्रितश्च—स्तुहिश्रुतंगर्तसदं-युवानमितिमृगस्येति ।

सैषानैकादशी—

स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रम् ।
मृळाजरित्रेरुद्रस्तवानोन्यंतेअस्मन्निवपन्तुसेनाः ॥ ११ ॥

स्तुहि । श्रुतम् । गर्तऽसदम् । युवानम् । मृगम् । न । भीमम् ।
उपऽहत्नुम् । उग्रम् । मृळ । जरित्रे । रुद्र । स्तवानः । अन्यम् ।
ते । अस्मत् । नि । वपन्तु । सेनाः ॥ ११ ॥

हेस्तोतः श्रुतंविश्रुतंप्रख्यातंरुद्रंस्तुहि कीदृशं गर्तसदं गर्तोरथस्तत्रसीदन्तंयुवानंनित्यत-रुणं मृगंनभीमं मृगंसिंहमिवभयङ्करं उपहत्नुं उपहन्तारं शत्रूणांउग्रमुद्गूर्णं हेरुद्र त्वंस्तवानः अ-स्माभिःस्तूयमानःसन्जरित्रेस्तोत्रेमह्यंमृळसुखय तेत्वदीयाःसेनाः अस्मदन्यंअस्मद्व्यतिरिक्तं पुरुषंनिवपन्तु निघ्नन्तु ॥ ११ ॥

११. हे स्तोता, विख्यात रथ पर चढ़े, युवा, पशु की तरह भयंकर और शत्रुओं के विनाशक तथा उग्र रुद्र की स्तुति करो। रुद्र, स्तुति करने पर तुम हमें सुखी करते हो। तुम्हारी सेना शत्रु का विनाश करे।

कुमारश्चित्पितरंवन्दमानंप्रतिनानामरुद्रोपयन्तम्।
भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे ॥ १२ ॥

कुमारः। चित्। पितरम्। वन्दमानम्। प्रति। ननाम। रुद्र। उपऽयन्तम्। भूरेः। दातारम्। सत्ऽपतिम्। गृणीषे। स्तुतः। त्वम्। भेषजा। रासि। अस्मे इति ॥ १२ ॥

वन्दमानं आयुष्मान्भवसौम्येतिस्तुवन्तंपितरं कुमारश्चित् यथाकुमारःचिदित्येतदुपमार्थे हे-रुद्र उपयन्तमस्मत्समीपेगच्छन्तंत्वांप्रतिननाम प्रतिनतोस्मि अपिच भूरेर्बहुनोधनस्यदातारंस-त्पतिंसतांपालयितारं पत्यावैश्वर्येइतिपूर्वपदप्रकृतिस्वरत्वम् हेरुद्र एवंभूतं त्वांगृणीषे स्तौमि सिप-स्त्विङ्गंतिङोभवन्तीतिसेआदेशः स्तुतश्चत्वंअस्मेअस्मभ्यंभेषजाभेषजानिरासिदेहि ॥ १२ ॥

१२. जैसे आशीर्वाद देते समय पिता को पुत्र नमस्कार करता है; वैसे ही हे रुद्र, तुम्हारे आने के समय हम तुम्हें नमस्कार करते हैं। रुद्र, तुम बहुधनदाता और साधुओं के पालक हो। स्तुति करने पर तुम हमें ओषधि देते हो।

यावोभेषजामरुतःशुचीनियाशंतमावृषणोयामयोभु।
यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मि ॥ १३ ॥

या। वः। भेषजा। मरुतः। शुचीनि। या। शम्ऽतमा। वृषणः। या। मयःऽभु। यानि। । मनुः। अवृणीत। पिता। नः। ता। शम्। च। योः। च। रुद्रस्य। वश्मि ॥ १३ ॥

हेमरुतोरुद्रपुत्राः वोयुष्माकंयायानिभेषजाभेषजानिअस्मदारोग्यहेतुभूतान्यौषधानिशुची-निशुद्धानिनिर्मलानिसन्ति हेवृषणः कामानांवर्षितारोमरुतः यायानिचयुष्मदीयानिभेषजानिशं-तमाअतिशयेनसुखकराणि यायानिचभेषजानिमयोभुमयोभूनि मयसःसुखस्यभावयितृणिनो-स्मत्पितामनुः यानिभेषजानियुष्मदीयान्यवृणीतवृतवान् तातानिभेषजानिरुद्रस्यमहादेवस्यसं-बन्धिशंचयोश्चयच्छमनीयानांरोगाणामुपशमनंयावनीयानांभयानांयद्यावनं अस्मत्तः पृथक्करणं तदुभयंचवश्मिकामये वशकान्तौ आदादिकः ॥ १३ ॥

१३. मरुतो, तुम्हारी जो निर्मल ओषधि है, हे अभीष्टवर्षीगण तुम्हारी जो ओषधि अतीव सुखदात्री है, जिस ओषधि को हमारे पिता मनु ने चुना था, वही सुखकर और भयहारक ओषधि हम चाहते हैं।

परि॑णो॒हे॒तीरु॒द्रस्य॑वृज्या॒:परि॑त्वे॒षस्य॑दुर्म॒तिर्म॒हीगा॑त् ।
अव॑स्थि॒रामघव॑द्भ्यस्तनुष्व॒मीढ्व॑स्तो॒काय॒तन॑यायमृळ ॥ १४ ॥

परि॑ । नः॒ । हे॒तिः । रु॒द्रस्य॑ । वृ॒ज्याः॒ । परि॑ । त्वे॒षस्य॑ । दुः॒ऽम॒तिः ।
म॒ही । गा॒त् । अव॑ । स्थि॒रा । म॒घव॑त्ऽभ्यः । त॒नु॒ष्व॒ । मीढ्वः॑ ।
तो॒काय॑ । तन॑याय । मृ॒ळ ॥ १४ ॥

रुद्रस्यमहादेवस्यहेतिरायुधंनोस्मान्परिवृज्याःपरिवर्जयतु तथात्वेषस्यदीप्तस्यरुद्रस्यमही महतीदुर्मतिः दुःखकारिणीबुद्धिश्चपरिगात् अस्मान् वर्जयित्वान्यत्रगच्छतु अपपरीवर्जने हेमीढ्वः सेचनसमर्थरुद्र स्थिरास्थिराणि त्वदीयानिधनूंषिमघवद्भ्यः हविर्लक्षणधनयुक्तेभ्योयजमानेभ्यः अवतनुष्व अवततज्यानिकुरु तथातोकायास्मत्पुत्रायतनयायतत्पुत्रायचमृळ सुखंकुरु ॥ १४ ॥

१४. रुद्र का हेति-आयुध हमें छोड़ दे। दीप्त रुद्र की महती दुर्मति भी हमें छोड़ दे। सेचन-समर्थ रुद्र, धनवान् यजमान के प्रति अपने धनुष की ज्या शिथिल करो। हमारे पुत्रों और पौत्रों को सुखी करो।

ए॒वाब॑भ्रोवृषभचेकितान॒यथा॑देव॒नहृ॑णी॒षेनहं॑सि ।
ह॒व॒न॒श्रुन्नो॑रुद्रे॒हबो॑धिबृ॒हद्व॑देमवि॒दथे॑सु॒वीराः॑ ॥ १५ ॥ १८ ।

ए॒व । ब॒भ्रो॒ इति॑ । वृ॒ष॒भ॒ । चे॒कि॒ता॒न॒ । यथा॑ । दे॒व॒ । न ।
हृ॒णी॒षे । न । हंसि॑ । ह॒व॒न॒ऽश्रुत् । नः॒ । रु॒द्र॒ । इ॒ह । बो॒धि॒ ।
बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥ १५ ॥ १८ ॥

हेबभ्रो जगतोभर्तः बभ्रुवर्णवा वृषभ कामानांवर्षितः चेकितान सर्वंजानन् हेदेवद्योतमान रुद्र यथायेनप्रकारेणनहृणीषेनक्रुध्यसि नचहंसि हृणीङ्लज्जायां अयंक्रुध्यतिकर्माच एव एवंहवनश्रुत् अस्मदीयमाह्वानंश्रृण्वन् नोस्मान् हेरुद्र इहास्मिन्देशे बोधिबुध्यस्व विदथेयज्ञे गृहेवासुवीराः शोभनपुत्राः सन्तः बृहत्प्रौढं त्वदीयंस्तोत्रंवदेमोच्चारयाम ॥ १५ ॥

१५. अभीष्टवर्षी, बभ्रुवर्ण, दीप्तिमान्, सर्वज्ञ और हमारा आह्वान सुननेवाले रुद्र, हमारे लिए तुम यहाँ ऐसी विवेचना करो कि हमारे प्रति कभी क्रुद्ध न हो, हमें कभी विनष्ट न करो। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करेंगे।

॥ इतिद्वितीयस्यसप्तमेष्टादशोवर्गः ॥ १८ ॥

धारावराइतिपञ्चदशर्चंद्वितीयंसूक्तं गात्संमदंमारुतं अन्त्यात्रिष्टुप् शिष्टाजगत्यः तथाचानुक्रान्तम्—धारावरामारुतंत्रिष्टुबन्तमिति पृष्ठ्याभिप्लवषडहयोस्तृतीयेहन्याग्निमारुतश-

त्वस्यइदंमारुतनिविद्धानं सूत्रितंच–वैश्वानरायधिषणांधारावरामरुतस्त्वमग्नेप्रथमोअङ्गिरा-
इत्याग्निमारुतमिति ।

तत्रैषाप्रथमा–

धारावरामरुतोधृष्ण्वोजसोमृगानभीमास्तविषीभिरर्चिनः ।
अग्नयोनशुशुचानाऋजीषिणोभृमिंधमन्तोअपगाअवृण्वत ॥१॥

धारावराः । मरुतः । धृष्णुऽओजसः । मृगाः । न । भीमाः ।
तविषीभिः । अर्चिनः । अग्नयः । न । शुशुचानाः । ऋजीषिणः ।
भृमिम् । धमन्तः । अप । गाः । अवृण्वत ॥ १ ॥

धारावरा उदकधारयान्तरिक्षमावृण्वन्तः यद्वा धाराणांधृतानांस्थिराणांवृक्षादीनां निवारयितारः चालयितारः यद्वा सर्वस्यजगतोधारयितारः धृष्ण्वोजसः परेषांधर्षकेणबलेनयुक्ताः अतएवमृगानभीमाः सिंहाइवभयङ्कराः तविषीभिरात्मीयैर्बलैः वृष्टिप्रदानादिना अर्चिनः सर्वजगत् पूजयन्तः अग्नयोनशुशुचानाः दीप्तावह्नयइवदीप्यमानाः शुचदीप्तौ लटःकानच् ऋजीषिणः ऋजीषमुदकंतद्वन्तः यद्वा ऋजीषोपगतसारःसोमः तेनयुक्ताः तृतीयसवनेह्याग्निमारुते मरुतःस्तूयन्ते तत्रचसवनद्वये अभिषुतंगतसारं सोममभिषुण्वन्ति अतस्तेषांतद्युक्तत्वं एवंभूतामरुतः भृमिंभ्राम्यन्तं मेघंधमन्तः वर्षणार्थंइतस्ततःप्रेरयन्तः गाः तदन्तर्गतावर्ष्याः अपः अपावृण्वत अपावृताकुर्वन्ति यथासर्वैर्दृश्यन्ते तथाप्रवर्षन्तीत्यर्थः यद्वा भृम्याख्योवीणाविशेषः तंधमन्तोवादयन्तः गाः वत्सनाम्नाऽसुरेणापिहिताः अपावृण्वत अपगतावरणाअकुर्वन् ॥१॥

१. जलधारा से मरुत् लोग आकाश को छिपा लेते हैं। उनका बल दूसरे को पराजित करता है। वे पशु की तरह भयंकर हैं। वे बल-द्वारा संसार को व्याप्त कर लेते हैं। वे वह्नि की तरह दीप्तिमान् और जल से परिपूर्ण हैं। वे भ्रमणकर्त्ता मेघ को इधर-उधर भेजकर जल को गिराते हैं।

अथद्वितीया–

द्यावोनस्तृभिश्चितयन्तखादिनोव्य१भ्रियानद्युतयन्तवृष्टयः ।
रुद्रोयद्वोमरुतोरुक्मवक्षसोवृषाजनिपृश्न्याःशुक्रऊधनि ॥ २ ॥

द्यावः । न । स्तृऽभिः । चितयन्त । खादिनः । वि । अभ्रियाः ।
न । द्युतयन्त । वृष्टयः । रुद्रः । यत् । वः । मरुतः । रुक्मऽवक्षसः ।
वृषा । अजनि । पृश्न्याः । शुक्रे । ऊधनि ॥ २ ॥

स्तृभिः नक्षत्रनामैतव् यदाहयास्कः—ऋक्षास्तृभिरितिनक्षत्राणामिति। नक्षत्रैर्द्यावोन यथा-द्युलोकाश्रितयन्तचेतयन्ति स्वात्मानंज्ञापयन्ति चितीसंज्ञाने प्रकाशन्तइत्यर्थः तथाखादिनः श-त्रूणांखादकामरुतः स्वकीयैराभरणैर्ज्ञायंते यद्वा खादः कटकं तद्युक्ताःसन्तः प्रकाशन्ते त-थावृष्टयोवर्षकामरुतः अभ्रियानअभ्रेषुभवाविद्युतइव विद्युतयन्त सर्वजगद्विद्योतयन्ति प्रकाश-यन्ति अभ्रशब्दाद्भवार्थे समुद्राभ्राद्धइतिघप्रत्ययः शेषःप्रत्यक्षकृतः रुक्मवक्षसः रुक्मंरोच-मानाभरणंवक्षस्युरसियेषां तादृशाहेमरुतः यद्यदावोयुष्मान् वृषासेचनसमर्थोरुद्रोमहादेवः पृ-श्न्याःपृश्निर्माध्यमिकावाक्तस्याः संबन्धिनिशुक्रेनिर्मलेऊधनिउच्छ्रितप्रदेशेअजनिअजनयव त-दानोमितिपूर्वत्रसंबन्धः यद्वा पृश्निर्नानावर्णाइयंभूमिःपुरागोरूपधरासीव् तस्यांमहेशोवृषोभू-त्वामरुतउत्पादयामासेत्याचक्षते तदत्रोच्यते—हेमरुतोयद्यस्माद्वोयुष्मान्वृषावृषरूपोरुद्रः पृश्न्या-गोः शुक्रेनिर्मलेऊधनिऊधसिपयसउत्पत्तिस्थानेअजनिअजीजनव् तस्माद्यूयंएवंमहानुभा-वाजाताइत्यर्थः तथाचतैत्तिरीयकम्—पृश्नियैवैपयसोमरुतोजाताइति ॥ २ ॥

२. सुवर्णहृदय मरुतो, चूंकि सेचन-समर्थ रुद्र ने पृश्नि के निर्मल उदर में तुम्हें उत्पन्न किया है; इसलिए, जैसे आकाश नक्षत्रों से सुशोभित होता है, वैसे ही तुम भी अपने आभरण से सुशोभित होओ। तुम शत्रु-भक्षक और जल-प्रेरक हो। तुम मेघस्थ विद्युत् की तरह शोभित होओ।

अथतृतीया—

उक्षन्तेअश्वाँअत्याँइवाजिषुनदस्यकर्णैस्तुरयन्तआशुभिः।
हिरण्यशिप्रामरुतोदविध्वतःपृक्षंयाथपृषतीभिःसमन्यवः ॥ ३ ॥

उक्षन्ते। अश्वान्। अत्यान्ऽइव। आजिषु। नदस्य। कर्णैः।
तुरयन्ते। आशुऽभिः। हिरण्यऽशिप्राः। मरुतः। दविध्वतः।
पृक्षम्। याथ। पृषतीभिः। सऽमन्यवः ॥ ३ ॥

मरुतः अश्वान् व्याप्तान् लोकानउक्षंतेसिञ्चन्ति अशूव्याप्तौ औणादिकःक्वन्प्रत्ययः आजिषुसङ्ग्रामेषु अत्यानिव सततगामिनस्तुरगान्यथाखेदापनोदाय उदकैःसिञ्चंति तद्वव अ-पिच तेमरुतः आशुभिः शीघ्रगमनैरश्वैः नदस्य शब्दवतोमेघस्यकर्णैः कृतैर्मध्यप्रदेशैः तुरयन्ते वर्षणार्थंवृष्ट्युत्पादनाय त्वरितंगच्छन्ति तुरत्वरणे शेषःप्रत्यक्षकृतः हेहिरण्यशिप्राः शिप्रं शिरस्त्राणं सुवर्णमयशिरस्त्राणाः समन्यवः समानमनस्काः समानक्रोधावा हेमरुतः दविध्वतः महीरुहादिकंकंपयन्तोयूयं धूञ्कंपनेइत्यस्माद्याधन्यादावतद्रूपंनिपात्यते पृषतीभिः युष्मदथे

---

१ नि० ३. २०.।

योजिताभिः श्वेतबिंदुङ्कितााभिः मृगीभिः वडवाभिर्वा पृक्षं अन्ननामैतत् हविर्लक्षणान्नवन्तंयजमानंअर्शआदित्वादच् याथगच्छथ ॥ ३ ॥

३. युद्ध में तुरंग की तरह मरुद्गण विशाल भुवन को सिक्त करते हैं। वे घोड़े पर चढ़कर शब्दायमान मेघ के कान के पास से होकर द्रुत वेग से जाते हैं। मरुतो, तुम हिरण्य-शिरस्त्राणवाले और समान-क्रोधवाले हो। तुम वृक्ष आदि कम्पित करते हो। तुम पृषती (बिन्दु-चिह्नित) मृग पर चढ़कर अन्न के लिए जाते हो।

पृक्षेताविश्वाभुवनाववक्षिरेमित्रायवासदमाजीरदानवः।
पृषदश्वासोअनवभ्रराधसऋजिप्यासोनवयुनेषुधूर्षदः ॥ ४ ॥

पृक्षे। ता। विश्वा। भुवना। ववक्षिरे। मित्राय। वा। सदम्। आ। जीरऽदानवः। पृषत्ऽअश्वासः। अनवभ्रऽराधसः। ऋजिप्यासः। न। वयुनेषु। धूःऽसदः ॥ ४ ॥

पृक्षे पृक्षवते हविर्लक्षणान्नयुक्तायजमानायताताानिविश्वासर्वाणिभुवनाभुवनान्युदकानिमित्राय वाशब्दउपमार्थः मित्रायेवसदंसदाआववक्षिरे मरुतआवहन्ति यद्वा वाशब्दोवधारणे मित्रभूतायजमानायैव पृक्षेन्नेनिमित्तभूतेसतिवृष्ट्युदकान्यावहंति कीदृशामरुतः जीरदानवः क्षिप्रदानाः पृषदश्वासः पृषद्भिःश्वेतबिंदुभिर्युक्ताअश्वायेषांतेतथोक्ताः अनवभ्रराधसः भ्रशुभ्रंशुअधःपतने अवभ्रंशनमवभ्रः डोन्यत्रापिदृश्यतइतिडप्रत्ययः नास्त्यवभ्रोयस्येतिबहुव्रीहौनञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं अनवभ्रंभ्रंशनरहितंराधोधनंयेषांते बहुव्रीहौपूर्वपदप्रकृतिस्वरत्वं ऋजिप्यासोन ऋजुअकुटिलंप्रामुवन्तोगच्छन्तोश्वाइववयुनेषुगन्तृषुमध्ये धूर्षदः धुरिमेघस्यवहनेसीदन्तोनिषण्णाइत्यर्थः ॥ ४ ॥

४. मरुद्गण मित्र की तरह, हव्ययुक्त यजमान के लिए, सर्वदा समस्त जल ढोते हैं। वे दानशील, पृषती-मृगवाले, अक्षय, अन्नवाले और अकुटिलगामी अश्व की तरह पथिकों के आगे जाते हैं।

इन्धन्वभिर्धेनुभीरुप्शदूधभिरध्वस्मभिःपथिभिर्भ्राजदृष्टयः।
आहंसासोनस्वसराणिगन्तनमधोर्मदायमरुतःसमन्यवः॥५॥१९॥

इन्धन्वऽभिः। धेनुऽभिः। रप्शदूधऽभिः। अध्वस्मऽभिः। पथिऽभिः। भ्राजत्ऽऋष्टयः। आ। हंसासः। न। स्वसराणि। गन्तन। मधोः। मदाय। मरुतः। सऽमन्यवः ॥ ५ ॥ १९ ॥

समन्यवः समानमनस्काः समानक्रोधाः समानतेजसोवाहेमरुतः भ्राजदृष्टयोदीप्यमानायुधायूयं इंधन्वभिः समिन्धनवद्भिः इन्धनशब्दाच्छन्दसीवनिपावितिमत्वर्थीयोवनिप् छान्दसोवर्णलोपः धेनुभिः प्रीणयितृभिश्च रप्शदूधभिः विरप्शीतिमहन्नाम महोधस्कैः ऊधांसिजलस्रोतोमार्गाः यद्वा रपलपव्यक्तायांवाचि शब्दायमानोच्छ्रितप्रदेशैः अध्वरस्मभिः ध्वंसनरहितैः पथिभिः पतन्तिगच्छन्तीतिपन्थानोमेघाः एवंभूतैर्मेघैःसहमार्गैरेववाआगन्तन आगच्छत किमर्थं मधोर्मदाय सोमस्यमदार्थं तत्रदृष्टान्तः—हंसासोन यथाहंसाः स्वसराणिस्वकीयानि निवासस्थानानि प्राप्नुवन्तितद्वत् ॥ ५ ॥

५. हे समान-क्रोध और दीप्तिमान् आयुधवाले मरुतो, जैसे हंस अपने निवास-स्थान पर जाता है, वैसे ही तुम भी महाजल स्रोतवाले मेघों के साथ और धेनु-युक्त होकर विघ्न-शून्य मार्ग से, मधुर सोम-रस से उत्पन्न हर्ष-लाभ के लिए आओ।

॥ इतिद्वितीयस्यसप्तमेएकोनविंशोवर्गः ॥ १९ ॥

आनोब्रह्माणिमरुतःसमन्यवोनरांनशंसःसवनानिगन्तन ।
अश्वामिवपिप्यतधेनुमूधनिकर्ताधियंजरित्रेवाजपेशसम् ॥ ६ ॥

आ । नः । ब्रह्माणि । मरुतः । सऽमन्यवः । नराम् । न । शंसः । सवनानि । गन्तन । अश्वाम्ऽइव । पिप्यत । धेनुम् । ऊधनि । कर्त । धियम् । जरित्रे । वाजऽपेशसम् ॥ ६ ॥

समन्यवः समानमनसः समानक्रोधावाहेमरुतः नोस्माकंब्रह्माणिअन्ननामैतत् अन्नानि सवनानि अभिषुत सोमलक्षणानिहवींषिआगन्तन आगच्छत गमेर्लोटिछान्दसःशपोलुक् तप्तनप्तनथनाश्चेतितस्यतनबादेशः अतएवङित्वाभावादनुनासिकलोपाभावः तत्रदृष्टान्तः—नरांनशंसः नरामस्माकंशंसः शंसनीयंस्तोत्रं यथा आगच्छथतद्वत् नरशब्दात् षष्ठीबहुवचनस्यानित्यमागमशासनमितिनुडभावः शंसः कर्मणिघञंतआद्युदात्तः सुपांसुलुगित्यमःसुआदेशः आगत्यचधेनुं उदकदानेन प्रीणयितारमश्वमिवऊधनि पिप्यत यथाअश्वाःपीनावयवाभवन्ति तद्वन्मेघंवर्षणसमर्थं आप्यायितं कुरुतेत्यर्थः अपिचजरित्रेस्तोत्रे वाजपेशसंवाजैरन्नैराश्लिष्टं पिशअवयवे धियंकर्मकर्त कुरुत करोतेश्छान्दसःशपोलुक् पूर्ववत्तशब्दस्यतबादेशः ॥ ६ ॥

६. हे समान-क्रोधवाले मरुतो, जैसे तुम स्तोत्र से आते हो, वैसे ही हमारे अभिषुत अन्न के पास आओ। घोड़ी की तरह गाय का अधोदेश पुष्ट करो और यजमान का यज्ञ अन्नवाला करो।

अथसप्तमी—

तंनोदातमरुतोवाजिनंरथआपानंब्रह्मचितयंद्दिवेदिवे ।
इषंस्तोतृभ्योवृजनेषुकारवेसनिंमेधामरिष्टंदुष्टरंसहः ॥ ७ ॥

तम् । नः । दात । मरुतः । वाजिनम् । रथे । आपानम् । ब्रह्म ।
चितयत् । दिवेऽदिवे । इषम् । स्तोतृऽभ्यः । वृजनेषु । कारवे ।
सनिम् । मेधाम् । अरिष्टम् । दुस्तरम् । सहः ॥ ७ ॥

हेमरुतः तंपुत्रंनोस्मभ्यंदात दत्त प्रयच्छत छान्दसःशपोलुक् कीदृशं वाजिनमन्नवन्तं बलवन्तंवारथेरंहणेयुष्मदीयेआगमनेनिमित्तभूतेसति दिवेदिवेप्रतिदिवसंचितयत्प्रज्ञापयत् युष्मद्गुणमख्यापकंब्रह्मस्तोत्रंआपानंआप्नुवन्तं अपिच इषमन्नंस्तोतृभ्योस्मभ्यंदात प्रयच्छत तथावृजनेषुसङ्ग्रामेषुकारवेस्तोत्रे वचनव्यत्ययः मेधांयुद्धप्रज्ञांसनिंधनदातृत्वंच अरिष्टंशत्रुभिरहिंसितंदुस्तरंशत्रुभिस्तरीतुमशक्यंसहोबलंचप्रयच्छत ॥ ७ ॥

७. मरुतो, तुम हमें अन्न-युक्त पुत्र दो। वह, तुम्हारे आगमन के समय, प्रतिदिन तुम्हारा गुण-कीर्त्तन करेगा। तुम स्तोताओं को अन्न दो। युद्ध-काल में स्तोता को दानशीलता, युद्ध-कौशल, ज्ञान और अक्षय तथा अतुल बल दो।

यद्युञ्जतेमरुतोरुक्मवक्षसोश्वान्रथेषुभगआसुदानवः ।
धेनुर्नशिश्वेस्वसरेषुपिन्वतेजनायरातहविषेमहीमिषम् ॥ ८ ॥

यत् । युञ्जते । मरुतः । रुक्मऽवक्षसः । अश्वान् । रथेषु । भगे ।
आ । सुऽदानवः । धेनुः । न । शिश्वे । स्वसरेषु । पिन्वते ।
जनाय । रातऽहविषे । महीम् । इषम ॥ ८ ॥

रुक्मवक्षसः रोचमानाभरणोरस्काः सुदानवः शोभनदानामरुतः यद्यदारथेषुभगेभजनीयेस्थाने धुरीत्यर्थः अश्वानायुञ्जते आभिमुख्येनयुक्तान्कुर्वन्ति तदानीमेवरातहविषेदत्तहविष्कायजनाययजमानायमहींमहतीमिषमन्नंतत्कारणभूतमुदकंवास्वसरेषुस्वकीयेषुगृहेषुपिन्वते सिञ्चंतिकिरन्ति पिविसेचने तत्रदृष्टान्तः—धेनुर्नशिश्वे यथाधेनुः प्रस्नुतस्तनीसती स्वकीयायवत्सायक्षीरंप्रयच्छतितद्वत् ॥ ८ ॥

८. मरुतों के वक्षःस्थल में दीप्त आभरण हैं। उनका दान सबके लिए सुखकर है। वे जिस समय रथ में घोड़े जोतते हैं, उसी समय जैसे धेनु बछड़े को दूध देती है वैसे ही वे हव्यदाता यजमान के लिए उसके गृह में यथेष्ट अन्न देते हैं।

अथनवमी—

योनोमरुतोवृकतातिमर्त्योरिपुर्दधेवसवोरक्षतारिषः ।
वर्तयततपुंषाचक्रियाभितमवरुद्राअशसोहन्तनावधः ॥ ९ ॥

यः । नः । मरुतः । वृकऽताति । मर्त्यः । रिपुः । दधे । वसवः ।
रक्षत । रिषः । वर्तयत । तपुंषा । चक्रिया । अभि । तम् । अव ।
रुद्राः । अशसः । हन्तन । वधरिति ॥ ९ ॥

हेमरुतः योमर्त्योमनुष्यः वृकतातिंआदाता वृकः वृकआदाने वृकज्येष्ठाभ्यांतिल्तातिलौचच्छन्दसीतिस्वार्थिकस्तातिल्प्रत्ययः तादृशःसन्नोस्माकंरिपुर्दधे रिपुतयाआत्मानंधारयति हेवसवोवासंयितारोमरुतः रिषोहिंसकादस्मान्रक्षत पालयत अस्माकंशत्रुभूतंमर्त्यंतपुषातापयित्र्याचक्रिया ऋष्टयाख्ययाशक्त्याअभिवर्तयत अभितोनिवर्तयत हेरुद्राः रुद्रपुत्राः यद्वा रोरूयमाणाद्द्रवन्तः अशसोभक्षकस्य अशभोजने इत्यस्मादौणादिकोसिप्रत्ययः तादृशस्यराक्षसादेर्वधः हननसाधनमायुधंअवहन्तनअवयुत्यास्मत्तःपृथक्कृत्यनाशयत हन्तेर्लोटितप्तनप्तनथनाश्चेतितनप् ॥ ९ ॥

९. मरुतो जो मनुष्य वृक की तरह हमसे शत्रुता करता है, हे वसुगण, उस हिंसक के हाथ से हमें बचाओ। उसे ताप-प्रद चक्र-द्वारा चारों ओर से हटाओ। रुद्रगण, तुम उसके सारे अस्त्रों को दूर फेंककर उसे विनष्ट करो।

अथदशमी—

चित्रंतद्वोमरुतोयामचेकितेपृश्न्याऊधरप्यापयोदुहुः ।
यद्वानिदेनवमानस्यरुद्रियास्त्रितंजरायजुरतामदाभ्याः ॥ १० ॥ २०

चित्रम् । तत् । वः । मरुतः । याम । चेकिते । पृश्न्याः । यत् ।
ऊधः । अपि । आपयः । दुहुः । यत् । वा । निदे । नवमानस्य ।
रुद्रियाः । त्रितम् । जराय । जुरताम् । अदाभ्याः ॥ १० ॥ २० ॥

हेमरुतः वोयुष्माकं तत् चित्रं चायनीयंयामप्रापणं चेकिते सर्वैर्ज्ञायते इदानींपरोक्षवदाह अपिशब्दःप्रसिद्धौ यद्यदाखलुपृश्न्याः माध्यमिकायावाचःसंबन्धिनं ऊधः उद्धतंमेघं आपयः प्रापयितारोमरुतः दुहुःदुहंति दुहेश्छान्दसोलिट् छन्दसिचेतिवक्तव्यमितिद्विर्वचनाभावः यद्वा यदाचनवमानस्य स्तुवतः त्रितस्यनिदे निंदकायशत्रवेहिंसांकुतवंतइतिशेषः णिदि-

कुत्सायां क्विप्चेतिक्विप् तदानीं हेअदाभ्याः अहिंस्याः रुद्रियाः रुद्रस्यपुत्रामरुतः त्रितस्प-र्धिजुरतांहिंसतांशत्रूणां जरायजरणायविनाशनायअभूतेतिशेषः ॥ १० ॥

१०. मरुतो, जिस समय तुमने पृश्नि के अधोभाग का दोहन किया था, उस समय स्तोता के निन्दक की हत्या की थी और त्रित के शत्रुओं का वध किया था। अहिंसनीय रुद्रपुत्रो, उस समय तुम्हारी विचित्र क्षमता को सबने जाना था। ॥ इतिद्वितीयस्यसप्तमेविंशोवर्गः ॥ २० ॥

तान्वोमहोमरुतएवयाव्नोविष्णोरेषस्यप्रभृथेहवामहे ।
हिरण्यवर्णान्ककुहान्यतस्रुचोब्रह्मण्यन्तःशंस्यंराधईमहे ॥ ११ ॥

तान् । वः । महः । मरुतः । एवऽयाव्नः । विष्णोः । एषस्य ।
प्रऽभृथे । हवामहे । हिरण्यऽवर्णान् । ककुहान् । यतऽस्रुचः ।
ब्रह्मण्यन्तः । शंस्यम् । राधः । ईमहे ॥ ११ ॥

हेमरुतः एवयाव्नः एवंगन्तव्यं स्तोत्रंयज्ञंवागंतृन्महोमहतोमहानुभावांस्तान् वोयुष्मान् वि-ष्णोर्व्यापकस्यग्रहचमसादिषुसर्वत्रव्याप्यवर्तमानस्यएषस्यएषणीयस्यप्रार्थनीयस्यसोमस्यप्रभृ-थेप्रभरणे अभिषवादिभिःप्रकर्षेणसंपादनेसति हवामहे आह्वयामहे आहूयच हिरण्यवर्णान् हितरमणीयवर्णान्वाककुहान् श्रेष्ठान्स्तुत्यान्वा एवंभूतांस्तान् यतस्रुचः यागायोद्यतस्रुचः ब्रह्मण्यन्तः ब्रह्मस्तोत्रं तदिच्छन्तोवयंशंस्यं प्रशंसनीयंराधोधनं ईमहेयाचामहे ॥ ११ ॥

११. महासुभग मरुतो, तुम सदा यज्ञ-स्थल में जाते हो। यथेष्ट और प्रार्थनीय सोम के तैयार हो जाने पर हम तुम्हें बुलाते हैं। स्तुति-पाठक स्रुक् को उठाकर स्वर्ण-वर्ण और सर्व-श्रेष्ठ स्तुति-योग्य मरुद्गण से प्रशंसनीय धन की याचना करते हैं।

तेदशग्वाःप्रथमायज्ञमूहिरेतेनोहिन्वन्तूषसोव्युष्टिषु ।
उषानरामीररुणैरपोर्णुतेमहोज्योतिषाशुचतागोअर्णसा ॥ १२ ॥

ते । दशऽग्वाः । प्रथमाः । यज्ञम् । ऊहिरे । ते । नः । हिन्वन्तु ।
उषसः । विऽउष्टिषु । उषाः । न । रामीः । अरुणैः । अप ।
ऊर्णुते । महः । ज्योतिषा । शुचता । गोऽअर्णसा ॥ १२ ॥

ते मरुतः दशग्वाः येदशभिर्मासैःसिद्धिंगताःअङ्गिरसस्तद्रूपाभूत्वा प्रथमाआदित्येभ्यः प्रथमभाविनःसन्तः यज्ञमूहिरेअवहन् आदित्यानामङ्गिरसांचस्वर्गगमनंप्रतिस्पर्धमानानाम-ध्येपूर्वमेवाङ्गिरसोयागाननुष्ठायस्वर्गंप्राप्ताः तथाचश्रूयते—आदित्याश्चैवेहासन्नङ्गिरसश्चतेग्निना-

ग्निमयजन्तेति। तादृशास्ते उषसोव्युष्टिषुविवासेषुप्रभातेषुसत्सुनोस्मान्हिन्वन्तु प्रेरयन्तु हिगतौ वृद्धौच रामीः कृष्णवर्णारात्रीः उषोनयथाउषाः अरुणैरारोचमानैःस्वतेजोभिः अपोर्णुवे अपवृणोत्यपसारयति तथामहोमहताशुचतादीप्यमानेन गोअर्णसागच्छदुदकेनज्योतिषासूर्या-ख्येनतमोनिवारयन्ति सूर्यमण्डलमावृण्वतोवृत्रादीन्हत्वासर्वं जगत्प्रकाशयन्तीत्यर्थः ॥ १२ ॥

१२. स्वर्गगामी अङ्गिरोरूपी मरुतों ने प्रथम यज्ञ का वहन किया था। उषा के आने पर मरुद्गण हमें यज्ञ आदि में प्रवृत्त करें। जैसे उषा अरुणवर्ण किरण-जाल से कृष्णवर्णा रात्रि को हटाती हैं, वैसे ही मरुद्गण विशाल, दीप्तिमान् और जल-स्रावी ज्योति से अन्धकार को दूर करते हैं।

ते॒क्षो॒णीभि॑रुरु॒णेभि॒र्नाञ्जिभी॑रु॒द्रा ऋ॒तस्य॒ सद॑नेषु वावृधुः ।
नि॒मे॒घमा॑ना॒ अत्ये॑न॒ पाज॑सा सुश्च॒न्द्रं वर्णं॑ दधिरे सु॒पेश॑सम् ॥ १३ ॥

ते । क्षो॒णीभि॑ः । अ॒रु॒णेभि॑ः । न । अ॒ञ्जिऽभि॑ः । रु॒द्राः । ऋ॒तस्य॑ । सद॑नेषु । व॒वृ॒धुः । नि॒ऽमेघ॑मानाः । अत्ये॑न । पाज॑सा । सु॒ऽच॒न्द्रम् । वर्ण॑म् । द॒धि॒रे॒ । सु॒ऽपेश॑सम् ॥ १३ ॥

रुद्रारुद्रपुत्रास्तेमरुतः क्षोणीभिः शब्दकारिभिर्वीणाख्यैर्वीणाविशेषैः अरुणेभिर्नाञ्जिभिः नशब्दःसमुच्चये आरोचमानैररुणवर्णैर्वारूपाभिव्यञ्जकैरलंकारैश्चसमन्विताःसन्तः ऋतस्योद-कस्य सदनेषुनिवासभूतेषुमेघेषुवावृधुः वर्धन्ते अपिच अत्येनसततगामिना शीघ्रंव्याप्नुवता पाज-साआत्मीयेनबलेननिमेघमानाः नितरां मेघादुदकंसिञ्चन्तस्ते सुश्चन्द्रं शोभनाह्लादनंसुपेशसं पेशइतिरूपनाम शोभनरूपंवर्णंदधिरे कान्तिंधारयन्ति ॥ १३ ॥

१३. रुद्रपुत्र मरुद्गण वीणा-विशेष और अरुणवर्ण अलंकार से युक्त होकर जल के निवास-भूत मेघ में वर्द्धित हुए हैं। मरुद्गण सर्वत्र प्रभाववाले बल से जल लाते हुए प्रसन्नता-दायक और मनोहर सौन्दर्य धारण करते हैं।

ताँ इ॒या॒नो महि॒ वरू॑थमू॒तय॒ उप॒ घेदे॒ना नम॑सा गृणीमसि ।
त्रि॒तो न यान्पञ्च॒ होतॄ॑न॒भिष्ट॑य आ॒व॒वर्त॒दव॑राञ्च॒क्रिया॑वसे ॥ १४ ॥

तान् । इ॒या॒नः । महि॑ । वरू॑थम् । ऊ॒तये॑ । उप॑ । घ॒ । इत् । ए॒ना । नम॑सा । गृ॒णी॒म॒सि॒ । त्रि॒तः । न । यान् । पञ्च॑ । होतॄ॑न् । अ॒भिष्ट॑ये । आ॒ऽव॒वर्त॑त् । अव॑रान् । च॒क्रिया॑ । अव॑से ॥ १४ ॥

---

१ ऐ० ब्रा० १. १६.।

तान्मरुतोमहिमहवरूथंवरणीयंप्रशस्तंधनं तन्मरुतः ऊतयेरक्षणार्थं इयानः इयानाः याचमानावयं सुपांसुलुगितिजसःसुः एनाअनेननमसा नमस्कारेणस्तोत्रेणवाउपेवउपेत्यगृणी-मसिस्तुमः घेतिपादपूरणः एनेत्यत्रसुपांसुलुगितितृतीयायाआजादेशः नशब्दःसमुच्चये नितक्र-षिश्चयानेतान्मरुतः पश्चहोतॄनअध्यात्मप्राणापानादिपञ्चवृत्त्यात्मनावर्तमानान् अतएवहोमनि-ष्पादकान् अवरान्मुख्यान् अभिष्टयेअभिलषितसिद्ध्यर्थंचक्रियानाभिचक्रेणअवसेअवतुंसङ्ग-न्तुं आववर्तत् स्वस्मान्निर्जिगमिषून् प्राणान् स्वात्माभिमुखमावर्तयेत् यद्वा चक्रियाकृष्टचाख्ये-नायुधेनयुक्तान्अवसे स्तुत्यादिभिःपरिचरितुमावर्तयत् तान्स्तुमइतिपूर्वेत्रसंबन्धः ववर्तदिति वृतेर्ण्यन्ताल्लुङिचङिरूपम् ॥ १४ ॥

१४. मरुतों से वरणीय धन की याचना करते हुए अपनी रक्षा के लिए स्तोत्र-द्वारा हम उनकी स्तुति करते हैं। अभीष्ट-सिद्धि के लिए चक्र-द्वारा त्रित उन मुख्य प्राण, अपान, समान, व्यान और उदान आदि पाँच होताओं (मरुतों) को आवर्तित करते हैं।

यया॑र॒ध्रंपा॒रय॒थात्यंहो॒यया॑नि॒दोमु॒ञ्चथ॑वन्दि॒तार॑म् ।
अ॒र्वाची॒सामरु॒तो॒यावऊ॒तिरोषुवा॒श्रेवसु॒म॒तिर्जि॑गातु ॥ १५॥२१॥

यया॑ । र॒ध्रम् । पा॒रय॑थ । अति॑ । अंह॑ः । यया॑ । नि॒दः । मु॒ञ्चथ॑ । व॒न्दि॒तार॑म् । अ॒र्वाची॑ । सा । म॒रु॒तः॒ । या । वः॒ । ऊ॒तिः । ओ इति॑ । सु । वा॒श्राऽइ॑व । सु॒ऽम॒तिः । जि॒गा॒तु ॥ १५ ॥ २१ ॥

हेमरुतः ययाऊत्यारध्रमाराधकंयजमानंअंहः पापंअतिपारयथ अतिक्रामयथ यया ऊत्यावन्दितारंस्तोतारंनिदोनिन्दितुःशत्रोःसकाशात् मुञ्चथ मोचयथ हेमरुतः वोयुष्मदीयाया ऊतिः साअर्वाची अस्मदभिमुखाभवतु तथासुमतिर्युष्मदीयाशोभनामतिःअनुग्रहात्मिकाबु-द्धिश्चवाश्रेवहंभारवंकुर्वतीधेनुरिववत्संसुसुष्ठुओजिगातु आगच्छतु एवमस्मान्प्रतिसर्वथाआग-च्छत्वित्यर्थः ॥ १५ ॥

१५. मरुतो, तुम जिस आश्रय से आराधक यजमान को पाप से बचाते हो, जिससे स्तोता को शत्रु के हाथ से मुक्त करते हो, मरुतो, तुम्हारा वही आश्रय हमारे सामने आये।

॥ इतिद्वितीयस्यसप्तमेएकविंशोवर्गः ॥ २१ ॥

उपेमितिपञ्चदशर्चंतृतीयंसूक्तंगात्संमदंत्रैष्टुभंअपान्नपाद्देवताकं तथाचानुक्रान्तं उपेमपोन-प्त्रीयमिति सूक्तविनियोगोलैङ्गिकः ।

तत्रैषाप्रथमा–

उपेमसृक्षिवाजयुर्वचस्यांचनोदधीतनाद्योगिरोंमे।
अपांनपादाशुहेमांकुवित्ससुपेशसस्करतिजोषिषद्धि ॥ १ ॥

उप। ईम्। असृक्षि। वाजऽयुः। वचस्याम्। चनः। दधीत।
नाद्यः। गिरः। मे। अपाम्। नपात्। आशुऽहेमा। कुवित्।
सः। सुऽपेशसः। करति। जोषिषत्। हि ॥ १ ॥

वाजयुः वाजमन्नमात्मनइच्छन्नहंईमेनांवचस्यां वचसःस्तोत्रस्येच्छांउपासृक्षि उपासृजामि उत्पादयामि अपान्नपातंस्तोतुंप्रवृत्तोस्मीत्यर्थः सृजेश्छान्दसोलुङ् लिङ्सिचावात्मनेपदेष्विति सिचःकित्त्वाद्गुणाभावः सच नाद्योनदीनांशब्दकारिणीनांमेघस्थानामपांसंबन्धीआशुहेमाआशुशीघ्रंगन्ता हिगतावित्यस्मादन्येभ्योपिदृश्यन्तइतिमनिन् एवंभूतोऽपांनपात् अपांपौत्रस्थानीयः अद्भ्यओषधिवनस्पतयोजायन्ते ओषधिवनस्पतिभ्यएषोग्निर्जायतइतितत्पौत्रत्वं एतत्संज्ञकोदेवः गिरः गृणातीतिगीःस्तोता तस्यमे ममकुवित् बहुनामैतत् बहुलं चनः अन्नंदधीत दधातुविदधातु प्रयच्छत्वित्यर्थः अपिचास्मान्सुपेशसः शोभनरूपान् शोभनालङ्कारान्वाकरोति करोतु करोतेर्व्यत्ययेनशप् कःकरत्करतिकृधिकृतेष्वनदितेरितिविसर्जनीयस्यसत्वम् हियस्मादयंदेवः जोषिषत् स्तोत्राणिसेवते तस्मादस्मानेवमनुगृह्णात्वित्यर्थः जुषीप्रीतिसेवनयोः लेटयडागमः विकरणःसिप् इडागमश्च हिचेतिनिघातप्रतिषेधः ॥ १ ॥

१. मैं अन्न की इच्छा से इस स्तुति का उच्चारण करता हूँ। शब्दकर्त्ता और शीघ्रगन्ता अपां नपात् (जल-पौत्र अग्नि) नाम के देवता हमें प्रचुर अन्न और सुन्दर रूप दें। मैं उनकी स्तुति करता हूँ। वे स्तुति को पसन्द करते हैं।

अथद्वितीया–

इमंस्वस्मैहृदआसुतष्टंमन्त्रंवोचेमकुविदस्यवेदत्।
अपांनपादसुर्यस्यमह्नाविश्वान्यर्योभुवनाजजान ॥ २ ॥

इमम्। सु। अस्मै। हृदः। आ। सुऽतष्टम्। मन्त्रम्। वोचेम।
२ कुवित्। अस्य। वेदत्। अपाम्। नपात्। असुर्यस्य। मह्ना।
विश्वानि। अर्यः। भुवना। जजान ॥ २ ॥

अस्मैअपान्नपात्संज्ञकायदेवायहृदोहृदयात् सुतष्टं सुष्ठुनिर्मितंइमंमंत्रं सुष्ठुआभिमुख्येनवोचेम ब्रवाम अस्यअस्माभिरुक्तमिमंमन्त्रं कुवित् वेदत् बहुलंजानातु वेत्तेर्लेटयडागमः निपातैर्यद्यदिहन्तेतिनिघातप्रतिषेधः किंस्तोत्रमितिचेदुच्यते—अर्यः स्वामीअपांनपात्संज्ञकोवैद्युतोग्निः असुर्यस्यअसुरः शत्रून्क्षेप्तातस्यस्वभूतस्यबलस्यमह्नामहिम्नामहत्त्वेनविश्वानि सर्वाणि भुवनाभुवनानिवृष्ट्युदकानिवृष्ट्युत्पादनेनभूतजातानिवाजजान जनयामास ॥ २ ॥

२. उनके लिए हम हृदय से सुरचित इस मंत्र का अच्छी तरह उच्चारण करेंगे; वे उसे बार-बार जानें। स्वामी अपां नपात् ने शत्रु-क्षेपणकारी बल से समस्त भुवन को उत्पन्न किया है।

अपोनप्त्रीयेवसतीवरीसमीपे एकधनासुप्राप्तासुसमन्यायन्तीत्येषानुवक्तव्या सूत्रितश्च—समन्यायंत्युपयंत्यन्याइतितीर्थेदेशइति सारस्वतेचशस्त्रेयद्यप्सुशम्यानिपतेत् तदानीमपोनप्त्रीयश्चरुःकार्यः तत्रैषैवयाज्या सूत्रितश्च—समन्यायन्त्युपयन्त्यन्याइत्याातःसमानंसर्वेषामिति।

**सम॒न्या यन्त्युप॑ यन्त्य॒न्याः स॑मा॒नमू॒र्वं न॒द्यः॑ पृणन्ति ।**
**तमू॒ शुचिं॒ शुच॑यो दीदि॒वांस॑म॒पां नपा॑तं॒ परि॑ तस्थु॒राप॑ः ॥ ३ ॥**

सम् । अ॒न्याः । यन्ति॑ । उप॑ । य॒न्ति॒ । अ॒न्याः । स॒मा॒नम् । ऊ॒र्वम् ।
न॒द्यः॑ । पृ॒ण॒न्ति॒ । तम् । ऊँ॒ इति॑ । शुचि॑म् । शुच॑यः ।
दी॒दि॒ऽवांस॑म् । अ॒पाम् । नपा॑तम् । परि॑ । त॒स्थुः॒ । आप॑ः ॥ ३ ॥

अन्यावर्ष्याआपः संयंतिभूम्यासंगच्छन्ते अन्याश्चपूर्वंतत्रावस्थिताः उपयन्ति उपगच्छंति ताःसर्वाआपःसमानं सहनद्योनदी भूताऊर्वं समुद्रमध्येवर्तमानंवडवानलंपृणन्ति प्रीणयन्ति पृणप्रीणने तौदादिकः तमु तमेवापांनपातंशुचिंनिर्मलंदीदिवांसंदीप्यमानं दीदेतिश्छान्दसोदीप्तिकर्मा लिटःक्वसुः वस्वेकाजाद्घसामितिनियमादिडभावः छंदसिवेतिवक्तव्यमितिवचनाद्द्विर्वचनाभावः एवंभूतं शुचयः शुद्धाआपः परितस्थुः परिवृत्यतिष्ठन्ति एषहिवैद्युताग्निरूपेणमेघेवर्तमानोस्मानजीजनदितिबुद्ध्यावडवानलरूपेणवर्तमानंतं पर्युपासतइत्यर्थः यद्वा अन्याएकधनाख्याआपः संयन्ति चात्वालोत्करयोर्मध्ये वसतीवरीभिः संगच्छन्ते अन्याःवसतीवर्याख्याआपश्चउपयंति उपगच्छन्ति ऐकमत्यंप्राप्ताभवन्ति एताश्चमिलित्वायज्ञं साधयंत्यस्तत्साध्यवृष्टिद्वारानद्योभूत्वाऊर्वंपृणंतीत्यादिसमानम् एवंहिआपोवाअस्पर्धन्तवयंपूर्वंयज्ञंवक्ष्यामइत्यादिकंब्राह्मणविनियोगश्चानुगृह्यते ३ ॥

३. कोई-कोई जल इकट्ठा होता है, उसके साथ दूसरा मिलता है। वे सब समुद्र के बड़वानल को प्रसन्न करते हैं। विशुद्ध जल निर्मल और दीप्तिमान् अपां नपात् नामक देवता को चारों ओर घेरकर रहता है।

तमस्मेरायुवतयोयुवानंमर्मृज्यमानाःपरियन्त्यापः ।
सशुक्रेभिःशिक्वभीरेवदस्मेदीदायानिध्मोघृतनिर्णिगप्सु ॥ ४ ॥

तम् । अस्मेराः । युवतयः । युवानम् । मर्मृज्यमानाः । परि । यन्ति । आपः । सः । शुक्रेभिः । शिक्वऽभिः । रेवत् । अस्मे इति । दीदाय । अनिध्मः । घृतऽनिर्निक् । अप्ऽसु ॥ ४ ॥

तमपांनपातमग्निंअस्मेराअस्मयमानादर्परहितायुवतयः युवानंयुवराजमिवमर्मृज्यमानाः अत्यर्थमलङ्कुर्वाणाआपः मृजूशौचालङ्कारयोः परियन्ति परितोगच्छन्ति प्राप्नुवन्ति घृतनिर्णि-क्क्षरणशीलोदकनिर्नेजनः यद्वा निर्णिगितिरूपनाम दीप्तरूपः सोपान्नपादग्निः अप्सुमेघान्त-र्गतासुसमुद्गतासुवामध्येअनिध्मः इन्धनरहितएवसन्अस्मेअस्माकं रेवद्धनयुक्तमन्नंयथाभव-तितथाशुक्रेभिःशुक्रैर्निर्मलैः शिक्वभिस्तेजोभिः दीदायदीप्यते ॥ ४ ॥

४. दर्परहित युवती जल-संहति, युवा की तरह, अपां नपात् देवता को अलंकृत और परिवेष्टित करती है। इन्धन-रहित और घृत-पूत अपां नपात् हमारे धनवाले अन्न की उत्पत्ति के लिए जल के बीच निर्मल तेजोबल से दीप्त हैं।

अस्मैतिस्रोअव्यथ्यायनारीर्देवायदेवीर्दिधिषन्त्यन्नम् ॥
कृताइवोपहिप्रसर्स्रेअप्सुसपीयूषंधयतिपूर्वसूनाम् ॥ ५ ॥ २२ ॥

अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय । देवीः । दिधिषन्ति । अन्नम् । कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽसु । सः । पीयूषम् । धयति । पूर्वऽसूनाम् ॥ ५ ॥ २२ ॥

नारीर्नेत्र्यः तिस्रोदेवीर्देव्यः इळासरस्वतीभारत्याख्याः अव्यथ्यायअव्यथनायास्मैदे-वायापान्नपाते अन्नंसोमाख्यंदिधिषन्ति धारयन्ति धिषशब्दे जौहोत्यादिकः व्यत्ययेनान्तादेशः धातूनामनेकार्थत्वादत्रधारणार्थः अप्सूदकेषुकृताइवनिर्मिताइव उपप्रसर्स्रेप्रसरन्ति सृगतौ लिटि इरयोरेइतिरेआदेशः छान्दसोहलादिशेषाभावः हियस्मादेवंतस्मात्पूर्वसूनांपूर्वंब्रह्मणःसका-शादुत्पन्नानामपांपीयूषंसारभूतंसोमाख्यममृतंसोपान्नपादग्निर्धयति पिबति ॥ ५ ॥

५. इला, सरस्वती और भारती नाम की तीनों देवियाँ दुःख-रहित अपां नपात् देवता के लिए अन्न धारण करती हैं। वे जल के बीच उत्पन्न पदार्थ के लिए प्रसारित होती हैं। अपां नपात् सबसे प्रथम उत्पन्न जल के सारभूत सोम को पीते हैं।

॥ इतिद्वितीयस्यसप्तमेद्वाविंशोवर्गः ॥ २२ ॥

अश्वस्यात्रजनिमास्यचस्वर्द्रुहोरिषःसंपृचःपाहिसूरीन् ।
आमासुपूर्षुपरोअप्रमृष्यंनारातयोविनशन्नानृतानि ॥ ६ ॥

अश्वस्य । अत्र । जनिम । अस्य । च । स्वः । द्रुहः । रिषः ।
सम्ऽपृचः । पाहि । सूरीन् । आमासु । पूर्षु । परः । अप्रऽमृष्यम् ।
न । अरातयः । वि । नशन् । न । अनृतानि ॥ ६ ॥

अत्रास्मिन्नपान्नपात्संज्ञकेदेवेअश्वस्यजनिमजन्मभवति अपांनप्त्रधिष्ठितात् समुद्रादुच्चैःश्रवसोजातत्वात् किंबहुना अस्यचस्वः सुष्ठुअरणीयस्यसर्वस्यजगतोजन्मास्मिन्नेवभवति अयंहिमेघमध्येवर्तमानोवृष्टिद्वारेणसर्वंजगज्जनयति तादृशोऽपान्नपात् त्वंद्रुहः द्रोग्धुरपहर्तुः रिषोहिंसकस्यचसंपृचः संपर्कात् सूरीन् स्तोतॄनस्मान्पाहि रक्ष आमासुअपरिपक्वासुपूर्षुपूरयितव्यास्वप्सु परः परस्ताद्वर्तमानंअप्रमृष्यं अप्रधृष्यमाणं देवंअरातयः अदातारः पुरुषाः नविनशन् नप्राप्नुवन्ति नशतिर्व्याप्तिकर्मा लेट्यडागमः अनृतानिमायाविनोरक्षांसिचनप्राप्नुवन्ति ॥ ६ ॥

६. अपां नपात्-द्वारा अधिष्ठित समुद्र में उच्चैःश्रवा नामक अश्व का जन्म है—इस वरणीय का जन्म है। हे देव, तुम अपहर्त्ता हो। हिंसक के संपर्क से स्तोताओं की रक्षा करो। दानशून्य और झूठे लोग अपरिपक्व अथवा परिपाक-योग्य जल में रहकर भी इस अहिंसनीय देवता को नहीं प्राप्त होते।

स्वआदमेसुदुघायस्यधेनुःस्वधांपीपायसुभ्वन्नमत्ति ।
सोअपांनपादूर्जयन्नप्स्वं१न्तर्वसुदेयायविधतेविभाति ॥ ७ ॥

स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः । स्वधाम् । पीपाय ।
सुऽभु । अन्नम् । अत्ति । सः । अपाम् । नपात् । ऊर्जयन् ।
अप्ऽसु । अन्तः । वसुऽदेयाय । विधते । वि । भाति ॥ ७ ॥

योपांनपात्स्वेदमेस्वकीयेगृहेन्तरिक्षलक्षणेआसीदति यस्यचधेनुर्माध्यमिकावाक् सुदुघासुखेनदोग्धव्याभवति सदेवः स्वधांवृष्ट्युदकंपीपायवर्धयति प्यायीवृद्धौ लिड्यङोश्चेतिपीभावः सुभुसुष्ठुभूतं वृष्टेःसकाशादुत्पन्नंहविर्लक्षणमन्नंचअत्तिभक्षयति सोपान्नपात्संज्ञकोदेवः ऊर्जयन् बलंकुर्वन् अप्स्वन्तः मेघस्थास्वप्सुमध्येविधते परिचरतेयजमानायवसुदेयायधनदानार्थं विभाति विशेषेणदीप्यते ॥ ७ ॥

७. जो अपने घर में हैं और जिनकी गाय को सरलता से दुहा जाता है, वे ही अपां नपात् देवता वृष्टि का जल बढ़ाते और उत्तम अन्न भक्षण करते हैं। वे जल के बीच प्रबल होकर यजमान को धन देने के लिए भली भाँति दीप्तियुक्त होते हैं।

अथाष्टमी–

योअप्स्वाशुचिनादैव्येनऋतावाजस्रउर्वियाविभाति ।
वयाइदन्याभुवनान्यस्यप्रजायन्तेवीरुधश्चप्रजाभिः ॥ ८ ॥

यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः ।
उर्विया । विऽभाति । वयाः । इत् । अन्या । भुवनानि । अस्य ।
प्र । जायन्ते । वीरुधः । च । प्रऽजाभिः ॥ ८ ॥

योपांनपात् ऋतावा ऋतमित्युदकनाम तद्वान् सत्यवान्वा अजस्रोनित्यः एकरूपेणसदावर्तमानः उर्वियाउरुर्विस्तीर्णः अप्सुमेघस्थासुमध्येशुचिनाशोचकेनदैव्येनदेवसंबन्धिनातेजसाआसमन्ताद्विभाति विशेषेणप्रकाशते अस्यापांनपातः अन्याअन्यानिभुवनानि सर्वाणिभूतजातानि च वयाइव शाखाएववीरुधओषधयः प्रजाभिःस्वकीयाभिः पुष्पफलादिभिःसहअस्मादेव प्रजायन्ते ॥ ८ ॥

८. जो अपां नपात् सत्यवान, सदा एक रूप से रहनेवाले और अति विस्तीर्ण हैं, जो जल के बीच पवित्र देवतेज के द्वारा प्रकाशित होते हैं, सारे भूत उन्हीं की शाखायें हैं। फल-फूल के साथ सारी ओषधियाँ उन्हीं से उत्पन्न हैं।

पूर्वोक्तसारस्वतसत्रस्यापोनप्त्रीयेचरौअपांनपादाहीत्येषानुवाक्या सूत्रितश्च–अपान्नप्त्रेचरुमपान्नपादाह्यस्थादुपस्थमिति ।

सैषासूक्तेनवमी–

अपांनपादाह्यस्थादुपस्थंजिह्मानामूर्ध्वोविद्युतंवसानः ।
तस्यज्येष्ठंमहिमानंवहन्तीर्हिरण्यवर्णाःपरियन्तियह्वीः ॥ ९ ॥

अपाम् । नपात् । आ । हि । अस्थात् । उपऽस्थम् । जिह्मानाम् ।
ऊर्ध्वः । विऽद्युतम् । वसानः । तस्य । ज्येष्ठम् । महिमानम् ।
वहन्तीः । हिरण्यऽवर्णाः । परि । यन्ति । यह्वीः ॥ ९ ॥

अपान्नपात्संज्ञकोग्निः उपस्थंअपामुपस्थानं अन्तरिक्षंआह्यस्थात् आस्थितवानारूढवान्खलु किंकुर्वन् जिह्मानांकुटिलगतीनामपांमध्येऊर्ध्वः स्वयमूर्ध्वंज्वलन्विद्युतंविद्योतमानंमेघंवसानः आच्छादयन् अन्तरिक्षमास्थायवर्षणंकृतवान् तस्यवर्षितुरपांनपातः ज्येष्ठंमशस्यत-

मंमहिमानंमाहात्म्यंवहन्तीः वहन्त्यः सर्वत्रप्रापयंत्यः यह्वीर्यह्व्यः महत्यः हिरण्यवर्णाः नदीनामैतत् हिरण्यवर्निर्मलरूपानद्यः परियन्ति परितोगच्छन्ति अपांनपात्रामहतीवृष्टिरस्माकंप्रवहणायोत्पादिताइतिकृतज्ञतयातदीयंमाहात्म्यंसर्वत्रप्रकटयन्त्यइवनद्यः प्रवहन्तीत्यर्थः ॥ ९ ॥

९. अपां नपात् कुटिलगति मेघ के बीच स्वयं ऊर्ध्व भाव से अवस्थित होने पर भी बिजली को पहनकर अन्तरिक्ष में चढ़े हैं। सर्वत्र उनके उत्तम माहात्म्य का कीर्त्तन करते हुए हिरण्यवर्णा नदियाँ प्रवाहित होती हैं।

हिरण्यरूपः सहिरण्यसन्दृगपांनपात्सेदुहिरण्यवर्णः ।
हिरण्ययात्परियोनेर्निषद्याहिरण्यदादंदत्यन्नंमस्मै ॥ १० ॥ २३ ॥

हिरण्यऽरूपः । सः । हिरण्यऽसन्दृक् । अपाम् । नपात् । सः ।
इत् । ऊँ इति । हिरण्यऽवर्णः । हिरण्ययात् । परि । योनेः ।
निऽसद्य । हिरण्यऽदाः । ददति । अन्नम् । अस्मै ॥ १० ॥ २३ ॥

सोपांनपाद्वहिरण्यरूपः रूप्यतइतिरूपंशरीरं सुवर्णमयशरीरः हितरमणीयशरीरोवा तथाहिरण्यसंदृक् सम्यक्पश्यन्तोतिसन्दृशिइन्द्रियाणिंसुवर्णमयेन्द्रियः हितरमणीयेन्द्रियोवा सेदुसएवापान्नपात्हिरण्यवर्णः हिरण्यसदृशकान्तियुक्तः एवंभूतःसन् हिरण्ययात्सुवर्णमयाद्योनेःस्थानात्पर्युपरि निषद्योपविश्य राजतइतिशेषः अस्मैईदृग्विधायापांनपातेहिरण्यदाः दक्षिणारूपस्यसुवर्णस्यदातारोयजमानाः अन्नंहविर्लक्षणंददति प्रयच्छन्ति ॥ १० ॥

१०. वे हिरण्यरूप, हिरण्याकृति और हिरण्यवर्ण हैं। वे हिरण्यमय स्थान के ऊपर बैठकर शोभा पाते हैं। हिरण्यदाता उन्हें अन्न देते हैं।

॥ इतिद्वितीयस्यसप्तमेत्रयोविंशोवर्गः ॥ २३ ॥

अथैकादशी—

तदस्यानीकमुतचारुनामापीच्यंवर्धतेनप्तुरपाम् ।
यमिन्धतेयुवतयःसमित्थाहिरण्यवर्णंघृतमन्नमस्य ॥ ११ ॥

तत् । अस्य । अनीकम् । उत । चारु । नाम । अपीच्यम् ।
वर्धते । नप्तुः । अपाम् । यम् । इन्धते । युवतयः । सम् । इत्था ।
हिरण्यऽवर्णम् । घृतम् । अन्नम् । अस्य ॥ ११ ॥

अस्यापांनपुर्देवस्यअनीकंरश्मिसमूहरूपंशरीरंचारु शोभनं उतअपिच अस्यनामसंज्ञा-च चारुशोभनं नपातयतिनविनाशयतीतिनपादितितद्व्युत्पत्तेः तदुभयंअपीच्यंअन्तर्हितनामैतव मेघान्तर्हितंसद्वर्धतेयुवतयः सङ्गमनस्वभावाआपः हिरण्यवर्णंहिरण्यसमानतेजसं यमपान्नपातं इत्थाअमुत्रान्तरिक्षेसमिन्धते सम्यक्दीपयन्ति अस्यचदेवस्यघृतंक्षरणशीलमुदकमन्नंभक्ष्यं अविन्धनोह्यसौवैद्युतोग्निः ॥ ११ ॥

११. अपां नपात् का रश्मिसमूह-रूप शरीर और नाम सुन्दर हैं। ये दोनों, गूढ़ होने पर भी, वृद्धि को प्राप्त होते हैं। युवती जलसंहति उन हिरण्यवर्ण को अन्तरिक्ष में भली भाँति दीप्ति-युक्त करती हैं; क्योंकि जल ही उसका अन्न है।

अ॒स्मै ब॒हूना॑मव॒माय॒ सख्ये॑ य॒ज्ञैर्वि॑धेम॒ नम॑सा ह॒विर्भिः॑ ।
सं सानु॒ मार्ज्मि॒ दिधि॑षामि॒ बिल्मै॒र्दधा॒म्यन्नैः॒ परि॑ वन्द ऋ॒ग्भिः ॥ १२॥

अ॒स्मै । ब॒हूना॑म् । अ॒व॒माय॑ । सख्ये॑ । य॒ज्ञैः । वि॒धे॒म॒ । नम॑सा । ह॒विःऽभिः॑ । सम् । सानु॑ । मार्ज्मि॑ । दिधि॑षामि । बिल्मैः॑ । द॒धा॑मि । अन्नैः॑ । परि॑ । व॒न्दे॒ । ऋ॒क्ऽभिः॑ ॥ १२ ॥

अस्मैपुरोवर्तिनेबहूनांदेवानामवमायाद्यायसख्येअस्माभिः समानाख्यानायापांनपातेय-ज्ञैर्यागसाधनैर्हविर्भिः चरुपुरोडाशादिभिः नमसानमस्कारेणच विधेमपरिचरेम अस्यापान्नपातः सानुसमुच्छ्रितप्रदेशंसंमार्ज्मि सम्यक्शोधयामि अलङ्करोमिवा मृजूशौचालङ्कारयोः चादिलोपेवि-भाषेत्यस्यनिघातप्रतिषेधः, दिधिषामिधारयामिच बिल्मैर्भासनैः काष्ठैरेनं धिषशब्दे अयंधारणा-र्थोपि जुहोत्यादित्वाच्छपःश्लुः मिपोव्यत्ययेनाडागमः अभ्यस्तानामादिरित्याद्युदात्तत्वम् दधा-मिधारयामिचैनंगार्हपत्यादिरूपेण अन्नैर्हविर्लक्षणैः तथाऋग्भिः मन्त्रैः परिवन्दे परितःस्तौमि॥१२॥

१२. अपने मित्र और बहुत देवों के आदि अपां नपात् देवता की, यज्ञ, हव्य और नमस्कार-द्वारा, हम परिचर्या करेंगे। मैं उनके उन्नत प्रदेश को भली भाँति अलंकृत करूँगा। मैं काष्ठ और अन्न-द्वारा उनको धारण करता और मंत्र-द्वारा उनकी स्तुति करता हूँ।

स ईं॒ वृषा॑जनय॒त्तासु॒ गर्भं॒ स ईं॒ शिशु॑र्धयति॒ तं रि॑हन्ति ।
सो अ॒पां नपा॒दन॑भिम्लातवर्णो॒ऽन्यस्ये॑वे॒ह त॒न्वा॑ विवेष ॥ १३ ॥

सः । ई॒म् । वृषा॑ । अ॒ज॒न॒य॒त् । तासु॑ । गर्भ॑म् । सः । ई॒म् । शिशुः॑ । ध॒य॒ति॒ । तम् । रि॒ह॒न्ति॒ । सः । अ॒पाम् । नपा॑त् । अन॑भिम्ला-तऽवर्णः । अ॒न्यस्य॑ऽइव । इ॒ह । त॒न्वा॑ । वि॒वे॒ष ॥ १३ ॥

सईंसोयमपांनपावसंज्ञकोदेवः वृषासेक्ताभूत्वातासुमेवस्थास्वप्सुगर्भमजनयत् स्वात्मानमेवगर्भरूपेणवर्षणार्थंकृतवानित्यर्थः गर्भोभूत्वाचसईंसोयंमाध्यमिकोवैद्युतोग्निः तासांशिशुः पुत्रःसन् धयतिमेघस्थास्ताःपिबति अबिन्धनोह्यसौतंपुत्रस्थानीयमद्भिः आपश्चरिहन्ति लिह-आस्वादने कपिलकादित्वाल्लत्वविकल्पः सोयमपांनपाद्वृष्ट्याासहभूमौनिपतितः अनभिम्लातवर्णः अभितोम्लातोम्लानः क्षीणोवर्णोयस्यतद्विपरीतोत्यर्थंदीप्यमानःसन् इहास्मिन्लोकेअन्यस्येव इवशब्दोवधारणे अन्यस्यपार्थिवस्यैवाग्नेस्तन्वाशरीरेणकाष्ठेन्धनत्वलक्षणेनविवेष व्याप्तोबभूव विषृव्याप्तौ ॥ १३ ॥

१३. सेचन-समर्थ उन अपां नपात् ने इस सारे जल के बीच गर्भ उत्पन्न किया है। वे ही कभी पुत्ररूप होकर जल पीते हैं। सारा जल उन्हीं को चाटता है। दीप्तियुक्त वे ही स्वर्गीय अग्नि इस पृथिवी पर अन्य शरीर से व्याप्त हैं।

अस्मिन्पदेपरमेतस्थिवांसमध्वस्माभिर्विश्वहादीदिवांसम्।
आपोनप्त्रेघृतमन्नंवहन्तीःस्वयमत्कैःपरिदीयन्तियह्वीः ॥ १४ ॥

अस्मिन्। पदे। परमे। तस्थिऽवांसम्। अध्वस्मऽभिः। विश्वहा। दीदिऽवांसम्। आपः। नप्त्रे। घृतम्। अन्नम्। वहन्तीः। स्वयम्। अत्कैः। परि। दीयन्ति। यह्वीः ॥ १४ ॥

परमेउत्कृष्टेस्मिन्पदेन्तरिक्षलक्षणेस्थानेतस्थिवांसंस्थितवन्तंअध्वस्मभिः ध्वंसनरहितैस्तेजोभिः विश्वहासर्वाण्यहानिदीदिवांसंदीप्यमानमपांनपातंयह्वीर्यत्ह्योमहत्यः आपः स्वयमात्मनैवअत्कैरतनशीलैः सततगन्तृभिः स्वकीयैरूपैः परिदीयन्ति परिगच्छन्ति दीयतिर्गतिकर्मा दीङ्क्षये व्यत्ययेनपरस्मैपदं किंकुर्वत्यः नप्त्रेअपान्नपातेघृतं क्षरणशीलोदकात्मकंअन्नंवहन्तीर्वहंत्यः ॥ १४ ॥

१४. अपां नपात् उत्कृष्ट स्थान में रहते हैं। वे तेज-द्वारा प्रतिदिन दीप्तियुक्त हैं। महान् जल-समूह उनके लिए अन्न ढोते हुए सतत गति-द्वारा उनको वेष्टित किये हुए है।

अयांसमग्नेसुक्षितिंजनायायांसमुमघवद्भ्यःसुवृक्तिम्।
विश्वंतद्भद्रंयदवन्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ १५ ॥ २४ ॥

अयांसम्। अग्ने। सुऽक्षितिम्। जनाय। अयांसम्। ऊँ इति। मघवत्ऽभ्यः। सुऽवृक्तिम्। विश्वम्। तत्। भद्रम्। यत्। अवन्ति। देवाः। बृहत्। वदेम। विदथे। सुऽवीराः ॥ १५ ॥ २४ ॥

हेअग्ने सुक्षितिं शोभननिवासंत्वांअयांसमुपागच्छं किमर्थं जनायास्मदीयपुत्रादिजननार्थं तथामघवद्भ्यः हविर्लक्षणधनयुक्तेभ्योयजमानेभ्यश्च सुवृक्तिंशोभनावर्जकंत्वद्विषयंस्तोत्रंअयां समुपागच्छं यमउपरमे उःपूरणः अतःकारणाद्यद्भद्रंसर्वेदेवाअवन्ति रक्षन्ति विश्वंसर्वंतद्भद्र-मस्माकंभवतु सुवीराः सुपुत्रावयंविदथेयज्ञेगृहेवाबृहत्प्रौढंस्तोत्रंवदेम उच्चारयाम ॥ १५ ॥

१५. अग्निदेव, तुम शोभनीय हो। पुत्र-लाभ के लिए मैं तुम्हारे पास आया हूँ। यजमान के हित के लिए सुरचित स्तुति लेकर आया हूँ। समस्त देवगण जो कल्याण करते हैं, वह सब हमारा हो। पुत्र और पौत्रवाले होकर हम इस यज्ञ में प्रभूत स्तुति कर सकें।

तुभ्यमितिषळृचंचतुर्थंसूक्तंगात्संमदंजागतं प्रथमायाइन्द्रोमधुश्चदेवता द्वितीयायाःमरुतो-माधवश्च तृतीयायास्त्वष्टाशुक्रश्च चतुर्थ्याअग्निःशुचिश्च पञ्चम्याइन्द्रोनभश्च षष्ठ्यामित्रावरुणौन-भस्यश्च तथाचानुक्रान्तम्—तुभ्यंषळृतव्यंतुजागतन्त्विति दशरात्रेषष्ठेहनिऋतुयाजेषुऋक्शिर-स्कैःप्रैषैः प्रेषितव्यंयष्टव्यंच तत्राद्यानांषण्णांप्रैषाणामुपरिष्टाद्देवताः षळृचोहोरात्रादिभिःक्रमेणा-वपनीयाः तथाचसूत्रितम्—उपरिष्टाव द्वृचऋतुयाजानामित्युपक्रम्यतुभ्यंहिन्वानोवसिष्टगाअपइ-तिद्वादशेत्यन्तेन।

तुभ्यंहिन्वानोवसिष्टगाअपोधुक्षन्त्सीमविभिरद्रिभिर्नरः।
पिबेन्द्रस्वाहाप्रहुतंवषट्कृतंहोत्रादासोमंप्रथमोयईशिषे ॥ १ ॥

तुभ्यम्। हिन्वानः। वसिष्ट। गाः। अपः। अधुक्षन्। सीम्।
अविंऽभिः। अद्रिऽभिः। नरः। पिब। इन्द्र। स्वाहा। प्रऽहुतम्।
वषट्ऽकृतम्। होत्रात्। आ। सोमम्। प्रथमः। यः। ईशिषे ॥१॥

हेइन्द्र तुभ्यंत्वदर्थंहिन्वानः प्रेर्यमाणः सोमः गाः गोविकाराणि दधिपयःप्रभृतीनिश्रपण-द्रव्याणिवसतीवर्याख्याअपश्चवसिष्ट वस्ते आच्छादयति तैःसंयुज्यतइत्यर्थः नरोयज्ञस्यनेतारो-ध्वर्यवश्चसीमेनंसोमंअविभिः अवेर्वालमयैर्दशापवित्रैः अद्रिभिर्ग्रावभिश्चअधुक्षन्नक्षारयन् ग्रा-वभिरभिषुत्यदशापवित्रेणपुनन्तीत्यर्थः हेइन्द्र यस्त्वमीशिषेसर्वस्यजगतईश्वरोभवसि त्वंप्रथमः अन्येभ्योदेवेभ्यःपूर्वभावीसन्स्वाहास्वाहाकारेणप्रहुतंप्रकर्षेणाग्नौक्षिप्तंवषट्कृतंवषट्कारेणचत्य-क्तम् तंसोमंहोत्रादहोतुर्यागादासमन्तात्पिब ॥ १ ॥

१. इन्द्र, तुम्हारे उद्देश्य से प्रेरित यह सोम गव्य और जल से युक्त है। यज्ञ के नेता लोग इस सोम को प्रस्तरखण्ड-द्वारा अभिषुत करके मेष-लोममय दशापवं-द्वारा इसे संस्कृत करते हैं। इन्द्र, तुम सारे संसार के ईश्वर हो। सारे देवों के प्रथम, स्वाहाकार में अग्नि में प्रक्षिप्त और वषट्कार-द्वारा त्यक्त सोम होता के पास से पान करो।

अथद्वितीया–

यज्ञैःसंमिश्लाःपृषतीभिर्ऋष्टिभिर्यामञ्छुभ्रासोअञ्जिषुप्रियाउत।
आसद्यांबर्हिर्भरतस्यसूनवःपोत्रादासोमंपिबतादिवोनरः ॥ २ ॥

यज्ञैः। सम्ऽमिश्लाः। पृषतीभिः। ऋष्टिऽभिः। यामन्। शुभ्रासः।
अञ्जिषु। प्रियाः। उत। आऽसद्य। बर्हिः। भरतस्य। सूनवः।
पोत्रात्। आ। सोमम्। पिबत। दिवः। नरः॥ २ ॥

हेमरुतः यज्ञैर्यागैः संमिश्लाः संयुक्ताः पृषतीभिः स्ववाहनभूताभिः पृषद्वतीभिर्वडवाभिर्युक्तेयामन्यामनिगमनसाधनेरथेवस्थिताः ऋष्टिभिः स्वकीयैरायुधैः शुभ्रासः शुभ्राः शोभमानाः उतशब्दश्चार्थे अञ्जिष्वाभरणेषुप्रियाश्चहेभरतस्यसूनवः सर्वस्यजगतोभर्तूरुद्रस्यपुत्राः दिवोनरः दिवोन्तरिक्षस्यनेतारः एवंभूताहेमरुतः तेयूयंबर्हिरास्तीर्णेबर्हिषिआसाद्योपविश्यपोत्रात्पोतुर्यागात्सोममापिबत ॥ २ ॥

२. यज्ञ के साथ संयुक्त, पृषतीयोजित रथ पर अवस्थित, अपने आयुध से शोभित, आभरण-प्रिय, भरत वा रुद्र के पुत्र और अन्तरिक्ष के नेता मरुतो, तुम कुश पर बैठकर पोता के पास से सोमपान करो।

तृतीयसवनेअमेवनइत्येषानेष्टुःप्रस्थितयाज्या तथाचसूत्रितम्–अमेवनःसुहवाआहिगन्तनेन्द्राविष्णूपिबतंमध्वोअस्येति।

अमेवनःसुहवाआहिगन्तननिबर्हिषिसदतनारणिष्टन।
अथामन्दस्वजुजुषाणोअन्धसस्त्वष्टर्देवेभिर्जनिभिःसुमद्गणः॥३॥

अमाऽइव। नः। सुऽहवाः। आ। हि। गन्तन। नि। बर्हिषि।
सदतन। रणिष्टन। अथ। मन्दस्व। जुजुषाणः। अन्धसः।
त्वष्टः। देवेभिः। जनिऽभिः। सुमत्ऽगणः॥ ३॥

इवशब्दोवधारणे हेसुहवाः शोभनाह्वानाः त्वष्टृप्रभृतयः नोस्मान् अमेवसहैवआगन्तन आगच्छत गमेश्छान्दसःशपोलुक् तप्तनप्तनथनाश्चेतितनबादेशः हिशब्दःपूरणः आगत्यचबर्हिषि वेद्यामास्तीर्णेनिषदतन निषण्णाभवत सदेश्छान्दसःसीदादेशाभावः उपविश्यच रणिष्टन रमध्वं रणशब्दार्थः अत्रक्रीडायांवर्तते धातूनामनेकार्थत्वात् अस्माच्छान्दसोलुङ् पूर्ववत्तनबादेशः अथानन्तरं हेत्वष्टः देवेभिरन्यैः देवैर्जनिभिर्देवपत्नीभिश्चसुमद्गणः शोभनगणस्त्वंअन्धसः सोमलक्षणस्यान्नस्य द्वितीयार्थेषष्ठी सोमलक्षणमन्नंजुजुषाणः सेवमानोमन्दस्व तृप्तोभव ॥ ३ ॥

३. शोभन आह्वानवाले देवो, तुम हमारे साथ आओ, कुश पर बैठो और विहार करो। अनन्तर हे त्वष्टा, तुम देवों और देवपत्नियों के शोभनीय दल के साथ अन्न की सेवा करके तृप्ति प्राप्त करो।

आवक्षिदेवाँइहविप्रयक्षिचोशन्होतर्निषदायोनिषुत्रिषु ।
प्रतिवीहिप्रस्थितंसोम्यंमधुपिबाग्नींध्रात्तवभागस्यतृप्णुहि ॥४॥

आ । वक्षि । देवान् । इह । विप्र । यक्षि । च । उशन् । होतः ।
नि । सद । योनिषु । त्रिषु । प्रति । वीहि । प्रऽस्थितम् ।
सोम्यम् । मधु । पिब । आग्नींध्रात् । तव । भागस्य । तृप्णुहि ॥४॥

हेविप्रमेधाविन्नग्ने देवान् यष्टव्यानिन्द्रादीन् इहास्मिन्यज्ञेआवक्षिआवह यक्षिच तान्यजच हेहोतः देवानामाह्वातः त्वंचउशन्नस्मदीयंहविःकामयमानःसन् त्रिषुयोनिषुस्थानेषुगार्हपत्यादिलक्षणेषुनिषद उपविश उपविश्यच प्रस्थितं होमार्थमुत्तरवेदिंप्रत्यानीतंसोम्यंसोममयंमधुप्रतिवीहि प्रतिकामयस्व कामयित्वाचआग्नीध्रादग्नीध्रयागाव सोमंपिब पीत्वाचतवभागस्य त्वदीयेनभागेन तृप्णुहितृप्तोभव ॥ ४ ॥

४. मेधावी अग्नि, इस यज्ञ में देवों को बुलाओ और उनके लिए यज्ञ करो। देवों के आह्वानकारी अग्नि, तुम हमारे हव्य के अभिलाषी होकर गार्हपत्य आदि के तीनों स्थानों पर बैठो। होम के लिए उत्तर वेदी पर लाये हुए सोम-रूप मधु स्वीकार करो। अग्नीध्र के पास से सोमपान करो और अपने अंश में तृप्त होओ।

एषस्यतेतन्वोनृम्णवर्धनःसहओजःप्रदिविबाह्वोर्हितः ।
तुभ्यंसुतोमघवन्तुभ्यमाभृतस्त्वमस्यब्राह्मणादातृपत्पिब ॥ ५ ॥

एषः । स्यः । ते । तन्वः । नृम्णऽवर्धनः । सहः । ओजः । प्रऽदिवि ।
बाह्वोः । हितः । तुभ्यम् । सुतः । मघऽवन् । तुभ्यम् । आऽभृतः ।
त्वम् । अस्य । ब्राह्मणात् । आ । तृपत् । पिब ॥ ५ ॥

हेइन्द्र स्यः सः एषसोमः तेतवतन्वः शरीरस्यनृम्णवर्धनः बलस्यवर्धकः तुभ्यंसुतइत्युत्तरत्रसम्बन्धः येनसोमेनप्रदिविपुराणेत्वयिबाह्वोर्हस्तयोःसहपरेषामभिभवनलक्षणंसामर्थ्यंओजस्तत्कारणभूतंबलंचहितः निहितंभवति लिङ्गव्यत्ययः हेमघवन्धनवन्निन्द्र तुभ्यंत्वदर्थंतादृशः सोमः सुतोध्वर्युभिरभिषुतः तुभ्यंहोतुंआभृतः उत्तरवेद्यांप्रत्याहृतश्च अस्यइमं सोमं ब्राह्मणात् ब्राह्मणाच्छंसिनोयागात् तृपत् तृप्यंस्त्वंआपिब आभिमुख्येनपिब क्रियाग्रहणंकर्तव्यमितिकर्मणःसम्प्रदानत्वादस्येतिचतुर्थ्यर्थेषष्ठी ॥ ५ ॥

५. धनवान् इन्द्र, तुम प्राचीन हो। जिस सोम-द्वारा तुम्हारे हाथ में शत्रु-विजयी सामर्थ्य और बल है, वही तुम्हारे लिए अभिषुत और आहृत हुआ है। तुम तृप्त होकर ब्राह्मण ऋत्विक् के पास से सोमपान करो।

अथषष्ठी–

जुषेथांयज्ञंबोधतंहवस्यमेसत्तोहोतानिविदःपूर्व्याअनु ।
अच्छाराजानानमएत्यावृतंप्रशास्त्रादापिबतंसोम्यंमधु॥६॥२५॥

जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । सत्तः । होता ।
निऽविदः । पूर्व्याः । अनु । अच्छ । राजाना । नमः । एति ।
आऽवृतम् । प्रऽशास्त्रात् । आ । पिबतम् । सोम्यम् । मधु ॥६॥२५॥

हेमित्रावरुणौ मदीयमिमंयज्ञं जुषेथांसेवेथां मेममहवस्यहवमाह्वानंपूर्ववत्कर्मणिषष्ठी बोधतमवगच्छतं तथासत्तोनिषण्णोस्मदीयोहोतापूर्व्याश्चिरन्तनीः निविदः वाङ्नामैतत् शस्त्रलक्षणावाचः अनुशंसन्तीतिशेषः उद्गातृभिः कृतस्यस्तोत्रस्यानुगुण्येनआज्यादीनि शस्त्राणिशंसतीत्यर्थः अपिच नमः सोमलक्षणमन्नंआवृतंऋत्विग्भिर्वेष्टितंराजानाराजमानौयुवांअच्छाभिमुख्येनएतिगच्छति प्राप्नोति तादृशं सोम्यंसोममयंमधुमादकंहविः प्रशास्त्रात् प्रशास्तुर्यागात् आपिबतं आभिमुख्येनपिबतम् ॥ ६ ॥

६. हे मित्रावरुण, तुम हमारे यज्ञ की सेवा करो। होता बैठकर चिरन्तनी स्तुति का उच्चारण करते हैं। तुम हमारा आह्वान सुनो। तुम शोभावाले हो। ऋत्विकों-द्वारा परिवेष्टित अन्न तुम्हारे सामने हैं। इस मधुर सोमरस का, प्रशास्ता के पास से, पान करो।

॥ इतिद्वितीयस्यसप्तमेपञ्चविंशोवर्गः ॥ २५ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेसप्तमोध्यायः ॥ ७ ॥

## ॥श्रीगणेशायनमः॥



यस्यनिःश्वसितंवेदायोवेदेभ्योखिलंजगत्। निर्ममेतमहंवन्देविद्यातीर्थमहेश्वरम्॥ १॥
अथद्वितीयाष्टकस्याष्टमोध्यायआरभ्यते द्वितीयमण्डलस्यचतुर्थेनुवाकेमन्दस्वेतिषळृचंपञ्च-
मंसूक्तंगार्त्समदं मन्दस्वेत्यनुक्रान्तं पूर्वत्रऋतव्यंतुजागतंत्वितितुशब्दप्रयोगादिदमपिजागत-
मृतव्यं तत्राद्याश्वतस्रऋचोद्रविणोदोदेवताकाः पञ्चम्याश्विनी षष्ठ्याग्नेयी दशरात्रेषष्ठेहनिऋ-
तुयाजेषुप्रैषान्कुशिरस्कान्कृत्वातैःप्रैषैःप्रेषितव्यंयष्टव्यंच तत्रसप्तमादीनांप्रैषाणामुपरिष्टात् मन्द-
स्वेत्याद्याःषळृचः क्रमेणप्रक्षेपणीयाः सूत्रंतुपूर्वमेवोदाहृतम्।

ॐ मन्दस्वहोत्रादनुजोषमन्धसोध्वर्यवःसपूर्णांवष्ट्यासिचम्।
तस्माएतंभरततद्वशोददिर्होत्रात्सोमंद्रविणोदःपिबऋतुभिः॥ १॥

मन्दस्व। होत्रात्। अनु। जोषम्। अन्धसः। अध्वर्यवः।
सः। पूर्णाम्। वष्टि। आऽसिचम्। तस्मै। एतम्। भरत। तत्ऽवशः।
ददिः। होत्रात्। सोमम्। द्रविणःऽदः। पिब। ऋतुऽभिः॥ १॥

हेद्रविणोदः द्रविणसोधनस्यदातः एतन्नामकदेव अन्धसः देवानामन्नरूपस्य सोमस्य सोमे-
न होत्रात् होतृकर्तृकाद्यागात् अनुजोषं प्रीतिमनुमन्दस्व हर्षंप्राप्नुहि हेअध्वर्यवः सद्रविणोदाः-
पूर्णां संपूर्णां आसिचं आसिच्यमानाहुतिं वष्टि कामयते अतस्तस्मैद्रविणोदसेग्नये एतंसोमं-
भरतप्रापयत तद्वशस्तत्कामोद्रविणोदाःददिर्दाता युष्माकमभीष्टफलस्यदाताभवतीतिशेषः किंच
हेद्रविणोदः होत्रात् होतुर्यागात् ऋतुभिः इषमासाभिमानिभिः ऋतुदेवैःसहसोमंपिब॥ १॥

१. हे द्रविणोदा वा धनप्रिय अग्नि, होतृ-कृत यज्ञ में अन्न ग्रहण करके प्रसन्न और हृष्ट बनो। अध्वर्युगण, द्रविणोदा 'पूर्णाहुति चाहते हैं; इसलिए उनके लिए यह सोम प्रदान करो। सोमाभिलाषी द्रविणोदा अभीष्ट फल देनेवाले हैं। द्रविणोदा, होता के यज्ञ में ऋतुओं के साथ सोम पान करो।

अथद्वितीया—

यमुपूर्वमहुवेतमिदंहुवेसेदुहव्योददिर्योनामपत्यते।
अध्वर्युभिःप्रस्थितंसोम्यंमधुपोत्रात्सोमंद्रविणोदःपिबऋतुभिः॥२॥

यम्। ऊँ इति। पूर्वम्। अहुवे। तम्। इदम्। हुवे। सः। इत्।
ऊँ इति। हव्यः। ददिः। यः। नाम। पत्यते। अध्वर्युऽभिः।
प्रऽस्थितम्। सोम्यम्। मधु। पोत्रात्। सोमम्। द्रविणःऽदः।
पिब। ऋतुऽभिः॥ २॥

हेद्रविणोदः यमु यंत्वामेवपूर्वंहोतृकर्तृकेसोमयागेहुवे आहुतवानस्मि इदंसंप्रति तं तमेव पोतृकर्तृकेसोमयागेहुवे आह्वयामि सेत् सएवद्रविणोदाः हव्यः ह्वातव्यः उइतिपूरणे ददिरभीष्टफलस्यदातायोनाम यःखलुपत्यते देवतात्वेनेष्टे तस्मैद्रविणोदसे सोम्यंसोमात्मकं मधुअध्वर्युभिः प्रस्थितंप्रणीतमासीत् हेद्रविणोदः पोत्रात् पोतुर्यागात् ऋतुभिः ऊर्जसंज्ञकैःसहसोमंपिब॥ २॥

२. हमने पहले जिनको बुलाया है, इस समय भी उन्हीं को बुलाते हैं। वे आह्वान-योग्य हैं; क्योंकि वे दाता और सबके अधिपति हैं। उनके लिए अध्वर्युओं-द्वारा सोम-रूप मधु तैयार किया गया है। द्रविणोदा, पोता के यज्ञ में ऋतुओं के साथ सोम पान करो।

मेद्यन्तुतेवह्नयोयेभिरीयसेरिषण्यन्वीळयस्वावनस्पते।
आयूयाधृष्णोअभिगूर्यात्वंनेष्ट्रात्सोमंद्रविणोदःपिबऋतुभिः॥३॥

मेद्यन्तु। ते। वह्नयः। येभिः। ईयसे। अरिषण्यन्। वीळयस्व।
वनस्पते। आऽयूय। धृष्णो इति। अभिऽगूर्य। त्वम्। नेष्ट्रात्।
सोमम्। द्रविणःऽदः। पिब। ऋतुऽभिः॥ ३॥

हेद्रविणोदः येभिर्यैःवाहैः ईयसेप्रामोषि तेतव वह्नयोवोढारइतियास्केनोक्तत्वात् तेमेद्यन्तु तृप्यन्तु हेवनस्पतेवनानांपते अरिषण्यन् अहिंसन् वीळयस्व दृढीभव हेधृष्णोधर्षकत्वं आयूय आगत्य अभिगूर्य उद्यम्य नेष्ट्रात् नेष्टुर्यागात् ऋतुभिः सहःसंज्ञकैःसहसोमंपिब॥ ३॥

३. द्रविणोदा, तुम जिस अश्व पर जाते हो, वह तृप्त हो। वनस्पति, किसी की हिंसा न करके दृढ़ होओ। घर्षणकारी, नेष्टा के यज्ञ में आकर ऋभुओं के साथ सोम पान करो।

अपाद्धोत्रादुतपोत्रादमत्तोतनेष्ट्रादजुषतप्रयोहितम्।
तुरीयंपात्रममृक्तममर्त्यंद्रविणोदाःपिबतुद्राविणोदसः॥ ४॥

अपात्। होत्रात्। उत। पोत्रात्। अमत्त। उत। नेष्ट्रात्।
अजुषत। प्रयः। हितम्। तुरीयम्। पात्रम्। अमृक्तम्।
अमर्त्यम्। द्रविणःऽदाः। पिबतु। द्राविणःऽदसः॥ ४॥

अच्छावाकस्येयं योद्रविणोदाः होत्राव् होतुर्यागाव् सोममपाव् पीतवान् उत किंच पोत्रात्पोतुर्यागाव् अमत्त सोमंपीत्वाअमाद्यव् उतअपिच नेष्ट्राव् नेष्टुर्यागाव् हितंदत्तंपयः देवानामन्नरूपं सोमंअजुषत असेविष्ट सद्राविणोदसः हवीरूपद्रविणस्य प्रदातृभ्यऋत्विग्भ्योहितः ऋत्विजोत्रद्रविणोदसउच्यन्ते हविषोदातारस्तेचैनंजनयन्तीतियास्केनोक्तत्वाव् तादृशोद्रविणोदाः अमृक्तंदशापवित्रेणामृष्टं अमर्त्यं अमरणसाधनंतुरीयंपात्रं चतुर्थपात्रस्थंसोमंपिबतु ॥ ४ ॥

४. द्रविणोदा, जिन्होंने होता के यज्ञ में सोम पान किया है, जो पिता के यज्ञ में हृष्ट हुए हैं, जिन्होंने नेष्टा के यज्ञ में प्रदत्त अन्न भक्षण किया है, वे ही सुवर्ण-दाता ऋत्विक् के अशोधित और मृत्यु-निवारक चतुर्थ सोम-पात्र का पान करें।

अर्वाञ्चमद्ययय्यंनृवाहणंरथंयुञ्जाथामिहवांविमोचनम्।
पृंक्तंहवींषिमधुनाहिकंगतमथासोमंपिबतंवाजिनीवसू ॥ ५ ॥

अर्वाञ्चम्। अद्य। यय्यम्। नृऽवाहनम्। रथम्। युञ्जाथाम्। इह। वाम्। विऽमोचनम्। पृंक्तम्। हवींषि। मधुना। आ। हि। कम्। गतम्। अथ। सोमम्। पिबतम्। वाजिनीवसू इति वाजिनीऽवसू ॥५॥

हेअश्विनौ अद्यास्मिन्नहनि यय्यंयर्यिगन्तारं नृवाहणं न्रोर्युवयोर्वोढारं इहयज्ञे वांयुवयोर्विमोचनं विमोचयितारं रथंअर्वाञ्चं यथार्वाग्भवति तथा युञ्जाथां किंच मधुनास्वादुरसेन हवींषि पृङ्क्तं संयोजयतं अथच आगतं आगच्छतं हिकमितिपूरणे अथानन्तरं हेवाजिनीवसू वाजएववाजिनी अन्नेनवासयितारौ बलवर्धनौवा सोमंपिबतम् ॥ ५ ॥

५. अश्विनीकुमारो, जो रथ शीघ्रगामी, तुम्हारा वाहन और अभीष्ट स्थान पर तुम्हें उतार देनेवाला है, आज उसी रथ को इस यज्ञ में हमारे सामने योजित करो। हमारा हव्य सुस्वादु करो और यहाँ आओ। अन्नवाले अश्विद्वय, हमारा सोम पान करो।

जोष्यग्नेसमिधंजोष्याहुतिंजोषिब्रह्मजन्यंजोषिसुष्टुतिम्।
विश्वेभिर्विश्वाँऋतुनावसोमहउशन्देवाँउशतःपाययाहविः ॥६॥१॥

जोषि। अग्ने। सम्ऽइधम्। जोषि। आऽहुतिम्। जोषि। ब्रह्म। जन्यम्। जोषि। सुऽस्तुतिम्। विश्वेभिः। विश्वान्। ऋतुना। वसो इति। महः। उशन्। देवान्। उशतः। पायय। हविः ॥ ६ ॥ १ ॥

हेअग्ने समिधं जोषिजुषस्व आहुतिं जोषिजुषस्व ब्रह्मशस्त्रंजन्यं जनेभ्योहितं जोषि जुषस्व सुष्टुतिंशोभनस्तोत्रं जोषिजुषस्व किंच वसो सर्वेषामावासभूत हेअग्ने उशतःकामयमानान्

महः महतः विश्वान् सर्वान् देवान् उशन् कामयमानस्त्वं ऋतुनातपस्यसंज्ञकेनसह तथा विश्वेभिः सर्वैः देवैःसहहविः हवीरूपंसोमंपायय ॥ ६ ॥

६. अग्निदेव, तुम समिधा, आहुति, लोगों के हितकर स्तोत्र और सुन्दर स्तुति से युक्त होओ। तुम सबके आश्रय-दाता और हमारे हव्य के अभिलाषी होओ। हमारा हव्य चाहनेवाले सारे देवों को, ऋभुओं और विश्वदेवों के साथ, सोम पान कराओ।

॥ इतिद्वितीयस्याष्टमेप्रथमोवर्गः ॥ १ ॥

उदुष्यइत्येकादशर्चंषष्ठंसूक्तंगार्त्समदंत्रैष्टुभंसवितृदेवताकं अत्रानुक्रमणिका उदुष्यएकादशसावित्रमिति व्यूढेदशरात्रेषष्ठेहनिवैश्वदेवशस्त्रेएतत्सूक्तंसावित्रनिविद्धानीयं व्यूढश्वेदितिखण्डेसूत्रितम्--षष्ठस्योदुष्यदेवइतिगार्त्समदमिति ।

उदुष्यदेवःसंविता सवायंशश्वत्तमंतदंपावह्निरस्थात् ।
नूनंदेवेभ्योविहिधातिरत्नमथाभजद्वीतिहोत्रंस्वस्तौ ॥ १ ॥

उत् । ऊँ इति । स्यः । देवः । सविता । सवायं । शश्वत्ऽतमम् । तत्ऽअंपाः । वह्निः । अस्थात् । नूनम् । देवेभ्यः । वि । हि । धाति । रत्नम् । अथ । आ । अभजत् । वीतिऽहोत्रम् । स्वस्तौ ॥ १ ॥

स्यः सदेवोद्योतमानः सवितासवायलोकानांप्रसवाय अनुज्ञायैशश्वत्तमंप्रतिदिनंउदस्थाव उत्तिष्ठति उइतिपूरणः कीदृशःसवितातदपाः तत्प्रसवकर्मा अपः अप्नइतिकर्मनामसुपाठाव वह्निर्वोढाजगतां किंच नूनंसंप्रतिदेवेभ्यः स्तोतृभ्योरत्नंधनंविहिधातिप्रयच्छति हीतिपूरणे अथच अपिच वीतिहोत्रंकान्तयज्ञंयजमानंस्वस्तौअविनाशेक्षेमेआअभजद्भागिनंकरोतु यद्यपि स्वस्तिशब्दोविभक्त्यन्तनिर्दिष्टशब्दपरस्तथाप्यपर्यवसानादर्थपरोभवति ॥ १ ॥

१. प्रकाशक और जगद्वाहक सविता वा सूर्य, प्रसव के लिए प्रतिदिन उदित होते हैं। यही उनका कर्म है। वे स्तोताओं को रत्न देते और सुन्दर यज्ञवाले यजमान को मंगलभागी बनाते हैं।

विश्वंस्यहिश्रुष्टयेदेवऊर्ध्वःप्रबाहवापृथुपाणिःसिसंर्ति ।
आपंश्चिदस्यव्रतआनिमृंग्राअयंचिद्वातोरमतेपरिज्मन् ॥ २ ॥

विश्वस्य । हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः । सिसर्ति । आपः । चित् । अस्य । व्रते । आ । निऽमृंग्राः । अयम् । चित् । वातः । रमते । परिऽज्मन् ॥ २ ॥

देवोद्योतमानः सवितापृथुपाणिः महाकरः विश्वस्यश्रुष्टये जगतःसुखाय ऊर्ध्वउद्गतः सन् बाहवा बाहू प्रसिसर्तिप्रसारयति हीतिपूरणार्थः आपश्चित् आपोपिअस्यव्रतेप्रसवाख्येक-र्मणिसति व्रतंकर्वरमितितन्नामसुपाठात् आस्यन्दन्तइविशेषः ताश्चनिम्रग्राः नितरांशोधयित्र्यः गङ्गादिरूपेणजगत्पावयन्तीत्यर्थः अयंचिद्वातः अयमपिवायुः परिज्मन्परितोगतेव्याप्तेन्तरिक्षे रमते ॥ २ ॥

२. प्रलम्बबाहु और प्रकाशवाले सविता, विश्व के आनन्द के लिए, उदित होकर बाहु प्रसारित करते हैं। उनके कार्य के लिए अतीव पवित्र जल-समूह प्रवाहित होता है और वायु भी सर्वतोव्यापी अन्तरिक्ष में विहरण करता है।

आशुभिश्चिद्यान्विमुचातिनूनमरीरमदतमानंचिदेतोः ।
अघ्नर्षूणांचिन्न्ययाँअविष्यामनुव्रतंसवितुर्मोक्यागात् ॥ ३ ॥

आशुऽभिः । चित् । यान् । वि । मुचाति । नूनम् । अरीरमत् ।
अतमानम् । चित् । एतोः । अघ्नर्षूणाम् । चित् । नि । अयान् ।
अविष्याम् । अनु । व्रतम् । सवितुः । मोकी । आ । अगात् ॥ ३ ॥

यान् गच्छन् सविता आशुभिश्चित् शीघ्रगामिभिरपिरश्मिभिर्विमुचाति विमुच्यते नून-मितिपूरणः अतमानंचित् सततंगच्छन्तमपिजनंएतोर्गमनात् अरीरमत् उपरमयति किंच अ-घ्नर्षूणांचित् अहिमाहन्तारंशत्रुं अर्षन्ति अभिगच्छन्तीत्यघ्नर्षवः तेषामपिअविष्यां गमनेच्छां न्ययान् नियच्छति सवितुः प्रेरकस्यसूर्यस्यव्रतंकर्मअनुपश्चात् मोकीरात्रिः मोकीशोकीतिरा-त्रिनामसुपाठात् आगात् आगच्छति सवितुश्चेष्टोपरतौरात्रिरागच्छतीतियावत् ॥ ३ ॥

३. जाते-जाते जिस समय सविता शीघ्रगामी किरणों-द्वारा विमुक्त होते हैं, उस समय वे निरन्तरगामी पथिक को भी विरत करते हैं। जो शत्रु के विरुद्ध जाते हैं; सविता उनकी जाने की इच्छा को भी निवृत्त करते हैं। सविता के कर्म के अनन्तर रात्रि का आगमन होता है।

पुनःसमव्यद्विततंवयन्तीमध्याकर्तोर्न्यधाच्छक्मधीरः ।
उत्संहायास्थाद्व्यृतूँरदर्धररमतिःसविता देवआगात् ॥ ४ ॥

पुनरिति । सम् । अव्यत् । विऽततम् । वयन्ती । मध्या । कर्तोः ।
नि । अधात् । शक्म । धीरः । उत् । सम्ऽहाय । अस्थात् । वि ।
ऋतून् । अदर्धः । अरमतिः । सविता । देवः । आ । अगात् ॥ ४ ॥

वयन्ती वस्त्रंवयन्तीनारीव रात्रिः विततमालोकं पुनःसमव्यत् संवेष्टयते पुनःशब्दः पूर्वेद्युरप्येवमकार्षीदितिद्योतयति धीरः प्राज्ञोपि सर्वोलोकःकर्तोः क्रियमाणंकर्म कर्तोः कर्तवाइति तन्नामसुपाठात् शक्म कर्तुंशक्यमपि मध्या मध्ये उपक्रान्तं कर्म अपरिसमाप्येत्यर्थः न्यधात् निहितवान् सवितर्युपरतइतिशेषः सर्वोलोकः संहायशय्यांविहायउदस्थात् अवशिष्टंकर्मकर्तुं पुनरुत्तिष्ठति संपूर्वोजहातिःशय्यापरित्यागेवर्तते तथाचश्रूयते—कलिःशयानोभवतिसंजिहानस्तुद्वापरइति। सवितासर्वस्यप्रसवितासूर्यः अरमतिः अनुपरतिःदेवः द्योतमानः आगात् आगच्छति उदेतीतियावत् ऋतून्कालविशेषांश्चव्यदर्दः विदारयति॥ ४॥

४. वस्त्र बुननेवाली रमणी की तरह रात्रि पुनः आलोक को भली भाँति वेष्टन करती है। बुद्धिमान् लोग जो कर्म करते हैं, वह करने में समर्थ होने पर भी मध्य मार्ग में रख देती है। विराम-रहित और ऋतुविभाग-कर्त्ता प्रकाशक सविता जिस समय फिर उदित होते हैं, उस समय लोग शय्या छोड़ते हैं।

नानौकांसिदुर्योविश्वमायुर्वितिष्ठतेप्रभवःशोकोअग्नेः।
ज्येष्ठंमातासूनवेभागमाधादन्वस्यकेतमिषितंसवित्रा॥ ५॥ २॥

नाना। ओकांसि। दुर्यः। विश्वम्। आयुः। वि। तिष्ठते।
प्रऽभवः। शोकः। अग्नेः। ज्येष्ठम्। माता। सूनवे। भागम्।
आ। अधात्। अनु। अस्य। केतम्। इषितम्। सवित्रा॥ ५॥२॥

प्रभवः प्रभूतः अग्नेः शोकः तेजः दुर्यःगृह्यः गृहेभवः नानौकांसियजमानानां पृथग्भूतान्गृहान् वितिष्ठते अधितिष्ठति विश्वमायुः सर्वमन्नंचाधितिष्ठति आयुः सूनृतेत्यन्ननामसुपाठात् माताउषाः सवित्राअन्विषितंप्रेषितं अस्यकेतं प्रज्ञापकंअग्नेः ज्येष्ठंप्रथमं अग्निहोत्राख्यंभागं सूनवेअग्नयेआधात् आदधाति॥ ५॥

५. अग्नि के गृह में स्थित प्रभूत तेज यजमान के भिन्न-भिन्न गृह और समस्त अन्न में अधिष्ठित है। माता उषा ने सविता-द्वारा प्रेरित प्रज्ञापक यज्ञ का श्रेष्ठ भाग पुत्र अग्नि को दान किया है।

॥ इतिद्वितीयस्याष्टमेद्वितीयोवर्गः॥ २॥

अथषष्ठी—

समाववर्तिविष्ठितोजिगीषुर्विश्वेषांकामश्चरतामभूत्।
शश्वाँअपोविकृतंहित्व्यागादनुव्रतंसवितुर्दैव्यस्य॥ ६॥

१ ऐ० ब्रा० ७. १५।

सम्ऽआववर्ति । विऽस्थितः । जिगीषुः । विश्वेषाम् । कामः ।
चरताम् । अमा । अभूत् । शश्वान् । अपः । विऽकृतम् । हित्वी ।
आ । अगात् । अनु । व्रतम् । सवितुः । दैव्यस्य ॥ ६ ॥

जिगीषुः विजयेच्छुर्योद्धा विष्ठितः युद्धार्थंप्रस्थितः समाववर्ति समावर्तयति विश्वेषां सर्वेषां चरतांजङ्गमानां अमा अमादमइतिगृहनामसुपाठात् गृहंप्रतिकामोभूत्भवति शश्वान् नित्यंकर्मरतः अपः कर्म विकृतं अर्धकृतं हित्वी हित्वा आगात् गृहमागच्छति एतत्सर्वं दैव्यस्य दिविभवस्य सवितुः प्रेरकस्य सूर्यस्यव्रतं अस्तमयाख्यं कर्मानुजायतइत्यर्थः ॥ ६ ॥

६. स्वर्गीय सविता के व्रत की समाप्ति होने पर जयाभिलाषी राजा युद्ध-यात्रा कर चुकने पर भी लौट आता है। सारे जंगम पदार्थ घर की अभिलाषा करते और सदा कार्य-रत व्यक्ति अपने किये आधे कर्म को भी छोड़कर घर की ओर लौटता है।

त्वयाहितमप्यमप्सुभागंधन्वान्वामृगयसोवितस्थुः ।
वनानिविभ्योनकिरस्यतानिव्रतादेवस्यसवितुर्मिनन्ति ॥ ७ ॥

त्वया । हितम् । अप्यम् । अप्ऽसु । भागम् । धन्व । अनु ।
आ । मृगयसः । वि । तस्थुः । वनानि । विऽभ्यः । नकिः । अस्य ।
तानि । व्रता । देवस्य । सवितुः । मिनन्ति ॥ ७ ॥

हेसवितस्त्वया अप्सुअन्तरिक्षे आपः पृथिवीतिअन्तरिक्षनामसुपाठात् जलाधारेवाहितं निहितं अप्यमपांसंबन्धिनंभागंधन्वानुनिर्जलप्रदेशेषुअरण्येषुमृगयसोमृगयमाणाः मृगाः आसमन्तात्वितस्थुरधितिष्ठन्ति किंच वनानिवृक्षाः विभ्यः पक्षिभ्यः आवासादिरूपेणत्वयाभागोदत्तः अस्यदेवस्यसवितुः तानितादृशानि व्रताव्रतानि कर्माणिनकिर्मिनन्ति केपिनहिंसन्ति ॥ ७ ॥

७. सविता, अन्तरिक्ष में तुमने जो जल-भाग रख छोड़ा है, जलान्वेषणकर्त्ता लोग चारों ओर उसे पाते हैं। तुमने पक्षियों के लिए वृक्षों का विभाग किया है। कोई भी सविता के कार्य की हिंसा नहीं कर सकता।

याद्राध्यं१वरुणोयोनिमप्यमनिशितंनिमिषिजर्भुराणः ।
विश्वोमार्ताण्डोव्रजमापशुर्गात्स्थशोजन्मानिसविताव्याकः ॥ ८ ॥

यात्ऽराध्यम् । वरुणः । योनिम् । अप्यम् । अनिऽशितम् ।
निऽमिषि । जर्भुराणः । विश्वः । मार्ताण्डः । व्रजम् । आ । पशुः ।
गात् । स्थऽशः । जन्मानि । सविता । वि । आ । अकरित्यकः ॥ ८ ॥

वरुणः याद्राध्यं यातां गच्छतां राध्यंराधनीयं अप्यंआप्तुंयोग्यं अनिशितं अतीक्ष्णं सुखकरमितियावत् योनिंस्थानंनिमिषि निमेषे सवितुरस्तमयेसति विश्रमार्थंप्राणिभ्यः प्रयच्छति वरुणस्यरात्रेर्निर्वाहकत्वात्जर्भुराणोभृशंगच्छन् विश्वः सर्वोमार्ताण्डोमृतात् भिन्नादण्डादुत्पद्यमानः पक्षी आगात्आगच्छति विश्वःपशुरपि व्रजं गोष्ठमागात् सविताप्रेरकः स्थशः स्थानेस्थानेजन्मानिजातानिभूतानिव्याकः पृथगकार्षीत् ॥ ८ ॥

८. सविता के अस्त होने पर सदा गमनशील वरुण सारे जंगम पदार्थों को सुखकर, वाञ्छनीय और सुगम वासस्थान प्रदान करते हैं। जिस समय सविता सारे भूतों को स्थान-स्थान पर अलग-अलग कर देते हैं, उस समय पशु-पक्षिगण भी अपने-अपने स्थान को जाते हैं।

नयस्येन्द्रोवरु॑णो॒नमि॒त्रोव्र॒तम॑र्य॒मानमि॒नन्ति॑रु॒द्रः।
नारा॑तय॒स्तमि॒दंस्व॒स्तिहु॒वेदे॒वंस॑वि॒तारं॒नमो॑भिः ॥ ९ ॥

न। यस्य॑। इन्द्रः॑। वरु॑णः। न। मि॒त्रः। व्र॒तम्। अ॒र्य॒मा। न। मि॒नन्ति॑। रु॒द्रः। न। अरा॑तयः। तम्। इ॒दम्। स्व॒स्ति। हु॒वे। दे॒वम्। स॒वि॒तार॑म्। नम॑ःऽभिः ॥ ९ ॥

यस्यसवितुर्देवस्य व्रतं प्रसवाख्यं कर्मइन्द्रोनमिनातिनहिनस्ति वरुणश्चनमिनाति मित्रश्चार्यमाचनमिनाति रुद्रश्चनमिनाति अरातयोऽसुराश्चनमिनन्ति मिनन्तीतिश्रुतमाख्यातंयथायोगंविपरिणामेनप्रत्येकमभिसंबध्यते तंसवितारंसर्वस्यप्रेरकंदेवंद्योतमानंइदमिदानींनमोभिरन्नरूपैर्हविर्भिःसह नमः आयुरित्यन्ननामसुपाठात् स्वस्तिक्षेमायहुवेस्तौमि ॥ ९ ॥

९. इन्द्र जिसके व्रत की हिंसा नहीं करते, वरुण, मित्र, अर्यमा और रुद्र भी हिंसा नहीं करते, शत्रुगण भी हिंसा नहीं करते, उन्हीं द्युतिमान् सविता को कल्याण के लिए इस प्रकार नमस्कार-द्वारा हम आह्वान करते हैं।

भग॑ंधियं॑वा॒जय॑न्त॒ःपुरं॑धिं॒नरा॒शंसो॒ग्नास्पति॑र्नो॑अव्याः।
आ॒येवा॒मस्य॑सं॒ग॒थेर॑यी॒णांप्रि॒यादे॒वस्य॑सवि॒तुःस्या॑म ॥ १० ॥

भर्गम्। धियम्। वा॒जय॑न्तः। पुर॑म्ऽधिम्। नरा॒शंसः॑। ग्नाःपतिः। नः। अ॒व्या॒ः। आ॒ऽअ॒ये। वा॒मस्य॑। स॒म्ऽग॒थे। र॒यी॒णाम्। प्रि॒याः। दे॒वस्य॑। स॒वि॒तुः। स्या॒म ॥ १० ॥

भगंभजनीयंधियंध्यातव्यं पुरंधिंपुरस्यधारयितारं बहुप्रज्ञंवासवितारं पुरंधिर्बहुधीरितियास्कः[1]। वाजयन्तः वाजिनंबलिनंकुर्वन्तः विभक्तिव्यत्ययः नः स्तुवतोस्मान् नराशंसः नरैः शंसनीयः ग्नाः

1 नि० ६. १३.।

पतिः देवपत्नीनांपतिः छन्दसांपतिर्वा तथाचश्रूयते—छन्दांसिवैग्नाइति उतग्नाव्यंतुदेवपत्नीरितिचं । सविताअव्याः अव्यात् किंच वामस्यधनस्यरयीणांपशूनांच तथाचश्रूयते—पशवोवैरयिरिति । आयेआगमनेसङ्गथेसंगमनेचनिमित्ते देवस्य द्योतमानस्यसवितुःप्रेरकस्य वयंप्रियाःस्याम भवेम ॥ १० ॥

१०. जिनकी स्तुति सारे मनुष्य करते हैं, जो देवपत्नियों के रक्षक हैं, वे ही सविता हमारी रक्षा करें। हम भजनीय, बहुप्रज्ञ और ध्यान-योग्य सविता को बलवान् करते हैं। हम धन और पशु की प्राप्ति के और संचय के सम्बन्ध में सविता के प्रिय हों।

अस्मभ्यंतद्दिवोअद्भ्यःपृथिव्यास्त्वयादत्तंकाम्यंराधआगांत् ।
शंयत्स्तोतृभ्यंआपयेभवात्युरुशंसायसवितर्जरित्रे ॥ ११ ॥ ३ ॥

अस्मभ्यम् । तत् । दिवः । अत्ऽभ्यः । पृथिव्याः । त्वया । दत्तम् ।
काम्यम् । राधः । आ । गात् । शम् । यत् । स्तोतृऽभ्यः ।
आपये । भवाति । उरुऽशंसाय । सवितः । जरित्रे ॥ ११ ॥ ३ ॥

हेसवितः अस्मभ्यंत्वयादत्तंतत्प्रसिद्धंकाम्यं कमनीयंराधोधनंदिवः द्युलोकात्अद्भ्योन्तरिक्षलोकात् पृथिव्याभूमेश्चआगादागच्छतु किंच स्तोस्तृभ्यःस्तोतृणामापयेबन्धवे तद्वंशजाय यद्धनं शं सुखकरंभवातिभवेत् उरुशंसायबहुस्तुतयेजरित्रेस्तोत्रेमह्यं जरिताकारुरितिस्तोतृनामसुपाठात् हेसवितः तत्प्रयच्छ ॥ ११ ॥

११. सविता, तुमने हमें जो प्रसिद्ध और रमणीय धन प्रदान किया है, वह द्युलोक, भूलोक और अन्तरिक्षलोक से हमारे पास आये। जो धन स्तोताओं के वंशजों के लिए शुभकर है, मैं बहुत-बहुत स्तुति करता हूँ कि मुझे वही धन दो।

॥ इतिद्वितीयस्याष्टमेतृतीयोवर्गः ॥ ३ ॥

ग्रावाणेवेत्यष्टर्चंसप्तमंसूक्तंगार्त्समदंत्रैष्टुभमाश्विनं ग्रावाणेवाष्टावाश्विनमित्यनुक्रान्तत्वात् प्रवर्ग्येभिष्टवेपूर्वेपटलेस्यविनियोगः सूत्रितंच—ग्रावाणेवेळेद्यावापृथिवीइति प्रातरनुवाकाश्विनशस्त्रयोरपीदंसूक्तं सूत्रितंच—ग्रावाणेवनासत्याभ्यामितित्रीणीति ।

तत्रप्रथमा—

ग्रावाणेवतदिदर्थंजरेथेगृध्रेवव्रक्षंनिधिमन्तमच्छ ।
ब्रह्माणेवविदथउक्थशासादूतेवहव्याजन्यापुरुत्रा ॥ १ ॥

---

१ऋ० सं० ४.२.२८. । २ तै० सं० १.५.७. ।

ग्रावा॑णाऽइव । तत् । इत् । अर्थ॑म् । जरे॑थे॒ इति॑ । गृध्रा॑ऽइव ।
वृ॒क्षम् । नि॒धि॒ऽमन्त॑म् । अच्छ॑ । ब्र॒ह्माणा॑ऽइव । वि॒दथे॑ ।
उ॒क्थ॒ऽशसा॑ । दू॒ताऽइ॑व । हव्या॑ । जन्या॑ । पु॒रु॒ऽत्रा ॥ १ ॥

हेअश्विनौग्रावाणेव अरातिंप्रतिप्रेषितौपाषाणाविव तदर्थं अर्तेर्धातोरर्थशब्दः अर्थो-र्तेरितियास्कः । तमरातिमित्यर्थः इदितिपूरणः जरेथेजरयेथेअरातिंबाधेथां यद्वा यथागुरूग्रा-वाणौक्षिप्तौतदानीमेवशीघ्रंगच्छतः तथातद् तमर्थं गन्तारंजरेथेशीघ्रंगत्वास्तुतमित्यर्थः जरतिः स्तुतिकर्मा किंच गृध्रेव गृध्राविवपक्षिणाविववृक्षंफलितंवृक्षं निधिमन्तं धनवन्तं यजमानं अच्छ आगच्छतमितिशेषः विदथेयज्ञे विदथःसवनमितियज्ञनामसुपाठाद् उक्थशसा उक्थशंसि-तारौब्रह्माणेवब्राह्मणाविव जन्याजनपदेषुदूतेव राज्ञाप्रेषितौदूताविव पुरुत्राबहुभिःपुरुषैर्हव्याह्वा-तव्यौयुवां अत्रउपमेयद्वित्वानुसारेणोपमानद्वित्वम् ॥ १ ॥

१. अश्विद्वय, शत्रु के प्रति प्रेरित प्रस्तर-खण्डद्वय की तरह शत्रु को बाधा दो। जैसे दो पक्षी वृक्ष पर आते हैं, वैसे ही तुम भी यजमान के निकट आओ। मंत्रोच्चारक ब्रह्मा नाम के ऋत्विक् और देश में दो दूतों की तरह तुम बहुतों के बुलाने योग्य हो।

प्रा॒त॒र्यावा॑णार॒थ्ये॑ववी॒राजेव॒यमा॒वर॒मास॑चेथे ।
मेने॑इवत॒न्वा॒३॑शुंभ॑मानेदंप॑तीवक्रतु॒विदा॒जने॑षु ॥ २ ॥

प्रा॒तः॒ऽयावा॑ना । र॒थ्या॑ऽइव । वी॒रा । अ॒जाऽइ॑व । य॒मा । वर॑म् ।
आ । स॒चे॒थे॒ इति॑ । मेने॑ इ॒वेति॒ मेने॑ऽइव । त॒न्वा॑ । शुम्भ॑माने॒
इति॑ । दम्प॑ती इ॒वेति॒ दम्प॑तीऽइव । क्र॒तु॒ऽविदा॑ । जने॑षु ॥ २ ॥

हेअश्विनौ प्रातर्यावाणा प्रातरेवयज्ञार्थंगन्तारौ रथ्येव रथिनाविव वीरावीरौ स्वकर्म-णिशूरौ अजेव अजाविव छागाविव यमायमलौ मेने इव नार्याविव तन्वा शरीरेण शुंभ-माने शोभमानौ दंपतीव जायापतीइव संगतौ जनेषु विषयेषु क्रतुविदा कर्मविदौ युवां वरं संभक्तारं आसचेथे आगच्छथः ॥ २ ॥

२. अश्विद्वय, प्रातःकाल जानेवाले दो रथियों की तरह तुम वीर हो, दो छागों की तरह यमज हो, दो स्त्रियों की तरह सुन्दर शरीरवाले हो, दम्पती की तरह संगत और सबके कर्मज्ञाता हो। तुम दोनों भक्त के पास आओ।

शृङ्गे॑वनःप्रथ॒मा॑ग॑न्तम॒र्वाक्श॒फावि॑व॒जर्भु॑राणा॒तरो॑भिः ।
च॒क्र॒वा॒केव॒प्रति॒वस्तो॑रुस्रा॒र्वाञ्चा॑यातंर॒थ्ये॑वशक्रा ॥ ३ ॥

---

१ नि० १. १८.।

शृंगा॑ऽइव । नः॒ । प्र॒थ॒मा । ग॒न्त॒म् । अ॒र्वाक् । श॒फौ॑ऽइ॑व ।
जर्भु॑राणा । तरः॑ऽभिः । च॒क्र॒वा॒का॑ऽइ॑व । प्रति॑ । वस्तोः॑ । उ॒स्रा ।
अ॒र्वाञ्चा॑ । या॒त॒म् । र॒थ्या॑ऽइव । श॒क्रा ॥ ३ ॥

हे अश्विनौ शृङ्गे इव पशोः शृङ्गेइव प्रथमा देवानांप्रथमौ शफाविव अश्वादेः खुराविव तरोभिर्वेगैर्जर्भुराणा भृशंगच्छन्तौ युवां नोस्मान्प्रति अर्वागभिमुखं गन्तमागच्छतं किंच हे अश्विनौ वस्तोःप्रति अहःप्रति चक्रवाकेव चक्रवाकाविव हेउस्रा शत्रूणामुत्सारकौ गमनशीलौवा रथ्येव रथिनाविव हेशक्रा स्वकर्मणिशक्तौ अर्वाञ्चा अर्वाञ्चौ अस्मदभिमुखौ यातंगच्छतम् ॥३॥

३. देवों में प्रथम अश्विद्वय, तुम पशु की दोनों सींगों वा अश्व आदि के दोनों खुरों की तरह वेगवान् होकर हमारे सामने आओ। शत्रु-हन्ता और स्वकर्म-समर्थ अश्विद्वय, जैसे दिन में चक्रवाक-दम्पती आते हैं अथवा जैसे दो रथी आते हैं, वैसे ही तुम हमारे सामने आओ।

ना॒वेव॑नः॒पारयतंयु॒गेव॒नभ्ये॑वनउप॒धीव॑प्र॒धीव॑ ।
श्वाने॑वनो॒अरि॑षण्यात॒नूनां॒खृग॑लेवव॒िस्रसः॑पातम॒स्मान् ॥ ४ ॥

ना॒वाऽइ॑व । नः॒ । पा॒र॒य॒त॒म् । यु॒गाऽइ॑व । नभ्या॑ऽइव । नः॒ ।
उ॒प॒धीइ॒वेत्यु॑प॒धीऽइ॑व । प्र॒धीइ॒वेति॑ प्र॒धीऽइ॑व । श्वाना॑ऽइव । नः॒ ।
अरि॑ष्यण्या । त॒नूना॑म् । खृग॑लाऽइव । वि॒ऽस्रसः॑ । पा॒त॒म् । अ॒स्मान् ॥४॥

हेअश्विनौ नावेव नावाविव सिन्धून् नोस्मान् दुर्गाणि पारयतम् युगाइव यथारथस्ययुगेनभ्याइव यथाच रथचक्रनाभिफलके उपधीइव यथातत्पार्श्वस्थे फलके प्रधीइव यथावाचक्रबाह्यवलयौ रथं पारयतः तथानोस्मान् दुर्गाणिपारयतं किंच श्वानाविव यथाश्वानौ बाधकेभ्योरक्षन्तौ तनोर्हिंसामपनयतः तथानोस्माकंतनूनामङ्गानामरिषण्यावहिंसकौभवतं खृगलाइव यथातनुत्राणे तनुर्हिंसायारक्षतः तथाविस्रसः जरायाः अस्मान् युवां पातम् ॥ ४ ॥

४. अश्विद्वय, नौका की तरह तुम हमें पार उतार दो। रथ के युग की तरह, रथचक्र के नाभि-फलक की तरह उसके पार्श्वस्थ फलक की तरह और चक्र के बाह्यदेश के बलय की तरह हमें पार करो। दो कुक्करों की तरह तुम हमारे शरीर को हिंसा से बचाओ। दो वर्म की तरह तुम हमें जरा से बचाओ।

वाते॑वाजु॒र्या॑न॒द्ये॑वरी॒तिर॒क्षीइ॑व॒चक्षु॒षायात॑म॒र्वाक् ।
हस्ता॑विवत॒न्वे॒३॒॑शंभ॑विष्ठा॒पादे॑वनोनयतं॒वस्यो॒अच्छ॑ ॥ ५ ॥ ४ ॥

वाता॑ऽइव । अ॒जु॒र्या । न॒द्या॑ऽइव । री॒तिः । अ॒क्षी इ॒वेत्य॒क्षी॑ऽइव ।

चक्षुषा । आ । यातम् । अर्वाक् । हस्तौऽइव । तन्वे । शम्ऽभविष्ठा ।
पादाऽइव । नः । नयतम् । वस्यः । अच्छ ॥ ५ ॥ ४ ॥

हे अश्विनौ वातेव वाताविव अजुर्या जरितुमशक्यौ नद्येव नद्याविव रीतिः व्यत्ययेनैकवचनं शीघ्रंगन्तारौयुवां अक्षीइव अक्षिणी इव चक्षुषादर्शनेन अर्वागस्मदभिमुखं आयातमागच्छतं किंच हस्ताविव हस्तौइव पादेवपादाविव तन्वेशरीराय शंभविष्ठा सुखस्यभावयितृतमौ युवांनोस्मान् वस्यः वसीयः श्रेष्ठंधनं अच्छप्रतिनयतं प्रापयतम् ॥ ५ ॥

५. अश्विद्वय, दो वायुओं की तरह अक्षय, दो नदियों की तरह शीघ्रगामी और दो मंत्रों की तरह दर्शक हो। तुम हमारे सामने आओ। तुम दोनों हाथों और पैरों तरह शरीर के सुखदाता हो। तुम हमें श्रेष्ठ धन की ओर ले जाओ।

ओष्ठाविवमध्वास्नेवदन्तास्तनाविवपिप्यतंजीवसेनः ।
नासेवनस्तन्वोरक्षितारोकर्णाविवसुश्रुताभूतमस्मे ॥ ६ ॥

ओष्ठौऽइव । मधु । आस्ने । वदन्ता । स्तनौऽइव । पिप्यतम् ।
जीवसे । नः । नासाऽइव । नः । तन्वः । रक्षितारा । कर्णौऽइव ।
सुऽश्रुता । भूतम् । अस्मे इति ॥ ६ ॥

हेअश्विनौ ओष्ठाविवआस्ने आस्याय मधु मधुररसवद्वचनं वदन्ता वदन्तौ स्तनाविव नः अस्मान् जीवसे जीवनायपिप्यतं प्याययतं किंच नासेव नासिकेइव नःअस्माकंतन्वःतनोः रक्षितारा रक्षितारौ भूतंभवतं अपिच कर्णाविव अस्मेअस्माकं सुश्रुतासुश्रवणेयुवांभूतंभवतम् ॥६॥

६. अश्विद्वय, दोनों ओठों की तरह मधुर-वाक्य का उच्चारण करो, दोनों स्तनों की तरह हमारे जीवन धारण के लिए दूध पिलाओ, दोनों नाकों की तरह हमारे शरीर के रक्षक होओ और दोनों कानों की तरह हमारे श्रोता होओ।

हस्तेवशक्तिमभिसंददीनःक्षामेवनःसमंजतंरजांसि ।
इमागिरोअश्विनायुष्मयन्तीःक्ष्णोत्रेणेवस्वधितिंसंशिशीतम् ॥७॥

हस्ताऽइव । शक्तिम् । अभि । संददी इति सम्ऽददी । नः ।
क्षामऽइव । नः । सम् । अजतम् । रजांसि । इमाः । गिरः ।
अश्विना । युष्मऽयन्तीः । क्ष्णोत्रेणऽइव । स्वऽधितिम् । सम् ।
शिशीतम् ॥ ७ ॥

हेअश्विनौ हस्तेव हस्ताविव शक्तिंसामर्थ्यंनोस्माकं अभिसंददी आभिमुख्येनसम्यक्प्रयच्छन्तौभवतं किंच क्षामइव रोदसीइव रजांसिस्थानानिउदकानिवा उदकंरजउच्यतइतियास्कः। नोस्माकंसमजतं प्रेरयतं अपिच अश्विना हेअश्विनौ इमागिरः अस्माभिःकृताःस्तुतीः युष्मयन्तीः युवामिच्छन्तीः स्वधितिमसिं क्ष्णोत्रेणेव तेजनशाणवत् संशिशीतं सम्यक् तीक्ष्णीकुरुतम् ॥ ७ ॥

७. अश्विद्वय, दोनों हाथों की तरह हमें सामर्थ्य प्रदान करो। द्यावा-पृथिवी की तरह हमें जल दो। अश्विद्वय, ये सब स्तुतियाँ तुम्हें चाहती हैं। तुम शान चढ़ाने के यंत्र के द्वारा तलवार की तरह उन्हें तीक्ष्ण करो।

एतानिवामश्विनावर्धनानिब्रह्मस्तोमंगृत्समदासोअक्रन्।
तानिनराजुजुषाणोपयातंबृहद्वदेमविदथेसुवीराः ॥ ८ ॥ ५ ॥

एतानि। वाम्। अश्विना। वर्धनानि। ब्रह्म। स्तोमम्। गृत्सऽमदासः। अक्रन्। तानि। नरा। जुजुषाणा। उप। यातम्। बृहत्। वदेम। विदथे। सुऽवीराः ॥ ८ ॥ ५ ॥

अश्विना हेअश्विनौ वांयुवयोः एतानिवर्धनानिवृद्धिसाधनानिब्रह्मब्रह्माणि मन्त्रान् स्तोमं स्तोत्रंच गृत्समदासोगृत्समदाअक्रन् अकुर्वन् तानिब्रह्माणि नरानेतारौ जुजुषाणाभृशंप्रीयमाणौ युवांउपयातंउपगच्छतं किंच सुवीराः शोभनपुत्रावयं विदथेयज्ञेयुवां बृहद्वदेमप्रभूतंस्तुमः॥८॥

८. अश्विद्वय, गृत्समद ऋषि ने तुम्हारी वृद्धि के लिए ये सब स्तोत्र और मंत्र बनाये हैं। तुम नेता और अतीव प्रीतिवाले हो। तुम्हारे पास ये सब स्तुतियाँ पहुँचें। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करें।

॥ इतिद्वितीयस्याष्टमेपञ्चमोवर्गः ॥ ५ ॥

सोमापूषणेतिषळृचमष्टमंसूक्तं गार्त्समदंत्रैष्टुभं सोमापूषदेवताकं तथाचानुक्रान्तं—सोमापूषणाषट्सोमापौष्णमन्त्योर्धर्चोप्यदितेरिति अवतुदेव्यदितिरित्यस्यार्धर्चस्यादितिर्देवता सोमापौष्णेपशौवपापुरोडाशहविषामाद्यास्तिस्रःक्रमेणानुवाक्याः उत्तरास्तिस्रोयाज्याः अग्नीषोमावितिखण्डेसूत्रितं— सोमापूषणाजननारयीणामिति ।

तत्रप्रथमा—

सोमापूषणाजननारयीणांजननादिवोजननापृथिव्याः।
जातौविश्वस्यभुवनस्यगोपौदेवाअकृण्वन्नमृतस्यनाभिम् ॥ १ ॥

१ नि० ४. १९.।

सोमापूषणा । जनना । रयीणाम् । जनना । दिवः । जनना ।
पृथिव्याः । जातौ । विश्वस्य । भुवनस्य । गोपौ । देवाः ।
अकृण्वन् । अमृतस्य । नाभिम् ॥ १ ॥

सोमापूषणा हे सोमापूषणौ युवांरयीणांधनानां जनना जनयितारौ दिवः द्युलोकस्यापि जनना जनयितारौ पृथिव्याः प्रथितायाश्च जनना जनयितारौभवतः किंच जातौजातमात्रावेव युवांविश्वस्यभुवनस्य कृत्स्नस्यजगतः गोपौ गोप्तारौ देवाअमृतस्यामरणस्यनाभिं हेतुमकृण्वन् अकार्षुः ॥ १ ॥

१. सोम और पूषा, तुम धन, द्युलोक और पृथ्वी के जनक हो। जन्म के अनन्तर ही तुम सारे संसार के रक्षक हुए हो। देवों ने तुम्हें अमरता का कारण बनाया है।

इमौदेवौजायमानौजुषन्तेमौतमांसिगूहतामजुष्टा ।
आभ्यामिन्द्रःपक्वमामास्वन्तःसोमापूषभ्यांजनदुस्रियासु ॥ २ ॥

इमौ । देवौ । जायमानौ । जुषन्त । इमौ । तमांसि । गूहताम् ।
अजुष्टा । आभ्याम् । इन्द्रः । पक्वम् । आमासु । अन्तरिति ।
सोमापूषऽभ्याम् । जनत् । उस्रियासु ॥ २ ॥

इमौ सोमापूषणौ देवौ द्योतमानौ जायमानौ उत्पन्नमात्रावेव जुषन्त सर्वेदेवाः अजुषन्त सेवितवन्तइतियावत् किंच इमौ सोमापूषणौ अजुष्टा आसेव्यानितमांसि गूहतांनाशयतः किंच आभ्यामेताभ्यां सोमापूषभ्यांसहइन्द्रः आमासुतरुणीषुउस्रियासुगोष्वन्तर्मध्येऊधःप्रदेशेपक्वं परिपक्वंपयोजनवज्जनयति ॥ २ ॥

२. जन्मते ही द्युतिमान् सोम और पूषा की देवों ने सेवा की थी। ये दोनों अप्रिय अन्धकार का विनाश करते हैं। इनके साथ इन्द्रदेव तरुणी धेनुओं के अधःप्रदेश में पक्व दुग्ध उत्पन्न करते हैं।

सोमापूषणारजसोविमानंसप्तचक्रंरथमविश्वमिन्वम् ।
विषूवृतंमनसायुज्यमानंतंजिन्वथोवृषणापञ्चरश्मिम् ॥ ३ ॥

सोमापूषणा । रजसः । विऽमानम् । सप्तऽचक्रम् । रथम् ।
अविश्वऽमिन्वम् । विषुऽवृतम् । मनसा । युज्यमानम् । तम् ।
जिन्वथः । वृषणा । पञ्चऽरश्मिम् ॥ ३ ॥

वृषणा वृषणौ कामानांवर्षितारौ सोमापूषणा हेसोमापूषणौ रजसोलोकस्य लोकारजांस्यु-च्यन्तइतियास्कः। विमानंपरिच्छेदकंसर्वमानमित्यर्थः सप्तचक्रं सप्तर्तुचक्रं त्रयोदशोमासः सप्तमऋतुः अस्तित्रयोदशोमासइतिश्रुतेः। अविश्वमिन्वं विश्वस्यापरिच्छेद्यं विषुवृतं विष्वक्सर्वत्र परिवर्तमानं पञ्चरश्मिंपञ्चर्तुरश्मिं हेमन्तशिशिरयोः समासेनर्तवःपञ्च तथाचश्रूयते—द्वादशवैमासाःपञ्चर्तवोहेमन्तशिशिरयोःसमासेनेति। मनसायुज्यमानं मनोमात्रेणयुज्यमानंतंप्रसिद्धंरथं जिन्वथः अस्मान्प्रतिप्रेरयथः॥ ३॥

३. अभीष्टवर्षी सोम और पूषा, तुम संसार के विभाजक, सप्तचक्र (सात ऋतु, मलमास लेकर) वाले संसार के लिए अविभाज्य, सर्वत्र वर्त्तमान और पंचरश्मि (पाँच ऋतु, हेमन्त और शीत को एक में करके) वाले हो। इच्छा होते ही योजित रथ हमारे सामने प्रेरित करते हो।

दिव्य१न्यःसदनंचक्रउच्चापृथिव्यामन्योअध्यन्तरिक्षे।
तावस्मभ्यंपुरुवारंपुरुक्षुंरायस्पोषंविष्यतांनाभिमस्मे॥ ४॥

दिवि। अन्यः। सदनम्। चक्रे। उच्चा। पृथिव्याम्। अन्यः।
अधि। अन्तरिक्षे। तौ। अस्मभ्यम्। पुरुऽवारम्। पुरुऽक्षुम्।
रायः। पोषम्। वि। स्यताम्। नाभिम्। अस्मे इति॥ ४॥

अन्यः तयोरेकः पूषाउच्चाउच्चैः उच्छ्रितेदिविद्युलोकेसदनंस्थानंचक्रेचकार अन्यः अपरः सोमः पृथिव्यामोषधिरूपेणअध्यन्तरिक्षेचचन्द्ररूपेणसदनंचक्रे तौ सोमापूषणौयुवांपुरुवारं बहुभिर्वरणीयं पुरुक्षुं बहुकीर्तिंरायस्पोषंधनस्यपुष्टिं पश्वात्मकंधनमित्यर्थः तथाचब्राह्मणं—पशवोवैरायस्पोषइति। अस्मेअस्माकं नाभिंविश्वस्यभोगस्यहेतुभूतमस्मभ्यंविष्यतां विमुञ्चतांप्रयच्छतामित्यर्थः॥ ४॥

४. तुममें एक जन (पूषा) उन्नत द्युलोक में रहते हैं। दूसरे (सोम) ओषधि रूप से पृथ्वी और चन्द्र-रूप से अन्तरिक्ष में रहते हैं। तुम दोनों अनेक लोगों में वरणीय, बहुकीर्त्तिशाली हमारे भाग का कारण और पशु-रूप धन हमें दो।

विश्वान्यन्योभुवनाजजानविश्वमन्योअभिचक्षाणएति।
सोमापूषणाववतंधियंमेयुवाभ्यांविश्वाःपृतनाजयेम॥ ५॥

विश्वानि। अन्यः। भुवना। जजान। विश्वम्। अन्यः।
अभिऽचक्षाणः। एति। सोमापूषणौ। अवतम्। धियम्।
मे। युवाभ्याम्। विश्वाः। पृतनाः। जयेम॥ ५॥

---

१ तै० सं० ६. ५. ३.। २ ऐ० ब्रा० १. १.। ३ तै० ब्रा० ५. ४. ६.।

हेसोमापूषणौ अन्यःयुवयोरेकः सोमःविश्वानिभुवनाभुवनानिभूतानिजजान अजनयत् तथाच मन्त्रः—सोमःपवतेजनितामतीनामिति । अन्यःअपरः पूषादित्योविश्वमभिचक्षाणः अभिपश्यन्नेतिगच्छति तौयुवांसोमापूषणौमेधियंकर्म धीःशचीतिकर्मनामसुपाठात् अवतंरक्षतं किंच वयं युवाभ्यांहेतुभ्यां विश्वाः पृतनाः सर्वाः शत्रुसेनाः जयेमअभिभवेम ॥ ५ ॥

५. सोम और पूषा, तुममें से एक (सोम) ने सारे भूतों को उत्पन्न किया है। दूसरे (पूषा) सारे संसार का पर्यवेक्षण कर जाते हैं। सोम और पूषा, तुम हमारे कर्म की रक्षा करो। तुम्हारे द्वारा हम सारी शत्रुसेना की जय कर डालें।

धियंपूषाजिन्वतुविश्वमिन्वोरयिंसोमोरयिपतिर्दधातु ।
अवतुदेव्यदितिरनर्वाबृहद्वदेमविदथेसुवीराः ॥ ६ ॥ ६ ॥

धियम् । पूषा । जिन्वतु । विश्वम्ऽइन्वः । रयिम् । सोमः ।
रयिऽपतिः । दधातु । अवतु । देवी । अदितिः । अनर्वा ।
बृहत् । वदेम । विदथे । सुऽवीराः ॥ ६ ॥ ६ ॥

पूषादित्योविश्वमिन्वः विश्वस्यप्रीणयिताधियमस्माकंकर्मजिन्वतुतर्पयतु रयिपतिर्धनपतिः सोमः रयिंधनंदधातु अस्मभ्यंददातु किंच देवीद्योतमाना अनर्वा अप्रत्यृताकेनापिप्रातिकूल्यमप्रापिता अदितिःअवतु अस्मान् रक्षतु अन्यत्सिद्धम् ॥ ६ ॥

६. संसार को प्रसन्नता देनेवाले पूषा हमारे कर्म से तृप्ति प्राप्त करें। धनपति सोम हमें धन दान करें। द्युतिमती और शत्रु-रहिता अदिति हमारी रक्षा करें। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति कर सकें।

॥ इतिद्वितीयस्याष्टमेषष्ठोवर्गः ॥ ६ ॥

वायोयेतइत्येकविंशत्यृचंनवमंसूक्तंगात्समदंगायत्रं अंबितमइतिषष्ठस्य तृचस्य आदितोद्वेअनुष्टुभौ तृतीयाबृहती वायोयेतेइत्यादिकेद्वेऋचौवायव्यौ शुक्रस्याद्येत्यैन्द्रवायवी अयंवांमित्रावरुणेतिपञ्चानांमित्रावरुणावश्विनाविन्द्रोविश्वेदेवाःसरस्वतीतिक्रमेणदेवताः प्रेतांयज्ञस्येत्यन्त्यस्तृचोब्राह्मणसूत्रयोर्हविर्धानप्रवर्तनेद्यावापृथिव्यनिविद्धानत्वेनचविनियुक्तत्वात् द्यावापृथिव्योर्हविर्धानदेवत्योवा अग्निंचहव्यवाहनमितिपादोग्निदेवत्योवा तथाचानुक्रान्तं—वायोसैकागायत्रमुक्तादेवताः प्रउगेणाद्येतुतृचेन्त्यैन्द्रवायवीद्यावापृथिव्योन्त्यस्तृचोहाविर्धानोवातृतीयःपादोवाग्नेयोंबितमेनुष्टुभौबृहतीचेति पृष्ठ्याभिप्लवषडहयोर्द्वितीयेहनि प्रउगेन्त्यतृचवर्जमेतत्सूक्तं वायव्यतृचस्यवायोयेतेसहस्रिणइत्याद्येद्वेऋचौ ऐन्द्रवायवतृचस्यशुक्रस्याद्येत्येषातृतीया तथाचसूत्रितं—वायोयेतेसहस्रिणइतिद्वेतीव्राःसोमासआगहीत्येकोभादेवादि-

१ ऋ० सं० ७. ४. ६.

विस्पृशेतिद्वेशुक्रस्याद्यगवाशिरइत्येकाअयंवांमित्रावरुणेतिपञ्चतृचाइति चातुर्विंशिकेहनि प्रातः सवने मैत्रावरुणशस्त्रे अयंवांमित्रावरुणेतिषळहस्तोत्रियसंज्ञकः चतुर्विंशेहोताजनिष्टेति-खण्डेसूत्रितं—अयंवांमित्रावरुणापुरूरुणाचिद्धस्तीति आभिप्लविकेष्वहस्सु प्रातःसवने मैत्राव-रुणशस्त्रे अयमेवतृचः पञ्चदशादिस्तोमनिमित्तमावापनीयः अयंवांमित्रावरुणाआनोमित्रा-वरुणेतितृचाइतिसूत्रितत्वात् आद्यामैत्रावरुणग्रहस्यानुवाक्या सूत्रितंच—मैत्रावरुणस्य अयं-वांमित्रावरुणेतिप्रातरनुवाकाश्विनशस्त्रयोर्गायत्रेछन्दसिगोमदूषुवितितृचोविनियुक्तः गोमदूषु नासत्येतितृचाइतिसूत्रितत्वात् अतिरात्रे प्रथमेपर्याये ब्राह्मणाच्छंसिशस्त्रे इन्द्रोअङ्गमहद्भय-मितितृचः अतिरात्रेपर्यायाणामितिखण्डेसूत्रितं—इन्द्रोअङ्गमहद्भयमभिन्यूषुवाचमिति आग्रय-णेवैश्वदेवस्यहविषोविश्वेदेवासइत्यनुवाक्या आग्रयणमितिखण्डेसूत्रितं—विश्वेदेवासआगत-येकेचज्मामहिनोअहिमायाइति दशरात्रेप्रथमेहनिप्रउगशस्त्रे अंबितमेनदीतमइतिसारस्वतः सप्तमस्तृचः चतुर्थेहनीतिखण्डेसूत्रितं—अंबितमेनदीतमइत्यानुष्टुभंप्रउगमिति सूत्रितंच—व्यूढे दशरात्रे प्रथमेछन्दोमेवैश्वदेवशस्त्रे प्रेतांयज्ञस्यशंभुवेतिद्यावापृथिव्यनिविद्धानीयस्तृचः अथ-छन्दोमाइतिखण्डेसूत्रितं—प्रेतांयज्ञस्यशंभुवायंदेवायजन्मनइतितृचाइति हविर्धानप्रवर्तनेप्ययंतृ-चोविनियुक्तः सूत्रितंच—प्रेतांयज्ञस्यशंभुवायुवांयमेंइवयतमानेयदैतमिति ।

तत्रप्रथमा—

वायोयेतेसहस्रिणोरथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये ॥ १ ॥

वायो इति । ये । ते । सहस्रिणः । रथासः । तेभिः । आ ।
गहि । नियुत्वान् । सोमऽपीतये ॥ १ ॥

हेवायो तेत्वदीयायेसहस्रिणः सहस्रसंख्याकारथासः रथाः तेभिस्तैर्नियुत्वान् नियुद्भि-र्युक्तस्त्वं सोमपीतये सोमपानार्थमागह्यागच्छ नानारूपत्वात् वायोः सर्वाभिर्विभूतिभिः सहा-गमनं प्रार्थ्यतइतिभावः ॥ १ ॥

१. वायु, तुम्हारे पास जो हज़ार रथ हैं, उनके द्वारा नियुत्गण से युक्त होकर सोम पान के लिए आओ।

अथद्वितीया—

नियुत्वान्वायवागह्ययंशुक्रोअयामिते । गन्तासिसुन्वतोगृहम् ॥ २ ॥

नियुत्वान् । वायो इति । आ । गहि । अयम् । शुक्रः ।
अयामि । ते । गन्ता । असि । सुन्वतः । गृहम् ॥ २ ॥

हेवायो नियुत्वान् नियुतोवाहनानिवायोः तैर्युक्तस्त्वं आगह्यागच्छ अयंशुक्रोदीप्यमानः सोमः तेतुभ्यं अयामिनियतोगृहीतआसीत् यमेःकर्मणिलुङ् सुन्वतः सोमाभिषवं कुर्वतोयजमानस्यगृहं गन्तासियाताभवसि ॥ २ ॥

२. वायु, नियुत्‌गण से युक्त होकर आओ। तुमने दीप्तमान् सोम ग्रहण किया है। सोमाभिषवकारी यजमान के घर में तुम जाते हो।

शुक्रस्याद्यगवाशिरइन्द्रवायूनियुत्वतः। आयातंपिबतंनरा ॥ ३ ॥

शुक्रस्य। अद्य। गोऽआशिरः। इन्द्रवायू इति। नियुत्वतः। आ। यातम्। पिबतम्। नरा ॥ ३ ॥

हेनरानेतारौ हेइन्द्रवायू अद्यास्मिन्नहनिनियुत्वतः विभक्तिव्यत्ययः नियुत्वन्तौ युवां गवाशिरः गव्यंपयः आशीराश्रयणसाधनंयस्य तस्यशुक्रस्यदीप्तस्य सोमस्य पानार्थं आयातं आगच्छतं आगत्यसोमंपिबतम् ॥ ३ ॥

३. नेता इन्द्र और वायु, तुम आज नियुत्‌गण से युक्त होकर और सोम के लिए आकर गव्य-मिला सोम पीओ।

अयंवांमित्रावरुणासुतःसोमऋतावृधा। ममेदिहश्रुतंहवम् ॥ ४ ॥

अयम्। वाम्। मित्रावरुणा। सुतः। सोमः। ऋतऽवृधा। मम। इत्। इह। श्रुतम्। हवम् ॥ ४ ॥

मित्रावरुणा हेमित्रावरुणौ वांयुवाभ्यां अयंसोमः सुतः अभिषुतः ऋतावृधा हेसत्यस्य यज्ञस्यवावर्धकौ ममेत् ममैवइहास्मिन्यज्ञे हवमाह्वानं श्रुतं शृणुतम् ॥ ४ ॥

४. मित्रावरुण, तुम्हारे लिए यह सोम तैयार हुआ है। सत्यवर्द्धक तुम हमारा आह्वान सुनो।

अथपञ्चमी—

राजानावनभिद्रुहाध्रुवेसदस्युत्तमे। सहस्रस्थूणआसाते ॥ ५ ॥ ७ ॥

राजानौ। अनभिऽद्रुहा। ध्रुवे। सदसि। उत्ऽतमे। सहस्रऽस्थूणे। आसाते इति ॥ ५ ॥ ७ ॥

राजानौईश्वरौदीप्यमानौवा अनभिद्रुहा अनभिद्रोग्धारौयौ मित्रावरुणौ ध्रुवेस्थिरे उत्तमे उत्कृष्टे सहस्रस्थूणे बहुस्तंभे सदसिस्थाने आसाते उपविशतः तावागच्छतमितिशेषः ॥ ५ ॥

५. शत्रुता-शून्य राजा मित्रावरुण स्थिर, उत्कृष्ट और हजार स्तम्भोंवाले इस स्थान पर बैठें।

अथषष्ठी—

तासम्राजाघृतासुतीआदित्यादानुनस्पती । सचेतेअनवह्वरम् ॥६॥

ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । आदित्या ।

दानुनः । पती इति । सचेते इति । अनवऽह्वरम् ॥ ६ ॥

सम्राजौ आज्ञयैवसर्वेषांशास्तारौघृतासुती घृतान्नौ तद्वांमहित्वंघृतान्नावस्त्विति मन्त्रान्तरात् आदित्या अदितेःपुत्रौ दानुनस्पती दानुनोदानस्य देवस्यवाधनस्यपतीस्वामिनौ ता तौ मित्रावरुणौ अनह्वरमकुटिलं यजमानं सचेते सेवेते ॥ ६ ॥

६. सम्राट्, घृतान्नभोजी, अदिति-पुत्र और दाता मित्रावरुण सरल-गति यजमान की सेवा करते हैं।

अथसप्तमी—

गोमदूषुनासत्याश्वावद्यातमश्विना । वर्तीरुद्रानृपाय्यम् ॥ ७ ॥

गोऽमत् । ऊँ इति । सु । नासत्या । अश्वऽवत् । यातम् ।

अश्विना । वर्तिः । रुद्रा । नृऽपाय्यम् ॥ ७ ॥

अश्विनाहेअश्विनौ हेनासत्या अनृतभाषणरहितौ हेरुद्रा रोरूयमाणौ द्रवन्तौयुवांवर्तिमार्गः तेनमार्गेणरथेनवा नृपाय्यंनृभिःनेतृभिर्देवैः पातव्यं सोमंगोमत् गोमद्यथाभवति तथा अश्ववत् अश्ववच्चयथाभवति तथा यातंगच्छतं ऊष्विति पूरणौ ॥ ७ ॥

७. अश्विद्वय, नासत्यद्वय, रुद्रद्वय, यज्ञ के नेता जो सोमपान करेंगे, उसी सोम को धेनु और अश्व से युक्त करके तथा रथ पर लेकर आओ।

नयत्परोनान्तरआदधर्षद्वृषणवसू । दुःशंसोमर्त्योरिपुः ॥ ८ ॥

न । यत् । परः । न । अन्तरः । आऽदधर्षत् । वृषणवसू इति वृषण्ऽवसू । दुःऽशंसः । मर्त्यः । रिपुः ॥ ८ ॥

वृषणवसू हेधनस्यवर्षितारौ यद्धनंपरोदूरस्थोदुःशंसः शंसनायोग्योमर्त्योरिपुः यच्चादधर्षत् नापहरेत् तथोक्तलक्षणोतरः अन्तरः समीपवर्ती मर्त्योरिपुरपियच्चादधर्षत् तद्धनमावोढ्वमितिशेषः ॥ ८ ॥

८. धनवर्षी अश्विद्वय, दूरस्थित वा समीपवर्त्ती मन्दभाषी मर्त्यरिपु जिस धन को नहीं चुरा सकता, उसे ही हमें दो।

अथनवमी–

तानआवोंह्ळमश्विनारयिंपिशङ्गसन्दृशम् । धिष्ण्यावरिवोविदम् ॥ ९॥

ता । नः । आ । वोह्ळम् । अश्विना । रयिम् । पिशङ्गऽसन्दृशम् । धिष्ण्या । वरिवःऽविदम् ॥ ९॥

हेधिष्ण्या धिषणार्हौ अश्विना हेअश्विनौ ता तौ युवांपिशंगसदृशं नानारूपं वरिवोविदंधनस्यलंभकंरयिंपशुंनोस्मभ्यं आवोह्ळमावहतम् ॥ ९ ॥

९. ज्ञानार्ह अश्विद्वय, तुम हमारे पास नानारूप और धन-प्रापक धन ले आओ।

अथदशमी–

इन्द्रोअङ्गमहद्भयमभीषदपचुच्यवत् । सहिस्थिरोविचर्षणिः ॥१०॥८॥

इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप । चुच्यवत् । सः । हि । स्थिरः । विऽचर्षणिः ॥ १० ॥ ८ ॥

इन्द्रः महत् अधिकं अभीषत् अभिभवत् भयंभयकारणं अपचुच्यवत् अपच्यावयेत् हियस्मात्कारणात् सस्थिरः केनापिचालयितुमशक्यः विचर्षणिर्विश्वस्यद्रष्टा अङ्गेतिपूरणम् ॥ १० ॥

१०. इन्द्र अधिक और अभिभवकारी भय को दूर करते हैं। वे स्थिर प्रज्ञावान् हैं।

॥ इतिद्वितीयस्याष्टमेष्टमोवर्गः ॥ ८ ॥

अथैकादशी–

इन्द्रश्चमृळयातिनोननःपश्चादघंनशत् । भद्रंभवातिनःपुरः ॥ ११॥

इन्द्रः । च । मृळयाति । नः । न । नः । पश्चात् । अघम् । नशत् । भद्रम् । भवाति । नः । पुरः ॥ ११ ॥

इन्द्रश्च परमैश्वर्यवानिन्द्रश्चेत् नोस्मान्मृळयातिसुखयेत् पश्चात्पृष्ठतः नोस्मान् अघंदुरितं ननशत् नप्राप्नोतिनोस्माकंपुरः पुरस्तात् भद्रंकल्याणंचभवाति भवति ॥ ११ ॥

११. यदि इन्द्र हमें सुखी करें, तो हमारे साथ पाप नहीं आयेगा; हमारे सामने कल्याण उपस्थित होगा।

अथद्वादशी—

इन्द्रआशाभ्यस्परिसर्वाभ्योअभयंकरत् ।
जेताशत्रून्विचर्षणिः ॥ १२ ॥

इन्द्रः । आशाभ्यः । परि । सर्वाभ्यः । अभयम् । करत् ।
जेता । शत्रून् । विऽचर्षणिः ॥ १२ ॥

विचर्षणिः विविधंद्रष्टा जेता शत्रूनसुरान्जेता तृन्नन्तत्वात्षष्ठ्यभावः इन्द्रः परमैश्वर्यवान् सर्वाभ्यआशाभ्योदिग्भ्योस्माकंअभयंकरत्करोतु परीतिपञ्चमीद्योतकः ॥ १२ ॥

१२. प्रज्ञावान् और शत्रुजेता इन्द्र चारों ओर से हमें भय-शून्य करें।

अथत्रयोदशी—

विश्वेदेवासआगतशृणुतामइमंहवम् । एदंबर्हिर्निषीदत ॥ १३ ॥

विश्वे । देवासः । आ । गत । शृणुत । मे । इमम् । हवम् ।
आ । इदम् । बर्हिः । नि । सीदत ॥ १३ ॥

विश्वेदेवासः हेविश्वेदेवाः आगत इहागच्छतमे मदीयंइमंहवमाह्वानंशृणुत इदंबर्हिरस्मिन्बर्हिषिआनिषीदत उपविशत ॥ १३ ॥

१३. विश्वदेवगण, यहाँ आओ। हमारा आह्वान सुनो और कुश के ऊपर बैठो।

अथचतुर्दशी—

तीव्रोवोमधुमाँअयंशुनहोत्रेषुमत्सरः । एतंपिबतकाम्यम् ॥ १४॥

तीव्रः । वः । मधुऽमान् । अयम् । शुनऽहोत्रेषु । मत्सरः । एतम् ।
पिबत । काम्यम् ॥ १४ ॥

हेविश्वेदेवाः तीव्रः तीव्रमदः मधुमान् मधुररसवान् मत्सरोमदकरः सोमोयंवोयुष्मदर्थं शुनहोत्रेषुगृत्समदेष्वस्मासुस्थितः काम्यंकमनीयमेतंसोमंपिबत ॥ १४ ॥

१४. विश्वदेवगण, तीव्र मदवाला, रसशाली और हर्षकर यह सोम तुम्हारे लिए गृत्समदवंशीयों के पास है। इस शोभन सोम का पान करो।

अथपञ्चदशी—

२ इन्द्रज्येष्ठामरुद्गणादेवासःपूषरातयः । विश्वेममश्रुताहवम् ॥१५॥९॥

इन्द्र॑ऽज्येष्ठाः । मरु॑त्ऽगणाः । देवा॑सः । पूष॑ऽरातयः । विश्वे॑ ।
मम॑ । श्रु॒त॒ । हव॑म् ॥ १५ ॥ ९ ॥

हेइन्द्रज्येष्ठाः इंद्रपुरोगमामरुद्गणाः मरुत्समूहरूपाः पूषरातयः पूषाख्योदेवोरातिर्दाता येषांतेपूषरातयः देवासः हेद्योतमानादेवाः विश्वेसर्वेयूयं ममदीयंहवमाह्वानंश्रुतश्रृणुत इन्द्रज्येष्ठादयः संबोधनान्ताः ॥ १५ ॥

१५. जिन मरुतों में इन्द्र श्रेष्ठ हैं, जिनके दाता पूषा हैं, वे ही मरुद्‌गण हमारा आह्वान सुनें।

॥ इतिद्वितीयस्याष्टमेनवमोवर्गः ॥ ९ ॥

अथषोडशी—

अम्बि॑तमे॒नदी॑तमे॒देवि॑तमे॒सर॑स्वति ।
अ॒प्र॒श॒स्ताइ॑वस्मसि॒प्रश॑स्तिमम्बनस्कृधि ॥ १६ ॥

अम्बि॑ऽतमे । नदी॑ऽतमे । देवि॑ऽतमे । सर॑स्वति । अ॒प्र॒श॒स्ताःऽइ॑व ।
स्म॒सि॒ । प्रऽश॑स्तिम् । अ॒म्ब॒ । न॒ः । कृ॒धि॒ ॥ १६ ॥

अंवितमेमातॄणांश्रेष्ठे नदीतमेनदीनांश्रेष्ठे देवितमेदेवीनांश्रेष्ठे हेसरस्वति अप्रशस्ताइव धनाभावादसमृद्धाइव वयंस्मसिभवामः अंब हेमातः सरस्वति नोस्मभ्यंप्रशस्तिंधनसमृद्धिंकृधि कुरुप्रयच्छेत्यर्थः ॥ १६ ॥

१६. मातृगण में श्रेष्ठ, नदियों में श्रेष्ठ और देवों में श्रेष्ठ सरस्वती, हम दरिद्र हैं; हमें धनी करो।

त्वेविश्वा॑सरस्व॒तीश्रि॒तायूं॑षिदे॒व्याम् ।
शु॒नहो॑त्रेषुमत्स्वप्र॒जांदे॑विदिदिड्ढिनः ॥ १७ ॥

त्वे इति॑ । विश्वा॑ । स॒र॒स्व॒ति॒ । श्रि॒ता । आयूं॑षि । दे॒व्याम् ।
शु॒नःऽहो॑त्रेषु । म॒त्स्व॒ । प्र॒ऽजाम् । दे॒वि॒ । दि॒दि॒ड्ढि॒ । न॒ः ॥ १७ ॥

हेसरस्वति देव्यांद्योतमानायांत्वेत्वयि विश्वाविश्वानि सर्वाण्यायूंषिअन्नानिआयुः सद्गुतेत्यन्ननामसुपाठात् श्रिताआश्रितानि सात्वं शुनहोत्रेषु गृत्समदेष्वस्मासुविषयेषुमत्स्वसोमपानेनतृप्य किंच हेदेविसरस्वति नः अस्मभ्यंप्रजां दिदिड्ढिपुत्रान्देहि ॥ १७ ॥

१७. सरस्वती, तुम द्युतिमती हो। तुम्हारे आश्रय से अन्न है। शुनहोत्रों में तुम सोम पान करके तृप्त होओ। देवी, तुम हमें पुत्र दो।

अथाष्टादशी—

इमाब्रह्मसरस्वतिजुषस्ववाजिनीवति ।
यातेमन्मगृत्समदाऋतावरिप्रियादेवेषुजुह्वति ॥ १८ ॥

इमा । ब्रह्म । सरस्वति । जुषस्व । वाजिनीऽवति । या । ते । मन्म ।
गृत्सऽमदाः । ऋतऽवरि । प्रिया । देवेषु । जुह्वति ॥ १८ ॥

वाजिनीवति अन्नवति ऋतावरि उदकवति हेसरस्वति इमाइमानिब्रह्मब्रह्माणि हवींषि जुषस्व स्वीकुरु या यानि मन्म मननीयानि देवेषुप्रिया देवानांमध्येतुभ्यंप्रियाणि देवेषुप्रियाणिवा तेत्वदर्थंगृत्समदाजुह्वति ॥ १८ ॥

१८. अन्नवती और जलवती सरस्वती, इस हव्य को स्वीकार करो। यह माननीय और देवों के लिए प्रिय है। गृत्समद लोग इसे तुम्हें देते हैं।

प्रेतांयज्ञस्यशंभुवायुवामिदावृणीमहे । अग्निंचहव्यवाहनम् ॥ १९ ॥

प्र । इताम् । यज्ञस्य । शम्ऽभुवा । युवाम् । इत् । आ ।
वृणीमहे । अग्निम् । च । हव्यऽवाहनम् ॥ १९ ॥

यज्ञस्ययागस्यशंभुवासुखसंपादकेहविर्धानेअनसी तद्रूपेद्यावापृथिव्यौवा प्रेतांउत्तरवेदेः पश्चिमभागंप्रतिगच्छतां अथप्रत्यक्षकृतः युवामित् युवामेवआवृणीमहे प्रार्थयामहे हव्यवाहनमग्निंचआवृणीमहे अग्निरत्रनिपातभागिति ॥ १९ ॥

१९. यज्ञ के सुख-सम्पादक द्यावा-पृथिवी, तुम आओ। हम तुम्हारी प्रार्थना करते हैं। हम हव्य-वाहन अग्नि की भी प्रार्थना करते हैं।

द्यावानःपृथिवीइमंसिध्रमद्यदिविस्पृशम् । यज्ञंदेवेषुयच्छताम् ॥ २० ॥

द्यावा । नः । पृथिवी इति । इमम् । सिध्रम् । अद्य । दिविऽस्पृशम् ।
यज्ञम् । देवेषु । यच्छताम् ॥ २० ॥

द्यावाद्यौश्चपृथिवीचउभे सिध्रंस्वर्गादेःसाधकं दिविस्पृशं देवान्गच्छन्तं अद्यास्मिन्नहनि अस्माकं इमंयज्ञंदेवेषुयच्छतांनियच्छताम् ॥ २० ॥

२०. द्यावा-पृथिवी स्वर्ग आदि के साधक और देवों के ओर जानेवाली हैं। हमारे इस यज्ञ को देवों के पास ले जायें।

अथैकविंशी—

आवांमुपस्थमद्रुहादेवाःसीदन्तुयज्ञियाः। इहाद्यसोमपीतये॥२१॥१०॥

आ। वाम्। उपऽस्थम्। अद्रुहा। देवाः। सीदन्तु। यज्ञियाः।
इह। अद्य। सोमऽपीतये॥ २१॥ १०॥

अद्रुहाद्रोहवर्जितेहेहविर्धाने तद्रूपेद्यावापृथिव्यौवांयुवयोरुपस्थंसमीपं यज्ञियायज्ञार्हा देवाः इहयज्ञे अद्यास्मिन्नहनिसोमपीतये सोमपानायआसीदन्तु॥ २१॥

२१. शत्रुता-शून्य द्यावा-पृथिवी, सोमपान के लिए यज्ञार्ह देवगण आज तुम्हारे पास बैठें।

॥ इतिद्वितीयस्याष्टमेदशमोवर्गः॥ १०॥

कनिक्रददितितृचंदशमंसूक्तं अत्रैवमनुक्रमणिका—कनिक्रदत्तृचमिति मण्डलद्रष्टागृत्समदोस्यऋषिः त्रिष्टुप्छन्दः कपिञ्जलरूपीन्द्रोदेवता वयसाममनोज्ञांवाचंश्रुत्वैतत्सूक्तंजपेत् सूत्रितंच—वयसाममनोज्ञावाचःश्रुत्वाकनिक्रदज्जनुषंप्रब्रुवाणइतिसूक्तेजपेदिति।

तत्रप्रथमा—

कनिक्रदज्जनुषंप्रब्रुवाणइयर्तिवाचमरितेवनावम्।
सुमङ्गलश्चशकुनेभवासिमात्वाकाचिदभिभाविश्व्याविदत्॥ १॥

कनिक्रदत्। जनुषम्। प्रऽब्रुवाणः। इयर्ति। वाचम्।
अरिताऽइव। नावम्। सुऽमङ्गलः। च। शकुने। भवासि। मा।
त्वा। का। चित्। अभिऽभा। विश्व्या। विदत्॥ १॥

कनिक्रदत् पुनःपुनःशब्दायमानः जनुषंजनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् कपिञ्जलः अरितेव कर्णधारइवनावंवाचमियर्तिप्रेरयति अथप्रत्यक्षकृतः हेशकुनेकपिञ्जल त्वंसुमङ्गलः प्रकृष्टकल्याणश्चभवासिभव किञ्च काचिदभिभा कोप्यभिभवः त्वात्वां विश्व्याविश्वतः सर्वासुदिक्षुमाविदत् मामापत् शकुनिः शक्नोत्युन्नेतुमात्मानं न्यक्रन्दीजन्मप्रब्रुवाणोयथास्यशब्दस्तथानामेरयतिवाचमीरयितेवनावंसुमङ्गलश्चशकुनेभवकल्याणमङ्गलोमङ्गलंगिरतेर्गृणात्यर्थेगिरत्यर्थानितिवेतियास्कः॥ १॥

१. बारम्बार शब्दायमान और भविष्यद्वक्ता कपिञ्जल जैसे कर्णधार नौका को परिचालित करता है, वैसे ही वाक्य को प्रेरित करता है। शकुनि, तुम कल्याण-सूचक होओ। किसी ओर से किसी प्रकार की पराजय तुम्हारे पास न आये।

अथर्द्वितीया—

मात्वाश्येनउद्वधीन्मासुपर्णोमात्वाविददिषुमान्वीरोअस्ता ।
पित्र्यामनुप्रदिशंकनिक्रदत्सुमङ्गलोभद्रवादीवदेह ॥ २ ॥

मा । त्वा । श्येनः । उत् । वधीत् । मा । सुऽपर्णः । मा । त्वा ।
विदत् । इषुऽमान् । वीरः । अस्ता । पित्र्याम् । अनु । प्रऽदिशम् ।
कनिक्रदत् । सुऽमंगलः । भद्रऽवादी । वद । इह ॥ २ ॥

हेशकुने त्वात्वां श्येनः प्रबलः पक्षिविशेषो मावधीत्माहिंसीत् उतापिच सुपर्णः गरुडः पक्षिविशेषोमावधीत् माहिंसीत् तथाइषुमान् बाणवान्वीरः अस्ता शराणांक्षेप्ता धन्वीत्वा त्वांमाविदत्माप्रापत् किञ्च पित्र्यांप्रदिशंदक्षिणांदिशमनुदक्षिणस्यांदिशीत्यर्थः कनिक्रदत् पुनःपुनःशब्दंकुर्वन् सुमङ्गलः कल्याणमङ्गलः भद्रवादीशोभनवादीसन् इहास्मद्विषये वद मङ्गलंसूचय ॥ २ ॥

२. शकुनि, तुम्हें श्येन पक्षी न मारे—गरुड़ पक्षी भी न मारे। वह बलवान्, वीर और धनुर्धारी होकर तुम्हें न प्राप्त करे। दक्षिण दिशा में बार-बार शब्द करके और सुमंगल-शंसी होकर हमारे लिए प्रियवादी बनो।

अवक्रन्ददक्षिणतोगृहाणांसुमङ्गलोभद्रवादीशकुन्ते ।
मानःस्तेनईशतमाघशंसोबृहद्वदेमविदथेसुवीराः ॥ ३ ॥११॥

अव । क्रन्द । दक्षिणतः । गृहाणाम् । सुऽमङ्गलः । भद्रऽवादी ।
शकुन्ते । मा । नः । स्तेनः । ईशत । मा । अघऽशंसः ।
बृहत् । वदेम । विदथे । सुऽवीराः ॥ ३ ॥ ११ ॥

शकुन्ते हेकपिञ्जल त्वंसुमङ्गलोभद्रवादीचसन् गृहाणांदक्षिणतः दक्षिणस्यांदिशिअवक्रन्द शब्दंकुरु दक्षिणतःशब्दायमानःशकुन्तोमङ्गलसूचकोहि नोस्माकं स्तेनस्तस्करोमाईशतमाईशिष्ट अघशंसः अनर्थकानांशंसकोपिमेशिष्ट उत्तमःपादोव्याख्यातचरः ॥ ३ ॥

३. शकुनि, सुमंगल-सूचक और प्रियवादी होकर घर की दक्षिण दिशा में बोलो, जिससे चोर और दुष्ट व्यक्ति हमारे ऊपर प्रभुत्व न करे। पुत्र और पौत्रवाले होकर हम इस यज्ञ में प्रभूत स्तुति करें।

प्रदक्षिणिदितितृचमेकादशंसूक्तंगार्त्समदंजागतं तथाचानुक्रान्तं—प्रदक्षिणिज्जागतंमध्ये-तिशक्वर्यष्टिर्वेति द्वितीयातिशक्करी अष्टिर्वा इतरेजगत्यौ कपिञ्जलरूपीन्द्रोदेवता वयसाममनोज्ञांवाचंश्रुत्वाप्रदक्षिणिदितिसूक्तंजपेत् सूत्रंप्रागेवोदाहृतम् ।

तत्रप्रथमा—

प्रदक्षिणिदभिगृणन्तिकारवोवयोवदन्तऋतुथाशकुन्तयः ।
उभेवाचौवदतिसामगाइवगायत्रंचत्रैष्टुभंचानुराजति ॥ १ ॥

प्रऽदक्षिणित् । अभि । गृणन्ति । कारवः । वयः । वदन्तः ।
ऋतुऽथा । शकुन्तयः । उभे इति । वाचौ । वदति । सामगाःऽइव ।
गायत्रम् । च । त्रैस्तुभम् । च । अनु राजति ॥ १ ॥

शकुंतयः कपिञ्जलाः ऋतुथा कालेकालेवयोन्नंवदन्तःसूचयन्तः कारवः स्तोतारइव प्रदक्षिणित् प्रदक्षिणंअभिगृणन्तिअभिवदन्तु बहुवचनंपूजार्थं किञ्च उभेवाचौ गानंच श्रौतंच सामगाइव गायत्रंच त्रैष्टुभंच सामनीवशकुन्तिर्वदति अनुराजतिच श्रृण्वतोनुरक्तान्करोतीत्यर्थः ॥ १ ॥

१. समय-समय पर अन्न की खोज करके स्तोताओं की तरह शकुनिगण प्रदक्षिण करके शब्द करें। जैसे सामगायक लोग गायत्रीः और त्रिष्टुप् (दोनों साम) का उच्चारण करते हैं, वैसे ही कपिञ्जल भी दोनों वाक्य उच्चारण करता और श्रोताओं को अनुरक्त करता है।

अथद्वितीया—

उद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ।
वृषेववाजीशिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमा
वदविश्वतोनःशकुनेपुण्यमावद ॥ २ ॥

उद्गाताऽइव । शकुने । साम । गायसि । ब्रह्मपुत्रःऽइव । सवनेषु ।
शंससि । वृषाऽइव । वाजी । शिशुऽमतीः । अपिऽइत्य । सर्वतः ।
नः । शकुने । भद्रम् । आ । वद । विश्वतः । नः । शकुने । पुण्यम् ।
आ । वद ॥ २ ॥

शकुने हेकपिञ्जल उद्गातेवसाम यथोद्गातासामगायति तथात्वंगायसि गानस्वनंकरोषि ब्रह्मपुत्रइव यथाब्राह्मणाच्छंसीसवनेषुशस्त्राणिशंसति तथात्वंकालेषुशंससि श्रौतस्वरंकरोषि वृषेववाजी सेचनसमर्थोश्वः शिशुमतीर्वडवाअपीत्यअभिगत्ययथाशब्दंकरोति तथात्वमपिवद शिष्टं स्पष्टम् ॥ २ ॥

२. शकुनि, जैसे उद्गीता साम गान करते हैं, वैसे ही तुम भी गाओ। यज्ञ में ब्रह्मपुत्र ऋत्विक् की तरह तुम शब्द करो। जैसे सेचन-समर्थ अश्व अश्वी के पास जाकर शब्द करता है, वैसे ही तुम भी करो। शकुनि, तुम सर्वत्र हमारे लिए मंगल-सूचक और पुण्य-जनक शब्द करो।

अथतृतीया—

आवदंस्त्वंशकुनेभद्रमावदतूष्णीमासीनःसुमतिंचिकिद्धिनः।
यदुत्पतन्वदसिकर्करिर्यथाबृहद्वदेमविदथेसुवीराः॥ ३ ॥ १२ ॥

आऽवदन्। त्वम्। शकुने। भद्रम्। आ। वद। तूष्णीम्। आसीनः।
सुऽमतिम्। चिकिद्धि। नः। यत्। उत्ऽपतन्। वदसि।
कर्करिः। यथा। बृहत्। वदेम। विदथे। सुऽवीराः॥ १२ ॥

शकुनेहेकपिञ्जल आवदन् शब्दंकुर्वन् त्वंभद्रमावद मङ्गलंवद तूष्णीमासीनः तूष्णींतिष्ठन्नपिनोस्माकंसुमतिंचिकिद्धिबुध्यस्वयद्यदाउत्पतन्वदसितदा कर्करिर्यथाकर्करिर्वदति कर्करिर्वाद्यविशेषः अन्यद्व्याख्यातचरम् ॥ ३ ॥

३. शकुनि, जिस समय तुम शब्द करते हो, उस समय हमारे लिए मंगल-सूचना करते हो। जिस समय चुप रहकर तुम बैठते हो, उस समय हमारे प्रति सुप्रसन्न रहते हो। उड़ने के समय तुम कर्करि (एक बाजा) की तरह शब्द करते हो। हम पुत्र और पौत्रवाले होकर इस यज्ञ में प्रभूत स्तुति करें।

॥ इतिद्वितीयस्याष्टमेद्वादशोवर्गः ॥ १२ ॥

॥ इतिद्वितीयेमण्डलेचतुर्थोनुवाकः ॥ ४ ॥

॥ इतिगार्त्समदंद्वितीयंमण्डलंसमाप्तम् ॥ २ ॥

## ॥ अथतृतीयंमण्डलम् ॥

वैश्वामित्रेतृतीयेमण्डलेपञ्चानुवाकाः तत्रप्रथमेनुवाके द्वादशसूक्तानि तत्रसोमस्यमेतित्रयो-विंशत्यृचंप्रथमंसूक्तं तथाचानुक्रान्तं—सोमस्यत्र्यधिकेति अस्यमण्डलस्यद्रष्टाविश्वामित्रऋ-षिः अनुक्तत्वात्त्रिष्टुप्छन्दः मण्डलादिष्वाग्नेयमितिपरिभाषयाग्निर्देवता प्रातरनुवाकाश्विनश-स्त्रयोस्त्रैष्टुभेछन्दसिविनियोगः तथाचसूत्रम्—सोमस्यमातवसंप्रत्यग्निरिरितित्रीणीति ।

तत्रप्रथमा—

सोम॑स्यमात॒वसं॒वक्ष्य॑ग्ने॒वह्निं॑चकर्थ॑वि॒दथे॒यज॑ध्यै ।
दे॒वाँअच्छा॒दीद्य॑द्यु॒ञ्जेअद्रिं॑शमा॒येअ॑ग्ने॒तन्वं॑जुषस्व ॥ १ ॥

सोम॑स्य । मा॒ । त॒वस॑म् । वक्षि॑ । अ॒ग्ने॒ । वह्नि॑म् । च॒क॒र्थ॒ ।
वि॒दथे॑ । यज॑ध्यै । दे॒वान् । अच्छ॑ । दीद्य॑त् । यु॒ञ्जे । अद्रि॑म् ।
श॒म्ऽआ॒ये । अ॒ग्ने॒ । त॒न्व॑म् । जु॒ष॒स्व॒ ॥ १ ॥

हेअग्ने त्वंविदथे यज्ञे यजध्यै यष्टुं सोमस्यवह्निंवोढारं यं मा मां चकर्थकृतवानसि तं मा तवसंतपस्विनं बलिनं वक्षि कामयस्व किञ्च हेअग्ने देवानच्छअभिलक्ष्यदीद्यत् दीप्यमानोहं अद्रिंग्रावाणं युञ्जे अभिषवणाययुनज्मिशमाये शाम्यामिच तथामन्त्रान्तरं— ऋतेनदेवःसवि-ताशमायतेति । यद्वा शमायेस्तौमि शशमानः रञ्जयतीति स्तुतिकर्मसुपाठात् तथाचमन्त्रान्तरं— सोअग्नईजेशशमेचमर्तइति । किञ्च हेअग्ने तन्वंशरीरं जुषस्वरक्षायैसेवस्व यद्वा कर्माणितन्व-न्तं मां सेवस्वेत्यर्थः ॥ १ ॥

१. अग्निदेव, यज्ञ करने के लिए तुमने मुझे सोम का वाहक किया है; इसलिए मुझे बलवान् करो। अग्नि, मैं प्रकाशमान होकर, देवों को लक्ष्य कर, अभिषवण के लिए, प्रस्तरखंड ग्रहण और स्तव करता हूँ। अग्नि, तुम मेरे शरीर की रक्षा करो।

अथद्वितीया—

प्राञ्चं॑य॒ज्ञंच॑कृ॒मवर्ध॑तां॒गीः॒स॒मिद्भि॑र॒ग्निंनम॑सादुवस्यन् ।
दि॒वःश॑शासुर्वि॒दथा॑कवी॒नांगृत्सा॑यचित्त॒वसे॑गा॒तुमी॑षुः ॥ २ ॥

प्राञ्च॑म् । य॒ज्ञम् । च॒कृ॒म॒ । वर्ध॑ताम् । गीः । स॒मित्ऽभिः॑ । अ॒ग्निम् ।
नम॑सा । दु॒व॒स्य॒न् । दि॒वः । श॒शा॒सुः॒ । वि॒दथा॑ । क॒वी॒नाम् ।
गृत्सा॑य । चि॒त् । त॒वसे॑ । गा॒तुम् । ई॒षुः॒ ॥ २ ॥

हेअग्ने वयं यज्ञं प्राञ्चं प्रकर्षेणगच्छन्तं चकृम अकार्ष्म गीः मदीयास्तुतिः वर्धतां एधतां अग्निंसमिद्भिर्नमसाहविषाचदुवस्यन् अस्मदीयाः परिचरेयुः किञ्च दिवोद्युलोकादागत्य देवाः कवीनां स्तोतॄणां विदथा ज्ञानानि स्तोत्राणिवाशशासुः अन्वशिषन् अपिच गृत्साय गृणातेरिदंरूपं स्तोतव्यायाग्नये तवसेवृद्धाय गातुंस्तोतुं ईषुश्चिद् स्तोतारइच्छन्तिच चिदितिचार्थे ॥ २ ॥

२. अग्नि, हमने भली भाँति यज्ञ किया है। हमारी स्तुति वर्द्धित हो। समिधा और हव्य-द्वारा लोग अग्नि की परिचर्या करें। द्युलोक से आकर देवों ने स्तोताओं को स्तोत्र सिखाया है। स्तोतागण स्तवनीय और प्रवृद्ध अग्नि की स्तुति करने की इच्छा करते हैं।

मयोदधेमेधिरःपूतदक्षोदिवःसुबन्धुर्जनुषापृथिव्याः।
अविन्दन्नुदर्शतमप्स्व१न्तर्देवासोअग्निमपसिस्वसॄणाम् ॥ ३ ॥

मयः। दधे। मेधिरः। पूतऽदक्षः। दिवः। सुऽबन्धुः। जनुषा।
पृथिव्याः। अविन्दन्। ऊँ इति। दर्शतम्। अप्ऽसु। अन्तः।
देवासः। अग्निम्। अपसि। स्वसॄणाम् ॥ ३ ॥

मेधिरः मेधावान् प्राज्ञः पूतदक्षः शुद्धबलः जनुषा जन्ममात्रेणसुबन्धुः शोभनबन्धुः स्वतएवबन्धुरितियावत् योग्निर्दिवोद्युलोकस्य पृथिव्याः भूमेश्चमयः सुखंदधेविदधाति देवानांमनुष्याणांचसुखंकरोतीतियावत् तंदर्शतं दर्शनीयमग्निं देवासोदेवाः स्वसॄणां सरणशीलानांनदीनामप्स्वन्तर्गूढं स्थितं अपसि यज्ञवहनरूपेकर्मणिनिमित्ते उइतिपूरणः अविन्दन् लब्धवन्तः ॥ ३ ॥

३. जो मेधावी, विशुद्ध-बल-शाली और जन्म से ही उत्कृष्ट बन्धु हैं, जो द्युलोक का सुख-विधान करते हैं, उन्हीं दर्शनीय अग्नि को, देवों ने, यज्ञ-कार्य के लिए, वहनशील नदियों के जल के बीच, प्राप्त किया है।

अवर्धयन्त्सुभगंसप्तयह्वीःश्वेतंजज्ञानमरुषंमहित्वा।
शिशुंनजातमभ्यारुरश्वादेवासोअग्निंजनिमन्वपुष्यन् ॥ ४ ॥

अवर्धयन्। सुऽभगम्। सप्त। यह्वीः। श्वेतम्। जज्ञानम्। अरुषम्।
महिऽत्वा। शिशुम्। न। जातम्। अभि। आरुः। अश्वाः।
देवासः। अग्निम्। जनिमन्। वपुष्यन् ॥ ४ ॥

सप्त सर्पणशीलाः यह्वीर्यह्व्यः महत्योनद्यः सुभगं शोभनधनं श्वेतंशुभ्रं जज्ञानं जातं महित्वामहत्त्वेन अरुषमारोचमानं अप्सुस्थितमग्निंअवर्धयन् स्वकार्यभूताभिरोषधीभिर्वृद्धिंमापितवत्यः यद्वा दिव्यमग्निं अपोवर्धयन्ति अबिन्धनत्वात्तस्य किञ्च शिशुंनजातं यथाजातं शिशुंअश्वाः वडवाः अभ्यारुः अभिगच्छन्ति तथानद्यः उत्पन्नमग्निं अभ्यारुः अभिजग्मुः अपिचदेवासः देवाः अग्निंजनिमन् जन्मन्युदकेवा वपुष्यन् वपुर्दीप्तिमकुर्वन् ॥ ४ ॥

४. शोभन धनवाले, शुभ्र और अपनी महिमा से दीप्तिशाली अग्नि के उत्पन्न होते ही उन्हें सात नदियों ने संवर्द्धित किया था। जैसे अश्वी नवजात शिशु के पास जाती है, वैसे ही नदियाँ नवजात अग्नि के पास गई थीं। उत्पत्ति के साथ ही अग्नि को देवों ने दीप्तिमान् किया।

शुक्रेभिरङ्गैरजआततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ।
शोचिर्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ ५ ॥ १३ ॥

शुक्रेभिः । अङ्गैः । रजः । आऽततन्वान् । क्रतुम् । पुनानः ।
कविऽभिः । पवित्रैः । शोचिः । वसानः । परि । आयुः । अपाम् ।
श्रियः । मिमीते । बृहतीः । अनूनाः ॥ ५ ॥ १३ ॥

अग्निः शुक्रेभिः शुक्रैरङ्गैस्तेजोभिरजोन्तरिक्षमाततन्वान् आततन्वन् व्याप्नुवन् क्रतुं कर्मणांकर्तारं यजमानं कविभिः क्रान्तप्रज्ञैः स्तोतव्यैर्वापवित्रैः शोधकैस्तेजोभिः पुनानःशोधयन् शोचिर्दीप्तिंवस्त्रस्थानीयंपरिपरितोवसानः आच्छादयन् अपांअपस्यतां कर्मवतां आयुरन्नं बृहतीः प्रभूताः अनूनाः संपूर्णाः श्रियः संपदश्च मिमीतेकरोति ॥ ५ ॥

५. शुभ्रवर्ण तेज के द्वारा अन्तरिक्ष को व्याप्त करके अग्निदेव यजमान को स्तुति-योग्य और पवित्र तेज के द्वारा परिशोधित करते तथा दीप्ति का परिधान करके यजमान को अन्न और प्रभूत तथा सम्पूर्ण सम्पत्ति देते हैं।

वव्राजासीमनदतीरदब्धादिवोयह्वीरवसानाअनग्नाः ।
सनाअत्रयुवतयःसयोनीरेकंगर्भंदधिरेसप्तवाणीः ॥ ६ ॥

वव्राज । सीम् । अनदतीः । अदब्धाः । दिवः । यह्वीः । अवसानाः ।
अनग्नाः । सनाः । अत्र । युवतयः । सऽयोनीः । एकम् । गर्भम् ।
दधिरे । सप्त । वाणीः ॥ ६ ॥

ऋष्वोदर्शनीयोग्निः वेःगंत्र्याः सर्वव्याप्तायाः रिपोभूम्याः प्रियंअग्रं प्रथमंपदंस्थानं पातिरक्षति यह्वोमहान् सूर्यस्यचरणंचरत्यनेनेतिचरणमन्तरिक्षंपाति नाभानाभौ अन्तरिक्षस्यमध्ये सप्तशीर्षाणंमरुद्गणं पातिदेवानां उपमादं उपमादकं यज्ञंपातिरक्षति ॥ ५ ॥

५. सुन्दर अग्नि सर्वव्याप्त पृथिवी के प्रिय स्थान की रक्षा करते हैं। महान् अग्नि सूर्य के विहरण-स्थान अन्तरिक्ष की रक्षा करते हैं। अन्तरिक्ष के बीच मरुतों की रक्षा करते हैं। वे देवों के प्रसन्नता-कारक यज्ञ की रक्षा करते हैं।

ऋभुश्चक्रईड्यंचारुनामविश्वानिदेवोवयुनानिविद्वान्।
ससस्यचर्मघृतवत्पदंवेस्तदिदग्नीरक्षत्यप्रयुच्छन् ॥ ६ ॥

ऋभुः। चक्रे। ईड्यम्। चारु। नाम। विश्वानि। देवः। वयुनानि। विद्वान्। ससस्य। चर्म। घृतऽवत्। पदम्। वेः। तत्। इत्। अग्निः। रक्षति। अप्रऽयुच्छन् ॥ ६ ॥

ऋभुर्महान् विश्वानिसर्वाणिवयुनानि ज्ञातव्यान् पदार्थान् विद्वान् जानन् देवोग्निः ईड्यं स्तुत्यंचारुमनोज्ञंनामजलंचक्रे करोति नामेतिउदकनामसुपाठात् वेर्व्याप्तस्यससस्यस्वपतः शांतज्वालस्याप्यग्नेः चर्मरूपंघृतवद्दीप्तिमद्भवति सोग्निः तज्जलमप्रयुच्छन् अप्रमाद्यन् पदंस्थानं रक्षतिपालयति इदितिपूरणः ॥ ६ ॥

६. महान् और सारे ज्ञातव्यों के ज्ञाता अग्नि प्रशंसनीय और सुन्दर जल उत्पन्न करते हैं। अग्नि के निद्रित रहने पर भी उनका चर्म या रूप दीप्तिमान् रहता है। वे अग्नि सावधानी से उसकी रक्षा करते हैं।

आयोनिमग्निर्घृतवन्तमस्थात्पृथुप्रगाणमुशन्तमुशानः।
दीद्यानःशुचिर्ऋष्वःपावकःपुनःपुनर्मातरानव्यसीकः ॥ ७ ॥

आ। योनिम्। अग्निः। घृतऽवन्तम्। अस्थात्। पृथुऽप्रगानम्। उशन्तम्। उशानः। दीद्यानः। शुचिः। ऋष्वः। पावकः। पुनःऽपुनः। मातरा। नव्यसी इति। करिति कः ॥ ७ ॥

उशानः कामयमानोग्निः घृतवन्तं दीप्तिमन्तंपृथुप्रगाणंपृथुगीतिं उशन्तंकामयमानंयोनिंस्थानमायतनं आअस्थात् आतिष्ठति दीद्यानोद्योतमानः शुचिर्दर्शनीयः शुद्धोवा ऋष्वोमहान् पावकः अन्येषांशोधयिताग्निः मातरामातरौद्यावापृथिव्यौपुनःपुनःनव्यसीनवतरे कः करोति ॥ ७ ॥ ७. दीप्तिमान्, विशेष रूप से स्तुत और स्वस्थान-प्रिय अग्नि अधिरूढ़ हुए हैं। दीप्तिशाली, शुद्ध, महान् और पवित्र अग्नि माता-पिता द्यावापृथिवी को नवीनतर करते हैं।

अथाष्टमी—

सद्योजातओषधीभिर्ववक्षेयदीवर्धन्तिप्रस्वोघृतेन ।
आपइवप्रवताशुम्भमानाउरुष्यदग्निःपित्रोरुपस्थे ॥ ८ ॥

सद्यः । जातः । ओषधीभिः । ववक्षे । यदि । वर्धन्ति । प्रऽस्वः ।
घृतेन । आपःऽइव । प्रऽवता । शुम्भमानाः । उरुष्यत् । अग्निः ।
पित्रोः । उपऽस्थे ॥ ८ ॥

सद्योजातोग्निः यदियदाओषधीभिः ववक्षेउह्यते तदाप्रवताप्रवणेनमार्गेणगच्छन्त्यः आप-इवशुंभमानाः शोभमानास्ताओषध्यः प्रस्वःफलानिप्रसुवानाःघृतेनोदकेनवर्धन्तिवर्धयन्ति आ-त्मस्थमग्निम् पित्रोर्द्यावापृथिव्योरुपस्थेमध्यप्रदेशेवर्धमानोग्निः उरुष्यत अस्मान् रक्षतु ॥ ८ ॥

८. जन्म लेते ही अग्नि ओषधियों-द्वारा धृत होते हैं। उस समय पथ-प्रवाहित जल की तरह शोभित ओषधियाँ जल-द्वारा वर्द्धित होकर फल देती हैं। माता-पिता द्यावा-पृथिवी के क्रोड़ में बढ़कर अग्नि हमारी रक्षा करें।

उदुष्टुतःसमिधायह्वोअद्यौद्वर्ष्मन्दिवोअधिनाभापृथिव्याः ।
मित्रोअग्निरीड्योमातरिश्वादूतोवक्षद्यजथायदेवान् ॥ ९ ॥

उत् । ऊँ इति । स्तुतः । सम्ऽइधा । यह्वः । अद्यौत् । वर्ष्मन् ।
दिवः । अधि । नाभा । पृथिव्याः । मित्रः । अग्निः । ईड्यः ।
मातरिश्वा । आ । दूतः । वक्षत् । यजथाय । देवान् ॥ ९ ॥

उइतिपादपूरणः स्तुतः अस्माभिःस्तुतः समिधासमिन्धनेनयह्वोमहान् अग्निः पृथिव्या-अधि उत्तरवेद्यां नाभानाभौमध्यप्रदेशे स्थितःसन्दिवःअन्तरिक्षस्य वर्ष्मन् वर्ष्मणिरूपे उदद्यौत द्योतते मित्रः सर्वेषांमित्रभूतः ईड्यःस्तुत्यः मातरिश्वा मातरिअन्तरिक्षे श्वसितिप्राणिति सू-र्यरूपेणचेष्टते इतिमातरिश्वा अथवा मातरिअरण्यां श्वसितिनिवसतीतिमातरिश्वा यथा-ह्यास्कः—मातर्यन्तरिक्षेश्वसितिमातर्योश्वनितीतिवा । दूतः देवानांदूतःसन् यजथाय यज्ञायदे-वानावक्षत् आवहतु ॥ ९ ॥

९. हमारे द्वारा स्तुति और दीप्ति-द्वारा महान् अग्नि ने पृथिवी की नाभि वा उत्तर वेदी पर स्थित होकर अन्तरिक्ष को प्रकाशित किया है। सबके मित्र और स्तुति-योग्य अरणि-प्रदीप्त अग्नि देवों के दूत होकर यज्ञ में देवों को बुलायें।

अथदशमी—

उदंस्तम्भीत्समिधानाकमृष्वो३ग्निर्भवन्नुत्तमोरोचनानाम् ।
यदीभृगुभ्यःपरिमातरिश्वागुहासन्तंहव्यवाहंसमीधे ॥ १० ॥

उत् । अस्तंभीत् । सम्ऽइधा । नाकम् । ऋष्वः । अग्निः । भवन् ।
उत्ऽतमः । रोचनानाम् । यदि । भृगुऽभ्यः । परि । मातरिश्वा ।
गुहा । सन्तम् । हव्यऽवाहम् । सम्ऽईधे ॥ १० ॥

ऋष्वोमहानग्निः समिधातेजसानाकंस्वर्गं उदस्तंभीव उदस्तभ्राव रोचनानांशोभनानांतेजसांमध्ये उत्तमोभवन् उत्कृष्टतमोभवन् मातरिश्वावायुः भृगुभ्यः आदित्यस्यरश्मिभ्यः परि परितः गुहागुहायांसन्तं हव्यवाहं हव्यानांवोढारमग्निं यदियदासमीधेसमैधत तदानाकंअस्तभ्रादितिसंबन्धः ॥ १० ॥

१०. जिस समय मातरिश्वा ने भृगुओं वा आदित्य-रश्मियों के लिए गुहास्थित और हव्य-वाहक अग्नि को प्रज्वलित किया था, उस समय तेजस्वियों में श्रेष्ठ महान् अग्नि ने तेज-द्वारा स्वर्ग को स्तब्ध किया था।

इळामग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।
स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ११ ॥ २५ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।
अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥ २५ ॥

पूर्वव्याख्याता ॥ ११ ॥

११. अग्नि, तुम स्तोता को अनेक कर्मों के हेतुभूत और धेनु-प्रदात्री भूमि सदा प्रदान करो। हमारे वंश का विस्तारक और सन्तति-जनयिता एक पुत्र हो। हमारे प्रति तुम्हारा अनुग्रह हो।

प्रकारवइत्येकादशर्चंषष्ठंसूक्तंवैश्वामित्रमाग्नेयं प्रकारवइत्यनुक्रान्तत्वात् प्रातरनुवाकाश्विनशस्त्रयोःसूक्तविनियोगःपूर्वसूक्तएवमत्यग्निरुषसस्त्रीणीत्यनेनोक्तः आद्याग्नेयेपशौहविषोयाज्या सूत्रितंच—प्रकारवोमननावच्यमानाएकाचेतत्सरस्वतीनदीनामिति ऐभिरग्नइतिपात्नीवतग्रहस्ययाज्या सूत्रितंच—आग्नीध्रःपात्नीवतस्ययजत्यैभिरग्नेसरथंयाह्यर्वाङितीति ।

तत्रप्रथमा—

प्रकारवोमननावच्यमानादेवद्रीचींनयतदेवयन्तः।
दक्षिणावाड्वाजिनीप्राच्येतिहविर्भरन्त्यग्नयेघृताची ॥ १ ॥

प्र। कारवः। मनना। वच्यमानाः। देवऽद्रीचीम्। नयत।
देवऽयन्तः। दक्षिणाऽवाट्। वाजिनी। प्राची। एति। हविः।
भरन्ती। अग्नये। घृताची ॥ १ ॥

हेकारवः कर्तारः देवयन्तः देवकामाः यूयंमननामननेनमन्त्रेणवच्यमानाः प्रेर्यमाणाःसन्तः देवद्रीचीं देवानञ्चन्तींस्रुचंप्रणयत प्रकर्षेणनयत प्रापयत दक्षिणावाट् आहवनीयस्यदक्षिणतः उह्यमानावाजिनीअन्नवती प्राचीप्रागग्राअग्नयेअग्न्यर्थं हविर्भरन्ती हविर्धारयन्ती घृताची घृतेनाक्तास्रुक् एतिगच्छति ॥ १ ॥

१. यज्ञकर्त्ता लोग, तुम सोमाभिलाषी हो। मंत्र-द्वारा प्रेरित होकर तुम देवार्चन-साधक स्रुक् ले आओ। जिसे आहवनीय अग्नि की दक्षिण दिशा में ले जाया जाता है, जिसके अन्न है, जिसका अग्र भाग पूर्व दिशा में है और जो अग्नि के लिए अन्न धारण करता है, वही घृत-युक्त स्रुक् जाता है।

आरोदसीअपृणाजायमानउतप्ररिक्थाअधनुप्रयज्यो।
दिवश्चिदग्नेमहिनापृथिव्यावच्यन्तांतेवह्नयःसप्तजिह्वाः ॥ २ ॥

आ। रोदसी इति। अपृणाः। जायमानः। उत। प्र। रिक्थाः।
अध। नु। प्रयज्यो इति प्रऽयज्यो। दिवः। चित्। अग्ने। महिना।
पृथिव्याः। वच्यन्ताम्। ते। वह्नयः। सप्तऽजिह्वाः ॥ २ ॥

हेअग्ने जायमानस्त्वं रोदसीद्यावापृथिव्यौ नुक्षिप्रंआअपृणाः आपूरय उतापिच हे प्रयज्यो प्रयष्टव्य अध अनन्तरं दिवश्चित दिवश्चअन्तरिक्षाव पृथिव्याश्च महिनामहिम्ना प्ररिक्थाः अतिरिक्तश्चासि अनेनवह्नेरतिशयउक्तः एवंविधस्यतेतव वह्नयः अग्नयः अंशभूताआहवनीयादयः वच्यन्तांप्रेर्यतां किंविधास्तेसप्तजिह्वाः सप्तजिह्वात्मकाः ॥ २ ॥

२. जन्म के साथ ही तुम द्यावा-पृथिवी को पूर्ण करो। याग-योग्य, महिमा-द्वारा तुम अन्तरिक्ष और पृथिवी से प्रकृष्टतर होओ और तुम्हारे अंशभूत विशिष्ट अग्नि—सप्त जिह्वायें—पूजित हों।

द्यौश्चत्वापृथिवीयज्ञियासोनिहोतारंसादयन्तेदमाय।
यदीविशोमानुषीर्देवयन्तीःप्रयस्वतीरीळतेशुक्रमर्चिः ॥ ३ ॥

द्यौः । च । त्वा । पृथिवी । यज्ञियासः । नि । होतारम् । सादयन्ते ।
दमाय । यदि । विशः । मानुषीः । देवऽयन्तीः । प्रयस्वतीः ।
ईळते । शुक्रम् । अर्चिः ॥ ३ ॥

द्यौश्चअन्तरिक्षंपृथिवीच यज्ञियासः यज्ञार्हादेवाश्चहोतारं त्वात्वांदमाय दमोयज्ञः तस्मै अर्थं निषादयन्तेउपशमयन्ति यदियदामानुषीः मनोःसंबन्धिन्यः देवयन्तीः देवकामाः प्रयस्वतीः हविष्मत्यः विशःप्रजाः होतारः शुक्रंदीप्तंअर्चिः अर्चिषंईळतेस्तुवन्ति ॥ ३ ॥

३. अग्नि, तुम होता हो। जिस समय देवाभिलाषी और हव्ययुक्त मनुष्य तुम्हारे दीप्त तेज की स्तुति करते हैं, उस समय अन्तरिक्ष, पृथिवी और यज्ञार्ह देवगण, यज्ञ-सम्पादन के लिए, तुम्हारी स्तुति करते हैं।

महान्त्सधस्थेध्रुवआनिषत्तोन्तर्द्यावामाहिनेहर्यमाणः ।
आस्क्रेसपत्नीअजरेअमृक्तेसबर्दुघेउरुगायस्यधेनू ॥ ४ ॥

महान् । सधऽस्थे । ध्रुवः । आ । निऽसत्तः । अन्तः । द्यावा ।
माहिने इति । हर्यमाणः । आस्क्रे इति । सपत्नी इति सऽपत्नी ।
अजरे इति । अमृक्ते इति । सबर्दुघे इति सबःऽदुघे ।
उरुऽगायस्य । धेनू इति ॥ ४ ॥

महान्अधिकोहर्यमाणः यजमानादिभिःकाम्यमानः यद्वा यजमानायधनंकामयमानः अग्निःद्यावान्तर्भूम्योर्मध्ये माहिनेमहिम्नायुक्ते सधस्थेस्वकीयेस्थाने ध्रुवःअचलःसन् आनिषत्तः निषण्णोभवति आस्क्रेआक्रमणशीले सपत्नी समानःएकःसूर्यःपतिर्ययोस्तेसपत्न्यौ अजरेजरारहिते अमृक्तेअन्येनाहिंसिते सबर्दुघे सबरित्यमृतमुदकं तस्यदोग्ध्र्यौ द्यावापृथिव्यौ उरुगायस्यपृथुगमनस्य अधिकस्तुतेर्वाअग्नेः धेनूप्रीणयित्र्यौभवतः ॥ ४ ॥

४. महान् और यजमानों के प्रिय अग्नि, द्यावा-पृथिवी के बीच, महिमावाले अपने स्थान पर, बैठे हैं। आक्रमणशील, सपत्नीभूता, जरारहिता, अहिंसिता और क्षीरप्रसविनी द्यावा-पृथिवी अत्यन्त गमनशील अग्नि की गायें हैं।

व्रतातेअग्नेमहतोमहानितवक्रत्वारोदसीआततन्थ ।
त्वंदूतोअभवोजायमानस्त्वंनेतावृषभचर्षणीनाम् ॥ ५ ॥ २६ ॥

व्रता । ते । अग्ने । महतः । महानि । तव । क्रत्वा । रोदसी इति ।
आ । ततन्थ । त्वम् । दूतः । अभवः । जायमानः । त्वम् । नेता ।
वृषभ । चर्षणीनाम् ॥ ५ ॥ २६ ॥

हेअग्ने महतः सर्वोत्कृष्टस्यतेतव व्रताव्रतानि त्वत्संबन्धीनिकर्माणिमहानिमहान्तिभवन्ति तवक्रत्वाक्रतुनाप्रकाशेनरोदसी द्यावापृथिव्यौ आततन्थ विस्तृतवानसि त्वंदूतोअभवःभव हे वृषभ वर्षणशील त्वंजायमानःसन् चर्षणीनांयजमानानां नेतासि फलप्रापकोसि ॥ ५ ॥

५. अग्नि, तुम सर्वोत्कृष्ट हो। तुम्हारा कर्म महान् है। तुमने यज्ञ-द्वारा द्यावा-पृथिवी को विस्तृत किया है। तुम दूत हो। अभीष्टवर्षी अग्नि, उत्पन्न होने के साथ ही तुम यजमान के नेता बनो।

ऋतस्यंवाकेशिनांयोग्याभिर्घृतस्नुवारोहिताधुरिधिष्व ।
अथावंहदेवान्देवविश्वान्त्स्वध्वराकृणुहिजातवेदः ॥ ६ ॥

ऋतस्य । वा । केशिना । योग्याभिः । घृतऽस्नुवा । रोहिता । धुरि । धिष्व । अथ । आ । वह । देवान् । देव । विश्वान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ ६ ॥

हेदेव केशिना प्रशस्तकेशवन्तौ योग्याभिः योजनसाधनभूताभीरज्जुभिर्युक्तौ घृतस्नुवा घृतमुदकं क्षरन्तौ रोहितारोहितौ अश्वौ ऋतस्ययज्ञस्य वाशब्दश्चार्थे धुरिचधिष्व धेहियोजयेत्यर्थः अथानन्तरंविश्वान् सर्वान्देवान् रथेसमारोप्य आवह हेजातवेदः तान्स्वध्वरा स्वध्वरान् शोभनानध्वरान् कृणुहिकुरु ॥ ६ ॥

६. द्युतिमान् अग्नि, प्रशस्त केशवाले, रज्जुयुक्त और घृतस्रावी रोहित नामक दोनों घोड़ों को यज्ञ के सम्मुख योजित करो। अनन्तर तुम सारे देवों को बुलाओ। सर्वभूतज्ञ, तुम उन्हें सुन्दर यज्ञ-युक्त करो।

दिवश्चिदातेरुचयन्तरोकाउषोविभातीरनुभासिपूर्वीः ।
अपोयदग्नउशधग्वनेषुहोतुर्मन्द्रस्यपनयन्तदेवाः ॥ ७ ॥

दिवः । चित् । आ । ते । रुचयन्त । रोकाः । उषः । विऽभातीः । अनु । भासि । पूर्वीः । अपः । यत् । अग्ने । उशधक् । वनेषु । होतुः । मन्द्रस्य । पनयन्त । देवाः ॥ ७ ॥

हेअग्ने यद्यदा वनेषुअरण्येषु अपःउशधक् कामयमानोदहंश्चवर्तसे तदातेरोकाः त्वदीयादीप्तयः दिवश्चिद् सूर्यादपि आरुचयन्त आरोचन्ते विभातीः विशेषेणभातीः प्रकाशमानाः पूर्वीःपुराणीः उषःउषसः अनुभासि मन्द्रस्यस्तुत्यस्य होतुःतवरोकान् देवाःस्तोतारः पनयन्त स्तुवन्ति ॥ ७ ॥ ७. अग्नि, जिस समय तुम वन में जल का शोषण करते हो, उस समय सूर्य से भी अधिक तुम्हारी दीप्ति होती है। तुम भली भाँति प्रकाशमान पुरातन उषा के पीछे शोभित होते हो। स्तोता लोग स्तुतियोग्य होता अग्नि की स्तुति करते हैं।

अथाष्टमी—

उरौवायेअन्तरिक्षेमदन्तिदिवोवायेरोचनेसन्तिदेवाः ।
ऊमावायेसुहवासोयजत्राआयेमिरेरथ्योअग्नेअश्वाः ॥ ८ ॥

उरौ । वा । ये । अन्तरिक्षे । मदन्ति । दिवः । वा । ये । रोचने ।
सन्ति । देवाः । ऊमाः । वा । ये । सुऽहवासः । यजत्राः ।
आऽयेमिरे । रथ्यः । अग्ने । अश्वाः ॥ ८ ॥

उरौविस्तीर्णे अन्तरिक्षे येदेवामदंति हृष्यन्ति दिवःसूर्यस्य रोचनेप्रकाशने आलोके ये देवाः सन्ति ऊमाः ऊमसंज्ञकाः पितरःसन्ति यजत्राः यष्टव्यायेदेवाः सुहवासः शोभनाह्वानाः आयेमिरे आयच्छन्ति रथ्यःरथिनः तव ये अश्वाःसन्ति हेअग्ने तैःसर्वैःसार्धं आयाहीतिउत्तर-यर्चासंबन्धः वाक्यः पूरणाः ॥ ८ ॥

८. विस्तीर्ण अन्तरिक्ष में जो देवगण हृष्ट हैं, आकाश की दीप्ति में जो सब देवता हैं, 'उम' संज्ञक जो यजनीय पितर लोग भली भाँति आहूत होकर आगमन करते हैं, रथी अग्नि के जो सब अश्व हैं—

ऐभिरग्नेसरथंयाह्यर्वाङ्नानारथंवाविभवोह्यश्वाः ।
पत्नीवतस्त्रिंशतंत्रींश्चदेवाननुष्वधमावहमादयस्व ॥ ९ ॥

आ । एभिः । अग्ने । सऽरथम् । याहि । अर्वाङ् । नानाऽरथम् ।
वा । विऽभवः । हि । अश्वाः । पत्नीऽवतः । त्रिंशतम् । त्रीन् ।
च । देवान् । अनुऽस्वधम् । आ । वह । मादयस्व ॥ ९ ॥

हेअग्ने एभिः पूर्वोक्तैर्देवगणैःसार्धं सरथंसमानरथं नानारथंवा आत्मानं त्वद्रथेसमारोप्ययाह्यर्वाङ् अस्मदभिमुखमायाहि यतःकारणात् तेअश्वाः विभवः प्रभवः समर्थाः हिःप्रसिद्धौ पत्नीवतः पत्नीभिःसहितान् त्रिंशतंत्रींश्च त्रयस्त्रिंशतंदेवांश्च अनुष्वधं बलार्थं अन्नार्थंवा आवहमादयस्व सोमेनेतिशेषः ॥ ९ ॥

९. अग्नि, उक्त सब देवों के साथ एक रथ अथवा नाना रथों पर चढ़कर हमारे सामने आओ; क्योंकि तुम्हारे अश्वगण समर्थ हैं। ३३ देवों को, उनकी स्त्रियों के साथ, अन्न के लिए, ले आओ और सोम-द्वारा हृष्ट करो।

सहोतायस्युरोदसीचिदुर्वीयज्ञंयज्ञमभिवृधेगृणीतः ।
प्राचीअध्वरेवतस्थतुःसुमेकैऋतावरीऋतजातस्यसत्ये ॥ १० ॥

सः । होता । यस्य । रोदसी इति । चित् । उर्वी इति ।
यज्ञम्ऽयंज्ञम् । अभि । वृधे । गृणीतः । प्राची इति ।
अध्वराऽइव । तस्थतुः । सुमेके इति सुऽमेके । ऋतवरी-
इत्यृतऽवरी । ऋतऽजातस्य । सत्ये इति ॥ १० ॥

सएवहोताभवति उर्वीविस्तीर्णे रोदसीचिद् द्यावापृथिव्यौअपि यस्याग्नेः यज्ञंसर्वं यज्ञं वृधेसमृद्धये अभिगृणीतः प्रशंसतः ऋतजातस्य जातसत्यस्य यस्यहोतुः सुमेके सुरूपे ऋतावरी उदकवत्यौसत्ये सत्यस्वरूपे प्राचीअनुकूले तस्थतुः तिष्ठतः कथमिव अध्वराविव यज्ञाविव ॥ १० ॥

१०. विशाल द्यावा-पृथिवी, प्रत्येक यज्ञ में, समृद्धि के लिए, जिन अग्नि की प्रशंसा करती हैं, वे ही देवों के होता, सुरूपा, जलवती और सत्यस्वरूपा द्यावा-पृथिवी, यज्ञ की तरह, सत्य से उत्पन्न होता अग्नि के अनुकूल हैं।

इळांमग्नेपुरुदंसंसनिंगोःशश्वत्तमंहवमानायसाध ।
स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ ११ ॥ २७ ॥

इळाम् । अग्ने । पुरुऽदंसम् । सनिम् । गोः । शश्वत्ऽतमम् ।
हवमानाय । साध । स्यात् । नः । सूनुः । तनयः । विजाऽवा ।
अग्ने । सा । ते । सुऽमतिः । भूतु । अस्मे इति ॥ ११ ॥ २७ ॥

इयंपूर्वंव्याख्याता ॥ ११ ॥

११. अग्नि, तुम स्तोता को अनेक कर्मों के हेतुभूत और धेनुदात्री भूमि सदा दो। हमारे वंश का विस्तारक और सन्ततिजनयिता एक पुत्र दो। अग्नि, हमारे प्रति तुम्हारा अनुग्रह हो।

॥ इतिद्वितीयस्याष्टमेसप्तविंशोवर्गः ॥ २७ ॥

वेदार्थस्यप्रकाशेनतमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥
इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेणसायणाचार्येणविरचितेमाधवीयेवेदार्थप्रकाशेऋक्संहिताभाष्येद्वितीयाष्टकेऽष्टमोध्यायः ॥८॥

द्वितीयाष्टकःसमाप्तः

# वैदिक-संहिता

☆ **ऋग्वेद संहिता।** मूलमात्र (गुटका)

☆ **ऋग्वेद संहिता।** मूलमात्र।

☆ **ऋग्वेद संहिता।** भाषामात्र। रामगोविन्द त्रिवेदी

☆ **ऋग्वेद संहिता।** सायणाचार्य कृत भाष्य एव हिन्दी व्याख्या सहित। 1-8 भाग सर्म्पूण

☆ **ऋग्वेद संहिता।** (प्रथम अध्याय, सूक्त 1-19) हिन्दी व्याख्या तथा हिन्दी अंग्रेजी अनुवाद। सम्पादक-प्रो. उमाशंकर शर्मा 'ऋषि'

☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र (गुटका)

☆ **शुक्लयजुर्वेद संहिता।** सम्पा. श्री दौलतराम गौड़

☆ **शुक्लयजुर्वेद संहिता।** मूलमात्र। (निर्णयसागर संस्करण)

☆ **शुक्लयजुर्वेद संहिता।** पदपाठ-उव्वट-महीधरभाष्य संवलित तत्त्वबोधिनी हिन्दी व्याख्या सहित। डॉ. रामकृष्ण शास्त्री

☆ **सामवेद संहिता।** मूलमात्र (गुटका)

☆ **सामवेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप शर्मा 'गौड़' कृत हिन्दी भाषानुवाद सहित।

☆ **अथर्ववेद संहिता।** मूलमात्र (गुटका)

☆ **अथर्ववेद संहिता।** सायणभाष्य तथा पं. रामस्वरूप 'गौड़' कृत हिन्दी भाषानुवाद सहित। 1-8 भाग



**चौखम्बा विद्याभवन**
**वाराणसी**